# श्रौतयज्ञप्रक्रिया-पदार्थानुक्रमकोषः

## ( दैवद्रव्ययज्ञप्रकाशः )

( पादिहान्तः द्वितीयः भागः )

प्रणेता

ब्रह्मलीन पण्डित पीताम्बरदत्त शास्त्री




राष्ट्रियसंस्कृतसंस्थानम्

मानितविश्वविद्यालयः

नवदेहली

# श्रौतयज्ञप्रक्रिया-पदार्थानुक्रमकोषः

## ( दैवद्रव्ययज्ञप्रकाशः )

प्रणेता
ब्रह्मलीन पण्डित
पीताम्बरदत्त शास्त्री



# श्रौतयज्ञप्रक्रिया-पदार्थानुक्रमकोषः

## (दैवद्रव्ययज्ञप्रकाशः)

(पादिहान्तः द्वितीय भागः)

प्रणेता

**ब्रह्मलीन पण्डित पीताम्बरदत्त शास्त्री**

सम्पादकः

**श्री सोम आदित्य वसिष्ठ**



**राष्ट्रिय-संस्कृत-संस्थानम्**

**(मानितविश्वविद्यालयः)**

नई दिल्ली

प्रकाशकः—

**प्रो० वेम्पटि कुटुम्बशास्त्री**

कुलपतिः

**राष्ट्रियसंस्कृतसंस्थानम्**

(मानितविश्वविद्यालयः)

५६-५७, इन्स्टीट्यूशनल एरिया, जनकपुरी

नव दिल्ली-११००५८

योजनासमन्वायकः

**डॉ० प्रकाशपाण्डेय**

सहायक निदेशकः

वर्ष : २००५

मूल्यम् —११५०/- रु० (2 Vol. Set)

ISBN : 81-86111-20-4

मुद्रकः

**अमर प्रिंटिंग प्रैस :**

८/२५ विजय नगर, दिल्ली-११०००९

## प

**पक्षविपर्यय** — (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये चातुर्मास्यानां पर्वान्तरेषु चक्राभ्यां (दर्शपूर्णमासाभ्यां) यागे कर्तव्ये पक्षविपर्ययं वा कृत्वा चरन्ति। तत्र पक्षविपर्ययो नाम एव भवति—यत् कृष्णे पक्षे पौर्णमास्या, शुक्ले पक्षे अमावास्यया चरन्ति। पुनरप्येवमेवेति पक्षयोः विपर्यास पक्षविपर्यय इत्युच्यते। **द्र०** राजसूये चातुर्मास्य। तु०— आ०श्रौ० ९।३।६ नारायणः।

**पक्षश्राद्ध**— (स्मार्त०) **द्र०** श्राद्ध—।

**पक्षाऽप्यय**— (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयन प्रकरणे चयने (स्थण्डिले) यत्र पक्षः आत्मानं (चिति मध्यं) अप्येति स देशः पक्षाऽप्यय इत्युच्यते।

**पङ्क्तिपावन**— (सा०) १. त्रिमधुस्त्रिसुपर्णस्त्रिणाचिकेतश्चतुर्मेधः। पञ्चाग्निर्ज्येष्ठसामगो वेदाध्याय्यनूचानपुत्रः श्रोत्रियः । इत्येते श्राद्धे भुञ्जानाः ब्राह्मणाः पङ्क्तिपावना भवन्ति (तु०— आप०ध० २।१७।२२, गौ०ध० १५।२८; शं०ध० १९९, वा०ध० ३।१९ वि०ध० ८३।२)। २. यश्च व्याकुरुते वाचं यश्च मीमांसतेऽध्वरम्। तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ। ३. अग्नाः सर्वेषु वेदेषु सर्वप्रवचनेषु च। श्रोत्रियाः यजमानाश्च विज्ञेयाः पङ्क्तिपावनाः॥ **द्र०** मी०को० पृ० २४०१०।

**पङ्क्तिशंसन**— **द्र०** पङ्क्तिशस्यधर्म—।

**पङ्क्तिशस्यधर्म**— (हौ०, सा०) पञ्चपदासु पङ्क्तिषु द्वाभ्यां द्वाभ्यां पादाभ्यामवसायावसाय पञ्चमेन प्रणवः इति पङ्क्तीनां शस्यधर्म इत्युच्यते। स च पङ्क्तिपच्छः शंसनं पङ्क्तिशस्यधर्मः पङ्क्तिशंसनं वोच्यते। (तु०—शां०श्रौ० ७।२६।३-४)।

**पङ्क्तेः पच्छः शस्यप्रकार**— (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु शस्यसूक्तगतायाः एकस्या पङ्क्तेः पच्छः शस्यतैव। २. पञ्चपदायाः पङ्क्त्याः त्रयाणां पदानां पच्छः शंसने क्रियमाणे ये उत्तमे द्वे पदे अतिरिच्येते तयोः समासं कृत्वा शंसेत्। अर्थात् उत्तमे पदे (चतुर्थपञ्चमपादौ) समस्य शंस्येत्। ३. उक्तादन्यत् पच्छः शंसेत्। यदिदमर्धर्चशंसनविधानं सामिधेन्यतिदेशप्राप्तमप्युपदिश्यते तत् पच्छः शस्य विषयनियमार्थं न तत्स्वरूपविधानपरम्। गायत्र्यादीनां च सप्तानां अक्षरपरिमाणमेव प्रवृत्ति निमित्तं न पादविन्यासः। बृहत्यन्तानां पादविन्यासानपेक्षया सर्वप्रकाराणामर्धर्चशंसनमुक्तम्। पङ्क्त्या अप्यपञ्चपदाया अर्धर्चशंसनमेष। अर्थात् गायत्र्यादीनि पङ्क्त्यन्तानि छन्दांसि प्राक् त्रैष्टुभात् छन्दांसि अर्धर्चशः शस्यन्ते। तथा अपञ्चपदायाः पङ्क्त्या उत्तरेषु त्रिषु छन्दःसु या अचतुष्पदास्तासामर्धर्चशंसनं विधीयते। पञ्चपदासु पङ्क्तिषु द्वयोर्द्वयोः पादयोः द्विरवस्येत्। द्विरवसाय शंसनपङ्क्तिशंसनं भवति। अयं विधिः पञ्चपदास्वेव संभवति। ज्योतिष्टोमातिरात्रप्रकरणे चतुर्थ्यां षष्ठ्यां वा अति रात्रसंस्थायामाश्विने शस्त्रे याः पङ्क्त्यस्तासामर्धर्चशंसनं पङ्क्तिशंसनं वा भवति विकल्पेन। एवं विधे शंसने क्रियमाणे सर्वत्र पच्छः शस्यसूक्तगताया एकस्याः पङ्क्तेः

पच्छः शस्यतैव। पङ्क्त्याः पच्छः शंसने क्रियमाणे ये उत्तमे पदे अतिरित्येते तयोः समासं कृत्वा शंसेत्। इत्युक्तादन्यत् पच्छः शंसेत्। अत्र यदिदमर्धर्चशंसनविधानं सामिधेन्यतिदेशप्राप्तमप्युद्दिश्यते तत्पच्छः शस्यनियमार्थं बोध्यम्। पादैः अवसाय अर्धर्चान्ते प्रणवं कृत्वा तैः सन्तानः कर्तव्यः इति पङ्क्ते पच्छः शस्यप्रकार उच्यते। (तु०—आ०श्रौ० ५।१४ ९-१६ नारायणः)। **द्र०** अर्धर्चक्लृप्ति, पङ्क्तिशस्यधर्म। (अत्र पुनः देवत्रातभाष्यमपि स्पष्टार्थप्रतिपत्त्यर्थमनुसंधेयम्।

**पच्छोऽनूच्य—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु शंसनविधौ यत् ऋच एकैकस्मिन् पादे अवसायानुवचनं तत् पच्छोऽनूच्यमुच्यते। (तु०— ऐ० ब्रा० सा० २।१८)।

**पच्छोविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्वकृतिषु चैकाहाहीनसत्रेषु १. शंसनविधौ 'पच्छः' इत्युक्ते पादशः अवसानम् ऋगन्तसन्तानः इत्येवं रूपः पच्छो विधिरुच्यते (आ०श्रौ० ५।१४।१५ देवत्रातः। २. सर्वासु ऋक्षु अर्धर्चाद्यैः पादैरवसानं कृत्वा अर्धर्चान्त्यैः पादैः उत्तरेण सह सन्तानः क्रियते। एतत्पादशस्य लक्षणम्। (आ० श्रौ० ५।१४।१६ देवत्रातः)।

**पञ्चकाण्डी—** (सा०) प्राजापत्यसौम्याग्नेयैर्वैश्वदेवस्वायंभुवानि इति पञ्च काण्डानि समाहृतानि यस्यां सा पञ्चकाण्डी तैत्तिरीयसंहितोच्यते। तु०— बौ० गृ० ३।१०)।

**पञ्चगव्यहोम—** (सा०, स्मार्त०) गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्। आप्यायस्वेति च क्षीरं 'दधिक्राब्ण' इति वै दधि॥ 'आज्यं शुक्रमसीत्येवं देवस्य त्वा' कुशोदकम्। 'आपो हिष्ठा मयो भुवः' इत्यालोड्य 'मानस्तोके' इत्यभिमन्त्र्या प्रणवेनोद्धृत्य प्रणवेन निर्मत्थ्य प्रणवेनैव पिबेत्। तथा 'अग्नये स्वाहा, सोमाय स्वाहा, इरावती, धेनुमती हि भूतं सूयवसिनी मनवे यशस्वे। व्यस्कम्भाद्रोदसी विष्णुरेते दाधार पृथिवीमभितो मयूखैः। 'इदं विष्णुर्विचक्रमे। 'मानस्तोके' 'प्रजापते' गायत्री च हुत्वा मध्यमेव पलाशपर्णेन तत् पिबेत्। मलं यत् त्वगस्थिगतं पापं देहे तिष्ठति मामके। ब्रह्म कूर्चोदकात् सर्वं दहत्यग्निरिवोदकम्।' इति ब्रह्म कूर्चापरनामधेयः पञ्चगव्य होम इत्युच्यते।

**पञ्चचूडा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे पञ्चचूडानामधेया इष्टकाः पञ्चचूडाः।

**पञ्चत्रिंशद्रात्रसत्रस्याहःक्लृप्ति—** (अव्य०, हौ०) सोमयज्ञेषु प्रकृति भूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे पञ्चदशरात्रिसत्राणि विहितानि तत्र १- प्रथमे प्रायणीयोऽतिरात्रः १, अभिप्लवषडहस्य पञ्चाहानि (ज्योतिः १, गौः २, आयुः ३, गौः ४, आयुः ५) २- ६, अभिप्लवाः षडहाः त्रयः ७-२४, पृष्ठ्यः षडहः २५-३०, चत्वारश्छन्दोमाः ३१-३४; उदयनीयोऽतिरात्रः ३५ इति पञ्चत्रिंशद्दिनानि। इदं पञ्चत्रिंशद्रात्रसत्रं प्रकृतिविहितम्। तस्य पञ्चाहार्थे अभिप्लवषडहस्यादितः पञ्चाहानि, षडहार्थे अभिप्लवः षडहः, दशाहार्थे द्वादशिको दशरात्रः, प्रथमोत्तमौ प्रायणीयोदयनीयावतिरात्रौ इत्यावापेनाहानि पूर्यन्ते। **द्र०** अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधि—, अहीनसत्रशस्योपाय, प्रकृतिविहितसत्र—, २ आवाप—।

**पञ्चदशरात्रसत्रस्याहःक्लृप्तिः** (अव्य०, हौ०) सोमयज्ञे प्रकृतिभूत...द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे चत्वारि पञ्चदशरात्रिसत्राणि विहितानि . तत्र १. प्रथमे प्रायणीयोऽतिरात्रः १, पृष्ठ्यः षडहः २७, महाव्रतं ८, पृष्ठ्यः षडहः ९१४, उदयनीयोऽतिरात्रः १५ इति पञ्चदशाहानि। २. द्वितीये प्रायणीयोऽतिरात्रः १, अग्निष्टुत् २, ज्योतिः ३, गौः ४, आयुः ५, पृष्ठ्यः षडहः ६-११, आयुः १२, गौः १३, ज्योतिः १४, उदयनीयोऽतिरात्रः १५ इति पञ्चदश दिनानि। ३. तृतीये प्रायणीयोऽतिरात्रेऽग्निष्टुत् १, ज्योतिः २, गौः ३, आयुः ४, पृष्ठ्यः षडहः ५-१०, चत्वारश्छन्दोमाः ११-१४, उदयनीयोऽतिरात्रः १५ इति पञ्चदशदिनानि। इदं तृतीयं पञ्च दशातिरात्रसत्रं प्रकृतिविहितम्। तस्मात् द्वादशाहस्य दशभिरहोभिः, त्रिकद्रुकाणां त्रिभिरहोभिः प्रथमोत्तमाभ्यां प्रायणीयोदयनीयाभ्यामावापप्रकारेण अह्नां पूर्तिः क्रियते इति प्रकृतिविहितत्वमुपपद्यते। द्र० प्रकृतिविहिते सत्र– ४. (क) चतुर्थे प्रायणोऽतिरात्रः १, ज्योतिः २, आयुः ३, गौः ४, पृष्ठ्यः षडहः ५१०, चत्वारश्छन्दोमा १११४, उदयनीयोऽतिरात्रः १५ इति पञ्चदश दिनानि। तृतीयपञ्चदशसत्रवद् इदमपि चतुर्थं प्रकृतिविहितमुच्यते। तैत्तिरीयसंहितायां तु त्रिकद्रुकेभ्यः परं पूर्वं चत्वारश्छन्दोमाः पश्चात् पृष्ठ्यः षडहः इति क्रमभेदः (तु०— तै० सं० ७ ।३ ।७)। तत्र त्रिवृदग्निष्टुदग्निष्टोमसंस्थः प्रायणीयः प्रथममहः। (ख) पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः। ततो ज्योतिगौरायुः इति त्र्यहः। परिशिष्टानि एकादशाहानि द्वादशाहप्रकृतीनि। द्र० मी० को० पृ० २४१२। (ग) त्रिविदग्निष्टुदग्निष्टोमः त्रिरात्रः, दशरात्रः उदनीयोऽतिरात्रः इति पञ्चदशरात्रत्वरूपम्। मी०को० पृ० २४१२।

**पञ्चदशसामिधेनी** (हौ०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु १. इध्माधानेन अग्निः समिध्यते प्रज्वाल्यते याभिरित्यग्निसमिन्धनार्था एकादश ऋचः सामिधेन्यः उच्यन्ते। ताः 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इत्यावृत्तिवचनात् दर्शपूर्णमासयोः पञ्चदश सम्पद्यन्ते। २. दर्शपूर्णमासयोः सामिधेन्यः पञ्चदश, पठिताः। तु ऋचस्तु एकादशैव। 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति विधानात् आवृत्त्या पञ्चदशत्वं संपद्यते। ३. दर्शपूर्णमासयोः सामिधेन्यः 'प्रवो वाजा अभिद्यवः' इत्याद्याः अग्निसामितार्था ऋचः। तमिगिध्यते अग्निर्याभिर्ऋग्भिः ताः सामिधेन्यः।द्र० मी०को० पृ० २०६२। तैत्तिरीयब्राह्मणानुवाकेस्या ऋचस्तु 'प्र वोवाजा अभिद्यवो हविष्मन्तो घृताच्या। देवान् जिगाति सुम्नयुः। (ऋ० ३ ।२७ । १)। (१) 'अग्न आयहि वीतये गृणानो हव्यदातये। नि होता सत्सि बर्हिषि' (२) 'त त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि। बृहच्छोचा यविष्ठ्य' (३) 'स नः पृथुश्रवाय्यमच्छादेव विवासति। बृहदग्ने सुवीर्यम्' (ऋ० ६ ।१६ । १०-१२) (४) ईलेन्यो नमस्यस्तिरस्तमांसिदर्शतः। समग्निरिध्यते वृषा' (५), 'वृषो अग्निः समिध्यतेऽश्वो न देववाहनः। तं हविष्मन्तः ईलते' (६), 'वृषणं त्वा वयं वृषन् वृषणः समिधीमहि। अग्ने दीद्यतं बृहत्' (७) ऋ० ३ ।२७ ।१३-१५)। 'अग्निं दूतं वृणीमहे होतारं विश्ववेदसम्। अस्य यज्ञस्य सुक्रतुम्' (८) (ऋ०

१।१२।१)। 'समिध्यमानो अध्वरेऽग्निः पावक ईडयः। शोचिष्केशस्तमीमहे' (९) (ऋ० ३।२७।४) 'समिद्धो अग्न आहुत देवान् पक्षि स्वध्वर। त्वं हि हव्यवालसि' (१०) 'आजुहोत दुवस्यताग्निं प्रत्यध्वरे। वृणीध्वं हव्यवाहनम्' (११) (ऋ० ४।२८।५६)। इति। ताः त्रिः प्रथमामनूच्य तिस्रः सतीरनन्तरा अनुब्रूयात्, त्रिरुत्तमामिति पञ्चदश सम्पद्यन्ते। नित्याः इति दर्शपूर्णमासयोर्नित्यत्वेन विहिताः प्राकृता इति चोच्यन्ते द्र० श्रौ०को० १ भा० पृ० १९८—९९, इध्माधान—, सामिधेनी—, सामिधेनीधाय्या—।

**पञ्चदशस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने होतुः होत्रकाणं चतुर्षु आज्यस्तोत्रेषु एकैकं तृचात्मकं सूक्तं भवति। तत्र प्रथमे तृचे (होतुस्तृचे) पञ्चदशसंख्या ऋचः संपादनीयाः। तच्च संपादनं आवृत्तिमन्तरेण न संभवतीत्यावृत्तिप्रकार उपदिश्यते त्रिभिः पर्यायैः स्तोत्रमावर्तनीयमिति। तद्यथा 'अग्न आयाहि' (साम० ६६०) इत्येषा सूक्ते प्रथमा ऋक्, 'तं त्वा समिद्भिः' (साम० ६६१) इति द्वितीया, 'स नः पृथु' (साम० ६६२) इति तृतीया। तासु प्रथमामृचं त्रिरावर्तयेत्। इतरे द्वे ऋचौ सकृत् सकृत् (३ + १ + १), द्वितीये पर्यायिे मध्यमामृचं त्रिरावर्तयेत् (अभ्यसेत्) प्रथमामुत्तमां च सकृत् सकृत् (१ + ३ + १) तृतीये पर्यायिे उत्तमामृचं त्रिरभ्यसेत् प्रथमां द्वितीयां च सकृत् सकृत् (१ + १ + ३)। एवं सत्येकैकस्य तृचसूक्तस्य त्रिधा आवृत्तिः पञ्चदशधा (१५) संपद्यते। तथेतरेषां मैत्रावरुणब्राह्मणाच्छंस्याच्छावानां तृचसूक्तानामप्येकैकस्य तृचसूक्तस्य पञ्चदशधा आवृत्तिः करणीया। इति पञ्चदशस्तोम उच्यते। २. एकैकस्मिन् तृचे वर्तमानाः तिस्र ऋचः ब्राह्मणोक्तेनावृत्ति विशेषेण पञ्चदशसंख्याका यस्मिन् स्तोमे संपाद्यन्ते सोऽयं स्तोमः पञ्चदशस्तोम इत्युच्यते (तु०—तै० ब्रा० सा० १।५।१०।३)। ३. तस्य च स्तोमस्य प्रकारः छन्दोगब्राह्मणो एवमाम्नायते 'पञ्चभ्यो हिं करोति स तिसृभिः स एकया स एकया। पञ्चभ्यो हिंकरोति स एकया स तिसृभिः स एकया। पञ्चभ्यो हिंकरोति स एकया स एकया स तिसृभिः'। अर्थात् तृचात्मकमेकं सूक्तं त्रिरावर्तनीयम्। तत्र प्रथमावृत्तौ प्रथमाया ऋचः त्रिरभ्यासो विधेयः। द्वितीयावृत्तौ मध्यमायाः, तृतीयावृत्तौ चरमायाः एवं प्रतिसाम साऽऽवृत्ताभिः पञ्चदशभिर्ऋग्भिरुपेतत्वात् पञ्चदश स्तोमः इति (तु०—ऐ० ब्रा० सा० ३।१७)। एवमेव अन्यत्रैकाहाहीनसत्रेषु तत्र तत्र विहितेषु पञ्च दशस्तोमेषु तत्तत्तृचसूक्तेष्वावृत्तिरवगन्तव्या।

**पञ्चदशस्तोमविष्टुति—**(औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनेषु १. तत्र तत्र प्रयुज्यमानस्य पञ्चदशस्तोमस्य पञ्चपञ्चिनी, अपरा (द्वितीया), उद्यती इति तिस्रो विष्टुतया भवन्ति। तत्र 'पञ्चभ्यो हिंकरोति' इत्यादिपञ्चपञ्चिन्याख्या प्रथमविष्टुतिः (तां० ब्रा० २।४।२१)। 'पञ्चभ्यो हिंकरोति' इत्यादि द्वितीया (तां० ब्रा० २।५।१)। 'तिसृभ्यो हिंकरोति' इत्याद्युद्यत्याख्या तृतीया (तां० ब्रा० २।६।१)। तासु या द्वितीया सा पञ्चदशत्रिवृत्सप्तदशस्तोमत्रय प्रतिनिधित्वेन संपा-

दितेति विशेषोऽवधेयः (तां० ब्रा० ४।२।५) २. पञ्चदशस्य स्तोमस्य विष्टुतिरेवम्, प्रथमावृत्तौ प्रथमाया ऋचस्त्रिरभ्यासः। द्वितीयावृत्तौ मध्यमायाः। तृतीयावृत्तौ तु उत्तमायाः। द्र० मी०को० पृ० २४११-१२। द्र० पञ्चदशस्तोम—।

**पञ्चदशातिरात्रस्याहःक्लृप्ति–** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अहीनप्रकरणे पञ्चदशसंज्ञकोऽतिरात्रो द्व्यहोऽहीनः वीर्यकामस्य। सः चातिरात्रसंस्थः। अतः पञ्चदशातिरात्र इत्युच्यते। तस्मिन् पञ्चदशेऽतिरात्रे द्वादश उपसदः ज्योतिगौः द्वे सुत्यादिने षोडश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते। अहीनद्वादशवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिदर्शनात्। द्र० अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधि— अहीनसत्राहःशस्योपाय—।

**पञ्चदेवता—** (सा०) आश्वमेधिके ब्रह्मोद्यप्रोक्ताः चक्षुः श्रोत्रं मनो वाक् प्राणः ता एताः पञ्चदेवता इमं विष्टाः पुरुषम्। पञ्चो हैव देवता अयं विष्टः पुरुषः (ऐ० ब्रा०) तु०— द्रा० श्रौ० धन्वी, ला०श्रौ० ९।१०।१२, वैता० श्रौ० ३६।२)।

**पञ्चदेवपूजा—** (सा०, स्मार्त०) १. गणेशो वरुणो देवस्तथा षोडशमातृकाः। नव ग्रहा वसोर्धाराः पञ्च पूज्या विशेषतः॥ ओंकारसहिता वापि शान्तिपौष्टिककर्मसु। आदौ देवाः सदा पूज्या दुरितक्षयकारकाः॥ २. गणेशो वरुणो देवो नान्द्याख्याः पितरस्तथा वसुन्धारायुताश्चैव षोडशमातृका ग्रहाः॥ कलशे पुण्याहवाचनं कृत्वा पूजयेद् वरुणं ततः। पंकजेऽष्टदले देवं गणेशं मातृकाग्रहान्। नवषोडशकोष्ठेषु पृथक्स्वस्थानभेदतः॥

**पञ्चपूजा—** (सा०, स्मार्त०) ध्यानमावाहनं चैव देवानां स्थापनं तथा। सुप्रतिष्ठाततो ज्ञेया पूजनं तु ततः परम्। पूजा पञ्चविधा प्रोक्ता स्मार्तकर्मषु सर्वदा पूजनेत्वत्र यथाक्रमम्— १. आसनं २. स्नानीयं जलं ३. वस्त्रं ४. चन्दनं (गन्धं) ५. अक्षतान् ६. पुष्पाणि ७. धूपं ८. दीपं ९. आरार्तिकं १०. नैवेद्यं ११. ताम्बूलं १२. पूगीफलं दक्षिणाद्रव्यं १३. प्रार्थनां च ततः परं दद्यात्। इति त्रयोदशोपचारान् विद्यात्। अथवा पूर्वमावाहन प्रोक्तमासनं तदनन्तरम्। ततः पाद्यमर्घ्यं च ततस्त्वाचमनीयकम्॥ स्नानं वस्त्रं चोपवीतं ततो गन्धादिचन्दनम्। पुष्पं धूपं च दीपं च नैवेद्यं तदनन्तरम्॥ ततो देयः प्रणामश्च ततो देया प्रदक्षिणा। विसर्जनं ततो दद्यादुपचारास्तु षोडश। इति षोडशोपचारान् विद्यात्। गणेशपूजने तु गणेशं पूज्येदादौ निर्विघ्नार्थं स्वकर्मणः। पट्टे वा मृण्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः। कार्यमष्टदलं पद्मं तस्योपरि गणेश्वरम् उपचारैः (मन्त्रोपचारैः) ससिन्दूरैश्चन्दनैरक्तचन्दनैः पुष्पैर्धूपैस्तथा- दीपैराच्छादन सुशोभनैः॥ तु इति विशेषोऽवगन्तव्यः। (तु०—कर्मकाण्डरत्नाकरे पृ० १५. देवानन्दः)

**पञ्चबिल—** द्र० अवेष्टि—।

**पञ्चमहाग्नि—** (सा०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु पत्नीशालास्थविहारगताः प्राजहितदक्षिणाग्निआहवनीयाः, आग्नीध्रीयश्च, औत्तरवेदिक आहवनीयश्चेति पञ्च महाग्नय उच्यन्ते। द्र० मी०को० पृ० १५।

**पञ्चमहायज्ञ—** (सा०, स्मार्त०) पाकयज्ञप्रकरणे १. कण्डनी, पेषणी, चुल्ली, कुम्भः, उपस्करः इति याः पञ्च सूनाः गृहस्थस्य तन्निवृत्त्यर्थं च ब्रह्मदेवभूतपितृनरयज्ञान् कुर्यात्। तत्र स्वाध्यायो ब्रह्मयज्ञः, होमो दैवः। बलिर्भौतः,

पितृतर्पणं पित्र्यः, नृयज्ञस्त्वतिथिपूजनम् (तु०, विष्णुस्मृतिः ५९ ।२०-२५)। २. पञ्चमहायज्ञाः—यदधीते स ब्रह्मयज्ञो यज्जुहोति स देवयज्ञो यत् पितृभ्यः स्वधाकरोति स पितृयज्ञो यद् भूतेभ्यो वलिं हरति स भूतयज्ञो यद् ब्राह्मणेभ्योऽन्नं ददाति स मनुष्यः ॥ ६ ॥ एते पञ्चमहायज्ञाः सततं सुप्रयुक्ताः प्रापयन्ति परमां गतिम् ॥ ७ ॥ देवानां देवयज्ञेन द्विजा गच्छन्ति साम्यताम् ॥ १४ ॥ एतासां साम्यतां गत्वा देवानां शतं समा आनन्दं ब्रह्म गच्छन्ति ध्रुवं शाश्वतमव्ययम् ॥ १६ ॥ (वै० गृ० २ ।९)।

**पञ्चविंशतिरात्रसत्रस्याहःक्लृप्ति—** (अव्य०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ सत्रप्रकरणे पञ्चविंशतिरात्रसत्रे प्रायणीयोऽतिरात्रः १, द्वौ अभिप्लवौ २-१३, पृष्ठ्यः षडहः १४-१९, चत्वारश्छन्दोमाः २०-२३, महाव्रतं २४, उदयनीयोऽतिरात्रः २५ इत पञ्चविंशतिरहानि। इदं पञ्चविंशतिरात्रसत्रं प्रकृतिविहितम्। तस्य षडहार्थे अभिप्लवः षडहः, दशाहार्थे द्वादशिको दशरात्रः, एकाहार्थे दशरात्रात् परं महाव्रतं प्रथमोत्तमौ प्रायणीदयनीयावतिरात्रौ इत्यहानि पूर्यन्ते। **द्र०** अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि-, अहीनसत्राहः शस्योपायप्रकृतिविहित-सत्र—।

**पञ्चविंशस्तोमविष्टुति —** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ गवामयने उत्तरस्मिन् पक्षसि उपान्त्ये महाव्रतेऽहनि सर्वेषां स्तोत्राणां पञ्चविंशस्तोमः। तस्य 'अष्टाभ्यो हिं करोति— स तिसृभिः, स चतसृभिः स एकया। अष्टाभ्यो हिंकरोति— स एकया स तिसृभिः, स चतसृभिः। नवभ्यो हिं करोति— स चतसृभिः, स द्वाभ्यां, स तिसृभिः, स पञ्चभिः, स एकया स तिसृभिर्वेति विष्टुतिः।' (तु०— आ०क० २ ।११ ।२ वरदराजः)।

**पञ्चविंशस्तोमविष्टुतिः—(पर्यायकृति-)** (औ०) सोमयज्ञेषु प्रकतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे प्रथमसाहस्रे एकाहे पञ्चविंशस्तोमस्य विष्टुतिः (पर्यायकृतिः) उच्यते। सा जाति संहार-युग्मायुक्संहारपक्षाभ्यां क्रियते। तत्र जातिसंहारे एकविंशाद् (स्तोमात्) आद्यः पर्याय आहर्तव्यः। त्रिणवाद् (स्तोमात्) द्वौ समौ तेषामेककनीयस्त्वादेकविंशस्य मध्ये कार्यः। त्रिणवस्य पर्यायौ प्रथमोत्तमौ। तद्यथा—नवभ्यो हिंकरोति—स तिसृभिः, स पञ्चभिः, स एकया। सप्तभ्यो हिं करोति—स एकया स तिसृभिः स तिसृभिः। नवभ्यो हिंकरोति—स पञ्चभिः स एकया स तिसृभिरिति। युग्मायुक्संहारे तु द्वौ पर्यायौ चतुर्विंशादाहर्तव्यौ त्रिणवादेकः। तेषामेकज्यायस्त्वात् त्रिणवणस्य मध्ये कार्यः। चतुर्विंशस्य प्रथमोत्तमौ पर्यायौ। तद्यथा-अष्टाभ्यो हिंकरोति-स तिसृभिः, स चतसृभिः, स एकया। नवभ्यो हिंकरोति-स एकया, स तिसृभिः, स पञ्चभिः। अष्टाभ्यो हिं करोति। स चतसृभिः, स एकया, स तिसृभिरिति' (तु०— आ०क० ३ ।७ ।७ वरदराजः)।

**पञ्चशारदीयस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे। त्रिषु पञ्चाहेषु, पञ्चसु वा पञ्चाहेषु द्वितीयस्तृतीयो वा यः पञ्चभिर्वर्षैः समाप्यते, पञ्चसु शरत्सु अङ्गभूतैः पशुबन्धैरिष्ट्वा पञ्चादारभ्यते स पञ्चशारदीयो नाम पञ्चाहोऽहीनः (तु०— तां० ब्रा० सा०

२१ ।१४ ।१)। तस्मिन् पञ्चशारदीये पञ्चरात्रे द्वादशोपसद्दिनानि, प्रथमहोऽग्निष्टोमसंस्थं द्वितीयतृतीयचतुर्थान्यहानि उक्थ्यसंस्थानि, पञ्चममतिरात्रसंस्थमिति पञ्च सुत्यादिनानि, त्रयोदश दीक्षादिनानीति मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। तत्र पशुविधौ तेन यक्ष्यमाणः पञ्चशारदीयारम्भात् प्राक् पञ्च वर्षाणि आश्वयुजी पौर्णमासी संबन्धिषु शुक्लपक्षेषु = आश्विनशुक्लपक्षेषु सप्तम्यामष्टम्यां वा चतुस्त्रिंशन्मरुद्देवताकान् पशूनालभते। तत्र प्रतिवर्षं इन्द्रामरुद्देवताकाः उक्ष्णः (वृषभान्) वत्सतरीश्च वर्णक्रमेणा लभते। अर्थात् वत्सतरीणां राजीवपृश्नयः (कमलवर्णाः) प्रथमे वर्षे, नवनीतपृश्नयः द्वितीये वर्षे, अरुणरागास्तृतीये वर्षे, पिशङ्ग्यश्चतुर्थे वर्षे, सारङ्ग्यः पञ्चमे इति वर्णक्रमः। तेषु चतुस्त्रिंशत्सु पशुषु अर्धाः सप्तदशोक्षाणः अर्धाः सप्तदश वत्सतर्यः (अक्षाणः प्रतिवर्षं त एव वत्सतर्यश्चाऽन्या अन्याः प्रतिवर्षम्। तानुभयानपि प्रोक्षितान् पर्यग्निकृतानुक्ष्ण उत्सृजन्ति, वत्सरीभिः आरब्धं कर्म समापयन्ति। एवं प्रकारेण पञ्चवर्षाणि नियुञ्जन्ति। ये पर्यग्निकृताः उक्षाणः पञ्चवर्षाणि उत्सृष्टाः ते एव षष्ठे वर्षे कार्तिके मासि सुत्यासु विभज्य सवनीयाः पशवो भवन्ति। तत्र चतृषु सत्यासु प्रत्यहं त्रयस्त्रय आलब्धव्याः। इन्द्रामरुद्देवताकाः। अन्तिमे पञ्चमे सौत्येऽहनि पञ्चोक्षाणः आलब्धव्याः इति सप्तदशालब्धव्याः। यः कामयेत बहुः स्यामिति स एतेन यजेत (तु०— का० श्रौ० २३ ।५ ।४-१२ विद्याधरः। आ०श्रौ० १० ।२ ।२९-३० नारायणः। तदुक्तं ताण्ड्यमहाब्राह्मणे—'सप्तदश पृश्नीनुक्ष्णः पञ्चवर्षान् सप्तदश पृश्नीस्त्रिवत्साः अप्रवीताः तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ॥ ७ ॥ ततः संवत्सरे नवनीतपृश्नीररुणा आनयन्ति तांश्चैवोक्ष्णः तान् पर्यग्निकृतान् प्रोक्षितानेतरांलभन्ते प्रेतरान् सृजन्ति, ततः संवत्सरे राजीवा आनयन्ति ताश्चैवोक्ष्णः तान् पर्यग्निकृतानतेरा लभन्ते प्रेतरान् सृजन्ति, ततः संवत्सरे पिशङ्गीरानयन्ति ताश्चैवोक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति, ततः संवत्सरे सारङ्गीरानयन्ति तांश्चैवोक्ष्णस्तान् पर्यग्निकृतान् प्रोक्षितानेतरा लभन्ते प्रेतरान् सृजन्ति ॥ ८ ॥ ततः संवत्सरे सोमा भवन्ति ॥९ ॥ त्रींस्त्रीनन्वहमालभन्ते पञ्चोत्तमेऽहनि ॥ १० ॥ (तां० ब्रा० २१ । १४ ।७-१०)। २. मारुतीयः पञ्चशारदीयः, यः कामयेत बहुः स्यामिति स एतेन यजेत। इति मरुद्देवताकः पञ्चसु शरत्सु क्रियमाणः पञ्चाहः अहीनः उक्तः। तत्र श्रूयते 'वैशाख्याममावास्यायाम् (विशाखानक्षत्रयुक्तायाममावास्यायां प्रायः आश्विन्याम्) मारुतीः त्रिवत्सा अप्रवीता उपाकरोति' 'सप्तदश पृश्नीनुक्ष्णः, तान् पर्यग्निकृतान्, प्रोक्षितान् इतरा आलभन्ते, प्रेतरानुत्सृजन्ति' इति। तत्र त्रिवत्साः = त्रिवत्सा वत्सतर्यः अप्रवीता अप्रसूताः। पृश्नीन् नानावर्णान् शुद्धान् अल्पशरीरान् वा मतभेदेन प्रतिवर्षं सप्तदश त्रिवर्षा गावः आलब्धव्याः सप्तदश उक्षाणश्च पर्यग्नि कृत्वा प्रोक्ष्य उत्स्रष्टव्याः। पञ्चमे तु वर्षे गावः पूर्ववत् आलब्धव्याः उक्षाणस्तु आलब्धव्या एव परन्तु चतसृषु

सुत्यासु त्रयस्त्रयः, पञ्चम्यां तु पञ्च आलब्धव्याः। द्र० मी०को० पृ० २४१३।

**पञ्चसमिद्धोम—** इष्टियज्ञेषु हविर्यज्ञानां प्रथमेऽग्न्याधानप्रकरणे उत्तरसर्वौषधिहोमानन्तरमध्वर्युर्यजमानेनान्वारब्धः गार्हपत्ये आज्यं संस्कृत्य स्रुवं जुहूं च संमृज्य एकैकस्मिन्नग्नौ पञ्च पञ्च अश्वत्थोदुम्बरपलाशशमीविकङ्कतवृक्षाणां समिधः संस्कृताज्येनाभ्यज्याऽऽदधाति। तत्र आदौ गार्हपत्ये 'समिध्यमानः प्रथमः' इत्यृचा आश्वत्थीम्, 'घृतप्रतीको घृतयोनिनिः' इत्यृचा औदुम्बरीम्, 'त्वामग्ने समिधान इत्यृचा पालासीम्, 'त्वामग्ने प्रदिवः' इत्यृचा शमीमयीम्, 'घृतप्रतीकं वः' इत्यृचा वैकङ्कतीं (समिधमभ्यादधाति) एतैरेव मन्त्रैः अन्वाहार्यपचने पञ्च समिधोऽभ्यादधाति, पञ्च आहवनीये चाभ्यादधाति। तदिदं समिदाधानं समिद्धोमः पञ्चसमिद्धोम इति चोच्यते। द्र० श्रौ०प०नि० पृ० ६१। द्र० उत्तरसर्वौषधिहोम—।

**पञ्चसूना—** द्र० पञ्चमहायज्ञ—।

**पञ्चस्तोम—** द्र० वर्धमानस्तोम—, स्तोमभेद—।

**पञ्च, पञ्चिस्तोमपर्यायकृति—**(औ०) पञ्चिस्तोमे जातिसंहार एव कार्यो न युग्मायुक् संहारः। युग्मायुक् संहारपक्षे त्रिकस्तोमादेकः षट्कात् पर्यायद्वयम्। (द्रा०श्रौ० १७।२ धन्वी) परमयं जाति संहारपक्षः रात्रिपर्यायैरस्तुते रात्रौ व्युष्टायां यदा होतृषामवर्जं त्रयोऽपि रात्रिपर्यायाः पञ्चिस्तोमाः क्रियन्ते तदानीं न प्रवर्तते। तत्र तु पञ्चदशस्तोमस्य ये पर्याया ब्राह्मणे समाम्नाताः तैस्त्रींस्त्रीन् रात्रिपर्यायान् पृथक्-२ विदध्यात्। तत्र पर्यायाणां ये विष्टावाः तेऽत्र पर्यायस्थानेषु स्युः। तदीयान् विष्टावानत्र पर्यायत्वेन कल्पयेदित्यर्थः। ते च विष्टावस्वरूपाः। पर्यायाः पृथगेव स्तोत्रीयासु भवेयुः। तद्यथा— तिसृभ्यो हिंकरोति स प्रथमयैकस्यै हिंकरोति, स मध्यमया पुनरेकस्यै हिंकरोति, स उत्तमयेति। एवं प्रथमस्य पञ्चदशपर्यायस्य त्रीन् विष्टावान् पर्यायत्वेन कल्पयेत्। एवमितरयोरपि। इत्ययं शांडितायनाचार्यस्य पक्षः। (द्रा०श्रौ० १७। २।३, धन्वी)। द्र० वर्धमानस्तोमपर्यायाणां जातिसंहारपक्षः-, युग्मायुक्संहार—, स्तोमभेद—।

**पञ्चसंचर—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां पञ्चमे चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि 'आग्नयेमष्टाकपालं निर्वपति, सौम्यं चरुम्, सावित्रं द्वादश कपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, इति पञ्च हवींसि चतुर्ष्वपि चातुर्मास्यपर्वसु संचरन्ति = उपतिष्ठन्ते इति पञ्चसंचराणि इत्युच्यन्ते। मी०को० पृ० २४१७। द्र० चातुर्मास्यहविस्—।

**पञ्चहोतृमन्त्र—** (सा०, आध्व०) १. अग्निर्होता। अश्विनावध्वर्यू। त्वष्टाऽग्नीत्। मित्र उपवक्ता। इति पञ्च होतारो यस्मिन् मन्त्रे स पञ्च होता मन्त्रविशेष इत्युच्यते। द्र० श्रौ०को० १ भा० पृ० १२५। तस्य क्रत्वर्थप्रयोगः-१. पञ्चहोतृचतुर्होतृमन्त्राभ्यां दर्शपूर्णमास हविरभिर्मशनम्। २. चातुर्मास्यान्यालभमानः पञ्चहोतारं मनसाऽनुद्रुत्याहवनीये जुहुयात् ग्रहो भवति। श्रौ०को० १. भा० पृ० १२७। ३. पञ्चहोत्रा चातुर्मास्यान्यभिमृशेत्। ४. पञ्चहोतारं वदेत् पुरस्तात् हविषाम् ५. पञ्चहोतारं वदेत् पुरस्तात् माध्यन्दिनपवमानस्य। ६. पशुकामं पञ्च होत्रा याजयेत्। ७. चतुर्गृहीतमाज्यं कृत्वा

पञ्चहोतारं व्याचक्षीत । ८. भ्रातृव्यवन्तं पञ्चहोत्रा याजयेत् । ९. स्वर्गकामं पञ्चहोत्रा याजयेत् । श्रौ०को० १ भा० पृ० १३१ । २. 'अग्निर्होता' इत्यादीनि पञ्चवाक्यानि पञ्च होतृपदवाच्यानि । द्र० श्रौ०प०नि० पृ० १३२ । ३. चातुर्मास्यवैश्वदेवपर्वणि 'अग्निर्होता' इत्यादि...तायैर्हवनश्रुत इत्यन्तानि षड्वाक्यानि पञ्चहोतृपदवाच्यानि । द्र० श्रौ०प०नि० पृ० ७९ ।

**पञ्चाङ्गी—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयन प्रकरणे अश्वगर्दभाऽजपशुबन्धनार्था त्रिगुणा मुञ्जमयी रज्जुः पञ्चाङ्गीत्युच्यते । पञ्च अङ्गानि रूपाणि यस्याः सेति । अङ्गानि च प्रथमा मुखे वृत्ताकारा, द्वितीया वक्षः श्रोत्रान्तरमार्गेण शिरस उपरिस्था, तृतीया चक्षुषोरधस्तान्मुखस्याग्रे पूर्वरज्वामुभयतो बद्धा, चतुर्थी पार्श्वस्था, पञ्चमी चावलम्बनरज्जुर्वलासंज्ञा इति क्रमशो विज्ञेयानि । (तु०— का० श्रौ० १६ ।२ ।४ विद्याधरः) ।

**पञ्चावत्त—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च जुह्वां पञ्चवारमाज्यादीनां ग्रहणं पञ्चावत्तमुच्यते । तत्र पञ्चावत्तता संपादनाय आदौ स्रुवेण जुह्वामाज्यप्रक्षेपः ततस्तस्यां हविषः त्रिरवदानेन ग्रहणम्, ततः पुनः स्रुवेण हविष उपरि आज्यप्रक्षेपः इति पञ्चधा ग्रहणक्रमो भवति । तृतीयमवदानं हविषः पश्चाद् भागादवदेयम् । तदुक्तम्-'पश्चात्तृतीयम्'-(का०श्रौ० १ ।९ ।३) इति पञ्चावत्तत्वं बोध्यम् ।

**पञ्चावत्तिन्—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च यस्य जमदग्न्यादिगोत्रस्य यजमानस्य पञ्चधा हविरवद्यते स यजमानः पञ्चावत्ती भवति । तत्र 'जामदग्न्या वत्सविदावार्ष्टिषेणास्तथैव च । भार्गवाश्च्यवना और्वाः पञ्चावत्तिनः ईरिताः' द्र० मी०को० पृ० २४११ । इत्युक्तगोत्रिणो यजमानाः पञ्चावत्तिनो भवन्तीति विशेषोऽवधेयः । द्र० श्रौ०प०नि० पृ० ३१ ।

**पटल—** (सा०) पटलशब्दः समूहवाची 'समूहः पटलं न ना' इति कोषात् । इह तु मन्त्रसमूहः यथा प्रवर्ग्यमन्त्रेषु 'इति नु पूर्वं पटलम् इति (तु०— आ०श्रौ० ४ ।६३) ।

**पड्बीस—** (सा०) पादबन्धनरज्जुः पड्बीस इत्युच्यते । मी०को० पृ० १०२१ ।

**पत्नी—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. यजमानवद् यज्ञस्य फलभोक्त्री यजमानस्य विवाहिता स्त्री पत्नी शब्देनाभिधीयते । २. पत्नी इति हि यज्ञस्य स्वामिनित्युच्यते । द्र० मी०को० पृ० २४२६ । ३. पत्नी शब्दं यज्ञस्वामिन्या स्मरन्ति एवं यजमानशब्दमपि । मी०को० पृ० २४२७ । सा गार्हपत्यस्य पश्चिमदक्षिणदेशे पूर्वमुदङ्मुखी ऊर्ध्वजानुरुपविशति । ततः पयस्वत्याचमनादि गार्हपत्ये समिदाधानान्तं कर्म करोति । ततः तृणनिरसनं कृत्वा तत्रैवोर्ध्वजानुः प्राङ्मुखी उपविशति । पत्नीसंयाजप्रचारानन्तरं अवभृथस्थानीये अग्निहोत्रहवणी जलनिनयने पत्न्यञ्जलौ योक्त्रमाधाय होत्रा कृते स्वयं पूर्ववत्समिदाधानं पुनः परिषेकान्तं कृत्वा पूर्वं यथा वेद्युत्करयोर्मध्यमार्गेण प्रविष्टा तथाऽनेनैव मार्गेण विहारात् निर्गच्छतीति द्र० श्रौ०प०नि० पृ० २. पशुसोमयज्ञेषु च यथायथं विहितानि कर्माणि पत्नी करोतीति च विशेषोऽवगन्तव्यः ।

**पत्नीनिष्क्रमण**— (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च उत्तरगार्हपत्यसमिदाधानानन्तरं पत्नी तूष्णीं यथागतं तीर्थेन विहाराद् बहिर्निष्क्रामतीति तत् पत्नीनिष्क्रमणमुच्यते । **द्र०** श्रौ०प०नि० पृ० ३९, उत्तरगार्हपत्यसमिदाधान- ।

**पत्नीयजमानव्रतसादन**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्यु: आहवनीयस्योत्तरतस्तिष्ठन् अग्नीन् ज्योतिष्मत: कुरुत, दीक्षितवाचं यच्छ पत्निवाचं यच्छेति प्रेष्यति । तत: पूर्वद्वारेण निष्क्रम्य यजमानार्थं गोश्चतुर्भ्य: स्तनेभ्य: पयो दोहयित्वा गार्हपत्यस्य पश्चादुपविश्य उदीचोऽङ्गारान् निरुह्य तेषु तत्पयोऽधिश्रित्य दर्भोल्मुकेनाऽभिद्योत्य तस्मिन् पयसि स्रुवेणाऽऽप: प्रत्यानीय पुनरभिद्योत्य त्रि: पर्यग्निकृत्वा मेक्षणेनालोड्य श्रपयित्वोदमुद्वास्याङ्गारान् प्रत्यूह्य उत्तरे शालाखण्डे शिक्ये स्थापयति । प्रतिप्रस्थाता दक्षिणद्वारेण निष्क्रम्य पत्न्यर्थं व्रतं दोहयित्वाऽध्वर्युवद्दक्षिणाग्नौ श्रपयित्वा दक्षिणे शालाखण्डे शिक्ये निदधातीति ते । एतत् स्थापनं पत्नी यजमानव्रते (पय:) सादनमुच्यते । **द्र०** श्रौ०प०नि० पृ० २०० **द्र०** ।

**पत्नीयोक्त्रविमोचन** — (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च बौधायनसूत्रपठितत्वादध्वर्यु: आश्वलायन-सूत्रपठितत्वात् होता वा पत्न्या: कटौ आग्नीध्रेण पूर्वं निबद्धं योक्त्रं स्वस्वसूत्रपठितेन मन्त्रेण विमुञ्चति एतत्पत्नीयोक्त्रविमोचनमित्युच्यते । श्रौ०प०नि० पृ० ३९ ।

**पत्नीवेदवाचन**— (हौ०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च होता पत्न्यै वेदं प्रदाय मन्त्रं वाचयतीति पत्नीवेदवाचनमित्युच्यते । तत्र अध्वर्युर्वा वाचयति इति अध्वर्युविकल्पोऽवगन्तव्य: । तदुक्तम् 'वेदं पत्न्यै प्रदाय वाचयेद्धोताऽध्वर्युर्वा (आ०श्रौ० १।११।१) । **द्र०** श्रौ०प०नि० पृ० ३९ । मन्त्रपाठस्तु—वेदोऽसि वित्तिरसि विदेयकर्मासि करणमसि क्रियासंसनिरसि संनितासि सनेयं धृतवन्तं कुलायिनं रायस्पोषं सहस्रिणं वेदो ददातु वाजिनं यं बहवा उपजीवन्ति योजनानामसद्वशी तं विदेय प्रजां विदेय कामाम त्वा' इति (आ०श्रौ० १।११।१) । उच्चैश्चास्य मन्त्रस्य प्रयोग: ।

**पत्नीशाला**— (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पत्नी हि गार्हपत्यस्य समीपेऽवतिष्ठते इति गार्हपत्यसमीपस्थानं पत्नीशालोच्यते । **द्र०** द्वादशाहिकविहार—, प्राग्वंश—, शाला— ।

**पत्नीशालाप्रवेश**— **द्र०** दीक्षाङ्गपत्नीशालाप्रवेश— ।

**पत्नीसंनहन**— (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु प्रोक्षणीरासादयेध्मावर्हिरुपसादय, स्रुवं च स्रुचश्च संमृड्ढि पत्नीं संनह्याज्येनो देहि' इति प्रैषमन्त्रेण पत्नीसंनहनविधौ पत्नी संनह्यतेऽनेनेति मुञ्जनिर्मित: पत्नीबन्धनर्यो रज्जुविशेष: पत्नीसंनहनमित्युच्यते । तच्च ज्योतिष्टोमाङ्गेष्टिषु पशुषु च पृथक् न कार्यमिति

विशेषोऽवधेयः। (तु०— मी०को० पृ० २४२७।

**पत्नीसंयाज** — (अव्य०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु, अन्यत्र ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे सौमिकेषु पशुषु च देवपत्नीदेवताका दर्शपूर्णमासाङ्गभूताः 'सोमं यजति, त्वष्टारं यजति, देवानां पत्नीर्यजति, अग्निं गृहपतिं यजति' इति चत्वारो यागविशेषाः पत्नीसंयाजा इत्युच्यन्ते। (तु०— का० श्रौ० १।७।२ टि० विद्याधरः, का०श्रौ० ३।७।७ आ०श्रौ० १।१०।४-५)। ते च पत्नीकर्तृका भवन्ति। तत्र आहुतिचतुष्टयानां मध्ये तृतीयाहुतौ देवपत्नीनां देवतात्वात् तद्वारैव पत्नी संयाजेति नाम्नः प्रवृत्तिः। एते ऐष्टिकाश्च पाशुकाश्च पत्नीसंयाजाः तुल्या भवन्ति। पत्नीपदवाच्याश्चोच्यन्ते। (तु०— आ०श्रौ० १।१०।४ सिद्धान्ती) ऐष्टिकेषु आज्येन होमः पाशुकेषु जाघन्या होमः। चातुर्मास्यवरुणप्रघासेषु द्विः प्रयुज्यन्ते द्वादशाहे प्रागुक्तमादह्नः दशमं वर्जित्वाऽन्येष्वहःसु प्रवर्तन्ते इति विशेषोऽवधेयः। **द्र०** मी०को० पृ० २४२९, देवपत्नीमन्त्र—।

**पत्नीसंयाजप्रचार**—(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च शंयुवाकानन्तरं अध्वयुर्होत्रवेदं प्रदाय दक्षिणहस्तेन स्रुवमाज्यस्थालीं सव्येन जुहूमादाय दक्षिणेन पदा गार्हपत्यदक्षिणाग्न्योर्मध्येन गत्वा स्वयं पत्नी पश्चाद् भागेन गत्वा स्रुवादीनि पत्नीपुरोभागेन नीत्वा गार्हपत्यस्य पश्चादूर्ध्वजानुरुपविश्य होतुः सकाशाद् वेदं गृहीत्वा जुह्वा अधस्तादुपभृत्स्थाने धृत्वा आश्राव्य प्रत्याश्रावितो होतारं 'यज' इति प्रेष्य तेन वषट्कृते आज्यस्थाल्या आज्येन चतुरवत्तेन जुह्वा गार्हपत्ये सोमाय जुहोति, पुनश्चतुरवत्तेन त्वष्ट्रे ततो देवानां पत्नीभ्यः, ततो यजमानस्य प्रजाकामत्वे राकायै, सिनीवाल्यै कुह्वै, अनुमत्यै च पृथक् पृथक् चतुरवत्तेन हुत्वा स्वाहान्तैरेतैरेव चतुर्भिर्नाममन्त्रैः स्रुवाहुतीर्हुत्वा त्रिभिर्ऋङ्मन्त्रैः स्रुवाहुतीरेव हुत्वा आश्रावणादि कृत्वा अग्नये गृहपतये यजति। देवानां पत्नीनां यागकाले गार्हपत्यकुण्डोपरि पूर्वभागे अन्तर्धानाय अन्तर्धानकटं उदगग्रं स्थापयित्वा देवानां पत्नीरिष्ट्वा होतुरग्रेण गच्छति। इति। सोऽयं पत्नीसंयाजप्रचार इत्युच्यते। **द्र०** पत्नीसंयाज-, शंयुवाक-, श्रौ०प०नि० पृ० ३७-३८।

**पथ्य**—(सा०) पथ्यं (यथार्थ) बहुकृत्वोऽपि वदितव्यं भवति, न पुनरुक्तता महान् दोषः। ग्रन्थगौरवमयेन पुनरुक्तं नेच्छन्ति। अर्थाग्रहणात्तु बिभ्यतः पुनः पुनरभिधीयमानं बहु मन्यन्त एव। **द्र०** मी०को० पृ० २४३०।

**पथ्या**—(औ०) १. त्रिवृत्स्तोमस्य द्वितीयां परिवर्तिनीं विष्टुतिं पथ्यामेके वदन्ति **द्र०** द्रा०श्रौ० १६।२ धन्वी, ला०श्रौ० ६।२४, अग्निस्वामी, त्रिवृत्स्तोमविष्टुति-। २. दाशरात्रिकेषु त्रिवृदादिस्तोमेषु सर्वत्र प्रथमाभिः विष्टुतिभिर्विष्टुतय उक्ता ब्राह्मणेन (तां० ब्रा० २-३ अध्यायाभ्याम्), ताभिरनादेशे स्तोमानां क्लृप्तिः कर्तव्या। तत्र प्रथमा विष्टुतयः सर्वाभिप्राया (सर्वत्र पर्याकृतावुपयोगिन्यः) सत्यः पथ्याः सत्रपथ्याश्चेति संज्ञयोच्यन्ते (तु०— ला०श्रौ० ५।२।१-२ अग्निस्वामी) तथा चोक्तम् 'दाशरात्रिकेभ्यः

पर्यायकृतौ पर्यायानेव संहरेत् (ला०श्रौ० ६।६।९)।

**पद—** (सा०) साकक्षः पदार्थपरिज्ञानहेतुः शब्दः पदमुच्यते। २. सुप्तिङन्तं पदम् (पाणिनिः)। ३. नामाख्यातोपसर्गनिपाताश्चत्वारि पदजातानि। (नि०)। पदं चतुर्विधं रूढं यौगिकं योगरूढं यौगिकरूढं च। तत्र समुदायशक्त्या अर्थप्रत्यायकत्वं रूढत्वम्। अवयवशक्त्या अर्थप्रत्यायकत्वं यौगिकत्वम्। समुदायशक्त्या अवयवशक्त्या च एकार्थप्रत्यायकत्वं योगरूढत्वम्। तथैव भिन्नार्थप्रत्यायकत्वं यौगिकरूढत्वम्। **द्र०** मी०को० पृ० २४३१।

**पद—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चिति (स्थण्डिल) साधने द्वादशाङ्गुलं पदम् (आप०श्रौ० १६।८। १६ द्वादशाङ्गुलानि परिमाणं पदमुच्यते चयने)। पञ्चदशाङ्गुलं परिमाणं पदमुच्यते। **द्र०** श्रौ०प०नि० पृ० २।

**पद—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सोमक्रयणार्थं यज्ञशालां प्रति नीयमानायाः सोमक्रयण्याः गोः सप्तमपदस्थानपांसु पदमुच्यते। २. पदं सोमक्रयण्याः पदनिक्षेपस्थानम्। यज्ञशालायां हि सोमः क्रियते। तच्च अरुणयैकहायन्या गवा सोमं क्रीणाति (श० ब्रा० ३।१।१।१३-१६) इति गवैव विहितम्। गौश्च यजमानगोष्ठे तिष्ठन्ती यदा क्रयणार्थं शालां प्रत्यानीयते तदा तस्याः सप्तमे पदे यदवसानं तत्पदम्। तत् स्फ्येन परिलिख्य गृह्णीयात्। तच्च स्फ्येन 'अस्मे रमस्व' (का०श्रौ० ७।६।१७) इति मन्त्रेण त्रिः परिलिख्य गृह्यते। तस्य चोपयोगः सोमाधारशकटस्य अक्षाञ्जने भवति (तु०— का०श्रौ० १।७।८ टि० विद्याधरः)।

**पदकर्मन्—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सोमक्रयार्थं नीयमानाया गोः सप्तमपदस्थाने पांसुषु आज्येन आहुतिं विधाय पांसून गृहीत्वा तैः पांसुभिः हविर्धानशकटयोः अक्षस्य अञ्जनं पदकर्मोच्यते। २. सोमक्रयार्थं मूल्यत्वेन अरुणा पिङ्गाक्षी एकहायनी गौर्नीयते। गमनकाले तस्याः पूर्वकायस्य दक्षिणं पदं यत्र निपतति तत्र हिरण्यं निधाय स्रुवेण आज्यं हुत्वा आज्यमिश्राः पासवो गृह्यन्ते। तांस्त्रेधा विभज्य एकेन भागेन सोमशकटस्य अक्षः अज्यते। तदिदं सोमक्रयणीपदपातस्थानगतपाशुग्रहणं पदकर्म इत्युच्यते। **द्र०** मी०को० पृ० २४३३-३४। ३. सोमक्रयणी गौर्यदा सोमक्रयणार्थमानीयते तदा अध्वर्युस्तस्याः पृष्ठतो गत्वा यत्र तया सप्तमं पदं निधीयते तत्र हिरण्यं निधाय हुत्वा च तत्पदगतं रजो गृह्णाति। एतत्पदरजोग्रहणं पदकर्मोच्यते। **द्र०** पद्धरणीग्रहण—।

**पदकाल—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे संहिताविच्छेदः पदकालः इत्युच्यते।

**पदपरिमाणभेद—** (सा०) पदं द्विविधमुक्तं बौधायनेन 'दशाङ्गुलं क्षुद्रपदम्, पदं पञ्चदशाङ्गुलम्' इति। द्वादशाङ्गुलम् इति कात्यायनः। **द्र०** २. पद—।

**पदभेद—** (सा०) धातुजं धातुजाज्जातं समर्थार्थजमेव च। वाक्यजं व्यतिकीर्णं च निर्वाच्यं पञ्चधा पदम् (तु०— बृ० दे०) इति निर्वचनजन्याः पदभेदाः पञ्च भवन्ति। **द्र०** १ पद—।

**पदविभाग—**(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. पदविभागः खलु पदाध्याये क्रमाध्याये च भवति (तु०— तै० प्रा० ३ ।१) २. पदविभागः प्रकृतिपदैरुच्यते । तत्र कार्यभाजः पदस्य उत्तरपदेन सह संबन्धः, न तु पूर्वपदेन सह संबन्धनियमः । इति पदकार्यं पद- विभाग उच्यते । द्र० १ पद— ।

**पदविभाग्यसामन्—** (औ०) यस्मिन् साम्नि प्रस्तोतुरेकः पादः उद्गातुरेकः प्रतिहर्तुरेकः पुनश्चोद्गातुरेकः इत्येवं विभज्यते तत् पदविभाग्यसंज्ञं नाम सामोच्यते । (तु०— द्रा०श्रौ० धन्वी ला०श्रौ० ६ ।१० ।१) ।

**पदसंहिता—** स्वाध्याये ब्रह्मयज्ञप्रकरणे नानापदसंयोगः पदसंहिताभिधीयते । (तु०— तै० प्रा० २४ ।३) (पदसंहिता हि पदान्तस्य पदादेश्च भवति । तयोः (पदान्तपदाद्योः) अन्यतरस्य विकारलोपौ भवतः (तु०— तै०प्रा० भा० १ ।५६) । अथातो न्यायाध्ययनस्य पार्षदं वर्तयिष्यामः ! पदानां संहितां विद्यात् । ऋषिप्रोक्तमन्त्रादिशब्दस्वरज्ञानार्थः पदविभागः (अ०प्रा० १ ।१, सांहितं यत्र दीर्घत्वं ह्रस्वेन विभजेत् पदम् । (अ०प्रा० ३ ।३) विभागे = पदविभागसमये संहितायामित्यस्यायमर्थः—कार्यभाजः पदस्य उत्तपदेन सह सम्बन्धः न तु पूर्वपदेन सह संबन्धनियमः । विभागः प्रकृतिपदैरुच्यते । प्रकृतिर्नाम यथापाठः (तु०— तै० प्रा० ३ ।१) द्र० पदविभाग— ।

**पदसधातुसामन्—** सोमयज्ञेषु— ।

**पदसमाम्नाय—** (हौ०) द्र० ऐतशप्रलाप— ।

**पदस्तोम—** (औ०) द्र० स्तोमलक्षण— ।

**पदस्तोमभेद—** (औ०) अविभाग्या विभाग्या इति द्विविधाः पदस्तोमाः (तु०— ला० श्रौ० ७ ।७ ।१० अग्निस्वामी) ।

**पदाध्ययनप्रयोजन—**(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे पदाध्ययनमन्त्राऽऽदिशब्दज्ञानार्थम् (तु०— शौ० च ४ ।१०७) भवतीति ।

**पदार्थ—**(सा०) पदार्थः साकांक्षो भवति । पदार्थो हि वाक्यार्थस्य मूलम् । नास्य पृथक् सिद्धिरस्ति । पदार्थस्य स्मरणे प्रकृतौ सर्वत्र उपायचतुष्टयं प्रसक्तम् ब्राह्मणपदमन्त्रसूत्रोपद्रष्टारः । पदार्थाः (श्रौतयज्ञप्रक्रियापदार्थाः) यस्मिन् वेदे (ऋग्यजुः सामरूपे) आम्नाताः तत्समाख्यातेन (होत्रध्वर्यूद्गातृब्रह्मसंबन्धिना) पुरुषेण क्रियन्ते । पदार्थे तदनुष्ठाने च यथा वेदः प्रमाणं तथा पदार्थादिक्रमेऽपि प्रमाणम् । द्र० मी०को० पृ० २४३६-३७ ।

**पदार्थानुसमय—**(सा०) इष्टिपशुसोमयज्ञेषु १. यत्र बहूनि प्रधानानि एककाले अनुष्ठेयत्वेन विहितानि तत्र सर्वेषां प्रधानानां स्वैः स्वैरङ्गैः सह संबन्धस्य प्राप्त्या एकैकं प्रधानं प्रति तेषामेवाङ्गानामावृत्त्याऽनुष्ठाने प्राप्ते सर्वेष्वपि प्रधानेषु एक मेकमङ्गमनुष्ठाय पुनरङ्गान्तरं तेषु सर्वेषु प्रधानेष्वावर्तनीयमिति बहुप्रधान कर्मानुष्ठाने क्रमविशेषः पदार्थानुसमय उच्यते । द्र० काण्डानुसमय— । २. यत्रानेकेषां प्रधानानामङ्गानां वैकेन प्रयोगविधिनोपसंहारात् साङ्गानां साहित्यावगः, तत्र दर्शपूर्णमासप्राजापत्यादौ एकैकमङ्गमेकैकस्य कृत्वेतरस्य कर्तव्यमित्येवं पदार्थानुसमय (इत्युच्यते) । मी०को० पृ० २४३८) ३. एकस्मिन् प्रथमं धर्मं कृत्वा द्वितीये तमेव तमेव धर्मं कृत्वा तृतीयादौ स एव धर्मः कार्यः । पुनः अन्यो धर्मः प्रथमे द्वितीये तृतीये कार्यः । एवमेवापरे धर्माः कार्याः । एवं पङ्क्तिपरिवेषणन्यायेन धर्माणां धर्मिषु अनुष्ठानं पदार्थानुसमयः । यथा प्राजापत्यपशुषु उपाकरणादयः संस्काराः । द्र० मी०को० पृ० २४३७ ।

**पदार्थानुसमयकाण्डानुसमययो: प्रयोगविवेक—** (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु यत्र बहूनि प्रधानानि एककाले अनुष्ठेयत्वेन विहितानि तत्र सर्वेषां प्रधानानां स्वै: स्वैरङ्गैः सह सम्बन्धस्य प्राप्त्या एकैकं प्रधानं प्रति तेषामेवाङ्गानामावृत्त्याऽनुष्ठाने प्राप्ते तत्र एकप्रधानसंबन्धि सर्वमङ्गजातमनुष्ठाय तत: प्रधानान्तरसंबन्धि तदेव अङ्गजातमावर्तनीयमिति किं काण्डानुसमय: कर्तव्य: । अथवा किं एकमेकमङ्गं सर्वेष्वपि प्रधानेष्वनुष्ठाय पुनरङ्गान्तरं तेषु सर्वेष्वावर्तनीयम् इति पदार्थानुसमय: कर्तव्य: । इति संशय: । तत्र एकं प्रधानमुद्दिश्य तत्तत्संबन्धिना यावत्पदार्थकाण्डेन अनुसमय: अनुष्ठानं काण्डानुसमयपदार्थ: । अनेकप्रधानोद्देश्येन एकैकेन पदार्थेन आवृत्तेन अनुसमय: अनुष्ठानं पदार्थानुसमयपदार्थ: । तदेवं एकप्रधानाऽनेकप्रधानकर्मसु उभयो: काण्डानुसमयपदार्थानुसमययो: प्राप्तयो: तुल्यानां प्रधानानां सहानुष्ठाने कर्तव्ये यदङ्गं सर्वसाधारणं तत्पूर्वं कर्तव्यम् । एकं पदार्थं सर्वत्र पूर्वमनुष्ठाय अनन्तरं द्वितीय: पदार्थस्तथैवानुष्ठेय इति पदार्थानुसमय एव कर्तव्य: । कुत:, तदानीमेव आनुपूर्व्येण पदार्थानां संबन्धो भवति । तदुक्तं सामान्यपूर्वमानुपूर्व्ययोगात् (तु०— का० श्रौ० १ ।५ ।१० विद्याधर:) । एवं सर्वत्र पदार्थानुसमये प्राप्ते बहूनां सोमपात्राणां ग्रहणे सादने च तथा हविषां अवदाने प्रदाने च काण्डानुसमय एव नियम्यते । न पदार्थानुसमय: । एतदुक्तं भवति-एकस्य सोमपात्रस्य ग्रहणं कृत्वा तस्यखरे सादनं स्थापनं क्रियते । पुनरपरस्य पात्रस्य ग्रहणसादने क्रियेते । न तु पदार्थानुसमयेन सकृत् ग्रहणं समाप्य अनन्तरं सर्वेषां सादनं भवति । न त्वेकदा सर्वेषां ग्रहणमेव क्रियते नापि अनन्तरं सर्वेषां सादनमेव क्रियते इति । एवमेव पुरोडाशपात्र्यादौ प्रतिष्ठापितात् पुरोडाशादेर्हविष: 'द्विर्हविषोऽवद्यति इत्यादिना विहितमवदानं कृत्वा तत्तदेवतायै प्रदाय अनन्तरमेव हविरन्तरादवदानं कार्यं नत्वेकं हविरवदाय तस्य प्रदानादिकमकृत्वा हविरन्तरावदानं कार्यम्, इति काण्डानुसमय एव कार्य: । (तु०— का०श्रौ० १ ।५ ।१२ विद्याधर:) । द्र० काण्डानुसमय— ।

**पदावग्राहम्—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा हीनसत्रेषु १. पदे पदेऽवगृह्यावगृह्यशंसनं पदावग्राहमुच्यते । २. निविदां पदसमाम्नायपदानां च पदे पदेऽवगृह्यावगृह्य शंसनं पदावग्राहं पदावग्राहशंसनं वोच्यते । तत्रान्तिमे पदे प्रणव: क्रियते (ऐ० ब्रा० सा० ६ ।३३) ।

**पद्धरणी ग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमक्रयण्यनुगमनानन्तरं 'बृहस्पतिस्त्वा सुम्ने रण्वतु रुद्रो वसुभिराचिकेतु' इत्यनेन मन्त्रेण सप्तमस्य दोष्ण: प्रक्षेपस्य स्थानं दक्षिणहस्तेन गृह्णाति = स्पृशतीति यावत् । तस्मिन् स्थाने हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहृतेन चतुर्गृहीतेन 'पृथिव्यास्त्वा मूर्धन्नाजिघर्मि देवयजन इडाया: पदे घृतवति स्वाहा' इति मन्त्रेण जुहोति । सोमक्रयण्या इदमिति याजमानम् । हिरण्यमपनीय 'परिलिखितं रक्ष: परिलिखिता अरातय इदमह ँ रक्षसो ग्रीवा अपि कृन्तामियोऽस्मान् द्वेष्टि यं च वयं द्विष्म इदमस्य ग्रीवा अपि कृन्तामि स्फ्येन

पदं परिलिखति सकृन्मन्त्रेण द्विस्तूष्णीम्। अप उपस्पृश्य स्फ्येनोपसंगृह्य पद्धरण्यां संवपति— 'अस्ये रायः' इति मन्त्रेण। मन्त्र-कर्मणोस्त्रिरावृत्तिः। 'त्वे रायः' इति पद्धरणीं यजमानाय प्रयच्छति। यजमानः 'तोते रायः' इति मन्त्रेण पत्न्यै प्रयच्छति। 'सं देवि देव्योर्वश्या पश्यस्व' इति पत्नीं सोमक्रयण्या समीक्षयति। पत्नी—'त्वष्ट्रीमती ते सपेय सुरेता रेतो दधाना वीरं विदेय तव संदृशि' इति यजमानं समीक्षते। यजमानः—'माऽहँ रायस्पोषेण वियोषम्' इति सोमक्रयणीं समीक्षते। अध्वर्युः—हिरण्यं प्रक्षाल्य मध्यमायामङ्गुलौ बध्वा पददेशे उदकमपनीय पत्नीं गमयतीति। एतत् कर्म पद्धरणीग्रहणमुच्यते। द्र० ३. पद—, पदकर्मन्—, श्रौ०प०नि० पृ० २०५।

**पद्या—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितावुपधेया द्वादशाङ्गुलसमचतुरस्रा इष्टकाः पद्या उच्यन्ते।

**पन्नेजनी—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे चैकाहाहीनसत्रेषु १. पत्न्या प्रातःसवने पन्नेजनी कलशे गृहीत। आपः पादप्रक्षालनार्थत्वात् पादयोर्नेजन्यः। पन्नेजन्य इत्युच्यन्ते। २. पन्नेजनीग्रहणे गृहीता आपः पादप्रक्षालनार्थत्वात्। पादयोर्नेजन्य इति समासे पन्नेजनीपद्वाच्याः। द्र० श्रौ०प०नि०। पृ० २६४।

**पन्नेजनीग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने एकधनान् परिकर्मिभ्य एकधनिभ्यो दत्त्वा पत्नी कलशं गृहीत्वा बर्हिषी अन्तर्धाय पन्नेजनीर्गृह्णाति— 'वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो देवेभ्यः पन्नेजनीर्गृह्णामि' इति। तदिदं पन्नेजनीग्रहणमुच्यते। तत्र प्रतिकलशं ग्रहणमन्त्रस्यावृत्तिरिति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २६४।

**पन्नेजनीजलस्रावण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने बर्हिषी अपोद्धृत्य परिमृज्यानासादितमेवादायाऽऽह-'अग्नीनेष्टुरुपस्थमासीद, नेष्टः पत्नीमुदानय, उद्गात्रा संख्याप्याप उपप्रवणमान' इति। पूर्वद्वारा हविर्धानं प्रपाद्य यजमानं ध्रुवमुपस्थापयति—'भूत. यासम्' इति। चमसाध्वर्यवः सर्वेण सोमेन होतृचमसादींश्चमसान् अभ्युन्नीय सादयन्ति। होतृचमसेऽल्पमुन्नयन्ति। अध्वर्युः स्तोत्रोपाकरणादि कृत्वा सप्तहोतारं व्याचष्टे। नेष्टा पत्नीमुद्गात्रा लक्षयित्वा वाचयति— 'विश्वस्य ते. ईडिताः' इति। एतावत् कर्मकरणानन्तरं यदोद्गाता संज्ञा करोति तदा पत्नी ईषद् वस्त्रमपसार्योरुमूलात् पन्नेजनीः स्रावयतीति। इदं पन्नेजनीजलस्रावणमुच्यते। द्र० श्रौ० प०नि० पृ० ३१०।

**पन्नेजनीसहितपत्न्यानयन —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामाग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने नेष्टा पन्नेजनीहस्तां पत्नीमानयति—'प्रेह्य० हिंसी' इति पन्नेजनीसहितपत्न्यानयनमुच्यते। तत्र पत्न्यानयनात् पूर्वं नेष्टा स्रुचां पश्चाच्चमसं निधाय द्रोणकलशात् पूतभृतो द्रोणकलशादित्युन्नीयोत्तरवेद्यां सादयति। अध्वर्युः अच्छावाकचमसमादायाऽऽश्राव्याह—

'अच्छावाक यज' इति। वषट्कृतानुवषट्कृतयोर्हुत्वा चमसं हृत्वा भक्षणं न कुर्यात्। चमसमाप्याय्य पूर्ववत्सादयति। आह—अच्छावाक सीद, नेष्टः पत्नीमुदानय, अग्नीद् अच्छावाकं मे सन्नं प्रब्रूतात् इति प्रैषो भवतीति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २८७-८८।

**पन्नेजनीसादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने पत्नी यथेतमेत्य वेद्यां शालामुखीयस्य पश्चात् तेन संसृष्टाः पन्नेजनीः सादयतीति। एतद् वेद्यां पन्नेजनीसादनमुच्यते। द्र० श्रौ०प०नि० पृ० २६५।

**पयसि चरु—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतस्य हविर्यागानां तृतीयस्य दर्शपूर्णमासयागस्य विकृतिष्विष्टिषु यदा पयः सहितां स्थालीमधिश्रित्य चरुः साध्यते तदा स पयसि पक्वश्चरुः। पयसि चरुरुच्यते। द्र० श्रौ०प० नि० पृ० १८।

**पयस्या —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमांसयोर्विकृतौ हविर्यागानां पञ्चमे चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि वैश्वदेवयागार्थं। गव्यं पयः तप्तं कृत्वा तापविशिष्टे एव पयसि यदा दधि प्रक्षिप्यते तदा तद्द्विधा भवति, एकः द्रवीभूतः (जलरूपः) अंशो भवति द्वितीयः घनीभूतः। तत्र यो द्रवीभूतो भागः स पयस्या पयसि भवा वैश्वदेवी आमिक्षा चोच्यते। द्र० आमिक्षा— द्र०। सेयं तप्ते पयसि दधनि प्रक्षिप्ते विकृतः कठिनभागः पयस्या। दाक्षायणयज्ञे तु सा प्रकृतिभूता मैत्रावरुणीत्युच्यते इति बोध्यम्।

**पयस्या—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने मित्रावरुणयोः पयसि भवा पयस्यास्त्वनीयहविरुच्यते। प्रातःसवन एवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोरिति विशेषोऽधेयः। द्र० श्रौ०को० २ भा० पृ० ३०२। ३. पयस्यायाः सवनीये पूर्वसिद्धाया एवैकदेशः मैत्रावरुणपात्रे निधेयः ज्योतिष्टोमे, न तु निधानार्थमपूर्वपयस्योत्पादनम्। द्र० मी०को० पृ० २४४१।

**पयोग्रह—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यागानां सप्तमे कौकिलसौत्रामणीप्रकरणे प्रयोक्तव्याः यज्ञियस्य फले ग्रहेः पलाशादिवृक्षस्योलूखलाकाराण्यूर्ध्वमुखानि प्रादेशमात्रा-णित्रीणि पात्राणि त्रयः पयोग्रहा इत्युच्यन्ते पयोग्रहाः सुराग्रहाश्च सौत्रामण्याम्। उत्तरेऽग्नौ पयोग्रहान् जुह्वति। द्र० श्रौ०प०नि० पृ० १५२, द्र० सुराग्रह—, सौत्रामणी-पदार्थ—।

**पयोग्रहसादन—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यागानां सप्तमे कौकिलसौत्रामणीप्रकरणे प्रतिप्रस्थाता सुरास्थानीयं सुरास्थानीयं पयः कुम्भे किञ्चित् परिशेषयति। ततोऽध्वर्युः प्रोक्षण्युत्पवनादि 'ऋषभौ स्थः' इत्यादि यजुषा स्रुवस्वधिति सादनान्तं कृत्वा वेद्यामेव ग्रहेषु वक्ष्यमाणमन्त्रैः क्रमेण पयो गृह्णाति—'कुविदङ्ग यवमन्तः' इत्यृचा 'उपयाम गृहीतोऽस्यश्विभ्यां त्वां जुष्टं गृह्णामि' इति यजुषा च प्रथमे ग्रहे गृहीत्वा यवसक्तुभिः संश्रित्य स्वीयश्येनपात्रेण परिमृज्य 'एष ते योनिस्तेजसे त्वा' इति मन्त्रेण स्रुचां पश्चात् खरे सादयति।

(अग्रेण दक्षिणाग्निं वेद्यामेव पूर्वकृते द्वितीयखरे सादयतीति, इत्यान्विला ग्रन्थे उक्तम्) ततः पूर्वोक्तयैवर्चा उपयाम गृहीतोऽसि सरस्वत्यै त्वा जुष्टं गृह्णामि' इति यजुषा च द्वितीये ग्रहे गृहीत्वा गोधूमसक्तुभिः संश्रित्य पूर्ववत् परिमृज्य 'एष ते योनिर्वीर्याय त्वा' इति मन्त्रेण पूर्वग्रहवत् सादयति। ततस्तयैवर्चा 'उपयाम गृहीतोऽसीन्द्राय त्वा सुत्रामणे जुष्टं गृह्णामी' ति यजुषा च तृतीये ग्रहे गृहीत्वोपवाकसक्तुभिः संश्रित्य परिमृज्य 'एष ते योनिर्बलाय त्वा' इति मन्त्रेण सादयति। प्रागपवर्गमुदगपवर्गं वा त्रयाणां ग्रहाणां खरे सादनम्। तदेतत्पयोग्रहसादनमुच्यते। द्र० श्रौ०प०नि० पृ०१५६। उत्तरेऽग्नौ पयोग्रहान् जुह्वति इति विशेषोऽवधेयः।

**पयोग्रहोपस्थान—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यागानां सप्तमे सौत्रामणीप्रकरणेऽध्वर्युःपयोग्रहसादनानन्तरं सन्नान् पयोग्रहानुपतिष्ठते—'तेजोऽसि तेजो मयि धेहि' इति मन्त्रेण द्वितीयम्। 'बलमसि बलं मयि धेहि' इति तृतीयम्। इति त्रयाणां पयोग्रहाणामुपस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० १५६ द्र०।

**परकीया—** द्र० स्वकीया—।

**परशाखाविहितबाध—** (सा०) इष्टिपशुसोमेषु परशाखाविहितं स्वशाखाविहितेन बाध्यते इति परशाखाविहितबाध उच्यते। द्र० मी०को० पृ० २४४५।

**परमात्माधिष्ठितवेद—** (सा०) शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते। तदप्यधिष्ठितं सर्वमेकेन परमात्मना। द्र० मी०को० पृ० २४४७।

**परः सामन्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे अन्यत्र च सत्रादिषु प्रयोक्तव्याः सप्तदशस्तोमयुक्ताः त्रयः स्वरसामान एव नामान्तरेण परः सामाख्यानि त्रीण्यहानि परः सामान इत्युच्यन्ते। द्र० स्वरसामन्—।

**पराकच्छन्दोमत्रिरात्रस्याहः क्लृप्ति—** द्र० पराकत्रिरात्रस्याहः—।

**पराकत्रिरात्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अहीनप्रकरणे पराकत्रिरात्रसंज्ञकस्त्र्यहोऽहीनः। स चाग्निष्टोमसंस्थः। तस्मिन् पराकत्रिरात्रे द्वादश उपसद्दिनानि अभिप्लवस्य ज्योतिर्गौः, आयुः इति त्रीणि सुत्यादिनानि पञ्चदश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते अहीनद्वादशाह वर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्।

**पराञ्चि—** (अव्य०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे चतुर्विंशमहाव्रतविषुवदभिजिद्विश्वजिदाख्येषु पञ्चसु अहःसु किमप्यङ्गं न हीयते तस्मादेतान्यहीनानि। किंचैतानि अहीनानि पराञ्चीनि सकृदेव प्रयोज्यानि नत्वावृत्तियुक्तानि अत एवाऽनभ्यावर्तीनि चोच्यन्ते। द्र० अभ्यावर्तिन्—।

**परावपन्—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. व्रीह्यादीनामुलूखले अवहतानां शूर्पेण फलानामन्तरेऽवस्थितिर्यथा स्यात्तथा अध्वर्युणा कृतं तुषादेः परानिरसनम्परावपनमुच्यते, श्रौ०प०नि० पृ० १५ द्र०। २.

निस्तुषकरणार्थं शूर्पचालनम्। अर्थात् कण्डनेन पृथग्भूतानां तण्डुलादीनां शूर्पे एव स्थितिः तुषादीनां चाधःपतनं यथा स्यात् तथा कौशलेन शूर्पचालनं परावपनमुच्यते। श्रौ०प०नि० पृ० १७ द्र० ३. परावपनं उलूखलात् शूर्पे अवहतस्य हविषः प्रक्षेपः। द्र० मी०को० पृ० २४५०।

**परिकर्मन्—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु ऋत्विग्यजमानभिन्नस्य (पुरुषस्य) कर्तव्यत्वेन विहितस्य कर्मणो वाचकः परिकर्मशब्दो भवति। द्र० श्रौ०प०नि० पृ० १६।

**परिकर्मिन्—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु परिकर्मणः कर्ता परिकर्माऽस्या- स्तीति परिकर्मी ऋत्विग्यजमानानां सहायकः कार्यकर्ता परिकर्मीत्युच्यते। द्र० श्रौ०प०नि० पृ०१६।

**परिक्रय—** (सा०) ऋत्विजां परिक्रयः दक्षिणया कर्तव्यः। ऋत्विजां दक्षिणा उत्साहकारिणी परिक्रयस्य च एतद्रूपम्। द्र० मी०को० पृ० १२५२।

**परिगाण—** (आध्व०) सोमयज्ञेषु परिगाणानि स्तोत्रान्तर्भावेन न प्रवर्तन्ते ततस्तानि परितः स्तोत्राणि वर्तन्त इति परिगाणानि। (तु०— जै० श्रौ० भा० २४।१ इत्युच्यन्ते।

**परिग्रहण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च असिदश्वपरश्वोरन्यतरद् गृहीत्वा मन्त्रेण आहवनीयदेशं गत्वा मन्त्रेण वेदिमवेक्ष्य दर्भदेशं गत्वा प्रस्तरपर्याप्तं दर्भमुष्टिं परिगृह्य असिदादिना छेदनीयदर्भमुष्टेः आसमन्तात् भेदाय भ्रामणं परिग्रहणमुच्यते। द्र० श्वपरशु—, असिद— श्रौ०प०नि० पृ० १२।

**परिघर्म्य—** सोमयज्ञेषु सप्रवर्ग्ये प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवस्तु च प्रयोक्तव्यानि— १. उपयमनादीनि घर्मपात्राणि घर्म्यपद- वाच्यानि परिघर्म्याणि इत्युच्यन्ते। तान्युदुम्बरवृक्षमयानि भवन्ति। सर्वाणि घर्म्यचाणि संसाद्य 'शं नो वातः' इति शान्तिं जपन्ति इति विशेषोऽवधेयः द्र० उत्तरशान्ति—श्रौ०प०नि० पृ० २२८।

**परिचरा—** (औ०) वर्धमानानां एकिप्रभृतीनां त्रिवृदादीनां (प्राकृतानां) च स्तोमानां प्रथममध्यमोत्तमास्त्रयः पर्याया भवन्ति। तेषु उत्तमे पर्यये प्रथमपर्यायस्योत्तमा स्तोत्रीया, मध्यमपर्यायस्य प्रथमा स्तोत्रीया, उत्तमपर्यायस्य मध्यमा इत्युत्तमपर्यायस्य त्रिषु पर्यायेषु उत्तम प्रथमोत्तम स्तोत्रीया परिचरेत्युच्यते। (ला०श्रौ० ६।५।१-५ द्रा०श्रौ० १७।१ तै० ३।४।६।१।

**परि धा—** (समापने) परिदधाति शस्त्रं समापयति।

**परिधान—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिविकृतिषु शंसनानुवचनाभिष्टवनादीनां समाप्तिः परिधानमुच्यते। यया ऋचा परिधानं कुर्यात् तां त्रिर्ब्रूयात्। सर्वत्रोत्तमा परिधानीया भवतीति विशेषोऽवधेयः।

**परिधानीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तद्विकृतिषु चैकाहाहीनसत्रेषु परिधीयते समाप्यते शस्त्रमनयेति शस्त्राणां निविद्धानीयसूक्तोत्तमा ऋक्। त्रिः प्रथमां त्रिरुत्तमामन्वाह इति न्यायेन परिधानीयायाः (उत्तमायाः) त्रिरावृत्तिर्भवतीति (तु०— ऐ० ब्रा० सा० ४।११)। सर्वत्रोत्तमां परिधानीयेति विद्यात् इति (आ०श्रौ०) तदुक्तम्—आहूयोत्तमया परिदधाति (आ०श्रौ० ५।९।२४)। शस्त्राणि हि होतुः

शस्त्रिणां होत्रकाणां च प्रकृतिविकृतिरूपेषु सोमयागेषु समाम्नातानि। तत्र प्रकृतिः ज्योतिष्टोमातिरात्रः अग्निष्टोमो वा। विकृतिः एकाहा अहर्गणाः (अहीनाः सत्राणि) च। ततः शस्त्रपरिधानीया अपि होतुः होत्रकाणां प्राकृत्यो वैकृत्यश्चेति द्विविधा भवन्ति (सर्वशस्त्र परिधानीयास्वेवम् (तु०—आ०श्रौ० ५।९।२५ नारायणः)। द्र० अग्निष्टोमे शस्त्र-परिधानीया—, ऐकाहिक-परिधानीया, वा अहीनपरिधानीया, अहीनाहर्गण परिधानीया वा—।

**परिधि—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. आहवनीयस्य पश्चात् दक्षिणतः उत्तरतश्च प्रथममेखलाया उपरि निधानोपयोगीनि मेखलापरिमितायामानि त्रीणि काष्ठानि परित आहवनीयस्य निधानात् परिधिरुच्यते। तत्र बर्हिः संभरणानन्तरं अध्वर्युरिध्मदेशं गत्वा असिदेनश्वयरशुना वा इध्मं तूष्णीं छिनत्ति। तस्मिन्नेकविंशतिसंख्याकानि काष्ठानि भवन्ति। तेषु यानि त्रीणि काष्ठानि तान्याहवनीयस्य परितः निधानात् परिधिरिति बाहुमात्र्यः पलाशादिसमिधो भवन्तीति विशेषोऽवधेयः। द्र० इध्म—, श्रौ०प०नि० पृ० १३, का० श्रौ० भूमिका, दर्शपूर्णमासपदार्थाः बर्हिः संभरण—। २. परिधीयते अग्निः तदायतनं वा यैः इति, परिधीयन्ते इति वा परिधिशब्दो यौगिकः। दर्शादौ अश्वत्थस्य सार्धारत्निपरिमिताः दीर्घाः अङ्गमात्रस्थूलाः परिधयः। द्र० मी०को० पृ० २४५३। ३. परिधौ पशुं नियुञ्जन्ति पशुमत्सु चातुर्मास्येषु। द्र० मी०को० पृ० ४. परिधिषु मध्यमः स्थविष्ठः, दक्षितः अणीयान द्रावीयान उत्तरतः अणिष्ठः २४५४।

**परिधिधर्म—** (सा०, आध्व०) इध्मसंनहनं संमार्जनं जुह्वा अञ्जनं अभ्या श्रावणं इति परिधिधर्मा इत्युच्यन्ते। द्र० मी०को० पृ० २४५३। इध्मसंनहनम्, संमार्जनम्, जुह्वा अञ्जनं 'वसुरसि' इत्येवमादिभिः (मन्त्रैः), अभ्याश्राणम्, सत्वक्वत्वम्, उपशयत्वं च। मी०को० पृ० २४५६।

**परिध्यञ्जन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. स्रुग्व्यूहनान्तरमध्वर्युर्जुह्वा मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण पृथक् पृथक् मन्त्रैरनक्तीति परिधीनामञ्जनं कर्म परिध्यञ्जनमुच्यते। द्र० श्रौ०प०नि० पृ० ३६।

२. अध्वर्युः वेदगृहीतैः प्रणीतोदकैर्जुहूमभ्युक्ष्य जुहूस्थेनाज्येन पश्चिमदक्षिणोत्तरपरिधान् क्रमेण नक्ति (का०श्रौ० ३।६।२० विद्याधरः)।

**परिप्लुसहित चमसनिधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने चमस प्रक्षालननानन्तरं तान् पूतभृदाधवनीययोर्मध्ये परिप्लुना सह निदधातीति इदं परिप्लुसहितचमसनिधानमुच्यते। द्र० श्रौ०प० नि० पृ० २९४, चमसप्रक्षालन—।

**परिभाषासूत्र—** (सा०) कल्पसूत्रेषु 'इत्युक्ते एतस्य ग्रहणम्; 'इत्युक्ते एतं प्रतीयात्; 'इत्युक्ते इति प्रत्येतव्यः; इत्युक्ते एतेषां ग्रहणम्। इत्युक्ते एते प्रत्येतव्याः इति निर्देशो यत्र यत्र तत्तत्परिभाषासूत्रमुच्यते। (तु०—आ० श्रौ० २।१।३०)।

**परिभोजनीयदर्भ—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अस्ति परिभोजनीयं नाम बर्हिः। ततः पवित्रे विधृती च कर्तव्ये, न तु वेदिस्तरणाद् बर्हिषः। शास्त्रीयलवनादिसंस्काररहिताः (यागे उपयोज्यमानाः) दर्भाः (तादृशदर्भाणां मुष्टिश्च) परिभोजनीयाः इत्युच्यन्ते। दर्शपूर्णमासयोः पवित्रं परिभोजनीयदर्भैः सम्पादनीयम्। द्र० मी०को० पृ० २४५८।

**परिमर—**(सा०) परिमरो नाम राज्ञः शत्रुविनाशकः कर्मविशेषः। येन परितः सर्वदिक्षु वर्तमाना द्वेषिणो राजानो मृता भवन्ति स परिमर इत्युच्यते।

**परिमाद्—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोमस्याङ्गभू-तालोमनखस्थानीयाः १. प्राण २. अपान ३-४. व्रतपक्ष ५. प्रजापते हृदय ६. वासिष्ठस्य निहव ७. सत्रस्यर्धि ८. श्लोक ९. अनुश्लोक १०. याम ११. आयुः १२. नवस्तोम १३. ऋष्यस्यसाम इति त्रयोदश सामानि गवामयने माध्यन्दिने होतुः पृष्ठस्य महाव्रतस्तोत्रस्याङ्गभूता लोमनखस्थानीयास्त्रयोदश परिमाद् इत्युच्यन्ते। तानि सर्वाण्युद्गाता सर्वाणि सकृत्सकृद् गायेत। निधनं प्रस्तोतृप्रतिहर्तारावनूपेयाताम् (आ० क० २।११।६ वरदराजः) तदुक्तं— तैत्तिरीये यदि त इतो लोमानि इतो नरवात् परिमादः क्रियन्ते तान्येव तेन प्रत्युप्यन्त इति (तु०— तां० ब्रा० सा० ५।४।१-३; ५।५।१)। द्र० अनुश्लोकसामन्—, नवस्तोमसामन्—, प्राणसामन्—।

**परिमाद्—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोमस्याङ्गभूतालोमनखस्थानीयाः प्राण (१), अपान (२), व्रतपक्ष- (३-४), प्रजापतेर्हृदय- (५), वसिष्ठस्य निहव (६), सत्रस्यर्धि (७), श्लोक (८), अनुश्लोक (९), याम (१०), आयुस्- (११), नवस्तोम (१२), ऋश्य सामानि (१३) इति त्रयोदश सामानि परिमात्संज्ञकानि परिमाद उच्यन्ते। तानि सर्वाण्युद्गाता सकृत्सकृद् गायेत। निधनं प्रतिस्तोतृप्रतिहर्तारावनूपयेताम् (तु०— आ०क० २।११।६ वरदराजः)। तत्र 'इन्द्रं नरः' (साम० ३१८) इत्यस्यां हाउ ३ आयुः ३ सत्यम् ३ इति गीयमानं साम प्राणः (तां० ब्रा० सा० ५।४।१)। हा उ हा उ हा उ श्वासं कृत्वा आयुः सत्यमित्यादि स्तोमान् पदाय पदाय ब्रूयात् (आ०क० २।११।६ वरदराजः)। 'इन्द्रं नरः' इत्यस्यामेव हा उ आ नो हि य ३ मनदोहम् ३' इति गीयमानः साम अपानः (तां० ब्रा० सा० ५।४।२)। हा उ हा उ हा उ निरुच्छ्वासं कृत्वा 'आ नो आयाहि' इति पदाय पदाय स्तोमेत (आ०क० २।११।६ वरदराजः)। 'इन्द्रं नरः' इत्यस्यामुत्पन्नौ हा उ ३ हे॒ँ ३ ह॒ँ इन्द्रं नरः इति गीयमानं साम पूर्वोव्रतकक्षः। हा उ ३ इहा ३॒ँ ह॒ँ ३ इन्द्रं नरः इति गीयमानं साम उत्तरः (व्रतकक्षः) (ता० ब्रा० सा० ५।४।३)। हा उ हिं हिं हिं ३ इहा। हि इति व्रतपक्षयोः पूर्वेण उत्तरेण च पदाय पदाय स्तोमेत् (आ०क०)। प्रजापतेर्हृदयम् (तां० ब्रा०)। हृदयमिति निधनम् (आ०क०)। 'असावि देवम् (साम० ३१३) इत्यस्यामुत्पन्नं साम वसिष्टस्य निहवः। आ

इ हो ३ ए हि या ३ २३ ४ वा हा इ 'असावि देवं गो रु जीता ३ क्षां धा उ इत्यादिकं तत्साम (ता० ब्रा० सा० ५ ।४ ।५)। आ ह हि इत्यादि पदाय पदाय स्तोमेत्। 'औ हो वा ३ 'अगन्म ज्योतिः सत्रस्य ऋद्धिः। अस्य स्वर्ज्योतः' इति व्यूहेन चतुरक्षरणिधनं भवति (तां० ब्रा० सा० ५ ।४ ।७-८)। अगन्मज्योतिः इत्यादिभ्यो देवतापदेभ्यः प्रत्येकं औ हो वेति स्तोमेत्। तेषां ते 'अगन्म ज्योतिः। अमृता अभूम। अन्तरिक्षं पृथिव्या अध्यारुहाम्। दिवमन्तरिक्षादध्यारुहाम। अविदाम देवान्। समु देवैरगन्महि। सुवर्ज्योति, इति निधनानि। तस्योत्तमं निधनं यावदुच्छ्वासं ब्रूयुः। प्राणवायोः श्रमपर्यन्तं स्वर्ज्योतिरिति अनुच्छ्वसन्तः पुनः पुनरावर्तयेयुरित्यर्थः। हाऊ स्वरता ब्रह्मणा, इति गीयमानं साम श्लोकः। 'अनवस्ते रथमश्वा याता (साम० १२२४) इत्यस्यां गीयमानं 'हाऊ स्वरता स्वरतरा २३ ता इत्यादिकं साम अनुश्लोकः। (ता० ब्रा० सा० ५ ।४ ।१०) हा उ स्वरता ब्रह्माण इन्द्रमिति (श्लोकः साम)। हा उ अभिरता' इति (अनुश्लोकः) (आ०क० २ ।११ ।६) 'नाके सुपर्णम् (साम० ३२०) इत्यस्यां यत्पठितं साम यामम्, 'औ हो३ इया हाऊ अहो होइ वा नाके सुपा' इत्यादि (तां० ब्रा० सा० ५ ।४ ।११)। औ हो इ नाके सुपर्णम्' इति (यामः) (आ०क० २ ।११ ।६)। हाऊ ३ आ 'विश्वतो दावन्' (साम० ४३७) इत्यायुः। 'विश्वतो दावन्' (साम० ४३७) इति नवस्तोमः (तां० ब्रा० सा० ५ ।४ ।१२)। आयुर्नवस्तोमौ (सामनी)। हाउ हाउ हाउ वा 'विश्वतो दावन्' इत्यायुर्नवस्तोमे। तयोर्निधनानि पूर्वोक्तानि (आ०क० २ ।११ ।६)। 'हरी त इन्द्र श्मश्रूणि' (साम० ६२३) इति गीयमानं ऋश्यं साम। अस्मिन् साम्नि 'भुङ् इति, प्रभुङ् इति, इन्द्रस्तसर इति स्तोमवत् अत्र 'ऋश्यास इन्द्र भुङ् इति, मघवन्निन्द्र भुङ् इति, प्रभुङ्, इतीन्द्रस्तसरपूता २३४५ इति पुनः पुनस्तसरस्थिरमित्येतत्' इति शास्यायनकम् (तां० ब्रा० सा० ५ ।४ ।१३ - १४) । इति विशेषोऽवगन्तव्यः। द्र० महाव्रते मा० स० पृष्ठेषु होतुः पृष्ठस्तोत्रे परिमात्सामभिराहवनीयादिकोपस्थान—।

**परिमितशक्य—** द्र० २. एकाह—।

**परिमितस्तोत्र—** (औ०) सोमयज्ञे प्रकृतिभूतज्योतिष्टोमातिरात्र- प्रकरणे चतुर्थ्यां सोमसंस्थायामतिरात्रे उद्गातारः परिमितं स्तुवन्ति त्रिवृत् पञ्चदशः सप्तदश एकविंश इत्येवं चतुर्भिरेव स्तोमैरत्र (सर्वस्तोमनिष्पत्तेः। तैरेव सर्वाणि स्तोत्राणि निष्पाद्यन्ते इति (तु०— ऐ० ब्रा० सा० ४ ।६)। सर्वस्तोत्रनिष्पत्त्याः परिमितत्वं ज्ञेयमिति।

**परियज्ञ—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-रात्रविकृतौ एकाहप्रकरणे तृतीयायाश्चतुर्थ्या वा सोमसंस्थाया षोडशिनो गुणविकारे वाजपेये एकाहे परियज्ञा नाम वृहस्पतिसवज्योतिष्टोमपार्ष्टिकषडहास्तथा राजसूयाः तत्र १. पवित्रः, २. अभिषेचनीयः, ३. दशपेयः, ४. केशवपनीयः, ५-६ व्युष्टिद्विरात्रस्य प्रथमद्वितीये अहनी, ७. क्षत्रधृतिः, ८. त्रिष्टोमः, ९. ज्योतिष्टोम इत्येते नव सप्त वाऽवयवा राजसूया उच्यन्ते। एतेषां विभिन्नकालेऽनुष्ठेयत्वात् तन्त्रेण दीक्षाऽसम्भवात् पृथक् पृथगेव दीक्षाः कर्तव्या इति विशेषोऽवगन्तव्यः (तु०— का० श्रौ० १४।

१।९ विद्याधर:)। द्र० वाजपेयस्य परियज्ञैः सहानुष्ठानुष्ठानकाल—

**परिवर्तिनी—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु परवर्तिनी नाम त्रिवृत्स्तोमस्य विष्टुतिः। सा चैवं आम्नायते—'तिसृभ्यो हिंकरोति' स पराचीभि:' तिसृभ्यो हिं करोति स पराचीभि:, तिसृभ्यो हिंकरोति स पराचीभि: तिसृभ्यो हिंकरोति स पराचीभि:, तिसृभ्यो हिंकरोति-स पराचीभि: इति परिवर्तिनी त्रिवृतो विष्टुतिरित्युच्यते। मी०को० पृ० २४५९।

**परिवाप—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात: सवने परिवाप: लाजा:, सवनीयहवि:। तच्च हरिभ्यां निरूप्यते। द्र० सवनीयपुरोडाशयाग—, सवनीयपुरोडाशयागे हविस्—, सवनीयपुरोडाशयागे पुरोडाशादिहविर्निर्वाप—।

**परिवापकपालोपधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...ष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने धाना कपालस्योत्तरतो धानाकपालोपधानवत् द्वितीयं भर्जनकपालमुपदधातीति। इदं परिवापकपालोपधानमुच्यते। द्र० सवनीय पुरोडाशयागे हविस्—, श्रौ०प०नि० पृ० २६१।

**परिवापश्रपण—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु व्रीहीनवतार्य वितुषीकृत्य नवे पात्रे पूर्ववदाज्यमानीयोप्य 'इन्द्राय त्व' इति मन्त्रेणाभिमृश्य करम्भादुत्तरतो भस्ममिश्रेषु अङ्गारेष्वधिश्रयति इति। तदिदं परिवापश्रपणमुच्यते। द्र० सवनीयपुरोडाशयागे हविस्—, श्रौ०प०नि० पृ० २६२ द्र०।

**परिवृत—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-प्रकरणे अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु वेदिसाधने शालाया विमिताद् वा द्विहस्तान्तराले प्राग्वंशं पञ्चहस्तं समचतुरस्रं कटादिना परित: वृतं गृहं परिवृतमुच्यते। ते च द्वे क्रियेते एकं शालाया: उत्तरत:, अपरं शालाया: पश्चात्। पित्र्येष्ट्यां तु दक्षिणाग्नेर्दक्षिणस्यां दिशि यथा प्रमाणं क्रियते इति विशेषोऽवधेय:।

**परिवृत—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे आहवनीयस्योत्तरस्यां दिशि उद्धतावोक्षिते देशे मृत्पिण्डनिधानार्थं प्राग्द्वारं सिकतोपकीर्णं पञ्चहस्तनिर्मितं गृहं परिवृतमुच्यते। (तु०— का०श्रौ० १६।३।१३ विद्याधर:)।

**परिव्ययणप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्यु: अवटं पार्श्वभूम्यपेक्षयाऽन्यूनमनतिरिक्तं पुरीषेण प्रच्छाद्य तत्रोदपात्रोदकं प्रदक्षिणं निनीय यूपरशनामादाय त्रि: संभुज्य मध्यमेन गुणेन यूपं नाभिदध्ने त्रि: प्रदक्षिणं परिव्ययन्नाह—परिवीयमाणायानुब्रूहीति। सोऽयं परिव्ययणप्रैष:। द्र० श्रौ०प०नि० पृ० २२६।

**परिव्याण—** (सा०) परिव्याणं यूपस्य रशनया वेष्टनम्। मी०को० पृ० २४५९।

**परिशिष्टावाप—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे गवामयने चतुर्विंशे, महाव्रते, अभिजिति, विश्वजिति, विषुवति (सात्रिकेष्वह:सु) सर्वस्तोत्रे, सर्वपृ-

ष्ठेषु चाह:सु प्रात:सवने प्रयुज्यमानेषु षडहस्तोत्रियानुरूपेषु १. उपयुक्तशिष्टा अर्थादधिका उपजनास्तृचा: परिशिष्टा आवापा इत्युच्यन्ते। ते च मैत्रावरुणादिभि: स्वशस्त्रेषु आरम्भणीयाशंसनानन्तरमोप्यन्ते। तत्र मैत्रा वरुणस्य परिशिष्टावापा:— 'मरुत्वन्तं हवामहे' (ऋ० १।२३।७-२४) इति षट्, 'गोमदूषु नासत्या' (ऋ० २।४१।७-२१) इति पञ्च, 'बहव: सूर चक्षस: (ऋ० ७।६६।१०-१८)। इति त्रय: इत्येते चतुर्दश परिशिष्टावापापतृचा:। ब्राह्मणाच्छंसिन: परिशिष्टा- वापा: 'आ नो पाहि सुता वत:' (ऋ० ८।१७।४-१५) इति चत्वार: 'इन्द्र वाजेषु नोऽव' (ऋ० १।७।४-९) द्वौ 'आ दह स्वधेस्तनु' (ऋ० १।६।४) 'इन्द्रो दधीचो अस्थिभि:' (ऋ० १।८४।१३-१४) इति तिस्रो मिलित्वा एकस्तृच:, 'अत्राह गोरमन्वत' (ऋ० १।८४।१५-२०) द्वौ, इति नव परिशिष्टावापतृचा:। अच्छावाकस्य 'परिशिष्टावापा:—'तोशा वृत्रहणा हुवे' (ऋ० ३।१२।४-९) द्वौ, 'इन्द्राग्नी अवसागतम्' (ऋ० ७।९४।७।१२) द्वौ, 'इन्द्राग्नी युवामिमे' (ऋ० ६।६०।७-१५) त्रय: 'जुषेथां यज्ञमिष्टये' (ऋ० ८।३८।४-९) द्वौ, इति नव परिशिष्टावाप तृचा:। होत्रकाणां प्रात:सवनगता: षडहस्तोत्रियानुरूपास्तृचास्तु (आ०श्रौ० ७।२।२-४) इत्यत्र द्रष्टव्या:) इति विशेषोऽवधेय: २. परिशिष्टानां षडहस्तोत्रेषु स्तोत्रियत्वेन वाऽनुरूपत्वेन वा ग्रहणाच्छिष्टानां तृचानामावपनं—परिशिष्टावाप उच्यते।

**परिशिष्टावापस्थाने तृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणेऽन्यत्र च प्रात:सवने अभिप्लवषडहे पृष्ठ्यषडहे छन्दोमेषु स्वरसामसु च (एतेषु सात्रिकेष्वह:सु) होत्रकै: (मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकै:) स्तोमातिशंसनप्रयोजनकारितात् कारणात् परिशिष्टावापानां स्थाने नित्यादधिका: (आवाणीका:) शस्या: तृचा: परिशिष्टावापस्थाने तृचा ज्ञेया:। (तु०— आ०श्रौ० ७।५।९-१७)।

**परिश्रित्—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे इष्टकास्तम्भनार्था: पाषाणा: (=शर्करा:) त्र्यङ्गुलविस्तृता: परिश्रित इत्युच्यन्ते। (तु०— का० श्रौ० १६।८।१७; १९ विद्याधर:)।

**परिष्यन्द—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे जलमध्यस्थो जलाऽनाच्छादित उच्चप्रदेश: परिष्यन्दो द्वीप इत्युच्यते। इष्टकाचितिस्थाने परिष्यन्देन प्रवर्ग्योत्सादनं कर्म क्रियते इति विशेषोऽवगन्तव्य: (तु०— का० श्रौ० १८। ३।९ विद्याधर:)। **द्र०** द्वीप—।

**परिसमूहन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. जलसहितेन पाणिना अग्न्यायतनोपरिष्टाद्भागे ऐशानदिश आरभ्य पुनस्तद्दिक् पर्यन्तं प्रदक्षिणं संमार्जनं परिसमूहनमुच्यते। तत्र अन्वाधानानन्तरमग्नीनां त्रिवारं परिसमूहनपर्युक्षणे विधीयेते इति विशेषोऽवधेय: श्रौ०प०नि० पृ० ११ **द्र०**। २. परिसमूहननामाग्ने: समन्तात् परिमार्जनमित्यर्थ:। (तु०— आ०गृ० १। १।१ नारायण:)।

**परिसमूहनपर्युक्षणविधि—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अनुकूलत्वं करिष्य-

माणस्य कर्मण: अन्वाधाने कथमिति चेदित्थं यागात्पूर्वमग्निषु प्रकृतोपयोग्यर्थ-कैर्मन्त्रै: समित्प्रक्षेपेणऽग्नय: करिष्यमाण-यागे सावधाना आमन्त्रिता इव भवन्ति श्व: सद्यो वा अयमस्मासु होष्यतीति। अत एव प्रक्षिप्तानां समिधां रक्षणमात्रमायतनेषु क्रियते। यागकाले एव तु तासां प्रज्वलनम् इति अन्वाधानानन्तरमग्नीनां त्रिवारं परिस-मूहनपर्युक्षणे विधीयेते। द्र० श्रौ०प०नि० पृ० १०-११, द्र० अन्वाधान—।

**परिसरण—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्र-कृतिकेषु सौमिकेषु पशुषु च आग्नीध्रस्य पर्यग्निकरणार्थं प्रदक्षिणं गमनं परिसरणमि-त्युच्यते। द्र० श्रौ०प०नि० पृ० १२९)।

**परिसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १ यत्र यानि सामानि बहि:स्तोत्रं अङ्गतया प्रयु-ज्यन्ते तानि परिसामान्युच्यन्ते। २. अवभृ-थसामानि अनूबन्ध्यादि सामानि च परित: सामानि परिसामानि उच्यन्ते। द्र० मी०को० पृ० २४६५।

**परिस्तरण—** इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. पाणिसंस्पर्शनानन्तरं आहवनीयदक्षिणा-ग्निगार्हपत्यान् क्रमेण दर्भै: परिस्तृणाति। अग्ने: षोडशभिर्दर्भै: प्राच्यादिषु परिस्तृति-रिति वचनात् प्राच्यां प्रथममेखलोपरिचतु-र्भिर्दर्भै: तथैव दक्षिणस्यां प्रतीच्यामुदीच्यां च क्रमेण स्तरणं परिस्तरणपदार्थ:। द्र० श्रौ०प०नि० पृ० १४, पाणिसंमर्शन—। २. अग्ने: षोडशभिर्दर्भै:पूर्वादिषु परिस्तृति-रितिवचनात् अग्नीनां पूर्वादिक्रमेण दर्भै: स्तरणं परिस्तरणम् (तु०— का०श्रौ० १।७।२४ टि० विद्याधर:)। ३. समन्ताद् भवत्वात् सामन्तं परिस्तरणं भवति। सम-न्ताद्भवेषु पर्यग्निकरणपरिस्तरणपर्युक्षणा-दिषु कर्मसु परिस्तरणादिकं पूर्वत आरभ्य उदक्संस्थं प्रदक्षिणंकर्तव्यमिति विशेषोऽ-वधेय: (तु०— का० श्रौ० १।७।२५ विद्याधर:) द्र० सामन्तकर्मन्—।

**परोक्ष—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टो-मातिरात्रविकृतौ एकाहप्रकरणे ऋतपेये एकाहे १. परोक्षशब्देन पर्याय उच्यते (द्रा०श्रौ० धन्वी)। २. परोक्षात् प्रत्यक्षं बलीय:। सामान्येन यत् प्राप्नोति तत् परोक्षं लक्षणया। द्र० मी०को० २४६७।

**पर्णशर—** शरप्रकरणे द्रष्टव्य:।

**पर्यग्निकरण—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृ-तिके पशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालो-त्करौ, अन्तरेण शामित्रम् अग्रेण पशुम् जघ-नेन स्रुच इत्येवं रीत्या त्रि: प्रदक्षिणं पर्येति (पर्यग्निकरोति पशुम्)। पशो: परितोऽग्नि-रित्यस्मिन्नर्थे पर्यग्नीत्युच्यते। अर्थात् पशो: परितोऽङ्गारेण प्रदक्षिणं भ्रामणं पर्य-ग्निकरणमुच्यते। तु० ऐ० ब्रा० सा० ४।२।५ का०श्रौ० १।५।२ टि० विद्या-धर:।

**पर्यग्निकरण—** (आध्व०, ऐष्टिक०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमास-प्रकरणे तद्विकृतिषु च १. हविषां आ सम-न्तात् प्रादक्षिण्येन उल्मुकस्य परिभ्रमणं पर्यग्निकरणमुच्यते। द्र० श्रौ०प०नि० पृ० १८ एतच्च पश्चादारभ्य उत्तरत: समापनी-यमिति विकल्पेन भवति। पूर्वत आरभ्य उदक् संस्थं प्रदक्षिणं च भवतीति विशेषोऽ-वधेय:। तदुक्तम्—'आवृत्तिसामन्तेषु प्रद-क्षिणम्' (का०श्रौ० १।७।२५) इति। २.

यद् दर्भरूपेणोल्मुकेन त्रिः प्रदक्षिणीकरणं तत् पर्यग्निकरणमुच्यते। ३. पर्यग्निकरणं दर्भज्वालया त्रिः प्रदक्षणीकरणम्। **द्र०** मी०को० पृ० २७१। ४. समन्ताद् भवं सामन्तं कर्म पर्यग्निकरणमुच्यते। **द्र०** परिस्तरण—।

**पर्यग्निकरणप्रैष—** (हौ०, पाशुक०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च स्वरोः रशनायामवगूहनानन्तरं यथायतनं स्रुचौ सादयित्वा आह 'पर्यग्नये क्रियमाणाय अनुब्रूहि' (ऐ० ब्रा० २।५) इति पर्यग्निकरणप्रैष उच्यते। परितः क्रियमाणायाग्नये योग्या ऋचो हे मैत्रावरण त्वमनुब्रूहीति मैत्रावरुणः अनेन मन्त्रेण प्रेषयेदित्यर्थः। **द्र०** अग्नीषोमीयपशुपर्यग्निकरणप्रैषमन्त्र—। तत्र पर्यग्निकरणात् पूर्वं पशुसमञ्जनानन्तरं ध्रुवां समज्य यथायतनं स्रुचौ सादयित्वा प्रवरं प्रवृणीते। तत्र होतुः प्रवरानन्तरम् आश्राव्य प्रत्याश्राविते 'मित्रावरुणौ प्रशास्तारौ प्रशास्तात्' इत्युक्त्वा मैत्रावरुणस्य नाम गृहणाति—'अमुकशर्मा मानुषः' इति। घृतवतीशब्दश्रवणानन्तरं जुहूपभृतावादायात्याक्रम्याश्राव्य प्रत्याश्राविते आह— 'समिद्भ्यः प्रेष्येति। द्वितीयादि प्रयाजेषु तु प्रेष्येत्येव वदति प्रशास्तृप्रैषान्ते तेन सह यजेति वदति न वा। चतुर्थाष्टमयोः प्रयाजयोरौपभृदाज्यस्य जुह्वां समानयनम्। स्वाहा कृतीभ्यः संस्रावस्य जुह्वां रक्षणम्। पञ्चमप्रयाजे यो यजमानस्य त्यागः स एव षष्ठादिषु। दश प्रयाजानिष्ट्वोदङ्ङत्याक्रम्य स्वरूं स्वधितिं चादाय तौ सह जुह्वां समज्य ताभ्यां सहैव पशुं समनक्ति 'घृतेनाक्तौ पशुं त्रायेथाम्' इति मन्त्रेण। स्वधितिं शमितुर्हस्ते प्रयच्छति। स्वरूं रशनायामवगूहति इति विशेषोऽवगन्तव्यः। **द्र०** अग्नीषोमीयपशुप्रयाजप्रैषमन्त्र-, आप्रीसूक्त-, श्रौ०प०नि० पृ० १२८।

**पर्यग्निकरणानुवचन—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके पशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च पर्यग्नये क्रियमाणायानुब्रूहीति प्रेषितो मैत्रावरुणः 'अग्निर्होता नो अध्वरः' इति तृचसूक्तमभिहिंकारानन्तरं आद्योत्तमे ऋचौ त्रिरभ्यस्यान्वाह तदिदमनुवचनं पर्यग्निकरणसाधनत्वात् पर्यग्निकरणानुवचनमुच्यते। **द्र०** श्रौ०प०नि० पृ० १४४-४५, ऐ० ब्रा० २।५।

**पर्यङ्ग्य—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वमेधे (अश्वत्रिरात्रे) कृष्णग्रीव आग्नेयो रराटे' (यजु० २४।१) इत्यादयो वैष्णवो वामनः' (यजु० २४।१) इत्यन्ताः पशवः पर्यङ्ग्या उच्यन्ते। ते यूपस्थानीयेऽश्वे यथादेवतं यथास्थानं निबध्यन्ते इति विशेषोऽवधेयः।

**पर्याय—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे चतुर्थ्यां षष्ठ्यां वा सोमसंस्थायां अतिरात्रे १. यानि द्वादश शस्त्राणि तानि पर्याया उच्यन्ते। तत्र आद्यानि चत्वारि शस्त्राणि प्रथमः पर्यायः, द्वितीयानि चत्वारि मध्यमः पर्यायः, तृतीयानि चत्वारि उत्तमः पर्याय इति प्रथममध्यमोत्तमाः त्रयः पर्याया अवगन्तव्याः। पर्याय इत्यतिरात्रशस्त्रसंज्ञा। २. दश दश घटिकाः एकैको भाग इत्येवं रात्रेस्त्रयो भागाः। पर्यायाः। तत्र प्रथमे चत्वारश्चमसगणा एकः पर्यायः। द्वितीयतृतीयभागयोश्चत्वारश्चत्वारश्चमसगणाः एवं द्वितीयतृतीयौ पर्यायौ। इत्येवं त्रिषु

भागेषु द्वादशानां चमसगणानां त्रयः पर्यायाः भवन्तीति विशेषोऽवधेयः ।

**पर्याय—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आवर्त्यानि स्तुतशस्त्राणि पर्यायशब्देनोच्यन्ते (तु०— हि० श्रौ० टी० ९ ।७ ।४५) ।

**पर्यायप्रत्यवरोह—** (औ०) सोमयज्ञेषु वर्धमानविषम स्तोमपर्यायक्लृप्तौ पर्यायैस्त्रेधा विभक्तेषु विषमस्तोमेषु प्रथमं ज्यायासं पर्यायं कृत्वा कनीयसः पश्चात् करणं पर्याय प्रत्यवरोह इत्युच्यते (तु०— द्रा०श्रौ० १७ ।२ धन्वी) द्र० ३ पर्यायवर्धमानविषमस्तोमपर्यायक्लृप्ति—, स्तोमभेद— ।

**पर्यायरोह—** (औ०) सोमयज्ञेषु वर्धमानविषमस्तोमपर्यायक्लृप्तौ पर्यायरोहो नाम उत्तरोत्तरं पर्यायाणां ज्यायस्त्वम् । यथा पञ्चकः सप्तको नवकः इति । (तु०— द्रा० श्रौ० १७ ।२, धन्वी) । द्र० ३. पर्याय—, वर्धमानसमस्तोमक्लृप्तिस्तोमभेद— ।

**पर्यायविष्टावकुशासंश्लेष—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पर्यायो नाम त्रेधा विभक्तस्य स्तोमस्यैकैको भागः । पर्यायस्य च त्रेधा विभक्तस्यैकैको भागः स्तोत्रीयाभ्यासरूपो विष्टाव इत्युच्यते । विष्टावेषु पर्यायेषु चेतरेतरं कुशाः संश्लेषयेत् । कुशाविधाने पर्यायान् विष्टावांश्च संलग्नान् कुर्यादित्यर्थः । कुशा नाम स्तोत्रीयागणनार्थाः काष्ठाः भवन्ति । ताश्च यज्ञियस्य वृक्षस्याश्वत्थादेः संबन्धिन्यः प्रादेशमात्र्यः त्वक्प्रदेशे कुशतृणवदुन्नतपृष्ठाः अङ्गुष्ठपर्वपृथुमात्र्यः प्रज्ञाताग्रा (यथावस्थिताग्राः) उपवसथ्येऽहनि प्रस्तोत्रा कार्यन्ते इति विशेषोऽवगन्तव्यः (तु०— द्रा०श्रौ० ५ ।२ धन्वी) द्र० कुशा-विष्टावस्तोमभेद— ।

**पर्यावर्तन—** (सा०) इष्टिपशुसोमे वामाङ्गेन— ।

**पर्यास—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे षष्ठ्यां वा सोमसंस्थायामतिरात्रे तृतीयसवने प्रथमद्वितीयतृतीयपर्यायेषु होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शस्त्रविधायकसूत्रयोः (आ० श्रौ० ६ ।४ ।९-१०) शस्त्रयाज्याभ्यः पूर्वं प्रयुक्तानि सूक्तप्रतीकानि (पूर्वं प्रयुक्ताः सूक्तादिमन्त्राः) पर्यस्यते परिसमाप्यते एभिः शस्त्रमिति पर्यासा इत्युच्यन्ते ।

**पर्यास—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे गवामयने होत्रकशस्त्रेषु प्रातःसवने अनुरूपतृचेभ्य ऊर्ध्वम् 'ऋजुनीती नः' इत्यारम्भणीयाः शस्त्वा चतुर्विंशभिजिद् विश्वजिद्विषुवन्महाव्रत सर्वस्तोमसर्वपृष्ठेषु सात्रिकेष्वहःसु तेषां स्वस्वपरिशिष्टावापादूर्ध्वं मैत्रावरुणस्य 'प्रति वाम्' (ऋ० ७ ।६५ ।१-३); ब्राह्मणाच्छंसिनः 'व्यन्तरिक्षम्' । ऋ० ८ ।१४ ।७-९); अच्छावाकस्य 'श्यावाश्वस्य' (ऋ० ८ ।३८ ।८-१०) इत्येते तृचाः शस्त्रस्य परितोऽन्ते परिक्षेपणीयत्वात् पर्याससंज्ञका भवन्ति । सूत्रेषु 'पर्यासाः' इत्युक्ते सर्वत्रैते प्रत्येतव्याः । तदुक्तम्—पर्यासः इति चान्ताख्या (मी०सू० ५ ।३ ।८) चतुर्विंशादिषु होत्रकाणां शस्त्राणि पर्यासान्तानि भवन्तीति विशेषोऽवधेयः । (तु०— आ०श्रौ० ७ ।२ ।११-१२ देवत्रातः) शांखायनेन तु०— अच्छावाकस्य 'इन्द्राग्नी अवसा गतम्' (ऋ० ७ ।९४ । ७-९) इत्येष पर्यासस्तृच उक्तः (तु०— शां० श्रौ० भाष्यम् १२ ।२ ।८) ।

**पर्यास—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयायां चतुर्थ्यां वा षोडशिसंस्थायां विहृतषोडशिनि शस्त्रगतानामृचां ब्राह्मणाध्ययनक्रमपाठाद् विपर्यासः पर्यासोऽभिधीयते। शस्त्रगतानामृचां परस्परव्यतिषङ्गेणाध्ययनं विहृतपाठ इति यावत्। द्र० ऐ० ब्रा० सा० ४।१। पर्यस्यतिशब्देन शस्त्रगतानामृचामध्ययनपाठात् विपर्यासोऽभिधीयते। द्विविधं हि षोडशि शस्त्रं विहृतमविहृतं चेति। तत्राविहृतं नाम अध्ययनक्रमेणैव शंसनम्। विहृतं तु ऋचां परस्परव्यतिषङ्गः। द्र० विहृत षोडशिशस्त्र—।

**पर्यासभेद—** (सा०, हौ०) पर्यासाः द्विविधाः सूक्तप्रतीकरूपास्तृचविशेषाश्चेति। तत्र १. प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे चतुर्थ्यां षष्ठ्यां वा सोमसंस्थायामतिरात्रे त्रिषु पर्यायेषु होतृहोत्रकशस्त्रेषु याज्याभ्यः पूर्वाणि यानि प्रतीकाणि तानि पर्यासा भवन्ति (तु०— आ०श्रौ० ६।४।९) नारायणः)। २. द्वादशाहविकृतौ सत्रप्रकरणे गवामयने चतुर्विंशादिषु चतुर्विंशतौ सात्रिकेष्वहःसु होत्रकशस्त्रेषु प्रातःसवने तृचविशेषाश्च पर्यासा इत्युच्यन्ते।

**पर्याहाव—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतिषु एकाहाहीनसत्रेषु 'शोंसावोम्' इत्याहावमन्त्रस्य यदा धाय्यायाः पार्श्वयोः पाठः क्रियते तदा स पर्याहाव इत्युच्यते।

**पर्युक्षण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च जलसहितेन पाणिना अग्न्यायतनाद् बहिः ऐशानदिशमारभ्य पुनरैशानदिक् पर्यन्तं दूरतोऽस्पर्शनेन प्रदक्षिणं जलपरिषेकमात्रं जलस्य परित उक्षणं जलविमोकः पर्युक्षणमित्युच्यते। द्र० श्रौ०प० नि० पृ० ११ का०श्रौ० १७।२४ टि० विद्याधरः। तच्च पूर्वत आरभ्य उदक्संस्थं प्रदक्षिणं च भवति। तदुक्तं—'आवृत्तिसामन्तेषु प्रदक्षिणम्' (का०श्रौ० १।७। २५) इति। तस्मात् समन्ताद्भवं पर्युक्षणं कर्म सामन्तमित्युच्यते। द्र० सामन्तकर्मन्—।

**पर्युदास—** (सा०) इष्टिपशुसोमेषु न, निषेधः नञर्थः, अन्योन्याभावः, तद्भिन्नत्वे सति तत्सदृशत्वं पर्युदास इत्युच्यते। द्र० मी०को० पृ० २४७३-७४।

**पर्यूहण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अवटे यूपमुच्छ्रित्य मूले पांसु पूरणं परितः ऊहनं पर्यूहणमुच्यते। 'ब्रह्मवनिं त्वा क्षत्रवनिम्' इति प्रदक्षिणं पांसुभिः यूपः पर्यूह्यते इति विशेषोऽवधेयः। (तु०— मी०को० पृ० २४८०)।

**पर्वन्—** (सा०) दर्शप्रतिपदोः सन्धिः, पूर्णिमाप्रतिपदोश्च सन्धिः पर्वोच्यते। तत्र अनध्यायो भवति। पर्वाणि तु पञ्च भवन्ति यथा—
चतुर्दश्यष्टमी चैव अमावास्याथ पूर्णिमा।
पर्वाण्येतानि राजेन्द्ररविसंक्रान्तिरेव च॥
द्र० शब्दकल्पद्रुमः। श्रौतयागानां सर्वत्र पर्वण्यनुष्ठानं विहितम्। तेन पर्वणि अनध्यायेऽपि कर्मणि मन्त्राः पठनीया एव।

**पर्वणि सोमानुष्ठान—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूते ज्योतिष्टोमातिरात्रेऽग्निष्टोमे 'एका दीक्षा ,तिस्र उपसदः पञ्चमी प्रसुत्' इत्येष सोमस्य कल्प आम्नातः। तेन सोमः पर्वणि अनुष्ठेयः इति सिद्धम्। परं तत्र अङ्गभूता दीक्षणीयेष्टिः पर्वणि प्राप्ताऽपि दिनान्तरेऽनुष्ठेयेति विशेषोऽवधेयः।

**पवन—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे प्रतिसरबन्धानन्तरं प्रातः काले एकविंशतिदर्भाणां त्रीणि पिञ्जूलानि कृत्वा एकेन पिञ्जूलेन कण्ठमारभ्य मुखपर्यन्तं मार्जयेत्, द्वितीयेन नाभिमारभ्य कण्ठपर्यन्तं मार्जयेत्, तृतीयेन नाभेरधस्तात् गुल्फपर्यन्तं मार्जयेत्। ततः पिञ्जूलानि प्रोक्ष्य उदीच्यां दिशि परित्यजेत्। ततोऽप उपस्पृशतीति। इदं कर्म पवनमुच्यते। **द्र०** प्रतिसरबन्ध—, श्रौ०प०नि० पृ० ४५-४६।

**पवमान—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु एकाहाहीनसत्रेषु च बहिष्पवमानं माध्यन्दिनः पवमानः आर्भवः पवमान इत्येतन्नामकाः पवमात्रयगताः स्तोत्रविशेषाः सामवेदे समाम्नाताः पवमाना इत्युच्यन्ते। (तु०— तै० सं० सा० ३।२।१।१)। यानि बहिष्पवमानं माध्यन्दिनपवमानं आर्भवपवमानं इति त्रीणि स्तोत्राणि तानि अहनि भवन्ति न तु रात्रौ इति। (तु०— ऐ० ब्रा० सा० भा० ४।६)। त्रिषु तृचेषु प्रगाथेषु वा रूढानि तानि स्तोत्राणि क्रमेण त्रिवृत्स्तोमं पञ्चदशस्तोमं सप्तदशस्तोमं भजन्ते इति नियतस्तोमानि भवन्ति (तु०— श्रौतकोश प्रास्ताविकं पृष्ठ- ७)। तेषु बहिष्पवमानं प्रथमं प्रातः सवने, माध्यन्दिनपवमानो द्वितीयः मा० सवने, आर्भवपवमानः तृतीयः तृतीयसवने प्रयुज्यन्ते इति विशेषोऽवधेयः।

**पवमानस्तोत्र—** (औ०) सोमयज्ञेषु पवमानस्तोत्रं त्रेधा प्रातःसवने बहिष्पवमानम्, माध्यन्दिनसवने माध्यन्दिनपवमानम्, तृतीयसवने च आर्भवपवमानम्। **द्र०** मी० को० पृ० २४८३।

**पवमानहविस्— द्र०** पवमानेष्टि—।

**पवमानेष्टि —** (आध्व०, अव्य०) इष्टियज्ञेषु प्रकृतिभूतस्य हविर्यागानां तृतीयस्य दर्शपूर्णमासप्रकरणस्य विकृतौ प्रथमे अग्न्याधेय- प्रकरणे अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये इत्युक्ताः तिस्र इष्टयः पवमानेष्ट्यः प्रकृतिभूतपौर्णमासेष्टिवत् ब्राह्मणतर्पणान्ता यागाः। तासां प्रयोगे तदङ्गानां तन्त्रेणानुष्ठानं भवति न पृथक् पृथक्प्रभेदेनेति विशेषोऽवधेयः। २. प्रकृतिभूतपौर्णमासेष्टिवत् ब्राह्मणतर्पणान्तं कर्म भवति। इयं पवमानेष्टिः पवमानहवींषिरिति गीयते। **द्र०** श्रौ०प०नि० पृ० ६३। तत्र पवमानेष्टीः कृत्वा अग्निहोत्रादीनि कर्माणि प्रतिपत्तव्यानि न तु आहितमात्रेषु अग्निषु। 'न क्लिन्नं दारु अभ्यादध्यात्' इत्यादीनि व्रतादीनि तु आहितमात्रेष्वेव कर्तव्यानि इति विशेषोऽवधेयः। **द्र०** मी०को० पृ० २४८२।

**पवमानोपाकरण—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'सोमः पवते' इत्यनेन मन्त्रेणाध्वर्युणा उद्गातृभ्यः तृणदानं पवमानो पाकरणं भवति। अर्थात् प्रातः सवने बहिष्पवमाने माध्यन्दिने माध्यन्दिनपवमाने तृतीयसवने आर्भवपवमाने च प्रस्तोत्रे द्वयोस्तृणयोः प्रदानं पवमानोपाकरणमुच्यते। २. कुशमुष्टिं वा प्रस्तोत्रे प्रयच्छन् (अध्वर्युः) सर्वेषूपाकरणं कुर्यात् (तु०— का० श्रौ० ९।७।३४ ३५ विद्याधरः। **द्र०** बहिष्पवमानस्तोत्रोपाकरण—।

**पवित्र—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. अनरवच्छिन्नं साग्रं प्रादे-

शमात्रं मन्त्रसंस्कारसंयुक्तं समपरिणाहं प्रोक्षणादौ प्राय: उपयोगिदर्भद्वयम् पवित्रमुच्यते। द्र० श्रौ०प०नि० पृ० ९ २. समौ अप्रतिच्छिन्नाग्रौ दर्भौ प्रादेशमात्रौ पवित्रे करोति दर्शपूर्णमासयो:। ते च परिभोजनीयान्नाम बर्हिष: मी०को० पृ० २४८४। ३. अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चित्॥ (तु०— पा०गृ० परिशिष्टे श्राद्धसूत्रे २ गदाधर:) ४. तत: द्वौ कुशौ कुशत्रयं वा पवित्रमुच्यते। (तु०— मां० सं०म० १।२)।

**पवित्र—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे अन्यत्र च पावनविधौ 'क्षाशब्दवत्-तै० ब्रा० २।८।२' इति सूक्ते द्वितीयमन्त्र:। 'अग्ने नय' तै० सं० १।१।१४, ९-१४= तै० ब्रा० २।८।२। ३। पुरुषसूक्तम् (१८ मन्त्र:)। मृगारेष्टेर्याज्यानुवाक्या २२ ऋ० तै० सं० ४।७।१५। अहोमुचगुणौ (१ म: गण:—'या वामिन्द्र हंस मुञ्चतम्' तै० सं० २।२।१३।१-८। २. य: गण:—'या वामिन्द्र: यजे' (८ मन्त्र:)। पावमान्य: 'अरेपा वा पवित्रकामो वा' 'यद्देवा देवहेऽनम्' (तै० आ० २।३) 'यद्दीव्यन्नृणमहं बभूव' (तै० आ० २।४)। 'आयुष्टे विश्वतोदधे' (तै० आ० २।५)। 'सिंहे व्याघ्र'...४ मन्त्रा: (तै० सं० २।७।७, बौ०ध० ३, ७।११)। इति मन्त्रसमूह: पवित्रमुच्यते। द्र० पङ्क्तिपावन—।

**पवित्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावेकाहप्रकरणे राजसूये चतुर्दीक्ष: त्र्युपसत्क: एकसूत्य: सहस्रगोदक्षिण: अग्निष्टोमसंस्थ: द्वितीय: सोमयागोऽभ्यारोहणीय: पवित्र इत्युच्यते। द्र० राजसूय-। (तु०— का० श्रौ० १५।१।३ विद्याधर: आ०श्रौ० ९।३।२-६)।

**पवित्रकरणकर्मन्—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पृष्ठ्यास्तरणानन्तरं मन्त्रेण यथानिरुक्तं पवित्रमादाय समन्त्रकं सव्यहस्ते पवित्रं धृत्वा दक्षिणहस्तेन जलेनानुमार्ष्टि। तदेतत्कर्म पवित्रकरणमित्युच्यते। द्र० श्रौ०प०नि० पृ० १५, पृष्ठ्यास्तरण—।

**पशु—** (सा०) १. पशुशब्द: कर्मणि द्रव्ये च प्रवर्तते तत्र निरूढपशुबन्धाग्नीषोमीयसवनीयप्राजापत्यानूबन्ध्यादिपशव: पशुकर्म। गौरश्वोऽजोऽविरित्यादिग्राम्य: आरण्याश्च पशव: पशुद्रव्यम्। २. पशु: स्वावयवद्वारा यागसाधनम्। द्र० मी० को० पृ० २४८५।

**पशुकाल—** (सा०, आध्व०) पशुयज्ञेषु १. 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति पशो: काल उच्यते। द्र० मीको० पृ० २४८६। २. पशव: इष्टयश्च अग्निष्टोमानुष्ठानात् प्राक् अनुष्ठातुं शक्यते। द्र० मी०को० पृ० २४८५।

**पशुकुम्भी—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. पशो: अङ्गानां हृदयादीनां श्रपणार्थं भाण्डं पशुकुम्भीत्युच्यते। द्र० श्रौ०प०नि० पृ० १२१। सा च पशुबहुत्वे भिन्नदेवत्ये वसाहोमे चापि एकैव भवति। २. पशुषु भिन्नदेवताकेषु एकजातीयेषु कुम्भीशूलवपाश्रणीनां तन्त्रम्। (एकत्वम्) द्र० मी०को० पृ० २४९३।

**पशुगणस्य सौमिकस्य प्रकृतितति—** (सा०) सौमिकेषु पशुयज्ञेषु पशुगणस्य प्रकृति: एकादशिनी, एकादशिन्या: प्रकृति: सव-

नीयपशुः, सवनीयपशोः प्रकृतिः अग्नीषोमीयः, अग्नीषोमीयस्य प्रकृतिरिष्टिः (दर्शपूर्णमासेष्टिः)। द्र० मी०को० पृ० २५००।

**पशुत्र्यङ्ग—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशोः दक्षिणं दोः, सव्या श्रोणिः, गुदस्य तृतीयोऽशः इति त्रीण्यङ्गानि (आप०श्रौ० ७।२२।६) इति पशुत्र्यङ्गमुच्यते।

**पशुदेवतासंकल्प—** (याज०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अपरेद्युः आग्नेय्या इष्टेरनन्तरं यजमानः पशुदेवतासंकल्पं करोति। तत्र पाशुकं हविः— वपापुरोडाशअङ्गानि हवींषि, एकादश प्रयाजाः, अग्नीषोमावाज्यभागौ, इन्द्राग्नी-पशुदेवता, वनस्पतिः पृषदाज्यदेवता, देवा आज्यपाः, अग्निः स्विष्टकृत् एकादश अनुयाजाः, एकादश उपयाजाः, सूक्तवाकशंयुवाकौ, चत्वारः पत्नीसंयाजाः त्रीणि समिष्टजूषि इत्येवमात्मकेन साङ्गोपाङ्गेन कर्मा सद्यो निरूढपशुबन्धदेवताः यक्ष्ये इत्ययं पशुदेवतासंकल्प इत्युच्यते। द्र० श्रौ० प० नि० पृ० १२२, त्रिपशुदेवतासंकल्प—, सौत्रामणीसंकल्प—।

**पशुदेवतोपस्थान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अथ देवता उपतिष्ठते—'अयं नो नमसा पुरः' इत्यग्निम्। 'स त्वं नो नमस्यते' इति वायुम्। 'देव संस्फान इत्यादित्यम् इत्यग्निवाय्वादित्यानामुपस्थानं देवतोपस्थानमुच्यते। द्र० श्रौ०को० १ भा० पृ० ६०२, उत्तरवेद्यग्न्युपस्थान—, पाशुकादित्योपस्थान—, वायूपस्थान—, श्रौ०प०नि० पृ० १४०-४१।

**पशुधर्म—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १- उपाकरणम्, उपानयनम्, अक्षणया बन्धः, यूपे नियोजनम्, नयनम्, संज्ञपनम्, विशसनमित्येवमादयः पशुधर्मा उच्यन्ते। द्र० मी०को० २५०३। २. यूपोऽथ यूपाञ्जनमाप्रियश्च पर्यग्न्युपप्रैषमथाध्रिगुश्च पशौ पुरोडाशविधिर्मनोता वनस्पतिः स्विष्टकृदिडास्तुतिश्च॥ इत्येते पशुधर्माः, एकादश च भवन्ति। (तु०— ऐ० ब्रा० सा० २।११) (एते धर्माः श्रुतौ अग्नीषोमीयपशुप्रकरणे आम्नाताः सूत्रकारैस्तु सर्वैरेव एते पशुधर्मा अग्नीषोमीयादाकृष्य निरूढपशुबन्धप्रकरणे निरूपिता इति विशेषोऽवधेयः। ३. षड्ढोतृ-कूष्माण्ड-सारस्वतहोमादिः सर्वत्र पशुधर्मः सकृदेव भवतीति विशेषोऽवधेयः। ४. पशुधर्माः सौत्यादह्नः प्राचीने औपवसथ्येऽहनि धिष्ण्यनिर्माणादूर्ध्वमाम्नाताः। मी०को० पृ० २५०३। ५. अग्निष्टोमे त्रयः पशवः अग्नीषोमीयः सवनीयः (क्रतुपशुः वैकल्पिकः ऐकादशिनः) अनुबन्ध्यश्चेति। तत्र सुत्यादिनात् अव्यवहिते प्राचीने औपसथ्याख्ये दिने अग्नीषोमीयः पशुरनुष्ठीयते। तत्रैव उपाकरणादयः पशुधर्मा अपि आम्नाताः। तत्रैव च धर्मोक्तेः प्राक् आग्नेयः पशुरग्निष्टोमे आलभ्यः' इत्यादिना सवनीयाः पशवोऽपि आम्नाताः। यद्यपि औपवसथ्येऽहनि आम्नाताः पशुधर्मास्तत्रैव भवन्ति। तथापि न सवनीये सवनीयानुष्ठानं तु सुत्यादिने वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने' इति सवनक्रमेण क्रियते। अनुबन्ध्यस्तु अवभृथान्ते उदनीयसंज्ञाप्तौऽनुष्ठीयते। तत्र ये औपवसथ्याख्येऽहनि अग्नीषोमीयपशौ उपाकरणादयः पशुधर्माः आम्नाताः। ते किं त्रयाणामपि पशूनामर्थे विधीयन्ते, अत

अग्नीषोमीयसवनीययोर्द्वयोरर्थे, किं वा अग्नीषोमीयस्य एकस्यार्थे इतरयोस्तु चोदकेनैव स्युः इति संशये उपाकरणादयः पशुधर्मा अग्नीषोमीयस्येव न तु सवनीयस्यापि पुरोडाशदर्शनात् लिङ्गात्। तस्मादुपाकरणादयः पशुधर्मा अग्नीषोमीयस्यैव सवनीयस्य तु अतिदेशेन स्युः। सर्वेषां च पशूनां तुल्या एव स्युः। इति विशेषोऽनुसन्धेयः। **द्र०** मी०को० पृ० १९५३; ५४।५५।

**पशुनियोजन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु प्रहरणप्रैषानन्तरमपूर्वाज्येन सकृद् गृहीतेन आहवनीये प्रहृतस्याग्नेरुपरि अग्नावग्निश्चरति' इत्यृचा जुहोति। ततो 'देवस्य त्वा' इत मन्त्रेण द्विगुणां रशनामादाय तया सव्यशृङ्गवर्जं पशुं अरुणया शिरसि बध्नाति। 'ऋतस्य त्वा देव हविः' इत्यादि मन्त्रेण द्विगुणायाः पशु-रशनायाः त्रिगुणायाः यूपरशनायाश्च प्रान्तानेकीकृत्य 'धर्षा मानुषान्' इति 'यूपे' बध्नाति। पशुमत्सु चातुर्मास्येषु परिधौ पशुं नियुञ्जीत इति परिधौ बध्नाति। तदिदं कर्म पशुनियोजनमित्युच्यते। **द्र०** प्रहरणप्रैष—, श्रौ०प०नि० १२७-२८।

**पशुपुरोडाशत्याग—** (सा०) पशुयज्ञेषु पशुपुरोडाशयागः पशुदेवतायाः संस्कारकर्म। **द्र०** मी०को० पृ० २४८९। यत्र साक्षात् पुरोडाशा एव भवन्ति तत्र ते पशुदेवतासंस्कारार्थाः इति। तस्मात् संस्कारार्थः पशुपुरोडाशः। **द्र०** मी०को० पृ० २४९०। **द्र०** अग्नीषोमीयपशुपुरोडाशयाग—।

**पशुपुरोडाशदेवता—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. यद्देवत्यः पशुः तद्देवत्यः पुरोडाशः (तु०— ऐ० ब्रा० सा० ४।३६) २. पशोः या देवता सैव पशुपुरोडाशस्यापि। **द्र०** पृ० २४८६।

**पशुपुरोडाशनिर्वाप—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च 'यद्देवत्यः पशुर्भवति तद्देवत्यं पुरोडाशमनुनिर्वपति। इति। **द्र०** श्रौ०को० २. भा० पृ० २०९। तदुक्तम्—अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति। **द्र०** मी०को० पृ० २४९१।

**पशुपुरोडाशनिर्वापप्रैष—** (आध्व०) सोमयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वपामार्जनानन्तरमध्वर्युराहअग्नीत् पशुपुरोडाशं निर्वप प्रतिप्रस्थातः पशुं विशाधि च। सोऽयं पशुपुरोडाशप्रैष इत्युच्यते। **द्र०** वपामार्जन—, श्रौ०प०नि० पृ० १३३।

**पशुपुरोडाशपुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे ब्रह्मादि वपामार्जनानन्तरं पुरोडाशश्रपणपर्यन्तं ब्रह्मादयः तीर्थेन निष्क्रम्य तूष्णीमासते। शृतेषु पश्वङ्गेषु (हविःसु) तीर्थेन प्रविश्य पुरोडाशेन प्रचरन्ति। तत्र 'आभरतं शिक्षतम्' (ऋ० १।१०९।७) इत्येषा पुरोनुवाक्या भवति। तां मैत्रावरुणो पठति। (श्रौ०प०नि० पृ० १४७)। श्रौ०को० १. भा० पृ० ५७८। **द्र०** ब्रह्मादिवपामार्जन-।

**पशुपुरोडाशपुरोनुवाक्याप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र... बन्धप्रकरणे पशुपुरोडाशपुरोनुवाक्यानन्तरम् 'इन्द्राग्निभ्यां पुरोडाशस्यावदीयमानस्यानुब्रूहि' इति अध्वर्युणा प्रेषितः सन् अध्वर्युणा 'इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्येत्युक्ते मैत्रावरुणः—'होता यक्षदिन्द्राग्नी पुरोडाशं जुषेतां हविर्होतर्यज

इति पठति। अयं पशुपुरोडाशपुरोनुवाक्याप्रैष उच्यते। (श्रौ०प०नि० पृ० १४७ श्रौ०को० १. भा० पृ० ५७८) द्र० पशुपुरोडाशपुरोनुवाक्या—।

**पशुपुरोडाशपुरोनुवाक्याप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र..... बन्धप्रकरणे पशवङ्गग्रहणप्रैषानन्तरमध्वर्युः शामित्राग्नौ पशुकुम्भीमधिश्रयति—'द्यौरसि पृथिव्यसि' इत्यादि मन्त्रेण पशुकुम्भ्यां शाखापवित्रमुदगग्रं निदधाति। तस्यां प्रभूतमुदकमानीय सर्वाण्यङ्गानि निक्षिप्य सुशृतानि यथा स्युस्तथा श्रपयति पशवङ्गेषु शृतेषु सत्सु आग्नीध्रो दक्षिणेनाज्यस्थालीं सस्रुवां सव्येन दारुपात्रीं वेदम् इत्येतत् समदायान्तर्वेदि पुरोडाशसादनान्तं करोति। यजमानेनासन्नाभिमन्त्रणे कृते अध्वर्युर्जुहूपभृतोरुपस्तीर्य 'पुरोडाशस्यावदीयमानस्यानुब्रू३हि' इति प्रेष्यति सोऽयं पशुपुरोडाशपुरोनुवाक्याप्रैष उच्यते। श्रौ०प०नि० पृ० १३४। पशुकुम्भी—, पशवङ्गग्रहणप्रैष—।

**पशुपुरोडाशयाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र....बन्धप्रकरणे पशुपुरोडाशपुरोनुवाक्या प्रैषानन्तरं होता 'गीर्भिर्विप्रःप्रमतिमिच्छमानः' इति याज्यां पठतीति पशुपुरोडाशयाज्या। (श्रौ०प०नि० पृ० १४७ श्रौ०को० १ भा० पृ० ५७८)। द्र० पशुपुरोडाशपुरोनुवाक्या—।

**पशुपुरोडाशयाज्या प्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र.....बन्धप्रकरणे पशुपुरोडाशानुवाक्याप्रैषानन्तरमध्वर्युः जुह्वां प्रकृतिवदवदाय प्रत्यञ्जनान्तं कृत्वोपभृति स्विष्टकृदर्थं पुरोडाशस्योत्तरार्धात् सकृदवदाय द्विरभिधार्य न प्रत्यनक्ति, अत्याक्रम्याश्राव्य प्रत्याश्राविते आह— 'इन्द्राग्निभ्यां पुरोडाशं प्रस्थितं प्रेष्यति। अयं पशुपुरोडाशयाज्या प्रैष उच्यते। श्रौ०प०नि० पृ० १३४।

**पशुपुरोडाशस्विष्टकृत्पुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र.... बन्धप्रकरणे पशुपुरोडाशयाज्यानन्तरमध्वर्युणा अग्नयेऽनुब्रूहीत्युक्ते 'इलामग्ने पुरूदशं सनिं गोः' (ऋ० ३।२२।५) इति स्विष्टकृतः पुरोनुवाक्यां मैत्रावरुणः पठति। इयं पशुपुरोडाशस्विष्टकृत्पुरोनुवाक्या। श्रौ०प०नि० पृ० १४७ श्रौ०को० १ भा० पृ० ५७८।) द्र० पशुपुरोडाशयाज्या—।

**पशुपुरोडाशस्विष्टकृत्प्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र...बन्धप्रकरणे पशुपुरोडाशस्विष्टकृत्पुरोनुवाक्यानन्तरमध्वर्युणाऽग्नये प्रेष्येत्युक्ते मैत्रावरुणो 'होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज' इति पठति। अयं पशुपुरोडाशस्विष्टकृत् प्रैषः। श्रौ०प०नि० पृ० १४७ श्रौ०को० १. भा० पृ० ५७८।

**पशुपुरोडाशस्विष्टकृदनुवाक्याप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र....बन्धप्रकरणे पशुपुरोडाशयाज्याप्रैषानन्तरमध्वर्युः वषट्कृते जुहोति। इन्द्राग्निभ्यामिदमिति यजमानस्य त्यागोऽनुमन्त्रणं च प्राकृतम्। अध्वर्युरुपभृत्स्थं पुरोडाशं जुह्वां समावयमान आह 'अग्नयेऽनुब्रू३हीति। अयं पशुपुरोडाशस्विष्टकृदनुवाक्याप्रैषः उच्यते (श्रौ०प०नि० पृ० १४७ श्रौ० को० १. भा० पृ० ५७८)।

**पशुपुरोडाशस्विष्टकृद्याज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र...बन्धप्रकरणे पशुपुरोडाशस्विष्टकृत्प्रैषानन्तरं होता 'स्वदस्व हव्या समिषः' (ऋ० ३।५४।२२) इति याज्यां पठति। इयं पशुपुरोडाशस्विष्टकृद् याज्या। (श्रौ०प०नि० पृ० १४७ श्रौ०को० १ भा० पृ० ५७८)।

**पशुपुरोडाशस्विष्टकृत्प्रैषप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र...बन्धप्रकरणे पशुपुरोडाशस्विष्टकृदनुवाक्या प्रैषानन्तरमध्वर्युरत्याक्रम्य प्रत्याश्राविते आह—अग्नये प्रे३ष्येति। अयं पशुपुरोडाशस्विष्टकृत्प्रैषप्रैषः। (श्रौ०प०नि० पृ० १३४)।

**पशुपुरोडाशेलोपह्वान—** (आध्व०) द्र० इलोपह्वान—।

**पशुपूर्वसंस्था—** (सा०) पर्यग्निकरणं पशुपूर्वसंस्थोच्यते। द्र० पूर्वसंस्था—।

**पशुपूर्वेष्टि—** द्र० आग्नेयेष्टि—।

**पशुप्रदान —** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिनिरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वपायागः पुरोडाशयागः (पशुपुरोडाशयागः) हविर्यागः (हृदयाद्यङ्गयागः) इति त्रयो यागाः प्रदानशब्देनाभिधीयन्ते। एषां प्रदानानीति संज्ञा भवतीत्यर्थः। तदुक्तम्— 'वपा पुरोडाशो हविरिति पशोः प्रदानानि' (आ०श्रौ० ३।४।४)। तत्र पशोरिति निरूढपश्वग्नीषोमीयपशुद्वयस्य प्रकृतिभूतस्य जात्या पशुग्रहणम्। प्रदानानां हौत्रं तत्र तत्र द्रष्टव्यम्।

**पशुप्रोक्षण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे पशुनियोजनान्तरं 'अद्भ्यस्त्वौषधीभ्यः' इत्यादि मन्त्रेण तूष्णीं संस्कृताभिरद्भिः (पशुं) प्रोक्षति। पात्रान्तरे जलमानीय 'अपां पेरुरसि' इति मन्त्रेण पाययति। तूष्णीं संस्कृताभिरद्भिः पशुमुपरिष्टात् प्रोक्ष्य 'स्वात्तं चित्' इत्यादिमन्त्रेण अधस्तात् प्रोक्षति। प्रोक्षणीर्निदधाति। इति पशुप्रोक्षणामित्युच्यते। द्र० पशुनियोजन-, श्रौ०प०नि० पृ० १२८,

**पशुबन्ध—** (अव्य०, सा०) निरूढः, ऐन्द्राग्नः पशुः पशुबन्ध इत्युच्यते। पशुबन्धकाल प्रभृति पाशुकसंस्थाजपान्तं सर्वं पाशुकं कर्म निरूढपशुः पशुबन्ध इति चाख्यायते। स द्विविधः। एको हविर्यज्ञविधः अपरः सवविधः। तदुक्तम्—'हविर्यज्ञविधो हवा अन्यः पशुबन्धः सवविधः अन्यः। स वै हविर्यज्ञविधो यस्मिन् व्रतमुपयन्ति, यस्मिन्नापः प्रणयन्ति, यस्मिन् पूर्णपात्रं निनयन्ति, यस्मिन् विष्णुक्रमान् क्रमति। अथ हैष सवविधो यस्मिन्नेतानि न क्रियन्ते। (द्र० श० ब्रा० ११।७।१।३) (सा० इति।...यदनेन यज्ञेन जेष्यामोऽनेन पशुबन्धेन तन्नः सह सह नः साधुकृत्या नानपापकृत्या य एव पापं करवत् तस्यैव तत् (श० ब्रा० ४।६।८।१३ का० श्रौ० १२।२।८)। द्र० निरूढपशु–, निरूढपशुबन्ध–।

**पशुबन्धकाल—** (आध्व०) १. उत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वा अमावास्या यजनीयदिनं वेति। सोऽयं पशुबन्धकाल इत्युच्यते। द्र० श्रौ०प०नि० पृ० ११९। २. षण्मास्य एष पशुबन्ध उक्तो भवति। अथाप्युदाहरन्ति षट्सुषट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवति (तु०— बौ० श्रौ० २६।२९।४।

**पशुबन्धप्रकरणविभाग—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिको निरूढपशुबन्धरूपो यज्ञश्चतुर्भागः। तत्रोपाकरणान्तः प्रथमः। उपाकृतस्य शामित्रप्रदेशे स्थितिर्द्वितीयः। यागार्थं संस्कारं करोति स तृतीयः। हविष्प्रदानान्तश्चतुर्थः (तु०— तै० सं० सा० ४।६।३)।

**पशुबन्धप्रथमप्रयोगपूर्वाङ्ग—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिकस्य निरूढपशुबन्धस्या-

ऽऽद्यप्रयोगे आरम्भात् पूर्वेद्युर्नान्दीश्राद्धं प्रातः कृत्वा रात्रावुदकशान्तिः प्रसरबन्धश्च क्रियते। परेद्युः स्नानादिपञ्चकानन्तरं पुण्याहवाचनम्। तदिदं पशुबन्धप्रथमप्रयोगपूर्वाङ्गं प्रथमप्रयोगपूर्वाङ्गं वोच्यते। द्र० नान्दीश्राद्ध-, उदकशान्ति-, पुण्याहवाचन-, प्रसरबन्ध-श्रौ०प०नि० पृ० ११९।

**पशुबन्धप्रायश्चित्ताहुति—**(आध्व०, प्राय०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे पशुं हरिद्राऽऽमलकादिभिः स्नापितमन्तरेण चात्वालोत्करौ प्रपाद्य यूपाहवनीययोर्मध्येन दक्षिणतो नीत्वा यूपस्य पुरस्तात् प्रत्यङ्मुखं यः कश्चिद् धारयति। पशोरुक्तो यो वर्णो विधिवाक्ये यथा 'वायव्यं श्वेतमालभेत' इत्यादौ श्वेतवर्णस्तादृशः। तादृशश्वेतवर्णविशिष्टपश्वभावे अथवा पशोः प्रतिषिद्धत्वेऽध्वर्युर्नित्याज्यस्थाल्याज्येन वसाहोमहवन्या प्रायश्चित्ताहुतीर्जुहोति अग्निर्मूधा इत्यृचा, अग्नय इदं न ममेति त्यागो यजमानस्य। 'अग्नाविष्णू संजोषा' इत्यृचा। अग्नाविष्णुभ्यामिति त्यागः। 'इन्द्रं विश्वा अवीवृधत्' इत्यृचा। इन्द्रायेदमिति त्यागः। 'वायो शतं हरीणाम्' इत्यृचा। वायव इदमिति त्यागः। 'प्रजापते न त्वदेतानि' इत्यृचा। प्रजापतये इदमिति त्यागः। इत्येता आहुतयः पशुप्रायश्चित्ताहुतय इत्युच्यन्ते। द्र० श्रौ०प०नि० पृ० १२६-२७।

**पशुबन्धसंकल्प—** (याज०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे गार्हपत्यस्य पश्चात् सपत्नीको यजमान—, दर्भेष्वः सीनः दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य विष्णुं स्मृत्वा 'यः पुरस्तात्' इत्यादि पठित्वा स्वर्गकामः श्रीपरमेश्वरप्रीत्यर्थं वा ऐन्द्राग्नेन पशुबन्धेन यक्ष्ये इति त्रिरुपांशु त्रिरुच्चैर्वदति। सोऽयं पशुबन्धसंकल्प इत्युच्यते। द्र० श्रौ०प०नि० पृ० ११९।

**पशुबन्धहौत्रद्वैविध्य—** (आध्व०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे प्रदानेषु (वपापुरोडाशहविः सु) पुरोनुवाक्याप्रैषयाज्यारूपं हौत्रं याजुषब्राहृचभेदेन द्विविधं भवति। तत्राध्वर्यवे हौत्रे वपायागस्य पुरोनुवाक्या— 'आ वृत्रहणा वृत्रहभिः शुष्मैः'। इति। प्रैषः—होता यक्षदिन्द्राग्नी छागस्य वपाया भेदसो जुषेतां हविर्होतर्यज इति। याज्या—गीर्भिर्विप्रः प्रमतिमिच्छमानः....'। इति। द्र० श्रौ०को० १. भा० पृ० ५७६। बाह्वचे हौत्रे तु वपायागस्य पुरोनुवाक्या—'आवृत्रहणा वृत्रहनि...इति। याज्या— 'शुचिं नु स्तोमं नवजातम्...' इति। द्र० तत्रैव ५७६। आध्वर्यहौत्रे पशुपुरोडाशयागस्य पुरोनुवाक्या—'वि ह्यख्यन्मनसा..." इति। 'प्रैषः—होता यक्षदिन्द्राग्नी पुरोडाशस्य जुषेता हवि र्होतर्यज' इति। याज्या—'माच्छेद्मरश्मीँ रिति' इति। द्र० तत्रैव पृ० ५८०। बाह्वृचहोत्रे पशुपुरोडाशयागस्य पुरोनुवाक्या—'आ भरतं शिक्षते...'इति। याज्या—'गीर्भिर्विप्रः प्रमतिमिच्छमानः....'इति। द्र० तत्रैव पृ० ५७८। याजुषहौत्रे पशुहविर्यागस्य पुरोनुवाक्या— 'आ भरतं शिक्षतं......, इति पुरोनुवाक्या। प्रैषः—'होता यक्षदिन्द्राग्नी छागस्य हविषः आत्तामद्य मध्यतः...' इति। याज्या— उषो ह यद् विदथं वाजिन,...' इति। द्र० तत्रैव पृ० ५८०। बाहवृच होत्रे पशुहविर्यागस्य पुरोनुवाक्या—'उभावामिन्द्राग्नी आहुवध्या...' इति द्र० तत्रैव ५७९-८०-८१ याज्या— 'प्रचर्षणिभ्यः पृतनाहवेषु...इति।

**पशुबन्धाग्निमन्थन—द्र०** वैश्वदेवपर्वाग्निमन्थन—(श्रौ०प०नि० पृ० १४२)।

**पशुबन्धाङ्गयाग—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे पशुयागे प्रथमतः १. प्रयाजयागः, ततः २. वपायागः, ततः ३. पश्वङ्गभूतः पशुपुरोडाशयागः, ततः ४ पुरोडाशाङ्गभूतः स्विष्टकृद्यागः, ततः ५. हृदयाद्यङ्गयागः, ततः ६. त्र्यङ्गस्विष्टकृद्यागः (त्र्यङ्गैः स्विष्टकृतं यजति आप० श्रौ० ७।२२।६) इति विहितः, ततः ७ अनुयाजयागः इत्येते क्रमशः सप्तयागाः पशुबन्धाङ्गयागा उच्यन्ते। तत्र मध्ये पुरोडाशयागे कृतेऽपि न तदर्थं प्रयाजा अनुयाजा वा इज्यन्ते पाशुकैरेव प्रयाजानुयाजैः पुरोडाशेऽपि प्रसङ्गादुपकारसिद्धेः। अतश्च संचराभ्युक्षणस्य अनुयाजार्थत्वात् पशुयागे च स्विष्टकृदनन्तरमनुयागानुष्ठानात् तदानीमेव अभ्युक्षणं कार्यं न तु पुरोडाशस्विष्टकृदनन्तरम्। ज्योतिष्टोमे च 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति तृतीयसवने विहितस्य आग्निमारुतशस्त्रस्य अनन्तरमेव अनुयाजविधानात् तदनन्तरमेव संचराभ्युक्षणम् (तु०—का०श्रौ० २।४।१ विद्याधरः)। द्र० पशुदेवतासंकल्प—।

**पशुभेद—** (सा०) पशवो द्विविधाः सौमिका निरूढाश्चेति तत्राग्नीषोमीयप्रकृतिकाः सौमिका ऐन्द्राग्नप्रकृतिका निरूढाः (तु०—आ०श्रौ० प्रयोगदीपिकामञ्चनाचार्यः ३)। त एव पुनः सौम्या निर्मिताश्चोच्यन्ते। सौम्याः सोमाङ्गभूताः, निर्मितास्तु स्वतन्त्राः। तेन पशवः केचित् सोमाङ्गभूताः केचिच्च स्वतन्त्राः। तत्राङ्गभूतानामग्नीषोमीयः प्रकृतिः स्वतन्त्राणां निरूढः प्रकृतिः। स्वतन्त्रेषु पश्विष्टिः (पशुपूर्वेष्टिः) कार्या नाङ्गभूतेषु इति विशेषोऽवधेयः (तु०—आ०श्रौ० ३।८। ३-४ नारायणः) द्र० निरूढपशुबन्धप्रकृति—।

**पशुयाग—** (सा०, अव्य०) वपापुरोडाशाऽङ्गप्रचारात्मकः पशुयाग इत्युच्यते। द्र० मी०को० पृ० २५२४।

**पशुरशना—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपे पशुबन्धनार्था रज्जुः पशुरशनोच्यते। द्र० श्रौ०प० नि० पृ० १२१।

**पशुवपायागपुरोऽनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे सौम्याज्यभागयाज्यानन्तरं अध्वर्युणा 'इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रू३हि' इति प्रैषितो मैत्रावरुणः 'आ वृत्रहणा वृत्रहभिः' (६।६०।३) इति वपायागस्य पुरोनुवाक्यां पठति। श्रौ०प०नि० पृ० १४६।

**पशुवपायागप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशौ वपायागपुरोनुवाक्यानन्तरं मैत्रावरुणः 'होता यक्षदिन्द्राग्नी छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति। द्र० श्रौ०प०नि० पृ० १४६।

**पशुवपायागयाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्न... पशौ वपायाग प्रैषानन्तरं मैत्रावरुणः 'होता शुचिं नु स्तोमम्' (ऋ० ७।९३।१) इति याज्यां पठति। द्र० श्रौ०प०नि० पृ० १४६।

**पशुवासनवेपनादिनिमित्ताहुति—** (आध्व०, प्राय०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च शमितृभिः 'संज्ञप्तः पशुः' इत्युक्ते अध्वर्युरुपाकरणप्रभृति संज्ञ-

पनपर्यन्तं पशोर्वासने वेपने पलायने मरणे शकृत्कृतौ मूत्रकरणे च प्रतिनिमित्तं निमित्त-क्रमेण तिस्रस्तिस्र आहुतीर्जुहोति—'यदस्य पारे रजसः' इत्यादिभिः तिसृभिर्ऋग्भिः। तत्र द्वितीयामृचि वासने निमित्ते 'यस्माद् भीषा वाशिष्ठा' इति पाठः। वेपने तु वाशिष्ठा इति पदस्य स्थाने वेपिष्ठा इति पदमूहनीयम्। एवं सर्वनिमि-त्तेषु। 'अग्नये वैश्वानरायेदमिति यजमा-नस्य त्यागः आद्ये। अन्त्ययोस्तु 'रुद्राय मीढुषे' इति अत्र उदकस्पर्शः। ता एताः पशुवाशनादिनिमित्ताः वाशननिमित्ताः वा आहुतय इत्युच्यन्ते। तत्राहुतिभ्यः पूर्वं यज-मानः ऋत्विजश्च संज्ञप्यमानं पशुमनवेक्ष-माणाः सन्तः संज्ञपनकाले पृषदाज्यसमीपे उत सते 'इह प्रजा विश्वरूपा रमन्ताम्' इत्यृचं च जपन्ति इति विशेषोऽवधेयः द्र० श्रौ०प०नि० पृ० १३०।

**पशुविभक्ति—** द्र० सवनीयपशुविभाग—।

**पशुश्रपणाग्न्युपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमा-यां सोमसंस्थामग्निष्टोमे तद्विकृतिषु चैका-हाहीनसत्रेषु औपवसत्थ्येहनि अग्नीषोमीय पशौ चात्वालोपस्थानानन्तरं पशुश्रपणम-ग्निमुपतिष्ठते—'असम्मृष्टोऽसि हव्यसूदौ रौद्रेणा...सीः' इति सदिदं पशुश्रपणाग्न्युप-स्थानमित्युच्यते। द्र० चात्वालोपस्थान-, श्रौ०प०नि० पृ० २४८।

**पशुसंज्ञपनकर्मकर्तृ—**(आध्व०) पशुयज्ञेषु ऐन्द्रा-ग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नी-षोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च ऋत्विजां मध्य अध्वर्युगणस्थेनैव पशुसंज्ञ-पनं कर्म कार्यम्। तु०—मी०को० पृ० २५२४।

**पशुसमञ्जन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृ-तिके निरूढपशुबन्धप्रकरणे जौहवाऽऽघा-रानन्तरमुदङ्ङागत्य आधारशेषजौहवा-ज्येन पशुं ललाटे समनक्ति—'सं ते प्राणो वायुना' इत्यादिमन्त्रेण। 'सं यजत्रैरङ्गानि' इति मन्त्रेण ककुदि। 'सं यज्ञपतिराशिषा' इति मन्त्रेण दक्षिणश्रोण्याम्। इति पशु सम-ञ्जनमुच्यते। तत्र पशुप्रोक्षणानन्तरं इध्मात् समिधमाददान आह—'अग्नये समिध्य-मानायानुब्रू३हि' इत्यादि जौहवाघारपर्यन्तं प्रकृतिवद्भवतीति विशेषोऽव- धेयः। द्र० पशुप्रोक्षण—, श्रौ०प०नि० पृ० १२८।

**पशुहविस्—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषो-मीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशुद्रव्ये यागे पशोः हृदयादयः एकादशा-ङ्गानि हविः। तानि च १ हृदयम्, २ जिह्वा, ३ वक्षः, ४. यकृत्, ५-६ वृक्कौ, ७ सव्यं दोः, ८-९ उभे पार्श्वे, १० दक्षिणा श्रोणिः, ११ गुदं तृतीयं गुदतृतीयोंऽशः) इति। पशोरेता-न्यङ्गान्येव हवींषि भवन्ति न कृत्स्नस्य पशोः हविष्ट्वमिति अवगन्तव्यम्। द्र० मी०को० पृ० २४८६। द्र० पशोर्हविष्यङ्ग—।

**पशुहविरवदान—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च प्रधानदेवतार्थानि स्विष्टकृदर्थानि, इडाभ-क्षणार्थानि चेति त्रीणि अवतनानि पशोर्ह-विरवदानानि भवन्ति।

**पशुहविषः पुरोनुवाक्या—** (हौ०) सोमयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे मनोतासूक्तानुवचनानन्तरमध्वर्युणा 'इन्द्रा-ग्निभ्यां छागस्य हविषोऽनुब्रू३हीत्युक्ते मैत्रावरुणः 'उभा वामिन्द्राग्नी' (ऋ० ६६०।१३)। इत्यनुवाक्यां पठति। सैषा

पशुहविषः पुरोनुवाक्या भवति। द्र० श्रौ० प० नि० पृ० १४७ श्रौ०को० १. भा० पृ० ५७८।

**पशुहविषः प्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके.....प्रकरणे (अग्नीषोमीये च) अध्वर्युणा 'इन्द्राग्निभ्यां अग्नीषोमीये अग्नीषोमाभ्यां छागस्य हविः प्रस्थितं प्रेष्ये-त्युक्ते मैत्रावरुणः 'होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो भेद उद्भृतं पुरा द्वेषोभ्यो गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां समुत्क्षराणां शतरुद्रियाणा-मग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादव-त्तानां करत इन्द्राग्नी जुषेतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति। द्र० श्रौ०प०नि० पृ० १४७। श्रौ०को० १ भा० पृ० ५८१; २ भा० पृ० २११ (इन्द्राग्नी अग्नीषोमौ इत्यूहितः), मनोतासूक्तानुवचन—।

**पशुहविषो याज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके...प्रकरणे पशुहविषः प्रैषान-न्तरं होता 'प्रचर्षणिभ्यः पृतनाहवेषु' (ऋ० १।१०९।६) इति याज्यां पठति। इतीयं पशुहविषो याज्या। तस्या अर्धर्चं पठित्वा यावत् प्रतिप्रस्थाता वसाहोमं करोति तावद् विरमति (होता)। जाते वसाहोमे उत्तरार्धर्चेन वषट् करोतीति विशेषोऽवधेयः। द्र० श्रौ०-प०नि० पृ० १४७-४८ श्रौ०को० १ भा० पृ० ५८०।

**पशुहविषः स्विष्टकृत्पुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्न.... प्रकरणे वनस्पतियागया-ज्यानन्तरम् अध्वर्युणा 'अग्नये स्विष्टकृतेऽनुब्रू३हीत्युक्ते मैत्रावरुणः 'पिप्रीहि देवां उशतो यविष्ठ्य' (ऋ० १०।२।१) इत्यनुवाक्यां पठति। सैषा पशुहविषः स्विष्टकृतः पुरोनुवाक्या। द्र० श्रौ०प०नि० पृ० १४८ श्रौतको० १. भा० पृ० ५८०।

**पशुहविषः स्विष्टकृत् प्रैष—** (हौ०) इष्टियज्ञेषु ऐन्द्राग्न...प्रकरणे पशुहविषः पुरोऽनुवाक्या-नन्तरम् अध्वर्युणा 'अग्नये स्विष्टकृते प्रेष्य' इत्युक्ते मैत्रावरुणः 'होता यक्षदग्निं स्विष्ट-कृतमयाऽग्निरिन्द्राग्नियोश्छागस्य हविषः (अयाऽग्नेराज्यस्य हविषः) प्रिया धामन्य-याट् सोमस्याज्यस्य हविषः प्रिया धामा-न्यया इन्द्राग्न्योश्छागस्य हविषः प्रिया धामान्ययाट् वनस्पतेः प्रिया पाथांस्ययाट् देवानामाज्यपानां प्रिया धामानि यक्ष-दग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमा-नमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्यज' इति होतारं प्रेष्यति। इत्ययं पशुहविषः स्विष्टकृत् प्रैष इत्युच्यते। द्र० श्रौ०प०नि० पृ० १४८ श्रौ०को० १ भा० पृ० ५८१. २ भा० पृ० २१२ (ऊहितः)।

**पशुहविषः स्विष्टकृद्याज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्न...प्रकरणे पशुहविषः स्विष्टकृत्प्रैषा-नन्तरं होता स्विष्टकृन्निगदरहितां 'अग्ने यदद्य विशा' (ऋ० ६।१५।४) इति याज्यां पठति। इतीयं पशुहविषः स्विष्टकृद् याज्या। द्र० श्रौ०प०नि० पृ० १४८ श्रौ०को० १ भा० पृ० ५८०। २ भा० पृ० २१२

**पशूपाकरण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे पशुप्रायश्चि-त्ताहुत्यनन्तरं प्रतिबर्हिर्मन्त्रं वदन् 'इषे त्वा' इति मन्त्रेण द्वे बर्हिषी गृहीत्वा पशोः शृङ्गयो-र्मध्ये बर्हिर्भ्यामन्वारभ्य 'इन्द्राग्निभ्यां त्वा जुष्टम्' इत्यादि मन्त्रेण यजमानेन सह मनसा संकल्योपाकरोति—'उप वीरसि' इत्या-द्यृचा, 'प्रजापतेर्जायमाना' इत्यृचा, 'इमं पशुं

पशुपते' इत्यृचा 'अनुमन्यस्व' इति यजुषा चेति । तदिदं पशूपाकरणमुच्यते । द्र० पशुबन्धप्रायश्चित्ताहुति—, श्रौ० प०नि० पृ० १२७ ।

**पशूल्मुकप्रक्षेपण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च वपाप्रतपनानन्तरं आग्नीध्रः शामित्रसकाशे पूर्वनिहितमुल्मुकमादाय अन्तरेण चात्वालोत्करावुत्तरवेद्यभिमुखो गच्छति । तस्य पश्चादध्वर्युः 'उर्वन्तरिक्षमन्विहि' इति मन्त्रेण गच्छति । यजमानो वपाश्रपणीमन्वारभते । आग्नीध्रः उल्मुकमाहवनीये प्रक्षिपतीति । तदिदमुल्मुकप्रक्षेपणमुच्यते । द्र० वपाप्रतपन-, श्रौ०प०नि० पृ० १३१ ।

**पशोः शामित्रशालां प्रतिनयन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. आग्नीध्रः यूपोत्तरवेद्योर्मध्येन शामित्रशालां प्रति नीयमानस्य पशोरग्रत उल्मुकं गृहीत्वा गच्छति । अध्वर्युर्यजमानश्च पशुं वपाश्रयणीभ्यामन्वारभेते । द्र० श्रौ०प०नि० पृ० १२९ । २. उल्मुकमादायाग्नीत् पुरस्तात् प्रतिपद्यते । पशुं नयन्ति । द्र० श्रौ०को० २ भा० पृ० १९६-९७, शामित्र— । ३. प्रयाजैस्तोषितं पर्यग्नि- करणेन रक्षितं पशुमदङ्मुखं नयन्तीति । द्र० प्रयाज—, पर्यग्निकरण— ।

**पशोर्हविष्याङ्ग —** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशोः १. एकादशाङ्गानि हविः, तानि च १ हृदयम्, २. जिह्वा, ३ वक्षः, ४. यकृत् ५.-६. वृक्वौ, ७. सव्यं दो :, ८-९ उभे पार्श्वे, १० दक्षिणा श्रोणिः, ११. गुदतृतीयम् (गुदतृतीयोंऽशः) इति दैवतावदानानि पश्वङ्गानि एकादश । तत्र पशोरेतान्यङ्गान्येव हवींषि न तु कृत्स्नः पशुः । द्र० मी०को० पृ० २४८६ । २. हृदयं जिह्वा, वक्षः, दोषो पार्श्वे, गुदम्, अंसौ शिरः, अनूकम्, अपसक्थिनी इति च पशोरङ्गानि । तत्र पशोरङ्गान्येव हवींषि, न तु कृत्स्नः पशुः । द्र० मी०को० २४८६, पशुप्रदान—, पशुहविस्—द्र० ।

**पश्वङ्गग्रहणप्रैष—** (आध्व०) पशुयज्ञेषु निरूढपशुबन्धप्रकरणे शालामुखीयस्याग्नेः पुरस्ताद्दर्भेषु पात्रसादनानन्तरं ब्रह्मोपवेशनादि प्रकृतिवत् । निर्वापादिषु अग्निपदस्य स्थाने इन्द्राग्निपदम् । शालामुखीयस्य पश्चादाप्यलेपनिनयनान्तं करोति । प्रतिप्रस्थाता हविष्कृदन्ते आप्यनिनयनान्ते वा संप्रैषमाह—'शमितर् हृदयं, जिह्वां, वक्षः, तानि सार्धं कुरुतात् । तनिममतस्नौ तानि सार्धं सव्यं दोरेकचरं कुरुतात् । नानापार्श्वे अवधत्तात् । दक्षिणां श्रोणिमध्युद्धिं कुरुतात् । दक्षिणं दोः सव्यां श्रोणिमणिमद्गुदस्य तानि अङ्गानि कुरुतात् । वनिष्ठुं च जाघनीं चावधत्तात् । बहु यूः कुरुतात् । त्रिः पशुं प्रच्यावयतात् । त्रिः प्रच्युतस्य पशोः हृदयमुत्तमं कुरुतात् इति । सोऽयं पश्वङ्गग्रहणप्रैष उच्यते । द्र० पशोर्हविष्याङ्ग—द्र०, श्रौ०प०नि० पृ० १३३-३४

**पश्वङ्गजिह्वायाग—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नपशुप्रकृतिके निरूढपशुबन्धप्रकरणे होतुर्वषट्कारे अध्वर्युर्जुह्वां जुहोति । यजमान इन्द्राग्निभ्यामिदं न मम । 'इन्द्राग्न्योरहं देवयज्ययेन्द्रियावी भूयासमिति त्यागानन्तरमनुमन्त्रयते इति । सोऽयमङ्गयागः पश्वङ्गजिह्वायाग उच्यते । द्र० श्रौ०प०नि० पृ० १३७ । अग्नीषोमीये अग्नीषोमाभ्यामित्यूहः कर्तव्यः ।

**पश्वङ्गानुवाक्याप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अध्वर्युर्यथागतं प्रत्येत्य जुहूपभृतावाददान आह—'इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रू-३हीति पश्वङ्गानुवाक्याप्रैष उच्यते। तत्र अनुवाक्याप्रैषात् पूर्वं दक्षिणपार्श्वस्य मांसवत्प्रदेशेन वसाहोमहवन्यां गृहीतां वशां मिश्रयति 'श्रीरस्यग्निस्त्वा' इत्यादि मन्त्रेण। जाघनीं यथाहृतं प्रत्याहृत्य पश्चान्नीत्वा शालामुखीयस्य समीपे निदध्युः। पश्वङ्गानि (पात्राणि) जुहूं, उपभृतं, इडापात्रीं, वसाहोमहवनीं, प्राशित्रहरणं च यथाहृतं पर्याहृत्य यथास्थानं निदध्युः इति विशेषोऽवधेयः। द्र० शालामुखीय- श्रौ०प०नि० पृ० १३६-३७।

**पश्वङ्गावदान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्निषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च अङ्गावदानप्रैषानन्तरं हृदयाज्जुह्वां द्विरवद्यति। ततो जिह्वायाः सकाशात् द्विरवद्यति। ततो वक्षसः तनिम्नश्च वृक्त्रयोर्मेदसी पृथक् स्थापयित्वा दक्षिणवृक्यात् सव्यवृक्यात् सव्याद् दोष्णोः दक्षिणात् पार्श्वात् सव्यात् पार्श्वात् दक्षिणश्रोण्या अध्युन्या ऊर्ध्वप्रदेशाद् गुदं त्रेधा कृत्वा मूलमुपयड्भ्योऽग्रं स्विष्टकृदर्थं निधाय मध्यं द्वेधा कृत्वा जुह्वामवदधाति। पूर्वस्थापितदक्षिणवृक्यमेदो यूष्णि निधाय प्रसार्य तेन जुहूं प्रच्छाद्य यूष्णोपसिच्य ध्रुवाज्येन पूरितेन यूपाहवनीययोर्मध्याहृतेन स्रुवेण जुह्वां गृहीतान्यङ्गानि अभिघारयति। सर्वाण्यङ्गानि द्विर्द्विरवद्यति सर्वत्रोपस्थानाभिमर्शप्रत्यञ्जनानि न भवन्ति। तत उपभृति सकृद्दक्षिणस्य दोष्णः सकृत्सव्यश्रोणेः पिशितमवदाय पूर्वनिहितं गुदस्याग्रं निधाय यूषमानीय तदुपरि सव्यवृक्यमेदो निधाय प्रसार्य तत्रोपभृतं प्रच्छाद्य यूष्णोपसिच्य पूर्ववद् द्विरभिघारयति। अवत्तावशिष्टेभ्योऽङ्गेभ्यः प्राशित्रमवदायाऽऽज्यस्थाल्याः सकाशाद् गृहीताज्येन स्रुवदण्डेन जुह्वावदानवत् द्विरभिघार्य निदधाति। इडापात्र्या अवदानकाले अवशेषितान् हृदयजिह्वावक्षोभागान् तनिमतस्नुं वनिष्ठुं च द्विर्द्विरादाय अन्यैरप्यनुक्तैरस्थिवर्जितैरङ्गैरिडां वर्धयित्वा यूष्णोपसिच्य जुह्वङ्गवदाज्यस्थाल्याज्येन स्रुवेणाभिघारयति। वसाहोमहवन्यां वसां गृहीत्वा यूष्णोपसिच्य जुह्वङ्गवदपूर्वाज्येन स्रुवेणाभिघारयतीति कर्म पश्वङ्गावदानमुच्यते। द्र० पश्वङ्गग्रहणप्रैष—श्रौ०प०नि० पृ०१३६।

**पश्वङ्गावदानप्रैष—** द्र० अङ्गावदानप्रैष—।

**पश्वङ्गावदानश्रपण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपेशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च पश्वङ्गावदानानन्तरं पशूनां जौवहवानामौपभृतानां च हृदयाद्यङ्गानां श्रपणं पश्वङ्गावदानश्रपणमुच्यते। तत्र हृदयं वारणेऽरत्निमात्रे शूले प्रोतयित्वा शामित्रेऽग्नौ श्रपयेत्। हृदयव्यतिरिक्तानि सर्वाणि पश्वङ्गानि तत्रैवैकस्यामुखायां श्रपयेत्। (तु०—का०श्रौ० ६।७। १४-१५ विद्याधरः) वाजपेये तु जौहवान्यौपभृतानीति द्विविधान्यङ्गानि पृथक् पृथक् पात्रयोः श्रपणनीयानि। पूर्वेभ्यो जौहवेभ्य एव प्रधानयागः स्विष्टकृद्यागश्च। प्रकृतौ जौहवेभ्यः प्रधानयाग उत्तरेभ्य औपभृतेभ्यः स्विष्टकृद्याग इति विशेषोऽवगन्तव्यः (तु०— का० श्रौ० १४।२१७-१८ विद्याधरः)। द्र० पश्वङ्गावदान—।

**पश्वङ्गावदानाभिमर्शनमन्त्र—** द्र० अवदानाभिमर्शन—

**पश्विडाभक्षण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे वनस्पतियागस्य पूर्वाहुत्यनन्तरं अध्वर्यु: उपभृति गृहीतानि अङ्गानि जुह्वां समावपमान आह—'अग्नये स्विष्टकृतेऽनुब्रू३हि' इति। आश्राव्य प्रत्याश्राविते आह—'अग्नये स्विष्टकृते प्रे३ष्य' इति। वषट्कृते पूर्ववज्जुहोति। संक्षालननिनयनानन्तरं होत्रङ्गुलिपर्वाञ्जनादि करोति। उपहूतायामिडायां वनिष्ठुमग्नीधे षडवत्तं संपाद्य ददाति। इडाभागमपि ददाति इति केषाञ्चिन्मते। षड्ऋत्विजो यजमानश्चेडां भक्षयन्तीति पश्विडाभक्षणमित्युच्यते। द्र० वनस्पतियाग-, श्रौ०प०नि० पृ० १३७।

**पश्विलोपह्वान—** द्र० इलोपह्वान—।

**'पश्विष्टि—** द्र० आग्नेयेष्टि—।

**पश्वेकादशिनी—** द्र० ऐकादशिन—।

**पाकयज्ञ—**(सा०) १. हुतोऽहुत: प्रहुत: प्राशित इति चतुर्विध:पाकयज्ञ:। (गृह्यसूत्रोक्त:) तत्र हुतोऽग्निहोत्रहोमेन। अहुतो बलिकर्मणा। प्रहुत: पितृकर्मणा। प्राशितो ब्राह्मणे हुत: इत्यर्थोऽवगन्तव्य:। २. त एते अप्रयाजा:, अननुयाजा:, अनिडा:, अनिगदा:, असामिधेनीकाश्च सर्वे पाकयज्ञा:। ३. ब्रह्मैवैक ऋत्विक् पाकयज्ञेषु। स्वयं होता भवति (गो० गृ० १।९।८)। ४. पाकयज्ञा:— अल्पयज्ञा वा प्रशस्तयज्ञा वा एकाग्निसाध्ययज्ञा वा (ला०श्रौ०) पाकयज्ञा इत्याचक्षते एकाग्नौ यज्ञान् (गो० गृ० भा०)। ५. पाकं निर्वर्त्य क्रियमाणो यज्ञ: पाकयज्ञ:। ६. दर्विहोमवाचक: पाकयज्ञशब्द:। मी०को० पृ० २५३४

**पाठ—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. पाठ शब्द: भिन्नप्रयोगविधिपरिग्रहस्थले पारायणादौ उपयुज्यते। २. पाठ: क्रमवोधकं प्रमाणम्। स द्विविध: मन्त्रपाठ: ब्राह्मण- पाठश्चेति। प्रयोगविधौ अनुष्ठानक्रमे क्वचित् मन्त्रपाठ: पूर्व: ब्राह्मणपाठ उत्तर:। क्वचिच्च ब्राह्मणपाठ: पूर्व उत्तरो मन्त्रपाठ:। यथा दर्शपूर्णमासयोराग्नेयस्य पूर्वो मन्त्रपाठ उत्तरो ब्राह्मणपाठ:। अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठ: मन्त्रपाठस्तूत्तर: इति। द्र० मी०को० पृ० २५३५। तत्र मन्त्रब्राह्मणपाठयो: बलाबलविरोधे पूर्वोत्तरभावे च मन्त्रपाठो बलीयान् न तु ब्राह्मणपाठ:, तस्योत्पत्तिविनियोगविधिगतत्वेन प्रथमोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविधयैव क्रमनियामकत्वोक्ते: इति विशेषोऽवगन्तव्य:। द्र० मी०को० पृ० २५३६। द्र० पारायण— वेदपारायण—।

**पाणिसंमर्शन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च इडाजपानन्तरं आहवनीयस्योत्तरतस्तिष्ठन् (अध्वर्यु:) हस्तौ मन्त्रेण संमृशते इति पाण्यो: सावधानत्वाय करिष्यमाणकर्मसु प्रेरणारूपं पाणिसंमर्शनमित्युच्यते। द्र० इडाजप—, श्रौतपदार्थ० पृ० १४।

**पात्नीवतग्रहग्रहण—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने १. घृतयाज्यासम्पुटितसौम्यचरुयागानन्तरं मेक्षणानुप्रहरणान्ते पुनश्चतुर्गृहीतं गृहीत्वाऽऽहघृत० जा इति। पूर्ववज्जुहोति। अपर्यागे स्रुवाहुत्याऽभिजुहोति 'विष्णो त्वं न:' इत्यृचा। ततश्चरुमध्ये गर्तं कृत्वा प्रभूतमाज्यं लौकिकमानीयोद्गातृव्यतिरिक्ता: स्वशरीरच्छायां तस्मिन्नवेक्षन्ते 'यन्मे मन:. मसि' इति। चरु-

मुद्रातृभ्यो दत्त्वा प्राङायन्नाह—'प्रतिप्रस्थातर् उपांशुपात्रेण पात्नीवतमाग्रयणाद् ग्रहं गृही. षदः' इति। प्रतिप्रस्थाता तथा गृह्णाति। 'उप सि बृहस्पतिसुतस्य त इन्द्रो इन्द्रियावतः पत्नीवन्तं ग्रहं गृह्णाना ३ पत्नीवा: ३।' बर्हिषी अन्तर्धाय घृतेन श्रीणाति। 'अहं पुरः सनानाम्।' इति तदिदं पात्नीवतग्रहग्रहणमुच्यते २. द्विदेवत्यानां ऐन्द्रवायवादीनां शेषाः आदित्यस्थाल्यां निक्षिप्यन्ते अवनीयन्ते। ततोऽपि पुनः आग्रयणस्थाल्यामागच्छन्ति। ततश्च पात्नीवतस्य ग्रहणम्। द्र० मी०को० पृ० २२२२, २५४१। ३. पात्नीवतं ग्रहं आग्रयणात् उपांशुपात्रेण गृह्णाति मी०को० २५४०। द्र० घृतयाज्यासंपुटित सौम्यचरुयाग—श्रौ०प०नि० पृ० ३०९।

**पात्नीवतग्रहशेषभक्ष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु च तृतीयसवने आग्नीध्रः नेष्टुः समीपे आसीन पात्नीव्रतग्रहशेषं भक्षयतीति।

**पात्नीवतग्रहहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने पात्नीव्रतग्रहः आग्नीध्रेण उपांशु अनुवषट्काररहितो हूयते। तदुक्तम् ऋतुयाजान् द्विदेवत्यान् (ग्रहात्) यश्च पत्नीवतो ग्रहः। आदित्यग्रहसावित्रौ तान् स्म माऽनुवषट्कृथाः इति।

**पात्र—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च रक्षन्ति १. हविरादि एभिरिति तानि पात्राण्युच्यन्ते। तत्र पिबन्त्येभिरिति पात्राणि इति न विगृह्यते। तथा सति शूर्पादीनां पात्रता न स्यात्, अतः पात्रशब्दः साधनवचनः समुदायग्राहकश्च भवति। तेनैव सर्वेषां कपालानामेकपात्रता पुरोडाशपात्र्योश्चैकपात्रता भवति। (तु०—का० श्रौ० ३।२।६ विद्याधरः) ततः अन्यपात्रैः सह द्वन्द्वत्वे एकत्वं गृह्यते। दर्शपूर्णमासयोः तानीष्टौ पञ्च द्वन्द्वैः दश आसाद्यन्ते। तदुक्तम् 'शूर्पाग्निहोत्रहवणि स्फ्यकपालं, शम्याकृष्णाजिनं, उलूखलमुसलं, दृषदुपलम्, अर्थवच्च (तु०—का० श्रौ० २।३।८) इति विशेषोऽवधेयः २. पात्रं वारणवैकंकतादिजन्यं दर्शपूर्णमासादिसर्वयज्ञेषु विनियुज्यते। मी०को० पृ० २५४३। पशुयज्ञेषु पाशुकानि सोमयज्ञेषु सौमिकानि च पात्राणि तत्र तत्र द्रष्टव्यानि ३. पात्राणि एकस्मिन् प्रयोगे प्रयुक्तान्यपि पुनः प्रयोगान्तरे प्रयोगाऽनर्हाणि न भवन्ति। तानि प्रक्षाल्य पुनः ग्राह्याणि। द्र० मी०को० २५४३।

**पात्रधारण—**(सा० याज०) इष्टिपशुसोमयज्ञेषु अग्निहोत्रे च आहिताग्नीनां यजमानानां यज्ञीयानां पात्राणां धारणमग्न्याधानकालादारभ्याऽऽमरणं भवति। तत्र सर्वकाले सर्वप्रयोगेषु च यावज्जीवं सकृन्निर्मितानामेवोपयोगः न तु प्रतिप्रयोगं विशेषवर्जं पुराणानां हानं नवीनानामुपादानं कर्तव्यम्। तदुक्तम्- 'आहिताग्निर्दहन्ति यज्ञपात्रैश्च। इति विशेषोऽवगन्तव्यः।

**पात्रसंसादन—**द्र० पात्रासादन—।

**पात्रासादन—**(आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु १. यस्य पात्रस्य येन क्रमेण प्रथमं कार्यार्थं हस्तेनोपादानं तेनैव क्रमेण गार्हपत्यस्य पश्चादुत्तरतो वा पात्राणामासादनं स्थापनं पात्रासादनमुच्यते। तदुक्तम्—'श्रपणस्य (गार्हपत्यस्य) पश्चादुत्तरतो वा'

का० श्रौ० २।३।९ इत। २. परिस्तरणानन्तरं परिभोजनीयदर्भानास्तीर्य तेषु द्वन्द्वं नाञ्चि प्रक्षालितानि यज्ञपात्राणि प्राक्संस्थान्युदगपवर्गाणि स्थापयति अध्वर्युः' इति। तदेतत्कर्म पात्रासादनमुच्यते। पशुयज्ञेषु सोमयज्ञेषु पात्रासादनम् उत्तरवेद्यां खरे च तत्र तत्र द्रष्टव्यम्। आसादन—, परिभोजनीयदर्भ—, परिस्तरण—, श्रौ०प०नि० पृ० १४।

**पादभागा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितावुपधेया षडङ्गुलसमचतुरस्रा इष्टकाः पादभागा उच्यन्ते।

**पादव्यवस्था—** १. द्र० अर्धर्चक्लृप्ति-, छन्दः पादव्यवस्था—, अवसानपरिज्ञान—। ऋक्षु अपर्यवसितेऽर्थे वृत्तवशेन पादव्यवस्था। मीं०को० पृ० २५४६।

**पादशंसन—** (सा०, हौ०) इष्टिपशुसोमेषु गायायादि पङ्क्त्यन्तच्छन्दसामर्धर्चशंसनविधौ एकस्मिन् पादेऽवसायोत्तरस्मिन् पादे (अर्धर्चे) प्रणवप्रयोगः पादशंसनमुच्यते। ऐ० आ० सा० ५।३।१ आ०श्रौ० ५।१४।९)। द्र० अर्धर्चशोऽनूच्य—।

**पादशस्य लक्षण—** द्र० पच्छोविधि—।

**पादसंहिता—** स्वाध्याये ब्रह्मयज्ञप्रकरणे एकपद-द्विपद-त्रिपद-चतुष्पदाऽनेकपदाः पादाः पादसंहितोच्यते। (तु०—शु० प्रा० १।१।१५७)।

**पादिन्-, पादिनी—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं १. स्वस्वकर्मकुर्वाणा होत्राः पादमात्रया दक्षिणाया ग्रहणात् पादिन्य उच्यन्ते। तत्र सुब्रह्मण्याग्नीध्रोन्नेतृग्रावस्तुतो दक्षिणायाश्चतुर्थ भाक्त्वात् पादिन्यो होत्रा उच्यन्ते। द्र० द्रा०श्रौ० ला०श्रौ० ९।१।१२। अत्र होत्रा शब्दस्त्रियाम्। २. ग्रावस्तुत् पोतोन्नेता सुब्रह्मण्यश्चेते चत्वार ऋत्विजः पादिन उच्यन्ते द्र० श्रौ०प०नि० पृ० १८८। ३. पादिनः ऋत्विजः। पादोऽस्ति प्रत्येकं येषां दक्षिणायाश्चतुर्थांशः, ते पादिनः। द्वादश गावः पूर्णा दक्षिणाः, तत्पादः तिस्रो गावः। उन्नेता अध्वर्योः (पुरुषः), पोता ब्रह्मणः, ग्रावत् होतुः सुब्रह्मण्यः उद्गातुः, एते पादिनः। द्र० मी०को० पृ० २५४६।

**पादोनपद्या—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितावुपधेयाः द्वादशाङ्गुलसमचतुरस्रा एकेन पादेन (कोणेन) ऊनाः त्रुटिता इष्टका पादोना उच्यन्ते।

**पाद्य—** (सा०) इष्टिपशुसोमयज्ञेषु ऋत्विग्भ्यो मधुपर्कप्रदाने पादप्रक्षालनपर्याप्तं पात्रस्थं जलं पादार्थमुदकं पादार्घाभ्यां चेति (पाणिनि) यत्प्रत्यये पाद्यमुच्यते। तत्र विष्टरे उपवेशनानन्तरं पाद्यं पाद्यं पाद्यं प्रतिगृह्यतामिति त्रिरुक्ते पाद्यं दध्यात्। ऋत्विजस्तु प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्णन्ति। ततः पादौ प्रक्षाल्य शुद्ध्यर्थमाचमन्तीति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० ५०।

**पान्नेजन-, ०जिनी—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पादौ निज्येते अनेनेति मुखाद्यवयवशोधनार्थो जलकलशः पान्नेजन उच्यते तत्रस्था आपः पान्नेजिन्यश्चोच्यन्ते।

**पापनिष्क्रयण—** (सा०) तस्य (पापस्य) निष्क्रयणानि जपस्तपो होम उपवासो दानमिति।

(तु०—बौ०ध० ३।१०।१०, गौ०ध० १९।१२)।

**पापमुक्ति—** (सा०) 'सिंहे मे' इत्यपां पूर्णे पात्रेऽवेक्ष्य चतुष्पथे। मुच्यते सर्वपापेभ्यो महतः पातकादपि। (बौ०ध० ४।७।७, बौ० श्रौ० २।५)।

**पापैनसोर्विवेक—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रविकृतौ एकाहप्रकरणे राजसूये शौनःशेपाख्याने 'ऋचामोमिति, गाथानां तथेति द्वाभ्याम् ओम्' 'तथा' इति प्रतिगराभ्यां राजानं 'पापादेनसः प्रमुञ्चति' इत्यत्र पापशब्देन महत्पापमुच्यते, एनः शब्देनाल्पम् इति पापस्य एनसश्च भेदो द्रष्टव्यः (तु०—आ०श्रौ० ८।३।११-१२ नारायणः)।

**पारायण—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे साकल्येन ग्रन्थादीनामाद्यन्त पाठः पारायणमुच्यते तत्र वेदपारायणं चतुष्प्रचारकम् **द्र०** वेदपारायणः, पाठ—।

**परिप्लवशस्त्र—** अश्वमेध—**द्र०**।

**परिप्लवशस्त्रस्य प्रतिगर** (हौ०)—सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वमेधे (अश्वत्रिरात्रे) 'ह्वै होतर्' (अहं त्वा ह्वयै होतः इत्यर्थः) इति अध्वर्युः होतारं प्रतिगृह्णाति परिप्लवशस्त्रशंसनार्थम्। सोऽयं पारिप्लवशस्त्रप्रतिगर उच्यते। (तु०—का० श्रौ० २०।३।१)। **द्र०** प्रतिगर।

**पारुच्छेपी—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु। पृष्ठ्यषडहस्य षष्ठेऽनि माध्यन्दिनसवने त्रयाणां होत्रकाणां शस्त्रेषु अहरहः शस्यसूक्तसम्पातसूक्तयोरन्तरालेतृचत्वेन आवपनीया (प्रक्षेप्या दैवोदासिना परुच्छेन ऋषिणा दृष्टेषु त्रयोदशसूक्तेषु ऋ० १।१२७-१३९ पञ्चमसूक्तस्य 'इन्द्राय हि' (ऋ० १।१३१।१-७) इति सप्तर्चस्य याः सप्त ऋचः परुच्छेपदृष्टत्वात् ताः पारुच्छेप्या उच्यन्ते। तासां तृचप्रयोगस्तु प्रथमामारभ्यैक स्तृचो मैत्रावरुणस्य (१-३) तृतीयामरभ्यैकस्तृचो ब्राह्मणाच्छंसिनः (३-५)। पञ्चमीमारभ्यैकस्तृचोऽच्छावाकस्येति (५-७) (तु०—ऐ० ब्रा० सा० ६।१९ आ०श्रौ० ७।११।४०)। इति क्रमेणावगन्तव्यः।

**पार्थहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये, अग्निचयने च 'अग्नये स्वाहा' (यजु० १०।५) इत्याद्या द्वादशाऽऽहुतयः पार्था होमा उच्यन्ते। तेषु पूर्वाः 'अग्नये स्वाहा' इत्याद्याः षड् राजसूये सीसनिधानानन्तरम्। उत्तरा 'इन्द्राय स्वाहा' (यजु० १०।५) इत्याद्यः षड् यजमानाभिषेके हूयन्ते। अग्निचयने तु उत्तराः षड् एव हूयन्ते इति विशेषोऽवधेयः।

**पार्थुरश्मसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे अश्वमेधे च 'इन्दो मदाय' (ऋ० १।६।१) इत्यस्यामृचि (यो नौ) गेयं साम पार्थुरश्ममुच्यते। तच्च राजन्यस्य (यजमानस्य), भवति तदुक्तम्—'पार्थुरश्मं राजन्यस्य' (तां० ब्रा० १३।४।१८) इति।

**पार्वण— द्र०** श्राद्ध—।

**पार्वणश्राद्ध—** (स्मार्त०) पाकयज्ञप्रकरणे कन्यागते सवितरि दिनानि दश पञ्च च पार्वणेनेह विधिना श्राद्धं तत्र विधीयते। आषाढ्याः पञ्चमे पक्षे कन्यासंस्थे दिवाकरे। मृताहनि पितुर्यो वै श्राद्धं दास्यति मानवः। तस्य संवत्सरं यावत् संतृप्ताः पितरो ध्रुवम्।

महालये मातृश्राद्धं पृथक् प्रशस्तम् । पार्वणं च—अन्वष्टक्यं च यन्मातुर्गयाश्राद्धं महालयम् । पितृपत्नीषु च श्राद्धं कार्यं पार्वणवद् भवेत् ॥ (तु०—निर्णयसिन्धु:) ।

**पार्वणहोम—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे प्रधानहोमानन्तरमुपस्तीर्य सर्वेषां हविषामुत्तरार्धात् सकृत्सकृदवदानम् । पञ्चावत्तिनस्तु द्विरवदानं भवति । एवं ततो द्विरभिघारयति, अवत्ते स्विष्टकृति स्रुवेण दर्शे अवास्यादेवताकाम्, पौर्णमासे च पौर्णमासी देवताकामाहुतिं जुहोति । स पार्वणहोम उच्यते इति । द्र० श्रौ०प०नि० पृ० ३२ ।

**पार्वणहोममन्त्र—**(सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे यौ पार्वणहोमौ तयो: 'ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहतां सुवीर्यम् । रायस्पोषं सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा' इति पूर्णमासमन्त्र: । अमावास्या सुभगा सुशेवा । धेनुरिव भूय । आप्यायमाना । सा नो दोहतां सुवीर्यम् । रायस्पोषं सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा' इति अमावास्यामन्त्रा: । द्र० मी०को० पृ० २५५२ ।

**पार्ष्ठिकस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ द्वादशाहप्रकरणे अन्यत्र च त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा: इति षट्स्तोमा: द्वादशाहिकपृष्ठ्यषडहसंबन्धिन: षट् स्तोमा: पार्ष्ठिका भवन्ति अर्थात् पृष्ठ्यस्य प्रथमस्याह्न त्रिवृत् द्वितीयस्य पञ्चदश:, तृतीयस्य सप्तदश: इति क्रमेण षण्णामह्नां षट्स्तोमा: पार्ष्ठिका भवन्तीति ।

**पार्ष्ठिकाहन्—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे अन्यत्र च । १. द्वादशाहिकपृष्ठ्यषडहसंबन्धीनि षडहानि पार्ष्ठितकानि भवन्ति । (तु०—का० श्रौ० २२ ।७ ।१ विद्याधर:) । २. पृष्ठयषडहसंबन्धीनि अहानि पाष्ठिकाहानि उच्यन्ते । यथा पार्ष्ठिकं प्रथममह:, पार्ष्ठिकं द्वितीयमह: इत्येवमादीनि । (तु०—का०श्रौ० १४ ।१ ।५ विद्याधर:) ।

**पार्ष्णी—** इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे प्रयोक्तव्य: पादस्य घुटिकाधोभाग: पार्ष्णीरुच्यते । तदुक्तमरे कोषे—'तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णीरधस्तयो:' इति । यथा वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय इत्यादौ । अत्र पार्ष्णी स्त्रियां ज्ञेया । द्र० श्रौ०प०नि० पृ० २२ ।

**पावन—**(सा०) उपनिषदो वेदादयो वेदान्ता: सर्वच्छन्द: सुसंहिता सुसंहिता मधून्यघमर्षणमथर्वशिरो रुद्रा: पुरुषसूक्तं राजवरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यर्थं ज्येष्ठसाम्नामन्यतमं बहिष्पवमानं कूश्माण्डा: पावमान्य: सावित्री चेति पावनानि उच्यन्ते । (तु०—बौ०ध० ३ ।१० ।११ वा०ध० २२ ।९) । द्र० २- पवित्र— ।

**पावमानी—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसी आहनस्याशंसनेनाशुद्धाया वाच: पावनार्थं 'सुतासो मधुमत्त मा: (ऋ० ९ ।१०१ ।४-६) इति तिस्र: पावमानी,: शंसति । ता: शुद्धिहेतुत्वात् पावमान्य उच्यन्ते ।

**पाशुकपर्यग्निकरण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे पर्यग्निकरणप्रैषानन्तरम् आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चात्वालोत्करावुत्तरेण शामित्रमग्रेण पशुं जघनेन स्रुच इत्येवं रीत्या त्रिः प्रदक्षिणं पर्येति-यथोल्मुकमन्तर्भवति स्वयं बर्हिर्भवति तथा तदिदं पाशुकपर्यग्निकरणमित्युच्यते। **द्र०** पर्यग्निकरणप्रैष-श्रौ० प०नि० पृ० १२८।

**पाशुकपात्र—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे विशेषवर्जम् अग्नीषोमीये तत् प्रकृतिकसौमिकपशुषु च स्फ्यः, अग्निहोत्रहवणी, जुहूः, वसाहोमहवनी, उपभृत्, पृषदाज्यग्रहणी, स्रुवः, स्वधितिः, ध्रुवा, प्राशित्रहरणम्, इडा, वेदः, आज्यस्थाली, दधिस्थाली, अपूर्वाज्यस्थाली, योक्त्रम्, वेदाग्रम्, धृष्टिः, उपवेषः, इध्मप्रव्रश्चनः, अन्वाहार्यस्थाली, चेत्येकविंशतिसंख्यकानि, पूर्वेद्युर्गार्हपत्यस्योत्तरत आसादितानि तथा पशुकुम्भी, शाखापवित्रम्, यूपरशना, पशुरशना, वपाश्रपण्यौ (विशाखा, अविशाखा) हृदयशूलम्, मैत्रावरुणदण्डं चेत्यष्टौ च पात्राणि मिलित्वैकोनत्रिंशत् पाशुकपात्राणि उच्यन्ते। **द्र०** पात्र—, पाशुकपात्रासादन—, श्रौ०प०नि० पृ० १२२।

**पाशुकपात्रासादन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे विशेषवर्जम् अग्नीषोमीये तत् प्रकृतिकसौमिकपशुषु च पशुदेवतासंकल्यानन्तरं पाणिसंमर्शनादि। ततः अग्नीन् परिस्तीर्याहवनीयस्य पुरस्ताद् दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूं वसाहोमहवनीम् उपभृतं पृषदाज्यग्रहणीं स्रुवं स्वधितिं ध्रुवां प्राशित्रहरणम् इडां वेदमाज्यस्थालीं दधिस्थालीम् अपूर्वाज्यस्थालीं योक्त्रं वेदाग्रं धृष्टिम् उपवेषमिध्मप्रव्रश्चनमन्वाहार्यस्थालीं च द्वन्द्वं सादयतीति। **द्र०** पशुदेवतासंकल्प-, पाशुकपात्र-, श्रौ० प०नि० पृ० १२२। पशुषु सोमेषु च यथायथं सादयतीति।

**पाशुकपूर्वेद्युः कर्मन्—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे यूपाहरणानन्तरं पाशुकवेदिमान्, उत्तरवेदितन्नाभ्योर्मानम्, चात्वालमानम्, उत्करकरणं च वरुणप्रघासवत् करोति। पाशुकवेदिमग्निवत्परिस्तृणाति। इदानीं यजमानो भोजनं, वपनं, नवनीताभ्यञ्जनमक्ष्णोरञ्जनं च करोति। इदानीं देवतासंकल्पं करोतीति केषांचिन्मतम्। अध्वर्युरिडाजपं कृत्वाऽग्नीन् विहृत्यान्वाधाय व्रतग्रहणान्ते शाखाहरणपक्षे 'इषे त्वा' इत्यादि यजुषा शाखामाच्छिनत्ति। तूष्णीं प्लक्षशाखामाच्छिद्योभे शाखे तूष्णीमाहृत्य तूष्णीं यजमानमवेक्षयित्वोद्गूहति 'यजमानस्य' इत्यादि प्राकृतमन्त्रेण। ततो बर्हिः संभरणादि। ऐक्षवी विधृती भवतः इति केचित्। पञ्चविधं बर्हिः, कार्ष्मर्यमया परिधयः। सप्तदश सामिधेन्यः। शाखापवित्रकरणमन्त्रे 'पशुं हव्यं करोतु मे' इति विशेषः। सायं अग्निहोत्रहोमानन्तरमुत्तरेण गार्हपत्यं दर्भान् संस्तीर्य तेषु पशुकुम्भीं शाखापवित्रं च त्रिगुणां त्रिव्यायामां यूपरशनां द्विगुणां द्विव्ययामां पशुरशनां च काष्मर्यमय्यौ वपाश्रपव्यौ विशाखामेकामविशाखामपरां काष्मर्यमयं हृदयशूलं यजमानमुखसंमितं मैत्रावरुणं चेति द्वन्द्वं सादयति। ततस्तान्युत्तानानि कृत्वा कमण्डलुगताभिरद्भिः 'शुन्धध्वमित्यादि प्राकृतमन्त्रेण प्रकृतिवत् प्रोक्षति। तदिदं पाशुकवेदिमानादि पाशुकपात्रप्रोक्ष-

णान्तं कर्म पाशुकपूर्वेद्युः कर्मोच्यते । द्र० पाशुकपात्र—द्र० यूपाहरण–, श्रौ०प० नि० पृ० १२१

**पाशुकवेदि—** द्र० उत्तरवेदि— ।

**पाशुकसंस्थाजपोपस्थान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे पाशुकसमिदाधानानन्तरं संस्थाजपेनोपतिष्ठन्ते। इतीदं पाशुकसंस्थाजपोपस्थानमुच्यते। श्रौ०प०नि० पृ० १५१ द्र० पाशुकसमिदाधान- ।

**पाशुकसक्तुहोम—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे बर्हिरुपोषणानन्तरं यजमानो ब्रीहिसक्तून् यवसक्तून् वा अपूर्वाज्येनोपस्तीर्णाभिधारितान् बर्हिषा प्रदीप्ते आहवनीये अञ्जलिना विश्वतोपवीत्यादिमन्त्रेण जुहोति। अग्नय इदमिति त्यागः। हस्तौ परस्परं संघृष्य 'अश्वादेकम्' इत्यादिमन्त्रं पटन् लेपमपनयति। सोऽयं पाशुकसक्तुहोमइत्युच्यते। द्र० बर्हिरुपोषण—द्र० श्रौ० प०नि० पृ० १४० द्र०।

**पाशुकसमिदाधान—**(हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अप उपस्पर्शनानन्तरं होतृब्रह्ममैत्रावरुणाः शूलमनवेक्षमाणा असंस्पृशन्तः प्रत्यायन्तस्तिस्रस्तिस्रः समिधो गृह्णीयुः 'अग्नेः समिदसि तेजोऽसि तेजो मयि धेहि' इति प्रथमाम्। 'एधोऽस्येधिषी महि' इति द्वितीयाम्। 'समिदसि समेधिषीमहि' इति तृतीयम्। एत्योपतिष्ठन्ते 'आपो अद्यान्वाचारिषम्' इत्यृचा। ततो ग्रहणक्रमेण समिधोऽभ्यादधाति आहवनीये। 'अग्नेः समिदसि तेजोऽसि तेजो मेदाः स्वाहा' इति प्रथमाम्। 'सोमस्य समिदसि दुरिष्टैर्मा पाहिस्वाहा' इति द्वितीयाम्। 'पितृणां समिदसि मृत्योर्मा पाहि स्वाहा' इति तृतीयाम्। तदिदं पाशुकसमिदाधानमुच्यते। तत्र समिदाधानात्पूर्वम् अनुयाजप्रैषानन्तर मध्वर्युणा 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ३ ब्रूहि' इत्युक्ते मैत्रावरुणः 'अग्निमद्य होतारमवृणीतायां यजमानः पचन् पक्तीः पचन् पुरोडाशं गृह्णनग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन् इन्द्राग्निभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाद्यस्तां तं मेदस्तः प्रतिपचताग्रभीष्टामववृधेतां पुरोडाशेन त्वामद्यर्ष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आसङ्गथेभ्यः। एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुः तान्यस्मा आ च शास्वान्नगुरुष्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ३ ब्रूहीति प्रैषेण होतारं प्रेष्यति। ततो होता सूक्तवाकं पठति। तत्राज्यभागदेवतानन्तरं इन्द्राग्नी इदं हविरजुषेतावीवृधेताम्। वनस्पतिरिदिं हविरजुषतावीवृधत महोज्योऽकृता ततो देवा आज्यपाय इत्यादि प्रकृतिवत्। संस्थाजपवर्जं सर्वं अध्वर्युणा उपोह्यमानं हृदयशूलमनुमन्त्रयते होता मैत्रावरुणो ब्रह्मा च 'शुगसि योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तमभिशोच' इति मन्त्रेण। ततो द्वीपे राज्ञो वरुणस्य गृहोमितो हिरण्यः॥ स नोधृतव्रतो राजा धाम्नो धाम्न इह मुञ्चतु। धाम्नो धाम्नो राजन्नितो वरुण नो मुञ्च। यदापो अध्न्यां इति वरुणेति शपामहे ततो वरुण नो मुञ्च॥ मयि वायो मोद्यधीर्हिंसीरतो विश्वव्यचाभूस्त्वे वरुण नो मुञ्च॥ सुमित्र्या न आप ओषधयः सन्तु दुर्मित्र्यास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः॥

एतैर्मन्त्रैस्तस्योपरिष्टाद् अप उपस्पृशन्ति। इति विशेषोऽवगन्तव्यः (तु० श्रौ०प०नि० पृ० १५०)। द्र० सूक्तवाक—।

**पाशुकसमिदाधानोपस्थान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे हृदयशूलोपगूहनानन्तरं अध्वर्युर्हृदयशूलं 'धाम्नो धाम्नो राजन्' इति मन्त्रेण प्रोक्षति। यजमानोऽञ्जलिनाऽपो गृह्णाति—'सुमित्रा न आप ओषधयः' इत्यादि मन्त्रेण। ता आपो नैर्ऋत्यां दिशि 'दुर्मित्रास्तस्मै भूयासुः' इत्यादि मन्त्रेण प्रक्षिपति। सर्वेऽप उपस्पृश्य हृदयशूलमनवेक्षमाणा आयच्छन्तः सन्तोऽर्घपथे आर्द्राः सपलाशास्तिस्रः तिस्रः समिध आददते। प्रत्येकमादाने 'एधोस्येधिषीमहि' इति मन्त्रः। आगत्याहवनीये ग्रहणक्रमेण समिधोऽभ्यादधाति। तत्र तिसृणां समिधामाधाने प्रत्येकं क्रमेण 'समिदसि स्वाहा, तेजोऽसि स्वाहा, तेजो मयि धेहि स्वाहा' इति त्रयो मन्त्राः। ततः सर्वे 'अपोऽन्वाचारिषम्' इति ऋचाऽऽहवनीयमुपतिष्ठन्ते। इति पाशुकसमिदाधानोपस्थानमित्युच्यते। द्र० श्रौ०प०नि० पृ० १४०।

**पाशुकसौम्याज्यभागस्य पुरोनुवाक्याप्रैषयाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च सौम्याज्यभागस्य पुरोनुवाक्या—'त्वं सोमासि सत्पतिः' (ऋ० १।९१।५) इति। तां मैत्रावरुणः अध्वर्युणा 'सोमायाज्यस्यावदीयमानस्य अनुब्रू३हि' इति प्रेषितः पठति। ततः प्रैषः—पुरोनुवाक्यानन्तरमध्वर्युणा 'सोमायाज्यं प्रस्थितं प्रेष्य' इत्युक्ते मैत्रावरुणः 'होता यक्षत् सोमायाज्यस्य जुषतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति। याज्या—ततोऽनेन प्रैषेण प्रेषितो होता 'ये३यजामहे सोमं जुषाणः सोम आज्यस्य हविषः' इति याज्यां पठति। इति पाशुकसौम्याज्यभागस्य पुरोनुवाक्या-प्रैष-याज्याः भवन्ति। द्र० श्रौ०प०नि० पृ० १४६, श्रौ०को० १. भा० पृ० ५७७ २ भा० पृ० २०१। अत्र आ०श्रौ० १।५।२९ अनुसारेण 'जुषाणः सोम आज्यस्य हविषो हविषो वेतु' इति सौम्यस्याज्यभागस्य याज्या भवति द्र० श्रौ०को० २ भा० पृ० २०१ टि०।

**पाशुकहविरलंकरण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिक पशुषु-प्रतिप्रस्थाता गमनत्रयविधिना शामित्राग्निसमीपं गत्वा शमितुर्हस्तात् शूलमादाय तेन शूलेन हृदयरूपमवदानं भित्त्वा तच्छूलं शमितुर्हस्ते दत्त्वा पृषदाज्येन हृदयादीन्येकादशावदानि युपदभिधारयति—'सं ते मनसा मनः' इत्यादिना स्वाहाकारान्तेन मन्त्रेण। पुनराज्यस्थाल्याज्येन स्रुवगृहीतेन सर्वाण्यवदानानि अभिधार्योदगुद्वास्य पुनराज्येनाभिधार्य एकादशावदानानि प्रत्येकं 'यस्त आत्मा पशुषु' इत्यादि मन्त्रेण अलङ्करोति। तदेव मुक्तमन्त्रेणाभिधारणं हविरलङ्करणपाशुकहविरलङ्करणमित्युच्यते। द्र० पश्वङ्गग्रहणप्रैष-, पश्वङ्गावदान-, श्रौ०प० नि० पृ० १३५, पाशुकहविरानयनार्थगमनमन्त्र—।

**पाशुकहविरानयनार्थगमनमन्त्र—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिसौमिकपशुयज्ञेषु च त्रिवारं हविरानयनाय प्रथमगमने 'पूषा मा पशुपाः पातु' इति मन्त्रः। 'पूषा मा पथिपाः पातु' इति द्वितीयगमने मन्त्रः। तृतीयगमने 'पूषा माधिपाः पातु' इति मन्त्रः। अथवा

तूष्णीमेव गमनत्रयमिति । एते त्रयो हविरानयनार्था गमनमन्त्रा इत्युच्यन्ते । द्र० श्रौ०प०नि० पृ० १३५ ।

**पाशुकहविरासादन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके... सौमिकपशुषु च अध्वर्युः जुह्वामुपभृति च ध्रुवाज्येनोपस्तृणाति । इडापात्रे आज्यस्थाल्याज्येनोपस्तृणाति । वसाहोमहवन्यामपूर्वाज्येनोपस्तृणाति । स्वयं यूपस्य बहिर्मार्गेण गच्छन् जुहूं उपभृतं वसाहोमहवनीं इडापात्रं प्राशित्रहरणं च यूपाहवनीययोरन्तरेणाहृत्य दक्षिणतो हविषः स्थापयति परिकर्मिणस्तु अङ्गानि यूष्णः पृथक् कृत्वा यूषं पात्रान्तरे गृहीतं स्थापयन्ति, पश्वङ्गानि यूपाहवनीययोरन्तरेण आहरन्ति । अध्वर्युस्तानि अङ्गानि स्रुचां दक्षिणतः प्लक्षशाखासमीपे पञ्चहोत्रा (मन्त्रेण) सादयति । ततः पात्रान्तरस्थं यूषं यूपाहवनीययोरन्तरेणाहृत्य अङ्गानां दक्षिणतः सादयति । आसन्नानि हवींषि 'यन्मे अग्ने' इत्यृचा च यजमानोऽनुमन्त्रयते इति । तदिदं पाशुकहविरासादनमुच्यते । द्र० श्रौ०प०नि० पृ० १३५-३६ ।

**पाशुकहविरासादनसंप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिकपशुयज्ञेषु च पशुपुरोडाशस्य स्विष्टकृत्प्रैषानन्तरं वषट्कृते प्रकृतिवज्जुहोति । प्राकृताग्नेययागवद् यजमानस्य त्यागानुमन्त्रणे (भवतः) । ततो हविरुच्छिष्टोद्वासनान्तं प्रकृतिवत् । ततः स्रुचि चतुर्गृहीतं गृहीत्वा अन्वार्यपचने इध्मप्रव्रश्चनान्यभ्याधायफलीकरणहोमं कृत्वा प्रणीतानयनान्तं प्रकृतिवत् । अथ संप्रैषमाह-'अग्नीत् उत्तरं बर्हिरुपसादय, प्रतिप्रस्थातः पशौ संवदस्व' इति । सोऽयं पाशुकहविरासादनसंप्रैष इत्युच्यते । द्र० श्रौ०प०नि० पृ० १३४ ।

**पाशुकाग्नावैष्णवेष्टि—** द्र० आग्नेयेष्टि— ।

**पाशुकाग्नावैष्णवेष्टिपुरोनुवाक्या—** (हौ०) ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिकपशुयज्ञेषु च 'अग्नाविष्णू स जोषसा' (ऋ०) इति पाशुकाग्ना वैष्णव्यामिष्टौ अग्नाविष्ण्वोः पुरोनुवाक्या भवति । द्र० श्रौ०प०नि० पृ० १४१ ।

**पाशुकाग्नावैष्णवेष्टियाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके...सौमिकपशुषु च 'अग्नाविष्णू महि धामप्रियं वाम्' (ऋ०) इति पाशुकाग्नावैष्णव्यामिष्टौ अग्नविष्ण्वोः याज्या भवति । द्र० श्रौ०प०नि० पृ० १४१ ।

**पाशुकाग्नेयाज्यभागस्य पुरोनुवाक्या-प्रैष-याज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिकपशुषु च आग्नेयाज्यभागस्य पुरोनुवाक्या-'अग्निर्वृत्राणि' (ऋ० ६ । १६ ।३४) इति । तामध्वर्युणा 'अग्नय आज्यस्यावदीयमानस्यानुब्रू३हि' इति प्रैषितो मैत्रावरुणः पठति । प्रैषः—पुरोनुवाक्यानन्तरमध्वर्युणा 'अग्नये आज्यं प्रस्थितं प्रेष्य' इत्युक्ते मैत्रावरुणा 'होता यक्षदग्निमाज्यस्य जुषतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति । याज्याततोऽनेन प्रैषेण प्रेषितो होता 'ये३यजामहे अग्निं जुषाणो अग्निराज्यस्य (हविषः)' इति याज्यां पठति । इति पाशुकाग्नेयाज्यभागस्य पुरोनुवाक्या-प्रैष-याज्या भवन्ति । द्र० श्रौ०प०नि० पृ० १४६, श्रौ०को० १ भा० पृ० ५७७ २ भा० पृ० २०१ । आ०श्रौ० १ ।४ ।२९ अनुसारेण 'जुषाणो अग्निरा-

ज्यस्य वेतु' इत्याग्नेयस्य याज्या। द्र० श्रौ०को० २ भा० पृ० २०१।

**पाशुकाग्नेयेष्टि—** द्र० आग्नेयेष्टि—।

**पाशुकाग्नेयेष्टिपुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिकपशुषु च 'अग्निर्मूर्धा दिवः ककुत्' (ऋ० ८।४४।१६) इति पाशुकाग्नेयेष्टौ अग्नेः पुरोनुवाक्या भवति।

**पाशुकाग्नेयेष्टियाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके... सौमिकपशुषु च 'भुवो यज्ञस्य रजसश्चन' (ऋ० १०।८।६) इति पाशुकाग्नेयेष्टौ अग्नेः याज्या भवति। आग्नेय्याग्नावैष्णव्योरिष्ट्योः संस्थाजपोऽप्यस्तीति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १४१-४२।

**पाशुकाज्यभागप्रचार—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकसौमिकेषु पशुषु च उत्तमप्रयाजप्रचरणानन्तरमुदङ्ङत्याक्रम्य प्रयाजशेषेण ध्रुवामभिधार्य पृषदाज्यमभिधार्य दक्षिणतो गत्वा वपामभिधार्य यथागतं प्रतिनिवृत्य चतुर्वारं ध्रुवाया आज्यं गृह्णानः आह—'अग्नये आज्यस्यावदीयमानस्यानुब्रू३हि' इति 'ततोऽत्याक्रम्याश्राव्य प्रत्याश्रावित आह—'अग्नय आज्यं प्रस्थितं प्रेष्य' इति। ततो मैत्रावरुणप्रेषिता होता यजति। होत्रा वषट्कृतेऽध्वर्युः प्रकृतिवत् प्रथमाज्यभागेन (आग्नेयेन) प्रचरति। एवं द्वितीयेनाज्यभागेन (सौम्येन) तत्र सोमाय आज्यस्यावदीयमानस्यानुब्रू३हि, सोमाय आज्यं प्रस्थितं प्रे३ष्य' इति प्रैषयोर्विशेषः। उभयत्र याजमानं प्रकृतिवत्। द्र० श्रौ०प०नि० पृ० १३२।

**पाशुकादित्योपस्थान—** (आध्व०) इष्टियज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे वायूपस्थानान्तरं 'देव संस्फायन' इत्यादिमन्त्रेणादित्यमुपतिष्ठतो। इतीदमादित्योपस्थानमुच्यते। द्र० देवतोपस्थान—, श्रौ०प०नि० पृ० १४१।

**पाशुबन्धिकवेदि—** द्र० १. उत्तरवेदि—।

**पिञ्जूल—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां प्रथमे अग्न्याधानप्रकरणे प्रयोक्तव्यः सप्तानां दर्भाणां स्तवकः पिञ्जूलमित्युच्यते। द्र० श्रौ०प०नि० पृ० ४६।

**पिण्डदान—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासयोर्दर्श-विकृतौ पिण्डपितृयज्ञप्रकरणे मेक्षणानुप्रहरणानन्तरं प्राचीनावीती पूर्वं कृताया रेखाया उपरि आस्तीर्णेषु दर्भेषु प्रथमपिण्डनिपातस्थाने 'शुन्धन्तां पितरः' इति मन्त्रेण जलं निषिञ्चति, शुन्धन्तां पितामहाः' इति मन्त्रेण द्वितीयपिण्डस्थाने, 'शुन्धन्तां प्रपितामहाः' इति मन्त्रेण तृतीयस्थाने॥ ततः तस्यां रेखायाम् एतत्ते पितर्ये चत्वामनु' इति मन्त्रेण पित्रे प्रथमपिण्डं ददाति। पितृपदस्थाने पितामहेति पदमुक्त्वा 'पितामह' इति पदमुक्त्वा प्रथमपिण्डस्याग्नेय्यां दिशि द्वितीयं, प्रपितामह' इति पदमुक्त्वा द्वितीयस्याग्नेय्यां दिशि तृतीयम्। इतीदं कर्म पिण्डदानं पिण्डनिपरणमिति चोच्यते। द्र० श्रौ०प०नि० पृ० ७३।

**पिण्डनिपरण—** द्र० पिण्डदान—।

**पिण्डपितृयज्ञ—** (अव्य०) इष्टियज्ञेषु १. प्रकृतिभूतदर्शपूर्णमासयोः दर्शविकृतिभूतः दक्षिणाग्न्यतिप्रणयनादिः तृणग्रहणान्तो विधिः पिण्डपितृयज्ञ इत्युच्यते। तत्र पिण्डचरुशेषभक्षणानन्तरं यथा पिण्डदानस्थाने पूर्वं जल-

सेचनं कृतं तथा पिण्डोपरि पुन: क्रियते 'पित: अभ्यङ्क्ष्व' इति मन्त्रेण पितृपिण्डोपरि अभ्यञ्जनं समन्तात् प्रक्षिपति। एवमूहेन इतरयो: पिण्डयो: तत: पित 'अङ्क्ष्व' इति मन्त्रेण अञ्जनं ददाति। इतरयो: पिण्डयो: पितामहप्रपितामहेति पदयोरूहेना 'एतद् व: पितरो वास:' इत्यादिमन्त्रेण वस्त्रं ददाति। तच्च वस्त्रं दशारूपमूर्णारूपं वा पञ्चाशद्वर्षताया ऊर्ध्वं हृदयसंबन्धि लोमवा। 'नमो व: पितर इष' इत्यादि यजुषा 'मनोन्वा हुवामहे' इति चतृभिर्ऋग्भि: 'परेतन पितर:' इत्यृचा पिण्डान् प्रवाहयति। तत्र 'अग्ने तम द्याश्वं न स्तोमै:' इति ऋचा गार्हपत्यमेति। 'यदन्तरिक्षं पृथिवीमुतद्याम्' इत्यृचा गार्हपत्यमुपतिष्ठते। 'वीरं मे दत्त पितर:' इति मन्त्रेण मध्यमं पिण्डं गृहीत्वा 'आधत्त पितरो गर्भम्' इत्यृचा पत्नीं प्राशयति। इतरौ पिण्डौ अप्सु अतिप्रणीते अग्नौ वा प्रक्षिपति। पैतृककर्मत्वात् एकश आसादितानि पात्राणि कर्मसमाप्तौ मङ्गलार्थं द्विवत्पात्राणि उत्सृजति। अन्त्यस्य पात्रस्य एकत्वे सहायत्वाय तृणं गृह्यते। इति विशेषोऽवगन्तव्य:। द्र० श्रौ०प०नि० पृ० ७३-७४। २. एष (पितृपिण्डयज्ञ:) वै मनुष्याणां यज्ञ: देवानां वा इतरे यज्ञा:। तेन वा एतत् पितृलोके चरति, यत् पितृभ्य: करोति। स ईश्वर: प्रमेतो:। प्राजापत्ययर्चा पुनरैति (तु०—तै० ब्रा० १।३।१०।१९-२०)। मै०सं० १।१०।३।१९ मा०श्रौ० १।१।२। ३८)।

**पिण्डपितृयज्ञकाल—** (सा०, आध्व०) अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति। इति पिण्डपितृयज्ञकाल इत्युच्यते। यदा सिनीवाली कुहूश्चेति द्वे अपि (अमावास्ये) क्रमेणापतत: तदापि परस्मिन् दिने पिण्डपितृयज्ञ: कार्य:। सिनी-वाल्यामन्वाधानं कुह्वां यागोत्तरं पितृयज्ञ: इति विशेषोऽवधेय:। द्र० मी०को० पृ० २५६६-६७।

**पिण्डपितृयज्ञहोम—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासयो: दर्शविकृतौ पिण्डपितृयज्ञे हवि: दक्षिणाग्नौ श्रपयन्ति 'यस्मिन् श्रपयति तस्मिन् जुहोति' इति वचनेन पिण्डपितृयज्ञहोमो दक्षिणाग्नौ नाहवनीये हूयते (तु०— मी०को० पृ० २५६९।

**पितृमेध—** (आव्य०) पितृमेध: क्वचिद् गृह्यसूत्रेषु क्वचिच्च श्रौतसूत्रेषु उपदिष्ट: (निवेशित:) उपलभ्यते। तेन गृह्यसंस्कारान्तरवत् पुरुषनिष्टसंस्कारत्वादस्य गृह्यत्वम्, श्रौताग्निसाध्यत्वाच्च श्रौतत्वमित्युभयविधत्वमस्येति।

**पित्र्यकर्मन्—** (सा०) १. पितॄनुदिश्य यानि कर्माणि क्रियन्ते तानि कर्माणि पित्र्याणि कर्माणीत्युच्यन्ते। तेषु पैतृकेषु कर्मसु विपर्यासेन प्राचीनावीतिना अप्रदक्षिणं सर्वं सकृदेव दक्षिणसंस्थं दक्षिणामुखत्वेन कर्तव्यं भवति। इति विशेषोऽवधेय:। २. पित्र्याणि कर्माणि अपरपक्षे अपराह्णे। ३. श्राद्धादीनि (पित्र्याणि) अपरपक्षे अपराह्णे च। द्र० मी०को० पृ० २५७१)।

**पित्र्येष्टि—** द्र० महापितृयज्ञ— (साकमेधपर्वान्तर्गत: सौत्रामण्यन्तर्गतश्च)।

**पिष्टलेपफलीकरणहोम—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयपुरोडाशे अन्यत्र च दृषदुपलकपालादिषु आश्लिष्टो य: पिष्टलेप: तमुद्धृत्य जुह्वा चतुर्गृहीते आज्ये प्रक्षिप्य दक्षिणाग्नौ जुहोति। पिष्टफलीकर-

णशब्देन तण्डुलकणा उच्यन्ते । तानपि तथा जुहोति । इति पिष्टलेपफलीकरणहामावुच्येते । द्र० मी०को० पृ० २५७२ ।

**पिष्टोद्वपनी—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च गार्हपत्याधिश्रितायां यस्यां पात्र्यां पिष्टानि समुप्यन्ते सा पिष्टोपवनीत्युच्यते ।

**पुच्छाप्यय—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितौ (स्थण्डिले) यत्र पुच्छं आत्मानमप्ये स प्रदेशः पुच्छाप्यय इत्युच्यते ।

**पुंण्डरीकदक्षिणा— द्र०** पौण्डरीकदक्षिणा— ।

**पुण्याहवाचन— द्र०** स्वस्तिवाचन— ।

**पुत्र—** (सा०) पुदिति नरकस्याख्या दुःखं च नरकं विदुः । पुत्तस्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च ॥ इति ।

**पुनरभिषेक—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावेकाहप्रकरणे राजसूये राजसूयक्रतुसमाप्त्यनन्तरं क्षत्रियः (राजा) पुनरभिषेकमर्हति । राज्ञः पूर्वमभिषेक- काले एकोऽभिषेकः । इदानीं राजसूयक्रतुसमाप्तिकाले पुनरपरोऽभिषेकः इत्ययमपरोऽभिषेकः पुनरभिषेक इत्युच्यते । राजसूये क्षत्रियो राजा दीक्षितः सन् यदाऽवभृथाख्यं कर्म समाप्यानूबन्ध्ययेष्ट्वा पश्चाद् सानीयाख्ययेष्ट्या कर्मावसानं करोति तदानीमेनं क्षत्रियं राजानमुदवसानीयेष्टौ समाप्तायां पुनरपि कर्माङ्गत्वेन ऋत्विजोऽभिषिञ्चन्तीति क्षत्रियस्य राज्ञः पुनरभिषेकोऽवधेयः ।

**पुनरभिषेकसंभार—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत...राजसूये राज्ञः पुनरभिषेकस्य पुरस्तादेते संभारा उपक्लृप्ता भवन्ति । १. औदुम्बरी आसन्दी, तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षाण्यनूच्यानि २. मौञ्जं विनयनम् । रज्जून मोतप्रोतरूपेण संयोजनम् । ३. व्याघ्रचर्म आस्तरणम् । ४. औदुम्बरश्चमसः । ५. उदुम्बरशाखा । ६. अष्टातयानि नियुतानि (दधि, मधु, सर्पिरातपवर्ष्या आपः शष्पाणि (श्यामतृणानि) च तोक्मानि (अङ्कुराणि) सुरा दूर्वा इत्यष्टौ द्रव्याणि अष्टावयवत्वादष्टातयानीत्युच्यन्ते । तान्यौदुम्बरचमसे प्रक्षिप्तानि भवन्तीत्यवधेयम् । तु०—ऐ० ब्रा०८ ।५) इति पुनरभिषेकसंभारा उच्यन्ते ।

**पुनरभ्युन्नीतसोम—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. त्रिषु सवनेषु सवनीयपशुपुरोडाशानन्तरं पुनरभ्युन्नीताः सोमाः शुक्रामन्थिप्रचारे एव सवनमुखीयाः । तेषां होतृवषट्कारे अनुवषट्कारे च चतुर्भिः मध्यतःकारिणां चमसैः हुत्वा, होत्रकाणां चमसैः सकृत् सकृत् वषट्कारे एव हुत्वा पुनः सशेषेष्वेव पात्रेषु (चमसेषु) सोमः अभ्युन्नीतः (स पुनरभ्युन्नीत उच्यते) । एवं हि तत्र अध्वर्युः संप्रेष्यति—'मध्यतः कारिणां चमसाध्वर्यवो वषट्कृतेऽनुवषट्कृते जुहुत । होत्रकाणां चमसाध्वर्यवः सकृत् हुत्वा अभ्युन्नीयोपावर्तध्वम्' इति विशेषोऽवधेयः । द्र० मी०को० पृ० २५७४ । २. इन्द्रोद्देशेन हुतशेषवत्सु चमसेषु देवतान्तरार्थं द्रोणकलादानीय निक्षिप्तः सोमरसः पुनरभ्युन्नीतः इत्युच्यते । तस्य देवतान्तरोद्देशेन होमेऽपि सति तच्छेषत्वाद् ऊहेन सर्व एवेन्द्रमित्रावरुणादय उपलक्षणीयाः इति विशेषः । मी० को० २५७४ - ७५ । ३. उन्नीतेषु चमसेषु इन्द्राय हुतेषु मित्रावरुणा-

दिप्रदानार्थं तच्छेषोपरि पुनरुन्नीताः सोमाः पुनरभ्युन्नीता उच्यन्ते । ४. सर्वैः चमसैः सह अध्वर्युः आदौ होतृयाज्यया हुत्वा ततस्तेषां मध्ये होत्रादीनां मध्यतः कारिणां चमसान् अन्यत्र विनियुज्य अवशिष्टचमसेषु सशेषेष्वेव पुनः सोममभ्युन्नीय तैः क्रमेण मैत्रावरुणादिकतिपयहोत्रकयाज्याभिर्जुहोति । ते पुनरभ्युन्नीताः सोमा उच्यन्ते । द्र० मी०को० पृ० २५७४ ।

**पुनरभ्युन्नीतसोमप्रयोग**— (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु पुनरभ्युन्नीतसोमानां प्रयोगः होमकाले भक्षणकाले चेति द्विधा क्रियते १. होमे तावत् सन्ति ज्योतिष्टोमे दश चमसाः । तत्र मध्यतः कारिणां होतृब्रह्मोद्गातृयजमानां वैकल्पिकसदस्ययुक्तानां चमसाः चत्वारः, मैत्रावरुणब्राह्मणाच्छंसि पोतृनेष्टृच्छावाकाग्नीध्राणां होत्रकाणां च षट् । एते प्रातः सवने शुक्रामन्थिग्रहप्रचारे अच्छावाकसदस्य चमसवर्जं नव चमसाः प्रथममिन्द्राय हूयन्ते । तच्छेषेषु सत्स्वेव अभक्षितेषु पुनरपि द्रोणकलशात् सोमं उन्नीय मित्रावरुणादिदेवताभ्यः हूयते । मी०को० पृ० २५७५ । (ख) सन्ति दश चमसाः । तेषां ये मध्यतः कारिणां (ब्रह्महोतृउद्गातृयजमानानां) चत्वारः, तैः होतुः वषट्कारानुवषट्कारयोः द्विर्द्धिः हुतम् । होत्रकचमसैस्तु (मैत्रावरुणब्राह्मणच्छंसिपोतृनेष्टुअच्छावाक-आग्नीध्राः होत्रकाः) सकृत् वषट्कारे एव हुतम् । (प्रथमद्वितीयौ होमौ) । सर्वेषु च इन्द्रो देवता । ततः चमसेषु सशेषेष्वेव सोमः अभ्युन्नीय हूयते । तत्र द्वितीये होमे होत्रका नाना देवता यजन्ति । अनुवषट्कारे मैत्रावरुणः 'मित्रं वयं हुवामहे' इति मित्रावरुणौ, ब्राह्मणाच्छंसी 'इन्द्र त्वा वृषभम्' इति इन्द्रम्, पोता 'मरुतो यस्य हि' इति मरुतः, नेष्टा 'अग्ने पत्नीरिहावह' इति त्वष्टारं पत्नीश्च, आग्नीध्रः उक्षान्नाय वशान्ताय' इति अग्निं यजति । मी०को० २५७४ ।७६ । २. भक्षणे पुनरभ्युन्नीतेषु चमसेषु भक्ष्यमाणेषु इन्द्रस्य मित्रावरुणादीनां चेति सर्वेषां उपलक्षणं कीर्तनं ऊहः कर्तव्यः द्वि शेषत्वात् । मी०को० २५७५ । तथा सति भक्षणमन्त्रे मित्रावरुणादिभिः सह इन्द्रोऽप्युपलक्षणीयः इन्द्रमित्रावरुणपीतस्य इति न तु इन्द्रपीतस्या हमकृत्वोचार्यम् द्र० मी०को० पृ०३००१ ।

**पुनराधान**— (अव्य०, प्राय०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासयोः विकृतिभूतस्याग्न्याधानस्य विकृतिभूते अग्न्यनुगमनप्रायश्चित्तरूपे पुनराधानप्रकरणे १. यस्य प्रायश्चित्तीय यजमानस्य आधानकालादारभ्य संवत्सरसमाप्तेरर्वाक् कस्यचित्प दार्थस्य हानिर्भवति, महारोगो वा जायते, अन्यानि वा अग्न्यनु गत्यादीनि निमित्तानि भवन्ति स पुनराधानं करोति । द्र० श्रौ०प०नि० पृ० ६८ । २. अस्तमये उदयये वा आहवनीयगार्हपत्ययोर्द्वयोर्नाशे एव पुनराधानं न एकैकस्य नाशे । ३. अग्निहोत्रे उभयाग्निनाशे पुनराधानम् (तु० मी०को० पृ० २५७७) । ४. यः प्रागाधानात् लब्धप्रतिष्ठोऽपि अग्न्याधानसमनन्तरं संवत्सराद् अर्वागेव वित्तादिहानेरप्रतिष्ठ इव स्यात् तस्य पुनराधेयसंज्ञकं कर्म भवति (तु०—का० श्रौ० ४ ।११ ।१ विद्याधरः) ।

**पुनराधानकाल**— (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्श...प्रायश्चित्तरूपे पुनराधानप्रकरणे १. आषाढ्याः पौर्णमास्याः पुरस्तात् अमावास्या-प्रतिपद्-द्वितीयासु अन्यतमतिथौ आहवनीयाधानकाले अर्धोदिते सूर्ये उदिते वा पुनर्वसुनक्षत्रयोगे तादृशयोगालाभे उद-

गयने आपूर्यमाणपक्षे पुनर्वसुयुक्ते कस्मिंश्चिद् दिने पुनराधानं करोति। इति पुनराधानकाल उच्यते। द्र० श्रौ०प०नि० पृ० ६८ २. यस्योभावग्नी अनगतावभिम्लोचेत सूर्यो वाऽभ्युदियात् पुनराधेयेत तस्य प्रायश्चित्तिः। यस्य आहवनीय गार्हपत्यौ उभावग्नी यदा नष्टौ भवतः तदा यदि सूर्यास्तः सूर्योदयो वा भवेत्। तर्हि पुनराधानं कर्तव्यमिति पुनर्वस्वोः पुनराधेयं भवति। वर्षासु ऋतौ वा पुनराधेयं कुर्यात्। अथवा मध्याह्नकाले कुर्यात् (तु०—का०श्रौ० ४।११।५-६ विद्याधरः)।

**पुनराधानसंभार—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूते अग्न्यधानविकृतौ पुनराधानप्रकरणे प्रायश्चित्तविधौ आधानोक्ताः सर्वे संभारा, तथा रथः, वासः, अनड्वान्, तिस्रो दर्भमय्यः रज्जवः इत्येते च विशेषाः पुनराधानसंभारा इत्युच्यन्ते। द्र० श्रौ०प०नि० पृ० ६८।

**पुनराधानहोम—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूतस्याग्न्याधानस्य विकृतौ पुनराधानप्रकरणे प्रायश्चित्तविधौ आज्यभागानन्तरं प्रधानयागात् पश्चात् अध्वर्युः स्रुवेणाज्याऽऽहुतिं 'पुनरुर्जा निवर्तस्व इत्यृचा जुहोति। इति पुनराधानहोमः। तत्र पुनराधानहोमे समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु' इति प्रथमः प्रयाजः। तनूनपादग्निमग्न आज्यस्य वेतु' इति द्वितीयः। (प्रधानयागानन्तरं स्रुवाज्याहुतिं 'सह रय्या निवर्तस्व इत्यृचा जुहोति) 'इडोऽग्नि मग्न आज्यस्य व्यन्तु' इति तृतीयः। बर्हिरग्निरग्न आज्यस्य वेतु' इति चतुर्थः। इति चतुर्षु प्रयाजेषु विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० ६९।

**पुनराधानारम्भकर्मन्—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूतस्याग्न्याधानस्य विकृतौ पुनराधानप्रकरणे प्रतिष्ठाकामः प्रतिश्चित्तविधौ पुनर्वसुयुक्तदिनात् पूर्वेद्युः 'याः पुरस्तात्' इत्यादि जपित्वा ऋद्धिकामोः अग्नीन् पुनराधास्ये इति त्रिरुपांशु त्रिरुच्चैरुक्त्वा ऋत्विग्वरणं अर्हणं च कृत्वा 'अयं ते योनिः' इति मन्त्रेण अरण्योरग्नीन् उत्पत्त्यनुक्रमेण समारोप्य स्थानान्तरं प्राप्य विहारं कल्पयित्वा अग्निं मथित्वा विहृत्य परिसमुह्य पर्युक्ष्य परिस्तीर्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये समिधमाधाय 'मनो ज्योतिः' इति मन्त्रेण जुहोति। तदिदं कर्म पुनराधानारम्भकर्मेत्युच्यते। द्र० श्रौ०प०नि० पृ० ६८।

**पुनराधानेष्टि—** द्र० पुनराधेयेष्टि—।

**पुनराधेय—** द्र० पुनराधान—।

**पुनराधेयेष्टि—** (हौ०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूतस्याग्न्याधान (धेय) स्य विकृतौ पुनराधानप्रकरणे पुनराधेयेष्टौ प्रधानमुपांशु। अग्नेः 'अधाह्यग्ने क्रतोर्मदस्य' (ऋ०) इत्यनुवाक्या। 'आमिष्टे अद्यगीर्भिर्गृणन्त' इति याज्या। स्विष्टकृतः— 'एभिर्नो अर्कैः' इति पुरोनुवाक्या। 'अग्ने तमद्याश्वं न स्तोमैः' इति याज्याः। 'देवं बर्हिरग्ने वसुवने वसुधेयस्य वेतु' इति द्वितीयः (प्रयाजः) आग्नेयावाज्यभागौ द्वौ बुद्धिमदिन्दुमन्तावित्याचक्षते। तथानुवृत्तिरिज्या च' इत्याश्वलायनसूत्रात्। 'अग्निं बुद्धिमन्तमावह' इत्यादिरीत्या आवाहननिगदादौ बुद्धिमदिन्दुमच्छब्दयोरनुवृत्तिर्भवति। अन्वाहार्यमासाद्य रथं वासः अनड्वाहं दाक्षिणां ददाति। रथप्रतिग्रहे 'देवस्य त्वा' इत्यादि गृह्णामि' इत्यन्ते

'वैश्वानर: प्रत्नथा नाका मारुहत्' इत्यृचं पठित्वा 'राजा त्वा वरुणो नयतु देवि दक्षिणे वैश्वानराय रथं तेनामृतत्वम्' इति विशेष:। 'वास: प्रतिग्रहे 'सोमाय वास:। अनडुत्प्रतिग्रहे रुद्राय गाम्' इति च विशेष:। 'देवं बर्हिरग्ने वसुवने वसुधेयस्य वेतु' इति प्रथमोऽनुयाज:। 'देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेतु' इति द्वितीय: पौर्णमासतन्त्रम्। ब्राह्मणतर्पणान्ता। सेयं पुनराधेयेष्टिरित्युच्यते। द्र० बुद्धिमदिन्दुमदाज्यभाग—श्रौ०प०नि० पृ० ७०।

**पुनरावृत्ति—** (सा०, प्राय०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृति- भूतेषु प्रायश्चित्तविधौ वर्तमान एव प्रयोगे नष्टस्य हविष: पुनरुत्पादनं पुनरावृत्तिरित्युच्यते। तत्र पुनरुत्पादितेन हविषा स एव प्रयोग: समापितव्य: इति विशेषोऽवधेय:। (तु०— आ० श्रौ० ३।१४।३, नारायण:)।

**पुनराहारम्—**(सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे 'आज्यं पुनराहारमुत्पुनाति' इत्यत्र पवित्राभ्यामाज्यं प्राङ्नीत्वा पुन: पश्चादानयनं पुनराहारमित्युच्यते। द्र० श्रौ०प०नि० पृ० १९।

**पुनरुक्तता—** द्र० पथ्य—।

**पुनर्याग—**(सा०, प्राय०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रायश्चित्तविधौ वर्तमानं प्रयोगं समाप्य पुनरप्यादित: एवारभ्याऽऽन्तात् क्रिया पुनर्याग इत्युच्यते (तु०—आ०श्रौ० ३।१४।३ नारायण:) द्र० पुनरावृत्ति—।

**पुनर्यागपुनरावृत्तिविवेक—** (सा०) पुनर्यागे प्रवर्तमानं प्रयोगं समाप्य पुनर्रप आदित एवारभ्याऽऽन्तात् सर्वा क्रिया क्रियते। पुनरावृत्तौ तु पुनरुत्पादितेन हविषा स एव प्रयोग: समापितव्य: इति भेदविशेष एवानयोरवगन्तव्य:।

**पुनस्तोम—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातरात्रविकृतौ एकाहप्रकरणे द्वन्द्वसोमेषु पुनस्तोमो नामैकाह:। स च उक्थ्यसंस्थ: द्वन्द्वसोमेषु क्रतुसंख्यया चतुर्थो द्वन्द्वो नाम सहभाव:। औपशदाख्येनैकाहेन सहाव्यवधानेन द्वितीयेऽहन्यनुष्ठानाद् औपशद पुनस्तोमयोर्द्वन्द्वसोमेषु द्वन्द्वसंख्यया द्वितीय: अयं द्वन्द्वसोम: पुनस्तोम इत्युच्यते। 'यो बहु प्रतिगृह्य गरगीरिव मन्येत स एतेन यजेत।' अर्थात् यो यदेव बहु प्रति गृह्णाति यद्वरं निषद्धं अशुद्धान्नं पापमिव गिरति इति गरगीरिव आत्मानं मन्यते स पुन: स्तोमेन शुद्ध्यतीति विशेषोऽवधेय: (तु०—ता० ब्रा० सा० १९।४।२।८)।

**पुन:स्तोमस्तोमक्लृप्ति—** (औ०) १. प्रात:सवनं सर्वं त्रिवृत्, माध्यन्दिनं सवनं द्वादशं तृतीयसवनं त्रिवृत्। तदुक्तम्— 'द्वादशं माध्यन्दिनं सवनम्। त्रिवृती अभित: (द्र० आ०क० ५।४।४ वरदराज:) २. पुन: स्तोमस्य सवनं मध्यमं द्वादशं स्मृतम्। कार्यौ नवदशस्तोमावभित: सवने उभे (प्रात:सवनं नवस्तोमकम्, (त्रिवृ० स्तो०) तृतीयसवनं दशस्तोमकम्, मध्यमं तु द्वादशस्तोमकमित्यर्थ:। द्र० मी०को० पृ० २५७८।

**पुरश्चरण—** (सा०) स्वेष्टदेवतामन्त्रसिद्ध्यर्थं तद्देवतापूजापूर्वकं तन्मन्त्रजपहोमतर्पणाभिषेकब्राह्मणभोजनरूपपञ्चाङ्ग साधना पुरस्क्रिया पुरोडग्रतश्चरणं पुरश्चरणमुच्यते। तत्र मन्त्रजपसंख्याया दशांशेन होम:, तद्दशांशेन तर्पणम्, तद्दशांशेनाभिषेक: (मार्ज-

नम्) ततो ब्राह्मणभोजनम् इति विशेषोऽवगन्तव्यः।

**पुरस्तादाहुति—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे अन्यत्र च प्रधानयागे अवदानानन्तरं अत्याक्रमणात्पूर्वं ध्रौवाज्येन स्रुवेण तूष्णीं करिष्यमाण तत्प्रधानहोमदेशे स्विष्टकृद्धोमदेशे च यामेकामाहुतिं जुहोति सा पुरस्तादाहुतिरुच्यते। द्र० उपरिष्टादाहुति—। श्रौ०प०नि० पृ० ३२।

**पुरस्ताद्धोम—** (सा०) १. 'अग्ने यत्ते तपः इति पुरस्ताद्धोमाः' (कौ० सू० ४।७।८) इति सूत्रोक्ता अग्ने यत्ते तपः (अथ० २।१९।२३) इति पञ्चसूक्तैः विहिताः होमाः पुरस्ताद्धोमाः आभिचारिका होमा उच्यन्ते। २. अग्नावग्निः (अथ० ४।३९।९), हृदा पूतम् (अथ० ४।३९।१०), पुरस्ताद् युक्तः (अथ० ५।२९।१) यज्ञस्य चक्षुः (अथ० २।३५।५) इति जुहोति। पश्चादग्नेर्मध्यदेशे समान त्रपुरास्ताद्धोमान् (कौ० सू० ३।१६।१७) इति सूत्राभ्यामुक्ताः चत्वारो होमाः पुरस्ताद्धोमा उच्यन्ते।

**पुरीषपद—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे द्वादशाहे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने होतुनिष्केवल्यशस्त्रे प्रयोक्तव्यानि 'एवाह्येवैवा ह्यग्ना ३ ई, २. एवा ह्येवैवा हीउन्द्रम्, ३ एवा ह्येवैवा हि विष्णा ३ उ, ४ एवा ह्येवैवा हि पूष३त्, ५ एवा ह्येवैवा हि देवाः ३, ६ एवा हि शक्रो वशी हि शक्रो वशा अनु, ७ आपो मन्याप मन्यवे, ८ उपेहि विश्वध, ९ विदा मघवन् विदो३म्' इति नव पदानि पुरीषपदसंज्ञकानि भवन्ति (तु०—ऐ० आ०सा० ४।१।१ आ०श्रौ० ७।१२।१०-१३ नारायणः) द्र० पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुर्निष्केवल्यशस्त्र—।

**पुरीषपद—** (सा०) सोमयज्ञेषु प्रकृतिभूत...द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणविकृतशिल्पशस्त्रे प्रयोक्तव्यानि १. एवाह्ये २. एवा ह्यग्ने, एवा हीन्द्र, ४. एवा हि पूषन्, ५. एवा हि देवाः' इति पञ्च पदानि पुरीषपदान्युच्यन्ते (तु०—सा०सं० ४।१०) तानि मैत्रावरुणो वालखिल्यविहारे वालखिल्यप्रगाथान्तेषु 'स पुरीष्याभ्यो महानाम्नीभ्यः त्रयोविंशतिः (१८+५) पादानाहृत्य शंसति' इति पुरीषपदप्रयोगोऽवधेयः। (तु०—आ०श्रौ० ८।२।२३। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणस्य विकृतशिल्पशस्त्र—।

**पुरुष—** (सा०) १ विंशति शताङ्गुलः पुरुषः। २. पञ्चारत्निर्दशपदः पुरुष इत्युच्यते (तु०—का० श्रौ० १६।८।१।१६ विद्याधरः) ३. पञ्च हस्तायामः पुरुषः। ४. पञ्चारत्निः पुरुष इत्युच्यते। ५. पुरुषो हि द्विविधोऽवाग्बाहुः, ऊर्ध्वबाहुश्चेति (तु०—तै० सं० सा० ४।२।५)।

**पुरुष—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ पुरुषमेधे उपाकृतं दक्षिणतोऽवस्थाय ब्रह्मा 'सहस्रशीर्षा पुरुषः' इति पुरुषेण नारायणेन पराचानुशंसति (आप० श्रौ० २०।२४।१०)। नियुक्तान् ब्रह्माऽभिष्टौति होतृवदनुवाक्येन 'सहस्रशीर्षेति (का० श्रौ० २१।१।११।

**पुरुषमात्रदण्ड—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधनप्रमाणविधौ पुरुषः प्रमाणं यस्य दण्डस्य सोऽयं दण्डः पुरुषमात्रो दण्ड इत्युच्यते (तु०—तै० सं० सा० ४।२।५)।

**पुरुषमेध—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूत: चत्वारिंशदहोरात्र (दिन) साध्य: पुरुषमेधसंज्ञक: क्रतुर्भवति। तत्र त्रयोविंशति: दीक्षा: द्वादशोपसद: पञ्च सुत्यायश्च भवन्ति। सुत्यासु अग्निष्टोमसंस्थं प्रथममह:, द्वितीयमुक्थ्यसंस्थम्, तृतीयमतिरात्रसंस्थम्, चतुर्थमुक्थ्यसंस्थम्, पञ्चममग्निष्टोमसंस्थम् इति पञ्च संस्था- अवगन्तव्या:। (तु०—का०श्रौ० २१।१।१-२ विद्याधर:)।

**पुरुषार्थ—** (सा०) पुरुषाय य: स पुरुषार्थ:। पुरुषाय य उपकारक: स विधि:। यस्मिन् प्रीति: पुरुषस्य यस्मिन् कृते पदार्थे पुरुषस्य प्रीतिरुपजायते स पुरुषार्थ पदार्थ: (मी०को० पृ० २५८१)। अविभक्तो हि पुरुषार्थ: प्रीत्या। यो य: प्रीतिसाधन: स पुरुषार्थो विधि:। २. पुरुषार्थश्च क्रतो: प्रधानम्, अर्थवाद:, प्रयोजक:, फलविधि:, शेषीति समर्थपदैरभिधीयते। ३. प्रधानं कर्म पुरुषार्थमुच्यते, पुरुषस्य प्रीतये यत् (प्रधानं कर्म) विधीयते तत्पुरुषार्थम्। यस्मिन् कृते पुरुषस्य प्रीतिर्भवति तदेव कर्म पुरुषार्थमित्यर्थ:। ४. पुरुषाभिलषितफलसाधनत्वेन विहितत्वं पुरुषार्थत्वम्। ५. अङ्गप्रधानयो: संबन्धकरणं पुरुषार्थ: (तु०—का० श्रौ० १।७।२ विद्याधर:)।

**पुरुषार्थकर्मन्—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु यानि कर्माणि पुरुषेप्सितफलसाधनानि तानि पुरुषार्थानि प्रयोजकानि कर्माणि प्रधानं पुरुषार्थ:, पुरुषार्थाय यानि कर्माणि विधीयन्ते तानि पुरुषार्थकर्माणीत्युच्यन्ते। तानि च पुरुषस्य प्रीतये निधीयन्ते तस्मात् पुरुषार्थानीति। द्र० पुरुषार्थकर्मन्—

**पुरुषार्थत्व—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु १. ब्रीहिपिष्टैर्यवपिष्टैर्वा निर्मित: पक्व: पिण्डविशेष: पुरोडाश इत्युच्यते। (का०श्रौ० १।७।२ टि० विद्याधर:)। स च तत्तत्संख्यक-कपालान्युपधाय संसृष्ट: संस्क्रियते। २. पुरोडाश: तप्तेषु कपालेषु अध:पाकार्थमधिश्रीयते उपरि च अङ्गारा अभ्युह्यन्ते। द्र० मी०को० पृ० २५८४। ३. मदन्तीजलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थ्यन्त देवतानामपूर्वकं 'त्वा' इति पदान्तेन मन्त्रेण अभिमर्शनानन्तरं कूर्मवदाकारं पिण्ट्पिण्डं पुरोडाश इत्युच्यते। ४. सोमाहुतिभ्य: पुरस्तात् कृतवन्त: तस्मात्पुरोडाशेति नाम संपन्नम्। ५. अपूपश्च नाम पुरोडाश:। मी०को० पृ० २५९०।

**पुरोडाश—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु १- व्रीहिपिष्टैर्यवपिष्टैर्वा निर्मित: पक्व: पिण्डविशेष: पुरोडाश इत्युच्यते। तु०—का० श्रौ० १।७।२ टि० विद्याधर: स च तत्तत्संख्यक कपालान्युपधाय संसृष्ट: संस्क्रियते। २- पुरोडाश: तप्तेषु कपालेषु अध: पाकार्थमधिश्रीयते उपरि च अङ्गारा अभ्युह्यन्ते द्र० मी०को० पृ० २५८४। ३- मदन्तीजलेन सिद्धस्य पिष्टपिण्डस्य चतुर्थन्तदेवता नामपूर्वकं 'त्वा' इति पदान्तेन मन्त्रेण अभिमर्शनानन्तर कूर्मवदाकारं पिष्टपिण्डं पुरोडाश इत्युच्ते। ४- सोमाहुतिभ्य: पुरस्तात् कृतवन्त: तस्मात् पुरोडाशेति नाम सम्पन्नम्।' ५- अपूपश्च ना पुरोडाश:। मी०को० पृ० २५९०।

**पुरोडाशकपालदेवता—** (सा०) इष्टिपशुसोमेषु प्रायः अग्निइन्द्राग्निइन्द्रशुनासीरइन्द्र-अग्नीषोमीयवायुअग्नाविष्णुभरात् वैश्वानरभूमिद्यावापृथिवीसूर्यपितृमत्सोमकत्वष्ट्र सवितार इत्येताः पुरोडाशकपालानां देवता भवन्ति। द्र० पुरोडाशकपालसंख्योत्सर्ग-विधि—।

**पुरोडाशकपालसंख्योत्सर्गविधि—** (सा०) इष्टि-पशुसोमेषु देवतया पुरोडाशस्य कपालानां संख्यानियमविधौ सर्व एवाग्नेया अष्टाकपाला अन्यत्र पौनराधेयिकात्। सर्व एवैन्द्राग्ना एकादशकपालां अन्यत्राग्रयणाच्च शुनासीरीयाच्च। सर्व एवैन्द्रा एकादशकपाला अन्यत्र शुनासीरीयात्। सर्व एवाग्नीषोमीया एकादश कपाला अन्यत्र श्यामाकात्। सर्व एव पशुपुरोडाशा एकादश कपाला अन्यत्र वायव्यात्। यद् देवत्यः पशुस्तद्देवत्यः पुरोडाशोऽन्यत्र वायव्याद् भवति। सर्व एवाग्नावैष्णवा एकादशकपाला अन्यत्र अध्वर कल्पायै। तत्रैवाष्टाकपालश्च द्वादशकपालश्च भवतः। सर्व एव सावित्रा द्वादशकपाला अन्यत्राश्वमेधिकेभ्यः। तत्रैवाष्टा कपालश्चैकादशकपालश्च भवतः। सा-वित्रोऽष्टाकपाल इति च। सर्व एव मारुताः सप्तकपाला अन्यत्राश्वमेधिकानां चातुर्मास्यपशूनां पशुपुरोडाशेभ्यो मारुताच्चैकविंशतिकपालादन्यत्र राजसूयिकात् पञ्चशारदीयानां च पशूनां पशुपुरोडाशेभ्यः। किमनुख्यानि नु खलु ते विलेख्यानि कपालानि भवन्तीति विज्ञायते वैश्वानरं द्वादशकपालं मृगाखरे भूमिकपालं निर्वपेदित्येतदनुख्यानि भवन्ति। वौ० श्रौ० २४।१०, श्रौ०को० १ भा० पृ० ७६२ द्र०। तत्र अन्यत्रेत्यपवादविधौ तु कपालसंख्याविधिः—मुत्राग्नेयोऽष्टाकपालः स इह (पुनराधेये) आग्नेयः पञ्चकपालः। (श्रौ०को० १. भा० पृ० ५२)। २.(आग्रयणे तत्प्रायश्चित्ते च) ऐन्द्राग्नं द्वादशकपालं निर्वपति(श्रौ०को० १ भा० पृ० ३१८)। ३. (शुनासीरीये) ऐन्द्राग्नं द्वादशकपालम् (श्रौ०को० १ भा० पृ० ५५४)। ४.(शुनासीरीये) इन्द्राय शुनासीराय पुरोडाशं द्वादशकपालम् (श्रौ०को० १ भा० पृ० ५५४)। ५. यो ब्रह्मवर्चसकामः स्यात् सोऽग्नीषोमीयमष्टाकपालं श्यामकानां निर्वपति(श्रौ०को० १ भा० पृ० ४७७)। ६. अग्निचयने इष्टकानिर्माणाङ्गभूते इष्टकापशौ वायव्यैकपशुपक्षे वायव्यस्य पशोः प्राजापत्यः द्वादश- कपालः पुरोडाशः कर्तव्यः (का०श्रौ० भूमिका पृ० ६१, श्रौ०प०नि० १६।२।३८ विद्याधरः)। एके वायव्ये प्राजापत्यम् (आ०श्रौ० ३।४।१२)। ७. (अध्वरकल्पायामिष्टौ) आग्नावैष्णवं द्वादशकपालम पराह्णे (श्रौ०को० १ भा० पृ० ४१५-१६)। तत्रैवाष्टाकपालश्च द्वादशकपालश्च भवतः(श्रौ०को० १ भा० पृ० ७६२)। ८. (अश्वमेधे)। अष्टाकपालश्चैकादशकपालश्च भवतः। सावित्रोऽष्टाकपाल इति च (श्रौ०को० १ भा० पृ० ७६२)। कात्यायनस्तु द्वादशकपालान् निर्वपति भिन्नतन्त्रान् शतमान दक्षिणान् मध्यमस्य राजतः सवित्रे प्रसवित्रे, सवित्र आसवित्रे सवित्रे सत्यप्रसवायेति (का० श्रौ० २०।२।६) इति सावित्रान् निर्वपति। (वरुणप्रघासेषु) सावित्रोऽष्टाकपालः (श्रौ० को० १ भा० पृ० ४९८-९९। ५११। ५३३-३४)। ९. (राजसूये) अष्टाकपालो द्वादशकपालो वा सावित्रः पुरोडाशः (का० श्रौ० १५।३।९।८।४ विद्याधरः)। १०. (राजसूये त्रैधातव्याम्) ऐन्द्रा वैष्णवो द्वादशकपालो व्रीहियवानाम् (का० श्रौ०

१५।७।३०)। इत्यादि प्रकारेणावगन्तव्यः।

**पुरोडाशधर्म—** (सा०, आध्व०) इष्टिपशुसोमेषु प्रकृतिविकृति- भूतेषु 'पेषणं यवनं वापस्तापश्चोपहितिः प्रथा। मार्जनाध्यूहनज्वालास्तथा व्युद्धृत्य सादनम्॥ अत्र पेषणं चूर्णनम्। यवनं संयवनं पिष्टस्य उदकेन मिश्रणम्। वापः संवापः उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः। तापः संतापनं कपालानामङ्गारैः प्रतापनम्। उपहितिः उपधानं अङ्गारेषु कपालस्थापनम्। प्रथा प्रथनं कपालेषु अवस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणम्। मार्जनं श्लक्ष्णीकरणम्। अध्यूहनं भस्मना अङ्गारैश्च उपर्याच्छादनम्। ज्वालाः दर्भपिञ्जूलैः प्रज्वालनम्। व्युद्धृत्य सादनं कपालेभ्यः पुरोडाशस्य पृथक् कृत्य अन्तर्वेदि अवस्थापनम्' इत्यर्थोऽवगन्तव्यः। द्र० मी०को० पृ० २५९०-९१)।

**पुरोडाशप्रकाशन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु मन्त्रेण पुरोडाशस्य प्रकटीकरणं पुरोडाशप्रकाशनमित्युच्यते। द्र० श्रौ०प०नि० पृ० २१।

**पुरोडाशभेद—** (सा०) (१) इष्टिपशु सोमेषु १. अष्टाकपालः २. एककपालः ३. एकादशकपालः ४. एकविंशतिकपालः ५. त्रिकपालः ६. दशकपालः ७. द्वादशकपालः ८. पञ्चकपालः ९. षट्कपालः १०. सप्तकपालः इति कपालसंख्योपलक्षितानां पुरोडाशानां दशभेदा भवन्ति। (तु०—बौ०श्रौ० २४।१० श्रौ०को० १ भा० पृ० ७६२)। (२) पुरोडाशः द्विविधः प्रधानं गुणश्च। तत्राग्नेयादिः प्रधानम्। पशुपुरोडाशश्च पशुदेवतासंस्काररूपो द्वितीयः मी०को० पृ० २५८५

**पुरोडाशशेषभक्षण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे यजमानपञ्चभिर्ऋत्विग्भिरेव पुरोडाशशेषभक्षणं कर्तव्यम्, भक्षणमन्त्रबलात् 'यजमानपञ्चमा इडां भक्षयन्ति इति लिङ्गाच्च। द्र० मी०को० पृ० २५९२।

**पुरोडाशश्रपण —** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु पुरोडाशस्य भस्मनाभिवासनानन्तरं अध्वर्युर्मन्त्रेण साङ्गारं भस्म वेदेन पुरोडाशस्योपरि प्रक्षिप्य परिकर्मिणः संप्रेष्यति। ते च पुरोडाशः यथा सुश्रृतः स्यात् तथा श्रपयन्ति इति श्रपणं पुरोडाशश्रपणमुच्यते। द्र० आभिवासन—, श्रौ०प०नि० पृ० १८।

**पुरोडाशालङ्करण—** (आध्व०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु अलङ्करणं नाम 'देवस्त्वा सविता मध्वाऽऽनक्तु' इति मन्त्रेण पुरोडाशाभिधारणं स्रुवेण। मी०को० पृ० २५८८।

**पुरोडाशालङ्कारप्रैष—** (आध्व०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु 'अग्नीदग्नीन् विहर, बर्हिः स्तृणीहि, पुरोडाशानलङ्कुरु' इति प्रैषः पुरोडाशालङ्करणप्रैष इत्युच्यते। द्र० मी०को० पृ० २५८८।

**पुरोडाशे पशुत्व—** (सा०) 'तस्य (पुरोडाशस्य व्रीहिबीजस्य) यानि किंशारूणि...' इत्यत्रोक्तं पुरोडाशे पशुत्वं द्रष्टव्यम्। द्र० ऐ० ब्रा० २।९।

**पुरोडाशोद्वासन—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु पुरोडाशप्रकाशनानन्तरं वेदेन विरजसं कृत्वाऽभिधार्य मन्त्रेण पात्र्याः सकाशात्

पुरोडाशमुद्वृह्णाति। तदिदं उद्ग्रहणं पुरोडाशोद्वासनमित्युच्यते। द्र० श्रौ०प०नि० पृ० २१ पुरोडाशप्रकाशन—।

**पुरोडाशोपस्तरण—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु स्रुगासादनानन्तरं स्रुचामुत्तरतः सस्रुचमाज्यस्थालीं निधाय सर्वाण्याज्यानि अभिमन्त्र्य दक्षिणेन (हस्तेन) सस्रुवामाज्यस्थालीं सव्येन दारुपात्रीं वेदं चादाय प्रदक्षिणमावृत्त्योपस्तृणाति। इति पुरोडाशोपस्तरणमुच्यते। द्र० स्रुगासादन—, श्रौ०प०नि० पृ० २१।

**पुरोनुवाक्या —** (हौ०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु १. पुरः यागात् पूर्वंदेवतामनुकूलयितुं (आह्वातुं) या ऋक् अनूच्यते सा पुरोऽनुवाक्या अनुवाक्या इति चोच्यते। द्र० का०श्रौ० १।८।९ टि० विद्याधरः। सा च देवतास्मरणरूपदृष्टप्रयोजना एकैव भवति। एकस्मिन् प्रकरणे यत्र वह्व्यः अनुवाक्याः पठिताः तत्रापि एकैव पठनीया न समुच्चिताः सर्वाः, एकयैव देवतास्मरणरूपप्रयोजनस्य सिद्धत्वात् तदुक्तम्—'न याज्यानुवाक्यासु विरोधात्' (का० श्रौ० १।८।९) अर्थात् याज्यानुवाक्यासु समुच्चयो न गृह्यते। 'एकाऽनुवाक्या भवत्येका याज्या' श० ब्रा० ५।१।३।४) इति दर्शनात् (लिङ्गात्) च एक एव याज्यापुरोनुवाक्या मन्त्रो भवति न समुच्चयेन द्वौ वा बहवो वा। द्र० का० श्रौ० १।८।१० विद्याधरः। २. अध्वर्युप्रेषितो होता एकश्रुत्या पुरोनुवाक्यां पठति। सा च एकैव ऋग्भवति। तस्याः प्रथमार्धर्चे एकमवसानं चतुर्मात्रप्रणवान्तम्, द्वितीयार्धर्चे द्वितीयमवसानंकर्तव्यम्। यस्मिन् यागे मैत्रावरुणो भवति तत्र स एव पुरोनुवाक्यां पठति। ३. पुरः पूर्वं देवतामनुकूलयितुं या ऋगुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदं अनुवाक्यापदं च ऋग्विशेषं बोधयतीति विशेषोऽवधेयः। ४. पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति। अर्थात् मन्त्रप्रतिपाद्याया देवताया नामादि लक्ष्म उच्यते, तद् यस्यामृचि पूर्वार्धे विद्यते सा पुरोनुवाक्या। (तु०—ऐ० ब्रा० १।४।५ पृ० ४५ सामश्रमी)। ५. याज्यानुवाक्यासमाम्नाये (संहिताब्राह्मणसूत्रेषु) याज्यानुवाक्यायुगलेषु (युग्मेषु) पूर्वं पठिता ऋक् पुरोनुवाक्या अनुवाक्या वाऽवगन्तव्या। उत्तरं पठिता याज्या ६. अनुब्रूहि इति चोदिते पुरोनुवाक्या ग्राह्या। सा चापूर्वा ज्ञेया। ७. समुच्चयः अनुवाक्यासु याज्यासु च गायत्री पुरस्ताल्लक्ष्मादिधर्माणां विकृतिषु यथायथम्। द्र० मी०को० पृ० ४१।७३, अनुवाक्या-।

**पुरोनुवाक्यानुवचन—** (हौ०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु अध्वर्युणा प्रेषितो होता एकश्रुत्या पुरोनुवाक्यामनुब्रूयात्। द्र० पुरोनुवाक्या— ।

**पुरोनुवाक्याप्रदेश —** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु आज्यभागौ, चरुपुरोडाशवपाहृदयादिपश्वङ्गादिप्रधानहवींषि, स्विष्टकृद्यागश्च पुरोनुवाक्यानां विषयः। प्रयाजानुयाजानां पुरोनुवाक्या न सन्ति। प्रैषानेवयाज्याविधिना याज्याः विधाय आह्वानं विनैव ताभिरिज्यते। इति।

**पुरोनुवाक्यायाज्यालक्षण—** (सा०, हौ०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु 'गायत्री पुरोनुवाक्या भवति' इत्येवमादिलक्षणानि अनुपदिष्टयाज्यापुरोनुवाक्यासु विकृतिषु ज्ञेयानि। लक्षणानि तु 'गायत्रीपुरोनुवाक्या भवति, त्रिष्टुब् याज्या'। 'त्रिपदा पुरोनु-

वाक्या भवति 'चतुष्पदा याज्या'। 'पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति' उपरिष्टांल्लक्ष्मा याज्या'। मूर्धन्वती पुरोनुवाक्या भवति, नियुत्वती याज्या' इत्येवं जातीयकानि बहूनि (लक्षण) वाक्यानि श्रूयन्ते। द्र० मी०को० पृ० १५५६।

**पुरोरुच्**—(सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने होतुः प्रउगशस्त्रतृचेभ्यः पुरस्तात् क्रमेण पठनीयाः १. 'वायुरग्रेगाः,' २. हिरण्यवर्तनी, ३. काव्या राजाना, ४. दैव्या अध्वर्यू, ५. इन्द्र उक्थेभिः, ६. विश्वान् देवान्, ७. वाचा महीं देवीम्' (ऋ० खि० ५।६।१-७) इति खिलोक्ताः। सप्त पुरोरुचो भवन्ति। सप्तानां प्रउगतृचानां प्ररोचनहेतुत्वात् पुरोरुक्। आहूतं यज्ञं देवाः प्रारोचयन् (यज्ञस्य रुचिमुत्पादितवन्तः) इति पुरोरुगुच्यते।

**पुरोरुच्**—(सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सर्वमेधे क्रतौ च ऋग्रूपा ग्रहग्रहणमन्त्राः पुरोरुक् शब्देनोच्यन्ते न यजूरूपाः 'ऋग्धि पुरोरुक्' इति श्रुतेः। उक्थ्यमहावैश्वदेवपालीवतहारियोजनेषु ग्रहेषु यजूरूपे ग्रहणमन्त्रे सत्यपि 'तं वा अपुरोरुक्कं गृह्णाति' इति श्रुतेस्तत्र न दोषः। पुरोरुङ् मन्त्रास्तु मासं. सप्तमाष्टमाध्यायान्तर्गताः प्राकृताः, त्रयस्त्रिंशदध्यायगता वैकृताश्च द्रष्टव्याः। द्र० उ० म० भाष्यम्।

**पुरोहित**—(सा०) पुरः एनं दधति। विद्वान् ब्राह्मणो राष्ट्रगोपः पुरोहितो भवतीति।

**पूतभृत्**— (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः उत्तरस्य हविर्धानशकटस्य प्रउगे (स्थाने) द्वितीयमब्भ्रणं स्थापयति। स पूतभृत्संज्ञकः कलशः पूतभृदित्युच्यते। द्र० आधवनीय-, श्रौ०प०नि० पृ० २५५।

**पूतभृत्पूरणप्रैष**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः उन्नेतारमाह—'अरिक्तं पूतभृतं कुरु, पवमानस्य ग्रहान् ग्रहीष्यामि' इति। सोऽयं पूतभृत्पूरणप्रैष इत्युच्यते। द्र० श्रौ०प०नि० पृ० २७६।

**पूतीक**— (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यागार्थं सोमालाभे प्रतिनिधित्वेन विहितः, दिविष्ठस्य सोमस्य गायत्र्या भूलोकं प्रति समाह्रियमाणस्य यः खण्डो भूमौ पतितः स पूतीको नाम लताविशेषः (तु०—का० श्रौ० १।४।७ विद्याधरः)। 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इति प्रतीकाः सोमस्य प्रतिनिधिः। इति पूतीकानां सोमस्य प्रतिनिधित्वमवगन्तव्यम्। द्र० मी०को० पृ० २५९३।

**पूर्णपात्र**— (सा०) १. धान्यादिपूर्णं पात्रं पूर्णपात्रमुच्यते। तच्च स्मार्त्तेषु दक्षिणात्वेन दीयते। २. षट्पञ्चाशदुत्तरमुष्टिद्वयावच्छिन्नतण्डुलपूर्णं पात्रं पूर्णपात्रमित्युच्यते। तच्च ब्रह्मणे दीयते। ३. द्वात्रिंशत्पलमानेन निर्मितं ताम्रपात्रकम्। तण्डुलैस्तत् समापूर्य सहिरण्यं सदक्षिणम्। ब्रह्मणे दक्षिणा देया या यत्र प्रकीर्तिता। कर्मान्तेऽनुच्यमानायां पूर्णपात्रादिकं भवेत्। द्र० कर्मकाण्डरत्नाकरे देवानन्दः पृ० १३०।

**पूर्णप्रणव (मकारान्त)** —(सा० हौ०) द्र० प्रणवभेद—।

**पूर्णमास—** (सा०, अव्य०) इष्टियज्ञेषु हविर्यागानां तृतीये दर्श- पूर्णमासप्रकरणे १. पौर्णमास्यामन्वाधाय कृष्णप्रतिपदि क्रियमाणो यागः 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः' (आ० श्रौ० २।१।१) इति अतिदेशात् पूर्णमासे भव इति व्युत्पत्त्या पौर्णमासशब्दप्रतिपाद्यः दर्शशब्दवद् लक्षणया पूर्णमासशब्दप्रतिपाद्यश्च भवति। द्र० श्रौ०प०नि० पृ० २९। २. पौर्णमास्यामहनि यमनियमपरिग्रहः कृष्णप्रतिपदि अहनि याग इति द्व्यहकाला पौर्णमासेष्टिरुच्यते। तदुक्तम् 'पूर्णिमायामुपैति प्रतिपदि अपैति इति; पक्षान्ता वस्तव्याः पक्षादयो यष्टव्याः' (गो० गृ० १।५।५) इति च। ३. पूर्णमासशब्दः सूर्या चन्द्रमसोर्विप्रकर्षवचनः 'द्र० मी०को० पृ० २५९४। ४. दर्शपूर्णमासशब्दौ कालवाचिनौ सन्तौ कालसंयोगेन विहितानामेव अग्नियादीनां षण्णां यागानां नामधेयेतां प्रतिपद्येते। द्र० मी०को० पृ० २०७८।

**पूर्णमासप्रधानयाग—** (सा०, अव्य०) इष्टियज्ञेषु हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासे १. आग्नेयोऽष्टाकपालः पुरोडाशयागः २. अग्नीषोमीय उपांशुयाग आज्यद्रव्यकः। ३. अग्नीषोमीयः एकादशकपालः पुरोडाशयागः। इति त्रयो यागाः पूर्णमासप्रधानयागा उच्यन्ते। द्र० पूर्णमास—।

**पूर्णहोम—** (आध्व०, अव्य०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे अध्वर्युर्जुह्वां चतुर्गृहीतं गृहीत्वा सव्येनाङ्गेन होतुरग्रेण गार्हपत्यस्य पश्चिममार्गेण गत्वा दक्षिणाग्नौ मन्त्रेण जुहोति। सोऽयं पूर्ण होम उच्यते। अत्र इडामार्जनान्तरं शंयुवाकस्य विकल्पो भवतीति। विशेषोऽवधेयः।

**पूर्णाहुति—** (सा०, आध्व०) इष्टियज्ञेषु प्रायश्चित्तप्रकरणे द्वादशगृहीतेन स्रुचं पूरयित्वा यद्धूयते सा पूर्णाहुतिरित्युच्यते। (तु०— आ० श्रौ० ३।१३।१४) नारायणः)।

**पूर्णाहुति—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां प्रथमे अग्न्याधानप्रकरणे आहितसर्वोपस्थानानन्तरं गार्हपत्ये गृह्यो-(बोधायन गृह्योक्तप्रकारेणाज्यं संस्कृत्य स्रुचि चतुर्गृहीत्वा आहवनीये समिधमाधाय आहवनीयमद्भिः परिषिच्य 'सप्त ते अग्नेः' इत्यृचा जुहोतीति सा आहुतिः पूर्णाहुतिरुच्यते तत्र अध्वर्यवे वरं ददातीति अग्न्याधानान्ते चेयं भवतीति च विशेषोऽवधेयः। द्र० श्रौ०- प०नि० पृ० ६१।

**पूर्णाहुति—** (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे १. पूर्णया स्रुचा आहुतिः पूर्णाहुतिरित्युच्यते। २. पूर्णाहुतिमकृत्वा नहि अग्निहोत्रादयः क्रियन्ते। द्र० मी०को० पृ० २५९४। ३. पूर्णाहुतिः अग्निहोत्राद्यङ्गभूताग्न्युत्पादकाधानाङ्गम्। द्र० मी०को० पृ० २५९४।

**पूर्दशरात्रस्याहःक्लृप्ति—** (अव्य०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतावहीनप्रकरणे पूर्दशरात्रसंज्ञको दशरात्रोऽहीनः। तत्र प्रथमतृतीयपञ्चमसप्तमनवमान्यहानि अष्टोमसंस्थानि। द्वितीयचतुर्थषष्ठाष्टमान्यहानि उक्थ्यसंस्थानि। दशममहरतिरात्रसंस्थम्। एतस्मिन् पूर्दशरात्रे द्वादश उपसद्दिनानि गौः, ज्योतिः गौः, गौः अभिजित् गौः, गौः आयुः, गौ वैश्वनरः इति आ०श्रौ० १०।४।२६ दश सुत्यादिनानि अष्टौ दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि

अहीन—, अहीनसत्राह: शस्योपाय— द्र० ।

**पूर्वदीक्षिन्—** (सा०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु एकस्मिन्नेव दिवसे द्वयोर्यजमानयोर्मध्ये य: पूर्वं दीक्षणीयेष्टिं करोति स पूर्वदीक्षी (तु०— ऐ० ब्रा० सा० १ ।३) ।

**पूर्वनारायण—** (सा०) सहस्रशीर्षा षोडशर्चमानुष्टुभं त्रिष्टुबन्त्यं पुरुषो नारायणो जगद्बीजमत्र देवता इति पुरुषसूक्तं पूर्वनारायण: । तत्र द्वाविंशत्यृगात्मके सूक्ते 'अद्भ्य:' इति षड्चात् पूर्वा पूर्वा ऋच: पूर्वनारायण इत्युच्यते । (तु०— शुक्लानुक्रमणी) **द्र०** उत्तरनारायण— ।

**पूर्वपरिग्रह—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे वेदिसाधने वेदेरियत्तां निश्चेतुं वेदेर्दक्षिणपश्चिमोत्तरदिक्त्रये स्फ्येन रेखात्रयकरणं पूर्व: परिग्रह इत्युच्यते । स च 'ॐ गायत्रेण त्वा छन्दसा परिगृह्णामि, ॐ त्रैष्टुभेन त्वा छन्दसा परिगृह्णामि, ॐ जागतेन त्वा छन्दसा परिगृह्णामि' (मा०सं० १ ।२७) इत्येतै: मन्त्रै: यथाक्रमं दक्षिणादित: परिगृह्यते इति विशेषोऽवधेय: । **द्र०** उत्तरपरिग्रह— ।

**पूर्वपरिग्राह—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च हवि: (पुरोडाशादि) श्रपणानन्तरं पात्री संक्षालनोदकं गार्हपत्योल्मुकेनाभितप्य अन्तर्वेदि स्फ्येन प्राची: तिस्रो रेखा: कृत्वा प्रत्यक् त्रिर्निनयति तत: । अध्वर्युर्मन्त्रेण वेदमादाय मन्त्रेण सकृत् द्विस्तूष्णीं वेदेन उदगपवर्गं प्रागवसन्नं वेदिं संमृज्य वेद्या: पश्चादुपश्य मन्त्रेण दर्भाभ्यां सह स्फ्यमादाय अन्यतरेण दर्भेण स्फ्यं निमृज्य अवशिष्टंर्भं वेदिपूर्वतृतीयभागे मन्त्रेण उदग्रं निधाय मन्त्रेण तस्मिन् स्फ्येन प्रहृत्य मन्त्रेण मृदा सहितं स्फ्यमादाय मन्त्रेण मृदं हृत्वा मन्त्रेण वेदिमवेक्ष्य मन्त्रेण मृदमुत्करे निवपति । आग्नीध्रस्तां मृदं तत्रैवोत्तानाभ्यां पाणिभ्यां गृह्णाति । एवं प्रहरणादि मृन्निवपनान्तं समन्त्रकं त्रिवारं कृत्वा तूष्णीं चतुर्थं करोति । तत्र चतुर्थे मृदो हरणे प्रहृतस्य दर्भस्यापि तया सह हरणं क्रियते । तदनन्तरं मन्त्रेण स्फ्येन वेदिदक्षिणासमारभ्य दक्षिणश्रोणिपर्यन्तं वेदिदक्षिणप्रान्तं स्पृशति । तथैव उत्तरश्रोणिमारभ्य उत्तरांसपर्यन्तं वेद्युत्तर प्रान्तं स्पृशति । तदित्थं स्फ्येन वेदिप्रान्तभागस्पर्शनं वेद्या: परितो यागार्थं करणरूपत्वात् उत्तरपरिग्राह्यापेक्षया पूर्वत्वाच्च पूर्वपरिग्राह उच्यते । श्रौ०प०नि० पृ० १८-१९ **द्र०** उत्तरपरिग्राह— ।

**पूर्वपशु—** **द्र०** सौत्रामणीपूर्वपशु— श्रौ०प०नि० पृ०१५३ ।

**पूर्वपौर्णमासी—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासयागे ग्राह्या मुख्या पौर्णमासी पूर्वा पौर्णमासीत्युच्यते । सा चानुमति: पञ्चदशी (पूर्णिमा) एव गृह्यते, न चतुर्दशी । तदुक्तम् 'या पूर्वा पौर्णमासी सानुमति:' (काठ० ११,७) । तथा 'द्वे पौर्णमास्यौ यजते' (पूर्वा उत्तरा च) श० ब्रा० २ ।४ ।४ ।६ । इति ।

**पूर्वशान्तिमन्त्र—**(आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च द्वादशाहिक विहारनिर्माणानन्तरं ऋत्विजस्तीर्थेन प्रविश्येडादिशान्ति जपन्ति । अध्वर्यु: पशुबन्धवन्मथित्वाऽऽयतनान्युद्‌ध्दृत्यावोक्ष्याग्नीन् विहृत्य परिस्तीर्य परिषिच्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा

मनस्वत्याऽऽहवनीये जुहोति । पुनर्विहृत्याध्वर्यु ब्रह्माग्नीद्यजमाना: यथायतनं पूर्वां शान्ति पठन्ति—नमो वाचे नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रपतय: परादु: माहमृषीन् मन्त्रकृतो मन्त्रपतीन् परादां वैश्वदेवीं वाचमुद्यासं शिवामदस्तां जुष्टां देवेभ्य: शर्म मे द्यौ: शर्म पृथिवी शर्म विश्वमिदं जगत् । शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती । भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तरणे उपस्तरणं मे प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मापातं प्राणापानौ मा मा हासिष्टं मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासं शुश्रूषेण्यां मनुष्येभ्य: तं मा देवा अवन्तु शोमायै पितरोऽनुमदन्तु ओं शान्ति: शान्ति: शान्ति:'। 'नमो वाचे' इत्यत आरभ्यैतावान्मन्त्र: पूर्वशान्तिरित्युच्यते। द्र० इडाजप—, द्वादशिक विहार—, प्रवर्ग्य संभरण—, श्रौ०प०नि० पृ० १८९ ।

**पूर्वसंस्था—** (सा०) इष्टिपशुसोमेषु प्रधानयागादन्तरतमपूर्वं यत् सन्तिष्ठते तत्पूर्वसंस्थेत्युच्यते। यथैतत् 'दर्शपूर्णमासयो: प्रधानात् सन्निकृष्टपूर्वं पञ्च प्रयाजा:। चातुर्मास्यानां चतुर्षु पर्वसु प्रधानात् सन्निकृष्टपूर्वं नव प्रयाजा:। निरूढपशुबन्धाग्नीषोमीयपश्वो: प्रधानात् वपायागात् संनिकृष्टपूर्वं एकादश प्रयाजा:,' इति प्रयाजा: पूर्वसंस्था भवन्ति। पशो: प्रधानाद् वपायागात् पूर्वं पर्यग्निकरणं पूर्वसंस्था भवति। अग्निष्टोमे प्रधानात् ग्रहचमसयागात् पूर्वं उपांश्वभिषव: पूर्वसंस्था। संवत्सरसत्राणां प्रधानभूतस्य गवामयनस्यारम्भकं पूर्वं चतुर्विंशमह: पूर्वसंस्था भवतीति। तदुक्तम् 'अथ पूर्वसंस्था:। पञ्च प्रयाजस्य, नवप्रयाजस्य एकादशप्रयाजस्येति प्रयाजा: पूर्वसंस्था:। पर्यग्निकरणं पशो:, उपांश्वभिषवोऽग्निष्टोमे, गवामयने चतुर्विंशमह:। द्र० बौ० श्रौ० २४ ।१० श्रौ०को० भा० पृ० ७६२ ।

**पूर्वाग्निसंमार्ग—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे अध्वर्युप्रेषित: आग्नीध्र: इध्मसंनहनवेष्टितेन स्फ्येन मूलमारभ्य अग्रपर्यन्तं मध्यमदक्षिणोत्तरान् परिधीन् क्रमेण संमृज्य मन्त्रेण आहवनीयं संमार्ष्टीति यागापेक्षया पूर्वत्वात् पूर्वोऽग्निसंमार्ग: पूर्वाग्निसंमार्ग: उच्यते। द्र० श्रौ०प०नि० पृ० २५ ।

**पूर्वार्ध्यशङ्कु—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे वेदिसाधने अन्त:पात्यात् शङ्को: षट्त्रिंशत् प्रक्रमेषु य: शङ्कु: निखन्यते स पूर्वार्ध्यशङ्कुरुच्यते।

**पूर्वाहुति—** (याज०, आध्व०) हविर्यज्ञानां द्वितीये अग्निहोत्र-प्रकरणे यजमानोऽविच्छिन्नोदकधाराहरणान्तरं गार्हपत्यस्य पश्चात् दक्षिणोत्तरिणोपस्थेन उपविश्य गार्हपत्यादुदक् पात्रान्तरे तदीयानङ्गारान् 'सुहुतकृतस्य' इत्यादि यजुषा अपोहति। 'अधिश्रित' इत्यादि यजुषा 'इलायास्पदमिति ऋचा च अङ्गारेषु होम द्रव्यं पयोऽधिश्रयति। (पयसा नित्यहोम:। ग्रामकामादे: यवाग्वा होमकरणे नित्यहोम: सिद्ध्यति। 'यवागूरोदनो दधि सर्पिग्रामकात्रामाद्यकामतेजस्कामब्रह्मवर्चस्कामानाम्' इत्याश्वलायनसूत्रम्। काम्येन नित्यसिद्धिरिति च न्याय:। तत्र दध्यधिश्रयणे आश्वलायनेन विकल्प उक्त:)। तत: गार्हपत्ये प्रदीप्तेन काष्ठेन

'अग्निष्टे' इत्यादि यजुषा अधिश्रितमवज्वलयति। 'शान्तिरसि' इत्यादि यजुषा होमद्रव्ये स्रुवेणोदकं सिञ्चति। 'अन्तरिक्षं रक्षः' इत्यादि यजुषा तेनैव ज्वलता काष्ठेन त्रिः पर्यग्नि करोति। ततो होमद्रव्यपात्रं कर्षन्निवोदगुद्वास्य 'दिवे त्वा अन्तरिक्षाय त्वा' इति मन्त्राभ्यामाकाशे निधाय 'पृथिव्यै त्वा' इति मन्त्रेण भूमौ निदधाति। 'सुहृतकृतस्य' इत्यादि यजुषा पूर्वमपो हितानङ्गारान् गार्हपत्ये निदधाति। 'प्रत्युष्टं रक्षः' इत्यादि यजुषा अग्निहोत्रहवणीं स्रुवं च गार्हपत्ये निष्टपति। स्थाल्या उत्तरतोऽग्निहोत्रहवणीं निधाय स्रुवहस्त आह—ओमुन्नयानीति। (ऋत्विक्कर्तृहोमे यजमानः एतस्मिन् काले आचम्य अपरेण वेदिमतिव्रत्य दक्षिणत उपविश्य ओमुन्नयेति वदति)। ततो होमकर्ता होमद्रव्यादुत्तरत आसादितायामग्निहोत्रहवण्यां स्रुवेण चत्वारि अवदानानि चतुर्भिर्मन्त्रैः 'भूरिला, भुवरिला, स्वरिला, वृध इला' इति गृह्णाति। पञ्चावत्ती तूष्णीं पञ्चमम्। ततः स्थालीमभिमृश्य अग्निहोत्रहवण्यां प्रादेशमात्रीं समिधमासाद्य अग्निहोत्रहवणीं गृहीत्वा गार्हपत्यस्योपरिष्टात् सामीप्येन नीत्वा नासिका संमितामग्निहोत्रहवणीं कृत्वा आहवनीयपर्यन्तं गत्वा आहवनीयस्य पश्चात्प्रागग्रेषु कुशेषु अग्निहोत्रहवणीं निधाय दक्षिणं जान्वाच्य 'रजतां त्वा' इत्यादिमन्त्रेण आहवनीये तां समिधमादधाति। 'तेन ऋषिणा' इत्यादिमन्त्रेण अनुमन्त्रयते। 'विद्युदसि' इत्यादि मन्त्रेणाप उपस्पृश्य प्रदीप्तायां समिधि द्व्यङ्गुलमात्रे समिन्मूले 'भूर्भुवः' इत्यादि मन्त्रेणाभिजुहोति। 'ता अस्य सूद दोहसः' इत्यृचा हुतामाहुति- मनुमन्त्रयते। कुशेषु अग्निहोत्रहवणीं निधाय 'पशून्मे यच्छ' इति मन्त्रेण गार्हपत्यमवेक्षते। सेयमाहुतिः पूर्वाहुतिरुच्यते। द्र० उत्तराहुति–। श्रौ०प०नि० पृ० ६४-६५।

**पूर्वाहुत्यङ्गगार्हपत्यावेक्षण** — (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्योत्तरप्रथमाहुतिहोमानन्तरम् उपयमनं सकृदतिवाल्य कूर्जे निधाय दक्षिणावृदावर्त्य 'उपप्रेत संगच्छध्वं मा भागिनां भागधेयं प्रभायि। सप्तर्षिणा ँ सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्त' इति गार्हपत्यमीक्षते। तदिदं पूर्वाहुत्यङ्ग गार्हपत्यावेक्षणमुच्यते। द्र० प्रवर्ग्योत्तरप्रथमाहुतिहोम—, श्रौ०प०नि० पृ० २२६।

**पूर्वोत्तरततिज्ञान**— (सा०) इष्टिपशुसोमयज्ञेषु सर्वेषु कथमु खल्वेतज्जानीयाद् इयं पूर्वा ततिरियमुत्तरेति। या प्रकृतिः सा पूर्वा ततिः। अथ यद् विदधाति सोत्तरा ततिः। अग्न्याधेयं पूर्वा ततिः पुनराधेयमुत्तरा ततिः। दर्शपूर्णमासाविष्टीनां पूर्वा ततिः सर्वाः काम्या इष्ट्य उत्तरा ततिः। ऐन्द्राग्नो निरूढपशुबन्धानां पूर्वा ततिः। सर्वे काम्याः पशवा उत्तरा ततिः। ज्योतिष्टोमः सोमानां पूर्वा ततिः। सर्वे सोमा उत्तरा ततिः। श्येनचिदग्नीनां पूर्वा ततिः सर्वे काम्या अग्नय उत्तरा ततिः। द्विरात्रोऽहीनानां पुर्वा ततिः सर्वे अहीना उत्तरा ततिः। द्वादशाहोऽहर्गणानां पूर्वा ततिः सर्वेऽहर्गणा उत्तरा ततिः। गवामयनं सांवत्सरिकाणां सत्राणां पूर्वा ततिः सर्वाणि सांवत्सरिकाणि सत्राणि उत्तरा ततिः। इति सर्वयज्ञानां पूर्वोत्तरे तती विज्ञेये। (तु०—बौ० श्रौ० २४।५)। एते पूर्वोत्तरे तती एव प्रकृतिविकृति पदार्थेनोच्येते इति विशेषोऽवधेयः। द्र० प्रकृति-, प्रकृतिभेद-, प्रकृतियाग-, विकृति-, विकृति-

याग-, यज्ञस्वरूप-, श्रौ०को० १ भा० पृ० ७,६० ।

**पृथु—** (सा०) प्रसारणं प्रथनं पृथुरित्युच्यते ।

**पृश्नि—** (सा०) १. नाना वर्णाः नानाऽवर्णा वा पृश्नय उच्यन्ते । २. पृश्निः अल्पतनुः । यथा 'मारुतीं पृश्निमालभते' । द्र० मी०को० पृ० २६०४ ।

**पृषदाज्य—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमास-विकृतौ हविर्यागानां पञ्चमे चातुर्मास्यप्रकरणे प्रथमे वैश्वदेवपर्वणि अन्यत्र पशौ यज्ञे च प्रयोक्तव्यं १. दधियुक्त माज्यमाज्यसंस्कारसंस्कृतमाज्यं पृषदाज्यमुच्यते । 'पृषदृज्यं सद्ध्याज्ये' इति अमरकोशः । द्र० श्रौ०प०नि० पृ० ८० । २. 'पृषदाज्येन चातुर्मास्येषु अनुयाजान् यजति,' 'पृषदाज्येन (पशौ) वनस्पतिं यजति' । द्र० मी०को० पृ० २६०५ । द्र० पृषातक— । ३. पृषदाज्यशब्दा चित्राऽऽज्यवाची । नहि पृषदाज्यं नाम द्रव्यान्तरं किञ्चिदस्ति । मी०को० पृ० २६०७ ।

**पृषदाज्यग्रहणी—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे प्रथमे वैश्वदेवपर्वणि पृषदाज्यं गृह्यते यस्यां सा उपभृत्सदृशी स्रुक् (पात्रं) पृषदाज्यग्रहणीत्युच्यते । द्र० श्रौ०प०नि० पृ० ८० । 'तत्र पृषदाज्यधारणार्थं पृथक् पात्रम्, आज्यस्य पृथक् पात्रमग्नीषोमीये पशौ' इति विशेषोऽनुसंधेयः । द्र० मी०को० पृ० २६०७ ।

**पृषातक—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे 'पयस्याज्ये निषिक्ते तु तत्पयः स्यात् पृषातकम्' इति । द्र० पृषदाज्य— ।

**पृष्ठ—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु १. माध्यन्दिनसवने निष्केवल्यस्तोत्रे यत् साम तत् पृष्ठमित्युच्यते (तु०—आ०श्रौ० ८।१३।३४ देवत्रातः) । २. पृष्ठशब्दो ज्योतिष्टोमे (तद्विकृतिषु च) माध्यन्दिनसवनगतस्य स्तोत्रकर्मणो (स्तोत्रविशेषाणां) नामधेयम् (तु०—तै० सं० सा० ५।५।८) । ३. पृष्ठानि होतुः होत्रकाणां चत्वारि भवन्ति । तु०--पृष्ठस्तोत्र— । रथन्तरं, वृहद्, वैरूपं, वैराज, शाक्वरं, रैवतमिति षट् सामानि पृष्ठान्युच्यन्ते । तैः माध्यन्दिनसवने स्तुवन्ति सामागाः इति विशेषोऽवधेयः । ४. सोमयागो रथन्तरपृष्ठो बृहत्पृष्ठो वा भवति । तेन तत्तत्पृष्ठानुसारेण प्रायः सर्वाणि स्तोत्राणि भिद्यन्ते । यथापृष्ठं तानि गेयानि । द्र० श्रौ०को० २. भा० पृ० ६ प्रास्ताविकम्— ।

**पृष्ठकार्य—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पृष्ठमित्यस्मिन् स्थाने ज्योतिष्टोमाङ्गभूतं सामाऽभिव्यक्तं ऋगक्षरं संपाद्य स्तुतिशस्त्रैकाधिगम्यं कार्यं पृष्ठकार्यमुच्यते (तु०—आ०श्रौ० ५।१५।२ नारायणः) ।

**पृष्ठदेश—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ऊर्ध्वं माध्यन्दिनसवनात् प्राक् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठप्रदेश इत्युच्यते । द्र० मी०को० पृ० २६०९ ।

**धृष्ठधर्म—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पृष्ठधर्माः सामान्यधर्माः हिंकारादयः, विशेषधर्मा 'रथन्तरे प्रस्तूयमाने पृथिवीं मनसा धायेत्, वृहति

समुद्रम्' इत्यादयः। द्र० मी०को० पृ० २६०९।

**पृष्ठशमनीय—**(अव्य०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे उदवसानीयान्तं सत्रमुदवसाय (समाप्य) तत उत्तरं सत्रिणामेकैकेन ऋत्विगन्तर संपादनेन ज्योतिष्टोमोऽग्निष्टोमसंस्थः (ज्योतिष्टोमविकृतिभूतः)। पृष्ठशमनीयसंज्ञकः क्रतुः कर्तव्यः। रथन्तरं, वृहत् वैरूपं, वैराजं, शाक्वरं रैवतमिति षट् पृष्ठानि। तेषां सत्रनियुक्तानामुपजातश्रमाणां शमनं करोतीति स पृष्ठशमनीय इत्युच्यते। स च सहस्रदक्षिणः प्राकृतदक्षिणो (द्वादश शतदक्षिणो) वा भवति। सहस्रदक्षिणापक्षे अश्वदाभ्यौ (ग्रहौ) तिस्रोऽनूबन्ध्यास्त्रैधातवीष्टिश्चकर्तव्याः। इति विशेषोऽव- धेयः। अत एवोक्तम्—'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति पृष्ठशमनीयेन यागेन सत्रसमाप्तिः। पृष्ठशमनीयः (उदवसानीयः) इति। द्र० मी०को० पृ० २६०९।

**पृष्ठसामन्—**(औ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु माध्यन्दिनसवने पृष्ठस्तोत्रेषु गीयमानानि सामानि पृष्ठसामानि। पृष्ठसामभिः षड्भिः पृष्ठ्यः षडहः संपद्यते। द्र० मी०को० पृ० २६१२। द्र० पृष्ठस्तोत्र—।

**पृष्ठस्तोत्र—**(औ०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रविकृतिभूतेषु अहीनसत्रेषु पृष्ठ्यषडहस्य षट्सु दिनेषु माध्यन्दिनसवने क्रमेण रथन्तर-वृहद्-वैरूप-वैराज-शाक्व-रैवत-सामसाध्यानि षट् स्तोत्राणि पृष्ठस्तोत्राणीत्युच्यन्ते।

**पृष्ठस्तोत्र—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे माध्यन्दिनसवने माध्यन्दिनपवमानस्य सूक्तेभ्यः (साम० ६७२-६७९) ऊर्ध्वं चतुर्षु सूक्तेषु (साम० ६८०-६८८)। रथन्तर-वामदेव्य-नौधस-कालेय सामभिः संपाद्यानि चत्वारि स्तोत्रणि पृष्ठस्तोत्राणीत्युच्यन्ते। तत्र 'एकविंश होतृ-पृष्ठम् त्रिणवं मैत्रावरुणस्य सप्तदशं ब्राह्मणच्छंशिनः, पञ्चदशमच्छावाकस्य इति अन्यत्र ज्योतिष्टोमविकृतिषु त्वेकाहाहीनसत्रेषु विहितानि पृष्ठानि यथा यथमवगन्तव्यानि (तु०— तां० ब्रा० ७।३।५, का० श्रौ० भूमिका पृ० ४४ विद्याधरः।

**पृष्ठस्तोत्रच्छन्दस्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने पृष्ठस्तोत्राणि बृहदायतनानि भवन्ति। सर्वप्रकृतौ ज्योतिष्टोमे बृहतीष्वेव स्तोत्रीयासु पृष्ठस्तोत्राणि क्रियन्ते (तु०—तां० ब्रा० सा० १३।१५) इति बृहतीच्छन्दः पृष्ठस्तोत्रच्छन्द इत्युच्यते।

**पृष्ठस्तोत्रच्छन्दस्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे मा० सवने पृष्ठ्याख्ये षडहे प्रथमद्वितीय तृतीयेष्वहःसु गायत्रीत्रिष्टुप् जगत्यः पृष्ठस्तोत्रनिष्पादिकाः तथा चतुर्थपञ्चमषष्ठेष्वहःसु अनुष्टुप्पङ्क्त्यतिच्छन्दांसि पृष्ठ- स्तोत्रनिष्पादकानि भवन्ति। इति षट् छन्दांसि पृष्ठस्तोत्रच्छन्दांसि भवन्तीति।

**पृष्ठस्तोत्रयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. माध्यन्दिनसवने चत्वारि पृष्ठानि (रथन्तर-वामदेव्य-नौधस-कालेयानि) स्तोत्राणि निष्केवल्यानि असाधारणानि भवन्ति। षडपि पृष्ठानि च गायत्री रूपाद् योनेः सृज्यन्ते। तदुक्तं 'तस्माद् योनेः

पृष्ठानि सृजा' इति (तु०—तां० ब्रा० ७।८।८)। तत्र गायत्रीभ्यः उत्पन्नाद् वामदेव्याद् रथन्तरं पृष्ठं प्रथममसृजत्। अतः पृष्ठ्यस्य प्रथमेऽहनि रथन्तरं रथघोषेणोपाकुर्वन्ति। वामदेव्ययोने रथन्तरपृष्ठोत्पत्तिप्रकार इत्थं ज्ञातव्यः। रथन्तरस्य बार्हतप्रकारश्च इत्थं ज्ञातव्यः। रथन्तरस्य बार्हतप्रगाथो योनिः। बार्हतप्रगाथस्य प्रथमायां त्रयो गायत्रया पादाः एकश्च जागतः (८+८+८+१२)=३६ द्वितीयायां विष्टारपङ्क्तौ द्वौ गायत्रौ पादौ द्वौ च जागतौ। अतो वामदेव्याधारायामृचि गायत्रीपादसद्भावाद् गायत्र्या उत्पन्नमिति उच्यते। एवं बृहद् वैरूपयोरपि बार्हतप्रगाथाभ्यामेवोत्पत्तेस्तयोः पूर्ववद् गायत्रीपादसद्भावाद् गायत्र्या एवोत्पत्तिः। वृहतो दुन्दुभिघोषेणोपाकरणम्। उपवाजयमाना उपवाज्यमाना वा वैरूपेण स्तुवीरन्। वैराजस्य गायत्री संबन्ध एवम्—वैराजस्य प्रथमा 'पिवा सोममिन्द्रमदन्तु त्वा (साम० ९२७-२९) इति त्रिंशदक्षरा। उत्तरे त्रयस्त्रिंशदक्षरे इति तृचस्य षण्णवत्यक्षराणि। ताश्च तिस्रो गायत्र्यः सम्पद्यन्ते। अतः तस्य तत उत्पत्तिः। तदग्निमन्थनघोषेण सह गीयते। एवं शाक्वरपृष्ठ्स्य गायत्र्या उत्पत्त्युपकारः प्रायशो महानाम्नीषु उपसर्गव्यतिरिक्तासु 'शिक्षा शचीनाम्' इत्यादिषु गायत्रीपादानां प्रायशः संभवादुपपद्यते। तच्चापां घोषेण सह गीयते। रैवतस्य पृष्ठस्य तु गायत्रीसंबन्धः—'रेवतीर्नः' इति रेवतीनां गायत्रीत्वात्। ततो रैवतसृष्टिसंबन्धः। गवां घोषेण गीयते इत्येवं षण्णां पृष्ठानां वामदेव्ययोनेः गायत्र्या उत्पत्तिरवधेया। (तां० ब्रा० सा० ७।८।८-१३) इति षण्णां पृष्ठस्तोत्राणां गायत्री योनिरुपचर्यते। द्र० द्वादशाहिकपृष्ठ्यषडहपृष्ठस्तोत्रोपाकरण—, महानीयाद-। २. 'पृष्ठैः स्तुवते' इत्युपक्रम्य षड् ऋचः आम्नाताः—'अभि त्वा शूर नो नुमः' इति आद्या, तत्र रथन्तरं साम। 'त्वा मिद्धि हवामहे' इति द्वितीया, तत्र बृहत्। 'कयानश्चित्र आभुवत्' इति तृतीया, तत्र वामदेव्यम्। तं वोदस्ममृतीषहम्' इति चतुर्थी, तत्र नौधसम्। अभि प्र वः सुराधसम्' इति पञ्चमी, तत्र श्यैतम्। 'तिरोभिर्वोविदद्वसुम्' इति षष्ठी। तत्र कालेयम्। द्र० मी०को० पृ० २६०८।

**पृष्ठस्तोत्रस्तोत्रियानुरूपप्रगाथतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे तद्विकृतौ गवामयने च पृष्ठ्यषडहस्य षण्णामह्नां निष्केवल्यशस्त्रस्य माध्यन्दिनसवने रथन्तरपृष्ठस्य स्तोत्रियः प्रगाथः—'अभि त्वा शूर' (ऋ० ७।३२।२२-२३)। अनुरूपः प्रगाथाः 'अभित्वा पूर्वपीतये (ऋ० १।१९।९९)। बृहतपृष्ठस्य स्तोत्रियः प्रगाथः—'त्वामिद्धि हवामहे' (ऋ० ६।४६।१-२)। अनुरूपः प्रगाथः—त्वं ह्येहि निचेरवे (ऋ० ८।६१।१७-१८) तु०—आ०श्रौ० ५।१५।२-३। वैरूपपृष्ठस्य स्तोत्रियः प्रगाथः—'यद्द्याव इन्द्र' (ऋ० ८।७०।५-६)। अनुरूपः प्रगाथाः—'यदिन्द्र यावतः' (ऋ० ७।३२।१८-१९)। आ०श्रौ० ७।१०।८)। वैराजपृष्ठस्य स्तोत्रियस्तृचः—'पिबा सोममिन्द्र' (ऋ० ७।२२।१-३)। अनुरूपस्तृचः—'श्रुधी हवं विपानम्' (ऋ० ७।२२।४-६ आ०श्रौ० ७।११।२७)। शाक्वरपृष्ठस्य स्तोत्रियस्तृचः— 'विदा मघवन्' (साम० ६४१-४९)। इति नव महानाम्न्यः एकस्तृचः। अनुरूपस्तृचः—'स्वा दोरित्था विषूवतः' (ऋ० १।८४।१०-१२); 'उप नो हरिभिः' (ऋ० ८।९३।३१-३३)। 'इन्द्रं

विश्वा अवी वृधन्' (ऋ० १ ।११ ।१-३) इति त्रयस्तृचाः (आ०श्रौ० ७ ।१२ । १०;१५) । रैवतपृष्ठ्य स्तोत्रियस्तृचः— 'रेवतीर्नः सदमादे' (ऋ० १ ।३० ।१३-१५) । अनुरूपस्तृचः—'रेवाँ इद् रेवतः (ऋ० ८ ।२ ।१३-१५) इति षण्णां पृष्ठस्तोत्राणां स्तोत्रियानुरूपा उच्यन्ते ।

**पृष्ठस्तोत्रस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं माध्यन्दिनसवने निष्केवल्यस्तोत्रे माध्यन्दिनपवमानानन्तरं होतुः होत्रकाणां रथन्तर वामदेव्यनौधस काले यानि चत्वारि पृष्ठस्तोत्राणि सप्तदशस्तोमकानि भवन्ति । तत्र रथन्तरं 'अमि त्वा शूर' इति प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा वृहती उत्तरा पङ्क्तिः (सतः पङ्क्तिः) । वामदेव्यं 'कयानश्चित्र' इति द्वितीयम् । तत्र तिस्रो गायत्र्यः । नौधसं 'तं वोदस्ममृतीषहम्' इति तृतीयं प्रगाथरूपम् । तत्र बृहती पङ्क्त्यौ बृहतीसतः पङ्क्तयौ) । कालेयं 'तरोभिर्वो विदद्वसुं' इति प्रगाथरूपं चतुर्थम् । तत्रापि बृहती पङ्क्त्यौ (बृहती सतः पङ्क्त्यौ) । तत्र प्रगाथेषु प्रगथनेन तृचत्वसंपादनम् । द्र० मी०को० पृ० २६१३ । तत्र होतुः पृष्ठस्तोत्रं बृहद् रथन्तरयोर्विकल्पेन भवति । तेन होतुः पृष्ठस्तोत्रप्रयोगः क्वचित् रथन्तरायश्रयः क्वचिद्बृहदाश्रयश्चेति द्विविधो भवति । बृहद्रथन्तरयोर्धर्माश्चापि पृथक् व्यवस्थिताः कर्तव्याः न संकरः । तत्र बृहद्धर्माः—'उच्चैर्गेयम्, बलवद्गेयम्, बृहतिस्तूयमाने मनसा समुद्रं ध्यायेत्' इति । रथन्तरधर्माः 'नोच्चैर्गेयम्, न बलवद्गेयम्, रथन्तरे प्रस्तूयमाने संमीलयेत्' इति च विशेषोऽनुसंधेयः । द्र० मी०को० पृ० २६१३, आ०क० उपो० पृ० ४० वरदराजः ।

**पृष्ठहोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने माध्यन्दिनपवमानेन स्तुत्वा दक्षिणा परिग्रहणानन्तरं 'और्वैस्ते पितृभिः' इत्यादिना 'भक्षयामि' इत्यन्तेन (मन्त्रेण) नाराशंसस्य भक्षणान्ते प्रस्तोता होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य आग्नीध्रीयस्य दक्षिणतो गत्वा आहवनीये स्रुवेण पृष्ठहोमं कुर्यात्—'रथन्तरे पिबतु सोम्यम्' इति, 'स्वाहा' इति चाहुतिद्वयं पृष्ठहोम इत्युच्यते । ततो यथैतं प्रत्यावृज्य स्वस्थाने उपविशेत् इति विशेषोऽवधेयः । (तु०—आ०क० उपो० पृ० ४० वरदराजः) ।

**पृष्ठस्तोत्रस्तोमारोहावरोह—द्र०** चतुर्दशरात्ररात्रिसत्रस्याहः-क्लृप्ति— ।

**पृष्ठ्य—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ द्वादशाहे तद्विकृतिषु अहीनरात्रि सत्रगवामयनादिसंवत्सरसत्रेषु च रथन्तरादीनि षट् पृष्ठानि सामानि अस्मिन् सन्तीति पृष्ठ्यः (षडहः) इत्युच्यते । (तु०—ला०श्रौ० ३ ।५ ।१ अग्निस्वामी) ।

**पृष्ठ्यषडह—** (अव्य०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे तद्विकृतिभूतेषु अहीनरात्रिसत्रगवामयनादिसंवत्सरायनसत्रप्रकरणेषु १. पञ्चविधै सात्रिकाणामह्नां मध्ये चर्तुर्विंशाभिप्लवषडहानन्तरं नवम-दशमैकादशद्वादशत्रयोदशचतुर्दशसंख्यात्मकः सत्राहीनाङ्गभूतः षण्णामह्नां समूहः (गणः) पृष्ठ्यषडह इत्युच्यते । २. षड्विधै रथन्तर-वृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यैः पृष्ठस्तोत्रैर्निष्पाद्यः पृष्ठ्यः षडह उच्यते । अर्थात् सामगैरेतैः षड्भिः पृष्ठ्यस्तोत्रैः क्रमेण प्रथममहोरथन्त-

रपृष्ठम्, द्वितीयं बृहत्पृष्ठं, तृतीयं वैरूपपृष्ठं, चतुर्थं वैराजपृष्ठं, पञ्चमं शाक्वरपृष्ठं, षष्ठं रैवतपृष्ठमिति पृष्ठैर्निष्पन्न: पृष्ठ्यषडह: सम्पद्यते। ३. द्वादशाहिकनवरात्रे प्रथमस्त्र्यह:, द्वितीयस्त्र्यहश्चेति पूर्वोत्तरौ द्वौ त्र्यहौ पृष्ठ्यषडह उच्यते। ४. द्वादशाहे द्वितीयादीनि षड् अहानि पृष्ठ्य: षडह:। ५. पृष्ठ्य: षडह: द्वादशाहगत: प्रकृति: गवामयनगतश्च पृष्ठ्य: षडह: विकृति:। द्र० मी० को० पृ० २६१३।

**पृष्ठ्यषडहस्य प्रथमस्याह्नो निर्वाहक—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रद्वादशाहप्रकरणे द्वादशाहिकनवरात्रे पृष्ठ्यषडहस्य प्रथमस्याह्न: अग्निर्देवता, त्रिवृत्स्तोम:, रथन्तरं साम, गायत्री छन्द: इत्येतानि देवता स्तोम सामच्छन्दांसि द्वादशाहगतनवरात्रस्य प्रथमं अह: निर्वहन्ति निष्पादयन्ति (तु०—ऐ० ब्रा० ४।२९)।

**पृष्ठ्यषडहस्य प्रथमेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रव्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य प्रथमेऽहनि प्रात: सवने बहिष्पवमानस्य स्तोत्रीयतृचा:- 'अस्य प्रत्नामनुद्युतं' (साम० ७५५-६०), 'उप शिक्षापतस्थुष:' (साम० ७६१-६३) इति त्रयस्तृचा:। एते तृचा: संभार्या: संपाद्या भवन्ति। यद्यपि तृतीय एव तृच: सम्भार्य: (साम० ७६१।१३३५। ६५१) तथापि सर्वे संभार्या:)। (तां० ब्रा० साम० ११।१।५)। आर्षेयकल्पे तु 'उपास्मै गायता नर:' (साम० ६।५१-५३), उपोषु जातमप्तुरम्' (साम० १३३५-३७) पवमानस्य ते कवे' (साम० ६५७-५९) इति न संभार्या: उक्ता: (आ०क० १।९।४) तेषु प्रदेशेषु एकैकामृचमादाय संगृहीता इति संभार्या:। साम-गायत्रं प्राकृतं साम भवति। स्तोम:—त्रिवृत्स्तोम:। इति बहिष्पवमानस्तोत्रम्।

**पृष्ठ्यषडहस्य प्रथमेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतभूत...दशरात्रस्य पृष्ठ्यषडहस्य प्रथमेऽहनि प्रात: सवने आज्यस्तोत्राणां तृचा:—'अग्न आ याहि वीतये' (सा० ६६०-६२) आ नो मित्रावरुणा' (साम० ६६३-६५), 'आ याहि सुषुमा' (साम० ६६६-६८८), 'इन्द्राग्नी आ गतं' (साम० ६६९-७१) इति चत्वारस्तृचा: होतृमैत्रावरुणब्राह्मणाच्छांस्यच्छावाकै: क्रमेण प्रयोज्यमानां चतुर्णामाज्यस्तोत्राणां द्वादश स्तोत्रीया:। स्तोम:—एतेषु चतुर्ष्वाज्यस्तोत्रेषु त्रिवृत् स्तोम:। स चैकैकस्मिन्नाज्ये तृचस्यावर्तनेन पूरणीय:। साम—गायत्रं प्राकृतं साम भवति। (तु०—तां० ब्रा० सा० ११।२।३)। विष्टुति:—द्र० त्रिवृत्स्तोमविष्टुति:—इत्याज्यस्तोत्राणि।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे तद्गतनवरात्रेऽन्यत्र चाहीनसत्रेषु अग्निष्टोमवत् पृष्ठ्यषडहस्य प्रथमेऽहनि प्रात:सवने होतुराज्यशस्त्रस्य जप:, आहाव:, तूष्णींशंस:, निवित्पदानि ऋ०खि० ५।५।१ (तु०—आ०श्रौ० ५।९।१।११।१२, श्रौ०को० २ भा० पृ० ३२३)। सूक्तम्-'उप प्रयन्तो अध्वरम्' (ऋ० १।७४।१-८ ऐ० ब्रा० ४।२९)। शस्त्रपरिधानीया—'त्वोतो वाज्यहूय:' (ऋ० १।७४।९)। शस्त्वाजप:, शस्त्रयाज्या आ०श्रौ० ५।९।२६ अत्र अभिप्लवस्य ये आद्ये अहनी ताभ्यां पृष्ठ्यस्याद्ये अहनी व्याख्याते (तु०—७२)

आ०श्रौ० ७ ।१० ।१ नारायणः) प्रकृतौ 'प्र वो देवायाग्नये' (ऋ० ३ ।१३) इत्याज्यशस्त्रं, तद् बाधित्वा नवरात्रस्य प्रथमेऽहनि 'उप प्रयन्त' (ऋ० १ ।७४) इति सूक्तेनाज्यशस्त्रं शंसनीयं (तु०—ऐ० ब्रा० सा० ४ ।२९) इति विशेषोऽनुसन्धेयः। **द्र०** आहाव० आहावप्रदेश शस्त्रशंसनप्रकारः अग्निष्टोमे आज्यशस्त्रशंसनप्रकारवद्— **द्र०** ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे तद्गतनवरात्रेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि प्रातःसवने होतुः प्रउगशस्त्रस्य प्रथमा पुरोरुक्-'वायुरेग्रेगाः' (ऋ० खि० ५ ।६ ।१) ततः प्रथमस्तृचः—'वायवा याहि' (ऋ० १ ।२ ।१-३)। द्वितीया पुरोरुक्—'हिरण्यवर्तनी' (ऋ० खि० ५ ।६ ।२) ततो द्वितीयस्तृचः—'इन्द्रवायू (ऋ० १ ।२ ।४-६) तृतीया पुरोरुक्— 'काव्या राजाना" (ऋ०खि० ५ ।६ ।३) ततस्तृतीयस्तृचः—'मित्रं हुवे' (ऋ० १ ।२ ।७-९)। चतुर्थी पुरोरुक्—'देव्या अध्वर्यू' (ऋ० खि० ५ ।६ ।४)। ततश्चतुर्थस्तृचः—'अश्विना यज्वरीरिषः' (ऋ० १ ।३ ।१-३)। पञ्चमी पुरोरुक्-'इन्द्र उक्थेभिः'(ऋ०खि० ५ ।६ ।५)। ततः पञ्चमस्तृचः—'इन्द्रा याहि' (ऋ० १ ।३ ।४-६)। षष्ठी पुरोरुक्-'विश्वान् देवान्' (ऋ०खि० ५ ।६ ।६) ततः षष्ठस्तृचः — 'ओमासश्चर्षणीधृतः' (ऋ० १ ।३ ।७-९) ।सप्तमी पुरोरुक्—'वाचा महीं देवीम्' (ऋ० खि० ५ ।६ ।७)। ततः सप्तमस्तृचः—'पावका नः सरस्वती' (ऋ० १ ।३ ।१०-११) ।सप्तमतृचान्त्या शस्त्रपरिधानीया (ऋ० १ ।३ ।१२)। (तु०— आ०श्रौ० ५ ।१० ।४-५; श्रौ०को० २ भा० पृ० ३३२-३३) शस्त्वाजपः शस्त्रयाज्या च आ०श्रौ० ५ ।१० ।१०। इति **द्र०** आहाव—, आहावप्रदेश-आज्यप्रउगे ऐकाहिके (आ०श्रौ० ७ ।१० ।१ नारायणः)। शस्त्रशंसनप्रकारः अग्निष्टोमे प्रउगशस्त्रशंसनप्रकारवद्— **द्र०** ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणे अन्यत्र चाहीनसत्रेषु मैत्रावरुणस्य प्रातःसवने पृष्ठ्यषडहस्य प्रथमेऽहनि 'आ नो मित्रावरुणा' (ऋ० ३ ।६२ ।१६-१८)। इति षडहस्तोत्रियः तृचः। 'मित्रं वयं हवामहे' (ऋ० १ ।२३ ।४-६) इति श्वःस्तोत्रियोऽनुरूपस्तृचः। (तु०—ऐ० ब्रा० ६ ।५, आ०श्रौ० ७ ।२ ।२ ।६) आरम्भणीया—'ऋजुनीती नो वरुण' (ऋ० १ ।९० ।१)। त्रिवृत्स्तोमाति- शंसन (वृद्धि) निमित्तकः परिशिष्ट तृचावापस्थानेऽधिकतृचापः —**द्र०** अभिप्लवषडहस्य प्रथमेऽहनि मैत्रावरुणशस्त्र-। पर्यासतृचः— 'प्रति वां सूर उदिते' (ऋ० ७ ।६५ ।१-३)। परिधानीया—स्याम ते देवं वरुण'(ऋ० ७ ।६६ ।९; ऐ० ब्रा० सा० ६ ।७-८)। शस्त्वा जपः—'उक्थं वाचि' आ०श्रौ० ५ ।१०-२२)। शस्त्रयाज्या— 'उपयातं मित्रावरुणा'(ऋ० ७ ।६६ ।१९)। तु० आ०श्रौ० ५ ।१० ।२८ ।७ ।४ ।१५ नारायणः। **द्र०** आहाव १-४, आहावप्रदेश—। शस्त्रशंसनप्रकारः—अग्निष्टोमे मैत्रावरुणशस्त्रशंसनप्रकारवद्— **द्र०** ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ० सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृते व्यूढद्वादशाहप्रकरणे अन्यत्र

चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि ब्राह्मणाच्छंसिन: प्रात:सवने 'आ याहि सुषुमाहिते' (ऋ० ३ ।१७ ।१-३) इति षडह स्तोत्रियस्तृच: । श्व: स्तोत्रियोऽनुरूपस्तृच:- 'इन्द्रमिद्गाथिनो बृहत्' (ऋ० १ ।७ ।१-३) । आरम्भणीया– 'इन्द्रं वो 'विश्वतस्परि' (ऋ० १ ।७ ।१०) । त्रिवृत्स्तोमाति- शंसन (वृद्धि) निमित्तक: परिशिष्टतृचावापस्थानेऽधिकस्तृचावाप:— द्र० अभिप्लवषडहस्य प्रथमेऽहनि ब्राह्मणाच्छंसिशस्त्रवद्— द्र० । पर्यासतृच:—'व्यन्तरिक्षमतितरत् (ऋ० ८ ।१४ ।७-९) । शस्त्रपरिधानीये—'स न इन्द्र शिव: सखा' (ऋ० ८ ।९३ ।३; ऐ० ब्रा० सा० ६ ।८ इति ऐकाहिका) । 'इन्द्रेण रोचना दिव:' (ऋ० ८ ।१५ ।९; ऐ० ब्रा० सा० ६ ।७-८ इति अहीना) । शस्त्वाजप:—उक्थं वाचि (आ०श्रौ० ५ ।१० ।२२) । शस्त्रयाज्या— 'इन्द्रक्रतुविदं सुतम्'– (ऋ० ३ ।४० ।२; आ०श्रौ० ५ ।१० ।२८; ७ ।४ ।१५ नारायण:) । इति द्र० आहाव–, आहवप्रदेशशस्त्रशंसनप्रकार: अग्निष्टोमे प्रात: सवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि अच्छावाकशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि अच्छावाकस्य प्रात:सवने 'इन्द्राग्नी आगतं सुतम्' (ऋ० ३ ।१२ ।१-३) इति षडहस्तोत्रियस्तृच: । श्वस्तोत्रियानुरूपस्तृच:— 'इन्द्रे अग्ना नभो बृहत्' (ऋ०) आरम्भणीया—'यत् सोम आसुते' (ऋ० ७ ।९४ ।१०) । त्रिवृत्स्तोमातिशंसन (वृद्धि)—निमित्तक: परिशिष्टतृचावापस्थानेऽधिकस्तृचावाप:—द्र० अभिप्लवषडहस्य प्रथमेऽहनि अच्छावाकशस्त्र— । पर्यासतृच:—'श्यावाश्वस्य सुन्वत: (ऋ० ८ ।३६ ।७-९) । शस्त्रपरिधानीया 'आऽहं सरस्वती वतो:' (ऋ० ८ ।३९ ।१० इति अहीना) शस्त्वाजप:—'उक्थं वाचि' (आ०श्रौ० ५ ।१० ।२२) । शस्त्रयाज्या— 'इन्द्राग्नी आ गतं सुतम्' (ऋ० ३ ।१२ ।१; आ०श्रौ० ५ ।१० ।२८ । ७ ।४ ।१५ नारायण:) । द्र० आहाव–, आहावप्रदेश— द्र० शस्त्रशंसनप्रकार: अग्निष्टोमे प्रात:सवने अच्छावाकशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनपवमानस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रव्यूढद्वादशाहप्रकरणे द्वादशाहिकदशरात्रस्य पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिने सवने माध्यन्दिनपवमानस्य स्तोत्रीयास्तृचा:—'प्र सोमासो विपश्चित:' (साम० ७६४) अभिद्रोणानि बभ्रव: (साम० ७६५), सुता इन्द्राय वायवे (साम० ७६६) प्र सोम देववीतये (साम० ७६७-६९) । प्र तु द्रव (साम० ६७७-७९) इत्येता: स्तोत्रीया: सामानि— प्रथमतृचस्य प्रथमायां गायत्रं साम, द्वितीयायाम् आश्वं साम, एकाक्षरनिधनम्, तृतीयायां सोम साम । प्र सोम देववीतय इति तृचे यौधाजयं प्राकृतं साम । प्र तु द्रव इति तृचे औशनं प्राकृतं साम इत्येतानि पञ्च सामानि । स्तोम:—त्रिवृत् स्तोम: स्तोत्रीयाणां नवत्वात् । (तां० ब्रा० सा० ११ ।३) विष्टुति: द्र० त्रिवृत्स्तोमविष्टुति— ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि पृष्ठस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रस्तोत्रीयतृच:—

'अभि त्वा शूर नोनुमः' (साम० ६८०-८१), 'कयानश्चित्र आ भुवत्' (साम० ६८२-८४), तं वो दस्ममृतीषहम् (साम० ६८५-८६) तरोभिर्वोविदद्वसुम् (साम० ६८७-८) इत चत्वारस्तृचा होतृ मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकैः क्रमेण प्रयोज्यमानां चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयाः। सामानि तत्र प्रथमे प्रगाथ तृचे होतू रथन्तरं साम, द्वितीये तृचे मैत्रावरुणस्य वामदेव्यं साम, तृतीये प्रगाथतृचे ब्राह्मणाच्छंसिनो नौधसं साम, चतुर्थे प्रगाथतृचे अच्छावाकस्य कालेयं द्रवदिडनिधनं साम। इति चत्वारि सामानि। स्तोमः चतुर्षु पृष्ठस्तोत्रेषु तृचस्यावर्तनेन त्रिवृत्स्तोमः (तां० ब्रा० सा० ११।४)। विष्टुतिः **द्र०** त्रिवृत्स्तोमविष्टुति—।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्रचाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृचः—'आ त्वा रथं यथोतथे' (ऋ० ८।६८।१-३)। अनुचरस्तृचः—'इदं वसो सुतमन्धसः' (ऋ० ८।२।१-३)। इन्द्रनिहवः प्रगाथः—'इन्द्र नेदीय एदिहि' (ऋ० ८।५३।५-६; आ०श्रौ० ५।१४। ३-५ श्रौ० को० २ भा० पृ० ३८३)। ब्राह्मणस्पत्यः प्रगाथः—'प्रैतु ब्रह्मणस्पतिः' (ऋ० १।४०।३-४; आ०श्रौ० ७।३।४-५)। धाय्याः तिस्रः— ऐकाहिकास्तिस्रः अग्निष्टोमोक्ताः (आ०श्रौ० ५।१४। १७)। मरुत्वतीयप्रगाथः — 'प्र व इन्द्राय बृहते' (ऋ० ८।८९।३-४ ऐकाहिकः आ०श्रौ० ५।१४।१८; ७।३।४।६। ७।५।२२)। निविद्धानीयसूक्तम्—'आ यात्विन्द्रोऽवसे (ऋ० ४।२१।१-१०)। निवित्पदानि— ऋ० खि० ५।५।२)। परिधानीया—'नू ष्टुत इन्द्र नू गृणानः' (ऋ० ४।२१।११)। शस्त्वाजपः, शस्त्रयाज्या चैकाहिके आ०श्रौ० ५।१४।२६। इति **द्र०** आहाव—, आहावप्रदेश— **द्र०**। शस्त्रशंसनप्रकारः **द्र०** -अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोम—यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य ऐकाहिकौ स्तोत्रियानुरूपौ प्रगाथौ—'अभि त्वा शूर नो नुमः' (ऋ० ७।३३।२२-२३), अभि त्वा पूर्वपीतये (ऋ० ८।३।७-८) रथन्तर पृष्ठत्वात् (तु०—आ०श्रौ० ५।१५।१; ७।५।२ श्रौ०को० २ भा० पृ० ३९२-९३)। धाय्या—ऐकाहिका 'यद् वावान' (ऋ० १०।७४।६)। सामप्रगाथः—ऐकाहिकः 'पिबा सुतस्य रसिनः' (ऋ० ८।३।१-२ आ०श्रौ० ५।१५।२० श्रौ० को० २ भा० पृ० ३९३)। तार्क्ष्यसूक्तम्—'त्यमू षु वाजिनम्' (ऋ० १०।१७८।१-३)। निविद्धानीयसूक्तम्, 'आ न इन्द्रो दूरात्' (ऋ० ४।२०।१-१०)। निवित्पदानि— ऋ०खि० ५।५। ५। शस्त्रपरिधानीया—'नू ष्टुत इन्द्र नू गृणानः' (ऋ० ४।२०।११)। शस्त्वाजपः—'उक्थं वाचीन्द्रायोपशृण्वते त्वा'। शस्त्रयाज्या—ऐकाहिका 'पिबा सोममिन्द्र मन्दतु' (ऋ० ७।२२।१; आ०श्रौ० ५।१५।२३, श्रौ० को० २ भा० पृ० ३९४)। इति निष्केवल्यशस्त्रम्। **द्र०** आहाव—, आहावप्रदेश शस्त्रशंसनप्र-

कारः—अग्निष्टोमे होतुर्निष्केवल्यशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य ऐकाहिकः (अग्निष्टोमोक्तः) स्तोत्रियस्तृचः—'कया नश्चित्र आभुवत' (ऋ० ४।३१।१-३)। ऐकाहिकः अनुरूपस्तृचः—'कया त्वं न ऊत्या' (ऋ० ८।९३।१९-२१)। चातुर्विंशिकः स्तोत्रियः प्रगाथः—'मा चिदन्यद् विशसत' (ऋ० ८।१।३-४ आ०श्रौ० ७।४।२)। कदव त्प्रगाथः—'कस्तमिन्द्र त्वा वसुम्' (ऋ० ७।३२।१४-१५, आ०श्रौ० ७।४।६)। आरम्भणीया— 'अप प्राच इन्द्र विश्वान्' (ऋ० १०।१३१।१ आ०श्रौ० ७।४।७) अहरहः शस्य सूक्तम्—'सद्यो ह जातो वृषभः' (ऋ० ३।४८।१-५; ऐ० ब्रा० ६।२०; आ०श्रौ० ७।४।८) चातुर्विंशिकाहीनसूक्तस्थाने सम्पातसूक्तम्—'एवा त्वमिन्द्र वज्रिन् (ऋ० ४।१९; आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया—'नू ष्टुत इन्द्र नू गृणानः' (ऋ० ४।१६।२१; ऐ० ब्रा० सा० ६।८)। शस्त्वाजपः—'उक्थं वाचीन्द्राय' (आ०श्रौ० ५।१०।२४)। शस्त्रयाज्या—ऐकाहिका 'उषन्नु षुणः सुमना पाके' (ऋ० ४।२०।४; आ०श्रौ० ५।१६।१)। इति। द्र० सम्पातसूक्त—, आहाव—, आहावप्रदेश—द्र०। शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिने मैत्रावरुणशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि ब्राह्मणाच्छंसिशस्त्र—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रस्य ऐकाहिकः (अग्निष्टोमोक्तः) स्तोत्रियः प्रगाथः—'तं वो दस्ममृतीषहम्' (ऋ० ८।८८।१-२)। अनुरूपः प्रगाथः—'तत्त्वा यामि सुवीर्यम्' (ऋ० ८।३,९-१०; आ०श्रौ० ७।४।३)। कद्वत्प्रगाथः—'कन्नवयो अतसीनाम्' (ऋ० ८।४३।१३-१४; आ०श्रौ० ७।४।६)। आरम्भणीया—'ब्रह्मणा ते ब्रह्मयुजा' (ऋ० ३।३५।४; आ०श्रौ० ७।४।७)। अहरहः शस्यसूक्तम्- 'उदु ब्रह्माण्यैरत' (ऋ० ७।२३।१-६; ऐ० ब्रा० ६।२० आ०श्रौ० ७।४।९)। चातुर्विंशिका सूक्तस्थाने सम्पातसूक्तम्—'इन्द्रः पूर्भिदातिरत्' (ऋ० ३।३४; आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया—'एवेन्द्रं वृषणं वज्रबाहुम्' (ऋ० ७।२३।६; ऐ०ब्रा० ६।८)। शस्त्वा जापः-'उक्थं वाचीन्द्राय' (आ०श्रौ० ५।१०।२०)। शस्त्रयाज्या—ऐकाहिका 'ऋजीषी वज्री वृषभस्तुराषाट्' (ऋ० ५।४०।४; आ०श्रौ० ५।१६।२)। इति। द्र० सम्पातसूक्त—, आहाव—, आहावप्रदेश—द्र०। शस्त्रशंसन- प्रकारः अग्निष्टोमे माध्यन्दिने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकारवद् द्र० ।

**पृष्ठ्यषडहस्य प्रथमेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने अच्छावाकस्य ऐकाहिकः स्तोत्रियः प्रगाथः—'तरोभिर्वाद्विदवसुम्' (ऋ० ८।६६।१-२)। ऐकाहिकः अनुरूपः प्रगाथः)—'तरणिरित् सिषासति' (ऋ० ७।३२।२०-२१; आ०श्रौ० ७।४।४)।

कद्वत्प्रगाथ:— 'कदू न्वस्याकृतम्' (ऋ० ८।६६।९-१० आ०श्रौ० ७।४।६)। आरम्भणीया— 'उरुं नो लोकमनुनेषि' (ऋ० ८।४७।८; आ०श्रौ० ७।४।७)। अहरह: शस्य सूक्तम्-अभितष्टेव दीधया (ऋ० ३।३८।१-१०)। अस्य सूक्तस्यान्ते 'नूनं सा ते प्रति' (ऋ० २।११।२१ इत्या धिका भवति (आ०श्रौ० ७।४। ९;१०, ऐ० ब्रा० ६।२०)। चातुर्विंशिका:—अहीनसूक्तस्थाने सम्पातसूक्तम्—'इमामू षु प्रभृतिं सातये' (ऋ० ३।३६; आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया—'नूनं सा ते प्रति वरं जरित्रे' (ऋ० २।११।२१, ऐ० ब्रा० सा० ६।८)। शस्त्वाजप:—'उक्थं वाचीन्द्राय' आ०श्रौ० ५।१०।२४)। शस्त्रयाज्या—ऐकाहिका 'पिबा वर्धस्व तव घा सुतास:' (ऋ० ३।३६।३; आ०श्रौ० ५।१६।३)। इति। द्र० सम्पातसूक्त—, आहाव—, आवाहप्रदेशशस्त्रशंसनप्रकार—अग्निष्टोमे माध्यन्दिने अच्छावाक- शस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य प्रथमेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रगतस्य पृष्ठ्यषडहस्य प्रथमेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रीया:— 'प्र सोमासो मदच्युत:' (साम० ७।६९-७१), 'अया पवस्व' (साम० ७७२), 'पवते हर्यत:' (साम० ७७३), 'प्र सुन्वानायान्धस:' (साम० ७७४), 'अभिप्रियाणि पवते' (साम० ७००-७०२)। तृच: इति नव स्तोत्रीया:। सामानि—तत्र प्रथमायां (साम० ७६९) गायत्रं साम, द्व्यक्षरनिधनं संहितं साम चेति द्वे साम्नी, द्वितीयायां (साम० ७७२) सफं साम, तृतीयायां (साम० ७७३) आक्षारं साम, चतुर्थ्यां (साम० ७७४) गौरीवितं साम गौतमं साम चेति द्वे साम्नी, अभिप्रियाणि तृचे कावं साम। इति सप्त सामानि। स्तोम:—त्रिवृत्स्तोम:। विष्टुति:—द्र० त्रिवृत्स्तोमविष्टुति:—।

**पृष्ठ्यषडहस्य प्रथमेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...प्रथमेऽहनि तृतीये सवने अग्निष्टोमस्तोत्रस्य साम तृच:—'यज्ञायज्ञाव:' (साम० ७०३-४)। सामयज्ञायज्ञीयं अग्निष्टोमसाम। स्तोम:—त्रिवृत्स्तोम:। विष्टुति:—द्र० त्रिवृत्स्तोम विष्टुति:। अग्निष्टोमसंस्थत्वादुक्थस्तोत्राणामभाव:। इति विशेषोऽवधेय:। तु०—तां० ब्रा० सा० ११।५)। इति दाशरात्रिकस्य प्रथमस्याह्न: स्तोमक्लृप्ति:। अग्निष्टोमस्तोत्रं चेदं सर्वत्र वैश्वदेवशस्त्राद‍ूर्ध्वं आग्निमारुतशस्त्रात् प्राक् गातव्यमिति विशेषोऽवधेय:।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुर्वैश्वदेवशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य प्रतिपदनुचरौ तृचौ-ऐकाहिकौ 'तत्सवितुर्वृणीमहे' (ऋ० ५।८२।१-३) 'अद्या नो देव सवितर्वृणीमहे' (ऋ० ५।८२।४-६) आ०श्रौ० ५।१८।५ श्रौ० को० २ भा० पृ० ४४०-४३)। प्रथमं सावित्रं निविद्धानीयसूक्तम्—'युञ्जते मन उत युञ्जते' (ऋ० ५।८१।१-५)। निवित्पदानि—ऋ० खि० ५।५।४)। धाय्या— ऐकाहिका आ० श्रौ० ५।१८।५। द्वितीयं द्यावा पृथिवीयं निविद्धानीय सूक्तम्—'प्र द्यावा यज्ञै:

पृथिवी' (ऋ० १।१५९ आ०श्रौ० ५। १८।५; श्रौ० को० २ भा० पृ० ४४१) इत्यैकाहिकः (तु०—आ०श्रौ० ७।१०।१ नारायणः) निवित्पदानि ऋ०खि० ५।५।५। धाय्या—ऐकाहिका आ०श्रौ० ५।१८।५ श्रौ० को० २ भा० पृ० ४४१)। तृतीयमार्भवं निविद्धानीयसूक्तम्—'इहेव वो मनसा' (ऋ० ३।६०।१-४ आ०श्रौ० ७।५।२३)। निवित्पदानि— ऋ०खि० ५।५।६। तिस्रो धाय्याः—ऐकाहिकाः (आ०श्रौ० ५।१८।५ श्रौ० को० २ भा० ४४२)। चतुर्थं वैश्वदेवं निविद्धानीयसूक्तम्—'देवान् हुवे बृहच्छ्रवसः (ऋ० १०।६६।१-१५ आ०श्रौ० ७।५। २३)। निवित्पदानि—ऋ०खि० ५।५। ७। शस्त्रपरिधानीया—'अदितिर्द्यौरदितिरन्तरिक्षम्' (ऋ० १।८९।१०)। इत्यैकाहिका अहीना वा समाना। सर्वत्र प्रकृतौ विकृतौ च वैश्वदेवशस्त्र मन्यैव परिदध्यादित्यर्थः। (तु०—आ० श्रौ० ५।१८।१२ नारायणः)। शस्त्वाजपः, शस्त्रयाज्या च ऐकाहिके (आ०श्रौ० ५।१८।१३ श्रौ० को० २ भा० पृ० ४४३)। इति आहाव—, आहावप्रदेश शस्त्रशंसन-प्रकारः— अग्निष्टोमे होतुर्वैश्वदेवशस्त्रशंसनप्रकार द्र०।

**पृष्ठ्यषडहस्य प्रथमेऽहनि होतुराग्निमारुतशस्त्र—** (हौ०) सोम-यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि तृतीयसवने विकृतौ व्यूढद्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रथमेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य सर्वं शस्यमैकाहिकं भवति (तु०— आ०श्रौ० ७।५।२३ नारायणः)। तत्र शान्त्यर्थं शस्त्रारम्भणीया—'आ ते पितः' (ऋ० ३।३३।१; ऐ० ब्रा० ३।३४)। अथवा 'शं नः करत्यर्वते' (ऋ० १।४३।६, ऐ० ब्रा० ३।३४)। इयमृक् प्रथमं वैश्वानरीयं निविद्धानीयसूक्तम्—वैश्वानराय' (ऋ० ३।३।१-११)। निवित्पदानि (ऋ० खि० ५।५।८)। रौद्री—'शं नः करति' (ऋ० १।४३।६)। द्वितीयं निविद्धानीयं मारुतं सूक्तम्—'प्र त्वक्षसः' (ऋ० १।८७।१-६)। निवित्पदानि—ऋ० खि० ५।५।९। अग्निष्टोमसामस्तोत्रियः प्रगाथतृचः—'यज्ञा यज्ञा वः' (ऋ० ६।४८।१-२)। अग्निष्टोमसामानुरूपः प्रगाथतृचः—'देवो वः (ऋ० ७।१६।११-१२)। जातवेदस्या—'जात वेदसे सुनवाम' (ऋ० १।९९।१)। तृतीयमग्निदेवत्यं जातवेदस्यं निविद्धानीयसूक्तम्—'प्र तव्यसोम' (ऋ० १।१४३।१-८)। निवित्पदानि—ऋ० खि० ५।५।१० आपोहिष्ठीयस्तृचः—'आपो हिष्ठाः (ऋ० १०।९।१-३)। एकाऽन्या शंस्तव्या अन्या ऋक्—'उत नोऽहिर्बुध्न्यः' (ऋ० ६।५०।१४)। देवपत्नी देवताके ऋचौ—'देवानां पत्नीः' (ऋ० ५।४६।७-८)। राकादेवत्ये ऋचौ—'राकामहम्' (ऋ० २।३२।४-५)। सरस्वती देवत्यैका ऋक्-'पावीरवी कन्या' (ऋ० ६।४८।७)। याम्यौ द्वे ऋचौ—'इमं यम' (ऋ० १०।१४।४) 'मातली काव्यैः' (ऋ० १०।१४।३)। पित्र्या ऋचः—'उदीरतामवर उत्' (ऋ० १०।५१।१); 'आ हं पितृन्' (ऋ० १०।१५।३); 'इदं पितृभ्यः' (ऋ० १०।१५।२)। स्वादुष्किलीयाः (प्रतिगर-सहिताः) ऋचः—'स्वादुष्किलायम्' (ऋ० ६।४७।१-४)। वैष्णु वारुणी—'ययोरोजसा' (ऋ० ५।३०।६)। वैष्णवी—'विष्णो नु कम्'

(ऋ० १।१५४।१)। प्राजापत्या—'तन्तुं तन्वन्'(ऋ० १०।५३।६)। शस्त्रपरिधानीया—'एवा न इन्द्रः' (ऋ० ४।१७।२०)। शस्त्वा जपः—'उक्थं वाचीन्द्राय देवेभ्य आश्रुताय'। शस्त्रयाज्या—'अग्ने मरुद्भिः' (ऋ० ५।६०।८)। (तु०—आ०श्रौ० ५।२०।६-८; श्रौ०को० २ भा० पृ० ४५७-४६१; आ०श्रौ० ७।१०।१) इति। द्र० आहाव—, आहावप्रदेश—। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराग्निमारुतशस्त्रशंसनप्रकारवद् द्र० पृष्ठ्यषडहस्य प्रथमस्याह्नः अग्निष्टोमसंस्थत्वात् तृतीये सवने होत्रकाणां मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकानां शस्त्राणि न भवन्ति। इति।

**पृष्ठ्यषडहस्य द्वितीयस्याह्नो निर्वाहक—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे व्यूढद्वादशाहगतनवरात्रे पृष्ठ्यषडहस्य द्वितीयस्याह्नः इन्द्रो देवता, पञ्चदशस्तोमः, बृहत्साम त्रिष्टुप्छन्दः इत्येतानि देवतास्तोमच्छंदासि द्वादशाहगतनवरात्रस्य द्वितीयमहर्निर्वहन्ति निष्पादयन्ति। (ऐ० ब्रा० ४।३१) इति द्वितीयस्याह्नो निर्वाहकानि भवन्ति।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतव्यूढद्वादशाह प्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातःसवने वहिष्पवमानस्य तृचाः—पवस्य वाचो अग्रियः' (साम० ७७५-७७) इति प्रथमः प्रतिपत्तृचः, 'पवस्वेन्दो वृषा सुतः' (साम० ७७८-८०) इति द्वितीयोऽनुरूपस्तृचः, 'वृषा सोम' (साम० ७८१-८३) इति तृतीयस्तृचः। 'वृषा ह्यसि' (साम० ७८४-८६) इति चतुर्थस्तृचः 'पवमानस्येते वयम्' (साम० ७८७-८९) इति पञ्चम उत्तमस्तृचः। इत्येते पञ्चतृचाः बहिष्पवमानस्य स्तोत्रीयास्तृचाः। स्तोमः—पञ्चदशः स्तोमः। 'पञ्च तृचा अनुक्रान्ताः ते पञ्चदशस्तोत्रीयास्तृचा भवन्तीति पञ्चदश स्तोमोऽस्य भवतीत्यर्थः। साम—'बहिष्पवमानतृचस्तोत्रीयासु गातव्यं गायत्रं साम (तां०ब्रा० ११।६)। विष्टुतिः—द्र० पञ्चदशस्तोमविष्टुति-।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातः सवने आज्यस्तोत्रीयाः तृचा—'अग्निं दूतं वृणीमहे (साम० ७९०-९२) 'मित्रं वयं हवामहे' (साम० ७९३-९५) 'इन्द्रमिद्राथिनो बृहत्' (साम० ७९६-९८) इन्द्रे अग्ना नमो वृहत्' (साम० ८००-८०२) इति चत्वारः स्तोत्रीयास्तृचा होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकैः क्रमेण प्रयोज्यमानानां चतुर्णामाज्यस्तोत्राणां स्तोत्रीयास्तृचाः। स्तोमः—बहिष्पवमानोक्तः अमीषां चतुर्णां पञ्चदशः स्तोमः। साम—आज्यस्तोत्र तृचस्तोत्रीयासु गातव्यं गायत्रं साम। (तां० ब्रा० सा० ११।७) विष्टुतिः द्र० पञ्चदशस्तोमविष्टुति—। इत्याज्यस्तोत्राणि (आज्यानि) इति।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातः सवने होतुराज्यशस्त्रस्य जपः, आहावः, तूष्णीं शसः निवित्पदानि (ऋ० खि० ५।५।१)। इति सर्वमैकाहिकम् (तु०—आ०श्रौ० ५।९।१-१४ श्रौ० को० २ भा०

पृ० २३-२२५) आज्यसूक्तम्—'अग्निं दूतं वृणीमहे' (ऋ० १ ।१२ ।१-११) ऐ० ब्रा० ३१; आ०श्रौ० ७ ।१० ।३)। सूक्तान्त्या शस्त्रपरिधानीया—'अग्ने शुक्रेण' (ऋ० १ ।१२ ।१२)। शस्त्वाजपः, शस्त्रयाज्या चैकाहिके। इति। **द्र०** आहाव—, आहावप्रदेश— **द्र०**। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराज्यशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातः सवने होतुः प्रउगशस्त्रस्य प्रथमा पुरोरुक्—'वायुरग्रेगाः' (ऋ० खि० ५ ।६ ।१)। ततो वायव्यः प्रथमस्तृचः—'वायो ये ते सहस्रिणः' (ऋ० २ ।४१ ।१-२), 'तीव्राः सोमासः आ गहि' (ऋ० १ ।२३ ।१)। द्वितीया पुरोरुक्—'हिरण्यवर्तनी' (ऋ० खि० ५ ।६ ।३)। ततस्तृतीयो मैत्रावरुणस्तृचः—'अयं वां मित्रावरुणा' (ऋ० २ ।४१ ।४-६)। चतुर्थी पुरोरुक्-'दैव्या अध्वर्यू' (ऋ० खि० ५ ।६ ।४)। तत् चतुर्थ आश्विनस्तृचः 'गोमदूषु नासत्या' (ऋ० २ ।४१ ।७-९)। पञ्चमी पुरोरुक् 'इन्द्र उक्थेभिः' (ऋ० खि० ५ ।६ ।५)। ततः पञ्चम ऐन्द्रस्तृचः—'इन्दो अङ्ग महत्' (ऋ० २ ।४१ ।१०-१२)। षष्ठी पुरोरुक्—'विश्वान् देवान्' (ऋ० खि० ५ ।६ ।६)। ततः षष्ठो वैश्वदेवस्तृचः—'विश्वे देवास आगत' (ऋ० २ ।४१ ।१३-१५)। सप्तमी पुरोरुक्—'वाचा महीम्' (ऋ० खि० ५ ।६ ।७। ततः सप्तमः सारस्वतस्तृचः—'अम्बितमे नदीतमे (ऋ० २ ।४१ ।१६-१७) सारस्वतान्त्या शस्त्रपरिधानीया—'इमा ब्रह्म सरस्वति' (ऋ० २ ।४१ ।१८)। शस्त्वा जपः—'उक्थं वाचि श्लोकाय त्वा'। शस्त्रयाज्या—'विश्वेभिः सोम्यम्' (ऋ० १ ।१४ ।१० आ०श्रौ० ५ ।१० ।४-१०;७ ।१० ।१)। इति प्रउगपुरोचां तृचानां चैवमेव शस्योपायक्रमः सर्वत्र द्रष्टव्यः। तृचास्तु यथा विहितास्तत्र तत्र भिद्यन्ते चेति विशेषोऽवधेयः। इति प्रउगशस्त्रमभिप्लवषडहस्य द्वितीयाहर्वद् भवति (तु०—आ०श्रौ० ७ ।६ ।२)। शस्त्रशंसनप्रकारः—**द्र०** अग्निष्टोमे होतुः प्रउगशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातः सवने मैत्रावरुणशस्त्रस्य षडहस्तोत्रियस्तृचः—'मित्रं वयं हवामहे' (ऋ० १ ।२३ ।४-६)। स्वः—स्तोत्रियस्तृचः—मित्रं हुवे पूतदक्षम्' (ऋ० १ ।२ ।७-९) आरम्भणीया—'ऋजुनीती नो वरुणः' (ऋ० १ ।९० ।१)। पञ्चदशस्तोमातिशंसन (वृद्धि)-निमित्तः परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः—**द्र०** अभिप्लवषडहस्य द्वितीयेऽहनि मैत्रावरुणशस्त्र— पर्यायतृचः, शस्त्रपरिधानीया, शस्त्वाजपः शस्त्रयाज्या च प्रथमाहर्वत् **द्र०**। **द्र०** आहाव—, आहावप्रदेश—। शस्त्रशंसनप्रकार—अग्निष्टोमे प्रातः सवने मैत्रावरुणशस्त्रशंसनप्रकारवद् **द्र०**।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि प्रातः सवने मैत्रावरुणशस्त्रस्य षडह-

स्तोत्रियस्तृचः— 'इन्द्र मिद्गाथिनो बृहत्' (ऋ० १ ।७ ।१-३) । श्वः स्तोत्रियानुरूपस्तृचः—'इन्द्रेण सं हि दृक्षसे' (ऋ० १ ।६ ।७-९) । आरम्भणीया—'इन्द्रं वो विश्वतस्परि' (ऋ० १ ।७ ।१०) । पञ्चदशस्तोमातिशंसन (वृद्धि) निमित्तः परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः—**द्र०** अभिप्लवषडहस्य द्वितीयेऽहनि ब्राह्मणाच्छंसिशस्त्र— । पर्यासतृचः, शस्त्रपरिधानीये, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहवत्—**द्र०** आहावः आहावप्रदेशशस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसि शस्त्रशंसनप्रकारवद्—**द्र०** ।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि अच्छावाकशस्त्रस्य प्रातःसवने षडहस्तोत्रियस्तृचः 'इन्द्रे अग्ना नमो बृहत्'—(ऋ० ७ ।९४ ।४-६) । श्वः स्तोत्रीयानुरूपस्तृचःता हुवे ययोरिदम्' (ऋ० ६ ।६० ।४-६) । आरम्भणीया—'यत्सोम आ सुते नरः' (ऋ० ७ ।९७ ।१०) । पञ्चदशस्तोमातिशंसन (वृद्धि) निमित्तः परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः—**द्र०** अभिप्लवषडहस्य द्वितीयेऽहनि अच्छावाकशस्त्र— । पर्यासतृचः, परिधानीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत्—**द्र०** आहावः, आहावप्रदेश— । शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने अच्छावाकशस्त्रशंसनप्रकारवद्— **द्र०** ।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनपवमान स्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रीयातृचाः—'वृषा पवस्य धारय' (साम० ८०३-५) इति प्रथमस्तृचः, 'पुनानः सोमधारय (साम० ६७५-७६) इति द्वितीयस्तृचः, 'वृषा शोणो अभिकनिक्रद्वा ? (साम० ८०६-८) इति तृतीयस्तृचः । सामानि-तत्र प्रथमे तृचे गायत्रं यौक्ताश्वमिति द्वे साम्नी । द्वितीये तृचे प्रथममिडानिधनमायास्याम्, द्वितीयं त्रिणिधनमायास्यामिति द्वे सामनी । तृतीये तृचे वासिष्ठं सामेति पञ्च सामानि । स्तोमः—एते त्रयस्तृचा आवृत्त्या सह पञ्चदश स्तोत्रीयास्तृचाः सम्पन्ना अतः पञ्चदशः स्तोमः । (तां० ब्रा० सा० ११ ।८) विष्टुतिः— **द्र०** पञ्चदशस्तोमविष्टुति— ।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने स्तोत्रीयास्तृचाः 'त्वमिद्धि हवामहे' (साम० ८०९-१०) इति होतुः पृष्ठस्तोत्रस्य प्रगाथस्तोत्रीयस्तृचः प्रथमः । मैत्रावरुणस्य पृष्ठस्तोत्रस्य चोदकप्राप्तः (कयानश्चित्र साम० ६८२-८४) द्वितीयस्तृचः ।'अभि प्र वः सुराधसम्' (साम० ८११-१२) इति ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रस्य तृतीयः स्तोत्रीयस्तृचः । 'त्वामिदाह्यो नर' (साम० १ ८१३-१४ इति अच्छावाकस्य पृष्ठस्तोत्रस्य चतुर्थः स्तोत्रीयस्तृचः । सामानि-तत्र प्रथमे तृचे बृहत्साम, द्वितीये चोदकप्राप्तं वामदेव्यं साम । तृतीये तृचे श्येतं साम । चतुर्थे तृचे अर्धेडं माधुच्छसं साम । इति चत्वारि सामानि । स्तोमः—एतेषु चतुर्षु पृष्ठस्तोत्रेषु पञ्चदशः स्तोमो

भवति (तां० ब्रा० सा० ११।९)। स्तोमविष्टुतिः द्र० पञ्चदशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुर्मरुत्वतीय शस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृचः— 'विश्वानरस्य वस्पतिम्' (ऋ० ८।६८।४-६)। अनुचरस्तृचः—'इन्द्र इत्सोमपा एकः' (ऋ० ८।२।४-६)। इन्द्रनिहवः प्रगाथः—ऐकाहिकः। ब्राह्मणस्पत्यः प्रगाथः—'उत्तिष्ठ ब्रह्मणस्पते' (ऋ० १।४०।१-२; आ०श्रौ० ७।३।४-५)। धाय्याः— ऐकाहिकाः मरुत्वतीयः प्रगाथः- 'वृहदिन्द्राय गायत' (ऋ० ८।८९।१-२; आ०श्रौ० ७।३।४;६; ७।५।२२)। निविद्धानीयं सूक्तम्— 'इन्द्र सोमं सोमपते' (ऋ० ३।३२।१-१६)। निवित्पदानि-ऋ०खि० ५।५।२) शस्त्रपरिधानीया—'शुनं हुवेम मघवानम्' (ऋ० ३।३२।२७)। शस्त्वाजपः,— शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१४।२६) प्रत्यक्षमनाम्नानात्। इति मरुत्वतीयशस्त्रम्। द्र० आहाव—, आहावप्रदेश। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य ऐकाहिकौ स्तोत्रियानुरूपौ प्रगाथौ—'त्वामिद्धि हवामहे' (ऋ० ६।४६।१-२); 'त्वं ह्येहि चे रवे' (ऋ० ८।६१।७-८) बृहत्पृष्ठत्वात् (तु०— आ०श्रौ० ५।१५।३; ७।५।३; श्रौ० को० २ भा० पृ० ३९२-२३)। धाय्या ऐकाहिका (आ०श्रौ० ५।१५।२१ श्रौ० को० २ भा० पृ० ३९३)। सामप्रगाथः— 'उभयं शृणवच्च नः' (ऋ० ८।६१।१-२)। तार्क्ष्यसूक्तम्—'त्यमू षु वाजिनम्' (ऋ० १०।१७८। १-३)। निविद्धानीयं सूक्तम्—'या त ऊतिखमा' (ऋ० ६।२५।१-९)। तत्र नवमीं पूर्वमष्टमीं पश्चात् शंसेत् इति विपर्यासो द्रष्टव्यः (तु०—आ०श्रौ० ७।६।४)। निवित्पदानि (ऋ० खि० ५।५।३)। शस्त्रपरिधानीया—'अनु ते दायिमहः' (ऋ० ६।२५।८)। इति विपर्यस्ताऽष्टमी स्यात् अथवा नवमी। शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत्। द्र० आहाव—, आहावप्रदेश द्र०। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्निष्केवल्यशस्त्रशंसनप्रकारवद् अत्र विशिष्टशंसनप्रकारोऽभिप्लवषडहस्य द्वितीयेऽहनि होतुर्निष्केवल्यशस्त्रवच्च द्रष्टव्यः।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य ऐकाहिकः स्तोत्रीयस्तृचः-'कया नश्चित्र आ' (ऋ० ४।३१।१-३)। ऐकाहिकः अनुरूपस्तृचः—'कया त्वं नः' (ऋ० ८।९३।१९-२१)। चातुर्विंशिकः स्तोत्रियः प्रगाथः— 'माचिदन्यदविंशत' (ऋ० ८।१।१-२)। चातुर्विंशिकः अनुरूपः प्रगाथः—'माचिद्धि जना इमे' (ऋ० ८।१।३-४)। कद्वत्प्रगाथः,-आरम्भणीया, अहरहः शस्यसूक्तम् प्रथमाहर्वत्—द्र० चातुर्विंशिकाहीन सूक्त-

स्थाने सम्पातसूक्तम्—'यन्न इन्द्रो जुजुषे' (ऋ० ४।२२; आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत् द्र०। द्र० सम्पातसूक्त—, आहाव, शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिने मैत्रावरुणशस्त्रशंसन-प्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियः प्रगाथः-'अत्रि प्र वः सुराधसम्' (ऋ० ८।४९।१-२; आ०श्रौ० ७।४।३)। अनुरूपः प्रगाथः—'प्र सु श्रुतं सुराधसम्' (ऋ० ८।५०।१-२; आ०श्रौ० ७।४।३)। कद्वत्प्रगाथः, 'आरम्भणीया, अहरहः शस्यसूक्तं प्रथमाहर्वत्। चातुर्विंशिका-अहीन सूक्तस्थाने सम्पातसूक्तम्— 'य एक इद्धव्यश्चर्षणीनाम्' (ऋ० ६।२२; आ० श्रौ० ७।५।२०)। शस्त्र परिधानीया च प्रथमाहर्वत् द्र०। द्र० सम्पातसूक्त—, आहाव-, आहावप्रदेश द्र०। शस्त्रशंसनप्रकारः— अग्निष्टोमे माध्यन्दिने ब्राह्मणाच्छंसि शस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि माध्यन्दिनसवने अच्छावाकशस्त्रस्य स्तोत्रियः प्रगाथः त्वामिदद्यो नरः' (ऋ० ८।९९।१-२; आ०श्रौ० ७।४।४)। अनुरूपः प्रगाथः—'वयमेनमिदाह्यः' (ऋ० ८।६३।७-८); आ०श्रौ० ७।४।४)। कद्वत्प्रगाथः, आरम्भणीया अहरहः शस्यसूक्तं प्रथमाहर्वत् द्र० चातुर्विंशिका अहीनसूक्तस्थाने सम्पातसूक्तम्— 'इच्छन्ति त्वा सोम्यासः' (ऋ० ३।३३, आ०श्रौ० ७।५।२०) शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत् द्र० सम्पातसूक्त-, आहाव—, आहाव प्रदेश शस्त्रशंसनप्रकारः— अग्निष्टोमे माध्यन्दिने अच्छावाकशस्त्रशंसन-प्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि आर्भवपवमान-स्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणे तृतीयसवने द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य द्वितीयेऽहनि आर्भवपमानस्यस्तोत्रीयास्तृचाः— 'यस्ते मदो वरेण्यम्' (साम० ८१५-) 'पवस्व मधुमत्तम्' (साम० ६९२) 'इन्द्रमच्छ सुता इमे'(साम० ६९४) इति प्रथमस्तृचः। 'अयं पूषा रयिर्भगः' (साम० ८१८-२०) इति द्वितीयस्तृचः। 'वृषामतीनां पवते विचक्षणः' (साम० ८२१-२३) इति तृतीयस्तृचः इत्येते त्रयस्तृचा आर्भवपवमानस्य स्तोत्रीयास्तृचाः। सामानि—तत्र प्रथमे तृचे प्राकृतं गायत्रं साम। पुनरावृत्ते तस्मिन्नेव तृचे हविष्मतं साम, तस्यैव प्रथमायामृचि शङ्कु साम, तृतीयां च सुज्ञानं स्वर्णिधनं साम। द्वितीयस्य तृचस्याद्यायामृचि गौरीवितं साम, तृचे च क्रौञ्चं तृतीये तृचे यामं साम। स्तोमः— सर्वासां स्तोत्रीयाणां परिगणने पञ्चदशः स्तोमः (तां० ब्रा० सा० ११।१०)। स्तोमविष्टुतिः—द्र० पञ्चदशस्तोम-विष्टुति—। इत्यार्भवपवमानस्तोत्रम्।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र

चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि तृतीयसवने अग्निष्टोमस्तोत्रस्य प्रगाथ-तृचः—'यज्ञायज्ञा वः' (साम० ७०३-४)। साम-यज्ञा यज्ञीयं अग्निष्टोम साम (प्राकृतम्)। स्तोमः—पञ्चदशः। विष्टुतिः द्र० पञ्चदशस्तोमविष्टुति—। इत्यग्निष्टोमस्तोत्रम्। अग्निष्टोमस्तोत्रं सर्वत्र वैश्वदेवशस्त्रादूर्ध्वमाग्निमारुतशस्त्राच्च पूर्वं गातव्यम्।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि उक्थ्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठयषडहस्य द्वितीयेऽहनि तृतीयसवने उक्थस्तोत्रतृचाः 'एह्यषु ब्रवाणि ते' (साम० ७०५-७) इति मैत्रावरुणोक्थस्य प्रथमः स्तोत्रीयस्तृचः। 'एवाह्यसि वीरयुः' (साम० ८२४-२६) इति ब्राह्मणाच्छंस्युक्थस्य द्वितीयः स्तोत्रीयस्तृचः। 'इन्द्रं विश्वा अवीवृधन्' (साम० ८२७-२९) इति अच्छावाकोक्थस्य तृतीयस्तृचः। इति त्रयाणां उक्थस्तोत्राणां त्रयस्तृचाः। सामानि—तत्र मैत्रावरुणोक्थे साकमश्वं साम, ब्राह्मणाच्छंस्युक्थे आमहीयवं साम गायत्रीषु गायत्रं साम इति द्वे सामनी। अच्छावाकोक्थे आष्टादंष्ट्रे द्वे सामनी इति पञ्च सामानि। स्तोमः—गायत्रीषु पञ्चदशः स्तोमः। तत्र पूर्वस्य आष्टादंष्ट्रस्य ऐयाहा इति स्तोमः अपरस्य आष्ट्रा दंष्ट्रस्य ऐयादो इति स्तोमः। (तु०—तां० ब्रा० सा० ११।११)। विष्टुति—द्र० पञ्चदशस्तोमविष्टुति—। इत्युक्थस्तोत्राणि।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुर्वैश्वदेवशस्त्र—** (हौ०) सोम- यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य अभिप्लवषडहस्य द्वितीयस्याह्नः शस्यमेव तृतीयसवने शस्यं भवति। (तु०—आ०श्रौ० ७।१०।२ नारायणः) तत्र प्रतिपत्तृचः—'विश्वो देवस्य वेतुः' (ऋ० ५।५०।१); 'तत्सवितुर्वरेण्यम्' (ऋ० ३।६२।१०-११, आ०श्रौ० ७।६।६)। अनुचरस्तृचः—'आ विश्वदेवं सत्पातम्' (ऋ० ५।८२।७-९ आ०श्रौ० ७।६।६) इति वशिष्टं चातुर्विंशिकाभि प्लविक शस्यम। प्रथमं सावित्रं निविद्धानीयसूक्तम्—'उदुष्य देवः' (ऋ० ७।७१।१-३)। निवित्पदान— ऋ० खि० ५।५।४। धाय्या—आ०श्रौ० ५।१८।५। द्वितीयं द्यावापृथिवीयं निविद्धानीयसूक्तम्—'ते हि द्यावापृथिवी' (ऋ० १।१६०।१-५)। निवित्पदानि ऋ०खि० ५।५।५। धाय्या—आ०श्रौ० ५।१८।५। तृतीयमार्भवं निविद्धानीयसूक्तं—'तक्षन् रथं सुवृतम्' (ऋ० १।१११।१-५, आ०श्रौ० ५।१८।५)। निवित्पदानि-ऋ०खि ५।५।६। धाय्याः—(आ०श्रौ० ५।१८।५)। चतुर्थं वैश्वदेवं निविद्धानीयसूक्तम्—'यज्ञस्य वो रथ्यम्' (ऋ० १०।९२।१-१५)। निवित्पदानि—(ऋ० खि० ५।५।७)। शस्त्रपरिधानीया—(ऋ० १।९९।१०)। शस्त्वाजपः, शस्त्रयाज्या च (आ०श्रौ० ५।१२।१३; ७।६।६; ७।१०।१-२)। शस्त्रशंसनप्रकारः— अग्नि ष्टोमे होतुर्वैश्वशस्त्रशंसनप्रकारवद्— द्र०। द्र० आहाव—, आहावप्रदेश—।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि होतुराग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र, चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीयेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य

चातुर्विंशिकं शंस्य भवति। 'चातुर्विंशिकं तृतीयसवनम्' (आ०श्रौ० ७।६।६) इत्युक्त्वात्। तद्यथा शस्त्रारम्भणीया (ऋ० २।३३।१; ऐ० ब्रा० ३।३४)। प्रथमं वैश्वानरीयं निविद्धानीयसूक्तम्-'पृक्षस्य वृष्णो अरुषस्य' (ऋ० ६।८।१-७)। निवित्पदानि—ऋ० खि० ५।५।८। रौद्री धाय्या—ऋ० १।४३।६। द्वितीयं मारुतं निविद्धानीयसूक्तम्—'वृष्णे शर्धाय' (ऋ० १।६४।१-१५)। निवित्पदानि—ऋ० खि० ५।५।९। अग्निष्टोमसामस्तोत्रियः प्रगाथः—ऋ० ६।४८।१-२; आ०श्रौ० ५।२०।६। अग्निष्टोमसामानुरूपः प्रगाथः (ऋ० ७।१६।११-१२। ५।२०।६)। जातवेदस्या—'जातवेदसे सुनवाम्' (ऋ० १।९९।१)। तृतीयमग्निदेवत्यं जातवेदस्यं निविद्धानीयसूक्तम्—'यज्ञेन वर्धत जातवेद समग्निम्' (ऋ० २।२।१-१३)। निवित्पदानि—ऋ० खि० ५।५।१०)। आपो हिष्ठीयस्तृचः—ऋ० १०।९।१-३)। ऋगेका—ऋ० ६।५०।१४ आ० श्रौ० ५।२०।६। देवपत्नीदेवत्ये ऋचौ—ऋ० ५।४६।७-८; आ०श्रौ० ५।२०। ६। राका देवत्ये ऋचौ—ऋ० २।३२।४-५; आ०श्रौ० ५।२०।६। सरस्वती देवत्यैका—ऋ० ६।४९।७; आ०श्रौ० ५।२०।६। याम्यावृथौ—ऋ० १०। १४।४; ३; आ०श्रौ० ५।२०।६। पित्र्या ऋचः—ऋ० १०।१५।१; ३;२; आ०श्रौ० ५।२०।६। स्वादुष्किलीया ऋचः—ऋ० (आहावः प्रतिगर्हित) ६।४७।१-४) आ०श्रौ० ५।२०,६। वैष्णुवारुणी—आ०श्रौ० ५।२०।६। वैष्णवी-ऋ० १।१५४।१ आ०श्रौ० ५।२०।६। प्राजापत्या ऋ० १०।५३।६; । आ०श्रौ० ५।२०।६)। शस्त्रपरिधानीया—ऋ० ४। १७।२०; आ०श्रौ० ५।२०।६। शस्त्वा जपः—आ०श्रौ० ५।२०।८। शस्त्र-याज्या—ऋ० ५।६०।८; आ०श्रौ० ५।२०।८। इति **द्र०** आहाव—, आहावप्रदेश प्रागिर—। शस्त्रशंसन-प्रकारः— अग्निष्टोमे होतुराग्निमारुतशस्त्र-शंसनप्रकारव— **द्र०**।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीये उक्थ्यसंस्थेऽहनि तृतीयसवने मैत्रावरुणशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः **द्र०** उक्थ्ये मैत्रावरुणशस्त्र—**द्र०**। (तु०—ऐ० ब्रा० ३।४९-५०; ६।१४ आ०श्रौ० ६।१। २।७।८।१)।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—**सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीये उक्थ्यसंस्थेऽहनि तृतीयसवने ब्रह्मणाच्छंसिशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः **द्र०** उक्थ्ये ब्राह्मणाच्छंसिशस्त्र—ऐ० ब्रा० ३। ४९-५०; ६।१४-१० आ०श्रौ० ६।१। २।८।२)।

**पृष्ठ्यषडहस्य द्वितीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य द्वितीये उक्थ्यसंस्थेऽहनि तृतीयसवने अच्छावाकशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः **द्र०** उक्थ्ये अच्छावाकशस्त्र—। (तु०—ऐ० ब्रा० ३। ४८-५०; ६।१४-१५, आ०श्रौ० ६।१। २; ७।८।३)।

**पृष्ठ्यषडहस्य तृतीयस्याह्नो-निर्वाहक–** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढसत्रद्वादशाहप्रकरणे द्वादशाहगतनवरात्रे पृष्ठ्यषडहस्य तृतीयस्याह्नो विश्वे- देवाः देवताः, सप्तदशः स्तोमः वैरूपं साम, जगती छन्दः इत्येतानि देवतास्तोमसामच्छंदासि द्वादशाहगत नवरात्रस्य तृतीयमहर्निर्वहन्ति। (तु०—ऐ० ब्रा० ५ ।१)।

**पृष्ठ्यषडहस्य तृतीयेऽहनि बहिष्पवमानस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातः सवने बहिष्पवमानस्य स्तोत्रीयास्तृचाः—'दविद्युतत्यां रुचा' (साम० ६५४-५६)। इति प्रतिपदाद्यस्तृचः। 'एते असृग्रमिन्दवः' साम० ८३०-३२) इति द्वितीयोऽनुरूपाख्यस्तृचः। 'राजा मेधाभिरीयते' (साम० ८३३-३५) इति तृतीयस्तृचः 'पवमानस्य ते वयम्' (साम० ७८७-८९) इति तृतीयस्याह्नो बहिष्पवमानस्य उत्तमश्चतुर्थस्तृचः सामपञ्चर्चं पञ्च साम। स्तोमः—सप्तदशस्तोत्रीयात्मकः सप्तदशः स्तोमः। स्तोमविष्टुतिः (तु०—तां० ब्रा० सा० १२ ।१)। विष्टुतिः द्र० सप्तदशस्तोमविष्टुति। इति बहिष्पवमानस्तोत्रम्।

**पृष्ठ्यषडहस्य तृतीयेऽहनि आज्यस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातः सवने 'अग्निनाग्नि आज्य स्तोत्र तृचाः—समिध्यते' (साम० ८४४-४६) इति होतुराज्यस्य प्रथमः स्तोत्रीयस्तृचः। 'मित्रं हुवे पूतदक्षम् (साम० ८४७-४९) इति मैत्रावरुणस्याज्यस्य द्वितीयस्तोत्रीयस्तृचः। 'इन्द्रेण सं हि दृक्षसे' (साम० ८५०-५२) इति ब्राह्मणाच्छंसिन आज्यस्य तृतीयस्तोत्रीयस्तृचः। 'ता हुवे ययोरिदम्' (साम० ८५३-५५)। इति अच्छावाकस्याज्यस्य चतुर्थ-स्तोत्रीयस्तृचः। इत्येते चत्वारस्तृचा चतुर्णां आज्यस्तोत्राणां स्तोत्रीयास्तृचाः। साम— गायत्रं साम—स्तोमः सप्तदशः स्तोम (तु०—तां० ब्रा० सा० १२ ।२) विष्टुतिः द्र० सप्तदशस्तोमविष्टुति—। इत्याज्यस्तोत्राणि (आज्यानि)।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुराज्यशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातः सवने होतुराज्यशस्त्रस्य जपः—समुत्पद्वग्द...। आहावः—शोऽसावोम्। प्रतिगरः—शो सामो दैव। तूष्णीं शंसः—भूरग्निर्ज्योतिरग्नोऽम्...। निवित्पदानि (ऋ० खि० ५ ।५ । १)। सूक्तम्—'युक्ष्वा हि हेवहूतमाम्' (ऋ० ८ ।७५ ।१-१५। आ०श्रौ० ७ ।१० ।४) शस्त्रपरिधानीया—'विद्मा हिते पुरा' (ऋ० ८ ।७५ ।१६)। शस्त्वा जपः—'उक्थं वाचि घोषाय त्वा'। शस्त्रयाज्या—'अग्न इन्द्रश्च' (ऋ० ३ ।२५ ।४; आ०श्रौ० ५ ।९ ।१-१६; श्रौ०को० २ भा० पृ० ३२३-२६)। द्र० आहाव–, आहावप्रदेश–। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराज्यशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुःप्रउगशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रातःसवने होतुः प्रउगशस्त्रस्य प्रथमा पुरोरुक्—'वायुरग्रेगाः

(ऋ० खि० ५ ।६ ।१) ततः प्रथमो वायव्यस्तृचः—'वायवायाहि वीतये' (ऋ० ५ । ५१ ।१ इत्येका), 'वायो याहि शिवा दिवः' (ऋ० ८ ।२६ ।२३-२४) आ०श्रौ० ७ । १० ।५ इति द्वे । द्वितीया पुरोरुक्—'हिरण्यवर्तनी—' (ऋ० खि० ५ ।६ ।२) । ततो द्वितीय ऐन्द्रवायवस्तृचः—'इन्द्रश्च वायवेष सुतानाम् (ऋ० ५ ।५१ ।६-७ आ०श्रौ० ७ ।१० ।५) तत्र प्रथमाभ्यासेन द्वितीयाभ्यासेन वा तृचः कर्तव्यः । द्वयोर्ऋचोस्तृचत्वसंपादनायान्यतरा द्विरावर्तनीया (तु० ऐ० ब्रा० ५ ।१ सा० भा०) तृतीया पुरोरुक्—'काव्या राजाना' (ऋ० ५ ।६ ।३) । ततः तृतीयो मैत्रावरुणस्तृचः—'आ मित्रे वरुणे' (ऋ० ५ ।७५ ।१-३) । चतुर्थी पुरोरुक्—'दैव्या अध्वर्यू' (ऋ० खि० ५ ।६ ।४) । ततश्चतुर्थ आश्विनस्तृचः—'अश्विनावहे गच्छतम्' (ऋ० ५ ।७८ ।१-३) । पञ्चमी पुरोरुक्—'इन्द्र उक्थेभिः (ऋ० खि० ५ ।६ ।५) । ततः पञ्चम ऐन्द्रस्तृचः—'आ याह्यद्रिभिः सुतम्' (ऋ० ५ ।४० ।१-३) । षष्ठी पुरोरुक्—'विश्वान् देवान्' (ऋ० खि० ५ ।६ ।६) । ततः षष्ठो वैश्वदेवस्तृचः—सजूर्विश्वेभिर्देवेभिः' (ऋ० ५ ।५१ । ८-१०) । सप्तमी पुरोरुक्—'वाचा महीं' देवीम् (ऋ० खि० ५ ।६ ।७ । ततः सप्तमः सारस्वतस्तृचः—'उत नः प्रिया प्रियासु' (ऋ० ६ ।६१ ।१० । १२) । अस्मिन् तृचे प्रत्यृचं तृतीये पादेऽन्तिमानि चत्वार्यक्षराणि अभ्यस्यन्ते गायत्रस्योष्णिक्त्वसम्पादनार्थम् तत्र प्रथमायास्तृतीये पादे पादे स्तोम्याभूत् स्तोम्याभूत्, द्वितीयाया निदस्वातु निदस्वातु तृतीयाया हव्याभूत् हव्याभूत् इति त्रयश्चतुरक्षर अभ्यासा भवन्ति । (तु०—आ०श्रौ० ७ ।१० । ६ नारायणः) । औष्णिहं प्रउगमिति विधानात् इति विशेषोऽवगन्तव्यः । शस्त्रपरिधानीयासारस्वततृचान्त्या । शस्त्वा जपः— उक्थं वाचि श्लोकाय त्वा । शस्त्रयाज्या 'विश्वेभिः सोम्यम्' (ऋ० १ ।१४ ।१०) । तु०—आ०श्रौ० ५ ।१० ।४-१०; ७ ।७ । १ नारायणः, श्रौ०को० २ भा० पृ० ३३२-३३ । द्र० आहावः, आहावप्रदेश—, शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुः प्रउगशस्त्रशंसनप्रकारवद्— द्र० सारस्वतोक्तो विशेषश्च— ।

**पृष्ठ्यषडहस्य तृतीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातः सवने मैत्रावरुणस्य 'मित्रं हुवे पूतदक्षम्' (ऋ० १ ।२ ।७-९) इति षडहस्तोत्रियस्तृचः 'अयं वां मित्रावरुणा' (ऋ० २ ।४१ ।४-६) इति श्वः स्तोत्रियोऽनुरूपस्तृचः (तु०—ऐ० ब्रा० आ०श्रौ० ७ ।२ । २;६) । आरम्भणीया—ऋजुनीती नो वरुणः (ऋ० १ ।९० ।१) । सप्तदशस्तोमातिशंसन वृद्धि (निमित्तकः) परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः—द्र० अभिप्लवषडहस्य तृतीयेऽहनि मैत्रावरुणस्य शस्त्र- । पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहवत्—द्र० आहाव—आहावप्रदेश— । शंसनप्रकारः—अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य तृतीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोम- यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौव्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातः सवने ब्राह्मणाच्छंसिनः 'इन्द्रेण सं हि

दृक्षसे' (ऋ० १।६।७-९) इति षडह स्तोत्रियस्तृचः। श्वः स्तोत्रियस्तृचः—'आ-वह स्वधामनु' (ऋ० १।६।४; इत्येका 'इन्द्रो दधीचोऽथिभिः' (ऋ० १।८४।१३-१४) इति द्वे आरम्भणीया— 'इन्द्रं वो विश्वतस्परि' (ऋ० १।७।१०)। सप्त-दशस्तोमातिशंसन(वृद्धि) निमित्तकः परि-शिष्टतृचावापस्थानेऽधिकस्तृचावापः द्र० अभिप्लवषडहस्य तृतीयेऽहनि ब्राह्मणाच्छं-सिनः शस्त्र—। पर्यासतृचः, शस्त्रपरिधा-नीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत्—द्र०। द्र० आहाव—आहाव-प्रदेश—। शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकार-वद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-रात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि प्रातःसवने अच्छावाकस्य 'ता हुवे ययोरि-दम्' (ऋ० ६।६०।४-६) इति षडहस्तोत्रि-यस्तृचः। श्वः स्तोत्रियानुरूपस्तृचः— 'इयं वामस्य मन्मनः' (ऋ० ७।९४।१-३)। आरम्भणीया—'यत् सोम आसुते नरः' (ऋ० ७।९४।१०)। सप्तदशस्तोमातिशं-सन (वृद्धि) निमित्तकः परिशिष्टतृचावाप-स्थानेऽधिकस्तृचावापः— द्र० अभिप्लव-षडहस्य तृतीयेऽहनि अच्छावाकस्यशस्त्र-। पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत् द्र०। आहाव-, आहावप्रदेश—, शस्त्रपरिधानीया, शस्त्वा-जपः, शस्त्रयाज्या च प्रथमाहर्वत् द्र०। आहाव-, आहावप्रदेश—द्र०। शस्त्रशंसन-प्रकारः—अग्निष्टोमे प्रातःसवने अच्छावा-कशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनपव-मानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह-प्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यड-हस्य तृतीयेऽहनि माध्यन्दिनसवने माध्य-न्दिनस्तोत्रीयास्तृचाः —'उच्चा ते जात-मन्धसः' (साम० ६७२-७४) इति प्रथमः प्रतिपत्तृचः। 'अभि सोमास आयवः' (साम० ८५६-५७) इति प्रगाथो द्वितीयस्तृचः। 'तिस्रो वाच ईरयति प्र वह्निः' (साम० ८५९-६१) इति तृतीयस्तृचः। इत्येते त्रयस्तृचाः माध्यन्दिनपवमानस्य स्तोत्रीयास्तृचाः सामानि— तत्र प्रथमे तृचे गायत्रं साम, दिशो निधनं वैष्टम्भं साम चेति द्वे साम्नी। द्वितीये प्रगाथ तृचे प्रथमायां पौरुमद्गं साम, गौतमं साम, अन्तरिक्षं साम, आष्कारणिधनं काण्वं साम चेति चत्वारि सामानि। तृतीये तृचे अङ्गिरसां संक्रोश इति सप्त सामानि-स्तोमः—एतेषु विहितेषु सामसु पञ्चदशः स्तोमः। (तु०— तां०ब्रा०सा० १२।३)। स्तोमविष्टुतिः द्र० पञ्चदशस्तोमविष्टुतिः—। इति माध्यन्दिनपवमान स्तोत्रम्।

**पृष्ठ्यषडहस्य तृतीयेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहि-कस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्री-यात् तृचाः—'यद्याव इन्द्र ते शतम् (साम० ८६२-६३) इति होतुः पृष्ठस्तोत्रस्य तृचः प्रथमः। मैत्रावरुणस्य पृष्ठस्तोत्रस्य चोदक-प्राप्तः 'कया नश्चित्रः (साम० ६८२-८४) द्वितीयस्तृचः। 'वयं घ्र त्वा सुतावन्तः' (साम० ८६४-६६) इति ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रस्य तृतीयस्तृचः, 'तरणिरित् सिषा-सति (साम० ८६७-६८) इति

अच्छावाकस्य पृष्ठस्तोत्रस्य प्रगाथ (साम) तृचश्चतुर्थस्तृचः सामानि-तत्र प्रथमे तृचे पञ्चनिधनं वैरूपं पृष्ठं साम। द्वितीये तृचे चोदकप्राप्तं साम वामदेव्यं तृतीये तृचे महावैष्टम्भं दिशो निधनं साम। चतुर्थे तृचे रौरवं साम। इति सामानि। स्तोमः—ऐतेषु स्तोमस्तु पञ्चदशः स्तोमः। (तां० ब्रा० सा० १२।४)। विष्टुतिः—द्र० पञ्चदशस्तोमविष्टुति—। इति पृष्ठस्तोत्राणि।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य आहावः। प्रतिपत्तृचः—'तं तमिद्राधसे' (ऋ० ८।६८।७-९। आ० श्रौ० ७।१०।८ अनुचरस्तृचः—'त्रय इन्द्रस्य सोमाः' (ऋ० ८।२।७-९; आ० श्रौ० ७।१०।८)। शिष्टं तृतीये नाभिप्लविकेनोक्तं द्र० (तु०—आ०श्रौ० ७।१०।८)। तद्यथा—इन्द्रनिहवः प्रगाथः, ब्राह्मणस्पत्यः प्रगाथः (आ०श्रौ० ७।३।४-५), धाय्याः—ऐकाहिकाः (आ०श्रौ० ५।१४।३-६; १७ श्रौ० को० २ भा० पृ० ३८३)। चातुर्विंशिको मरुत्वतीयः प्रगाथः—'नकिः सुदासो रथम्' (ऋ० ७।३२।१०-११;५;६)। निविद्धानीयसूक्तम्—'त्र्यर्यमा मनुषः' (ऋ० ५।२९।१-४)। निवित्पदानि—(ऋ० खि० ५।५।२)। शस्त्रपरिधानीयाः 'इन्द्र ब्रह्म क्रियमाण' (ऋ० ५।२९।१५)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके। (तु०—आ०श्रौ० ५।१५।२६)। इति द्र० आहाव-आहावप्रदेशशंसनप्रकारः—अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकारवद्—द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य अयुग्मत्वात्प्रथमे रथन्तरपृष्ठे स्तोत्रियानुरूपौ प्रगाथौ—ऐकाहिकौ—'अभि त्वा शूर नो नुमः' (ऋ० ७।३२।२२-२३); 'अभि त्वा पूर्वपीतये (ऋ० ११९।९-१०, आ०श्रौ० ५।१५।२; ७।५।२)। तृतीयेऽहनि तृतीये वैरूपपृष्ठे स्तोत्रियः प्रगाथः। 'यद्द्याव इन्द्र ते शतम्' (ऋ० ८।७०।५-६) अनुरूपः प्रगाथः—'यदिन्द्र यावतस्त्वम्' (ऋ० ७।३२।१८-१९)। तु०— आ०श्रौ० ७।५४; १०।८। शिष्टं तृतीयेनाभिप्लविकेनोक्तम्। धाय्या—'यद् वा-वान' (ऋ० १०।७४।६)। यदि तु सामगा रथन्तरपृष्ठं न कुर्युस्तदा होता धाय्यानन्तरं रथन्तरपृष्ठस्य 'अभि त्वा शूर नो नुमः' (ऋ० ७।३२।२२)। इति योनिमृचं शंसति अर्धर्चशः। वैरूपपृष्ठमपि चेन्न कुर्युस्तदा तस्य 'यद्द्याव इन्द्र ते शतम्' (ऋ० ८।७०।५) इति वैरूपयोनिं शंसेत् (तु०—आ०श्रौ० ७।३।११-१२)। रथन्तरपृष्ठस्य वैरूपपृष्ठस्य चाक्रियायां धाय्या न भवति योनिभ्य ऊर्ध्वं पृष्ठसाम प्रगाथानां शंसनविधानात् (तु०—आ०श्रौ० ७।३।१६)। रथन्तरस्य सामप्रगाथः— ऐकाहिकः—'पिबा सुतस्य रसिनः' (ऋ० ८।३।१-२ आ०श्रौ० ५।१५।२१)। वैरूपपृष्ठस्य साम प्रगाथः—'इन्द्र त्रिधातु शरणम्' (ऋ० ६।४६।९-१०)। तार्क्ष्यसूक्तम्—'त्यमूषु वाजिनम्' (ऋ० १०।१७८।१-३)। निविद्धानीयसूक्तम्—'यो जात एव प्रथमः' (ऋ० २।१२।१-१४)। निवित्पदानि—ऋ० खि० ५।५।३।

शस्त्रपरिधानीया—'यः सुन्वते पचते' ऋ० २।१२।१५)। शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहर्वत् तृतीयेनाभिप्लविकेनोक्तञ्च (तु०—आ०श्रौ० ७।१०।८)। आहाव-आहावप्रदेश योनि–, योनिशंसन–, योनिस्थान—द्र०। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्निष्केवल्यशस्त्रशंसनप्रकारवद्—द्र०। अत्रोक्तः अर्धर्चशोयोनिशंसनविशेषश्च द्रष्टव्यः।

**पृष्ठ्यषडहस्य तृतीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौव्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य ऐकाहिकः आहावः। स्तोत्रियस्तृचः- 'कयानश्चित्र आभुवत्' (ऋ० ४।३१।१-३)। ऐकाहिकः अनुरूपस्तृचः—'कया त्वं नः' (ऋ० ८।९३। १९-२१)। चातुर्विंशकः स्तोत्रियः प्रगाथः 'माचिदन्यद् विशंसत' (ऋ० ८।१।१-२)। चातुर्विंशकः अनुरूपः प्रगाथः—'मा चिद्धि जना इमे' (ऋ० ८।१।३-४)। कदवत्प्रगाथः, आरम्भणीया, अहरहः शस्यसूक्तं प्रथमाहर्वत्। चातुर्विंशिका अहीनसूक्तस्थाने सम्पातसूक्तम्—'कथा महामवृधत्' (ऋ० ४। ३३, आ०श्रौ० ७।२।२०)। शस्त्रपरिधानीया, शस्त्वाजपः प्रथमाहर्वत् द्र०। सम्पातसूक्त—, द्र० आहाव—आहावप्रदेश—द्र०। शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिने मैत्रावरुणशस्त्र—शंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियस्तृचः—'वयं घ त्वा सुतावन्तः' (ऋ० ८।३३।१-३; आ०श्रौ० ७।४।३)। अनुरूपस्तृचः—'क ईं वेद सुते स च।' (ऋ० ८।३३।७-९; आ०श्रौ० ७।४।३)। कद्वत्प्रगाथः आरम्भणीया, अहरहः शस्यसूक्तम्प्रथमाहर्वत्। चातुर्विंशिकाहीनसूक्तस्थाने सम्पात- सूक्तम्—'यस्तिग्मशृङ्गो वृषभो न भीमः' (ऋ० ७।१९, आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया, शस्त्रयाज्या च प्रथमाहर्वत्। द्र० सम्पातसूक्त—, आहाव-आहावप्रदेश। शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढ द्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिने सवने अच्छावाकशस्त्रस्य स्तोत्रियः प्रगाथः— 'तरणिरित् सिषा सषि' (ऋ० ७।३२।२०-२१) अनुरूपः प्रगाथः 'तिरोभिर्वोतविदद्वसुम्' (ऋ० ८।६६।१-२; आ०श्रौ० ७।४।४)। कदवत्प्रगाथः, आरम्भणीया, अहरहः शस्त्रसूक्तम्—प्रथमाहर्वत्।चातुर्विंशिका– अहीनसूक्तस्थाने सम्पात सूक्तम्—'शासद् वह्नि (र्जनयन्त) दुहितुः (ऋ० ३।३१; आ०श्रौ० ७।५।२०)। शस्त्रपरिधानीया शस्त्रयाज्या च प्रथमाहर्वत् द्र०। द्र० आहाव–, आहावप्रदेश–। शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिने अच्छावाकशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह-

प्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रीयतृचाः तिस्रो वाच उदीरते (साम० ८६९-७१) इति प्रथमस्तृचः। 'आ सोता परिषिञ्चत' (साम० १३९४) इति प्रथमा स्तोत्रीया ऋक्, 'सखाय आ निषीदत' (साम० ११५७-) इति द्वितीया स्तोत्रीया ऋक्, 'सुतासो मधुमत्तमाः' (साम० ८७२) इति तृतीया ऋक्। संभार्यः इति द्वितीयस्तृचः पवित्रं ते विततं ब्रह्मणस्पते' (साम० ८७५-७७) इति तृतीयस्तृचः। एते तृचा आर्भपवमानस्य स्तोत्रीयास्तृचाः। सामानि—तत्र प्रथमे तृचे गायत्रं साम, पाष्ठौहं साम इति द्वे साम्नी, प्रथमायामृचि वाचः साम, द्वितीयामृचि शौक्तं साम। द्वितीये तृचे गौरीवितं साम, त्वाष्ट्री साम चेति द्वे सामनी। तृतीये तृचे त्रीडं अरिष्टं साम। इति आर्भवपवमानस्य सप्त सामानि। स्तोमः—एवं क्रियामाणेषु सामसु सप्तदशः स्तोमः। तां० ब्रा० सा० १२।५ विष्टुतिः—

**पृष्ठ्यषडहस्य तृतीयेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि तृतीयसवने प्राकृतमेवाग्निष्टोम साम। **द्र०** पृष्ठ्यषडहप्रथमाहे अग्निष्टोमस्तोत्र—।

**पृष्ठ्यषडहस्य तृतीयेऽहनि उक्थ्यस्तोत्र—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य तृतीयेऽहनि तृतीयसवने उक्थ्यस्तोत्राणां स्तोत्रीयतृचाः— 'प्रभहिष्ठाय गायते' (साम० ८७८-९) इति मैत्रावरुणोक्थस्य प्रथमस्तोत्रीयस्तृचः। 'तं ते मदं गृणीमसि' (साम० ८८०-८२) इति ब्राह्मणाच्छंस्युक्थस्य द्वितीयः स्तोत्रीयस्तृचः। 'श्रुधी हवं तिरश्च्या' (साम० ८८३-८५)। इति अच्छावाकोक्थस्य तृतीयः स्तोत्रीयस्तृचः। इति त्रयाणामुक्थस्तोत्राणां त्रयस्तृचाः। सामानि-तत्र मैत्रावरुणोक्थे प्रमं हिष्ठीयं साम। ब्राह्मणाच्छंस्युक्थे हारिवर्णं साम। अच्छावाकोक्थ्ये तैरश्चयं साम। इति त्रीणि सामानि। स्तोमः—एतेषु त्रिषूक्थेषु सप्तदशः स्तोमः इति (तु०—तां० ब्रा० सा० १२।६)। स्तोमविष्टुतिः) **द्र०** पञ्चदशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुर्वैश्वदेवशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य अभिप्लवषडहस्य तृतीयस्याह्नः शस्यमेव तृतीयसवने शस्यं भवति (तु०—आ०श्रौ० ७।१०२, नारायणः। तत्र एकाहिकौ प्रतिपदनुचरौ तृचौ— 'तत्संवितुर्वृणीमहे' (ऋ० ५।८२। १-३); 'अद्या नो देव सवितः' (ऋ० ५।८२।४-६; आ०श्रौ० ५।१८।५)। प्रथमं सावित्रं निविद्धानीयसूक्तम्-तद् देवस्य सवितुः (ऋ० ४।५३।१-७) आ०श्रौ० ७।७।२)। निवित्पदानि—ऋ० खि० ५।५।४) ऐकाहिका धाय्या (आ० श्रौ० ५।१८।५) द्वितीयं द्यावापृथिवीयं निविद्धानीय सूक्तम् (तृचसूक्तं) 'घृतेन द्यावापृथिवी' (ऋ० ६।७०-४-६; आ० श्रौ० ७।७।२)। निवित्पदानि—ऋ० खि० ५।५।५। धाय्या—ऐकाहिका— आ०श्रौ० ५।१८। ५। तृतीयमार्भवं निविद्धानीय सूक्तम्—'अनश्वो जातो अनमीशुः' (ऋ० ४।३६।१-९; आ०श्रौ० ७।७।२)। निवित्पदानि—ऋ० खि०

५ ।५ ।६)। तिस्रो धाय्याः ऐकाहिकाः आ०श्रौ० ५ ।१८ ।५) चतुर्थं वैश्वदेवं निविद्धानीयं सूक्तम्—'परावतो ये दिधिषन्त आप्यम्' (ऋ० १० ।६३ ।१-१७ आ०श्रौ० ७ ।७ ।२)। निवित्पदानि—ऋ०खि० ५ ।५ ।७। शस्त्रपरिधानीया—(ऋ० १ ।८९ । १०; आ०श्रौ० ५ ।१८ । १२)। द्र० आहाव-आहावप्रदेश—। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्वैश्वदेवशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि होतुराग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीयेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य अभिप्लवषडहस्य तृतीयस्याह्नः शस्यमेव तृतीयसवने शस्यं भवति (आ०श्रौ० ७ ।१० ।२ नारायणः)। तत्र शस्त्रारम्भणीया— (ऋ० २ ।३३ ।१; ऐ० ब्रा० ३ ।३४)। प्रथमं वैश्वानरीयं निविद्धानीयं सूक्तम्—'विश्वानराय धिषणामृतावृधे' (ऋ० ३ ।१ ।१-१५)। निवित्पदानि—(ऋ० खि० ५ ।५ ।८) रौद्री धाय्या—(ऋ० १ ।४३ । ६। द्वितीयं मारुतं निविद्धानीयसूक्तम्— 'धारावरामरुतः' (ऋ० २ । ३४ ।१-१५)। निवित्पदानि (ऋ० खि० ५ ।५ ।९)। ततः अग्निष्टोमसाम्नः स्तोत्रियः प्रगाथः—ऋ० ६ ।४८ ।१-२; आ०श्रौ० ५ ।२० ।६) अग्निष्टोमसाम्नोऽनुरूपः प्रगाथः—(ऋ० ७ ।१६ ।११-१२; आ० श्रौ० ५ ।२० ।६। जातवेदस्या—'जातवेदा से सुनवाम' (ऋ० १ ।९९ ।१) तृतीयं जातवेदस्यमग्निदेवत्यं निविद्धानीयं सूक्तम्—'त्वमग्ने प्रथमो अङ्गिराः' (ऋ० १ ।३१ ।१-१८)। निवित्पदानि—ऋ० खि० ५ ।५ ।१०। ततः आपो हिष्ठीयस्तृचः—ऋ० १० ।९ ।१-३। ऋगेका—ऋ० ६ ।५० ।१४, आ०श्रौ० ६ ।२० ।६। देवपत्नी देवत्ये ऋचौ—ऋ० ५ ।४६ ।७-८; ५ ।२० ।६। राका देवत्ये ऋचौ-ऋ० २ ।३२ ।४-५ आ०श्रौ० ५ ।२० ।६। सरस्वती देवत्यैका-ऋ० ६ ।४९ ।७ आ० श्रौ० ५ ।२० ।६। याम्यावृचौ—ऋ० १० ।१४ ।३ ।४; आ०श्रौ० ५ ।२० ।६। पित्र्या ऋचः—ऋ० १० ।१५ ।१; ३; २; आ०श्रौ० ५ ।२० ।६। स्वादुष्किलीया ऋचः—(आहावः, प्रतिगरसहिताः) ऋ० ६ ।४७ ।१-४ आ०श्रौ० ५ ।२० ।६। वैष्णुवारुणी (आ०श्रौ० ५ ।२० ।६)। वैष्णवी— (ऋ० १ ।१५४ ।१; आ०श्रौ० ५ ।२० ।६। प्राजापत्या ऋ० । १० ।५३ । ६ आ०श्रौ० ५ ।२० ।६। शस्त्रपरिधानीया—ऋ० ४ ।१७ ।२० आ०श्रौ० ५ ।२० ।६। शस्त्वाजपः—आ०श्रौ० ५ । २० ।८। शस्त्रयाज्या— ऋ० ५ ।६० ।८; आ०श्रौ० ५ ।२० ।८ इति द्र० आहाव—आहावप्रदेश—द्र० शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराग्निमारुतशस्त्रशंसनप्रकारवद्— द्र०।

**पृष्ठ्यषडहस्य तृतीयेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीये उक्थ्यसंस्थेऽहनि तृतीयसवने मैत्रावरुणशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः—द्र० उक्थ्ये मैत्रावरुणशस्त्र—ऐ० ब्रा० ३ ।४९-५०। ६ ।१४; आ०श्रौ० ६ ।१ ।२। ७ ।८ ।१।

**पृष्ठ्यषडहस्य तृतीयेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-

रात्र विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीये उक्थ्य संस्थेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः— **द्र०** उक्थ्ये ब्राह्मणाच्छंसिशस्त्र-**द्र०**। ऐ० ब्रा० ३।४९ ५०।६।१४; आ०श्रौ० ६।१।२।७।८।२।

**पृष्ठ्यषडहस्य तृतीयेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य तृतीये उक्थ्य-संस्थेऽहनि तृतीयसवने अच्छावाकशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः — **द्र०** उक्थ्ये अच्छावाकशस्त्र—**द्र०** ऐ० ब्रा० ३।४९-५०।६।१४;१५; आश्रौ० ६।१।२; ७।८।३।

**पृष्ठ्यषडहस्य चतुर्थस्याह्नो निर्वाहक—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाह प्रकरणे द्वादशाहगत-नवरात्रे पृष्ठ्यषडहस्य चतुर्थस्याह्नः वाग् देवता, एकविंशः स्तोमः, वैराजं साम, अनुष्टुप् छन्दः इत्येतानि देवतास्तोमच्छन्दांसि द्वादशाहगतनवरात्रस्य चतुर्थमहः निष्पादयन्ति निर्वहन्ति (ऐ० ब्रा० ५।४) इति चतुर्थाहस्य निर्वाहकानि भवन्ति।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोम- यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातःसवने बहिष्पवमानस्य स्तोत्रीयतृचाः—प्रथम स्तृचाः— प्र त आश्विनीः (साम० ८८६-८८) इति प्रतिपत् प्रथमस्तृचः। पवमानो अजीजनत् (साम० ८८९-९१) इति अनुरूपो द्वितीयस्तृचः। अपरौ द्वौ स्तोत्रीयानुरूपौ तृचौ—'प्र यद् गावः (साम० ८९२-९७) 'आशुरर्षे' (साम० ८९८-९०३) इति द्वौ षड्चौ. एवं बहिष्पवमानस्याष्टादशस्तोत्रीयाः।'हिन्वन्ति सूरम्' (साम० ९०४-६) इति अन्त्य-स्तृचः। तदेवं बहिष्पवमानस्य एकविंशति-संख्याका ऋचः संपद्यन्ते। सामप्राकृतम् स्तोमः— एकविंशः स्तोमः। एकविंशति संख्याक एव स्तोत्रीयाणां समूह एकविंश-स्तोमो भवति। तां० ब्रा० सा० १२।७। विष्टुतिः— **द्र०** एकविंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य चतुर्थेऽहनि प्रातःसवने आज्यस्तोत्रस्य स्तोत्रीयतृचाः— 'जनस्य गोपा अजनिष्ठ' (साम० ९०७-९) इति होतुराज्यस्य प्रथमस्तोत्रीयस्तृचः। 'अयं वां मित्रावरुणा' (साम० ९१०-१२)। इति मैत्रावरुण स्याज्यस्य द्वितीयः स्तोत्रीय स्तृचः। 'इन्द्रो दधीचो अस्थिभिः' (साम० ९१३-१५)। इति ब्राह्मणाच्छंसिन आज्यस्य तृतीयः स्तोत्रीयस्तृचः। 'इयं वामस्य मन्मनः' (साम० ९१६-१८) इति अच्छावाकस्य आज्यस्य चतुर्थः स्तोत्रीयस्तृचः। इति चत्वारस्तृचाश्चतुर्णाम। ज्यस्तोत्राणां स्तोत्रीयास्तृचाः। सामगायत्रं साम प्राकृतम्। स्तोमः—एवमुक्तेषु चतुर्ष्वाज्यस्तोत्रेषु एकविंशः स्तोमः (तां० ब्रा० सा० १२।८)। विष्टुतिः— **द्र०** एकविंश-स्तोम—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातरनुवाके न्यूङ्ख—** **द्र०** १- न्यूङ्ख—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-

रात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातः सवने होतुराज्यशस्त्रस्य शस्त्रादिजपः, आहावः, तूष्णीं शंसः, निवित्पदानि इत्यैकाहिकम् (तु०—आ०श्रौ० ५।९।१-१२ श्रौ० को० २ भा० पृ० २२३)। आज्यशस्त्रसूक्तम्—'अग्निं'स्ववृक्तिभिः (ऋ० १०।२१।१-७ : आ०श्रौ० ७।११।८)। शस्त्रपरिधानीया—'अग्ने शुष्केण शोचिषा।' (ऋ० १०।२१।८)। शस्त्वाजपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।९।२६। इति। सूक्तस्योत्तमावर्जं (शस्त्रयाज्यावर्जं) तृतीयेषु पादेषु न्यूङ्खो निनर्दश्च कार्यः इति विशेषोऽवधेयः (तु०—आ०श्रौ० ७।११।१-५; ८।२१। सूक्तस्याद्याया ऋचः अर्धर्चशंसनं विग्राहः त्रिरभ्यासः न्यूङ्खः निनर्दः वैकृतः प्रतिगरश्चेति षड्धर्मा भवन्तीति नारायणः (तु०—आ०श्रौ० ७।११।८-११।८।३४)। **द्र०** आहाव—, आहावप्रदेश-, २ न्यूङ्ख-, न्यूङ्खस्थान—, निनर्द—, प्रतिगर—। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराज्यशस्त्रशंसनप्रकारवत् साधारणः। अत्रत्यो न्यूङ्खनिनर्दप्रतिगररूपो वैशेषिकः शंसनप्रकारस्तु विशेषः।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातः सवने होतुः प्रउगशस्त्रस्य प्रथमा पुरोरुक्—'वायुरग्रेगाः' (ऋ० खि० ५।६।१)। ततः एकपाती प्रथमो वायव्यस्तृचः—'वायो शुक्रो अयामि ते' (ऋ० ४।४७।१) इत्येका। 'वीहि होत्रा अवीताः' (ऋ० ४।४८।१)। इत्येका; 'वायो शतं हरीणाम्' (ऋ० ४।४८।५ आ०श्रौ० ७।११।२२ इत्येका।)। द्वितीया पुरोरुक्—'हिरण्यवर्तिनी' (ऋ० खि० ५।६२)। ततो द्वितीय ऐन्द्रवायवस्तृचः—'इन्द्रश्च वायवेषां सोमानाम्' (ऋ० ४।४७।२-४)। तृतीया पुरोरुक्—'काव्या राजानः' (ऋ० खि० ५।६।३)। ततस्तृतीयो मैत्रावरुणस्तृचः—'आ चिकितान सुक्रतू' (ऋ० १-३)। चतुर्थी पुरोरुक्-'दैव्या अध्वर्यू' (ऋ० खि० ५।६।४)। ततश्चतुर्थ आश्विनस्तृचः—'आ नो विश्वाभिरुतिभिः' (ऋ० ८।८।१-३)। पञ्चमी पुरोरुक्—इन्द्र उक्थेभिः (ऋ० खि० ५।६।५)। ततः पञ्चम ऐन्द्रस्तृचः—'त्यमु वो अप्रहरणम्' (ऋ० ६।४४।४-६)। षष्ठी पुरोरुक्—'विश्वान् देवान्' (ऋ० खि० ५।६।६) ततः षष्ठो वैश्वदेवस्तृचः—'अपत्यं वृजिनं रिपुम्' (ऋ० ६।५१।१३-१५)। सप्तमी पुरोरुक्—'वाचा महीम्' (ऋ० खि० ५।६।७)। ततः सप्तमः सारस्वतस्तृचः—'अम्बितमे नदीतमे' (ऋ० २।४१।१६-१७। तृचान्त्या शस्त्रपरिधानीया—'इमा ब्रह्म सरस्वति' (ऋ० २।४१।१७-१८)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१०।४-१०; ७।६।२;७)। आनुष्टुभेऽस्मिन् प्रउगे वैश्वदेवस्यौष्णिहस्य तृचस्याऽऽनुष्टुभत्व सम्पत्त्यर्थं बृहतीछन्दस्कायाः परिधानीयाया अधिकानि द्वादशाक्षराणि त्रिरुत्तमेति त्रिभिर्वचनैः संकलितव्यानि इति विशेषोऽवधेयः। (तु०—आ०श्रौ० ७।११।२२ नारायणः)। **द्र०** आहाव-, आहावप्रदेशशस्त्रशंसनप्रकारः—अग्निष्टोमे होतुः प्रउगशस्त्रशंसन-

प्रकारवद्, अत्रत्या विशेषप्रकारश्च विशेषः ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीन सत्रेषु पृष्ठयषडहस्य चतुर्थेऽहनि प्रातः सवने मैत्रावरुणशस्त्रस्य षडहस्तोत्रियस्तृचः—'अयं वां मित्रावरुणा' (ऋ० २ ।४१ ।४-६) । श्वः स्तोत्रियानुरूपस्तृचः—'पुरूरुणा चिद्ध्यस्ति' (ऋ० ५ ।७० ।१-३) । आरम्भणीया— 'ऋजुनीती नो वरुणः' (ऋ० १ ।९० ।१) । एकविंशस्तोमातिशंसन (वृद्धि) निमित्तकः परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः— द्र० अभिप्लवषडहस्य चतुर्थेऽहनि मैत्रावरुणशस्त्रपर्यासतृचः, शस्त्रपरिधानीया, शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहर्वत् । द्र० आहाव-, आहावप्रदेश । शस्त्रशंसनप्रकारः अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातः सवने ब्राह्मणाच्छंसिशस्त्रस्य षडहस्तोत्रियस्तृचः—'आ दह स्वधामन' (ऋ० १ ।६ ।४); इत्येका इन्द्रो दधीचो अस्थिभिः' (ऋ० १ ।८४ ।१३-१४ इति द्वे द्वे) श्वः स्तोत्रियानुरूपस्तृचः—'उत्तिष्ठन्नोजसा' (ऋ० ८ ।७६ ।१०-१२) । आ०श्रौ० ७ । २ ।३) आरम्भणीया—'इन्द्रं वो विश्वतस्परि' (ऋ० १ ।७ ।१०-१२) । एकविंशस्तोमातिशंसन (वृद्धि) निमित्तकः परिशिष्टतृचावापस्थानेऽधिकः तृचावापः—द्र० अभिप्लवषडहस्य चतुर्थेऽहनि ब्रह्मणाच्छंसिशस्त्र— । पर्यासतृचः, शस्त्रपरिधानीया शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत् । द्र० आहाव—, आहावप्रदेश- । शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातः सवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातः सवने अच्छावाकशस्त्रस्य षडहस्तोत्रियस्तृचः—'इयं वामस्य मन्मनः' (ऋ० ७ ।९४ ।१-३) । श्वः स्तोत्रियानुरूपस्तृचः—'इन्द्राग्नी युवामिमे' (ऋ० । ६ ।६० ।७-९) । आरम्भणीया—'यत् सोम आसुते नरः' (ऋ० ७ ।९४ ।१०) । एकविंशस्तोमातिशंसन (वृद्धि) निमित्तकः परिशिष्टतृचावापस्थानेऽधिकः तृचावापः— द्र० अभिप्लवषडहस्य चतुर्थेऽहनि अच्छावाकशस्त्र— पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रयाज्या च प्रथमाहर्वत् । द्र० आहाव—, आहावप्रदेशशस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने अच्छावाकशस्त्रशंसनप्रकारवद्—द्र० ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे व्यूढद्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रीयतृचाः—'पवस्य दक्षसाधनः (साम० ९१९-२१) इति प्रथमस्तृचः । 'तवाऽहं सोम रारण' (साम० ९२२-२३) । इति द्वितीयस्तृचः । (सामान्यः प्रगाथः) पुनानो अक्रमीदभि (साम० ९२४-२६) इति तृतीयस्तृचः । इत्येते माध्यन्दिनपवमानस्य त्रयः स्तोत्रीयास्तृचाः ।

सामानि—तत्र प्रथमे तृचे गायत्रं साम, चतुर्णिधनमाथर्वणं साम, निधनकामं साम चेति त्रीणि सामानि। द्वितीये तृचे आष्ट्रादंष्ट्रं साम, आभीशवं साम, चतुर्णिधनमाङ्गिरसं साम चेति त्रीणि सामानि। तृतीये तृचे सत्तासाहीयं साम। इत्येतानि माध्यन्दिनपवमानस्य सप्त सामानि। स्तोमः— एकविंशः स्तोमः। तद्यथा 'पवस्व दक्षसाधनः'। 'तवाहं सोम' इत्यनयोस्त्रिरावृत्तयोः प्रत्येकं सामत्रयम्। तत्रैकैकस्य साम्नस्तिस्रस्तिस्रः स्तोत्रीया इत्यष्टादश सम्पद्यन्ते। अन्तिमस्य सत्रासाहीयस्य तिस्रः स्तोत्रीया इति एकविंशः स्तोमो भवति। (तां० ब्रा० सा० १२।९)। स्तोमविष्टुतिः एकविंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रस्तोत्रीयतृचाः— 'पिबा सोममिन्द्र (साम० ९२७-२९) इति होतुः पृष्ठस्य प्रथमः स्तोत्रीयस्तृचः। मैत्रावरुणस्य पृष्ठस्य द्वितीयः स्तोत्रीयस्तृचः। प्राकृतः। 'विश्वाः पूतनाः (साम० ९३०-३२) इति ब्राह्मणाच्छंसिनः पृष्ठस्य तृतीयः स्तोत्रीयस्तृचः। यो राजा चर्षणानाम्' (साम० ९३३-३४) इति अच्छावाकस्य पृष्ठस्य चतुर्थः स्तोत्रीयस्तृचः। (सामवृत्तः प्रगाथः) इत्येते चत्वारस्तृचाश्चतुर्णां पृष्ठस्तोत्राणां तृचाः। सामानि- तत्र प्रथमे तृचे सनिधनविष्टम्भं वैराजं साम। द्वितीये तृचे प्राकृतं साम (वामदेव्यम्)। तृतीये तृचे त्रैशोकं साम। चतुर्थे तृचे भारद्वाजस्य पृश्नि साम। इत्येतानि चत्वारि सामानि। स्तोमः—एतेषु पृष्ठस्तोत्रेषु एकविंशः स्तोमः। तां० ब्रा० सा० १२।१०। स्तोमविष्टुतिः— द्र० एकविंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृचः—'तं त्वा यज्ञेभिरीमहि (ऋ० ८।६८।१०।१२ आ०श्रौ० ७।११।२४) ऐकाहिकः अनुचरस्तृचः— 'इदं वसो सुतमन्धसः' (ऋ० ८।२१-३ आ०श्रौ० ७।११।२४ इन्द्र निहवः प्रगाथः—ऐकाहिकः। ब्राह्मणस्पत्यः प्रगाथः—'पैतु ब्रह्मणस्पतिः' (ऋ० १।४०।३-४)। धाय्याः ऐकाहिकाः आ०श्रौ० ५।१४।१७)। चातुर्विंशिकः मरुत्वतीयप्रगाथः—'प्र व इन्द्राय बृहते' (ऋ० ८।८९।३-४)। आ०श्रौ० ७।३।४; ६;७।५।२२)। द्विसूक्तं मरुत्वतीयम्। तत्र प्रथमनिविद्धानीयसूक्तम्—'श्रुधी हवमिन्द्र' (ऋ० २।११।१-२१) इति। द्वितीयं निविद्धानीयसूक्तम्—'मरु त्वां इन्द्रं वृषभः' (ऋ० ३।४७।१-५ आ०श्रौ० ७।११।२५)। निवित्पदानि—ऋ०खि० ५।५।२, आ० श्रौ० ७।११।२५-२६) निवित्पदानि सूक्तानामनेकभावेसर्वत्रान्त्ये सूक्ते दध्यादिति विशेषोऽवगन्तव्यः। तदुक्तम् 'अन्त्ये निविदं दध्यादनेकभावे सूक्तानाम्' (आ०श्रौ० ७।११।२६) ब्राह्मणे निविद्धानीयसूक्तान्ते—'इमं नु मायिनं हुवे' (ऋ० ८।७६।१-३) इति तृचे निवित्पदप्रक्षेपो विहतः (तु०—ऐ०ब्रा० ५।४)। शस्त्रपरिधानीया—'मरुत्वन्तं वृषभम्' (ऋ० ३।४७।५)। शस्त्वाजपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१४।

२६)। अत्र आद्यस्य निविद्धानीयसूक्तस्य तृचे आद्येऽर्धर्चादिषु न्यूङ्खः कर्तव्यः। अर्थात् श्रुधीहवीयस्य निविद्धानसूक्तस्याद्ये तृचेऽर्धर्चेषु द्वितीयाक्षरे न्यूङ्खो भवति। तत्र आदिग्रहणं न केवलं द्वितीय एवाक्षरे न्यूङ्खः कर्तव्यः इत्यर्थः किं तर्हि आद्ये तृतीये चतुर्थे वाऽक्षरे कर्तव्यो न्यूङ्ख इति गम्यते इति विशेषोऽवगन्तव्यः। (तु०—आ०श्रौ० ७। ११।२९)। नारायणः आहाव— आहावप्रदेश—, द्र०। शस्त्रशंसनप्रकारः— अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकारश्च द्र०। अत्रोक्तोन्यूङ्खःयोनिशंसनप्रकारश्च द्र०।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य युग्मत्वात् प्रथमे वृहत्पृष्ठे स्तोत्रियानुरूपौ प्रगाथौ-ऐकाहिकौ—'त्वामिद्धि हवामहे' (ऋ० ६।४६।१-२), 'त्वं ह्येहि निचेरवे' (ऋ० ८।६१।७-८ इति (तु०—आ०श्रौ० ५।१५।३;७।५।३)। द्वितीये वैराजपृष्ठे स्तोत्रीयस्तृचः—'पिबा सोममिन्द्र मन्दतु' (ऋ० ७।२२।१-३); 'श्रुधी हवं विपियानस्याद्रेः' (ऋ० ७।२२।४-६) इत्यनुरूपस्तृचः। एताः स्तोत्रियानुरूपा ऋचः षड् विराजो भवन्ति (ऋ० ७।२२। १-६) आसां षण्णामृचां मध्यमेषु पादेषु न्यूङ्खं कर्तव्यो द्वितीये एवाक्षरे आदिग्रहणाभावात्। 'ओथामो दैव' इति नित्यः प्रतिगरश्च कर्तव्यः। स च न्यूङ्खादिर्भवति (तु०— आ०श्रौ० ७।११।३०-३ नारायणः)। स्तोत्रियानुरूपा ऋचः षड् विराजो भवन्ति) ऋ० ७।२२।१-६) धाय्या-'यद्वावान' (ऋ० १०।७४।६०। यदि तु सामगा बृहत्पृष्ठं न कुर्युस्तदा होता धाय्यानन्तरं बृहत्पृष्ठस्य 'त्वामिद्धि हवामहे' (ऋ० ६।४६। १) इति योनिमृचं शंसत्यर्धर्चशः। वैराजपृष्ठमपि चेन्न कुर्युस्तदा 'पिबा सोममिन्द्र मदन्तु' (ऋ० ७।२२।१)। इति वैराजयोनिमर्धर्चशः शंसेत् (तु०— आ०श्रौ० ७।३।११-१४)। बृहत्पृष्ठस्य वैराजपृष्ठस्य चाक्रियायां धाय्या न भवति योनिभ्य ऊर्ध्वं पृष्ठसामप्रगाथानां शंसनविधानात् (तु०—आ०श्रौ० ७।३।१६)। बृहत्पृष्ठस्य सामप्रगाथः—'उभयं शृण वच्चनः' (ऋ० ८।६१।१-२) इति। वैराजपृष्ठस्य साम प्रगाथः—'त्वमिन्द्रं प्रतूतिषु (ऋ० ८।९९।५-६)। तार्क्ष्यसूक्तम्—'त्यमू षु वाजिनम्' (ऋ० १०।१७८।१-३)। द्विसूक्त- निष्केवल्यम्। तत्र प्रथमं निविद्धानीयसूक्तम् 'कुहुश्रुत इन्द्रः' (ऋ० १०।२२।१-१५)। द्वितीयं निविद्धानीयसूक्तम् 'युध्मस्य ते वृषभः' (ऋ० ३।४६।१-४ आ०श्रौ० ७।११।२८)। निवित्पदानि—ऋ० खि० ५।५।३ आ०श्रौ० ७।११।२५-२६)। निवित्पदानि सूक्तानामनेकभावे सर्वत्रान्त्ये सूक्ते दध्यादिति विशेषोऽवधेयः। ब्राह्मणे निविद्धानीयसूक्तान्ते 'त्यमु वः सत्रासहम्' (ऋ० ८।९२।७-९) इति तृचे निवित्पदप्रक्षेपो विहितः (तु०—ऐ० ब्रा० ५।५)। शस्त्रपरिधानीया—'यं सोममिन्द्र' (ऋ० ३।४६।५)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१६। २३)। अत्र आद्यस्य निविद्धानीय सूक्तस्य आद्ये तृचेऽर्धर्चादिषु न्यूङ्खः कर्तव्यः। तु०— आ०श्रौ० ७।११।२८।२-९ नारायणः) इति विशेषोऽवगन्तव्यः। अर्थात् कुहश्रुतीयस्य निविद्धानसूक्तस्याद्ये तृचेऽर्धर्चेषु

द्वितीयाक्षरे न्यूङ्खो भवति। तत्र आदिग्रहणं न केवलं द्वितीय एवाक्षरे न्यूङ्खः कर्तव्यः इत्यर्थ किं तर्हि आद्ये द्वितीये तृतीये चतुर्थे वा कर्तव्यो न्यूङ्ख इति गम्यते। ओथामो दैव इति नित्यः प्रतिगरश्च कर्तव्यः। कुहश्रुतीयानां द्वितीयेऽर्धर्चे यः प्रतिगरो न्यूङ्खादिः स प्रणवान्तश्च भवति। यः पुनः कुहश्रुतीयानामेव चतुर्थ्यादिष्वृक्षु द्वितीयेऽर्धर्चे प्रतिगरः सप्लुतादिरेवेति च विशेषोऽवगन्तव्यः, (आ०श्रौ० ७।११।३१-३२ नारायणः)। द्र० आहाव–, आहावप्रदेश–। योनि–, योनिशंसन–, योनिस्थान—द्र०। शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्निष्केवल्यशस्त्रशंसनप्रकारवद् द्र०। अत्रोक्तो योनिन्यूङ्खशंसनप्रकारश्च द्र०।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि मैत्रावरुणशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य ऐकाहिकस्तोत्रियस्तृचः— 'कयानश्चित्र आभुवत्' (ऋ० ४।३१।१-३)। ऐकाहिकः अनुरूपस्तृचः 'कया त्वं नः' (ऋ० ८।९३।१९-२१)। चातुर्विंशिकः स्तोत्रियः प्रगाथः— 'मां चिदन्यद्विशंसत' (ऋ० ८।१।१-२)। चातुर्विंशिकः अनुरूपः प्रगाथः— 'यच्चिद्धि जना इमे' (ऋ० ८।१।३-४)। कद्वत्प्रगाथः प्रथमाहर्वत्। आरम्भणीया— 'अप प्राचः' (ऋ० १०।१३१।१)। आरम्भणीयाया ऊर्ध्वं विराड् वैमृदतृचावाप। तयोः प्रथमः विराट् तृचावापः—'न ते गिरो अपि' (ऋ० ७।२२।५-७)। द्वितीयः वैमृदतृचावापः-'यजामह इन्द्रम्' (ऋ० १०।२३।१-३)। अहरहः शस्यम्— 'सद्यो ह जातः' (ऋ० ३।४८।१)। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्— 'एवा त्वमिन्द्र' (ऋ० ४।१९ ऐ० ब्रा० ६।१९ आ०श्रौ० ७।११।३४-३५)। शस्त्रपरिधानीया, शस्त्र याज्या च प्रथमाहर्वत्। अत्र पृष्ठ्यषडहस्य उत्तरस्मिंस्त्र्यहे चतुर्थदिनगतस्य एकविंशस्तोमस्य महास्तोमाऽभावात् 'को अद्य नर्यः' (ऋ० ४।२५, आ०श्रौ० ७।१२।१) इत्यष्टर्चं सूक्तं स्तोमसंख्यामतिक्रम्याऽन्यदधिकं मैत्रावरुणो नावपते। न शंसतीत्यर्थः। तदुक्तं सायणभाष्ये 'यान्यहानि महास्तोमानि सप्तदशैकविंशादिभ्योऽधिकैश्चतुर्विंशादिभिः स्तोमैर्युक्तानि स्युस्तेष्वहःसु स्तोमसंख्यामतिक्रम्याधिकानामृचां शंसनं कर्तव्यम्' इति (तु०—ऐ० ब्रा० ६।१९)। विराड्धर्मो न्यूंखादिर्न भवति (तु०—ऐ० ब्रा० ६।१९ आ०श्रौ० ७।११।३४ नारायणः)। इति विशेषोऽनुसंधेयः। द्र० महास्तोमाहन्–, महास्तोमाहः स्तोमातिशंसननिमित्तः सूक्तावाप—। 'शस्त्रशंसनप्रकारः—द्र० अग्निष्टोमे मैत्रावरुणस्तोत्रशंसनप्रकार–। संपातसूक्त–, आहाव–, आहावप्रदेश–।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि ब्राह्मणाच्छंसिशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियस्तृचः—'विश्वाः पृतनाः' (ऋ० ८।९७।१०-१२)। अनुरूपस्तृचः— 'तमिन्द्रं जो हवीमि' (ऋ० ८।९७।१३)। इत्येका, 'या इन्द्र भुज आभर' (ऋ० ८।९७।१-२)। इति द्वे (आ०श्रौ० ७।४।३)। कद्वत्प्रगाथः—प्रथमाहर्वत् आरम्भणीया—'ब्रह्मणा ते' (ऋ०

३ ।३५ ।४)। आरम्भणीयाया ऊर्ध्वं विराडवैमृदतृचावापौ । तृचोः प्रथमो विराट्तृचावापः—'तुभ्येदिमा सवना' (ऋ० ७ ।२२ ।७-८)। प्रवो महे' (ऋ० ७ ।३१ ।१० आ०श्रौ० ७ ।११ ।३४-३६)। द्वितीयो वैमदतृचावापः—'यदा व्रजं हिरण्यमिदथा रथम्' (ऋ० १० ।२३ ।३-५ आ०श्रौ० ७ ।११ ।३८) ऐ० ब्रा० सा० ६ ।१९)। अहरहः शस्यम् 'उदु ब्राह्मण्यैरत' (ऋ० ७ ।२४)। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्—'इन्द्रः पूर्भिदातिरत्' (ऋ० ३ ।३४)। शस्त्रपरिधानीया, शस्त्रयाज्या च प्रथमाहवत् । अत्र 'वने न वा' (ऋ० १० ।२९ आ०श्रौ० ७ ।१२ ।१) इत्यष्टर्चं सूक्तं स्तोमसंख्यामति क्रम्यान्यदधिकं ब्राह्मणाच्छंसीनावपते । शिष्टं पूर्ववत् । **द्र०** महास्तोमाहन्—, महास्तोमाहः स्तोमातिशंसननिमित्तः सूक्तवापः— । शस्त्रशंसनप्रकारः- अग्निष्टोमे ब्राह्मणाच्छंसिशस्त्रप्रकारवद् **द्र०** । संपातसूक्त—, आहाव—, आहावप्रदेश—**द्र०** ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य माध्यन्दिनसवने अच्छावाकशस्त्रस्य स्तोत्रियः प्रगाथः—'यो राजा चर्षणीनाम्' (ऋ० ८ ।७० ।१-२)। अनुरूपः प्रगाथः—'सत्राहा विचर्षणिः' (ऋ० ६ ।४६ ।३४)। कदवत्प्रगाथः—प्रथमाहर्वत् । आरम्भणीया— 'उरुं नः' (ऋ० ६ ।४७ ।८)। आरम्भणीयाया ऊर्ध्वं विराड्वैमदतृचापः । तयोः प्रथमो विराट् तृचापः—'प्र वो महे' (ऋ० ७ ।३१ ।१०-१२ आ० श्रौ० ७ ।११ ।३४-३५ ।३७)। द्वितीयो वैमृदतृचावापः—'यो वाचा विवाचः' (ऋ० १० ।२३ ।५-७ आ०श्रौ० ७ ।११ ।३९ ऐ० ब्रा० ६ ।१९)। अहरहः शस्यम्—'अभि तष्टेव दीधया' (ऋ० ३ ।३८)। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्—'इमामू षु प्रभृतिं सातये' (ऋ० ३ ।६६)। शस्त्रपरिधानीया, शस्त्रयाज्या च प्रथमाहवत् । अत्र 'आयाह्यर्वाडुप' (ऋ० ३ ।३४ आ०श्रौ० ७ ।१२ ।१)। इत्यष्टर्चं सूक्तं स्तोमसंख्यातिक्रम्यान्यदधिकं अच्छावाको नावपते, शिष्टं पूर्ववत् । **द्र०** महास्तोमाहन्-, महास्तोमाहः स्तोमातिशंसननिमित्तः सूक्तावाप— । शस्त्रशंसनप्रकारः अग्निष्टोमे अच्छावाकशस्त्रशंसनप्रकारवद् **द्र०** । **द्र०** आहाव—, आहावप्रदेश— ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि आर्भवपवमानस्तोत्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रीयतृचाः—'परि प्रिया दिवः' (साम० ९३५-३७)। इति प्रथमस्तृचः । 'त्वं ह्या३ङ्ग दैव्यं' (साम० ९३८-३९' इति द्वितीयस्तृचः । (सामतृचः)। 'सोमः पुनान ऊर्मिणा' (साम० ९४०-४२) इति तृतीयस्तृचः । 'पुरोजिती वो अन्धसः' (साम० ६९७-९९) इति चतुर्थस्तृचः । 'सोमः पवते जनिता' (साम० ९४३-५५) इति पञ्चमस्तृचः । इत्येते पञ्च आभवपवमानस्य स्तोत्रीयास्तृचाः । सामानि-तत्र प्रथमे तृचे गायत्रं साम, और्णायवं साम चेति द्वे साम्नी । द्वितीये तृचे वृहत्कं साम । तृतीये तृचे आतीषादीयं साम । चतुर्थे तृचे नानदं साम, आन्धीगवं चेति द्वे साम्नी । पञ्चमे तृचे वात्सप्रं साम ईनिधनम् । इत्येतानि सप्त आर्भवपवमा-

नस्य सामानि। स्तोमः— एकविंशः स्तोमः (तां० ब्रा० १२।११) विष्टुतिः—द्र० एकविंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतः....द्वादशाहिकस्य दशरात्रस्य चतुर्थेऽहनि उक्थ्यसंस्थे यज्ञायज्ञीयमग्निष्टोमस्तोत्रम् द्र० पृष्ठ्यषडहस्य प्रथमेऽहनि अग्निष्टोमस्तोत्र—। एतच्च वैश्वदेवशस्त्रादूर्ध्वमनुष्ठेयम्।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि उक्थ्यस्तोत्र—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने उक्थस्तोत्राणां स्तोत्रीयतृचाः—'अग्निं वो वृधन्तम्'(साम० ९४६-४८) इत मैत्रावरुणोक्थस्य प्रथमः स्तोत्रीयः प्रगाथतृचः। 'वयमु त्वामपूर्व्य' (साम० ७०८-९) इति ब्राह्मणाच्छंस्युक्थस्य द्वितीयः स्तोत्रीयः प्रगाथतृचः। 'इममिन्द्र सुतं पिब' (साम० ९४९-५१)। इति अच्छावाकोक्थस्य तृतीयः स्तोत्रीयतृचः। इति त्रयाणां उक्थस्तोत्राणां त्रयस्तृचाः। सामानि—मैत्रावरुणोक्थे सैन्धुक्षितं साम, ब्राह्मणाच्छंस्युक्थे सौभरं साम, अच्छावाकोक्थे वसिष्ठस्य प्रियं साम। इति सामानि। स्तोमः—एषु त्रिषु स्तोत्रेषु एकविंशः स्तोमः (तु०—तां० ब्रा० सा० १२।१२)। विष्टुतिः—द्र० एकविंशस्तोम। विष्टुति—इत्युक्थस्तो-त्राणि।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि षोडशिस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने होतुः षोडशिसाम्नः स्तोत्रीयासु सामसु च त्रयो वैकल्पिकाः पक्षाः सन्ति। ते च १-यदि 'उप नो हरिभिः' (साम० १७।९०-९२) इति द्विपदाः गायत्र्यः स्तोत्रीयाः स्युस्तदा तासु वृहत् साम षोडशिसाम। २. यदि 'असावि सोम' (साम० १०२८-३०) इति स्तोत्रीया ऋचस्तदा नानदं साम। ३-यदि 'इन्द्र जुषस्य प्रवह' (साम० ९५२-५४) इति स्तोत्रीय ऋचस्तदा गौरीवितं साम। (तु०—तां० ब्रा० सा० १२।१३।३।७।९)। ऐतरेयब्राह्मणे तु वैकल्पिकं पक्षद्वयमभिहितम्। 'अभि गोपतिं गिरा' (साम०१४८९-९१) इति स्तोत्रीयासु गौरीवितं षोडशि साम। नानदं वा षोडशि साम। तयोरुभयोः पक्षयोः सामगा अविहृतासु यदा स्तुवते तदा नानदं षोडशिसाम। यदा च विहृतासु स्तुवते तदा गौरीवितं षोडशिसाम भवति। तत्राविहृतः परस्परव्यतिषङ्गरहितो यथाधीतपाद्वः। विहृतः परस्परव्यतिषङ्गसहितः। गौरीवितपक्षे शस्त्रमपि व्यतिषङ्गेण विहृतं पठनीयम् (तु०— ऐ० ब्रा० सा० ४।२)।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि षोडशिशस्त्र— द्र०** षोडशिशस्त्रभेदक्लृप्ति—, विहृतषोडशिशस्त्र—।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्र—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रः विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य प्रतिपत्तृचः— 'विश्वो देवस्य नेतुः'(ऋ० ३।६२।१०)। 'तत्सवितुर्वरेण्यम्' (ऋ० ३।६२।१०-११ आ०श्रौ० ७।६।६-७ नारायणः ऐ० ब्रा० ५।५। अनुचरस्तृचः—'आ विश्वदेवं सत्पतिम्' (ऋ० ६।८२।७-९ आ०श्रौ० ७।६।६-७ नारायणः ऐ० ब्रा० ५।५)। अनुचरस्तृचः—'आ विश्वदेवं

सत्पतिम्' (ऋ० ५ ।८२ ।७-९ आ०श्रौ० ७ ।६ ।६-७ नारायण: ऐ० ब्रा० ५ ।५)। प्रथमं सावित्रं निविद्धानीयसूक्तम्—'आ देवो यातु सविता' (ऋ० ७ ।४५ ।१-४ ऐ० ब्रा० ५ ।५)। निवित्पदानि—(ऋ०खि० ५ ।५ ।४)। ऐकाहिका धाय्या (आ०श्रौ० ५ ।१८ ।५)। द्वितीयं निविद्धानीयसूक्तं-द्यावापृथिवीयम्—'प्र द्यावा यज्ञैः पृथिवी नमोभिः' (ऋ० ७ ।५३ ।१-३ ऐ० ब्रा० ५ ।५)। निवित्पदानि (ऋ० खि० ५ ।५ ।५)। धाय्या—ऐकाहिका आ०श्रौ० ५ ।१८ ।५)। तृतीयामार्भवं निविद्धानीय-सूक्तम्—'प्र ऋभुभ्यो दूतमिव' (ऋ० ५ ।३३ ।१-११ ऐ० ब्रा० ५ ।५) निवित्पदानि (ऋ०खि० ५ ।५ ।६)। धाय्या—ऐकाहिका आ०श्रौ० ५ ।१८ ।५)। चतुर्थं वैश्वदेवं निविद्धानसूक्तम्—(प्र शुक्रैतु देवी मनीषा' (ऋ० ७ ।३४ ।१-२५ ऐ० ब्रा० ५ ।५)। निवित्पदानि—(ऋ०खि० ५ । ५ ।७)। शस्त्र परिधानीया—(ऋ० १ । ८९ ।१० आ०श्रौ० ५ ।१८ ।१२)। अभिप्लवषडहस्य चतुर्थस्याह्नः शस्यमेव तृतीयसवने शस्यं भवति । तु०—आ०श्रौ० ७ ।१० ।२ नारायण:)। शस्त्वा जपः, शस्त्र-याज्या च (आ०श्रौ० ५ ।१८ ।१३) इत्यत्र **द्र०** । **द्र०** संपातसूक्त—, आहाव-, आहा-वप्रदेश- । शस्त्रशंसनप्रकार: अग्निष्टोमे वैश्वदेवशस्त्रशंसनप्रकारवद्— **द्र०** ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुराग्निमारुत-शस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र अहीनसत्राहर्गणेषु च पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य आरम्भणीया—'आ तेपितः' (ऋ० २ ।३३ ।१ ऐ० ब्रा० ५ ।५)। निवित्पदानि ऋ०खि० ५ ।५ ।८)। रौद्रीधाय्या। (ऋ० १ ।४३ ।६)। द्वितीयं निविद्धानीयं सूक्तम्—'क ईं व्यक्ता नरः' (ऋ० ७ ।५६ ।१-१५ । ऐ० ब्रा० ५ ।५ । निवित्पदानि (ऋ०खि० ५ ।५ ।९)। अग्निष्टोम-साम स्तोत्रियः प्रगाथ: (ऋ० ६ ।४८ ।१-२, आ०श्रौ० ५ ।२० ।६)। अग्निष्टोमसामानुरूप: प्रगाथ: (ऋ० ७ ।१६ ।११-१२ आ०श्रौ० ५ ।२० ।६)। जातवेदस्या—'जातवेदसे सुनवाम' (ऋ० १ ।९९ ।१)। तृतीयमग्निदेवत्यं जातवेदस्यं निविद्धानीय-सूक्तम्—'अग्निं नरो दीधितिभिः' (ऋ० ७ ।१ ।१-२५ ऐ० ब्रा० ५५) निवित्पदानि (ऋ०खि० ५ ।५ ।१०)। अपोहिष्ठीय-स्तृचः (ऋ० १० ।९ ।१-३ आ०श्रौ० ५ ।२० ।६)। ऋगेका-(ऋ० ६ ।५० ।१४ आ०श्रौ० ५ ।२० ।६)। देवपत्नी देवत्ये ऋचौ (५ ।४६ ।७-८) आ०श्रौ० ५ । २० ।६)। राकादेवत्ये ऋचौ (ऋ० २ । ३२ ।४-५ आ०श्रौ० ५ ।२० ।६)। सर-स्वती देवत्यैका (ऋ० ६ ।४९ ।७ आ०श्रौ० ५ ।२० ।६)। यम्यावृचौ (ऋ० १० ।१४ ।४;३ आ०श्रौ० ५ ।२० ।६)। पित्र्या ऋचः (ऋ० १० ।१५१ । ३;२ आ०श्रौ० ५ ।२० ।६)। प्रति गरसहिताः स्वादुष्किलीया ऋचः । ६ ।४७ ।१-४ आ०श्रौ० ५ ।२० ।६)। वैष्णुवारुणी (आ०श्रौ० ५ ।२० ।६)। वैष्णवी (ऋ० १ ।१५४ ।१ आ०श्रौ० ५ ।२० ।६)। प्राजापत्या (ऋ० १० ।५६ ।६ आ०श्रौ० ५ ।२० ।६ । शस्त्रपरिधानीया—(ऋ० ४ । १७ ।२० आ०श्रौ० ५ । २० ।६)। अभि-प्लवषडहस्य चतुर्थस्याह्नः शस्यमेव तृतीय-सवने शस्यं भवति। (तु०—आ०श्रौ० ७ ।१० २ नारायण: शस्त्वाजपः—(आ० श्रौ० शस्त्वा जपः (आ०श्रौ० ५ ।२० ।८)।

शस्त्र याज्या—(ऋ० ५ ।६० ।८ आ०श्रौ० ५ ।२० ।८) ।(तु०—श्रौ०को० २ भा० पृ० ४५९-६१) । द्र० आहाव-आहावप्रदेश, प्रतिगर-शंसनप्रकारः—अग्निष्टोमे होतुराग्निमारुतशस्त्रशंसनवद्द्रष्टव्यः ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे अन्यत्र चाहीनसत्राहर्गणेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने मैत्रावरुणस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः—द्र० उक्थ्ये मैत्रावरुणशस्त्र— (तु०—ऐ० ब्रा० ३ ।४९ ५० । ६ ।१४, आ०श्रौ० ६ ।१ ।२; ८ ।१ ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...प्रकरणे अन्यत्र चाहीनसत्राहर्गणेषु पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनः स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः द्र० उक्थ्ये ब्राह्मणाच्छंसिशस्त्र (तु०—ऐ० ब्रा० ३ ।४९-५०; ६ ।१४ आ०श्रौ० ६ ।१ ।२; ७ ।८ ।२ ।

**पृष्ठ्यषडहस्य चतुर्थेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत....पृष्ठ्यषडहस्य चतुर्थेऽहनि तृतीयसवने अच्छावाकस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः, द्र० उक्थ्ये अच्छावाकशस्त्र—(तु०—ऐ० ब्रा० ३ ।४९-५०; ६ ।१४ आ०श्रौ० ६ ।१ ।२; ७ ।८ ।३ ।

**पृष्ठ्यषडहस्य पञ्चमस्याह्नो निर्वाहक—** (सा०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहगतनवरात्रे पृष्ठ्यषडहस्य पञ्चमस्याह्नः 'गौः देवता त्रिणवः स्तोमः शाक्वरं साम पङ्क्तिश्छन्दः' इत्येतानि देवता स्तोम सामच्छन्दांसि पञ्चमस्याह्नो निर्वाहकानि भवन्ति (तु०—ऐ० ब्रा० ५ ।६) । द्वादशाहगतनवरात्रस्य यद् द्वितीयमहः तदेतत् द्वादशाहगतनवरात्रस्य पञ्चममहर्भवति । तदाह ऐतरेयब्राह्मणम् 'यद्वेव द्वितीयमहस्तदेतत् पुनर्यत् पञ्चमं द्वितीयस्याह्नो रूपम्' । द्र० ऐ० ब्रा० ५ ।६ ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि बहिष्पवमानस्तोत्र—** (औ०) । सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि प्रातः सवने बहिष्पवमानस्य स्तोत्रीयतृचाः—'गोवित्पवस्व वसुवित्' (साम० ९५५-५७) । इति प्रतिपत् (प्रथमः स्तोत्रीय) तृचः । 'पवमानस्य विश्ववित्' (साम० ९५८-६०) इत्यनुरूपो द्वितीयस्तृचः । 'प्रसोमासो अधन्विषुः' (साम० ९६१-६७), 'प्र कविर्देववीतये' (साम० ९६८-७४) एतौ द्वौ सप्तर्चौ । 'यवं यवं नः' (साम० ९७५-७८) इति चतुर्ऋचः । 'यास्ते धाराः' (साम० ९७९-८१) इति तृचोऽन्त्यः । एवं बहिष्पवमानस्य सप्तविंशतिसंख्याकाः ऋचः सम्पद्यन्ते । साम-प्राकृतं गायत्रं साम । स्तोमः—त्रिणवः स्तोमः । विष्टुतिः-त्रिणवस्तोमविष्टुति— (ता० ब्रा० १३ ।१) इति बहिष्पवमानस्तोत्रम् ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोम.... पञ्चमेऽहनि प्रातः सवने आज्यस्तोणां स्तोत्रीयास्तृचाः—'तव श्रियोवर्ण्यस्येव' (साम० ९८२-८४) इति होतुराज्यस्य प्रथमः स्तोत्रीयस्तृचः । 'पुरूरुणा चिद्ध्यस्त्यवः' (साम० ९८५-८७) इति मैत्रावरुणस्य आज्यस्य द्वितीयः स्तोत्रीयस्तृचः । 'उत्तिष्ठन्नोजसा सह' (साम० ९८८-९०) इति ब्राह्मणाच्छंसिन आज्यस्य तृतीयः स्तोत्रीय-

स्तृचः। 'इन्द्राग्नी युवामिमे' (साम० ९९१-९३)। इति अच्छावाकस्याज्यस्य चतुर्थः स्तोत्रीयस्तृचः। इति चत्वारः तृचा आज्यस्तोत्राणां स्तोत्रीयास्तृचाः। साम-गायत्रं प्राकृतं। स्तोमः—एतेषु चतुर्ष्वाज्यस्तोत्रेषु त्रिणवः स्तोमः। विष्टुतिः-त्रिणवस्तोमविष्टुति-द्र० (तां० ब्रा० १३।२)।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पञ्चमेऽहनि प्रातःसवने होतुराज्यशस्त्रस्य जपा, आहावः, तूष्णींशंसः एते ऐकाहिकाः। निवित्पदानि—(ऋ०खि० ५।५।१)। नवर्चमाज्यसूक्तम् 'इममूषु वो अतिथिम्' (ऋ० ६।१५।१-९) आ०श्रौ० ७।१२।६)। शस्त्रपरिधानीया—'विभूषन्नग्न उभयां अनु' (ऋ० ६।१५।९)। इति सूक्तान्त्या। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।९।२६)। **द्र०** आहाव—, आहावप्रदेश—। शस्त्रशंसनप्रकारः— **द्र०** अग्निष्टोमे होतुराज्यशस्त्रशंसनप्रकार—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि प्रातः सवने होतुः प्रउगशस्त्रस्य प्रथमापुरोरुक्—'वायुरग्रेगाः' (ऋ०खि० ५।६।१)। ततः प्रथमो बार्हतो वायव्यस्तृचः—'आ नो यज्ञं दिविस्पृशम् (ऋ० ८।१०।१९-१०) इति द्वे। 'आ नो वायो महे तने' (ऋ० ८।४६।२५) इत्येका। द्वितीया पुरोरुक्-हिरण्यवर्तिनी (ऋ०खि० ५।६।२)। ततो गायत्रो द्वितीय ऐन्द्रवायवस्तृचः—'रथेन पृथुपाजसा' (ऋ० ४।४६।५-७)। तृतीया पुरोरुक्—'काव्या राजानः' (ऋ०खि० ५।६।३)। तृतीयो बार्हतो मैत्रावरुणस्तृचः—'बहवः सूरचक्षसः' (ऋ० ७।६६।१०-१२)। चतुर्थी पुरोरुक्—'देव्या अध्वर्यू' (ऋ० खि० ५।६।४)। ततश्चतुर्थो बार्हतः आश्विनस्तृचः—'इमा उ वां दिविष्टयः' (ऋ० ७।७४।१-३)। पञ्चमी पुरोरुक्—'इन्द्र उक्थेभिः' (ऋ०खि० ५।६।५)। ततः पञ्चमो बार्हत ऐन्द्र स्तृचः—'पि बा सुतस्य रथिनः' (ऋ० ८।३।१-३)। षष्ठी पुरोरुक्—'विश्वान् देवान्' (ऋ०खि० ५।६।६)। ततः षष्ठो बार्हतः वैश्वदेवस्तृचः-'देव देवं वोऽस्रसे देवं देवम्' (ऋ० ८।२७।१३-१५)। सप्तमी पुरोरुक्—'वाचा महीम् (ऋ० ५।६।७)। ततः सप्तमो बार्हतः सारस्वतस्तृचः—बृहदु गायिषे वचः' (ऋ० ७।९६।१-२)। शस्त्रपरिधानीया—'सारस्वततृचान्त्या (ऋ० ७।९६।३)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१०।४-१०)। इदं प्रउगशस्त्रं बार्हतं बृहतीच्छन्दयोगात्। तत्र द्वितीयस्तृचो गायत्रः। प्रथमतृतीयचतुर्थपञ्चमषष्ठेषु षट्सु षट्सु तृचेषु द्वितीयाः सतोबृहत्यः उत्तमे तृतीया च, ताः सप्तसन्ति। द्वितीयस्य गायत्रतृचस्य बार्हतत्वस्योत्पपत्तिः- उत्तमायास्त्रिर्वचनेन नव सन्ति। नवसु बृहत्या अतिरिक्तानि षट् त्रिंशदक्षराणि तानि द्वितीये गायत्रे तृचे प्रक्षिप्य सर्वं बार्हतं भवति (तु०—ऐ० ब्रा० ५।६ आ०श्रौ० ७।१२।७ नारायणः)। शस्त्रशंसनप्रकारः—**द्र०** अग्निष्टोमे प्रउगशस्त्रशंसनप्रकार—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि मैत्रावरुणशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्याषडहस्य पञ्चमेऽहनि प्रातःसवने मैत्रावरुणशस्त्रस्य षडहस्तोत्रियस्तृचः—'पुरूरुणा चिद्ध्यस्ति' (ऋ० ५ ।७० ।१-३)। श्वः स्तोत्रियानुरूपस्तृचः—'प्रति वां सूर उदिते' (ऋ० ७ ।६६ ।७-९ आ०श्रौ० ७ ।२ ।२)। आरम्भणीया—'ऋजु नीती नो वरुणः'(ऋ० १ ।९० ।१)। आरम्भणीयाया ऊर्ध्वं त्रिणवस्तोमातिशंसन—(वृद्धि) निमित्तपरिशिष्टतृचावापस्थानेऽधिकस्तृचा वापः—'पुरूरुणा चिद्ध्यस्ति' (ऋ० ५ ।७० । १-३) इति नित्यात् तृचादधिकं 'प्र वो मित्राय गायत' (ऋ० ५ ।६८ ।१-३ आ०श्रौ० ७ ।५ ।९)· इति तृचमावपेत स्तोमकारणात्। अस्मातृचावापात् परं पञ्चदश वा षोडश वा। ऋचोऽधिका आवपेत, एकया हीनया वा (आ०श्रौ० ७ ।५ ।११-१२)। **द्र०** स्तोमातिशंसननिमित्तः परिशिष्टतृचावापस्थानेऽधिकस्तृचावाप–। पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहर्वद् **द्र०**। **द्र०** आहाव-, आहावप्रदेश-। शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि ब्राह्मणाच्छंसिशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पञ्चमेऽहनि प्रातः सवने ब्राह्मणाच्छंसिशस्त्रस्य षडहस्तोत्रियस्तृचः 'उत्तिष्ठन्नोजसा सह' (ऋ० ८ ।७६ ।१० ।१२)। श्वः स्तोत्रियानुरूपस्तृचः—'भिन्धि विश्वा अपद्विषः' (ऋ० ८ ।४५ ।४०-४२)। आरम्भणीया–'इन्द्रं वो विश्वतस्परि' (ऋ० १ ।७ ।७-१०)। ऊर्ध्वमारम्भणीयायाः त्रिणवस्तोमातिशंसन (वृद्धि) निमित्तः परिशिष्टतृचावापस्थानेऽधिकतृचावापः—'उत्तिष्ठन्नोजसा सह' (ऋ० ८ ।७६ ।१० । १२)। इति नित्यात् तृचादधिकं 'एन्द्र सानसिंरयिम्' (ऋ० १ ।८ ।१-३ आ०श्रौ० ७ ।५ ।१५)। इति तृचमावपेत स्तोमकारणात् अस्मात् तृचावापात् परं पञ्चदश वा षोडश वा ऋचोऽधिका आवपेत। एकया हीनया वा (आ०श्रौ० ७ ।५ ।११-१२)। **द्र०** स्तोमातिशंसननिमित्तः परिशिष्टतृचावापस्थानेऽधिकतृचावाप—। पर्यासतृचः, शस्त्रपरिधानीयाः, शस्त्वाजपः, प्रथमाहर्वद् **द्र०**। **द्र०** आहाव–, आहावप्रदेश–। शस्त्रशंसन- प्रकारः— अग्निष्टोमे ब्राह्मणाच्छंसिशस्त्रशंसनवद्।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि अच्छावाकशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि प्रातः सवने अच्छावाकशस्त्रस्य षडहस्तोत्रियस्तृचः—'युवामिमे' (ऋ० ६ ।६० ।७-९)। श्वः स्तोत्रियानुरूपस्तृचः—'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८ ।३८ ।१-३)। आरम्भणीया 'यत् सोम आ सुते (ऋ० ७ ।९४ ।१०)। आरम्भणीयाया ऊर्ध्वं त्रिणवस्तोमातिशंसन (वृद्धि) निमित्तः परिशिष्टतृचावापस्थानेऽधिकस्तृचावापः-'इन्द्राग्नी युवामिमे' (ऋ० ६ ।६० ।७-९) इति नित्यात् तृचादधिकं 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८ ।३८ ।१-३ आ०श्रौ० ७ ।५ ।१७)। इति तृचमावपेत

स्तोमकारणात्। अस्मात् तृचावापात् परं पञ्चदश वा षोडश वा ऋचोऽधिका आवपेत एकया हीनया वा (आ०श्रौ० ७।५।११-१२)। द्र० स्तोमातिशंसननिमित्तः परिशिष्टतृचा वापस्थानेऽधिकतृचावाप-। पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहवत्। द्र० आहाव—आहावप्रदेश—। शस्त्रशंसनप्रकारः—द्र० अग्निष्टोमे प्रातः सवने अच्छावाकशस्त्रशंसनप्रकारः।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनपवमान-स्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रीयतृचाः—'अर्षा सोम द्युमत्तमः' (साम० ९९४-९६) इति प्रथमस्तृचः। 'सोम उ ष्वाणः' (साम० ९९७-९८)। इति द्वितीयः सामतृचः। 'यत् सोम चित्रमुक्थ्यम्' (साम० ९९९-१००१) इति तृतीयस्तृचः। इत्येते माध्यनिदनपवमानस्य त्रयस्तोत्रीयास्तृचाः। सामानि-प्रथमे तृचे गायत्रं साम, पण्वम् अर्धेऽसाम, शाकलं साम, वार्शं सामार्धेऽम्, इति चत्वारि समानि। द्वितीये सामतृचे मानवं साम, आनूपं साम, वाम्रं सामाधेऽम्, इति त्रीणि सामानि तृतीये तृचे शैशवं साम। इत्येतानि माध्यन्दिनपवमानस्याष्टौ समानि. स्तोमः— त्रिणवः। एवं नवसु सामसूक्तप्रकारेण प्रत्येकं तृचे क्रियमाणेषु यस्त्रिणवः स्तोमो निष्पद्यते। स एव माध्यन्दिनपवमानस्य स्तोमः कार्यः। (तु०—तां० ब्रा० सा० १३।२)। विष्टुतिः द्र० त्रिणवस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमे दिने माध्यन्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयतृचाः—'विदा मघवन् विदा' (साम० ६४१-४९ महानाम्नी १-९)। इति नव ऋचः होतुः पृष्ठस्य प्रथमस्तृचः। 'कया नश्चित्रा आ' (साम० ६८२-८६) इति प्राकृतः मैत्रावरुणपृष्ठस्य द्वितीयस्तृचः। 'इन्द्रो मदाय (साम० १००२-४) इति ब्राह्मणाच्छंसिपृष्ठस्य तृतीयस्तृचः। अथवा 'स्वादोरित्था विषूवतः' (साम० १००५-७)। इति तृतीयस्तृचः। 'तं वो दस्ममृतीषहम्' (साम० ६८५-८७) इति प्राकृतः अच्छावाकपृष्ठस्य चतुर्थः स्तोत्रीयः। इत्येते चत्वारस्तृचाश्चतुर्णां पृष्ठस्तोत्राणांतृचाः। सामानि प्रथमे शक्वरी (महानाम्नी) तृचे शाक्वरं साम। द्वितीये वामदेव्यं साम। तृतीये तृचे बार्हद्गिरं साम, वैकल्पिके रायोवाजीयं साम। चतुर्थे प्राकृतं कालेयं साम इति एतानि पृष्ठ सामानि। स्तोमः—एतेषु चतुर्ष्वपि त्रिणवः स्तोमः (तां० ब्रा० सा० १३।४)। विष्टुतिः—द्र० त्रिणवस्तोमविष्टुति—। तत्र शांक्वरं नाम साम शक्वर्यः सिमाः मह्वयाः महानाम्न्यः इति संज्ञाचतुष्टयेनोच्यते। तदाधारभूताः शक्वर्यः (महानाम्न्यः) ऋचः नव सन्ति। तासां महानाम्नीनामृचां प्रत्येकं त्रयोदशपादा अधीयन्ते। तत्र प्रत्यृचमादितो द्वौ द्वौ पादौ मिलित्वा एकैका द्विपदा शक्वर्या बहिर्भूता। 'विदा मघवन् विदा गातुमनुशंसिवो दिशः' इति। ततस्त्रयः पादाः—'शिक्षा शचीनां पते। पूर्वीणां पुरूवसो। आभिष्ट्वमभिष्टिभिः' इति सप्ताक्षराः। ततः 'स्वा र्णाशुः' इति व्यूहेन

पञ्चाक्षरः पादो धातुसंज्ञकः । ततः 'प्रचेतन प्रचेतय' इति पादो वत्संज्ञकः । एतावपि पादौ शक्वर्या बर्हिर्भूतौ स्तोमवत्प्रयोज्यौ । अथ 'इन्द्र द्युम्नाय न इषे' इति ऊधः संज्ञकः पादः शाक्वरः । ततः'एवा हि शक्रः' इति पञ्चाक्षरः पादः पुरुषसंज्ञकोऽशाक्वरः । ततः राये वाजाय वज्रिवः । शविष्ठ वज्रिन्नृञ्जसे । महिष्ठ वज्रिन्नृञ्जसे' इति त्रयः पादाः शाक्वराः । अएथ 'आ याहि पिब मत्स्व' इति अध्यास्यनामकः पादः । एवमधीताः त्रयोदशपादाः । यद्यपि महानाम्नीनां प्रत्येक मेते त्रयोदशपादा अधीयन्ते तथापि तृचत्वेन त्रिधा क्लृप्तानां नवानां शक्वरीणां प्रतिलोम्येन प्रथमा सप्तपदा द्वितीया षट्पदा तृतीया पञ्चपदा इति व्यवहारः प्रसिद्धः । तत्र त्रयोदशसु पादेषु पूर्वोक्ताः केचन पादाः शक्वराः । केचनाशक्वराः (शक्वर्या बहिर्भूताः) इति च भेदेन द्विधा भवन्ति इति विशेषोऽवगन्तव्यः । (तु०—तां० ब्रा० सा० १३ ।४) द्र० शक्वरीपाद— । अर्थात् 'विदा मघवन् विदा गातुमनुशंससिषो दिशः (२) शिक्षा शचीनां पते (३) पूर्वीणां पुरूवसो (४) अभिष्ट्वमभिष्टिभिः (५) स्वाऽ३र्नांशुः (६) प्रचेतन प्रचेतय (७) इन्द्र द्युम्नाय न इषे (८) एवा हि शक्रो (९) राये वज्राय वज्रिवः (१०) शविष्ठ वज्रिन्नृञ्जसे (११) मंहिष्ठ वज्रिन्नृञ्जसे (१२) आ याहि पिब मत्स्व (१३) इति शाक्वराशाक्वरत्रयोदशपादात्मिका होतुः पृष्ठतृचस्य प्रथमा शक्वरी ज्ञेया । एवं तृचस्योत्तरे द्वे शक्वर्यावपि शाक्वराशाक्वरैस्त्रयोदश त्रयोदशपादैरुह्ये इति विशेषोऽवधेयः । शाक्वरेण साम्ना स्तुत्वाऽनन्तरं 'एवाहेव । एवाह्यग्ने । एवाहीन्द्र । एवा हि पूषन् । एवा हि देवाः (साम० ६५० पुरीष- १०) इति पञ्चभिः पुरीषपदैः स्तुवीरन् इति च विशेषोऽवधेयः ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकदशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृचः—'यत् पाञ्चजन्यया विशा' (ऋ० ८ ।६३ ।७-९ आ०श्रौ० ७ ।१२ ।९) । अनुचरस्तृचः—'इन्द्र इत् सोमाया एकः' (ऋ० ८ ।२ ।४-६ आ०श्रौ० ७ ।१२ ।९) । इन्द्रानिहवः प्रगाथः 'इन्द्रनेदीय इदिहि' (ऋ० ८ ।५३, ५ ।६) । ब्राह्मणस्पत्यः प्रगाथः—'उत्तिष्ठ ब्रह्मणस्पते' (ऋ० १४० ।१-२) । ऐकाहिकास्तिस्रो धाय्याः (आ०श्रौ० ५ ।१४ । १७) । मरुत्वतीयः प्रगाथः—'वृहन्दिन्द्राय गायत' (ऋ० ८ ।२९ ।१-२ आ०श्रौ० ७ । ३ ।४ ।६ ।७ ।५ । २२) । त्रीणि निविद्धानीयसूक्तानि— (१) 'अवितासि सुन्वतः' (ऋ० ८ ।३६ ।१-७) । (२) 'इत्थासि सोम इन्मदे' (ऋ० १ ।८०,१-१६) । (३) 'इन्द्र पिब तुभ्यम्' (ऋ० ६ ।४० ।१-४) आ०श्रौ० ७ ।१२ ।९) । इति तत्राद्ये द्वे निधानसूक्ते पञ्चपदे पाङ्क्ते, तृतीयं त्रैष्टुभम् । आद्यस्याद्यायाः शक्वरीच्छन्दस्कायाः पङ्क्तित्वसम्पत्तये 'अवितासि...कं शतक्रतो । यं ते भागम्...त्रयः समप्सुजित्' इति द्वे अवसाने कार्ये । (तु०—आ०श्रौ० ७ ।१२ ।१८-१९ नारायणः) निवित्पदानि—ऋ०खि० ५ ।५ ।२ आ०श्रौ० ७ ।११ ।२६) अन्त्ये (ऋ० ६ ।४०) सूक्ते निवित्पदानि विधेयानि । ब्राह्मणे निविद्धानीयसूक्तान्ते 'मरुत्वाँ इन्द्र मीढ्वः (ऋ० ८ ।७६ ।७-९) इत्यन्त्यतृचे निवित्पद प्रक्षेपो विहितः (तु०—ऐ० ब्रा० ५,६) इति विशेषोऽवधेयः । शस्त्रपरिधानीया 'यदिन्द्र दिवि पार्ये' (ऋ० ६ ।४० ।५) । शस्त्वा

जप: शस्त्रयाज्या चैकाहिके (तु०— आ०श्रौ० ५ ।१४ । २६) । **द्र०** आहाव, आहावप्रदेश— । शस्त्रशंसनप्रकार:— अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकार-वद् द्रष्टव्य: । अत्रत्यो निविद्धानीयसूक्त-शंसनप्रकारश्च **द्र०** ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुर्निष्केवल्य-शस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिन सवने होतुर्निष्केवल्यशस्त्रस्य अएयुग्मत्वात् प्रथमे रथन्तरपृष्ठे स्तोत्रियानुरूपौ प्रगाथौ ऐकाहिकौ 'अभित्वा शूर नोनुम:' (ऋ० ७ ।३२ ।२२-२३) । 'अभि त्वा पूर्वपीतये' (ऋ० १ ।१९ ।९-१० आ०श्रौ० ५ ।१५ । २; ७ ।५ ।२) । द्वितीये शाक्वर पृष्ठे स्तोत्रियस्तृच:—'विदा मधवन् विदा' (साम० महानाम्यार्चिक: १-९) इति नव महानाम्न्य ऋच: स्तोत्रियस्तृचो भवति । तेन शंसेत् । तत्र अध्यर्धक्षरं महानाम्नीनां तृचक्लृप्ति:—ननु महानाम्न्यो नव, कथं ता एकं तृचं कृत्वा शंसेदिति चेत् तत्र सूत्रकार उपायमाह 'अध्यर्थकारं नव प्रकृत्या तिस्रो भवन्ति' इति । अर्थात् महानाम्न्य: प्रकृत्या स्वभावेन नव सत्य: अध्यर्धकारं त्रिभिस्त्रिभिरध्यर्धै: (त्रिभिस्त्रिरर्धर्चै:) ता एव तिस्रो भवन्ति । अतस्त्रिभिस्त्रिभिरर्धचैरवसानं प्रणवं च कृत्वा शंसेत् (तु०—आ०श्रौ० ७ ।१२ ।१० नारायण: ऐ० ब्रा० सा० ५ ।७) । तत्र अध्यर्धकारम् अधिकेनार्धेन-युक्तामेकामृचं (सार्धा) एकमर्धर्चं कृत्वा इत्युक्तं भवति । एवं भूतानां त्रयाणामर्धर्चानां एकार्धर्चत्वे सति तिस्र ऋचो भवन्ति । अयमाशय:-प्रथमेनाध्यर्धेन (त्रिभिरर्धै:) पूर्वमर्धर्चं द्वितीयेनाध्यर्धेन च उत्तरमर्धर्चं कृत्वा प्रथमा ऋक् संपद्यते । तत: परं एवमेव भूय: प्रथमेनाध्यर्धेन पूर्वमर्धर्चं द्वितीयेनाध्यर्धेनचोत्तरं अर्धर्चं कृत्वा द्वितीया ऋक् संपद्यते । पुनरपि तथैव प्रथमेनाध्यर्धेन पूर्वमर्धर्चं द्वितीयेनाध्यर्धेन चोत्तरमर्धर्चं कृत्वा तृतीया ऋक्संपद्यते । अर्थात् नवनानां महानाम्नीनां अष्टदशसु अर्धर्चेषु प्रथमै: षड्भि: (१-६) अर्धर्चै: प्रथमा ऋक्, मध्यमै: षड्भि: (७-१२) द्वितीया ऋक्, उत्तमै: षड्भि: (१३-८) तृतीया ऋक् संपन्नेति बोध्यम् । सेयं तिसृणामृचां क्लपृप्ति: स्तोत्रियस्तृचो भवति । तत्र महानाम्न्य स्तावद् अक्षरैश्चतुष्पादोपेता: एकैकस्मिस्तृचे तिस्रस्तिस्र: अनुष्टुभो भवन्ति । तासामर्धर्चावसानि सातवलेकर सामवेद संहिता संस्करणे ऐतरेयाण्यकानन्दाश्रमसंस्करणे भिन्नानि विद्यन्ते । इह सातवलेकरसंस्कर-णानुसारमनुष्टुभामर्धर्चा: प्रत्येतव्या: तद्यथा- 'विदामधवन्...इत्यादि: 'स्वार्नांशु:' इत्यन्ता सार्धानुष्टुप् पूर्वोऽर्धर्च: । प्रचेतन' इत्यादि: 'मत्स्व' इत्यन्ता सार्धानुष्टुप् उत्तरोऽर्धर्च: । इति तृचस्य प्रथमा ऋक् । 'विदाराये' इत्यादि: अंशुर्न्नशोचि:' इत्यन्ता सार्धानुष्टुप् पूर्वोऽर्धर्च: । चिकित्वो अभि' इत्यादि: 'ऋतं बृहत्' इत्यन्ता सार्धानुष्टुप् उत्तरोऽर्धर्च: । इति तृचस्य द्वितीया ऋक् । 'इन्द्रं धनस्य' इत्यादि: 'अंशुर्मदाय' इत्यन्ता सार्धानुष्टुप् उत्तरोऽर्धर्च: । 'सुम्न आ' इत्यादि: 'सुशेवो' अद्वयु:' इत्यन्ता सार्धानुष्टुप् पूर्वोऽर्धर्च: । इति तृचस्य तृतीया ऋक् उन्नेया । **द्र०** सा० ६४१-४९ महाना १-९ । तासामृचामन्ते प्रणवं कुर्यात् । ताभिर्महानाम्नीभि: पुरीषपदान्युपसंतनुपात् तासामन्त्येन प्रणवेन प्रथमं पुरीषपदं सन्धाय तत: सर्वाणि यथा पठितानि शंसेद् अन्त्ये प्रणवं कृत्वाऽनुरूपमनु-

सन्तनुयात्। तत्र नवानां पुरीषपदाना माद्येषु पञ्चसु 'एवाह्येवैवेत्यवसाय पञ्च पदानि शंसेत्। (साम० ६५० पुरीषपद-१०) उत्तराणि यथापठितमेव। अन्तेऽच प्रणवः कर्तव्य एव। सर्वाणि वा नव पदानि यथापठितमेव शंसेत्, न पञ्चाक्षरशः पञ्च पदानि इति (तु०— आ०श्रौ० ७।१२।१२-१३ नारायणः ए० आ० सा० ४।१।१) द्र० पुरीषपद—। अत्र ऐतरेयारण्यके सायणः— 'आश्वलायनः पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिने सवने मरुत्वतीय शस्त्रस्य क्लृप्तेरूर्ध्वं निष्केवल्यस्य शस्त्रस्य क्लृप्तिं कुर्वन्नेवमाह—'शाक्वरं चेत् पृष्ठं महानाम्न्यः स्तोत्रियः। ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति। ताभिः पुरीषपदान्युपसन्तनुयात्। पञ्चाक्षरशः पूर्वाणि पञ्च। सर्वाणि यथानिशान्तम्' (आ०श्रौ० ७।१२।१०-१३) इति। अस्यार्थः— शक्वरनामकं सामवेद प्रसिद्धं किञ्चित् सामास्ति। तद् यद्युद्गातारः पृष्ठस्तोत्ररूपेण गयेयुः तदानीं महानाम्नीसंज्ञया व्यवह्रियमाणा 'विदा मघवन्' (महानाम्न्यार्चिकः ६४१-४९) इत्याद्या नवसंख्याका ऋचो याः सन्ति ताः सर्वा मिलित्वा स्तोत्रसंबन्धितया स्तोत्रियस्तृच इत्यभिधीयन्ते। तिसृभिस्तिसृभिर्ऋग्भिर्मिलिताभिरेकैकस्यामृचि। निष्पादितायां सत्यां प्रकृत्या स्वभावतो नव संख्याका अपि संपादनेन तिस्र ऋचो भवन्ति। तादृशीस्ता ऋचोऽध्यर्धकारं शंसेत्। अधिकमर्धं यस्या ऋचः सेयमध्यर्धा। तमध्यर्धां कृत्वा शंसेत्। समाम्नात् क्रमेण धत्रयं पठित्वा तत्रावसाय पुनरर्धत्रयं पठित्वा तदन्ते प्रणवं कुर्यात्। अनेन प्रकारेण नवसंख्याकाः समाम्नाता ऋचः शस्त्वा ताभिर्नवभिर्ऋग्भिः सह पुरीष पदनिसंयोजयेत्। 'अन्तिमेन प्रणवेन सह पठेत्। 'एवा ह्येव' इत्यादयो नव मन्त्राः पुरीषपदानि। तेषु नवस्वाद्यानि पञ्च पुरीषापदानि पञ्चाक्षरशः शंसेत्। तद्यथा—'एवा ह्येव' इति (व्यूहेन) पञ्चाक्षरा पठित्वा सकृदवसाय पश्चात् 'एवाह्यग्ने' इत्येतानि पञ्चाक्षराणि पठेत्। एवं व्यूहेन पञ्च मन्त्रान् पठित्वा पश्चात् 'एवाहि शक्रः' इत्यादीश्चतुरो मन्त्रान् मध्ये विच्छेदमकृत्वा पठेत्। यद्वा सर्वानपि नव मन्त्रान् यथा समाम्नायमध्ययनपाठक्रमेणैव पठेत्। न तु मन्त्रस्य मध्येऽवसानं कर्तव्यमिति (तु०—ऐ० आ० सा० ४।१।१)।अनुरूपास्त्रयस्तृचाः—(१) 'स्वादोरित्था विषूवतः' (ऋ० १।८४।१०-१२) (२) 'उपनोहरिभिः' (ऋ० ८।९३।३१-३३) (३) 'इन्द्रं विश्वा अवीवृधन्' (ऋ० १।११।१-३)। अनुरूपत्वादेता अध्यर्धकारमेव शंस्त्व्याः (आ०श्रौ० ७।१२।१५ नारायणः)। धाय्या—'यद् वावान' (ऋ० १०।७४।६)। यदि सामगा रथन्तरपृष्ठं न कुर्युः तदा होता धाय्याया अनन्तरं रथन्तरपृष्ठस्य 'अभित्वा शूर नो नुमः '(ऋ० ७।३२।२२-२३) इति योनिमृचं शंसति। शाक्वर पृष्ठमपि चेन्ना कुर्युः तदा 'विदा मघवन् (साम० महानाम्न्यर्चिकः (१-९;१०) इति शाक्वरयोन्यः सपुरीषपदा ऋचो यथापठितं शंस्तव्याः (तु०— आ०श्रौ० ७।१२।१४ नारायणः)। रथन्तरपृष्ठस्य साम प्रगाथः—'पिबा सुतस्य रसिनः' (ऋ० ८।३।१-२)। शाक्वरपृष्ठस्य सामप्रगाथः—'मो षु त्वा बाधतश्चन' (ऋ० ७।३२।१-२)। प्रगाथोऽयं 'रायस्कामः' (ऋ० ७।३२।३) इति द्विपदया संयुक्तः कार्यः। द्विपदा सा च प्रगाथस्य द्वितीयाया अन्त्येन 'रथेन पादमादधुः'

इति पादेन संधीयते यथा—'रथेन पादमादधूरायस्काम:' इति (तु०— आ० श्रौ० ७।३।१९ ऐ० ब्रा० ५।७)। तार्क्ष्यसूक्तम्—'त्यमूषु वाजिननम्' (ऋ० १०। १७८।१-३)। त्रीणि निविद्धानीयसूक्तानि—(१) 'प्रेदं ब्रह्म वृत्रतूर्येषु' (ऋ० ८।३७।१-७) 'इन्द्रो मदाय वावृधे' (ऋ० १।८१।१-९), (३) 'सत्रा मदासस्तव' (ऋ० ६।३६।१-४ आ०श्रौ० ७।१२। १६)। तेषु आद्ये द्वे सूक्ते पञ्चपदे पाङ्क्ते तृतीयं त्रैष्टुभम्। आद्यस्याद्याया: अतिजगतीच्छन्दस्काया: पङ्क्तित्वसंपत्तये 'प्रेदं ब्रह्म वृत्रतूर्येष्वा प्रन्वसुत: शचीपते। माध्यन्दिनस्य सवनस्य वृत्रहन्ननेद्य' इति द्वे अवसाने कार्ये (तु०—आ०श्रौ० ७।१२। १८।२० नारयण:)। निविपदानि-(ऋ० खि० ५।५।३) अन्त्ये सूक्ते निवित्प्रक्षेप: (द्र० आ०श्रौ० ७।११।२६)। ब्राह्मणे शस्त्रान्ते 'तमिन्द्र वाजयामसि' (ऋ० ८।९३।७-९) इति तृचे निवित्पद प्रक्षेपो विहित: (तु०—ऐ० ब्रा० सा० ५।८) इति विशेषोऽवधेय: शस्त्रपरिधानीया—'स तु श्रुधि श्रुत्या' (ऋ० ६। ३६।५)। शस्त्वा जप:, शस्त्रयाज्या चैकाहिके। तु०— आ०श्रौ० ५।१६। २३)। **द्र०** आहाव-, आहाव प्रदेश-। शस्त्रशंसनप्रकार:-**द्र०** अग्निष्टोमे होतुर्निष्केवल्यशस्त्र शंसनप्रकार:, अत्रत्यो महानाम्नीस्तोत्रिय-शंसनप्रकारश्च महानाम्नीच्छन्दस्—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य ऐकाहिक: स्तोत्रियस्तृच:—'कयानश्चित्र आ' (ऋ० ४।३१। १-३) ऐकाहिक: अनुरूपस्तृच:—'कया त्वं न:' (ऋ० ८।९३।१९-३१)। चातुर्विंशिक: स्तोत्रिय: प्रगाथ:—'माचिदन्यद् विंशसत' (ऋ० ८।१।१-२)। चातुर्विंशिक: अनुरूप: प्रगाथ:—'मा चिद्धि जना इमे' (ऋ० ८।१।३-४)। कद्वत्प्रगाथ: प्रथमाहवत्। आरम्भणीया—'अप प्राच:' (ऋ० १०।१३१।१)। आरम्भणीयाया ऊर्ध्वं पङ्क्तिच्छन्दस्कतृचावाप:—'यत् चिद्धि सत्य सोमपा:' (ऋ० १।२९।१ - ३)। त्रिणवे महास्तोमे वर्धमाने सोमवृद्धिनिमित्त: (स्तोमसंख्यामतिक्रम्य ऋक्संख्याविवृद्ध्यर्थ) अष्टर्चसूक्तावाप:—'कोऽद्य नर्य:' (ऋ० ४।२५।१-८ आ०श्रौ० ७।१२।१ ऐ० ब्रा० सा० ६।१९)। एतेन शस्यमानेनापि स्तमो मद्यनतिशस्तो भवेत् तदा ऐन्द्रं त्रिष्टुप्छ्दस्कंद मरुच्छब्दवर्जितं स्तोमो यद्यनतिशस्तो भवेत् तदा ऐन्द्रं त्रिष्टुप्छन्दस्कं मरुच्छब्दवर्जितं सूक्त मावपेत (तु०— आ०श्रौ० ७।१२।२ नारायण:)। **द्र०** महास्तोमाहन्-, महास्तोमातिशंसननिमित्त: सूक्तावाप—। अहरह: शस्यसूक्तम्—'सद्यो ह जात:' (ऋ० ३।३९)। चातुर्विंशिकाहीन सूक्तस्थाने सम्पात सूक्तम्—'यन्न इन्द्रो जुजुषे' (ऋ० ४।२२ आ०श्रौ० ७।५।२० ऐ० ब्रा० ६।१९)। शस्त्रपरिधानीया, शस्त्रयाज्या च प्रथमाहर्वत्। **द्र०** संपातसूक्त—, आहाव—, आहाव प्रदेश—, शस्त्रशंसनप्रकार:— अग्निष्टोमे माध्यन्दिने मैत्रावरुणशस्त्रशंसनप्रकार—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह.... पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छं-

सिशस्त्रस्य स्तोत्रियस्तृचः—'इन्द्रो मदाय' (ऋ० १।८१।१-३)। अनुरूपस्तृचः—'मदे मदे हिनो ददिः'(ऋ० १।८१।७-९)। कद्वत्प्रगाथः—प्रथमाहवत्। आरम्भणीया-'ब्राह्मणा ते' (ऋ० ३।३५।४)। आरम्भणीयाया ऊर्ध्वं पङ्क्तिच्छन्दस्कस्तृचावापः-'निष्वापया मिथूदृशा' (ऋ० १।२९।३-५ आ०श्रौ० ७।११।३९ ऐ० ब्रा० ६।१९)। त्रिणवे महास्तोमे वर्धमाने स्तोमवृद्धिनिमित्तः (स्तोमसंख्यामतिक्रम्य ऋक्संख्याविवृद्ध्यर्थ) अष्टर्चसूक्तावापः—'वने न वायो न्यधायि' (ऋ० १०।२९।१-८) आ०श्रौ० ७।१२।१ ऐ० ब्रा० ६।१९)। एतेन शस्यमानेनापि स्तोमो यद्यनतिशस्तो भवेत् तदा ऐन्द्रं त्रिष्टुप्छन्दस्कं मरुच्छब्दवर्जितं सूक्तमावपेत (तु०—आ०श्रौ० ७।१२।२ नारायणः) द्र० महास्तोमाहनमहास्तोमाहःस्तोमातिशंसननिमित्तः सूक्तावाप—। अहरहः सूक्तम्—'उदु ब्रह्माण्यैरत'(ऋ० ७।२४)। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्—'य एक इद्धव्यश्चर्षणीनाम्'(ऋ० ६।२२)। शस्त्रपरिधानीया, शस्त्रयाज्या च प्रथमाहवत्। **द्र०** संपातसूक्त—, आहाव-, आहावप्रदेश-, शस्त्रशंसनप्रकारः-अग्निष्टोमे माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने अच्छावाकशस्त्रस्य स्तोत्रियस्तृचः—'स्वादोरित्था विषूवतः(ऋ० १।८४।१०-१२)। अनुरूपस्तृचः—'इत्था हि सोमे (ऋ० १।८०।१-३)। कद्वत्प्रगाथः प्रथमाहवत्। आरम्भणीया—'उरुं नः' (ऋ० ६।४७।८)। आरंभणीयाया ऊर्ध्वं पङ्क्तिच्छन्दस्कस्तृचावापः—'समिन्द्र गर्दभं भृण' (ऋ० १।२९।५७। ११।३९)। त्रिणवे महास्तोमे वर्धमाने स्तोमवृद्धि निमित्तः (स्तोमसंख्यामतिक्रम्य ऋक्संख्याविवृद्ध्यर्थ) अष्टर्चसूक्तावापः—'आया ह्यर्वाङ्' (ऋ० ३।४३।१-८ आ०श्रौ० ७।१२।१ ऐ० ब्रा० ६।१९)। एतेन शस्यमानेनापि स्तोमो यद्यनतिशस्तो भवेत् तदा ऐन्द्रं त्रिष्टुप्छन्दस्कं मरुछब्दवर्जितं सूक्तमावपेत (तु० आ०श्रौ० ७।१२।२ नारायणः)। **द्र०** महास्तोमाहन्—, महास्तोमाहः स्तोमातिशंसननिमित्त-। अहरहः-शस्यसूक्तम्—'अभि तष्टेव दीधया' (ऋ० ३।३८)। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्—'इच्छन्ति त्वा सोम्यासः' (ऋ० ३।३०)। शस्त्र परिधानीया, शस्त्रयाज्या च प्रथमाहवत्। **द्र०** संपातसूक्त-, आहाव-, आहावप्रदेश-, शस्त्रशंसनप्रकारअग्निष्टोमे माध्यन्दिनसवने अच्छावाकशस्त्रशंसनप्रकारवद्— **द्र०**।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि तृतीयसवने आर्भवपवमानस्य स्तोत्रीयतृचाः—'असाध्यंशुर्मदाय'(साम० १००८-१०)। इति प्रथमः स्तोत्रीयस्तृचः 'अभि द्युम्नं बृहत्' (साम० १०११-१२)। इति द्वितीयः स्तोत्रीयः सामतृचः। 'प्राणा शिशुभिर्महीनाम्' (साम० १०१३-१५) इति तृतीय-

स्तृचः। 'पवस्य वाजसातये' (साम० १०१६-१८) इति चतुर्थस्तृचः। 'इन्दुर्वाजी पवते' (साम० १०१९-२१) इति पञ्चमस्तृचः। इत्येते आर्भवपवमानस्य स्तोत्रीयास्तृचाः। सामानि—तत्र प्रथमे तृचे गायत्रं साम, सन्तनि साम चेति द्वे साम्नी। द्वितीये साम तृचे च्यवनं साम, तृतीये तृचे क्रोशं साम। चतुर्थे तृचे गौरीवितं साम, ऋषभः शाक्वरः साम, पार्थं साम, अष्टेडः पदस्तोमः साम चेति चत्वारि सामानि। पञ्चमे तृचे दाशस्पत्यं साम। इत्येतानि नव सामानि। स्तोमः-त्रिणवः स्तोमः। तु०—तां० ब्रा० सा० १३।५)। विष्टुतिः—द्र० त्रिणवस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह...पृष्ठ्यषडहस्य पञ्चमेऽहनि उक्थ्यसंस्थे तृतीयसवने अग्निष्टोमस्तोत्रस्य सामतृचः—'यज्ञा यज्ञा वः' (साम० ७०३-४)। साम—यज्ञायज्ञीयं अग्निष्टोमसाम। स्तोमः—त्रिणवः स्तोमः। विष्टुतिः—द्र० त्रिणवस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि उक्थस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य पञ्चमेऽहनि उक्थ्यसंस्थे तृतीयसवने उक्थ्यस्तोत्राणां स्तोत्रीयस्तृचाः— 'आ ते अग्न इधीमहि' (साम० १०२२-२४) इति मैत्रावरुणोक्थस्य प्रथमः स्तोत्रीयस्तृचः। 'इन्द्राय साम गायत' (साम० १०२५-२७) इति ब्राह्मणाच्छंस्युक्थस्य द्वितीयस्तृचः। 'असावि सोम इन्द्र ते' (साम० १०२८-३०) इति अच्छावाकोक्थस्य तृतीयः स्तोत्रीयस्तृचः। इति त्रयाणामुक्थस्तोत्राणां त्रयस्तृचाः सामानि तत्र मैत्रावरुणेक्थे सज्ञयं साम ब्राह्मणाच्छंस्युक्थे सौमित्रं साम। अच्छावाकोक्थे महावैश्वामित्रं साम त्रीडम्। इति त्रीणि सामानि। स्तोमः—एषु त्रिषु स्तोत्रेषु त्रिणवः स्तोमः। तां० ब्रा० सा० १३।६।१३।६)। स्तोमविष्टुतिः। द्र० त्रिणवस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुर्वैश्वदेवशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य पञ्चमेऽहनि तृतीयसवने 'होतुर्वैश्वदेवशस्त्रस्य-शस्यं (ऐ० ब्रा० ५।८) तत्र—प्रतिपत्तृचः— 'तत्सवितुर्वृणीमहे' (ऋ० ५।८२।१-३)। अनुचरस्तृचः—'अद्या नो देव सवितः' (ऋ० ५।८२।४-६)। प्रथमं सावित्रं निविद्धानीयतृच सूक्तम्—'उदु ष्य देवः सविता दमूना' (ऋ० ६।७१।४-६)। निवित्पदानि—ऋ० खि० ५।५।४। ऐकाहिका धाय्या—आ०श्रौ० ५।१८।५। द्वितीयं निविद्धानीयसूक्तम्—'मही द्यावापृथिवी इह ज्येष्ठे' (ऋ० १-४)। निवित्पदानि (ऋ० खि० ५।५।५)। धाय्या—ऐकाहिका आ०श्रौ० ५।१८।५। तृतीयं निविद्धानीयसूक्तम्—'ऋभुर्विभ्वा वाज इन्द्रः (ऋ० ४।३४।१-११ निवित्पदानि ऋ० खि० ५।५।६। तिस्रो धाय्याः—ऐकाहिकाः आ०श्रौ० ५।१८।५) अध्यासचतुर्थं वैश्वदेवसूक्तम्—'स्तुषे जनं सुव्रतम्' (ऋ० ६।४९।१-१५)। निवित्पदानि— ऋ० ५।५।७। शस्त्रपरिधानीया— (ऋ० १।८९।१०; आ०श्रौ० ५।१८।१२)। शस्त्वाजपः, शस्त्रयाज्या च (आ०श्रौ० ५।१८।१३)। इति अभिप्लवषडहस्य पञ्चमस्याह्नः शस्यमेव तृतीयसवने शस्यं

भवति । तु०—आ०श्रौ० ७ ।१० ।२ नारायणः) । द्र० आहाव—, आहावप्रदेश—, शस्त्रशंसनप्रकारः-अग्निष्टोमे होतुर्वैश्वदेवशस्त्रशंसनप्रकारवद्— द्र० ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि होतुराग्निमारुतशस्त्र—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिररात्रविकृति व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठयषडहस्य पञ्चमेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य आरम्भणीया—ऋ० २ ।२३ ।१, ऐ० ब्रा० ३ ।३४ । प्रथमं वैश्वानरीयं निविद्धानीयं सूक्तम्—'हविष्यान्तमजरम्' (ऋ० १० । ८८ ।१-१९ ऐ० ब्रा० ५ ।८) । निवित्पदानि ऋ० खि० ५ ।५ ।८) । रौद्री धाय्या— ऋ० १ ।४३ ।६ । द्वितीयं मारुतं निविद्धानीय सूक्तम् । 'वपु र्नु तच्चि कितुषे' (ऋ० ६ ।६६ ।१-११ ऐ० ब्रा० ५ ।८) । निवित्पदानि— ऋ०खि० ५ ।५ ।९ । अग्निष्टोमसामस्तोत्रिय प्रगाथः—(ऋ० ६ । ४८ ।१-२, आ०श्रौ० ५ ।२० ।६) । अग्निष्टोमसामानुरूपः प्रगाथः—ऋ० ७ । १६ ।११-१२; आ०श्रौ० ५ ।२०६) । जातवेदस्या 'जातवेदसे सुनवाम सोमम्' (ऋ० १ ।९९ ।१) अध्यासवत् तृतीयमग्निदेवत्यं जातवेदस्यं निविद्धानीयसूक्तम्— 'अग्निर्होता गृहपतिः (ऋ० ६ ।१५ ।१३-१५ तृचसूक्तम् ऐ० ब्रा० ५ ।८) । निवित्पदानि—ऋ० खि० ५ ।५ ।१०) । आपो हिष्ठीयस्तृचः—(ऋ० १० । ९ ।१, १-३) । ऋगेका-ऋ० ६ ।५० ।१४; आ०श्रौ० ५ ।२० ।६) । देवपलादेवत्ये ऋचौ—ऋ० ५ ।४६ ।७-८; आ०श्रौ० ५ ।२० ।६ । राकादेवत्ये ऋचौ—ऋ० २ ।३२ ।४-५; आ०श्रौ० ५ ।२१० ।६) । सरस्वती देवत्यैका—(ऋ० ६ ।४९ ।७; आ०श्रौ० ५ ।२० ।६) । याम्यावृचौ—(ऋ० १० ।१४ ।४;३; आ० श्रौ० ५ ।२० । ६) पित्र्या ऋचः—ऋ० १० ।१५ ।१; ३;२; आ०श्रौ० ५ ।२० । ६ । वैकृतौ प्रतिगरौ—'मदामो दैव, गोदामो देवोम् । स्वांदुष्किलीया ऋचः—ऋ० ६ ।४७ ।१-४; आ०श्रौ० ५ ।२० ।६) । वैष्णु वारुणी—आ०श्रौ० ५ ।२० ।६) । प्राजापत्या—ऋ० १ ।१५४ ।१; आ०श्रौ० ५ ।२० ।६ । शस्त्रपरिधानीया—ऋ० ४ ।१७ ।२०; आ०श्रौ० ५ ।२० ।६ । अभिप्लवषडहस्य पञ्चमस्याह्नः शस्यमेव तृतीयसवने शस्यं भवति । आ०श्रौ० ७ ।१० ।२ नारायणः) । शस्त्वाजपः आ०श्रौ० ५ ।२० ।८ । शस्त्रयाज्या—ऋ० ५ ।६० ।८; आ०श्रौ० ५ ।२० ।८ । इति द्र० आहाव—, आहाव प्रदेश—, शस्त्रशंसनप्रकारः— अग्निष्टोमे होतुराग्निमारुतशस्त्रशंसनप्रकारः ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि मैत्रावरुणशस्त्र—**(हौ०) सोमयज्ञेषु प्रकृतिभतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य पञ्चमे उक्थ्यसंस्थे हनि तृतीये सवने मैत्रावरुणशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः — द्र० उक्थ्ये मैत्रावरुणशस्त्र— । (ऐ० ब्रा० ३ ।४९-५० । ६ ।१४-१५; आ०श्रौ० ६ ।१ ।; ७ ।८ ।१ द्र०) ।

**पृष्ठ्यषडहस्य पञ्चमेऽहनि ब्राह्मणाच्छंसिशस्त्र—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य पञ्चमेऽहनि उक्थ्यसंस्थेऽहनि तृतीयसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियानुरूपादिशस्त्रक्लृप्तिः-द्र० उक्थ्ये ब्राह्मणाच्छंसिशस्त्र— । (ऐ०

ब्रा० ३ ।४९-५०; ६ ।१४-१५; आ०श्रौ० ६ ।१ ।२ ।७ ।८ ।२)

**पृष्ठ्यषडहस्य पञ्चमेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ द्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य पञ्चमेउक्थ्ये संस्थेहनि तृतीयसवने अच्छावाकशस्त्रस्य स्तोत्रियानुरूपादि शस्त्रक्लृप्तिः— उक्थ्ये अच्छावाकशस्त्र—**द्र०** ।(ऐ० ब्रा० ३-४९-५० ६ । १४-१५ आ०श्रौ० ६ ।१ ।२७ ।८ ।२)।

**पृष्ठ्यषडहस्य षष्ठस्याह्नो निर्वाहक—** (सा०) सोमयज्ञेषु प्रकृतिभूत ज्यो...व्यूढद्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठस्याह्ने द्यौः देवतात्रयस्त्रिंशः स्तोमः रैवतं साम अतिच्छन्दाश्छन्दः। इत्येतानि देवतास्तोमसामच्छन्दांसि दशरात्रस्य षष्ठमहर्निवहन्ति। इति।(ऐ० ब्रा० ५ ।११)।

**पृष्ठ्यषडहस्य षष्ठेऽहनि प्रा० सवने ऋतुयाजप्रचार—** (आध्व०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतव्यूढद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने ऋतुयाजप्रचारे पूर्व १. (क) (प्रकृतौ अग्निष्टोमे) ऋतुग्रहाणां प्रचारो यदा वर्तते तदानीं मैत्रावरुणः प्रैषसूक्तगतेन (होता यक्षदिन्द्रं होत्रात्... इत्यादिना) मन्त्रेण होत्रादीन् प्रेष्यति। ते च याज्यया (प्रैषयाज्यया) वषट् कुर्वन्ति। अध्वर्युयजमानौ तु प्रैषितौ स्वस्वयाज्यां होत्रे प्रयच्छतः। इत्यनुष्ठानक्रम उक्तः। **द्र०** ऋतुयाजप्रचार—। अत्र पृष्ठयषष्ठेऽहनि तु तौ होत्रे न प्रयच्छतः किंतु स्वयमेव प्रैषयाज्यां पठतः इति अग्निष्टोमिकात् ऋतुयाजप्रचाराद् विशेषोऽवगन्तव्यः।(तु०—ऐ० ब्रा० सा० ५ ।९)। उक्तं च 'स्वयं षष्ठे पृष्ठ्याहनि' (आ०श्रौ० ५ ।८ ।६)। (ख) प्रकृतौ हि मैत्रावरुणस्तं तं प्रैषमन्त्रं पठित्वा 'होतर्यज' इत्यादिना प्रेष्यति। होत्रादयश्च तत ऊर्ध्वं याज्यां प्रैषरूपामेव पठित्वा तदन्ते वौ३षडिति वषट् कुर्वन्ति। **द्र०** ऋतुयाजप्रैषयाज्या—इति प्रचारक्रमः। अत्र तु न तथा कर्तव्यम्। किं तर्हि ऋक्—शिरस्केभ्यो होत्रादिविषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो 'होतर्यज' इत्यादिना प्रेष्येत। होत्रादयश्च तथैव ऋक्शिरस्केभ्योऽधि वषट्कृत्य 'तुभ्यं हिन्वानः' त्याद्यृक्शिरस्कैः प्रैषैर्यजेयुः। अर्थात् 'तुभ्यं हिन्वानः' इत्यादि 'पापया हविः' इत्यन्तैः (ऋ० २ ।३६ ।१-६; ३७ ।१-६ आ०श्रौ० ८ ।१८)। इत्यत्रोक्तैः द्वादश ऋक्शिरस्कैः प्रैषैर्यजेयुः इति प्रकृतितो विशेषः। ऐ० ब्रा० ९। दशरात्रे षष्ठेऽहनि प्रातः सवने ऋतुयाजेषु ऋक्शिरस्कैः प्रैषैः प्रेषितव्यं यष्टव्यं च। तत्राद्यानां षण्णां (ऋ० २ ।३६ ।१-६). प्रैषणामुपरिष्टात् एताः षड् ऋचोऽहोरात्रादिभिः क्रमेणावपनीयाः।(ऋ० २ ।३६ सायणभाष्यम्)। (घ) दशरात्रे षष्ठेऽहनि प्रा. सवने ऋतुयाजेषु ऋक्शिरस्कान् कृत्वा तैः प्रैषैः प्रेषितव्यं यष्टव्यं च। तत्र सप्तमादीनां प्रैषाणामुपरिष्टात् 'मन्दष्व' इत्याद्याः (ऋ० २ ।३ ।७ ।१-६)। षड् ऋचः क्रमेण प्रक्षेपणीयाः। स्यु ता उभयोः सूक्तयोर्द्वादश ऋचो भवन्ति। (तु०—तत्रैव सायणभाष्यम्)। तदेवं प्रैषयाज्यामन्त्रैः प्रैषवषट्कारप्रयोगद्वयवर्जं पृष्ठ्यः षडहस्य षष्ठे'हनि इतरत् सर्वं कर्म प्रकृतिवद् ऋतुयाजप्रचार उच्यते। **द्र०** ऋतुयाजप्रचार— निदर्शनं तु—'तुभ्यं हिन्वानः' प्रथमो य ईशिषे (ऋक्शिरकः) होता यक्षदिन्द्रं होत्रात्. सोमं पिबतु होतर्यज (प्रैषः) 'तुभ्यं हिन्वानः' प्रतमो य ईशिषे (ऋक्शिरस्कः) ये३यजामहे इन्द्रं होत्रात्. सोमं पिबतु वौऽषट्' (प्रैषयाज्या) इति। २. 'होता यक्ष-

दिन्द्रं होत्रात्.' इत्यादीन् ऋतुप्रैषान् 'होतर्यज' इत्यादिशब्दरहितान् उक्त्वा तैः सह 'तुभ्यं हिन्वानः' इत्याद्याः 'पापया हविः' इत्यन्ता द्वादश ऋचः संधाय ऋचामन्ते 'होचर्यज' इत्यादि शब्दान् संधाय तैर्मैत्रावरुणः प्रेष्यति। एवं क्रमात् तयोः (प्रैषर्चोः) एवं होता यक्षत्, 'होतर्यज' इति पदयोः स्थाने आगूर्वषट्कारौ (ये यजामहे, वौ३षट्) कृत्वा यजन्ति। इति प्रकृतितो विशेषः। (तु०—आ०श्रौ० ८।१६-८ नारायणः)। निदर्शनं तु—'होतो यक्षदिन्द्रं होत्रात्' सोमं पिबतु (प्रैषः) 'तुभ्यं हिन्वान. य ईशिषे होतर्यज (ऋक्) 'ये३ यजामहे इन्द्रं होत्रात्. सोमं पिबतु 'तुभ्यं हिन्वानः' य ईशिषे वौ३षट्' प्रैषयाज्यासहिता ऋक् याज्या) इति। इहदेवत्र्यवोऽव्यनुसंन्धेयः। एवमुत्तरत्रापि निर्दर्शनमूहनीयम्।

**पृष्ठ्यषडहस्य षष्ठेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्र द्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने बहिष्पवमानस्य स्तोत्रीयास्तृचाः—'ज्योतिर्यस्य पवते' (साम० १०३१-३३)। इति प्रतिपत् प्रथमस्तृचः। 'असृक्षत प्रवाजिन' (साम० १०३४-३६)। इत्यनुरूपो द्वितीयस्तृचः। 'पवस्व देववीरति' (साम० १०३७-४६) 'सना च सोम जेषि च (साम० १०४७-५६) इति एतौ द्वौ दशर्चौ। 'तरत्स मन्दी' (साम० १०५७-६०) इति चतुर्ऋचः। 'एते सोमा असृक्षत' (साम० १०६१-६३) इति तृचोऽन्त्यः। एवं बहिष्पवमानस्य त्रयस्त्रिंशत्संख्याका ऋचः संपद्यन्ते। स्तोमः-त्रयस्त्रिंशः स्तोमः। साम—साम प्राकृतम् (तु०—तां० ब्रा० सा० १३।७)। स्तोमविष्टुतिः द्र० त्रयस्त्रिंशत्स्तोमविष्टुति—।

**पृष्ठ्यषडहस्य षष्ठेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रद्वादशाहप्रकरणे द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने आज्यस्तोत्राणां स्तोत्रीयेतृचाः इमं स्तोममर्हते जातवेदसे' (साम० १०६४) इति होतुराज्यस्य स्तोत्रीयस्तृचः प्रथमः। 'प्रति वां सूर उदिते' (साम० १०६७-६९) इति मैत्रावरुणस्याज्यस्य द्वितीयः स्तोत्रीयस्तृचः। 'भिन्धि विश्वा अपद्विषः' (साम० १०७०-७२) इति ब्राह्मणाच्छंशिन आज्यस्य तृतीयः स्तोत्रीयस्तृचः। 'यज्ञस्य हि स्थ (साम० १०७३-७५) इत्यच्छावाकस्याज्यस्य चतुर्थः स्तोत्रीयस्तृचः। इत चत्वारस्तृचाश्चतुर्णामाज्यस्तोत्राणां स्तोत्रीयास्तृचाः स्तोमः— एतेषु चतुर्ष्वाज्येषु त्रयस्त्रिंशः स्तोमः। साम— गायत्रं साम प्राकृतम्। (तां० ब्रा० सा० १३,८) स्तोमविष्टुतिः —द्र० त्रयस्त्रिंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने होतुराज्यशस्त्रस्य जपः, आहावः तूष्णीं शंसः एते ऐकाहिकाः। निवित्पदानि— ऋ०खि० ५।५।१) पारुच्छेपमाज्यसूक्तम्—'अयं जायत मनुषो धरीमणि' (ऋ० १।१२८।१-७ आ०श्रौ० ८।१९ ऐ० ब्रा० ५।१२)। अत्यष्टिच्छन्दस्कस्य त्रयवसानस्य सूक्तस्याद्याः प्रथमेऽर्धर्चे विग्रहः प्रकृप्राप्तः। अत्र च पारुच्छेप्याः प्रथमार्धर्चस्य त्रिपदत्वात् पूर्वमेकः पादः पश्चाद् द्वौ पादौ यथा भवति तथा विग्रहः कर्तव्यः (तु०—आ०श्रौ० ८।१।१० नारायणः)। तथा च सप्तपदानां पारुच्छेपीनामर्धर्चबहु-

त्वात् सकृद्वसाने प्राप्ते त्रिभिपादै वसनं चतुर्भिः प्रणवः कर्तव्यः यत्र पारुच्छेप्योऽर्धर्चशः शस्यन्ते (तु०—आ०श्रौ० ८।१।११ नारायणः। इति विशेषोऽनुसन्धेयः। शस्त्र परिधानीया—'विश्वायुं विश्ववेदतम्' (ऋ० १।१२८।८)। शस्त्वा जपः शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५,९,२६)। द्र० आहाव—, आहावप्रदेश-, शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुराज्यशस्त्रशंसनप्रकारः अत्रत्यशंसनप्रकारश्च द्रष्टव्यः।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाह प्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने होतुः प्रउगशस्त्रस्य प्रथमा पुरोरुक्—'वायुरग्रेगाः' (ऋ०खि० ५।६।१) ततः प्रथमो वायव्यस्तृचः—'तीर्णबर्हिरूप नः' (ऋ० १।१३५।१-३ ऐ० ब्रा० ५।१३ आ०श्रौ० ८।१।१२)। द्वितीया पुरोरुक्—'हिरण्य वर्तिनी' (ऋ०खि० ५।६।२)। द्वितीय ऐन्द्रवायवस्तृचः—'आ वां रथो नियुत्वान्' (ऋ० १।१३५।४-६)। तृतीया पुरोरुक्—'काव्या राजानः' (ऋ०खि० ५।६।३)। तृतीयो मैत्रावरुणस्तृचः—'सुषुभा यान भद्रिभिः' (ऋ० १।१३७।१-३)। चतुर्थी पुरोरुक् 'दैव्या अध्वर्यू' (ऋ०खि० ५।६।४)। चतुर्थ आश्विनस्तृचः—'युवां स्तोमेभिर्देवयन्तो अश्विना' (ऋ० १।१३९।३-५)। पञ्चमी पुरोरुक्—'इन्द्र उक्थेभिः (ऋ०खि० ५।६।६)। पञ्चम ऐन्दरतृचः—'अवर्मह इन्द्र' (ऋ० १।१३३।६-७) इति द्वे। 'वृषन्निन्द्रं वृषणासः' (ऋ० १।१३९।१) इत्येका। षष्ठो वैश्वदेवस्तृचः—'अस्तु श्रौषट् पुरो अग्निम्' (ऋ० १।१३९।१, ओ बूणो अग्ने (ऋ० १।१३९।७) 'ये देवासो दिव्येकादश' (ऋ० १।३९।११ इति एकपातिन्यः। सप्तमी पुरोरुक्—'वाचा महीम्' (ऋ०खि० ५।६।७) सप्तमः सारस्वतस्तृचः—'इयमददाद् रभसम्' (ऋ० ६।६१।१-३)। अस्मिन् सप्तमे तृचे प्रत्यृचमन्ततो यानि अष्टावक्षराणि तानि द्विरुत्त्वा प्रणवः कार्यः। न वा कार्य इति विशेषोऽवगन्तव्यः (तु०— आ०श्रौ० ८।१।१२-१३ नारायणः)। शस्त्रपरिधानीया—'सरस्वति देवानिदः' (ऋ० ६।६१।३)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिका (तु०—आ०श्रौ० ५।१०।४-१०)। शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रशंसनप्रकारः अत्रोक्तप्रकारश्च द्रष्टव्यः।

**पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातःसवने मैत्रावरुणशस्त्रस्य षडहस्तोत्रियस्तृचः—'प्रति वां सूर उदिते' (ऋ० ७।६६।७-९ आ०श्रौ० ७।२।२)। अनुरूपस्तृचः—श्वः स्तोत्रियतृचाभावात् ऐकाहिकस्तृचः—'आ नो गन्तं रिशा दसा' (ऋ० ५।७१।१-३ आ०श्रौ० ५।१०।२८)। आरम्भणीया—'ऋजुनीती नो वरुणः' (ऋ० १।९०।१)। १ त्रयस्त्रिंशस्तोमातिशंसन (वृद्धि) निमित्तस्तृचावापः—परिशिष्टतृचावापस्थाने 'प्रतिवां सूर उदिते' (ऋ० ७।६६।७८९) इति नित्यात् तृचा दधिकं 'पुरूरुणा चिद्धचस्ति' (ऋ० ८।७०।१-३

आ०श्रौ० ७।५।९)। इति तृचभावपेत स्तोमकारणात्। अस्मात् तृचावापात् परं एकविंशति वा द्वाविंशति वा ऋचोऽधिकाः आवपेत एकया हीनया वा (तु०—आ०श्रौ० ७।५।११ १३ नारायणः)। द्र० स्तोमातिशंसननिमित्तः परिशिष्टवापतृचस्थानेऽधिकस्तृचावाप—। २. अथाप्यारम्भणीयाभ्य ऊर्ध्वं महावालभिन्निमित्तनाभाकतृचावापः—मैत्रावरुणश्चेत् तृतीय सवने महावालमिदं शंसेत् तदा मैत्रावरुणः 'यः ककुभो निधारयः' (ऋ० ८।४१ ४-६) ऐ० ब्रा० ६।२४)। अथवा 'स क्षपः परिषस्वजे' (ऋ० ८।४१।३-५)। ऐ० ब्रा० ६।२४ आ०श्रौ० ७।२।१७) इति नामकं तृचमावपेत। तदाह नारायण 'यस्मिन् क्रतौ तृतीयसवने मैत्रावरुणो महावालभिदं शंसेत् तस्मिन् प्रातः सवने होत्रकाः स्वे स्वे शस्त्रे ऊर्ध्वमनुरूपेभ्यः आरम्भणीयाभ्यो वा नामकांस्तृचानवपेरन् गायत्रीकारम् ता ऋचः षट्पदाः (महापङ्क्तयो) जगत्यः द्वे द्वे गायत्र्यौ कृत्वा शंसेयुः' (आ०श्रौ० ७।२।१६।१७ नारायणः)। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणस्य विकृतशिल्पशस्त्र-। पर्यासतृचः, शस्त्रपरिधानीया, शस्त्वाजपः, शस्त्रयाज्या प्रथमाहर्वत्। द्र० आहाव-आहावप्रदेश—। शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने मैत्रावरुणशस्त्रशंसनप्रकारः अत्रोक्तशंसनप्रकारश्च।

**पृष्ठ्यषडहस्य षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे...... षष्ठेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रस्य षडहस्तोत्रियस्तृचः—'भिन्धि विश्वा अप द्विषः (ऋ० ८।४५।४०-४२)। अनुरूपस्तृचः—श्वः स्तोत्रियतृचाभावात् ऐकाहिकस्तृचः 'आ नो याहि सुतावतः' (ऋ० ८।१७।४-६ आ०श्रौ० ५।१०।२८)। आरम्भणीया—'इन्द्रं वो विश्वतस्परि' (ऋ० १।७।१०)। १. त्रयस्त्रिंशस्तोमातिशंसन (वृद्धि) निमित्तस्तृचापः—परिशिष्ट तृचावापस्थाने 'भिन्धि विश्वा अथ द्विषः (ऋ० ८।४५।४०-४२)। इति नित्यात् तृचादधिकं 'इन्द्रे' हि भत्स्यन्धसः' (ऋ० १।९।१-३, आ०श्रौ० ७।५।१५)। इति तृचमावपेत स्तोमकारणात्। अस्मात् तृचावापात् परमेकविंशति द्वाविंशतिं वा ऋचोऽधिकाः आवपेत एक या हीनया वा (तु०—आ०श्रौ० ७।५।११-१२)। द्र० स्तोमातिशंसननिमित्तः परिशिष्टावापतृच स्थानेऽधिक स्तृचावाप—। २. अथप्यारम्भणीयाभ्य ऊर्ध्वं ऐच्छिको महावालभिन्नमित्त नाभाक तृचावापः—मैत्रावरुणश्चेत् तृतीयसवने महावालमिंदं शंसेत् तदा ब्राह्मणाच्छंसी 'पूर्वीष्ट इन्द्रोपमातयः' (ऋ० ८।४०।९-११ ऐ० ब्रा० ६।२४, आ०श्रौ० ७।२।१७)। इति नाभाकं तृचमावपेत। तदाह नारायणः 'यस्मिन् क्रतौ... इत्यादि शिष्टं मैत्रावरुशस्त्रवद् द्रष्टव्यम्। द्र० पृष्ठ्यषडहस्य षष्ठेऽर्हान मैत्रावरुणस्य विकृतशिल्पशस्त्र-। पर्यासतृचः, शस्त्रपरिधानीये, शस्त्वा जपः, शस्त्रायाज्या च प्रथमाहवुत्। द्र० आहाव-, आहावप्रदेश, शस्त्रशंसनप्रकारः—अग्निष्टोमे प्रातःसवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकार, अत्रोक्तप्रकारश्च।

**पृष्ठ्यषडहस्य षष्ठेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य प्रातःसवने अच्छावाकशस्त्रस्य षडहस्तोत्रियस्तृचः—

'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८ ।३८ ।१-३ आ०श्रौ० ७ ।२ ।४) । अनुरूपस्तृचः—श्वः षडहस्तोत्रियभावात् ऐकाहिकस्तृचः 'इन्द्राग्नी अपस्परि' (ऋ० ३ ।१२ ।३-९ आ०श्रौ० ५ ।१० ।२८) । आरम्भणीया—'यत् सोम आ सुते नरः' (ऋ० ७ ।९७ ।१०) । १. त्रयस्त्रिंशस्तोमातिशंसन (वृद्धि) निमित्ततृचावापः—परिशिष्ट तृचापस्थाने 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८ ।३८ ।१-३ आ०श्रौ० ७ ।२ ।४) इति नित्यात् तृचादधिकं 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८ ।३८ ।१-३) इति तृचं आवपेत स्तोमकारणात् । अ-स्मात् तृचावापात् परमेकविंशतिं वा द्वाविंशतिं वा ऋचोऽधिकाः आवपेत एकया हीनया (तु०—आ०श्रौ० ७ ।५ ।११-१२) । द्र० स्तोमातिशंसननिमित्तः परिशिष्टावापस्थानेऽधिकतृचावाप— । २. अथाप्यारम्भणीयाभ्य ऊर्ध्वं महावालभिन्निमित्तनाभाकतृचावापः—मैत्रावरुणश्चेत् तृतीयसवने महावालमिदं चेत् शंसेत् तदा अच्छावाकः 'ता हि मध्यं भराणाम्' (ऋ० ८ ।४० ।३-५ ऐ० ब्रा० ६ ।२४, आ०श्रौ० ७ ।२ ।१७) । इति नाभाकं तृचमावपेत । तदाह नारायणः 'यस्मिन् क्रतौ...' इत्यादि शिष्टं मैत्रावरुणशस्त्रवद् द्र० । द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणस्य विकृतशिल्पशस्त्र— । पर्यासतृचः शस्त्रपधानीया, शस्त्वा जपः, शस्त्रयाज्या च प्रथमाहवत् । द्र० आहाव—, आहावप्रदेश—, शस्त्रशंसनप्रकारः—द्र० अग्निष्टोमे प्रातःसवने अच्छावाकशस्त्रशंसनप्रकारः, अत्रोक्तप्रकारश्च ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनपवमान—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने माध्यन्दिन पवमानस्य स्तोत्रीयास्तृचाः- 'इन्द्रायेन्दो मरुत्वते' (साम० १०७६-७८) । इति प्रथमस्तृचः । 'मृज्यमानः । सुहस्त्या' (साम० १०७९-८०) इति द्वितीयः शाक्वरः सामतृचः । 'एतमुत्यंदश क्षिपः' (साम० १०८१-८३) । इति तृतीयस्तृचः । इत्येते माध्यन्दिनपवमानस्य त्रयः स्तोत्रीयास्तृचाः । सामानि—तत्र प्रथमे तृचे गायत्रं साम, इषोवृष्टधीयम्, क्रौञ्चम्, वाजदावर्यः साम, रेवत्यः साम षण्णिधनाः । इति पञ्च सामानि । द्वितीये तृचे औक्षणे रन्ध्ने द्वे साम्नी, वाजतित् साम, वरुणसाम, अङ्गिरसां गोष्ठः साम इति पञ्च सामानि । तृतीये तृचे इहवद्वामदेव्यं साम । इत्येतानि माध्यन्दिनपवमानस्य एकादश सामानि । स्तोमः—एवं गायत्र्यादिषु इहवद्वामदेव्यान्तेषु एकादशसामसु तृचेषु क्रियमाणेषु निष्पाद्यमानस्त्रयस्त्रिंशस्तोमो निष्पद्यते । स एव माध्यन्दिनपवमानस्य स्तोमः (तु०—तां० ब्रा० सा० १३ ।९) । विष्टुतिः—द्र० त्रयस्त्रिंशस्तोमविष्टुति— ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयस्तृचाः—'रेवतीर्नः, (साम० १०८४-८६) 'इति होतुः पृष्ठस्य प्रथमः स्तोत्रीयस्तृचः । 'कयानश्चित्र आ' (साम० ६८२-८४) इति मैत्रावरुणस्य पृष्ठस्य द्वितीयस्तृचः । 'सुरूपकृत्नुमूतये' (साम० १०८७-८९) इति ब्राह्मणाच्छंसिनः

पृष्ठ्यस्य तृतीयस्तृचः। 'उभे यदिन्द्र रोदसी' (साम० १०९०-९२)। इति अच्छावाकस्य पृष्ठस्य चतुर्थस्तृचः। इत्येते चत्वारः तृचाश्चतुर्णां पृष्ठस्तोत्राणां तृचाः। सामानि—तत्र प्रथमे तृचे रेवतीषु वारवन्तीयं साम। द्वितीये तृचे वामदेव्यम्। तृतीये तृचे तिसृषु षट्पदासु ऋषभो रैवतः साम। चतुर्थे तृचे षट्पदासु श्येनः साम। इत्येतानि चत्वारि सामानि। स्तोमः—एतेषु चतुर्ष्वपि पृष्ठस्तोत्रेषु त्रयस्त्रिंशः स्तोमः कार्यः (तु०—तां० ब्रा० सा० १३।१०)। विष्टुतिः द्र० त्रयस्त्रिंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु...पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृचः—'पूर्व्यो महानाम्' (ऋ० ८।६३।१-३ ऐ० ब्रा० ५।१२ आ०श्रौ० ८।१।१४)। अनुचरस्तृचः 'त्रय इन्द्रस्य स्तोमाः' (ऋ० ८।२।७-९)। इन्द्रनिहवः प्रगाथः—ऐकाहिकः-'इन्द्र नेदीय एदिहि' (ऋ० ८।५३।५)। ब्राह्मणस्पत्यः प्रगाथः—'प्र नूनं ब्रह्मणस्पतिः' (ऋ० १।४०५-६ आ०श्रौ० ७।३।४।६)। तिस्रो धाय्याः—ऐकाहिकाः मरुत्वतीयः प्रगाथः-'न किः सुदासः' (ऋ० ७।३२।१०-११ आ०श्रौ० ७।३।४;६;७;५।२२)। प्रथमं पारुच्छेयं निविद्धानीयसूक्तम्—'यं त्वं रथमिन्द्र' (ऋ० १।१२९।१-११)। अत्र पारुच्छेपीनां शंसनविधिः—यत्र विषये त्रिष्टुब्जगत्यादीनां चतुष्पदानां पच्छः शंसनं विहितं तत्र पारुच्छेपीनामेवं भवति। एकेन पादेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुत्य पुनर्द्वाभ्यां पादाभ्यामवसाय द्वाभ्यामेव प्रणुयात्। पारुच्छेपीनां सप्तपदानामेवायं विधिः भवति। एतदुक्तं भवतियास्वृक्षु एकेनाग्रेऽवसाय ततो द्वाभ्यां प्रणुयात् पुनश्च द्वाभ्यामवसाय द्वाभ्यामेव प्रणवः संभवति तासु पारुच्छेपीष्वयं विधिरिति। यत्र 'पच्छः पारुच्छेद्यः' इति सार्वषिकोऽयं विधिरिति। तेन 'इन्द्राय हिद्यौरसुरो अनन्तर' (ऋ० १।१३१।१) इत्येवमादिष्वपि भवत। 'स नो नव्येभिः' (ऋ० १।१३०।१०) इत्येवमादिष्वसप्तपदत्वात् तु न संभवति इति विशेषोऽव- गन्तव्यः (आ०श्रौ० ८।१।१५ नारायणः)। द्वितीयं निविद्धानीयसूक्तम्—'स नो वृषा वृष्ण्येभिः' (ऋ० १।१००।१-१९) तृतीयं निविद्धानीय तृच सूक्तम्-'इन्द्र मरुत्व इह (ऋ० ३।५१।७-९) आ०श्रौ० ८।१।१४)। अन्त्ये सूक्ते निवित्पदानि (ऋ० खि० ५।५।२ आ०श्रौ० ७।११।२६; ७।१२।९)। ब्राह्मणे निविद्धानीयसूक्तान्ते 'अयं हयेन वा इदम्' इति शस्त्रान्यतृचे निवित्पदप्रक्षेपः विहितः (ऐ० ब्रा० ५।१२)। शस्त्रपरिधानीया—'इन्द्रं प्रत्वेन मन्मना' (ऋ० ८।७६।६)। शस्त्वाजपः शस्त्र याज्या चैकाहिके (तु०—आ०श्रौ० ५।१४।२६)। इति। द्र० आहाव-, आहाव प्रदेश-, शस्त्र शंसनप्रकारः—द्र० अग्निष्टोमे होतुर्मरुत्वतीयशस्त्रशंसनप्रकार-, अत्रोक्तः शंसनप्रकारश्च।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु...पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य युग्मत्वात् षष्ठेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य युग्मत्वात् प्रथमे बृहत्पृष्ठे ऐकाहिकौ स्तोत्रियानुरूपौ

प्रगाथौ– 'त्वामिद्धि हवामहे' (ऋ० ६।४६।१-२), 'त्वं ह्येहि चेरवे' (ऋ० ८।६१।७-८) (तु०—आ०श्रौ० ५।१५।३;७।५।३)। द्वितीये रैवतपृष्ठे स्तोत्रियस्तृचः—'रेवतीर्नः' (ऋ० १।३०।१३-१५ ऐ० ब्रा० ५।१२ आ०श्रौ० ८।१।१६)। अनुरूपस्तृचः—'रेवा इदरेवताःस्तोता' (ऋ० ८।२।१३-१५ धाय्या—'यद् वावान' (ऋ० १०।७४।६ ऐ० ब्रा० ५।१२ आ०श्रौ० ८।१।१६)। यदि तु सामगा बृहत्पृष्ठं न कुर्युस्तदा होता धाय्यानन्तरं बृहत्पृष्ठस्य 'त्वामिद्धि हवामहे' (ऋ० ६।४६।१-२)। इत योनिमृचंशंसति। रैवत पृष्ठमपि चेन्न कुर्युस्तदा 'रेवतीर्नः सधमादे' (ऋ० १।३०।१३) इति रैवतयो निमृचं शंसेत्। बृहत्पृष्ठस्य सामप्रगाथः—'उभयं शृणवच्च नः' (ऋ० ८।६१।१-२)। दैवतपृष्ठस्य सामप्रगाथः—'उभयं शृणवच्च नः' (ऋ० ८।६१।१-२) दैवतपृष्ठस्य सामप्रगाथः—'इन्द्रमिद देवतातये' (ऋ० ८।३।५-६)। तार्क्ष्यसूक्तम्—'त्यमू षु वाजिनम्' (ऋ० १०।१७८।१-३)। प्रथम निविद्धानीयं सूक्तम्—'एन्द्र याह्युप नः परावतः' (ऋ० १।१३०।१-१०)। द्वितीयं निविद्धानीयसूक्तम्—'प्र घा न्वस्य' (ऋ० २।१५।१-१०)। तृतीयं निविद्धानीयसूक्तम्-अभूरेको रयिपते (ऋ० ६।३१।१-५)। अन्त्ये निवित्पदानि—(ऋ० खि० ५।५।३) आ०श्रौ० ७।११।२६)। ब्राह्मणे निविद्धानीय सूक्तान्ते उप नो हरिभिः सुतम् (ऋ० ९३।३१-३३) इति तृचे शस्त्रान्ततृचे निवित्पप्रेयो विहितः (तु०—ऐ० ब्रा० ५।१३)। शस्त्रपरिधानीया — 'अशिक्षो यत्र शच्या' (ऋ० ६।३१।५)। शस्त्वाजपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।१६।२३)। द्र० आहावः-, आहावप्रदेश द्र० योनि-, योनिशंसन-योनिस्थान—शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्निष्केवल्य शस्त्रशंसनप्रकारवद् द्र०।

**पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य एकाहिकः स्तोत्रियस्तृचः—'कया नश्चित्र आ' (ऋ० ४।३१।१-३)। ऐकाहिकः अनुरूपस्तृचः-'कया त्वं नः' (ऋ० ८।९३।१९-२१)। चातुर्विंशिकः स्तोत्रियः प्रगाथः—'मा चिदन्यात् विशंसत' (ऋ० ८।१।१-२)। चातुर्विंशिकः अनुरूपः प्रगाथः—'मा चिद्धि जनाः' (ऋ० ८।१३।३)। कद्वत्प्रगाथः-प्रथमाहवत्। आरम्भणीया—'अप प्राचः' (ऋ० १०।१३१।१)। ततः मैत्रावरुणस्याविकृत शिल्पशस्त्रम्—यदीदं षष्ठम हरग्निष्टोमसंस्थं स्यात् तदा तृतीयसवने शंसने प्राप्तेऽपि माध्यन्दिन एव सवने आरम्भणीयाभ्य ऊर्ध्वं प्रकृत्या न्यूङ्खादि विकाररहितानि शिल्पानि मैत्रावरुणादयो होत्रकाः शंसेयुः' इति वचनात् मैत्रावरुणो वालखिल्यानां यानि बार्हतानि षट् सूक्तानि 'अभि प्र वः' इत्यादि 'वितोशया' इत्यन्तानि (ऋ० ८।४९-५४) तानि स्वशिल्पं शंसति (तु०—आ०श्रौ० ८।४।७-८ नारायणः)। अहरहाशस्य सूक्तम्—'सद्यो हजातः' (ऋ० ३।४९)। परुच्छेपतृचावापः—'इन्द्रस्य हि द्यौरसुरः' (ऋ० १।१३१।१-३)। ऊर्ध्वं परुच्छेपीभ्यः त्रयस्त्रिंशे महास्तोमे वर्धमाने स्तोमवृद्धिनिमित्तः (स्तोमसंख्यामतिक्रम्य ऋक् संखअयाविवृ-

द्विर्यम्) अष्टर्चसूक्तवापः— 'को अद्य नर्यः' (ऋ० ४।२५,१-८ आ०श्रौ० ७।१२।१ ऐ० ब्रा० ६।१९)। एतेन शस्यमानेनापि स्तोमो यद्यनतिशस्तोभेत् तदा ऐन्द्रं त्रिष्टुप् छन्दस्कं मरुच्छब्दवर्जितं सूक्तमावपेत (तु०—आ०श्रौ० ७।१२।२ नारायणः)। **द्र०** महास्तोम—, महास्तोमाहः स्तोमातिशंसननिमित्तः सूक्तावाप—। चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्— 'कथामहाम- वृधत्' (ऋ० ४।२३ आ०श्रौ० ७।११।४० ऐ० ब्रा० ६।१९)। शस्त्र परिधानीया, शस्त्रयाज्या च प्रथमाहवत्। **द्र०** संपातसूक्त-, आहाव-, आहावप्रदेश-, शस्त्र शंसनप्रकारः-अग्निष्टोमे माध्यन्दिन सवने मैत्रावरुणशस्त्रशंसनप्रकार—इहोक्तः (आ०श्रौ० ८।१।१५) पारुच्छेपीनां शंसनप्रकारश्च। अत्र अहरहः शस्यसूक्तस्य एकभूयसीः शस्त्वा मैत्रावरुणो दूरोहेण (विहारेण) रोहेत्। अस्मिन्नेव षष्ठेऽहनि एकाही भवति सति संपातसूक्ते दूरोहणं रोहेत्। इति विशेषोऽवधेयः।

**पृष्ठ्यषडहस्य षष्ठेऽहनि ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु...पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रस्य स्तोत्रियस्तृचः— 'सुरूप कृत्नुमूतये' (ऋ० १।४।१-३)। अनुरूपस्तृचः—'शुष्मिन्तमं न ऊतये' (ऋ० ३।३७।८-१०)। कद्वत्प्रगाथः—प्रथमाहवत्। आरम्भणीया- 'ब्रह्मणा ते' (ऋ० ३।३५।४)। ततः ब्राह्मणाच्छंसिनोऽविकृतशिल्पशस्त्रम्-यदीदं षष्ठमहरग्निष्टोमसंस्थं स्यात् तदा तृतीयसवने शंसने प्राप्तेऽपि माध्यन्दिन एव सवने आरम्भणीयाभ्य ऊर्ध्वं प्रकृत्या न्यूङ्खादिविकार रहितानि शिल्पानि मैत्रावरुणादयो होत्रकाः शंसेयुः इति वचनात् ब्राह्मणाच्छंसी ऊर्ध्वमारम्भणीयायाः 'अथ प्राचः' (ऋ० १०।१३१) इति सुकीर्ति सूक्तम्, 'विहि त सोतोरसृक्षत' (ऋ० १०।८६)। इति वृषाकपिसूक्तं पङ्क्तिशंसनं च स्वशिल्पशस्त्रं शंसति (तु०—आ०श्रौ० ८।४।७-९)। अहरहः शस्यसूक्तम्—'उदु ब्रह्माण्यैरत' (ऋ० ७।२४। पारुच्छेपतृचावापः— 'वि त्वा चतस्रः' (ऋ० १।१३१।३-५ आ०श्रौ० ७।११।४० ऐ० ब्रा० ६।१९)। चातुर्विंशिकाहीनस्थाने संपातसूक्तम्—'यस्तिग्मशृङ्गो वृषभः (ऋ० ७।१९)। शस्त्रपरिधानीया शस्त्रयाज्या च प्रथमाहवत्। **द्र०** संपातसूक्त-, आहाव-, आहावप्रदेश-, शस्त्रशंसनप्रकारः—अग्निष्टोमे माध्यन्दिनसवने ब्राह्मणाच्छंसिशस्त्रशंसनप्रकार-, इहोक्तः (आ०श्रौ० ८।१।१५) पारुच्छेपीनां शंसनप्रकारश्च।

**पृष्ठ्यषडहस्य षष्ठेऽहनि अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु... पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिन सवने अच्छावाकशस्त्रस्य स्तोत्रियस्तृचः— 'स्वादोरित्थाविषूवतः' (ऋ० १।८४।१०-१२)। अनुरूपस्तृचः— 'इत्था हि सोमे' (ऋ० १।८०।१-३)। कद्वत्प्रगाथः— प्रथमाहवत्। आरम्भणीया—'उरुं नः (ऋ० ६।४७।८)। ततः अच्छावाकस्य विकृतशिल्पशस्त्रम्—यदीदं षष्ठमहरग्निष्टोमसंस्थं स्यात् तदा तृतीयसवने शंसने प्राप्तेऽपि माध्यन्दिन एव सवने ऊर्ध्वमारम्भणीयायाभ्यः प्रकृत्या न्यूङ्खादिविकाररहितानि शिल्पानि मैत्रावरुणादयो

होत्रकाः शंसेयुः' इति वचनात् अच्छावाकः ऊर्ध्वमारम्भणीयायाः 'द्यौर्न य इन्द्र' (ऋ० ६ ।२०) इति प्रत्येव या मरुत्संज्ञकं सूक्तं स्वशिल्पं शंसति । आ०श्रौ० ८ ।४ ।७ । १०-११)। अहरहः शस्य सूक्तम्— 'अभितष्टे दीधया' (ऋ० ३ ।३८) । पारुच्छेपतृचावापः—'आदित् ते अस्य वीर्यस्य' (ऋ० १ ।१३१ ।५-७) । ऊर्ध्वं पारुच्छेपीयभ्यः त्रयस्त्रिंशे महास्तोमे वर्धमाने स्तोमवृद्धिनिमित्तः । स्तोमसंख्यामतिक्रम्य ऋक्संख्याविवृद्ध्यर्थ) अष्टर्चसूक्तावापः— 'आयाह्यर्वाङ्' (ऋ० ३ ।४३ ।१८ ऐ० ब्रा० ६ ।१९ आ०श्रौ० ७ ।१२ ।१) । एतेन शस्यमानेनापि स्तोमो यद्यनतिशस्तोभवेत् तदा ऐन्द्रं त्रिष्टुप् छन्दस्कं मरुच्छब्द वर्जितं सूक्तभावपेत (आ०श्रौ० ७ ।१२ । २ नारायणः) । द्र० महास्तोमाहन्–, महास्तोमाहः स्तोमाति शंसननिमित्तः सूक्तवाप— । चातुर्विंशिकाहीनसूक्तस्थाने संपातसूक्तम्—'इच्छन्ति त्वा सोम्यासः' (ऋ० ३ ।३०) शस्त्रपरिधानीया शस्त्रयाज्या च प्रथमाहवत् । द्र० संपातसूक्त-, आहाव-, आहावप्रदेश-, शस्त्रशंसनप्रकारः-अग्निष्टोमे माध्यन्दिन सवने अच्छावाकशस्त्रशंसनप्रकार-, इहोक्तः(आ०श्रौ० ८ ।१ ।१५) पारुच्छेपीनां शंसनप्रकारश्च ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीन सत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने आर्भवपवमानस्य स्तोत्रीयास्तृचाः—'परिस्वानो गिरिष्ठाः' (साम० १०९३-९५) इति प्रथमः स्तोत्रीयस्तृचः । 'स सुन्वे यो वसूनाम्' (साम० १०९६-९७) इति द्वितीयः सामतृचः । 'तं वः सखायः' (साम० १०९८-११००) । इति तृतीयस्तृचः । 'सोमाः पवन्त इन्दवः' (साम० ११०१-३) । इति चतुर्थस्तृचः । 'अया पवा पवस्वैना' (साम० ११०४-६) । इति पञ्चमस्तृचः । इत्येते आर्भवपमानस्य स्तोत्रीयास्तृचाः । सामानि— तत्र प्रथमे तृचे गायत्रं साम, त्रीणि वैदन्वतानि सामानि इति च त्वादि सामानि । द्वितीये तृचे भारद्वाजस्य लोम साम तृतीये तृचे कार्णश्रवसं साम । चतुर्थे तृचे गौरीवितं साम, मधुश्च्यश्चिन्नेध्नंसाम, क्रौञ्चे द्वे सामनी इति चत्वारि सामानि । पञ्चमे तृचे श्नौष्ठं साम । इत्येतानि एकादश सामानि । स्तोमः—गायत्रादिश्नौष्ठान्तेषु एकादशसु सामसु प्रत्येकं तृचे गीयमानेषु त्रयस्त्रिंशस्तोमे । निष्पद्यते । (तां० ब्रा० सा० १३ ।११) विष्टुतिः— द्र० त्रयस्त्रिंशस्तोमविष्टुति— ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य उक्थ्यसंस्थे षष्ठेऽहनि तृतीयसवने अग्निष्टो मस्तोत्रस्य सामतृचः— 'यज्ञायज्ञा वः' (साम० ७०३-४) । सामयज्ञायज्ञीयं साम । स्तोमः-त्रयस्त्रिंशः स्तोमः ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि उक्थस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने उक्थस्तोत्राणां द्विपदा स्तोत्रीयास्तृचाः—'अग्ने त्वं नो अन्तमः' (साम० ११०७-९) । इति मैत्रावरुणस्य प्रथमो द्विपदस्तोत्रीयस्तृचः । 'इमानु

कं भुवना' 'साम० १११०-१२) इति ब्राह्मणाच्छंसिनः द्वितीयो द्विपदास्तोत्रीयस्तृचः। 'प्र व इन्द्राय वृत्रहन्तमाय, (साम० १११३-१५) इति अच्छावाकस्य तृतीयो द्विपदा स्तोत्रीयस्तृचः। इति त्रयायां उक्थस्तोत्रामां त्रयो द्विपदास्तोत्रीयास्तृचाः। सामानि-तत्र मैत्रावरुणोक्थे गूर्दः साम। ब्राह्मणाच्छंस्युक्थे गौतमस्य भद्रं साम। अच्छावाकोक्थे उद्वंशपुत्रः (उद्वंशीयं) साम। इति त्रीणि सामानि। स्तोमः-एतेषु त्रिपूक्थस्तोत्रेषु त्रयस्त्रिंशः स्तोमः (तां० ब्रा० सा० १३।१२)। विष्टुतिः—द्र० त्रयोविंशस्तोमविष्टुति—।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुर्वैश्वदेवशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु द्वादशाहिकस्य दशरात्रस्य पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य प्रतिपत्तृचः— 'अभित्यं सवितारभोण्योः' (अथ० ७। १४।१ ऐ० ब्रा० ५।१३) इत्येका, 'तत्सवितुर्वरेण्यम्' (ऋ० ३।६२। ९-१० ऐ० ब्रा० ५।१३ आ०श्रौ० ८।१।१८)। इति द्वे प्रति पत्तृचः अनुरूपस्तृचः—'द्वेषो अगात्' (अथ० ६।१।१-३ आ०श्रौ० ८।१।१८ ऐ० ब्रा० ५।१३)। प्रथमं निविद्धानीयं सावित्रसूक्तम्—'उदुष्ण देवः सविता सवाय' (ऋ० २३८।१-११ आ०श्रौ० ७।४।१२)। निवित्पदानि-ऋखि० ५।५।४)। ऐकाहिका धाय्या-(आ०श्रौ० ५।१८।५)। द्वितीयं द्यावापृथिवीयं निविद्धानीयसूक्तम्— 'कतरा पूर्वा कतराऽपराडयोः' (ऋ० १।१८५।१-११ आ०श्रौ० ७।७।८)। निवित्पदानि- (ऋ०खि० ५।५।५)। धाय्या— ऐकाहिका (आ०श्रौ० ५।१८। ५)। आभर्वे द्वे निविद्धानीयसूक्तेप्रथमं 'किमु श्रेष्ठः किं यविष्ठं'(ऋ० १।१६१। १-१३), द्वितीयं 'उपनोवाजा अध्वरम्' (ऋ० ४।३७।१-४)। इति चतुऋचम्। (ऐ० ब्रा० सा० ५।१३)। आश्वलायने च अभिप्लवषडहस्य षष्ठेऽहनि अतिदि 'अनश्वो जातो अनभीशुः' (ऋ० ४।६।१-९) इत्यर्भवमेकं निविद्धानीयसूक्तं दृश्यते (तु०—आ०श्रौ० ७।७।२;८) निवित्पदानि— ऋ०खि० ५।५।६। तिस्रो धाय्याः (आ०श्रौ० ५।२१८।५). वैश्वदेवे द्वे निविद्धान सूक्ते-प्रथमं 'इदमित्था रौ द्रं गूर्तवचा' (ऋ० १०।६१।१-२७); द्वितीयं वे यज्ञेण दक्षिणया (ऋ० १०।६२।१-२१) इ। आश्वलायने च अभिप्लवषडहस्य षष्ठस्याह्नोऽतिदेशेन प्राप्तानां सूक्तनां यदुत्तमं 'उवासा नक्ता बृहती' (ऋ० १०।३६।१-१४ आ०श्रौ० ७।७।८) इति निविद्धानीयं सूक्तमुक्तं तत्स्थाने त्रीणि सूक्तान्युक्तानि। तत्र 'इदमित्था रौद्रम्' (ऋ० १०।६१।१-२७, 'ये यज्ञेन दक्षिणया' (ऋ० १०।६२। १-११)। इति द्वे सूक्ते वैश्वदेवे नाभानेदिष्ठे। एकं 'स्वस्तिनो मिभीताम्'(ऋ० ५।५१।११-१३) इति वैश्वदेवं तृच सूक्तमितित्रीणि। तेषां सूक्तानां शंसनप्रकारः—इदमित्थेति सूक्तस्योपोत्तमायाः 'स गृणानः' इत्यस्याः प्राक् 'ये यज्ञेन इति सूक्तमावपेत। तस्य च चतुर्थ्याः 'अयं नाभा' इत्यस्या ऊर्ध्वमुक्तायाः प्राग् याः षड् ऋचः (५-१०) ता अर्धर्चशः शंस्तव्याः। शिष्टे शस्त्वा 'स्वस्तिनः' इति तृच मावपेत। इति। (तु०—आ०श्रौ० ८।१। १९-२३ नारायणः) निवित्पदानि-(ऋ०खि० ५।५।७)। ततोऽत्र होतुः शिल्पशस्त्रम्—

नाभानेदिष्ठाख्येन महर्षिणा दृष्टं 'इदमित्था' (ऋ० १० ।६१) इत्यादि सूक्तं नाभानेदिष्ठम् । तद् होता शंसति । तं नाभानेदिष्टाख्यं सूक्तविशेषं नाराशंसाख्येन 'ये यज्ञेन' इति सूक्तेन (ऋ० १० ।६१) सहितं शंसेत् । तच्च नाभानेदिष्ठस्य मध्यभागे शंसेत् । अर्थात् इदमित्थेत्ये तन्नाभानेदिष्टं सूक्तं सप्तविंशत्यृगात्मकं भवति । तत्रावसाने द्वे ऋच्यवशिश्य पञ्चविंश्या ऊर्ध्वमेव नाराशंसं सूक्तं शंसेत् । इति वैश्वदेव नाभानेदिष्टे द्वे सूक्ते होतुः शिल्पशस्त्रमुच्यते । तथा चाश्वलायनः-'इदमित्था रौद्रमिति प्रागुपोत्तभाया ये यज्ञेनावपेत' इति (तु०—ऐ० ब्रा० सा० ६ ।१४; २७ आ०श्रौ० ८ ।१ ।२०-२१) । 'तत्र 'वालखिल्याभिर्वाचः कूटेनैकपदया' शिल्पस्वरूपमभिहितम् (तु०—ऐ० ब्रा० सा० ६ ।२४) । षड् वालखिल्यानां विहरणं च प्रथमं पच्छः (पादशः) विहरेत् । ततो द्वितीयस्यामावृत्तावर्धर्चशो विहरेत् । तृतीयस्यामावृत्तौ ऋक्शो विहरेदिति । तदुक्तम्-'पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयम्' (ऐ० ब्रा० सा० ६ ।२४) । द्र० वाचः कूट— । इह होतुः शिल्पशस्त्रेयन नाभानेदिष्ठ सूक्तद्वयं होता शंसति तेन सह वालखिल्यैर्महर्षिभिर्दृष्यानि 'अभि प्र वः सुराधसम्' (ऋ० ८ ।४९-५६) इत्यष्टौ वालखिल्य सूक्तानि, 'विहिसोतोरअसृक्षत' (ऋ० १० ।८६) इति वृषाकपिसूक्तम्, 'प्र वो महे मतयः' (ऋ० ५ ।५७) इति एवया मरुत्सूक्तम् इति सूक्तानि शंसति । तान्येतानि मिलित्वा द्वादश सूक्तानि चतुर्विध मन्त्रजातानि वा सहचराणि याज्ञिकैरुच्यन्ते । तदुक्तम् 'तान्येतानि सहचराणीत्या चक्षते नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सहैव शंसेत्' एतानि चतुर्विधानि प्रयोगकाले सहैव वर्तन्ते इति याज्ञिकाः । सदृशंसनाभावे तु यदि कथंचिदेषां चतुर्णां मध्ये एकमपिलुप्तं कुर्यात् तदा नीं यजमानस्य श्रेयो विनाशयेत् इति दोषः स्यात् (तु०—ऐ० ब्रा० सा० ५ ।१५) । एतच्च साहचर्य शंसनं होतुः वैश्वदेवशस्त्रे होत्रकाणां च स्वेषूक्थ्यशस्त्रेषु भवति, चतसृणां होत्राणां वैश्वदेवशस्त्रे' त्रिषूक्थ्यशस्त्रेषु चेति चतुर्षु शस्त्रेषु प्रयोगो भवतीत्यर्थः । शस्त्रपरिधानीया-(ऋ० १ ।८९ ।१० आ०श्रौ०). शस्त्वाजपः शस्त्रयाज्या च द्र० आ०श्रौ० ५ ।१८ ।१३ । द्र० शिल्पसूक्तसाहचर्य-, ३ शिल्प-, आहाव-, आहावप्रदेश-, शस्त्रशंसनप्रकारः—अग्निष्टोमे होतुर्वैश्वदेवशस्त्र-, शस्त्रशंसनप्रकार—, इहोक्तः शंसनप्रकारश्च ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि होतुराग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणेऽन्यत्र चाहीनसत्रेषु पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीय सवने होतुराग्नि मारुत शस्त्रस्य शस्यं (ऐ० ब्रा० ५ ।५ ।१५, द्र० । तत्र आरम्भणीया ऋ० २ ।२६ ।१; ऐ० ब्रा० ३ ।३४ । प्रथमं वैश्वानरीयं निविद्धानीयसूक्तम्— 'अदृश्च कृष्णमहरर्जुनम्' (ऋ० ६ ।९ ।१-७) । निवित्पदानि-ऋखि० ५,५,८ । रौद्री धाय्या- (ऋ० १ ।४३ ।६) । द्वितीयं मारुतं निविद्धानीयसूक्तम्-'मध्वो वो नाम मारुतम्' (ऋ० ७ ।५७ ।१-७) । निवित्पदानि— (ऋ० खि० ५ ।५ ।९) । अग्निष्टोमसामस्तोत्रियः प्रगाथः—ऋ० ६ ।४८ । १-२; आ०श्रौ० ५ ।२० ।६) । अग्निष्टोमसामानुरूपः प्रगाथः— ऋ० ७ ।१६ ।११-१२ आ०श्रौ० ५ ।२० ।६) । जातवेदस्या-'जातवेदसे सुनवाम' (ऋ० १ ।९९ ।१) ।

तृतीयमग्नि देवत्यं जातवेदस्यं निविद्धानीय सूक्तम्—'स प्रत्नथा सहसा' (ऋ० १।९६।१-९)। निवित्पदानि— ऋ० खि० ५।५।१०)। आपो हिष्ठीयस्तृच: (ऋ० १०।९।१-३)। ऋगेका (ऋ० ६।५०।१४; आ०श्रौ० ५।२०।६)। देवपत्नी देवत्ये ऋचौ— ऋ० ५।४६।७-८; आ०श्रौ० ५।२०।६)। राकादेवत्ये ऋचौ— ऋ० २।३२।४-५ आ०श्रौ० ५।२०।६। सरस्वती देवत्यैका—ऋ० ६।४९।७; आ०श्रौ० ५।२०।६) याम्या वृचौ—ऋ० १०।१४।४;३ आ०श्रौ० ५।२०।६। पित्र्या ऋच: ऋ० १०।१५।१।३;२ आ०श्रौ० ५।२०।६। आहाव:। विकृतौ प्रतिगरौ मदामोदैव, मोदामोदैवोम्। स्वादुष्किलीया ऋच:— ऋ० ६।४७।१-४ आ०श्रौ० ५।२०।६। वैष्णुवारुणी— आ०श्रौ० ५।२०।६। वैष्णवी-ऋ० १।१५४।१; आ०श्रौ० ५।२०।६। प्रजापत्या-ऋ० १०।५३।६; आ०श्रौ० ५।२०।६। शस्त्रपरिधानीया ऋ० ४।१७।२०; आ०श्रौ० ५।२०।६। अभिप्लवषडहस्य षष्ठस्वाह्न: शस्यमेव तृतीयसवने शस्यं भवति (तु०— आ०श्रौ० ७।१०।२ नारायण:) शस्त्वा जप:— आ०श्रौ० ५।२०।८। शस्त्रयाज्या (ऋ० ५।६०।८, आ०श्रौ० ५।२०।८)। इति **द्र०** आहाव—, आहावप्रदेश—। शस्त्रशंसनप्रकार:— अग्निष्टोमे होतुराग्निमारुतशस्त्रशंसनप्रकारवद् **द्र०**।

**पृष्ठ्यषडहस्य षष्ठेऽहनि तृ० सवने मैत्रावरुणस्य विकृति शिल्पशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र द्विपदाशंसने चैकाहहीन सत्रेषु पृष्ठ्यषडहस्योक्थ्यसंस्थे षष्ठेऽहनि तृतीयसवने छन्द होत्रकाणामुक्थ्यसंज्ञकेषु शस्त्रेषु द्विपदा स्वृक्षु साम० ११०७-१५) यदा छन्दोगा: स्तुवते तदा मैत्रावरुणस्य द्विपदानां स्तोत्रियस्तृच:— 'अग्ने त्वं नो अन्तम:' (ऋ० ५।२४।१-३ आ०श्रौ० ८।२।३)। द्विपदानामनुरूपस्तृच:—'अग्ने भव सुषमिधा' (ऋ० ७।१७।१-३ आ०श्रौ० ८।२।३)। तत ऊर्ध्वमनुरूपात्—मैत्रावरुण 'पच्छ: प्रथमं षड् वालखिल्यानां सूक्तानि रत्यर्धर्चशो द्वितीयमृक्शस्तृतीयम्' (ऐ० ब्रा० ६।२४) इति। 'वालखिल्या: शंसति। ता विहृता: शंसति। स पच्छ: प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये' (ऐ० ब्रा० ६।२८) इति ब्राह्मणे विहितै ऐ० ब्रा० ६।२८)। महावालभित् हौण्डिनश्चेति पूर्वोत्तरौ द्वौ विहारौ शंसति। आश्वलायनसुत्रे ८ इति नु हौण्डिनौ' इति द्वौ हौण्डिनौ 'अथ महावालभित्' (ला०श्रौ० ८।२।१७-१८)। इत्युक्तांस्त्रीन् विहारान् मैत्रावरुण: शंसति इति। अत: (१) सूत्रानुसारी प्रथम: सहचरेषु तु द्वितीय: हौण्डिनवालखिल्यविहारो निगद्यते। स षोडशिवद् विहर्तव्य:। षोडशिनि यद् विहरमं तद् यथाविहतन्यूनाच्छन्दस्कानामृचां पादानां क्रमेण मेलनेन भवति (तु०—आ०श्रौ० ६।२३-१०) तथा इहापि वालखिल्याना भष्ट सूक्तानां (ऋ० ८।४९-५६) मध्ये आदित: षण्णां (ऋ० ४९-५४) पच्छ: (पादश:) अर्धर्चश: ऋक्श: परस्परं संमेलेन विहरणं भवति। अर्थात् वालखिल्यानां प्रथम-द्वितीये सूक्ते (४९-५०) पादश:, तृतीय चतुर्थे (५१-५२) अर्धर्चश:, पञ्चम-षष्ठे (५३-५४) ऋक्श: परस्परं विहरति। विहारो नाम अन्यदीयस्य सूक्तस्य अएन्यदीयेन पादादिना संधायान्नानम् (शां०श्रौ०

१२।११।६ भाष्यम्। तत्र (क) पच्छो विहारः—'अभि वः सुराधसाम्' (४९) इत्यादि 'प्रति ते दस्यवे' (५६) इत्यन्तानामष्टवालखिल्यसूक्तानाभादितः षट्सु सूक्तेषु (४९०५४) त्रीणि युग्मानि कुर्यात्। तत्र प्रथमयुग्मगते द्वे सूक्ते (४९०५०)। पच्छो विहरेत्। अर्थात् प्रथम सूक्तगतायाः प्रथमायाः ऋचाः पादान द्वितीयसूक्तगतायाः प्रथमाया ऋचः पादैः सह संयोजयेत्। तद्यथा—अभिप्रवः सुराधसं ४९ अ प्रसुश्रुतं सुराधसम्। ५०। इन्द्र मर्च यथा विदे ४९ अ अर्चा शक्रमभिष्टयो३म् ५० ब यो जरितृभ्यो मथवा पुरूवसु४९ र्यः सुन्वते स्तुवते काम्यं५०स वसु। सहस्रणेव शक्षति४९ सहस्रणेव५० महतो३म्। इति प्रथम द्वितीयसूक्तयोः प्रथमस्य ऋग्युग्मस्य पादानां विहारेण योजनंज्ञयम्। एवमेवैतयोः सूक्तयोरिवः शिष्टानां ऋग्युग्मस्य पादानां विहारेण योजनं ज्ञयम्। एवमेवैतयोः सूक्तयोरिवः शिष्टानां ऋग्युग्मानां पदानां विहार उन्नेयः (ख) अथ अर्धर्चशो विहारः—द्वितीय ऋग्युग्मगते द्वे सूक्ते (५१-५२) अर्धर्चशो विहरेत्। तत्र तृतीयसूक्तगतौ पूर्वोत्तरौ उर्धर्चौ क्रमेण चतुर्थसूक्तगताभ्यां पूर्वोत्तराभ्या मर्धर्चाभ्यां सह योजयेत्। तद्यथा—'यथा मनौ सांवरणौ सोममिन्द्रा पिबः सुतम् (५१ पूर्वार्धर्चः) यथा भनौ विवस्वति सोमं शक्रापिवः सुतो३म् (५२ पूर्वार्धचः)। नीपातिथौ मघवन् मेध्यतिथौ पुष्टिगौ श्रुष्टिगौ सचा (५१ उत्तरार्धर्चः) यथा त्रिते छन्द जुजोषस्यायौ मादयसे स चो३म्' (५२ उत्तरार्धर्चः)॥

इति तृतीयचतुर्थसूक्तयोः प्रथमस्य ऋग्युग्मस्यार्धर्चानां विहारेण योजनम्। एवमेवैतयोः सूक्तयोः शिष्टानामृग्युग्मानामर्धर्चानां विहारे उन्नेयः। (ग) अथ ऋक्शोविहारः—तृतीययुग्मगते द्वे सूक्ते (५३-५४) ऋक्शो विहरेत्। अर्थात् पञ्चम (५३) सूक्तगता ऋचः षष्ठ (५४) सूक्तगताभिर्ऋग्भिः सह योजयेत्। तद्यथा—उपमं त्वा मघोना ज्येष्ठं च वृषभाणाम्।पूर्भित्तमं मघवन्निन्द्र गोविद मीशानं राय ईमहे३म्॥ ५३।१॥ एतत्ते इन्द्र वीर्यं गीर्भिर्गृणन्ति कारवः। ते स्तोभन्त ऊर्जमावन् घृतच्युतं पौरासो नक्षन् धीतिभिः॥ ५४।१॥ (इति प्रथम ऋग्युग्मः)। य आयूं कुत्समतिथिग्वमर्दयो वावृधानो दिवे दिवे। तं त्वा वयं हर्यश्वं शतक्रतुं वाजगन्तो हवामहे३म्॥ ५३।२॥ नक्षन्त इन्द्रमवसे सुकृतत्यया येषां सुतेषु मन्दसे। यथा संवर्ते अमदो यथा कृश एवास्मे इन्द्र मत्स्व वोम्॥ ५४।२॥ इति द्वितीयऋग्युग्मः)। एवमेव वैतयोः सूक्तयोः शिष्टानामृग्युग्मानां विहार उन्नेयः। तु०—ऐ० ब्रा० सा० ६।२८ आ०श्रौ० ८।२।३ - ६। इति प्रथमो हौण्डिनाख्यो वालखिल्यविहारः। (२) ततो वैकल्पिको द्वितीयो हौण्डिनो व्यतिमर्श (अतिमर्श) वालखिल्यविहारः—तमपि ऋक्शः पच्छोऽर्धर्चशः विहरेत्। तत्र व्यतिमर्शो नाम व्युत्क्रमः। व्युत्क्रमेण पठनं व्यतिमर्शविहारः। अति लङ्घ्य मृशमानत्वादतिमर्श इति चोच्यते। स च यथाक्रमं परित्यज्य प्रकारान्तरेण योजने सति सम्पद्यते। (ऐ० ब्रा० ६।२८) तथा च वाल खिल्यनामके ग्रन्थे आदितो यान्यष्टौ (४९-५६) सूक्तानि, तेष्वादौ यानि षट्सूक्तानि तेषु (क) प्रथमयुग्मे पूर्वस्य सूक्तस्य (४९) व्यतिमृश्य (व्युत्क्रमेण) प्रथमामृचमुत्तरस्य सूक्तस्य (५०) द्वितीयया ऋचा विहरेत् (योजयेत्) तथोत्तरस्य (५०) प्रथमामृचं पूर्वस्य (४९) द्वितीयया ऋचा विहरेत्। एवं

प्रथमद्वितीयोः सूक्तयोर्द्वयोर्द्वयोर्ऋचोविहार उक्तः। एवमेव तयोः सूक्तयोः शिष्टानामप्यृचां मध्ये एकैकामृचं व्युत्क्रमस्थामनेन प्रकारेण व्युत्क्रमस्थया पृथक् पृथग् विहरेत्। इति ऋक्शो व्यतिमर्शविहारः (तु०—आ०श्रौ० ८।२।६-९ नारायणः)। अथ (ख) अथ पच्छो व्यतिमर्श विहारः—तत्र प्रथमद्वितीयाभ्यां पादाभ्यामवस्येत्, प्रथम द्वितीयाभ्यां प्रणुयात्। तृतीयोत्तमाभ्यामवस्येत्, तृतीयोत्तमाभ्यां प्रणुयात्। इति प्रथमद्वितीयसूक्तयोः (४९-५०) पच्छो व्यतिमर्शविहार उक्तः (तु०—आ०श्रौ० ८।२।१० नारायणः)। प्रथमसूक्तस्य प्रथमायामृचि प्रथमपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयामृचि द्वितीयापादं तेन योजयेत्। द्वितीयसूक्तस्य द्वितीयस्यामृचि प्रथमपादमुक्त्वा प्रथम सूक्तस्य प्रथमायामृचि द्वितीयपादं तेन योजयेत। अथ प्रथम सूक्तस्य प्रथमायामृचि तृतीयपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि चतुर्थपादं तेन संयोजयेत्। द्वितीय सूक्तस्य द्वितीयस्यामृचि तृतीयपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि चतुर्थपादं तेन संयोजयेत्। तदिदं पादयोर्विहृतमृग्द्वयमेकः प्रगाथः सम्पद्यते (तु०—ऐ० ब्रा० सा० ६। २४)। तदग्यथा— अभि प्रवः ४९ असुराधसमिन्द्रस्य समिषो ५०।२ब महीः। शतानीका हेतयो ५०।२ अ अस्य दुष्टरा इन्द्रमर्च यथा ४९।१ब विदो३म्। यो जरितृभ्यो ४९।१स मघवा पुरूवसुर्यदीसुता ५०।२ द अमन्दिषुः। निरिर्न भुज्मा मघवत्सु ५०।२ स मघवत्सु पिन्वते सहस्रेणेव शिक्षितो३म्। इति प्रथमग्र्युग्मे पादशो व्यतिमर्श विहारः। अनेनैव न्यायेन शिष्टानामृग्युग्मानां विहार उन्नेयः। (ग) अर्धर्चशो व्यतिमर्शविहारः— वालखिल्यानां षट्सु सूक्तेषु द्वितीययुग्मे तृतीयचतुर्थयोः सूक्तयोः (५१-५२) प्रथमेनार्धर्चेनावस्येत् द्वितीयेन प्रणुयात्। पुनश्च प्रथमेनावसाय द्वितीयेन प्रणुयात् (तु०—आ०श्रौ० ८।२।११ नारायणः)। तद्यथा—यथा मनौ सावरणौ सोममिन्दापिब सुतम् (५१।१ पूर्वार्धः)। यथा मनौ विवस्वति सोमं शुक्रापिबः सुतो३म् (५२।१ पूर्वार्धः)। नीपातिथौ मघवन् मेध्यातिथौ पुष्टिगौ श्रुष्टिगौ सचा (५१।१ उत्तरार्धः) यथा त्रिते छन्द इन्द्रं जुजोषस्यायौ माध्यसे सचो३म् (५२।१ उत्तरार्धः)। इति प्रथमग्युग्मेऽर्धर्चशो व्यतिमर्शविहारः। अनेनैव प्रकारेण शिष्टानानामृग्युग्मानां विहारःउन्नेयसः (घ) ऋक्शो व्यतिमर्शविहारः— वालखिल्यानां षट्सु सूक्तेषु तृतीययुग्मे पञ्चम षष्ठयोः सूक्तयोः (५३-५४) प्रथमां शस्त्वा द्वितीयं शंसेत्। पुनश्चैवम्। (तु०—आ० श्रौ० ८।२।११ नारायणः)। तद्यथा— उपमं त्वा मघोनां ज्येष्ठं च वृषभाणाम्। पूर्भित्तमं मघवन्निन्द्र गोविंदमीशानं राय ईमहे (५३।१)॥ एतत् तं इन्द्र वीर्यं गोभिर्गृणन्ति कारवः। ते स्तोमन्त ऊर्जमावन् घृतश्चुतं पौरासो नक्षन् धीतिमो३म् (५४।१)॥ घ आयुं कुत्समतिथिग्वमर्दयो वावृधानो दिवे दिवे। तं त्वा वयं हर्यश्वं शतक्रतुं वाजयन्तो हवामहे (५३।२)॥ नक्षन्त इन्द्रमवसे सुकृत्यया येषां सुतेषु मन्दसे। यथा संवर्ते अमदो यथा कृश एकस्मै इन्द्र मत्स्वो३म् (५४।२)॥ इत्यृग्युग्मद्वयस्यर्क्शो व्यतिमर्श विहारः। अनेनैव न्यायेन शिष्टानामृग्युग्मानां विहार ऊहनीयः। (३) ततो विपर्यासशंसनम्— वालखिल्यानां षण्णां सूक्तानामुभयो

हौण्डिनयोः विहृतव्यतिमर्शयोः विहारयोरनन्तरं ये शिष्टे वालखिल्यानां सप्तमाष्टमे सूक्ते (५५ ।५६) तयोर्विपर्यासं कृत्वा शंसेत्। अर्थादष्टमं (५६) पूर्वं शस्त्वा पश्चात् सप्तमं (५५) शंसेदिति। विपरिहारः (विपर्यासः) एव तयोः कर्तव्यो न विहारः प्रतिगरश्च (तु०—आ०श्रौ० ८ ।२ ।१२ नारायणः)। ६ ।२८ ऐ० ब्रा० सा०)। इति विशेषोऽवधेयः। (४) ततः सौपर्णसूक्ते दूरोहणम् — वाल्यखिल्याभ्य ऊर्ध्वम्‌ इमानि वां भागधेयानि' (ऋ० ८ ।५९) १-७ इत्येतत् सप्तर्चं इत्येतत् सौपर्णं सूक्तं शंसेत्। तस्य (१) प्रागुत्तमायाः (६) ऋचः (शोंसावो३म् इति आहूय दूरोहणं रोहेत् (२) आरोहावरोहस्वरूपं दूरोहणं च हंसवत्या रोहेत् (शंसेत्)। यत्र कच दूरोहणं रोहेद्धं सवत्यैव रोहेत् (ऐ० ब्रा० ४ ।२०) इत्युक्तत्वात्। तच्छंसनप्रकारो यथा—'शोंसावो३म् इन्द्रावरुणा यदृशिभ्यो मनीषां वाचो मतिं श्रुतमदत्तमग्रे। यानि स्थानान्यनुसृजन्त धीरा यज्ञं तन्वाना स्तपसाभ्यपश्यो३म्' (८ ।५९ ।६) इति सौपर्णे दूरोहणम्। सौपर्णस्योपोत्तमां (षष्ठी) शस्त्वा ततः हंसवत्या आरोहक्रमेण चतुर्धा शंसनम्-(क)। हंसः शुचिषद्वसुरन्तरिक्षत्। होता वेदि षदतिथि दुरोणसत्। नृषद् वरसदृतसद्व्योमसत्। अब्जा गोजा ऋतजा अद्रिजा ऋतम्' इति प्रथमं पादशः। (ख) 'हंसः शुचिषद्वसुरन्तरिक्षद्धोतावेदिषदतिथिर्दुरोण' (सत्। नृषद् वरसदृतसद् व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम्' इति द्वितीयमर्धर्चशः। (ग) 'हंसः शुचिषद् वसुरन्तरिक्षद्धोतावेदिषदतिथिर्दुरोणसन्नृषद्वरसदृवरसद्दतसद् व्योमसत् इति तृतीयं त्रिभिः पादैः। (घ) हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसन्नृषसवरसदृत सद् व्योम सदब्जा गोजा ऋतजा अद्रिताजा ऋतो३म्' इति चतुर्थमनवान मुहत्वा प्रण वेनावस्येत्। अथावरोहक्रमेण त्रिधा शंसनम्—(क) 'हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसन्नृषद् वरसद् ऋतसद्व्योमसत्' इति पञ्चमं त्रिभिः पादैः। (च) 'हंसः शुचिषद् वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसात्। इति षष्ठमर्धर्चशः। (छ) हंसः शुचिषद् वसुरन्तरिक्षसत्। होता वेदिषदतिथिर्दुरोणसत्। नृषद् वरसद् ऋतसद्व्योम सत्। अब्जा गोजा ऋतजा अद्रिजा ऋतम्' इति सप्तमम्। इति सप्तभिः प्रकारैर्दुरोहणं सहेत्। हंसवतीं पठेदित्यर्थः। दूरोहणानन्तरं सौपर्णस्य 'इन्द्रावरुण सौमनसमदृप्तं रायस्पोषं यजमानेषु धत्तम्। प्रजां पुष्टिं भूतिमस्मासु धत्तं दीर्घायुत्वाय प्रतिरतं न आयुः'॥ (ऋ० ८ ।५९ ।७)। इत्युत्तमां शस्त्वा 'चर्षणी घृतम' (ऋ० ३ ।५१ आ०श्रौ० ६ ।१ ।२)। इत्यैन्द्रं सूक्तमैहिकं परित्यज्य 'आवां राजानौ (ऋ० ७ ।८४ ऐ० ब्रा० सा० ६ ।२६ आ०श्रौ० ८ ।२ ।१६ नारायणः)। इत्यादिकं नित्यमैकाहिकं शंसेत्। शिष्ट मुक्थ्ये मैत्रवरुणशस्त्रवद् द्रष्टव्यम्। अथ महावालभिद्विहारः— हौण्डिनव्यतिमर्श बालखिल्यविहारद्वयदूरोहणमैत्रावरुणोक्थ्यशस्त्रानन्तरं महावालभिद् विहारो भवति। तत्र वालखिल्यनाम के ग्रन्थे यान्यष्टौ प्रगाथसूक्तानि (ऋ० ८ ।४९-५६) विद्यन्ते तानि विहरेण पठितव्यानि। तत्र विहारो नाम अन्यदीयस्यसूक्तस्य अन्यदीयेन पादादिना संधायाम्नानम् (शां०श्रौ० १२ ।११ ।६ भाष्यम्)। अत उक्तेष्वष्टसु प्रगाथसूक्तेष्वादौ यानि षट्सूक्तानि (४९-५४) तानि वैकल्पिकद्वितीयहौण्डिनव्यतिमर्शविहारवत् 'एतान्येव षट् सूक्तानि

व्यतिमर्श पच्छो व्यति मर्शमर्धर्चशो व्यति-मर्शमक्शो विहरेत् (औ० ८।२।१९)। 'पच्छः प्रथमं षड् बालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयम्' (ऐ० ब्रा० ६।२४) इति त्रि प्रकारं त्रिभिः पर्यायैः विहरेत्। अर्थात् प्रथमं पच्छः (पाद-शः) विहरेत् (मिश्रीकुर्यात्)। इति प्रथमः पर्यायः। ततो द्वितीयस्यामावृत्तौ अर्धर्चशो विहरेत् इति द्वितीयः पर्यायः। तृतीयस्यामा-वृत्तौ ऋक्शो विहरेत् इति तृतीयः पर्यायः। अस्मिन् विहारे व्यतिमर्शो नाम कश्चिद् विशेषः। स च यथाक्रमं परित्यज्य प्रकारा-न्तरेण योजने सति संपद्यते। (क) तत्र यदा पच्छो विहरति तदानीमेकैकस्मिन् प्रगाथान्ते एकैकां एकपदां अनुपसन्तानामृगावानं दध्यात् (शंसेत्)। स प्रगाथैक पदयोःसमूहः वाचकूट इत्यनेन शब्देनाभिधीयते (तु०— ऐ० ब्रा० सा० ६।२४ आ०श्रौ० ८।२।२०)। तत्र षण्णां प्रगाथ सूक्ताना-मष्टा विंशतिः प्रगाथाः सन्ति। अष्टविंशति-रेव च तेषामेकपदा भवन्ति। ताः (१) इन्द्रो विश्वस्य गोपतिः। (२) इन्द्रो विश्वस्य भूपतिः। (३) इन्द्रो विश्वस्य चेतति (४) इन्द्रो विश्वस्य राजति। (५) इन्द्रो विश्वस्य विराजति। (इतः परं सपुरीषाः महानाम्नी पादाः)। (६) प्रचेतन प्रचेतय (७) इन्द्र द्युम्नाय इषे (८) राये वाजाय वज्रिवः (९) शविष्ठ वज्रिन्नृञ्जसे (१०) मंहिष्ठं वज्रिन्नृ-ञ्जसे (११) चिकित्वो अभिनोनप (१२) इन्द्रो विदेतमु स्तुहि (१३) तभूतये हवामहे (१४) जेतारमपराजितम् (१५) सनः स्वर्षदति द्विषः (१६) क्रतुश्छन्द ऋतं बृहत् (१७) पूर्वस्य यत्ते आद्रवः (१८) सुम्न आ धेहि नो वसो (१९) पूर्तिः शविष्ठ शस्यते (२०) नूनं तन्नव्यं संन्यसे (२१) प्रभो जनस्य वृत्रहन् (२२) शूरो यो गोषु गच्छति (२३) सखा सुशेवो अद्वयुः (२४) एवाहैव (२५)। एवां-ह्यग्ने (२६) एवाहीन्द्र (२७) एवाहि पूषन् (२८) एवा हि देवाः। इति सूत्रमते। अष्ट-विंशतिरेकपदाः तदुक्तम्—'प्रगाथान्तेषु चानुपसंतान ऋगावानमेकपदाः शंसेत्' इन्द्रो विश्वस्य गोपतिरिन्द्रो विश्वस्य भूपति रिन्द्रोविश्वस्य चेतवीन्द्रो विश्वस्य राज-तीति चतस्रः। एकां महाव्रतादाहरेत्। त्रयो विंशतिमष्टाक्षरान् पादान् महानाम्नीभ्यः सपुरीषाभ्यः' (आ०श्रौ० ८।२।२१-२३)। ब्राह्मणे तु 'इन्द्रो विश्वस्य गोपतिः' इत्यादय पञ्च (१) प्रचेतन प्रचेतय (२) इन्द्र द्युम्नाय न इषे (३) राये वाजाय वज्रिवः (४) शविष्ठ वज्रिन्नञ्जसे (५) मंहिष्ठ वज्रिन्नृञ्जसे (६) मंहिष्ठ वज्रिन्नृञ्जसे (७) यः शविष्ठः शूराणाम् (व्यूहेनाष्टाक्षरः) (८) चिकित्वो अभि नो नय (९) इन्द्रो विदे तमु स्तुहि (१०) तमूवये हवामहे (११) जोतारमपराजितम् (१२) स नः स्वर्षदति द्विषः (१३) क्रतुश्छन्द ऋतं बृहत् (१४) स नः स्वर्षदति द्विषः (१५) स नः स्वर्षदति द्विषः (१६) पूर्वस्ययत्ते अद्रिवः (१७) सुम्न आ धेहि नो वसो (१८) पूर्तिः शविष्ठ शस्यते (१९) नूनं तन्नव्यं संन्यसे (२०) प्रभो जनस्य वृत्रहन् (२१) समर्येषु ब्रवावहै (२२) शूरो यो गोषु गच्छ-तिरेक (२३) सखा सुशेवो अद्वयुः। इति त्रयो विंशतिरेकपदाः। तामिलित्वा अष्टावि-शति रेकपदाः। अत्र पुनरुक्तानामपि ग्रहणं सूत्रे तासां त्यागो विद्यते (तु०— देवत्रातः)। अष्टाविंशतेः प्रगाथानामाद्येषु पञ्चसु प्रगाथा-न्तेषु आद्याः पञ्चैक- पदाः प्रक्षेप्याः। षष्ठा-दीनामन्ते सूत्रपक्षे अष्टाक्षरान् महानाम्नी पादान् सपुरीषपदान् प्रक्षिपेत्। ब्राह्मणपक्षे पुरीषपदाविधाना त्पूर्व निर्दिष्टान् महानाम्नी पादानेव प्रक्षिपेत्। तद्यथा — षट्सूक्तेषु

(४९ - ५४) प्रथम सूक्तादौ ऋग्द्वयमेवमाम्नातम् 'अभि प्रवः सुराधसम्' सहस्रेणेव शिक्षितो३म्। शतानीकेव प्रजिगाति दत्राणि पुरुमोजसो३म् (ऋ० ८।४९।१-२)। द्वितीयसूक्तेऽपि ऋग्दग्वयमेवमाम्नातम्—'प्रसुश्रुतं सुराध समं० सहस्रेण मंहतो३म्। शतानीकाहेतयो अस्य० यदीं-सुता अभन्दिषो३म्' (ऋ० ८।५० १-२)। इति। अनयोः व्यतिमर्शवहारे कर्तव्ये प्रथमसूक्तस्य प्रथमायामृचि प्रथमपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयायामृचि द्वितीयपादं तेन योजयेत्। तद्यथा—'अभि प्रवः सुराधसमिन्द्रस्य समिषो महीः' इति। द्वितीय सूक्तस्य द्वितीयस्या मृचि प्रथमपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि द्वितीयपादं तेन संयोजयेत्। तद्यथा शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्चं यथा विदो३म्' इति। अथ प्रथमसूक्तस्य प्रथमायामृचि तृतीयपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि चतुर्थपादं तेन संयोजयेत्। तद्यथा—'योजरितृभ्यो मघवा पुरूवसुर्यदीं सुता अमन्दिषुः' इति द्वितीयसूक्तस्य द्वितीयस्यामृचि तृतीयपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि चतुर्थपादं तेन संयोजयेत्। तद्यथा 'गिरिं र्न भूज्यां मघवत्सु पिन्वते सहस्रेणेव शिक्षितो३म्' इति। तदिदं पादयोर्विहृतमृग्द्वयमेकः प्रगाथः संपद्यते। तस्य प्रगाथस्यान्ते 'इन्द्रो विश्वस्य गोपतिः' इत्येकपदां संदध्यादिति। एवं व्यतिमर्शविहृतप्रगाथद्विपदासमूहो वाचः कूटसंज्ञक उच्यते। **द्र०** वाच३ कूट-। अनेनैव न्यायेन सर्वेषु सूक्तेषु सर्वास्वृक्षु बुद्धिमता पादशो। व्यतिमर्शविहरणमुन्नेयम्। इति पच्छो विहारः। (तु०— ऐ० ब्रा० सा० ६।२४) (ख) अथार्धर्चशो विहार उच्यते। प्रथम सूक्तस्य प्रथमायामृचि प्रथमार्धर्चमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि उत्तरार्धर्चं तेन संयोजयेत्। तद्यथा— 'अभि प्र वः सुराधस. विदोगिरिर्नभुज्या मघवत्सु. अमन्दिषो३म्। प्रगाथान्ते द्विपदां महानाम्न्यष्टाक्षरपादं च संदध्यात्। एवं सर्वमुन्नेयम्। इत्यर्धर्चशो व्यतिमर्श विहारः। (ग) अथ ऋक्शो विहरेत्। तत्र प्रथमसूक्तस्य प्रथमामृचमुक्त्वा तया सह द्वितीयसूक्तस्य द्वितीया मृचं योजयेत्। प्रगाथान्ते द्विपदां महानाम्न्यष्टाक्षर पादं च संदध्यात्। एवं सर्वत्रोहनीयम् (तु०—ऐ० ब्रा० सा० ६।२४)। अत्र 'ओथामो दैव मदो मदामो दैवोमथ' इति विहृतप्रतिगरौ न स्तः, 'अन्यत्रैकपदाभ्यः इति निषेधवचनात् (आ०श्रौ० ८।२।२४) इत्थं बालखिल्यानां षट्सूक्तानि पादशः अर्धर्चशः ऋक्शः' इति त्रिभिः पर्यायैः (आवृत्तिभिः) व्यतिमर्शविहारेण विहृत्य एकपदायोजनेन चोक्त्वा ततः चतुर्थ्यामावृत्तौ (चतुर्थपर्यायि) तान्येव षट्सूक्तानि अविहृतान्येकपदारहितानि पादशः अर्धर्चशः ऋक्शः शंसेत् (तु० ऐ० ब्रा० ६।२४ आ०श्रौ० ८।२।२४)। इति प्रथम द्वितीय हौण्डिनविहारवत् महावालभिद्विहारेऽपि सप्तमाष्टमयोः सूक्तयोर्विपर्यासेन शंसनम्, 'इमानि वां भागधेयानि' इति सौपर्णसूक्तम्, हंसवत्या दूरोहणम्, सौपर्णस्योत्तमां शस्त्वा 'आवां राजानौ' इति नित्यैकाहिकसूक्तशंसनम्, तथाऽन्यच्छिष्टम् उक्थ्ये मैत्रावरुणशस्त्रवत् सर्वं भवति। तदाह आश्वलायनः 'समानमन्यत्'। स्तोत्रियानुरूपाविमानि वामित्येतत् समानं पूर्वाभ्यां विहाराभ्याम् (तु०—आ०श्रौ० ६।१।२; ८।२।२६ नारायणः)। **द्र०** आहाव—, आहावप्रदेश—, उक्थ्ये मैत्रावरुणशस्त्र—, दूरोहण—, वाचःकूट—,

व्यतिमर्शवालखिल्यविहार—।

**पृष्ठ्यषडहस्य षष्ठेऽहनि तृ० सवने ब्राह्मणाच्छंसिनो विकृतिशिल्पशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र द्विपदाशंसने चैकाहाचाहीनसत्रेषु पृष्ठ्यषडहस्योक्थ्यसंस्थे षष्ठेऽहनि तृतीयसवने होत्रकाणामुक्थ्यसंज्ञकेषु शस्त्रेषु द्विपदास्वृक्षु (साम० ११०७-१५) यदा छन्दोगाः स्तुवते तदा ब्राह्मणाच्छंसिनां द्विपदानां स्तोत्रियस्तृचः—'इमा नु कं भुवना' (ऋ० १० ।१५७ ।१-३)। अनुरूपस्तृचः- 'हत्वाय देवाः' (ऋ० १० ।१५७ ।४-५) इति द्वे। 'अया वाजं देवहितम्' (ऋ० ६ ।१७ ।१५) इत्येका (तु०— आ०श्रौ० ८ ।३ ।१)। (क) ततः सुकीर्ति सूक्तम्— 'अप प्राच इन्द्र' (ऋ० १० ।१३१ ऐ० ब्रा० ६ ।२९ आ०श्रौ० ८ ।३ ।२)। सूक्तस्य 'युवं सुराधसम्' इति येयं चतुर्थी अनुष्टुप्, तस्या अर्धर्चशः शंसनं कर्तव्यम् (आ०श्रौ० ८ ।३ ।३)। **द्र०** अर्धर्चक्लृप्ति-, अर्धर्चशोऽनूच्य ।(ख) ततो वृषाकपिसूक्तम्— 'विहि सोतोरसृक्षत' (ऋ० १० ।८६) इति पाङ्क्तम् । तच्च पृष्ठ्यषडहस्य चतुर्थेऽनि आज्यशास्त्रस्य आद्या यथा होत्रा शस्यते तद्वदत्र ब्राह्मणाच्छंसिना शस्यते। तत्र आज्याद्यायां त्रिरभ्यासः अर्धर्चशः शंसनम्, विग्राहः न्यूङ्खः, निनर्दः प्रतिगरश्चेति ये षड् धर्माः ते सर्वे वृषाकपिंशसनेऽपि कर्तव्यत्वेन प्राप्ताः किन्तेषु त्रिरभ्यासो न क्रियते । अर्धर्चशः शंसनस्थाने च पङ्क्तिशंसनं विधीयते पङ्क्तिच्छन्दस्कत्वात्। पङ्क्तिशंसनत्वात् द्वितीये पाङ्क्तवसाने नेन्द्रं देवममसतो३ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ मदेथ मदैवो ३ ऊँ ऊँ ऊँ मोथामो दैव' इत्यप्रणवान्तो न्यूङ्खादिर्विकृतः प्रतिगरो भवति (तु०—आ०श्रौ० ७ ।११ । १-१४ ८ ।३ ।५-६ नारायणः)। अर्थात् वृषा कपिं न्यूङ्खं युक्तं कुर्यात् । ह्रस्वैस्त्रयोदशभिः ओकारैः युक्ता दीर्घास्त्रय ओकारा मिलित्वा (षोडशौकाराः) न्यूङ्खा भवन्ति (ऐ० ब्रा० सा० ७ ।२९) तन्निदर्शनं पुरस्ताद् दर्शितमेव ।(ग) तत ऊर्ध्वं वृषाकपेः कुन्तापं शंसेत्। तस्य कुन्तापस्यादितः चतुर्दश ऋचः (अथ० २० ।१२७ ।१-१४ ऐ० ब्रा० ६ ।३२) विगृह्य विगृह्य (पादे पादेऽवसाय) निनर्द्य निनर्द्य शंसेत् । तत्र निनर्दप्रकारः— ऋचां तृतीये पादेषु आदितो ये द्वे अक्षरे तयोः पूर्वमनुदात्तं यथा भवेत् तस्मात्परं द्वितीयमुदात्तं भवेत् तथा निनर्देत् नितरां ब्रूयात्। तदेवमुच्चारणं निनर्दशब्देनोच्यते । अर्थात् प्रथमायास्तृतीयपादादौ षष्टिमित्यत्रषकारोऽनुदात्तः ष्टिकार उदात्त उच्चार्यते अन्यत् सर्वमेकश्रुतिः । इत्येवं रूपो निनर्दः न्यूङ्खस्थाने भवति। 'ओथामो दैवोम्' इति प्रतिगरेऽप्यादितो यदक्षरद्वयं तयोः पूर्वमनुदात्तमुत्तरमुदात्तं कृत्वा ब्रूयात् । अयं च प्रतिगरः प्रणवेऽवसाने प्राकृत एव अस्य (निनर्दस्य) प्रतिगरो निनर्दसहितस्यार्धर्चस्य विधीयते। तद्यथा—'इदं जना उपश्रुत। नराशंसस्तविष्यते। षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ओथामो दैवोम्' इति। (अथ० २० ।१२७ ।१)। उत्तरत्र द्वितीयादिष्वप्येवमेवोन्नेयम्। 'उप नो नर एमसि (अथ० २० ।१२७ ।१४) इति कुन्तापस्य या चतुर्दशी सा पङ्क्तिः ।तस्याः (पङ्क्तिशंसने प्राप्ते प्रथमोऽर्धर्चस्त्रिपात्। तत्र विग्राहे क्रियमाणे पूर्वमेकेन विगृह्य ततो द्वाभ्यामवस्येत्। यः शेषः सोऽर्धर्चशः शंस्तव्यः। इति शंसनप्रकारोऽवगन्तव्यः (तु०—आ०श्रौ० ८ ।३ ।७-१३ नारा-

यणः) । तद्यथा—'उप नो नर एमसि, सूक्तेन वचसा वयं भद्रेण वचसा वयम् । वनादधि (ध्य) ध्वनो गिरः । न रिष्येन कदाचनो३म् । इत्युक्तम् । चतुर्दशी । द्र० अर्धर्चशोऽनूच्य— । ब्राह्मणे तु कुन्तापं त्रिंशद् ऋचं विहितमिति विशेषोऽवगन्तव्यः । (घ) तत 'ऐतशप्रत्वापं शंसेत् । तत्र 'एता अश्वा आप्लवन्ते' इत्यादि—'यदीयं हनत् कथं हनत्' इत्यन्तानां (अथ० २० ।१२९-३२ आ०श्रौ० ८ ।३ ।१४) इति सप्ततेः पदानां शं नं क्रियते । अथवा अष्टादशपदानाम् । तत्र 'एता अश्वाः' इत्यादि-'पृदाक वः' इत्यन्तानामादितो नवानां (२० ।१२९ ।१-९) पदानां, 'अलाबुकं निखातकम्' (२० । १३२ ।१-७)

इत्यादीनां सप्तानां, यदीयं हनत् कथंहनत्' (२० ।१३२ ।१०) इत्येकस्य, 'पर्याकारं पुनः पुनः' (२० ।१३२ ।१२) इत्येकस्येति (९+७+१+१) संभूयाष्टादशपदानां शंसनम् (तु०—आ०श्रौ० ८ ।३ ।१४-१७) । तमेतं पदसमुदायं निवित्पदानामिव पदे पदेऽवसायोत्तमे पदे प्रणवं कृत्वा शंसेदिति विशेषोऽवधेयः । (तु०— ऐ० ब्रा० सा० ६ ।३३) । (ङ) ततः प्रवह्लिका शंसनम् । तत्र 'विततौ किरणौ' (अथ० २० ।१३३ ।१-६) इत्याद्यः षडनुष्टुभः प्रवह्लिकाख्या ऋच उच्यन्तेता अर्धर्चशः शंसति । अर्धादर्धर्चेषु अवसानं कृत्वा शंसेत् । अवसानेषु 'दुंदुभिमाहननाभ्यां जरितरोथामो दैव (१) कोशविलेजरितरोथामो दैव (२) रजनि ग्रन्थेर्धानां जरितोथामो दैव (३) उपनहि पादं जरितरोथामो दैव (४) उत्तरां जनीमां जन्यां जरितरोथामो दैव (५) उत्तरां जनीं वर्त्मन्यां जरितरोथामो दैव' (६) इति षट् वैकृताः प्रतिगराः संयोज्याः । प्रणवेषु तु प्राकृता एव । तद्यथा—'विततौ किरणौ द्वौ तावापिनष्टि पूरुषो दुन्दुभिमाहननाभ्यां जरितरोथामो दैव । न वै कुमारि तत् तथा यथा कुमारि मन्यस ओथामो दैवो३म् । (तु०—अथ० २० ।३५, आ०श्रौ० ८ ।३ ।१८-१९ ऐ० ब्रा० सा० ६ ।३३) । एवमेवोत्तरासु पञ्चसु अवसानेषु क्रमशो वैकृताः प्राकृताश्च प्रतिगराः संयोज्याः । (च) ततः अजिज्ञासेन्या शंसनम् । तत्र 'इहेत्थ प्रगपागुदक्' इत्यादि—'स वै पृथु लीयसे' इत्यन्ताश्चतस्रः ऋचः अवज्ञातुमिच्छाऽऽजिज्ञासा, तामर्हन्तीत्याजिज्ञासेन्या ऋच उच्यन्ते । (अथ० २० । १३४ ।१-४ आ०श्रौ० ८ ।३ ।२० ऐ० ब्रा० सा० ६ ।३३) । एता द्विपदा द्वेधाकारं पच्छः (ब्राह्मणे अर्धर्चशः) प्रणवेन असन्तन्वन् शंसति । तासां प्रणवेषु (१) 'अलाबूनि जरितरोथामो दैवो३म् (२) पृषातकानि जरितरोथामो दैवो३म् (३) अश्वत्थपलाशं जरितरोथामो दैवो३म् (४) पिपीलिकावटो जरितरोथामो दैवो३म्' इति चत्वारः प्रतिगराः संयोज्याः । अवसानस्य प्राकृता एव त्रिमात्राः । चत्वारः प्रणवा भवेयुः । तैः सर्वैः संतानो न कर्तव्यः प्रवह्लिकानामन्त्यायाः यः प्रणवस्तेनाजिज्ञासेन्यानामाद्यायाः संतानो भवतीति । तद्यथा—मन्यसो३म् इहेत्थप्रागपागुदगधराम् । अलावूनि जरितरोथामो दैवो३म् । अरालागुदमर्त्सथो३ओ३ ओ३ ॥१ ॥ इहेत्थ प्रागपागुदगधराक् पृषातकानि जरितरोथामो दैवो३म् । वत्साः पुरुषन्त आसतो३ओ३ ओ३ ॥ २ ॥ इहेत्थ प्रागयागुदगधराग् अश्वत्थपलासं जरितोथामो दैवो३म् । स्थालीपाको विलीयते३ओ३ ओ३ ॥ ३ ॥ इहेत्थ प्रागप्रागुदगधारा कपिपीलिकावटो जरितरोथामो दैवो३म् । स वै पृथुली-

यतो३ओ३ ॥ ४ ॥ इति । (तु०—आ०श्रौ० ८ ।३ ।२०-२१ नारायण: । अथ० २० ।१३५ ।१-४) । (छ) तत: प्रतिराधशंसनम्—'भुगित्यभिगत: (१) शालित्यपक्रान्त: (२) फलित्यभिष्ठित: (३) इति त्रिपदात्मको मन्त्र: प्रतिराध उच्यते । तु०—अथ० २० ।१३५ ।१) । तानि त्रीणि पदानि सर्वाणि यथापाठं शस्तव्यानि उत्तमेऽपि प्रणवो न कर्तव्य: । प्रथमपदान्ते 'श्वा जरितारोथामोदैव,' द्वितीयपदान्ते 'पणशदो जरितरोथामो दैव', तृतीयपदान्ते 'गोशफो जरितरोथामो दैव' इति त्रयो वैकृता: प्रतिगरास्तु कर्तव्या एव (तु०—आ०श्रौ० ८ ।३ ।२२-२३ ऐ० ब्रा० सा० ६ ।३३ । (ज) तत: अति वादशंसनम्—'वीमे देवा अक्रंशत' (अथ० २० ।१३५ ।४) । इत्येषानुष्टुप् अतिवाद उच्यते । ता मर्धर्चश: शंसति । तस्या: 'पत्नी यीयप्स्यते'(शां० श्रौ० १२ ।२३ ।५) पत्नी यदृश्यते, पत्नी यक्ष्यमाणा (अथ० २० ।१३५ ।५) जरितरोथामो दैव—(१) होता विष्टीमेन जरितरोथामो दैव (२) इति द्वौ वैकृतौ प्रतिगरौ । तयो: प्रथम: अर्धर्चावसाने द्वितीय: प्रणवेऽप्यप्रणवान्ते भवति । तद्यथा—'वीमे देवा अक्रंसताध्वर्यो क्षिप्रं प्रचर पत्नी यीयपप्स्यते जरितरोथामो दैव । सुमत्यभिद् गवामस्य सि प्रखुदसि होता विष्टीमेन जरितरो थामो दैव' इति । (तु०—आ०श्रौ० ८ ।३ ।२४ नारायण:, ऐ० ब्रा० ६ ।३३) (झ) ततो देवनीथपदसमूहशंसनम् १, 'आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्' इत्यादि 'दिवे दिवे प्रत्येवगृमायत' इत्यन्त: सप्तदशानां पदानां समूहो देवनीथ इत्युच्यते । तं निविद्वत् पदावग्राहं शंसति । यथा निविद: पदे पदेऽवगृह्यावगृह्य शंसनं तद्वद् देवनीथेऽप्यवगन्तव्यम् । यथा च निविद उत्तमेन पदेन प्रणव ओंकार एवमत्राप्यन्तिमे पदे प्रणवो द्रष्टव्य: । (तु०—ऐ० ब्रा० सा० ६ ।३५) । २. 'आदित्याह जरितरङ्गिरोभ्यो दक्षिणामनयन् (१) तांह जरित: (तर्न:) प्रत्यायन् (२) तामुह जरित: प्रत्यायन् (३) तां ह जरितर्न: प्रत्यगृभ्णन् (४) तामुह जरितर्न: प्रत्यगृभ्ण: (५) अहानेतरसं न विचेतनानि (६) यज्ञानेतरं

न पुरोगवाम: (७) उत श्वेत आशुपत्वा (८) उतो पद्याभिर्जविष्ठ: (९) उतेमाशु मानं पिपर्ति (१०) आदित्या रुद्रा वसवस्त्वे नुते (११) । इदं राध: प्रतिगृणीह्यङ्गिर: (१२) इदं राधो विभु प्रभु इदं राधो वृहत्पृथु (१३) देवा ददत्वासुरम् (१४) तद् वो अस्तु सुचेतनम् (१५) युष्मां अस्तु दिवे दिवे (१६) प्रत्येव गृमायत (१७) इत्येषां सप्तदशानां (अथ० २० ।१३५ ।६-१० ऐ० ब्रा० ६ ।३५) मध्ये आद्यन्ते (प्रथमोत्तमे) द्वे पदे विहाय मध्यवर्तिनि यानि द्वितीयादीनि पञ्चदशान्तानि पदानि तेषां मध्ये 'ओंहजरितरोथामेदैव, तथा ह जरितरोथामो दैव' इति क्रमेणा पठितौ द्वौ प्रतिगरौ विपर्यासं (व्युत्क्रमेण) अवसाने संयोजयेत् । अर्थात् द्वितीये पदे 'तथा हजरितरोथामो दैव' इति द्वितीय: प्रतिगर: तृतीये पदे 'ओंहजरितरोथामो दैव' इति प्रथम: प्रतिगर: कर्तव्यौ । अवशिष्टे प्रथमे पदे प्राकृता: 'ओथामोदेव, ओथामो दैवो३म्' इति प्रतिगर: प्रयोक्तव्य: । उत्तमे पदान्ते निविद इव प्रणवो विहित: । स एव तत्र प्रतिगर: (तु०—आ०श्रौ० ८ ।३ ।२५-२६ नारायण:) । तद्यथा 'तां ह जरित: प्रत्यायंस्तथा ह जरितरोथामो दैवं । तामुहजरित: प्रत्यायन्नोह जरितरोथामो दैव' इति एवं सर्वेषु मध्यमेषु व्यत्यासं प्रयोग:आदित्याहजरितरङ्गिरोभ्यो दक्षिणामायन्नोथामो

दैव,...दैव३म् ।' इति प्रथमः । 'प्रत्येव गृभायतो३म्' इत्युत्तमः (ञ) । ततो भूतेच्छदांशंसनम्—'त्वमिन्द्र शर्मरिणा' इत्यादि—'अरंगरो वावदी' इत्यन्ताः (अथ० २० । १३५ ।११-१३) । तिस्रोऽनुष्टुभो भूतेच्छद उच्यन्ते । तासामर्धर्चशंनम्-तद्यथा—'त्वमिन्द्र शर्मरिणा हव्यं पारावतेभ्यो३म् । प्रायस्तुवते वसुवनिं दुरश्रवसे वहो३म् इति । तु०—ऐ० ब्रा० ६ ।३६ आ०श्रौ० ८ ।३ ।३७-३८) । ततः (ट) आहनस्या शंसनम्—'यदस्या अंहुभेद्या कृधु' इत्याद्याः 'महानाम्नी कृफ वाकं' इत्यन्त्याः (अथ० २० ।१३६ ।१-१०) । दश ऋचः आहनस्या इत्युच्यन्ते । तासां न्यूङ्खेन सह शंसनम्-अर्थात् ता ऋचः षोडशौकारविशिष्टाः करोति (ऐ० ब्रा० सा० ६ ।३६) 'षोडशौकारान्यूङ्खाः' इत्युक्तत्वात् । द्र० पृष्ठ्यषडहस्य चतुर्थेऽहनि होतुराज्यशस्त्र— । तासां दशानां 'प्रणवेषु ई ३ इ इ इ इ इ ई ३ इ इ इ इ इ इ ई ३ इ इ इ । किमयमिदमाहो ३ ऊँ ३ ऊँ ३ ऊँ ३ मोथामो दैवोम्' इत्ययं वैकृतः प्रतिगरो भवति । अवसाने प्राकृत एव । तद्यथा—'यदस्या अंहुभेद्याः कृधु स्थूलमुपातद् ओथामो दैव, (दैवो३म्) । मुकाविदस्या एजतो गोशफे शकुला विष ई ३ इ इ इ इ ई ३ इ इ इ इ ई ३ इ इ इ किमयमिदमाहो ३ ऊँ ३ ऊँ ३ ऊँ मोथामो दैवोम् ।ष इति । (आ०श्रौ० ८ ।३ ।२९ ।३१ नारायणः । एवमुत्तरत्राप्युन्नेयम् । (ठ) ततः देवपवित्रम् (अनुष्टुभस्त्रिष्टुभश्च)—'दधिक्राब्णो अकारिषम्' (ऋ० ४,४०,६) 'सुतासो मधुमत्तमा' (ऋ० ९ ।१०१ ।४-६) अनुष्टुभः । 'अवद्रप्सो अंशुमतीम्' (ऋ० ८ ।९६ ।१३-१५) त्रिष्टुभः । एतास्तिस्रस्त्रिष्टुभः पच्छः शस्तव्याः (तु०—आ०श्रौ० ८ ।३ ।३२-३३, नारायणः ऐ० ब्रा० ६ ।३६) । ततः 'अच्छआम इन्द्रम्' (ऋ० १० ।४३) इति नित्यस्यैकाहिकस्य सूक्तस्य शंसनम् (तु०—आ०श्रौ० ६ ।१२ ।८ ।३ ।३४) । शिष्टमुक्थ्ये ब्राह्मणाच्छंसिशस्त्रवद् द्रष्टव्यम् । द्र० आहाव-आहावप्रदेश— ।

**पृष्ठ्यषडहस्य षष्ठेऽहनि तृ० सवने अच्छावाकस्य विकृतिशिल्पशस्त्र—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणेऽन्यत्र द्विपदाशंसने चैकाहाहीनसत्रेषु पृष्ठ्यषडहस्य षष्ठेऽहनि उक्थ्यसंस्थेऽहनि तृतीयसवने अच्छावाकस्य स्तोत्रियानुरूपौ 'प्र व इन्द्राय वृत्रहन्तमाय' (साम० ११३-१५ आ०श्रौ० ८ ।४ ।१) इति षड् द्विपदाः । स्तोत्रियानुरूपाभ्यामूर्ध्व (क) 'प्र वो महे मतयो यन्तु विष्णवे' (ऋ० ५ ।८७ ऐ० ब्रा० ६ ।३० आ०श्रौ० ८ ।४ ।२ नारायणः) इति अतिजगतीच्छन्दस्कस्य एवया-मारुत्-, सूक्तस्य शंसनम् । एतच्छंसनं वृषाकपिनाऽतिदिष्टं पङ्क्तिशंसनं विना यथा वृषाकपिः शस्तस्तथैवैषयामरुत्सूक्तमपि अतिजगतीयुक्तं शंस्तव्यम् । परं पङ्क्तिच्छन्दो युक्ते वृषा कपौ पाङ्क्ते द्वितीयेऽवसाने प्रणवान्तो न्यूङ्खादिर्वैकृतः प्रतिगरो विहितः इहातिजगते एवयामरुति अर्धर्चशः शंसने प्रणवान्तं न्यङ्खादि वैकृतं प्रतिगरं पठितवान् सूक्तकारः । इति विशेषः । तद्यथा—प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरो३म् । प्र शर्धाय प्रयज्यवे सुखादये तवसे मन्ददिष्टये धुनिव्रतायशवसे ओ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ मदे मद्योर्मदस्य मदिरस्य मदे दैवो ३ ऊँ ३ ऊँ ३ ऊँ ३ ऊँ ३ मोथामो दैवो३म् । इति प्रतिगरः आ०श्रौ० ८ ।४ ।२-३ नारा-

यणः ऐ० ब्रा० ६ ।२९) ।(ख) ततः 'ऋतुर्जनित्री' (ऋ० २ ।१३), 'नू मर्तो दयते' (ऋ० ७ ।७०), 'गवा मित्रो न' (ऋ० १ ।१५), 'सं वां कर्मणा' (ऋ० ६ ।६९) । इति नित्यानामैकाहिकानां सूक्तानां शंसनम् (तु०—आ०श्रौ० ६ ।१२ ।८ ।४ ।३)। शिष्टमुक्थ्येऽच्छावाकशस्त्रवद्द्रष्टव्यम्। द्र० उक्थ्ये अच्छां -वाकशस्त्र— । तत्र पृष्ठ्यषडहस्य षष्ठेऽहनि यान्येतानि नाभानेदिष्ठो वालखिल्या वृषाकपि रेवयामरदिति उक्थानि उक्तानि—तानि होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शिल्पानि भवन्ति। तस्मात् एकाहहीनसत्रेषु यस्मिन् कस्मिश्चिदहनि तृतीयसवने होत्रकाणां सर्वेषां यदि द्विपदासु स्तुवीरन् छन्दोगास्तत्र सर्वत्रा हन्येवं शिल्पानि कर्तव्यानीति विशेषोऽनुसंधेयः (तु०—ऐ० ब्रा० ६ ।३६ आ०श्रौ० ८ ।४ ।४ नारायणः)।

**पृष्ठ्यषडहस्य भेद—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे गवामयने च १. स्तोमानां क्रमव्युत्क्रमभेदेन पृष्ठ्यषडहो द्विविधः । तत्र प्रकृतौ द्वादशाहे त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः इत्येतैः षड्भिः स्तोमैः क्रमशो युक्तानि षड् अहानि यस्मिन् पृष्ठ्यषडहे सोऽयं त्रिवृदादिः त्रयस्त्रिंशान्तः एकः पृष्ठ्यषडहः । क्वचिद् विकृतौ (चतुर्दशरात्रादौ आराहावरोहत्वेन) व्यत्यासेन आदौ त्रयस्त्रिंशः अन्ते च त्रिवृत् भवति। सोऽयं त्रयस्त्रिंशदिः त्रिवृदन्तः द्वितीयः पृष्ठ्यषडह उच्यते। तदेवं स्तोमक्रमव्युत्क्रमकृतौ पृष्ठ्यषडहस्य द्वौ भेदावगन्तव्यौ। २. पृष्ठ्यः षडहो द्विविधः त्रयस्त्रिंशान्तस्त्रयस्त्रिंशादिश्चेति। त्रिवृत्-पञ्चदश सप्तदशएकविंशत्रिणव-त्रयस्त्रिंशैः स्तोमैर्युक्तनि षडहानि आरोहस्तोनिनि भवन्ति। त्रयस्त्रिंशत्रिष्वैकविंशसप्तदशपञ्चदशत्रिवृत्स्तोमैर्युवत्तान्यवरोहस्तोमाविसन्तीति। तत्रद्यो द्वादशाहे गवामयने च पूर्वस्मिन् पक्षसि, अन्त्यस्तु गवामयने उत्तरे पक्षसिपृष्ठये षडहे। द्र० मी०को० पृ० २६१३ । ३. प्रथम द्वितीय तृतीयाहानि पूर्वत्र्यहः । चतुर्थ पञ्चमषष्ठाहानि उत्तरत्र्यहः । इति च ।

**पृष्ठ्यषडहस्य राथन्तरबार्हतदिन—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहे पृष्ठयषडहस्य प्रथमतृतीयपञ्चमानि अयुग्मानि त्रीण्यहानि राथान्तराणि। इतराणि द्वितीयचतुर्थषष्ठानि युग्मानि बार्हतानि। तदुक्तम् 'रथन्तरपृष्ठान्ययुजानि बृहत्पृष्ठानीतराणि' (आ०श्रौ० ७ ।५ ।२-३ ऐ० ब्रा० सा० ५ ।१)। तत्र त्रिवृत्-त्रिणवौ स्तोमौ राथान्तरौ तौ राथन्तरे अहनि प्रयोक्तव्यौ, पञ्चदशैकविंशौ स्तोमौ बार्हतौ तौ बार्हतेऽहनि प्रयोज्यौ (तां० ब्रा० सा० १० ।२ ।५-६) इति विशेषोऽवधेयः।

**पृष्ठ्यषडहस्य संस्थास्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतिज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे तद्विकृतिषु च रात्रिसत्रसंवत्सरसत्रेषु 'प्रयुज्यमानः पृष्ठ्यः षडहः प्रथमोऽग्निष्टोमः चतुर्थः षोडशी उक्थ्या इतरे' (तु०—का० श्रौ० १२ ।३ ।१)। अर्थात् पृष्ठ्यषडह प्रथमोऽग्निष्टोम संस्थः, चतुर्थः षोडशिसंस्थः, द्वितीयतृतीयपञ्चचमषष्ठा उक्थ्यसंस्थाः इति (तु०— ऐ० ब्रा० सा० ५ ।१-१५)।

**पृष्ठ्यषडहस्य सामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे प्रयोक्तव्यानां पृष्ठ्यसंज्ञकानां षण्णामह्नां यानि रथन्तरवृहद्वैरूपवैराजशाक्वररैवताख्यानि सामानि विहितानि

तानि द्वादशाहगतपृष्ठ्य षडह सामानि पृष्ठानि चोच्यन्ते। द्वादशाहविकृतौ गवामयने यः पृष्ठ्यः षडहः समाम्नातः तत्र तु वृहद्रथंन्तरे द्वे एव सामनी भवतः। (तु०—ऐ० ब्रा० ४।१३) तदुक्तम् पृष्ठ्यः षडहो बृहद्रथन्तरसामा' इति विशेषोऽवधेयः।

**पृष्ठ्यषडहस्य स्तोम—** (औ०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे तद्विकृतौ गवामयने च त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः षट् स्तोमाः यथासंख्यं पृष्ठ्यषडहस्य षण्णामह्नां स्तोमाः भवन्ति। त इमे व्यूढद्वादशाहिकस्य दशरात्रस्य प्रथमेषु प्रायणीयोदयनीयौ उक्त्वा मध्ये यानि दशाहानि तेषां विष्टुतयः। एवं च सति गवामयनिकानामपि त्रिवृदादयः स्तोमाः प्रदर्शिताः (तु० तां० ब्रा० सा० २,१,१)। तत्र १. पृष्ठ्यषडहस्य प्रथमेऽहनि त्रिवृत् प्रयुज्यते। अन्त्ये षष्ठेऽहनि त्रयस्त्रिंशः। इति त्रिवृदायः षट् स्तोमाः क्रमेण विहिताः। अथ शिष्टानां त्रयाणां छन्दोमानां चतुर्विंश-चतुश्चत्वारिंश-अष्टाचत्वारिंशास्त्रयः स्तोमाः। दशमस्याविवाक्यस्य चतुर्थच्छन्दोमस्यापि चतुर्विंश एव स्तोमः (तु०—ता० ब्रा० १५।७) २. त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः ये स्तोमास्ते पृष्ठ्यषडहस्य षष्ठेऽहनि आप्यन्ते समाप्यन्ते षट्स्वहः स्विति। चतुर्विंश चतुश्चत्वारिंशाष्टाचत्वारिंशा इति चतुर्विंशादयस्त्रयः ग्स्तोमाः। (तु०—ऐ० ब्रा० सा० ५।१६)।

**पृष्ठ्यषडहे अहर्गणे प्रत्यक्षमाम्नातो होत्रकाणां शस्त्रातान—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतेषु सत्राहीनेषु पृष्ठ्याषडहस्य षट्स्वहःसु १. प्रातः सवने षडहस्तोत्रियतृच श्वःस्तोत्रियानुरूपस्तृचआरम्भणीया, अधिकतृचावापः, पर्यासः, परिधानीयाः इत्येते षट् पदार्था होत्रकाणां शस्त्रातान उच्यते। २. माध्यन्दिनसवने स्तोत्रियतृचः, अनुरूपतृचः, स्तोत्रियप्रगाथः-, अनुरूप प्रगाथः, कद्वत्प्रगाथः, आरम्भणीया (प्रतिपद्-) अहीनसूक्तस्थाने सम्पातसूक्तम् (पूर्वत्र्यहे), आवापार्थाः ऋचः (उत्तरत्र्यहे), स्तोमवृद्धिनिमित्तः आवापः, अहरहः शस्यसूक्तम्, इति नव पदार्थाः होत्रकाणां शस्त्रातानः। ३. तृतीयसवने अग्निष्टोमसंस्थे प्रथमेऽहनि होत्रकाणां शस्त्राणामभावः अग्निष्टोमसंस्थत्वात्। तृतीयसवने एव उक्थ्यसंस्थेषु द्वितीयतृतीयपञ्चमषष्ठेष्वहःसु स्तोत्रियतृचः, अनुरूपतृचः, सूक्तपरिधानीया, याज्या, अच्छावाकशस्त्रान्त्यायाः सर्वत्र चतुरक्षराभ्यासः, इति षट् पदार्थाः। षोडशिसंस्थे चतुर्थेऽहनि अप्येवमेव शस्त्रातानस्तृतीये सवनेऽच्छावाकस्य भवतीति विशेषोऽवधेयः।

**पृष्ठ्यषडहे पृष्ठस्तोत्रनिष्पादकसामन्—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्याख्ये षडहे माध्यन्दिनसवने रथन्तरवैरूपशाक्वराणि त्रीणि सामानि (पृष्ठानि) प्रथमतृतीयपञ्चमेष्वयुग्मेष्वहः सु पृष्ठस्तोत्रनिष्पादकान्यासन, तथा बृहद्वैराजरैवतरूपाणि त्रीणि सामानि द्वितीयचतुर्थषष्ठेषु युग्मरूपेष्वहःसु पृष्ठस्तोत्रनिष्पादकान्यासन। (तु०— ऐ० ब्रा० सा० ४।२८ आ०श्रौ० ७।५।२-३)।

**पृष्ठ्यषडहे प्रा० सवने पारुच्छेपीसहितप्रस्थितयाज्याप्रचार—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि प्रातः सवने उन्नीयमानसूक्तानुवचनानन्तरं चमसप्रचारे होता यक्षदिन्द्रं प्रातः

प्रातःसावस्यं' इति प्रैषेण प्रेषितास्य होतुरितरेषां नामादेशं प्रेषितानां मैत्रावरुण—ब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकानां सप्तहोतृणां याः सप्त प्रस्थितयाज्याः प्रकृतितः (आ०श्रौ० ५ ।५ ।१५-१८ श्रौ०को० २ भा० ३१२-१३) प्राप्तास्तासां पुरस्तात् परुच्छेपाख्येन महर्षिणा दृष्टाः सप्त पारुच्छेपीर्ऋचः कृत्वा ते यजेयुः। अर्थात् पूर्वं एकैकां पारुच्छेपीमृचमुक्त्वा पश्चादेकैकां प्रकृतिप्राप्तां प्रस्थितयाज्यां पठित्वा ताभ्यामुभाभ्यामनुच्छ्वसन्तो यागं कुर्युरिति (तु०— आ०श्रौ० ८ ।१ ।१-२ नारायणः)। तदेवं १. 'वृषन्निन्द्र वृषपाणास इन्दवः' (ऋ० १ ।१३९ ।६)। इति प्रथमा पारुच्छेपी 'इदं ते सोम्यं मधु' (ऋ० ८ ।६ ।५८) इति द्वितीया प्रकृतिप्राप्ता प्रस्थितयाज्या। उमाभ्यां याज्याभ्यां होताऽनुच्छ्वसन् यजति। २—'सुषुमा यातमद्रिभिः' (ऋ० १ ।१३७ ।१) इति द्वितीया पारुच्छपी 'मित्रं वयं हवामहे' (ऋ० १ ।२३ ।४) इति प्रकृतिप्राप्ता प्रस्थितयाज्या। उभाभ्यां मैत्रावरुणोऽनुच्छ्वसन् यजति। ३. 'वानोति हि सुन्वन्' (ऋ० १ ।१३७ ।७) इति तृतीया पारुच्छेपी 'इन्द्र त्वा वृषभं वयम्' (ऋ० ३ ।४० ।१) इति प्रकृतिप्राप्ता प्रस्थितयाज्या। उभाभ्यां ब्राह्मणाच्छंस्यनुच्छ्वसन् यजति। ४. 'मो षु वो अस्मदभि' (ऋ० १ ।१३९ ।८) चतुर्थी पारुच्छेपी 'मरुतो यस्य हि क्षतये' (ऋ० १ ।८६ ।१) इति प्रकृति प्राप्ता प्रस्थितयाज्या। उभाभ्यां पोताऽनुच्छ्वसन् यजति। ५. 'ओ षू णो अग्ने शृणुहि' (ऋ० १ ।१३९ ।७)। पञ्चमी पारुच्छेपी 'अग्ने पत्नीरिहावह' (ऋ० १ ।२२ ।८) इति प्रकृतिप्राप्ता प्रस्थितयाज्या। उभाभ्यां पोताऽनुच्छ्वसन् यजति। ६. अग्निं होतारं मन्यसे' (ऋ० १ ।१२७ ।१)। इति षष्ठी पारुच्छेपी 'उक्षान्नाय वशान्नाय (ऋ० ८ ।४३ ।११) इति प्रकृतिप्राप्ता प्रस्थितयाज्या। उभाभ्यामाग्नीध्रऽनुच्छ्वसन् यजति। ७. 'दध्यङ्हमे जनुषं पूर्वः' (ऋ० १ ।१३९ ।९)। इति सप्तमी पारुच्छेपी 'प्रातर्यावभिरागतम्' (ऋ० ८ ।३८ ।७) इति प्रकृति प्राप्ता प्रस्थियाज्या। उभाभ्यामच्छावाकोऽनुच्छ्वसन् यजति। (तु०—आ०श्रौ० ८ ।१ ।१-२ नारायणः ऐ० ब्रा० ५ ।१०)। तद्यथा ये३ यजामहे 'वृषन्निन्द्र वृषापाणास इन्दव इमे सुता अद्रिषुता उद्भिद स्तुभ्यं सुता स उद्भिदो ये त्वा मदन्तु दावने महे चित्राय गीर्भिर्गिर्वाहः स्तवमान आ गहि सुभृली को न आगहीदं ते सोम्यं मध्वधुक्षन्नद्रिर्भनरो जुषाण इन्द्र तत्पिब वौ३षट् सोमस्थाने वीहि' इति होतुः प्रस्थित याज्या। एवमुत्तरत्राप्युन्नेयम्। **द्र०** प्रातःसवनीयप्रस्थितयाज्याऋतुयाज्या-। पारुच्छेपीनां सायणप्रदर्शितो विनियोगश्चद्रष्टव्यः।

**पृष्ठ्यषडहे माध्यन्दिनसवने पारुच्छेपीसहित-प्रस्थितयाज्याप्रचार—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्य-षडहस्य षष्ठेऽहनि माध्यन्दिनसवने उन्नीयमानसूक्तानुवचनानन्तरं चमस- प्रचारे 'होता यक्षदिन्द्रं माध्यन्दिनस्य सवनस्य श्रौ०को० २ भा० ३७० (आ०श्रौ० ५ ।५ ।१५) इति षेषितस्य होतुः इतरेषां नामादेशं प्रेषितानां मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकानामिति सप्तहोतृणसा याः सप्त प्रस्थितयाज्याः प्रकृतितः (आ०श्रौ० ५ ।५ ।१९) प्राप्तास्तासां पुरस्तात् परुच्छेपाख्येन महर्षिणा दृष्टाः सप्त पारुच्छेपीर्ऋचः कृत्वा ते यजेयुः। अर्थात् पूर्वमेकैकां पारुच्छेपीमृचमुक्त्वा पश्चादे-

कैकां प्रकृतिप्राप्तां प्रस्थितयाज्यां पठित्वा ताभ्यामुभाभ्यां यागं कुर्युरिति (तु०— आ०श्रौ० ८ ।१ ।१ नारायणः) तत्र माध्यन्दिने सवने प्रस्थिइतयामध्यर्धामेवानवानं ब्रूयुः, अर्थात् द्वयोर्याज्ययोर्मध्ये पूर्वामनुच्छ्वसनुक्त्वा उत्तरां संधाय तस्या अध्यर्धर्चेऽवसाय यष्टव्यमिति। (तु०— आ०श्रौ० ८ ।१ ।३, नारायणः)। तत्र १. 'पिबा सोममिन्द्र सुवानम्' (ऋ० १ ।१३० ।२ आ०श्रौ० ८ ।१ ।४) इति प्रथमा पारुच्छेपी 'पिबा सोममभि यमुग्र' (ऋ० ६ ।१७ ।१ आ०श्रौ० ५ ।५ ।१९) इति प्रकृतिप्राप्ता होतुः प्रस्थितयाज्या। २. 'इन्द्राय हि द्यौरसुरो अनम्नत' (ऋ० १ ।१३१ ।१ आ०श्रौ० ८ ।१ ।४) द्वितीया पारुच्छेपी 'स ईं पाहि य ऋजीषी' (ऋ० ६ ।१७ ।२ आ०श्रौ० ५ ।५ ।१९) इति प्रकृतिप्राप्ता मैत्रावरुणस्य प्रस्थितयाज्या। ३. 'विश्वेषु हि त्वा सवनेषु' (ऋ० १ ।१३१ ।२ आ०श्रौ० ८ ।१ ।४) इति तृतीया पारुच्छेपी, 'एवा याहि प्रत्नथा' (ऋ० ६ ।१७ ।३ आ०श्रौ० ५ ।५ ।१९) इति ब्राह्मणाच्छंसिनः प्रकृतिप्राप्ता प्रस्थितयाज्या। ४. 'वि त्वा ततस्रे मिथुना' (ऋ० १ ।१३१ ।३ आ०श्रौ० ५ ।५ ।१९, इति चतुर्थी पारुच्छेपी, 'अवाडेहि सोमकामं त्वाहुः' (ऋ० १ ।१०४ ।९ आ०श्रौ० ५ ।५ ।१९) इति प्रकृतिप्राप्ता पोतुः प्रस्थितयाज्या।५. 'विदुष्टे अस्य वीर्यस्य वीर्यस्य पूरवः' (ऋ० १ ।१३१ ।४ आ०श्रौ० ८ ।१ ।४) इति पञ्चमी पारुच्छेपी, 'तवायं सोमस्त्व मेह्यर्वाङ्' (ऋ० ३ ।३५ ।६ आ०श्रौ० ५ ।५ ।१९) इति प्रकृतिप्राप्ता नेष्टुः प्रस्थितयाज्या। ६. 'आदित् ते अस्य वीर्यस्य'(ऋ० १ ।१३१ ।५ आ०श्रौ० ८ ।१ ।४ इति षष्ठी पारुच्छेपी 'इन्द्राय सोमाः प्र दिवो दिवानाः' (ऋ० ३ ।३६ ।२ आ०श्रौ० ५ ।५ ।१८ इति प्रकृतिप्राप्ता आग्नीध्रस्य प्रस्थितयाज्या। ७,'उतो नो अस्या उषसो जुषेत' ऋ० १ ।१३१ ।६ आ०श्रौ० ८ ।१ ।४) इति सप्तमी पारुच्छेपी, 'आ पूर्णो अस्य कलशः स्वाहा' (ऋ० ३ ।३२ ।१५ आ०श्रौ० ५ ।५ ।१९) इति प्रकृतिप्राप्ता अच्छावाकस्य प्रस्थितयाज्या। **द्र०** श्रौ०को० २ भा० पृ० ३७०-७१ ऐ० ब्रा० ५ ।१० । तद्यथा—'पिबा सोममिन्द्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्ता तृषाणो न वंसगो भदाय हर्यतायते तुविष्टभाय धाय से आ त्वा यच्छन्तु हरितो न सूर्यमहा विश्वेव सूर्यं पिबा सोममभि यमुग्र ऊर्ध्वं तद् गव्यं महि गृणान इन्द्र-वि यो धृष्णे वधिषो वज्रहस्त। विश्वा वृत्रमभित्रिया शवोभिर्वौषट् सोमस्याग्ने वीहि' इति होतुः प्रस्थितयाज्या। एवमुत्तरत्राप्युन्नेयम्। पारुच्छेपीनां सायणप्रदर्शितो विनियोगश्च **द्र०**। **द्र०** माध्यन्दिनीयप्रस्थितयाज्या—।

**पृष्ठ्यषडहोत्तरत्र्यहावाप—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहे पृष्ठ्यषडहस्योत्तरस्मिंस्त्र्यहे (चतुर्थपञ्चमषष्ठेष्वहःसु मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शस्त्रेषु माध्यन्दिनसवने कासां चिद् ऋचां सूक्तानां च आवापः पूर्वविहितानां मध्ये (अन्तराले) आवापनीयः (प्रक्षेपणीयः) ऋक्समूहः आवाप इत्युच्यते। (तु०—आ०श्रौ० ७ ।११ ।३४-४०; ऐ० ब्रा० सा० ६ ।१९)। 'एवं न्याया आवापाः' (आ०श्रौ० ११ ।१ ।१) इति च द्रष्टव्यम्।

**पृष्ठ्यस्तोम—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे पृष्ठ्यस्तोमसंज्ञकः षड् एकाहाः सन्ति। ते

सर्वे अग्निष्टोमसंस्थाः। तत्र प्रथमः त्रिवृत्स्तोमकः, द्वितीयः पञ्चदशस्तोमकः, तृतीयः सप्तदशस्तोमकः, चतुर्थः एकविंशस्तोमकः, पञ्चमः त्रिणवस्तोमकः षष्ठः त्रयस्त्रिंशस्तोमकः इति तेषां क्रमशः षट् स्तोमाः ज्ञेयाः विशेष्यन्ते इत्यर्थः।

**पृष्ठ्यस्तोमसप्तरात्रस्याहःक्लृप्तिः—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अहीनप्रकरणे सप्तसु सप्तरात्रेषु अन्तिमः पृष्ठ्यस्तोमाख्यः सप्तरात्रोऽहीनोऽस्ति। पृष्ठ्य एव षडहः केवलं वृहद्रथन्तरपृष्ठः पृष्ठ्यस्तोम उच्यते (आ०श्रौ० १०।३।१५ नारायणः)। तस्मिन् पृष्ठ्यस्तोमे सप्तरात्रे द्वादशोपसद्दिनानि, पृष्ठ्यषडहः विश्वजिच्चेति सप्त सुत्यादिनानि एकादश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते। अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्।

**पृष्ठ्यः—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १—वेदिसाधने वेदिमध्ये अन्तःपात्यशङ्कुमारभ्य पूर्वार्ध्यपर्यन्तं या ऋज्वी प्रागग्रारेखा क्रियते सा वेदिपृष्ठभवत्वात् पृष्ठ्या रेखा उच्यते। सा च वरुणप्रघासवत् खादिरेण स्फ्येन क्रियते। अद्यत्वे तु एकाङ्गुलोच्चा एकाङ्गुलविस्तीर्णा पृष्ठ्या मृदा निर्मीयते (तु०—का० श्रौ० ८।३।१२ विद्याधरः)। २. गार्हपत्यस्य मध्यादारभ्य पूर्वस्यां दिशि ऋजुत्वेन नीयमानस्य आहवनीयमध्यपर्यन्तस्य सूत्रस्य आधारभूतत्वेनोपलक्षिता भूमिगता रेखा पृष्ठ्या रेखेत्युच्यते। द्र० श्रौ०प०नि० पृ० ४।

**पृष्ठ्याभिप्लवषडहयोरहर्गणयोर्होत्रकशस्त्रातान—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे सत्राहीनप्रकरणे च त्रिषु सवनेषु (१) स्तोत्रियतृच—(२) अनुरूपतृच (३) कद्वद्वत्प्रगाथ (४) आरम्भणीया (५) अहीनसूक्त (६) परिधानीया (७) संपातसूक्त (८) अहरहः शस्य-(९) आवाप (ऋच्-) (१०) आवाप (सूक्त-) (११) शस्त्रपरिधानीया (१२) उन्नीयमानसूक्त- (१३) अस्थितयाज्याः इत्येते पदार्था होत्रकशस्त्रातान इत्युच्यते एषां प्रयोगक्रमः प्रतिसवनं पृथक् पृथगेव। मन्त्रा अपि समाना असमानाश्च यथायथं दृश्यन्ते। पृष्ठ्यस्याभिप्लवस्य चाहानि अग्निष्टोमसंस्थत्वात् उक्थ्यसंस्थत्वाच्च द्विविधानि। तत्राभिप्लवस्य प्रथमं षष्ठं चेति द्वे अहनी अग्निष्टोमसंस्थे, पृष्ठ्यस्य प्रथमं चाहः। अभिप्लवस्य शिष्टानि द्वितीयतृतीयचतुर्थपञ्चमानि चत्वार्यहानि उक्थ्यसंस्थानि। पृष्ठ्यस्य च द्वितीयतृतीयपञ्चमषष्ठानि चत्वार्यहानि उक्थ्यसंस्थानि, चतुर्थं तु षोडशिसंस्थं भवतीति। (तु०—आ०श्रौ० ७।७।१०-११; ८।८।१९-२०)।

**पृष्ठ्यावलम्बस्याहः क्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतावहीनप्रकरणे पृष्ठ्यावलम्बसंज्ञकः कश्चित् षडहोऽहीनः। तस्याधानि पञ्चाहानि वृहद्रथन्तरपृष्ठानि षष्ठः सर्वजिदतिरात्रः। तस्मिन् पृष्ठ्यावलम्बे षड्रात्रे द्वादश उपसद्दिनानि, पृष्ठ्यषडहस्याद्यानि पञ्च दिनानि विश्वजित् षष्ठमहः इति षट् सुत्यादिनानि, द्वादश दीक्षादिनानि मिलि-त्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनां त्रिंशद्दिनेषु समाप्तिदर्शनात्। अत्र प्रत्यहमैन्द्राग्नः सवनीयः पशुः स्तोमायनं वा भवति। अस्याद्यः पृष्ठ्यपञ्चाहः अभ्या-

सक्तो भवति। अर्थात् स्तोमविधौ पञ्चस्वहःसु प्रथमस्याह्नो द्वे सवने (प्रातमाध्यन्दिनसवने त्रिवृत् स्तोमे भवतः। पञ्चदशं तृतीयसवनम्। द्वितीयस्य पञ्चदशे द्वे सवने। सप्तदशं तृतीयसवनम्। तृतीयस्य सप्तदशे द्वे सवने। एकविंशं तृतीयसवनम्। चतुर्थस्य एकविंशे द्वे सवने। त्रिणवं तृतीयसवनम्। पञ्चमस्य त्रिणवेद्वे सवने। त्रयस्त्रिंशं तृतीयसवनम् इत्येवं पूर्वमहर्येन स्तोमेन समापितं तेनैव स्तोमेनाहरन्तरस्याप्युपक्रमादह्नां सान्तत्येन (अभ्या- सक्तेन) पृष्ठ्यपञ्चहः अनुष्ठीयते इति। (तु०— आ०श्रौ० १०।३४-५ नारायणः, तां० ब्रा० सा० २२।३।१-६) आ०क० ७।२६, वरदराजः)। द्र० अभ्यासक्त—।

**पृष्ठ्यासूत्र—** द्र० पृष्ठ्या—।

**पृष्ठ्यास्तरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीयदर्शपूर्णमासप्रकरणे पात्रासादनानन्तरं ब्रह्मणि स्वायतने उपविष्टे यजमानेन च समन्त्रकः द्वितीयवरणेन वृते परिभोजनीयदर्भैः सन्ततां पृष्ठ्यां (रज्जुं) गार्हपत्यमध्यादारभ्य आहवनीयमध्यपर्यन्तं स्तृणाति मन्त्रेण तदेतत् कर्म पृष्ठ्यास्तरणमित्युच्यते। द्र० पात्रासादन—, श्रौ०प०नि० पृ० १४।

**पेषण—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पेषणं तण्डुलार्थं पुरोडाशार्थं तण्डुलानां कर्तव्यम्, चरौ तु न कर्तव्यम्। पेषणेन हि पिष्टकं यवागूर्वा स्यात् खलतिर्वा न चरुः। द्र० मी०को० पृ० २६१५।

**पैतृकवेदि—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां पञ्चमे चातुर्मास्य प्रकरणे साकमेधपर्वणिमहाहविषोऽनन्तरं पितृयज्ञे पूर्वगृहीतव्रतस्याविसृष्टत्वात् प्रक्रान्ता एवाग्नय उपयुज्यन्ते न तु (तेषां) पुनर्विहरणम्। अन्वाहार्यपचनस्य मध्यमशंकोरञ्जसा दक्षिणतः पुरस्ताद् वा संचरमवशेष्य शंकुनिहत्य तस्य दक्षिणतः पुरस्ताद् वाऽष्टषष्ठ्यङ्गुलमिते देशे शङ्कुर्निरवेयः। स पैतृक्य वेदेर्मध्वं भवति। तस्यानुदिशं वृत्तद्वयं संसर्गेणोत्पाद्याष्टषष्ठ्यङ्गुलमिते देशे शङ्कुं निहन्ति। ताः स्रक्तयो भवन्ति। महापितृयज्ञवेदिकोणाः सूक्तय इत्युच्यन्ते। अत्र पुरस्तात् पक्षस्तु गार्हपत्यमध्याद् अष्टमप्रक्रमे द्वादशप्रक्रमे वाऽऽहवनीयमध्य इत्यस्मिन् पक्षे युज्यते। एवं पुरुषमात्रां सर्वतश्चतुरस्रां महादिक्षु सूक्तियुक्तां वेदिं करोति। इतीयं पैतृकवेदिरित्युच्यते। द्र० साकमेधान्तर्गतमहाहविस्—, श्रौ०प०नि० पृ० १०१।

**पोतृ—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पोता ब्रह्मणः पुरुष ऋत्विक्। षोडशस्वृत्विक्षु चतुर्थवर्गस्थोऽयं पादी दक्षिणायाश्चतुर्थांशभाक् तिस्रो गा लभते। तमुन्नेता दीक्षयति। तु०—मी०को० पृ० २६१६)।

**पोतृखर—** द्र० पोतृधिष्ण्य—।

**पोतृधिष्ण्य—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत... चैकाहाहीनसत्रेषु ब्राह्मणाच्छंसिनः धिष्ण्यस्योत्तरतोऽरत्निमात्रे पोतुः खरं करोति 'उशिगसि कनीरौद्रेण० सीः' इति। सोऽयं खरः पोतृधिष्ण्यमुच्यते। द्र० श्रौ०प०नि० पृ० २४७।

**पौण्डरीकदक्षिणा—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतावहीनप्रकरणे पौण्डरीकसंज्ञक एकादशरात्रोऽहीन ऋद्धिकामस्य। स चैकादशदिनव्यापी समस्तेति कर्तव्यता

संपन्न एक एव यागः। तत्र 'अयुतं पुण्डरीके दद्याद् अश्वसहस्रमेकादशम्' (मी०सू० १०।६।१७) तथा च 'अन्वहं दश सहस्राणि दद्यात् अश्वसहस्रमुत्तमेऽहनि' (हि०श्रौ० १७।८।३६) अन्वहं विहृतानि सहस्राणि ददाति चतुष्टोमेऽश्वसहस्रम् (मा०श्रौ०) इयत्रोक्ता माध्यन्दिनसवने नीयमाना दक्षिणा दशसु अहःसु अन्वहं गवामेकैकं सहस्रं विभज्य ददाति। एकादशेऽन्तिमेऽहनि च अश्वसहस्रं ददातीति। अर्थात् दशमेऽहनि अश्वसहस्रं दत्त्वा अवशिष्टेषु गवां सहस्राणीति विभागोऽवगन्तव्यः। द्र० मी०को० पृ० २६१६-१७, २०।

**पौण्डरीकस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतावहीनप्रकरणे पौण्डरीकसंज्ञक एकादशरात्रोहीन ऋद्धिकामस्य। तस्मिन् पौण्डरीके एकादशरात्रे द्वादशोपसद्दिनानि, (क) पृष्ठ्यस्तोमः षडहः (१-६) छन्दोमास्त्रयः (७-९) गोतमस्तोमः (१०। विश्वजित् (११) (ख) अथवा व्यूढो नवरात्रः (पृष्ठ्यषडहः त्रयश्छन्दोमाः) महाव्रतं वैश्वानरः (अतिरात्रः)। (ग) यदा चैतावुभौ संभार्यौ तदा अतिरात्रः, चतुर्विंशः अध्यर्धोऽभिप्लवः (नव दिनानि) इत्येकादश पूर्वसंभार्यस्य। (घ) अतिरात्रः, चतुर्विंशः, अध्यर्धः पृष्ठ्यः (नव दिनानि) इत्येकादश उत्तरसंभार्यस्य (तु०—आ०श्रौ० १०।४।१-३)। (ङ) एकादशरात्रेण पौण्डरीकेण यजेत पारमेष्ठ्यकामोऽभ्यासङ्ग्यः षडहः त्रयश्छन्दोमाश्चतुष्टोमोऽग्निष्टोमोविश्वजिदतिरात्रः' (तु०—आ०श्रौ०) द्र० मी०को० पृ० २६२०) इति एकादश सुत्यादिनानि, सप्तदीक्षादिनानि इत्येतानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनां त्रिंशद्दिनेषु समाप्तिविधानात्। द्र० अहीनसत्रस्योपाय—, अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधि—।

**पौरोडाशिक—** (सा०) पौरोडाशिकमिति समस्तमेव दर्शपूर्णमासकाण्डमभिधीयते। द्र० मी०को० पृ० २६२१।

**पौर्णदर्वहोम—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां पञ्चमे चातुर्मास्यप्रकरणे साकमेधपर्वणि गृहमेधीये हविषे अध्वर्युः गार्हपत्यं परिस्तीर्य उत्तरतो दर्भेषु स्रुक्सदृशीं वैकंकतीं दर्वीं स्रुवं आज्यस्थालीं दर्भांश्चासाद्य प्रोक्ष्याऽऽज्यं संस्कृत्य दर्वीं स्रुवं च निष्टप्य संमृज्य दर्व्यामुपस्तीर्य सर्वं क्षाम काषमवधाय द्विरभिधार्य पुरोनुवाक्यासंज्ञां 'पूर्णादर्वि परापत' (ऋ० मा०सं० ३।४९, आ०श्रौ० २।१८।१३) इति ऋचं सस्वरां प्रणवान्तां सन्धाय 'देहि मे' ददामि ते' (मा०सं० ३।५० आ०श्रौ० २।१८।१३) इत्यृचा सस्वरया याज्यासंज्ञया सस्वाहाकारान्तया यजमानेऽन्वा- रब्धे ब्रह्मणो हिंकारे तिष्ठन्नासीनो वा गार्हपत्ये जुहोति। यजमान 'इन्द्रायेदम्' इति त्यागमुक्त्वा अध्वर्यवे ऋषभं ददाति। ततो गार्हपत्यं परिषिञ्चतीति होमः पौर्णदर्वहोम इत्युच्यते। द्र० श्रौ०प०नि० पृ० १००।

**पौर्णमासयाग—** (सा०, अव्य०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे १. पौर्णमास्यामग्न्यन्याधानं कृत्वा कृष्णप्रतिपदि यः यागः क्रियते स 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः' (आ०श्रौ० २।१।१) इति पूर्णमासे भवः इति व्युत्पत्त्या पौर्णमासशब्दप्रतिपाद्यः। लक्षणया पूर्णमा-

सशब्दप्रतिपाद्यश्च इति पौर्णमासयागः पौर्णमासश्च इत्युच्यते। द्र० श्रौ०प०नि० पृ० २९। २. आग्नेयः (१) उपांशुयाजः (२) अग्नीषोमीयः (३) इति पूर्णमाससंज्ञका यागाः पौर्णमासयागाः इत्युच्यन्ते (तु०—आ०श्रौ० २।१।१, नारायणः)।

**पौर्णमासस्वर—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे मन्द्रमध्यमोत्तमानि त्रीणि स्थानानि विशिष्टेषु देशेषु उपदिष्टानि 'आ तो मन्द्रेण ऊर्ध्वं च शंयुवाकात्। मध्यमेन हवींष्या-स्विष्टकृतः। उत्तमेन शेषः' (आ०श्रौ० १।५।२५-२८)। तत्रैकैकस्मिन् स्थाने सप्त सप्त स्वरा यमा इति वा। तेषु चतुर्थो मध्यमः। तस्मादुत्तरे त्रयः उच्चैरुच्चैस्त-रोच्चैस्तमाः पुरुषशक्तिमपेक्ष्यः भवन्ति। मध्यमादेरर्वाक् त्रयो नीचनीचतरनीचतमाः। तत्रैते मन्द्रमध्यमोत्तमा विधीयन्ते सोमेषु यथा त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु। द्र० ऐष्टिकस्वर—,उत्तमस्वर—, मन्द्रस्वर—, मध्यमस्वरप्रयोग—, वाचः स्थान—, स्वर—।

**पौर्णमासाऽऽमावास्ययोः पौर्वापर्यप्रयोग—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे 'अग्निहोत्रं च मा पौर्णमासश्च यज्ञः पुरस्तात् प्रत्यञ्चमुभौ कामप्रौ भूत्वा क्षित्या सहाविशतां व सतिश्च माऽऽमावास्यश्च यज्ञः पश्चात् प्राञ्चमुभा-विति समानम् (गो० ब्रा० १।३।२२) इति गोपथब्राह्मणं पौर्णमासस्य पुरस्तात् प्रयोग-मामावास्य च पश्चात् प्रयोगं संपुष्णाति।

**पौर्णमासी—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्य-ज्ञानां दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. प्रयुज्यमाना पूर्वपक्षपञ्चदश्यन्त्यक्षणे प्रतिप-दाद्यक्षणे चन्द्रमसः पूर्तिः स सन्धिः सा पौर्ण-मासी (तु०—आ०श्रौ० २।६।१ षड्गुरु-शिष्यः)। २. आग्नेयोपांशुयाजाग्नीषोमी-याणां त्रयाणां यागानां समुदायः पौर्णमासी। द्र० मी०को० पृ० २६२४।

**पौर्णमासेष्टेरेकाहकालता—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमास-प्रकरणे यदा प्रतिपद्येव प्रातरग्न्यन्वाधानादि ब्राह्मणतर्पणान्तं कर्म क्रियते न पूर्वेद्युः (पूर्णि-मायाम्) नापि प्रतिपदुत्तरभाविन्यां द्वितीया-यामिति सद्यः एकस्मिन्नहनि प्रतिपद्येव यागोऽनुष्ठीयते इति तदानीं पौर्णमासेष्टेरे-काहकालतोच्यते। तदुक्तम्—'सद्यो वा प्रातः' (का० श्रौ० २।१।१६)।

**पौर्णमासेष्टेर्द्व्हकालता—** (सा०) इष्टियज्ञेषु प्रकृ-तिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रक-रणे यदा अग्न्यन्वाधानादि शयनान्तं कर्म पूर्वदिने (पूर्णिमायाम्) कृत्वा परदिने (प्रति-पदि) यागः कर्तव्यः इति तदानीं पौर्णमासेष्टे-र्दिनद्वयकर्तव्यत्वाद् द्व्यहकालतोच्यते।

**पौर्वाह्णिकप्रवर्ग्ययाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमा-यां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्य-वत्सु चैकाहाहीनसत्रेषु प्रवर्ग्ययागस्य (घर्म-यागस्य) त्रिषु प्रथममध्यमोत्तमेषु प्रवर्ग्यदिनेषु पूर्वाह्णे महावीरमादायोत्ति-ष्ठत्सु ऋत्विक्षु होता 'उदुष्य देवः' (ऋ० ७।७१।१) इति मन्त्रेण ऋत्विजोऽनूत्ति-ष्ठेत्। तेषु गच्छत्सु 'प्रैतु ब्रह्मणस्पतिः' (ऋ० १।४०।३) इति मन्त्रेणानु-गच्छेत्। 'गन्धर्व इत्था' (ऋ० ८।८४।४)। इति खरमवेक्ष्य तमतिक्रम्य 'नाके सुप-र्णम्' (ऋ० १०।१२३।६) इत्यस्या ऋचोऽन्ते प्रणवोच्चारणेन सह तत्रैवोपवि-शेत्। अनिरस्य तृणं प्रेषितः 'तप्तो वां घर्मो नक्षति...' (आ०श्रौ० ४।७।४) 'उभा पिब-

तमश्विना' (ऋ० १।४७।१५) इत्युभाभ्यामनवानं आगूर्वषट्कारौ कृत्वा यजति (याज्यां पठति)। इतीदमृग्द्वयं पौर्वाह्णिकप्रवर्ग्ययाज्ये भवतः (तु०— ऐ० ब्रा० सा० १।२२; आ०श्रौ० ४।७।४ नारायणः)।

**पौर्वाह्णिकोपसत्सामिधेनी—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्याः 'उपसद्याय'... (ऋ० ७।१५।१)। 'इमां मे'...(ऋ० २।६।१)। 'इमामुपसदं वते'... इत्येता ऋचः पौर्वाह्णिकोपसत्सामिधेन्य उच्यन्ते।

**प्र इ (प्रारम्भणे—** (सा०) प्रयन्ति = प्रारभन्ते।

**प्रउग—** (सा०) १. शकटे नीडस्य बहिर्भागः प्रउगपदवाच्यः। श्रौ०प०नि० पृ० २५६ **द्र०** २. प्रउगंनाम शकटस्य वंशद्वयम्। यत् एकतः चक्रद्वयवच्छिद्रगतकाष्ठमयलोहमयान्यतरदण्डमध्ये बद्ध्यते, अपरतश्च युगमध्ये बध्यते। **द्र०** मी०को० पृ० २६५२।

**प्रउगचित्—** सोमयज्ञेषु साग्निचित्येषु अग्निचयन विकृतौ प्रउगः शकटस्याङ्गं शकटस्य त्र्यस्रि अग्रभागः। तदाकारा चितिः स्थण्डिलं प्रउगचिदुच्यते। प्रउगसदृशाकारं चयनं प्रउगचितमुच्यते। तच्च द्विविधं एकतः प्रउगचितं उभयतः प्रउगचितं चेति। **द्र०** मी०को० पृ० २६५३।

**प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातःसवने प्रउगं नाम शस्त्रं होत्रा शंसनीयम्। प्रातःसवने बहिष्पवमानोत्तरं ऋतुयाजोत्तरं आज्यशस्त्रं भक्षान्तमनुष्ठाय ततः परं प्रउगं शस्यते। **द्र०** मी०को० पृ० २६५२। २. वैश्वदेवग्रहणादूर्ध्वं होत्रा शंसनीयं प्रउगनामकं शस्त्रम् (तु०—ऐ० आ० सा० १।१।३)। ३ आज्यस्तोत्रान्तरं होत्रा प्रउगशस्त्रं शस्यते। **द्र०** अग्निष्टोमे होतुः प्रउगशस्त्र—।

**प्रउगशस्त्रतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योति...तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं प्रातः सवने होतुः प्रउगशस्त्रस्य 'वायवा याहि दर्शत' (ऋ० १।२।१-३) इति वायव्यः प्रथमस्तृचः। 'इन्द्रवायू इमे सुताः' (ऋ० १।२।४-६)। इति ऐन्द्रवायवो द्वितीयस्तृचः। 'मित्रं हुवे पूतंदक्षम्' (ऋ० १।२।६-८) इति मैत्रावरुणस्तृतीयस्तृचः। 'आश्विना यज्वरीरिषः' (ऋ० १।३।१-३) इति आश्विनश्चतुर्थस्तृचः। 'इन्द्राऽऽयाहि चित्रभानो' (ऋ० १।३।४-६) इति ऐन्द्रः पञ्चमस्तृचः। 'ओभासश्चर्षणीधृतः' (ऋ० १।३७-९) इति वैश्वदेवः षष्ठस्तृचः। 'पावका नः सरस्वती' (ऋ० १।३।१०-१२) इति सारस्वतः सप्तमस्तृचः। इति तत्तद्देवत्याः सप्त तृचा भवन्ति। तृचानां पुरस्तात् यथासंख्येन शोसावोम्' इत्याहावहिताः 'वायुरग्रेगाः' इत्याद्याः सप्त पुरोरुचः (ऋ०खि० ५।६।१-७) पठितव्याः। शंसनप्रकारः—**द्र०** अग्निष्टोमे होतुः प्रउगशस्त्र—, का०श्रौ० १।३।८ टि० विद्याधरः।

**प्रकरण—** (सा०) इष्टिपशुसोमेषु १-अङ्गप्रधानयोः (अङ्गाङ्गिनोः कर्मणे) आकांक्षाद्वयेन परस्परं संबन्धः प्रकरणमुच्यते। यथा दर्शपूर्णमासयोः (प्रधानयागयोः) प्रयाजादीनामङ्गानामाकांक्षा तयोः परस्परसंबन्धः प्रकरणेनावबुध्यते। २. प्रकरणं उभयाकांक्षा (फलाकांक्षाविशिष्ट-कथंभावाकांक्षा) **द्र०** मी०को० पृ० २६५३। ३. एक वाक्य-ता-

मापन्नो वाक्यसमूह: प्रकरणमुच्यते। यथा 'संनिहिता आग्नेयाद्यो यागा: पौर्णमास्यमावास्यासंयुक्त इति रूपं गम्यते तस्मात् समुदाय शब्दतया आग्नेयदि यागसमुदायौ दर्शपूर्ण मासशब्दौ बोधयत:। एतावेव समुदायौ दर्शपूर्णमासशब्दाभ्यामभिधीयेते। फलसंबन्धश्च बोध्यते स्वर्गकामपदेन। तस्माच्च प्रकरणं द्विविधं महाप्रकरणं अवान्तरप्रकरणं चेति। तत्र फलभावनाया: प्रकरणं महाप्रकरणम्। अवान्तरप्रकरणं तु फलभावनाया: अन्तराले यत् अङ्गभावनाया: प्रकरणं तत्। द्र० मी०को० पृ० २६५७-५९। ४. फलार्थतया स्वतन्त्रस्य प्रस्ताव: (आरम्भ:) प्रकरणमित्युच्यते। (तु०—द्रा० श्रौ० धन्वी)।

**प्रकृति—** (सा०) इष्टिपशुसोमेषु १. प्रकृति: प्रकार: नरूपान्तरं इत्यनर्थान्तरम् (तु०—आ०श्रौ० ९।१।१ नारायण:)। कर्मान्तरनिरपेक्षं कर्मणां मूलस्वरूपम्। २. प्रकर्षेण क्रियते-साकल्येनानुष्ठेयमुपदिश्यते यस्यां सा प्रकृति: (तु०—ऐ० ब्रा० सा० १।१)। ३. यत्र कर्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते। सा प्रकृति: (तु०—तां० ब्रा० सा० १।१।१)। ४. यत्र सकलपदार्थानुष्ठानक्रम: प्रक्लृप्यते सा प्रकृतिरुच्यते। ५. यत्र समग्राङ्गोपदेश: (तु०— का० श्रौ० ५।१।१ टि० विद्याधर:)। ६. अन्वयस्य प्रकृतिरित्याख्या। (तु०— शां० श्रौ० १।१६।२) = यत् सकृत् कृतं बहूनुपकरोति। ७. यस्मिन् कर्मणि अर्थाभिधानसमर्थो यो मन्त्र उत्पद्यते तस्य मन्त्रस्य तत्कर्म प्रकृति:। समर्थो नाम यथार्थाभिधायी शब्द: (तु०—आ०श्रौ० ३।२।१७ नारायण:)। ८. प्रकृतिराम्नायो भवति (तु०—आ०श्रौ० ८।४।७ देवत्रात:)। ९. दर्शपूर्णमासयोरेव सर्वविधेरुपदेशात् अन्यत्र च अत्रत्यस्य सर्वेति कर्तव्यताकलापस्य अतिदेशाद् दर्शपूर्णमासौ प्रकृतिपदवाच्यौ। द्र० श्रौ०प० नि० पृ० २९। १०. 'पौर्णमासेन इष्टिपशुसोमा उपदिष्टा:' (आ०श्रौ० प्रथमाध्याये दर्शपूर्णमासौ व्याख्यातौ विध्यन्तसहितौ। उत्तरत्रेष्टय: पशवश्च वक्ष्यन्ते विध्यन्तरहिता: नारायण:) 'तैरमावास्यायां पौर्णमास्यां वा यजेत'। अर्थात् इष्ट्या पशुना सोमेन च यक्ष्यमाण: पौर्णमास्याममावास्यायां वा यजेत (आ०श्रौ० २।१। १-२)। द्र० विकृति—।

**प्रकृतिभेद—** (सा०) इष्टिपशुसोमेषु प्रकृतिर्द्विविधा मूलप्रकृतिरवान्तरप्रकृतिश्चेति। सर्वात्मना कर्मान्तरनिरपेक्षा मूलप्रकृति:। यथैतदग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमातिरात्र: इति। सर्वेषां पशूनां दर्शपूर्णमासावेव प्रकृति इति आग्निहौत्रिकदार्शपौर्णमासिकसौमिकास्तिस्र: प्रकृतय: (तु०—आ०श्रौ० २।१।१ नारायण:)। कतिपयेष्वङ्गेषु कर्मान्तरं चापेक्षते स्वयं च कैश्चित् कर्मभिरपेक्षणीया भवति सेयमवान्तरप्रकृति:। तद्यथा—श्यामाकव्रीह्याग्रयणौ, वैश्वदेव- वरुणप्रघाससाकमेधा:, सौत्रामणी सवनीयपशु:, उक्थ्यादय: सोमसंस्था:, द्वादशाह:, गवामयनम् कानिचदेकाहाहीनसत्राणि चेति एतेषामवान्तरप्रकृतित्वं तत्र तत्र द्रष्टव्यम्। २. तिस्रो मूलप्रकृतय: इष्ट्याग्निहोत्र सोमा: (तु०—तां० ब्रा० सा० १।१।१)। ३. अग्निहोत्रम्, इष्टि: सोमश्चेति त्रिविधा: प्रकृतिभेदा उच्यन्ते (तु०—मा०सं० १।१ महीधर:) द्र० प्रकृतियाग—, श्रौतयज्ञानां प्रकृतिविकृत्युभयानुभयात्मकत्व—।

**प्रकृतियाग—** (सा०) श्रौतसाहित्ये (संहिताब्राह्मणाख्यकल्पात्मके) इष्टिः (दर्शपूर्णमासौ), पशुः (अग्नीषोमीयः, निरूढाग्नीषोमौ वा), सोमः (ज्योतिष्टोमः अग्निष्टोमः) चेति त्रय एव प्रकृतियागा उच्यन्ते। अग्निहोत्रं चातुर्मास्यान्यपि प्रकृतियागावुच्येते। अन्ये सर्वे यागा एतेषामेव विकृतयो भवन्तीति।

**प्रकृतियागकाल—** (सा०) प्रकृतियागानामिष्टिपशुसोमानां पौर्णमासी अमावास्या च यागकालो भवति। इष्ट्या पशुना सोमेन च यक्ष्यमाणः पौर्णमास्याममावास्यां वा यजेत (तु०— आ०श्रौ० २।१।१ नारायणः)। प्रकृतेः दर्शश्च पूर्णमासश्च कालः। **द्र०** मी०को० पृ० २६८५।

**प्रकृतिविकृतिविवेक—** (सा०) प्रकृतौ प्रत्यक्षो विध्यन्तः विकृतौ तु आनुमानिकः। नामधेयं पुनर्विकृतावपि प्रत्यक्षम्। **द्र०** मी०को० पृ० २६८७।

**प्रकृतिविकृत्यनुभयात्मककर्मन्—** (सा०) दर्विहोमा नारिष्टादयः गृहमेधादि चेति वैदिकं कर्म प्रकृतिविकृत्यनुभयात्मकं कर्मोच्यते। **द्र०** मी०को० पृ० २६९६।

**प्रकृतिविकृत्युभयात्मककर्मन्—** (सा०) अग्नीषोमीयसवनीयपश्वादिवैदिकं कर्म प्रकृतिविकृत्युभयात्मकं कर्मोच्यते। **द्र०** मी०को० पृ० २६९६।

**प्रकृतिविहितसत्र—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहविकृतौ सत्रप्रकरणे त्रयोदशादिरात्रिसत्राणां मध्ये येषामहः संख्या प्रत्यक्षमुपदेशेन नोपदिष्टा तान्यनुपदिष्टसंख्याकानि सत्राणि प्रकृतिसंख्याऽऽवापत्व प्राधान्यात् प्रकृतिविहितसत्राण्युच्यन्ते। तेषु हि प्रकृतेर्व्यूढद्वादशाहस्य प्रायणीयोदयनीययोरन्तराले व्यूढ दशरात्रादूर्ध्वमहः संख्यापूर्त्यर्थं यथायथम् एकाहादीनि षडहान्तानि अहान्योप्यन्ते आवापन्यायेन (प्रकारेण) पूर्यन्ते इत्यर्थः (तु०—का०श्रौ० २४।२।१ विद्याधरः)। तेनेमान्यावापिकानि चोच्यन्ते। **द्र०** २. आवापस्थान—, सत्रप्रकृति—, संभार्य—।

**प्रकृतिश्राद्ध—** **द्र०** श्राद्ध—।

**प्रकृतिसंहिता—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे 'यथायुक्ताद् विधिः सा प्रकृतिः' (तु०—तै० प्रा० ५।२)। प्रकृतिर्नाम यथापाठः (तु०—तै० प्रा० ३।१)। **द्र०** संहिता—।

**प्रकृतिस्मृत्युपाय—** (सा०) प्रकृतौ (इष्टिपशुसोमेषु) पदार्थस्य स्मरणे सर्वत्र उपायचतुष्टयं प्रसक्तम्— ब्राह्मणपदमन्त्रसूत्रोपद्रष्टारः। **द्र०** मी०को० पृ० २६८७।

**प्रकृतेष्टिकाल—** (सा०, आध्व०) प्रकृताविष्टौ पूर्वेद्युरग्निं गृह्णाति उत्तरमहर्देवतां यजेत इति द्व्यहः कालः प्रकृतेष्टिकाल इत्युच्यते। **द्र०** प्रकृति—।

**प्रक्रम—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु चयने च वेदिसाधने प्रक्रमः त्रिपदः। तत्र द्वादशङ्गुलं पदम्। (तु०—का०श्रौ० १६।८।१६)। **द्र०** २ पद—।

**प्रक्रमप्रमाण—** (सा०) एतान्येव चतुर्विधानि पदानि द्विगुणानि त्रिगुणानि च प्रक्रमा उच्यन्ते। (तु०—आप०शु० ५।३)।

**प्रक्रमहोम—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वमेधे (त्र्यहे) दक्षिणाग्नौ 'हिंकाराय स्वाहा' (मा०सं० २२।७-८)। इति

मन्त्रैर्हूयमाना एकोनपञ्चाद्धोमाः प्रक्रमहोमा इत्युच्यन्ते ।

**प्रगाथ—** (हौ०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयुक्तः प्रगाथ शब्दः क्रियानिमित्तकः क्वचिदेव मन्त्रविशेषे वर्तते । यत्र द्वे ऋचौ प्रगाथनेन तिस्रः क्रियन्ते स प्रगथनात् प्रकर्षगानाद् प्रगाथ इत्युच्यते (पा०का० ४।२।५५)। २. द्वयोर्ऋचोः समूहः प्रगाथः । ऋग्द्वयमेवानुष्ठानकाले तृचरूपेण प्रगथ्यते । तस्मादयं प्रगाथः । (तु०—ऐ० ब्रा० सा० ३।१७) यथा इन्द्रनिहवः प्रगाथः, ब्राह्मणस्पत्यः प्रगाथः, स्तोत्रीयानुरूपौ प्रगाथौ । ३. चतुःशतमैन्द्राबार्हताः प्रगाथाः । दशतयीषु । चत्वारश्च शतं चतुःशतं ऐन्द्राः देवतया बार्हताः छन्दसा, दशतयीषु ऋग्वेदे इत्यर्थः (ला०श्रौ० १०।६।३ अग्निस्वामी) । ४. प्रगाथत्वं नाम पूर्वस्तोत्रीयां पूर्वमुक्त्वा तस्या उत्तमं पादं पुनरभ्यस्य तेन सहोत्तरस्तोत्रीयाकरणं प्रगाथत्वमित्युच्यते । द्रा० श्रौ० धन्वी, ला० श्रौ० ६।२।१६) । ५. सर्वस्तोत्रीयान्त्यस्य पादस्य पुनरभ्यासः प्रगाथ इत्युच्यते (द्रा०श्रौ० धन्वी २।४) ६. प्रगाथस्य प्रग्रथनप्रकारश्च ऐ० ब्रा० सा० ३।१७ द्र० । इति प्रगथनेन तृचात्मकः प्रगाथः । द्र० बार्हतप्रगाथतृच— ।

**प्रगाथ—** (हौ०) १. द्वयोर्ऋचोरेकत्वेन पाठः ऋग्द्वयात्मकाः द्वृचाः प्रगाथा इत्युच्यन्ते । ते च नानाच्छन्दोनामभिः ऋक् प्रातिशाख्यादादिषु लक्ष्यन्ते । यथा बार्हतः, काकुभः, महाबार्हतः आनुष्टुभ इत्यादयः । २. प्रगाथ्यते संमेल्यते छन्दसा छन्द इति (द्वृचः) प्रगाथः (ऋ० अ० १।१०।१ षड्गुरु शिष्यः । ३. द्वृचाः प्रगाथाः (आ०श्रौ० ५।१५।७) । द्र० बार्हतप्रगाथ— इति द्वृचात्मः प्रगाथः ।

**प्रगाथ—** (सा०) नवममण्डलद्रष्टा ऋषिः प्रगाथ उच्यते ।

**प्रगाथ—** (औ०) प्रकर्षेण गानं यत्र । प्रकर्षश्च आम्नातात् ऋक्पाठादाधिक्यम्, तच्च पादाभ्यासपुरःसरं ऋगन्तरसंपादनेन भवति । द्वयोः तिसृणां वा ऋचां प्रग्रथनात् प्रगाथः । द्र० मी०को० पृ० २६९७ ।

**प्रग्राहशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ऋचं पादे पादे प्रगृह्य अवसाय तस्याः शंसनं प्रग्राह शंसनम् । यथा— वृषाकपिसूक्तं पादे पादे विगृह्य शंसति (तु०—ऐ० ब्रा० सा० ६।३२ ।

**प्रचय—** (सा०) प्रचयः एकश्रुतिः तानः इति पर्यायाः । उदात्त अनुदात्तस्वरितेभ्यो भिन्नः चतुर्थः स्वरः । एकः स्वरोऽयम् । मी०को० पृ० २६९८ ।

**प्र चर्—** प्रचरति = अनुतिष्ठति, प्रचरिष्यामः = अनुष्ठास्यामः इति ।

**प्रचरणी—**(पात्र-) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रचर्यतेऽवयेति प्रचरणी नाम पालशी स्रुक् जुहूरेवोच्यते । तया अग्निष्टोमे अग्निष्टोमीयपशौ शालाद्वार्ये निहितस्य प्रदीप्तस्येध्मस्योपरि सकृद्गृहीतमाज्यं हूयते । अयमेव होमो वैसर्जन होम उच्यते । इति विशेषोऽवधेयः । (का०श्रौ० ८।७।१ विद्याधरः ।

**प्रचरणीपात्र—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-

संस्थायां सप्रवर्ग्ये अग्निष्टोमे प्रयोक्तव्यं विकङ्कतकाष्ठनिर्मितं जुहूसदृशं पात्रम्। प्रचरणीपात्रमुच्यते। द्र० श्रौ०प०नि० पृ० २२८।

**प्रचरणीयमहावीर—** (सा०) सोमयज्ञेषुप्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायां सप्रवर्ग्ये अग्निष्टोमे यस्मिन् महावीरे धर्मः पच्यते सः प्रचरणीयो महावीर उच्यते द्र० श्रौ०प०नि० पृ० २२८।

**प्रचरणीयमहावीरपरिपूरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायं सप्रवर्ग्ये अग्निष्टोमे महावेदिगमनानन्तरं प्रेष्यत्याग्नीध्रमध्वर्युः 'अनेनोदकुम्भेन सन्ततया धारया त्रिः प्रदक्षिणं परिषिञ्चन् परिहि' इति। अग्नीध्रः सप्रवर्ग्यामुत्तरवेदिं परिषिञ्चन् परीहि' इति। आग्नीध्रः सप्रवर्ग्यामुत्तरवेदिं परिषिञ्चन् त्रिः प्रदक्षिणं पर्येति। अध्वर्युः परिषेककाले यजमानं वाचयति—'वल्गुरसि शंयुधाया शिशुर्जनधायाः शं च वक्षि परि च वक्षि' इति। आग्नीध्रः कुम्भं निधाय यथेतं त्रिः पर्येति। अध्वर्युः 'चतुः सूक्तिर्नाभिर्ऋतस्य सदो विश्वायुः शर्म सप्रथाः। अप द्वेषो अपहुरोऽन्यद् व्रतस्य सश्चिम' इत्युत्तरनाभिमभिमृशति। प्रवृञ्जनीयौ द्वासनीयौ खरावुत्तरनाभेरुत्तरतोऽवकीर्य पृष्ठीभ्यां प्रागायतं तयोः खरं कृत्वा तत्र सुवर्ण शकलं निधाय प्राग्ग्रीवमुत्तरलोम कृष्णाजिनं तत्राऽऽस्तीर्य रौहिणपिष्टैर्मुञ्जप्रलवैः सिकताभिश्चानुप्रकीर्य प्रचरणीयं महावीरं शफाभ्यां परिगृह्य 'घर्मैत्तत्तेऽन्नमेतत्पुरीषं तेन वर्धस्व चाव चाप्यायस्व। वर्धिषीमहि त्वा वयमाच प्यासिषीमहि' इति मन्त्रेण मधुभिक्षेण दध्ना पूरयति। 'महीनां पयोऽसि विहितं देवत्रा ज्योतिर्भा असि वनस्पतीनामोषधीनाँ रसो वाजिनं त्वा वाजिनो वनयामः' इति। पुनस्तेनैवाभिपूरयति। तदिदं प्रचरणीयमहावीरपरिपूरणमुच्यते। द्र० श्रौ०प०नि० पृ० २३५-३६, महावेदिगमन—।

**प्रचरणीशेषाऽऽज्याऽऽनयन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायां सप्रवर्ग्ये अग्निष्टोमे पन्नेजनीग्रहणानन्तरं पन्नेजनीकलशं पत्न्यै प्रदाय यथेतं मंगलवाद्यघोषयुक्ताश्चात्वालदेशं प्रतियन्ति। आग्नीध्रः चात्वालदेशे होतृचमसं वसतीवरीश्च सादयति। अध्वर्युः होतृचमसं वसतीवरीभिः सम्मृश्य पूरयति अन्वारब्धे यजमाने। होतृचमसान्तथैव मैत्रावरुणचमसे बिन्दु प्रस्कन्दयाति। होतृचमसं वसतीवरीर्मैत्रावरुण चमसमिति त्रयं संसृष्टं निधाय सकृद् वा प्रत्येकं मन्त्रं वक्ष्यमाणमुक्त्वा क्रमेण होतृचमसादिषु सशेषं प्रचरणीशेषमाज्यमानयति—'सं ज्योतिषा ज्योतिरङ्क्तां सं शुक्राः शुक्रेण सं हविषा हविः सं यज्ञपतिराशिषा' इति। तदिदं होतृचमसादिषु प्रचरिणीशेषाऽऽज्याऽऽनयनमुच्यते। द्र० श्रौ०प०नि० पृ० २६४-६५, पन्नेजनीग्रहण—।

**प्रचरणीहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे प्रातरनुवाकस्य या अन्तिमा ऋक् 'अभूदुषा (ऋ० ५।७५।९) इति। तस्यां होत्रा पठ्यमानायाम् अध्वर्युश्चतुर्गृहीतमाज्यं गृहीत्वा यज्जुहोति प्रचरण्या स्रुचा स प्रचरणीहोम उच्यते। (तु०—का०श्रौ० ९।३।१, विद्याधरः)।

**प्रच्छन्नदक्षिणाप्रतिग्रहेऽव्यापत्ति—** (सा०) इष्टिपशुयज्ञेषु प्रकृतिविकृतिभूतेषु अप्रकाशं

दक्षिणाग्रहणे प्रतिग्रहीतारं दक्षिणा न नाशयति। तदुक्तम्—'देवा वै वरुणमयाजयन्...व्यावृत्य (तिरोधाय अन्तर्धाय) प्रतिगृह्णाना:...। य एवं विद्वान् व्यावृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा ब्लीनाति (विशीर्णं करोति)' इति। (तु० तै० ब्रा० २,२,५)।

**प्रच्यावन—**(सा०) उत् सेचनं प्रच्यावनमुच्यते।

**प्रजहित—**(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रजहितशब्देन पुराणो गार्हपत्योऽभिधीयते। द्र० प्राजहित—।

**प्रजाति—**(सा०) प्रभूतत्वेनोत्पत्तिः प्रजातिरुच्यते।

**प्रजातीयवाचन—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे गायत्रं छन्दोऽनुप्रजाय स्वेत्यादि यजुर्मन्त्रः, प्रजात्यै अग्निप्रजननाय हितमिति प्रजातीय उच्यते। अधिमन्थनशकले अरणी निधाय प्रजातीयं यजमानं वाचयति। तत्र प्रजातीयमन्त्रवाचनात् पूर्वं बर्हिषी अन्यैः पदार्थैरसंसृष्टे प्रज्ञाते निधायोत्तरवेदिसमीपे पूर्वपरिगृहीतशकलत्रयमध्ये एकमधिमन्थनशकलं प्रागायतं निदधाति—'अग्नेर्जनित्रमसि' इति मन्त्रेण। तस्य पार्श्वयोः प्रागायतौ वृषणौ हस्ताभ्यां युगपदभ्यञ्चौ निदधाति—'वृषणौ स्थः' इति मन्त्रेण। 'उर्वश्यायुरसि' इत्यादि मन्त्रेण दक्षिणेन हस्तेनोत्तराणिं सव्येनाधरारणिमादत्ते—'घृतेनाक्ते' इत्यादिमन्त्रेणारणिद्वयमपूर्वाज्यस्थाल्यां समनक्ति विशेषोऽवगन्तव्यः। द्र० अग्निमन्थनीया (ऋच०)। श्रौ०प०नि० पृ० १२७।

**प्रजापतितनूमन्त्र—**( हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे दशरात्रस्य दशमेऽविवाक्येऽहनि चतुर्होतृग्रहमन्त्रपाठानन्तरं होत्रा पठनीया द्वादशसंख्याका प्रजापतितनूसंज्ञकाः'अन्नादा चान्नपत्नी चेति चशब्दान्तानि द्वादश पदानि प्रजापतेस्तन्वः इति प्रजापतितनूसंज्ञका मन्त्रा उच्यन्ते। तत्र द्वे द्वे पदे उपादाय शस्येते। तद्यथा— 'अन्नादा चान्नपत्नी च (१-२) भद्रा च कल्याणी च (३-४)। अनिलया चाभ्यया च (५-६) अनाप्ता चानाप्या च (७-८) अनाधृष्या चाप्रतिधृष्या च (९-१०) अपूर्वा चाभ्रातृव्या च (११-१२) इति (ऐ० ब्रा० सा० ५।२५)।

**प्रजापतिसप्तरात्रस्याहःक्लृप्ति—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रविकृतिभूतद्वादशाहविकृतौ अहीनप्रकरणे अस्ति प्रजापति सप्तरात्रसंज्ञकः अहीनः प्रजाकामस्य। तस्मिन् द्वादश उपसद्दिनानि, 'पृष्ठ्यषडहो महाव्रतं च' (आ०श्रौ० १०।३।६-७) इति सप्त सुत्यादिनानि, एकादश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि-, अहीनसत्राहः शस्योपाय—।

**प्रजापतेरुपांशुत्वधर्म—** (सा०) इष्टिपशुसोमेषु 'यत् किञ्चित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते, इति यज्ञेषु प्रजापतेरुपांशुत्वं धर्मः प्रसज्यते। (तु०—मी०को० पृ० २६९९)।

**प्रजापतेस्तूष्णींभावविधि—**(सा०) इष्टिपशुसोमयज्ञेषु 'प्रजापतिं मनसा यजेत' इति सर्वत्र यज्ञेषु प्रजापतिः मनसा इज्यते (तु०—मी०को० पृ० २६९९)।

**प्रज्ञात—**(सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु कस्यचिदपि पदार्थस्य उपयोगकाले शीघ्रलाभार्थं सकृदुपयुक्तमिदं वस्तुपुनरुपयोगाय अत्रेदं मया स्थापितमस्तीति' शीघ्रस्मृतिजनकसंकेतः प्रज्ञातमित्युच्यते। यथा—यज्ञीयवृक्षशाखाच्छेदनकाले यः प्रथमः शकलः परापतति तं यूपावटे प्रक्षेपार्थं क्वचित् प्रज्ञातं निदधाति। यथा वा उपवेषं स्थापयति। **द्र०** श्रौ०प०नि० पृ० १२०।

**प्रज्ञातनिधान—** (आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु कालान्तरोपयोगिनः पदार्थस्य प्रज्ञाते झटिति लभ्ये प्रत्यक्षस्थाने निधानं स्थापनं प्रज्ञातनिधानमित्युच्यते।

**प्रज्ञाता—** (सा०, आध्व०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु प्राकृताः दक्षिणाः प्रज्ञाता इत्युच्यन्ते।

**प्रणत (स्वर-) — द्र०** अवान्तरस्वर—।

**प्रणयन—**(आध्व०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु प्रणयनं नाम पदार्थस्य प्राङ्नयनभाववचनं प्रणयनसाधनपात्रादि द्रव्यस्य च वाचकम्। तच्च अग्नेः अपां सोमस्य च दक्षिणोत्तरवेद्योः संपद्यते। तत्र गार्हपत्यस्याग्नेरेकभागस्योद्धरणं कृत्वा आहवनीयस्थण्डिलं प्रति नयनं प्रणयनं क्रियते। सोमे तु प्राग्वंशशालाद्वारभागे पूर्वसिद्धाहवनीयरूपेणावस्थितान् शालामुखीयादग्नेः सकाशात् कियान् भाग आग्नीध्रीये धिष्ण्ये नीयते। सोमश्च पूर्वं शालामुखीयसमीपेऽवस्थितस्तेनाग्निना सहाऽऽनीतः सन् पुनरपि हविर्धानमण्डपे नेतव्यो भवति। अग्नेः प्रणयनं इध्मेनाग्निं गृहीत्वा कर्तव्यं न कर्परादिना। इध्मश्चायं अष्टादशभिः एकविंशत्या वा समिद्भिः यथापेक्षमधिकसंख्याकाभिः समिद्भिर्वा क्रियते। तिसृभिः सन्नहनरज्जुभिश्चबध्यते इत्यनुसन्धेयम्। तदुक्तम् 'अपरिमितं प्रणयनीयं त्रियूनम्।' **द्र०** इध्म—।

**प्रणव—**(सा०) १. ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। स्रुवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते॥ १॥ प्रणवाद्याः सर्ववेदाः प्रणवोपरि च स्थिताः। प्रणवस्तु सदा कार्यो वेदारम्भे विशेषतः॥ २॥ २ प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः। वाङ्मयं प्रणवं सर्वं तस्मात् प्रणवमभ्यसेत्॥ प्रणवेन विहीनं यत् तन्मन्त्रं प्राणहीनकम्। सर्वमन्त्रेषु मन्त्राणां प्राणः प्रणव उच्यते॥ (तु०—ओंकारकल्प, हिगृशेष पृ० १८०। ३. सन्तानार्थः प्रणवः। यत्र (श्रौतविधौ) संपूर्वस्तनोतिरस्ति (प्रयुज्यते) तत्र प्रणवः कर्तव्य इति। (तु०—आ० श्रौ० १।२।१३)। ४. प्रणवस्यावसानलक्षणत्वादुत्तरेण ऋगादिना सह वर्णसन्तानो न क्रियते (तु०—आ०श्रौ० ५।५।२ देवत्रातः)। **द्र०** आहार्यप्रणव—। ५. प्रतिगरे वः ओम् शब्दः स प्रणवः (तै० सं० सा० ३।२।१।९)।

**प्रणवभेद—** (सा०, हौ०) ओ३म्, ओ३ इति द्विविधः प्रणवः। तत्र प्रथमः ओकारः मकारान्तः त्रिमात्रः पूर्णः (ओ३म्) इति। द्वितीयः मकाररहितः केवलः शुद्धः (ओ३) इति। १. तत्र सौत्रामण्यां आश्विनशस्त्रे ओंकारप्रयोगे अन्त्येऽक्षरे स्वरप्रभृति प्रणवे लोपः। तस्मिन् प्रणवान्तं चैके इति सूत्रितवान् कात्यायनः। सूत्रार्थः—ऋचोऽवसाने ओङ्कारः पठनीयः। ऋचः संबन्धिनि अन्त्येऽक्षरे प्रणवे परे स्वरप्रभृतिवर्णजातस्य लोपः। यथा 'यथा' इन्द्रियम्+ओ३म्=इन्द्रियो३म्। तस्मिन्नेव प्रणवे च केचित् मकारं लुम्पन्ति ओ३ इत्येतावानेव प्रणवो भवतीत्यर्थः (तु०—का०

श्रौ० १९ ।७ ।५-७ विद्याधरः) । २. सामिधेन्यनुवचने 'स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत्' इत्याश्वलायनः । सूत्रार्थः— ऋचोऽन्तवर्णस्थाने ओकारस्य द्विमात्रत्वात् तं त्रिमात्रं मकारान्तं कुर्यात्। यथा- 'सुम्नयुः + ओ३म् = सुम्नो३म्' इति । तत्र ओकारान्तः शुद्धो भवति । तस्मादिहेष्टप्राप्त्यर्थं मकारान्तं कृत्वा इत्युच्यते (तु०— देवत्रातः) । ओकारोऽर्धतृतीयमात्रः मकारोऽर्धमात्रः इति त्रिमात्रत्वं प्रणवस्य (तु०— आ०श्रौ० १ ।२ ।१० नारायणः) । ३. प्रातः सवने आज्यशस्त्रादौ अन्यत्र च शस्त्रानुवचनादौ, 'शंसावो३म्' इत्याह्वयते प्रातः सवने त्र्यक्षरेण (होता) । शंसावो दैव' इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण । तत्र शुद्धः प्रणवः स्यात् प्रजाकामानाम् । मकारान्तः प्रतिष्ठाकामानम् । मकारान्तः प्रणवः स्यादिक आहुः । शुद्धः इति त्वेव स्थितः । मीमांसितः प्रणवः इह शुद्धः इह पूर्णः इति । शुद्ध एव स्याच्छस्त्रानुवचनयोर्मध्य इति । द्र० श्रौ०को० २ भा० पृ० २३९, ३२६ । ४. अनुवचनमात्रे अवसाने यः प्रणवः स चतुर्मात्रो भवति । अन्यत्र तु त्रिमात्र एव । तदन्तिमस्य मकारस्य स्थाने स्पर्शेषु परेषु तत्तद्वर्णस्य पञ्चमो वर्ण आदेशो भवति यवलेषु परेषु क्रमेण अनुनासिका यवला आदेशा भवन्ति । रेफोष्मसु परेषु अनुस्वार आदेशो भवति। अन्यत्राविकृत एव मकारः । एतस्य विकारमात्रस्य आश्वलायनसूत्रे 'अन्तापत्तिः' इति संज्ञोच्यते (तु०— आ०श्रौ० १ ।२ ।१५-१८) । इति विशोऽवगन्तव्यः । द्र० श्रौ०प०नि० पृ० २४ ।

**प्रणवविधान—** (सा०, हौ०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु १. सामिधेनीषु प्रणवशब्दार्थस्य ओङ्कारस्य (ओ३म् इत्यस्य) एवान्ते विधानं (निक्षेपः) न तु प्रणवेति शब्दस्वरूपस्य । अत एव 'ओमिति प्रणौति' इति बह्वृचाः प्रणवपदस्यार्थप्रदर्शिनीं श्रुतिमामनन्ति । तस्मात् ओङ्कार एव निधेयः । द्र० मी०को० पृ० ४३०४ । २. प्रणवविधानं सामिधेनीषु अन्त्ये ऋगक्षरे एव टेः स्थाने । द्र० मी०को० पृ० २७०५) ।

**प्रणीता—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. प्रणीतापात्रस्था आपः प्रणीता इत्युच्यन्ते । २. प्रणीता नाम हविः श्रपणार्थमुत्पन्नाः उत्पवनादिधर्मसंस्कृता आपः । 'प्रणीताः प्रणेष्यन् वाचं यच्छति, तां हविष्कृता (हविष्कृदेहि इति प्रैषेण) विसृजति' इति विशेषोऽवधेयः द्र० मी०को० पृ० २७०५ ।

**प्रणीताग्नि—** द्र० प्रणयन— ।

**प्रणीताग्न्यभिहोम—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु अध्वर्युराहवनीये कांचित् समिधमाधाय यजमानान्वारब्धः स्मार्तवत्संस्कृताज्येन 'अग्निर्यज्ञं नयतु प्रजानन्' इत्यादितिसृभिर्ऋग्भिः स्वाहाकारान्ताभिः स्रुवेण तिस्र आहुतीर्जुहोति । यथालिङ्गं यजमानस्य त्यागः । यजमानस्तेनैवाज्येन 'अग्निरन्नादोऽन्नपतिः' इत्यादिभिस्त्रिभिर्यजुर्मन्त्रैः स्वाहाकारान्तैस्तथैव जुहोति । 'अग्नयेऽन्नादायेदं० वायवे प्राणदे इदं० आदित्याय भूरिदे इदं०' इति क्रमेण यजमानस्य त्यागाः । एवं प्रतिप्रस्थाता समिधमाधाय सकृद्गृहीतेनाज्येन तूष्णीमेकामाहुतिमभिजुहोति । अयं प्रणीताग्न्यभिहो य उच्यते द्र० श्रौ०प०नि० पृ० ९० ।

**प्रणीताप्रणयन—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. अश्वत्थकाष्ठनिर्मितं चतुरङ्गुलदण्डं अष्टाङ्गुलबिलं प्रादेशमात्रं प्रणीतानामकं जलं नीयतेऽनेनेति प्रणीताप्रणयनं प्रणीतापात्रमुच्यते। द्र० श्रौ०प०नि० पृ० ९ द्र०। २. 'ब्रह्मन्नपः प्रणेष्यामि' इत्यध्वर्युणा पृष्ठे 'ॐ प्रथाय' इति ब्रह्मणाऽनुज्ञातोऽध्वर्युः प्रणीतापात्रस्था प्रणीता अपः गार्हपत्यादाहवनीयसमीपं तूष्णीं नीत्वा आहवनीयस्योत्तरतः अनन्तिकेऽनतिदूरे च 'कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्ति' (मा०सं० १।६) इति मन्त्रेण बहिर्वेदि निदधाति। तदेतत्प्रणीतानामपां निधानं प्रणीताप्रणयनं कर्मोच्यते। तत्र प्रणीताप्रणयनानन्तरम् अग्निप्रणीतयोरन्तरालेन न कोऽपि गच्छति। प्रणीता प्रणयनपात्राणि च अभिचार-ब्रह्मवर्चस-प्रतिष्ठाकामैः यथाक्रमं कांस्यवानस्पत्यमार्तिकानि ग्रहीतव्यानि इति विशेषोऽवधेयः। द्र० प्रणीता।

**प्रणीताप्रणयननिनयन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च समिष्टयजुर्होमानन्तरं प्रणीतापात्रं वेद्यां निधाय यजमानं मन्त्रं वाचयति। ततोऽध्वर्युयजमानौ प्रतिदिशं प्रणीताजलेन कुशैर्मार्जयतः-'प्राच्यां दिशि देवाः' इत्यादि मन्त्रेण प्राच्याम्, 'दक्षिणस्याम्' इत्यादि मन्त्रेण दक्षिणस्याम्, ततोऽप उपस्पृश्य 'प्रतीच्याम्' इत्यादिमन्त्रेण प्रतीच्याम्, 'उदीच्याम् इत्यादिमन्त्रेण उदीच्याम्। तत ऊर्ध्वर्युः प्रणीताजलशेषं वेद्यां मन्त्रेण प्रक्षिपतीति प्रणीताप्रणयननिनयनमुच्यते। द्र० प्रणीता—, समिष्टयजुर्होम—, श्रौ०प०नि० पृ० ४०।

**प्रणीतासादन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च आहावनीयायतनस्योत्तरतः प्रागग्रेषु दर्भेषु प्रणीताप्रणयने (पात्रे) प्रणीता नाम आप आसाद्यन्ते इत्येतत्कर्म प्रणीतासादनमुच्यते। द्र० प्रणीता-, प्रणीताप्रणयन—।

**प्र(नू) (शब्दे)** —प्रणौति = प्रणवमुच्चारयति। द्र० प्रणव—।

**प्रतिकर्मसोम—** प्रतिकर्मैकाह— द्र०।

**प्रतिकर्मसोम—** द्र० प्रतिकर्मैकाह—।

**प्रतिकर्मैकाह—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावेकाहप्रकरणे अग्न्याधेयपुनराधेयसायंप्रातरग्निहोत्रदर्शपूर्णमासदाक्षायणाऽऽग्रयणानां यागानां स्थानेषु ॱ षट् सौम्याः एकाहास्ते प्रतिकर्मसोमाः अर्थात् अग्न्याधेयसोमः, पुनराधेयसोमः, सायमग्निहोत्रसोमः प्रातरग्निहोत्रसोमः दर्शसोमः पौर्णमाससोमः दाक्षायणसोमः आग्रयणसोमः एते प्रतिकर्मसोमाः प्रतिकर्मैकाहा इत्युच्यन्ते। सर्वेऽप्येतेऽग्निष्टोमसंस्थाः भवन्ति। एके पशुबन्धस्य स्थाने सौम्यमेकाहमिच्छन्ति। स चोक्थ्यसंस्थोऽग्निष्टोमसंस्थो वा। तन्मते पशुबन्धैकाहोऽपि प्रतिकर्मैकाहेष्वन्तर्भवति। तत्र प्राकृतानां (का०श्रौ० ९।१।१५-१६ इत्यत्रोक्तान्) पुरोडाशः, धानाः, करम्भः, दधि, पयस्येति प्रातः- सवनीयानां पश्चात् सायं प्रातः अग्निहोत्रसोमयोः पयसी (पयोरूपे) द्वे हविषी अधिके निर्वपेति इति विशेषोऽवधेयः। (तु०—का०श्रौ० २२।७।२१-२३ विद्याधरः)।

**प्रतिकर्ष— ० कर्षण...** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु स्वस्थानादाकृष्य

(अन्यत्र) ग्रहणं ग्रहो वा प्रतिकर्षणं प्रतिकर्षो वेत्युच्यते। यथा—'आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्यमाणस्य, इति श्रुतानामाश्विनशुक्रमन्थिनां ग्रहाणां सर्वादितः कर्तव्यः। सर्वादितो नाम अन्तर्यामादूर्ध्वं ऐन्द्रवायावत् प्राक्। द्र० मी०को० पृ० २७०७, ग्रहग्रहणसादनप्रतिकर्ष—, ग्रहग्रहणप्रकार—, ग्रहाग्रता—।

**प्रतिगर—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमासंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. शस्त्रशंसनानुज्ञापनार्थं 'अध्वर्यो शोंसावोम्' इति होतुरध्वर्युं प्रति प्रश्ने कृते अध्वर्योः 'अस्तु' इति प्रत्युत्तरवचनं प्रतिगरशब्देनोच्यते। (तु०—तै०सं० सा० ३।२।९।१)। २. शंसितुः प्रोत्साहजननार्थं 'अस्तु' इति प्रतिवचनार्थं वा यदध्वर्युणा प्रतिगीर्यते प्रत्युच्चार्यते (आ०श्रौ० ५।९।४ नारायणः)। यद्वा यदध्वर्युः प्रतिगृणाति स प्रतिगरइत्युच्यते। ३. 'मदामो दैव' इत्ययं मदिधातु युक्तः प्रतिगरणमन्त्रः (ऐ० ब्रा० सा० ३।३८)। ४. शंसितुर्मन्त्रेण प्रोत्साहजनकं प्रतिवचनं प्रतिगर इत्युच्यते (तु०— ऐ० ब्रा० सा० ५।२५ तै० सं० सा० ३।२।९।१)। ५. शस्त्राणां शंसनकाले होत्रा 'शोंसावः' इत्याहूतोऽध्वर्युः प्रदक्षिणमावृत्य होतुः संमुखो भूत्वा होत्रा शस्त्राणां शस्यमानानां ऋचां प्रणवेऽवसाने च यत् प्रतिगृणाति स प्रतिगर उच्यते (तु०— का० श्रौ० ९।१३।२९ विद्याधरः)। ६. शंसनार्थमध्वर्युप्रश्नानन्तरं होता यथा शंसिष्यन् भवति तथा प्रत्याह। अध्वर्युः पात्रं नीचैरवष्टव्य सव्यमावृत्य प्राङ्मुख उपविश्येडाजपं कृत्वाऽपसव्यमावृत्य होतुरग्रे प्रत्यङ्मुखः प्रह्वस्तिष्ठन् प्रतिगृणाति। अयं प्रतिगर इत्युच्यते। द्र० श्रौ०प०नि० पृ० २९०। ७. मी०को० पृ० २७०७। ७. 'प्रतिगरोऽध्वर्यूणाम्' इति लिङ्गात् प्रतिगरकर्म अध्वर्योरितिज्ञायते। प्रतिगरो नाम अध्वर्युणा 'ओथामो दैव' इत्यादिः पठ्यमानो मन्त्रः। द्र० मी०को० पृ० २७०७। ८. 'ओथामो दैव' इत्ययं प्रतिगरसंज्ञो भवति, शस्त्रस्वरश्च भवति। प्रतिगीर्यते प्रत्युच्चार्यते इति प्रतिगरः (तु०—आ०श्रौ० ५।९।४ नारायणः देवत्रातश्च।

**प्रतिगरस्वरूपभेद —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु षोडशि द्वादशाहाश्वमेधादिषु च शस्त्रादिशंसने शाखाभेदेन क्रतुभेदेन वा अध्वर्युणा पठ्यमानाः प्रतिगरा नानाविधा भवन्ति (तु०— मी०को० पृ० २७०७)। होत्रा शस्त्रे शस्यमाने अध्वर्योर्यः प्रतिगरः स द्विविधः प्राकृतो विहृतश्चेति। तत्र सर्वत्र शस्त्रेषु शस्यमानेषु सामान्येन प्रकृतौ (अग्निष्टोमे) भव प्राकृतः प्रवर्तते। प्रकृतावाम्नातात् प्रतिगरमन्त्रात् तदपवादत्वेन विशेष्य कस्यचिद् धारणं संपादनं यस्मिन् प्रतिगरे सोऽयं विहृतः प्रतिगरः। यथा-षोडशिशस्त्रादिषु (तु०— ऐ० आ० सा० ५।१६)। अर्थात् प्राकृतः सामान्यः, तदपवादभूतो विहृतो विशेषः इत्युच्यते। तत्र सामान्यः (क) १. 'ओथामो दैव' शस्त्रस्वरः, । २. आहावे 'शों३ सामो दैव।' ३ तूष्णीं शंसे प्रणवान्ते उपांशु 'ओथामो दैवो ३। ४. प्रणवे 'ओ३थामो दैव'। ५. अवसाने 'ओथामो दैव'। ६. शस्त्रमध्याहावे ओं ३ शो३ सामो दैव'। ७. शस्त्रान्ते 'ओ३। (द्र० मी०को० पृ० २७०७ श्रौ०प०नि० पृ० २९०। ८. अथ-

वा प्रणवासानयोः 'ओम्' इति वा प्रतिगरः। शस्त्रसमाप्तौ तु 'ओम्' इत्येष एव नित्यः प्रतिगरः। ९. अथवा 'ओथामो दैव वाक्' इति वागन्तः प्रतिगरः (तु०—का० श्रौ० ९।१३।३०-३२ विद्याधरः)। तदाह- आश्वलायनः—'शस्त्रश्चरः प्रतिगरः ओथामो दैवेति। शोंसामो दैवेत्याहावे। प्लुतादिः प्रणवेऽप्लुतादिरवसाने। प्रणवे प्रणव आहावोत्तरे। अवसाने च। प्रणवान्तो वा। यत्र यत्र चान्तः शस्त्रं प्रणवेनावस्यति प्रणवान्त एव तत्र प्रतिगरः। शस्त्रान्ते तु प्रणवः' (आ०श्रौ० ५।९।४-१०) अर्थात् 'ओथामो दैव' इति पञ्चाक्षरः सामान्यः प्रथमः प्रतिगर एव प्रणवे प्लुतादिः सन् 'ओ३थामो दैव' इति भवति। अवसाने तु स एव 'ओथामो दैव' इत्यप्लुतादिर्भवति। आहावोत्तरे प्रणवे 'ओ३म्' इति प्रणवः प्रतिगरः। शस्त्रान्तरे शस्त्रमध्ये चावमाने 'ओ३म्' इति प्रणवः एव प्रतिगरः। उक्तविषयद्वयेऽयम् 'ओथाऽऽमो देवो३म्' इति प्रणवान्तः प्रतिगरो वैकल्पिको वा। शस्त्रमध्याहावे 'ओ३शों३ सामो दैव' इति प्रतिगरः' शस्त्रान्ते 'ओ३म्' इति प्रणवः प्रतिगरः। तु०—आ०श्रौ० ५।९।४-१० नारायणः। देवत्रातश्च द्रष्टव्यः। १०. ब्राह्मणे शस्त्रादौ (ख) प्रातः सवनमाध्यन्दिनसवनतृतीयसवनेषु मध्ये 'शंसाऽऽमो दैवोम्' इति पञ्चाक्षरो मन्त्रः अध्वर्योः प्रतिगर उक्तः। अस्यायमर्थः— हे होतस्त्वं शंस, तत्रामोदैवहर्ष एवास्माकमतोऽनुज्ञा दत्तेति (तु०—ऐ० ब्रा० सा० ३।१२)। अत्र नारायणः— अयं प्रतिगरान्तरः (द्वितीयः प्रतिगरः) प्रतिगरान्तरमध्यवर्तिन्याहावे नियम्यते। तेन शस्त्रमध्येऽयमेव स्यात्। शस्त्रादौ अयं ब्राह्मणोक्तः 'शंसाऽऽमो दैवोम्' इति वा। (तु०—आ०श्रौ० ५।९।५ नारायणः)

विद्याधरस्तु यत्र यत्र होत्रा शस्त्रादौ 'शोंसावोम्' इत्याहावः क्रियते तत्र सर्वत्र तत्समकालमेव अध्वर्युणा 'शोंसामो दैवोम्' (आ०श्रौ० ५।९।५) इति द्वितीयः प्रतिगरः कर्तव्यः इति समर्थयति (तु०—का०श्रौ० ६।१३। २९-३०)। इत्ययं नानाविधः प्राकृतः (सामान्यः) प्रतिगरोऽनुसन्धेयः। (ख) अथ विहृतः (विशेषः)। सोऽपि सामान्यवन्नानाविधः। तद्यथा— १. आग्निष्टोमे तृतीयसवने अग्निमारुतशस्त्रस्य मध्ये 'स्वादुष्किलायं मधुमान् (ऋ० ६।४७।१-४) इति चतसृषु ऋक्षु शस्यमामासु मध्ये आहावं कृत्वा (तिसृणामध्यर्धेषु विद्याधरः का०श्रौ० १०।६।६)। 'ओथमो दैव' इत्यस्य प्लुतादिरूपद्वयविशिष्टस्यापवादः 'मदामो दैव, मोदामो दैव' इति मदिधातुयुक्तं प्रतिगरद्वयम् (आ०श्रौ० ५।२०।६ नारायणः ऐ० ब्रा० सा० ३।३८।

२. अग्निष्टोमे तृतीयसवने होतुर्महावैश्वदेवशस्त्रस्य शंसने 'प्र द्यावा यज्ञैः' (ऋ० ७।५३।१-३) इत्येतासु ऋक्षु पादशः शस्यमानासु तिसृष्वपि मध्यावसानेषु त्रिः (त्रिवारं) 'मदामो दैव' इति प्रतिगरः (का०श्रौ० १०।६।५ विद्याधरः)। ३. अग्निष्टोमे माध्यन्दिने होतुर्मरुत्वतीयशस्त्रे 'जनिष्ठा उग्रः' (ऋ० १०।७३।१) इति ऋचि होत्रा शस्यमानायां 'मदामो दैव' इति अध्वर्युः सकृदेव प्रतिगरं पठेत् (तु०—का०श्रौ० १०।३।९ विद्याधरः)। प्रकृतौ निविद्धानसूक्तगताया अस्या ऋचः स्थाने विकृतौ यदि अन्या ऋक् शस्यते तस्यामपि एष प्रतिगरः सकृद् भवति। इति विशेषोऽवधेयः। (तु०—तत्रैव विद्याधरः)। ४. सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयायां सोमसंस्थायां विहृते षोडशिनि

(स्तोत्रियानुरूपाभ्यामूर्ध्वं 'प्रोष्वस्मै' (ऋ० १० ।१३३) इत्यन्ते स्तोत्रावयवे या विहृताः ऋचः तत्र तत्र (अवसानेषु) 'ओथामो दैव मदे, मदामो दैवोमथ इत्येतौ प्रतिगरौ भवतः (तु०—आ०श्रौ० ६ ।३ ।१४ नारायणः । ५. द्वादशाहे पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रातः सवने न्यूङ्खं निनर्दादिः ओ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ मदेथमदैवो ३ ऊँ ३ ऊँ ३ ऊँ ३ मोथामो दैवोम् इत्ययं प्रतिगरो न्यूङ्खनिनर्दाभ्यां प्रणवेन संबधाद् द्वितीयेऽर्धर्चे भवति पूर्वस्मिन् प्लुतादिरेव। 'अपि वा उदात्तादनुदात्त स्वरितमुदात्तम्' इति स्वरभेदेन ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ऊँ ऊँ ऊँ मदेथ मदेवो ३ ऊँ ३ ऊँ ३ ऊँ ३ मो थामो दैवोम्' इति अवसाने प्रणवे च प्रतिगरो वक्तव्यः (तु०—आ०श्रौ० ७ ।११ ।१६-१७ नारायणः । ६. द्वादशाहे पृष्ठ्यषडहस्य चतुर्थे एवाहनि माध्यन्दिनसवने होतुः मरुत्वतीयशस्त्रे 'श्रुधी हवमिन्द्र' (ऋ० २ ।११) इति श्रुधीहवीयस्य सूक्तस्य तृचेऽर्धर्चे न्यूङ्खः क्रियते। एवं होतुर्निष्केवल्यशस्त्रे 'कुह श्रुत इन्द्रः' (ऋ० १० ।२२) इति कुहश्रुतीयसूक्तस्य तृचे आद्येऽर्धर्चादिषु न्यूङ्खः कर्तव्यः । 'पिबा सोम मिन्द्र मदन्तु त्वा' (ऋ० ८ ।२२ ।१-६) इति षण्णां विराजां च मध्यमे पादेषु द्वितीय एवाक्षरे न्यूङ्खः क्रियते आदिशब्दाभावात्। अस्मिन् न्यूङ्खविधौ विकृतावपि 'ओथामो दैव' इति प्राकृतो नित्य एव (आ०श्रौ० ५ ।९ ।४) प्रतिगरो भवति। परं तत्र कुहश्रुतीयानां द्वितीयेऽर्धर्चे यः प्रतिगरो न्यूङ्खादिः स प्रणवान्तो भवति यः पुनः कुहश्रुतीयानामेव चतुर्थ्यादिषु ऋक्षु द्वितीयेऽर्धर्चे यः प्रतिगरः स प्लुतादिरेव इति विशेषोऽवगन्तव्यः (तु०— आ०श्रौ० ७ ।११ ।२८-३१ नारायणः) । ७. द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य विकृतशिल्पशस्त्रे महावालमिद्भिहारे वालखिल्यानां महानाम्नीपादयुक्तेषु प्रगाथाऽन्तेषु विहृतषोऽश्युक्तौ 'ओथामो दैव मदे, मदामो दैवमथ' इति द्वौ विहृतौ (विशेषौ) प्रतिगरौ प्राश्नुतः (तु०—आ०श्रौ० ६ ।३ ।१४) यत्र यत्र विहृतो। भवति तत्र तत्रैतौ प्रतिगरौ भवत इत्यर्थात्। 'तदुक्तं षोडशिना' (आ०श्रौ० ८ ।२ ।४) इति विहरणे विहृते सिद्धेऽपि षोडशिनोक्तो विकृतः प्रतिगर इह न भवति विहृतान्तर्वर्तिनामेकपदानां विहृतप्रतिगरप्रतिषेधात्। द्र० आ०श्रौ० ८ ।२२४। तत 'ओथामो दैव' इति प्रणवान्तः प्राकृत एव। ८. द्वादशाहे पृष्ठ्य षडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणस्य विकृतशिल्पशस्त्र एव 'वि हि सोतोः' इति पाङ्क्तस्य वृषा कपिसूक्तस्य (ऋ० १० ।८६ १-२३) पङ्क्तिशस्यत्वाद द्वितीये पाङ्क्तावसाने ओ३ ऊँ ऊँ ऊँ ऊँ ऊँ३ ओ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ इति न्यूङ्खादिविकृतः प्रतिगरः 'ओथामो दैव' इति प्राकृतः अप्रणवान्तः प्रतिगरो भवति। द्र० आ० श्रौ० ८ ।३ ।५-६ नारायणः।

९. तत्रैव ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्रे कुन्तापस्यादितः 'इदं जना उपश्रुत (अथ० २० ।१२७ ।१-१४ ऐ० ब्रा० सा० ५ ।३२ इति चतुर्दशानामृचां तृतीयेषु पादेषु आदितो ये द्वे अक्षरे तयोः पूर्वमनुदात्तं यथा भवेत् तस्मात् परं द्वितीयमुदात्तं यथा भवेत्तथा निनर्ददिति निनर्दस्य 'ओथामो दैवोम्" (आ०श्रौ० ५ ।९ ।४) इति प्रतिगरः स्यात्। स चायं प्रतिगरो विकृतावपि प्रणवे अवसाने प्राकृत एव। अस्मिन् प्रतिगरेऽप्यादितो यदक्षरद्वयं तयोः पूर्वमनुदात्तमुत्तरमुदात्तं कृत्वा ब्रूयात्। निनर्दसहितोऽयं प्रतिगरः

प्राकृत एवेत्यर्थः। (तु०—आ०श्रौ० ८।३।९-११ नारायणः) १०. द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनो विकृत शिल्प शस्त्र एव 'विततौ किरणौ (अथ० २०।१३३।१-६ ऐ० ब्रा० सा० ६।३३) इति षण्णामनुष्टुभां प्रवल्हिकानामर्धर्चशः शस्यानामवसानेषु 'दुन्दुभिमाहननाभ्यां जरितरो थामो दैव (१) कोशविले जरितरोथामो दैव (२) रजनि ग्रन्थेर्धानां (नं) जरितरो थामो दैव (३) उपानहि पादं जरितरो थामो दैव (४) उत्तरां (मां) जनीमाझन्यां (जनिमां जन्यान्) जारतरोथामो दैव (५), उत्तरां (मां) जनीं (न्) वर्तन्यां (वर्त्मन्यात्) जरितरो थामो दैव (६) इति यथासंख्यं षड् वैकृताः प्रतिगराः। प्रणवेषु प्राकृता एव। (आ०श्रौ० ८।३।१९ नारायणः अथ० २०।१३५।१-३) ११. द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्रे एव 'इहेत्थ प्रागपागुदक्' (अथ० २०।१३४।१-४) इति चतसृणाम् आजिज्ञासेन्याख्यानामृचां पच्छः शस्यानां त्रिमात्रेषु प्रणवेषु 'अजावुनि जरितरो थामो दैवो३म् (१), पृषातकानि जरितरो थामो दैवो३म् (२) अश्वत्थपलाशं जरितरो थामो दैवो३म् (३), पिपीलिकावटो जरितरो थामो दैवो३म् (१४) इति प्रणवान्ता यथासंख्यं चत्वारो वैकृताः प्रतिगरा भवन्ति। अवसानेषु प्राकृता एव। (तु०— आ० श्रौ० ८।३।२१ नारायणः अथ० २०।१३५।३ ऐ० ब्रा० सा० ६।३३)। १२-तत्रैव पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्रे 'भुगित्यभिगतः (१) शलित्यप्रक्रान्तः, (२) कलित्यभिष्ठितः (३) (अथ० २०।१३५।१) इति त्रिपदस्य प्रतिराधाख्यस्य मन्त्रस्य यथापाठं पठितस्य त्रयाणां पदानामवसानेषु यथासंख्यं 'श्वा जरितरो थामो दैव (१) पर्णशदो जरितरो थामो दैव (२) गोशफो जरितरो थामो दैव (१३) इति प्रतिगरा भवन्ति (तु०—आ०श्रौ० ८।३।२२-२३ नारायणः)। १३. तत्रैव पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्रे 'वी मे देवा अक्रंशत' (अथ० २०।१३५।४) इत्यतिवादाख्यस्यानुष्टुप्छन्दस्कस्य मन्त्रस्य 'अर्धर्चशः शस्यस्य 'पत्नीयीयप्स्यते जरितरो थामो दैव पत्नी यद्दृश्यते पत्नी यक्ष्यमाणा जरितरोथामो दैव (१) होता विष्टीमेन जरितरो थामो दैव (२), इति द्वौ वैकृतौ प्रतिगरौ भवतः। तत्र प्रथमोऽवसाने द्वितीयः प्रतिगरः प्रणवेऽप्यप्रणवान्त एव पाठसामर्थ्यात् (द्र० नारायणः)। यत्र प्रणवे प्रतिगरो विधीयते स सर्वः प्लुतादिर्भवति (द्र० आ०श्रौ० ५।९।६ देवत्रातः)। तु०—आ०श्रौ० ८।३।२४ नारायणः अथ० २०।१३५।५ ऐ० ब्रा० ६।३।३)।

१४. तत्रैव पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्रे 'आदित्या ह जरितराङ्गिरोभ्यो दक्षिणामनयन्' इत्यादेः 'प्रत्येव गृभायत' (ऐ० ब्रा० ६।३५) इत्यन्तस्य सप्तदशपदसमूहस्य देवनीथाख्यस्य 'ओं ह जरितरोथामो दैव (१), तथा ह जरितरो थामो दैव' इति द्वौ प्रतिगरौ भवतः। तत्र शंसनप्रकारः—'अदित्याह जरितरङ्गिरोभ्यो दक्षिणामनयन् (१) तां ह जरितर्न प्रत्यायन् (२) तामु ह जरितः प्रत्यायन् (३) तां ह जरितर्न प्रत्यगृभ्णन् (४) तामु ह जरितः प्रत्यगृभ्णन् (५) अहा नेत सन्नविचेतनानि (६) जज्ञा नेत सन्नपुरोगवासः (७), उत श्वेत आशुपत्वा (८० उतो पद्याभिर्जविष्ठः (९) उतेमाशु मानं पिपर्ति

(१०) आदित्या रुद्रा वसनस्त्वेष्ठते (११) इदं राधः प्रतगृभ्णीह्यङ्गिरः (१२) इदं राधो बृहत्पृथु (१३) देवा ददत्वावरम् (१४) तद्वो अस्तु सुचेतनम् (१५) युष्मे अस्तु दिवे दिवे (१६) प्रत्येव गृमायत (१७) इति सप्तदशसु पदेषु प्रथमोत्तमे द्वे पदे वर्जयित्वा शिष्टानि यानि पञ्चदशपदानि तेषु पञ्चदश पदेषु एतौ प्रतिगरौ क्रमेण व्यत्यस्य अर्थात् द्वितीयादि समेषु पदेषु अवसाने 'तथा ह जरितरोथामो दैव' इति द्वितीयः प्रतिगरः। तृतीयादिषु विषयेषु 'ओं ह जरितरोथामो दैव' इति प्रथमः प्रतिगरः कर्तव्यः। शिष्टे प्रथमे पदे 'ओथामो दैव, ओथामो दैवोम्' इति वा प्राकृत एव प्रतिगरो भवेत्। अवशिष्टे उत्तमे तु प्रणवो विहित एव प्रतिगरत्वेन निविद्वत्। उत्तमे पदे प्रणव एवात्र भवत्यर्थः। (तु०—आ०श्रौ० ८।३।२५-२६ नारायणः) अत्र ब्राह्मणम्—'तं वा एतं देवनीथं शंसति पदावग्राहं यथा निविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः' अर्थात् यथा निविदः पदे पदेऽवगृह्यावगृह्य शंसन्ते तद्वदत्राप्यवगन्तव्यम्। यथा च निविद उत्तमेन पदेन प्रणवः ओंकारः, एवमत्राप्यन्तिमे पदे प्रणवो द्रष्टव्यः (तु०—ऐ० ब्रा० सा० ६।३५)। १५. तत्रैव पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणांच्छंसिनो विकृतशिल्पशस्त्रे 'यदस्य अंहुभेद्याः' (अथ० २०।१३६।१-१०) इति दश ऋचः अंहुभेद्यनामधेयाः। आसां प्रणवेषु 'ई ३ इइइइइई ३ इइइइइई ३ इइइ किमथाभिदमाहो ३ ऊँ ३ ऊँ ३ ऊँ ३ मोथामो दैवोम्' इत्ययं न्यूंखादिः प्रतिगरो भवति। अवसाने 'ओथामो दैव' इति प्राकृत एव (तु०—आ०श्रौ० ८।३।२८।३१ नारायणः) अत्र ब्राह्मणम्— 'आहनस्याः शंसति। ता दश शंसति। ता न्यूङ्खयति' ता ऋचो न्यूङ्खयत्योकारविशिष्टाः (षोडशोकारान्) कुर्वन्ति (तु०—ऐ० ब्रा० सा० ६।३६)। अत्र आ०श्रौ० मुद्रिता इकारा विमृश्याः १४. द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने अच्छावाकस्य विकृतशिल्पशस्त्रे 'प्र वो महे मतयः' (ऋ० ५।८७।१-९) इत्येवयामरुन्नामकस्य सूक्तस्य 'ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ मदे मधोर्मदस्य मदिरस्य मदेवो ३ ऊँ ३ ऊँ ३ ऊँ ३ मोथामोम्' इति न्यूङ्खादिर्निनर्दमध्यः प्रणवान्त एको वैकृतः प्रतिगरः। १६. द्वादशाहे दशरात्रस्य दशमेऽविवाक्येऽहनि होतुः सर्पराज्ञ्याः शंसनानन्तरं यदा होता 'अध्वर्यो' इत्याह्वानं कुर्यात्। यथा शस्त्रादौ 'शोंसावोम्' इत्याह्वानं (आहावं) करोतीति तदा 'चित्तिः जुगासी३त् (१), चित्तमाज्यमासी३ति (२) वाग् वेदि रासी३ त् (३) आधीतं बर्हिरासी३त् (४) केनो अग्निरासी३त् (५), विज्ञातमग्नीदासी३त् (६) प्राणो हविरासीत् (७), सामाध्वर्युरासी३त् (८), वाचस्पतिर्होताऽऽसीत् (९) मन उपवक्ताऽऽसी३त् इति दशपदात्मकस्य चतुर्होतृग्रहमन्त्रस्य दशसु पदेषु अवसितेऽवसिते (प्रत्यवसानम्) 'ओं होतः (१), तथा होतः (२) इति द्वौ वैकृतौ प्रतिगरौ भवतः। तत्र पूर्वेषु पञ्चसु पूर्वः (ओं होतः) भवति। उत्तरेषूत्तरः (तथा होतः) इति विभागोऽर्थाल्लभ्यते इति विशेषोऽनुसन्धेयः (तु०—आ०श्रौ० ८।१३।८ नारायणः ऐ० ब्रा० सा० ५।२५)। १७. दशहोतृमन्त्रादीनां प्रतिगराः—तत्र दशहोतुः—ओम्। चतुर्होतुः-तथा। पञ्च होतुः—ओम्) षड्ढोतुः तथा। सप्तहोतुः-अरात्स्म होतः।

इति वैकृताः पृथक् प्रतिगराः (तु०—आप० श्रौ० २१।१०।७)।१८. सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीन् प्रकरणे अश्वत्रिरात्रे (अश्वमेधे) १. सावित्रेष्ट्यनन्तरं पारिप्लवाख्यानमारप्स्यमानो होताऽध्वर्युम् 'अध्वर्यो' इत्याह्वानं करोति। एवमाहूतो हिरण्मये कूर्चे (विशिष्टात ने) आसीनः अध्वर्युः 'हो होतः' इति प्रतिगृणाति प्रत्याह्वानं करोति। अयमत्र वैकृतः प्रतिगरः। (तु०—आ०श्रौ० १०।७।११-१३)।२. 'ह्वै होतः, इति पारिप्लवस्य वैकृतः प्रतिगरः (तु०— का०श्रौ० २०।३।१)।

**प्रतिदुह—** (सा०, आध्व०) सद्यो दुग्धं पयः प्रतिधुगित्युच्यते। द्राश्रौ धन्वी, 'वैश्वस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रयत्यध्वर्युः प्रातःसवने (ला०श्रौ० ८।१०।५)।

**प्रतिनिधि —** (सा०) **द्र०** प्रतिनिधिविधिनिषेधविवेक—।

**प्रतिनिधिविधिनिषेधविवेक—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभुतेषु १. श्रुतस्य (विहितस्य) द्रव्यस्याभावे (श्रुते द्रव्येऽपचरिते) तत्स्थाने तत्सदृशं सादृश्याद् यद् द्रव्यान्तरं गृह्यते प्रतिनिधीयते इति प्रतिनिधिरभिधीयते २. सर्वत्रालाभे प्रतिनिधिः प्रतिनिधिर्मुख्याभावे यः तत्सदृशः उपादीयते सः। मी०को० पृ० 'ओषधीनां मूलकाण्डपर्णफलपुष्पप्ररोहरसगन्धानां सादृश्ये प्रतिनिधिं कुर्यात् (तु०— वैता०श्रौ० ५।१० सोमादित्यः।३. स्वरूपसामान्याभावे कार्यसामान्यात् प्रतिनिधिः (तु०— आ०श्रौ० ३।१०।२ देवत्रातः)। ४. विहितद्रव्याभावे तत्स्थाने तत्सदृशद्रव्यान्तरलक्षणः प्रतिनिधिर्नित्ये कर्मणि सदृश्यात् कार्यः (तु०— का०श्रौ० १।४।२ विद्याधरः)।५. विहितद्रव्यलाभेन प्रथमतः काम्ये कर्मण्यारब्धे अनन्तरं च तस्यापचारे (विनष्टे) जाते तस्मिन्नारब्धे काम्ये कर्मणि प्रतिनिधिः कर्तव्यः, यतः काम्यस्यारब्धस्य कर्मणः समाप्तेर्नियमोऽस्तीत्यतः विहितापचारे सत्यपि अवश्यंभाविसमापनार्थं प्रतिनिधिः क्रियत एव। असमाप्तौ (त्यागे) तु शिष्टविगर्हणदोषः सम्पद्येत। यथैव नित्याननुष्ठाने शिष्टा विगर्हन्ते एवमारब्धस्य काम्यापि अपरिसमापने शिष्टा निन्दन्ति। यथैव 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' (तां० ब्रा० ९।५।३) इति सोमाभावे पूतिकेन (प्रतिनिधिना) समाप्त्यभिधानमस्ति तद्वत् काम्यस्यारब्धस्य कर्मणः समाप्तिः प्रतिनिधिनैव कर्तव्या (तु०— का०श्रौ० १।४।३-७ विद्याधरः)। ६. सोमयागे 'पयोव्रतं ब्राह्मणस्य यवागू राजन्यस्य आमिक्षा वैश्यस्य (तै० आ० २।८) इति श्रुत्या ब्राह्मणादीनां पयोयवाग्वामिक्षाः आहारा उक्ताः सन्ति। तत्र व्रत्यालाभे व्रतकरणाशक्तौ च व्रते प्रतिनिधेः प्राप्तिर्भवति कुतः नियमशब्दाभावात् इति व्रते प्रतिनिधिरस्ति (तु०—का०श्रौ० १।४।८ विद्याधरः)।७. इह प्रतिनिधिविधौ यत्र विहितस्य छागादेरभावे तत्सदृशे तत्सदृशद्रव्यान्तरे मेषे प्रतिहिते (प्रतिनिधौ) 'छागस्य वपाया मेदसो जुषेता हविर्होतर्यज (मा०सं० २१।४१) इत्यादिषु मन्त्रेषु श्रुतद्रव्यशब्दस्य छागस्यैवोच्चारणं कार्यं न प्रतिनिधिस्थानीयस्य मेषशब्दस्योच्चारणम्। अर्थात् तत्र श्रुतद्रव्यबुद्ध्यैव प्रतिनिधेरुपादानात्, मन्त्रगतद्रव्यबोधकशब्दे अनूहाच्च श्रुतद्रव्यशब्देनैव प्रतिनिधेरुच्चारणं कर्तव्यम्। यत्रापि च विधिनैव द्रव्यान्तरमुपात्तं यथा—'सोमाभावे पूतीकानभिषुणुयात्' (तां० ब्रा० ९।५।३) इत्यादौ तत्रापि सोमशब्देनैवोच्चारणं न पूतीकशब्देन, कुतः तत्र

विहितद्रव्यपरित्यागे जात्यन्तरस्य विधेरभावात्। अतः पूतीकानामपि सोमबुद्ध्यैव विधिना उपादानात् सोमशब्देनैवोच्चारणं कर्तव्यम् (तु०—का०श्रौ० १।४।९-१०)। ८. यत्र च कर्मणि विकल्पेन व्रीहियवादीनां विधानं तत्र किमप्येकं द्रव्यमुपादाय कर्मणि प्रवृत्ते कर्ममध्ये च तस्मिन् द्रव्ये नष्टे अनन्तरं वैकल्पिकं द्रव्यान्तरमुपात्तं तत्र विकल्पस्थले तु यद् द्रव्यमुपादाय पूर्वं कर्म प्रवृत्तं तस्यैव प्रतिनिधिरुपादेयो न वैकल्पिकस्य कुतः, द्रव्यान्तरो पादाने द्रव्यान्तरबुद्ध्या। कर्मान्तरबुद्ध्यापत्तेः (तु०—का० श्रौ० १।४।१४ विद्याधरः)। ९. अथ च कश्चित् प्रतिनिधिमुपादाय कर्मण्यारब्धे मध्ये (कर्ममध्ये) च तस्य नाशेऽनन्तरं श्रुतसदृशद्रव्यमेवोपादेयं न प्रतिनिधिसदृशम्। कुतः, श्रुतद्रव्याभावे सत्येव हि तस्य प्रतिनिधिः प्रवर्तते। तत्सत्त्वे तु श्रुतसदृशमेव द्रव्यमुपादेयम्(तु०—का०श्रौ० १।४।१५ विद्याधरः)। इति विशेषोऽनुसन्धेयः मुख्यद्रव्यापचारे प्रतिनिधौ गृहीते पुनर्मुख्यलाभे प्रतिनिधिं त्यक्त्वा मुख्यमेव ग्राह्यम्। द्र० मी०को० पृ० २७१२। इति प्रतिनिधिविधिः। अथ प्रतिनिधिनिषेधः—

१. काम्ये कर्मणि विहितस्य (श्रुतस्य) द्रव्यस्याभावे तत्सदृशेन द्रव्यान्तरेण (प्रतिनिधिना) काम्यस्य कर्मणोऽनारम्भः, काम्ययागो हि प्रतिनिधिद्रव्येण नानुष्ठीयते। कुतः, तस्य विहितस्य कर्मणस्तेनैव द्रव्येण समाप्तुं युक्तत्वात्। द्रव्यदेवतयोरेव कर्मस्वरूपत्वात्। अन्यतराभावे तस्यातिपत्तेः इत्यतः काम्ये कर्मणि प्रतिनिधिर्नास्ति (तु०—का०श्रौ० १।४।१ विद्याधरः)। २. इन्द्रादीनां देवतानाम्, आह्वनीयादीनामग्नीनाम्, 'इषे त्वा' (मा०सं० १।१) इत्यादिमन्त्राणाम्, प्रोक्षणावथात प्रयाजादीनां क्रियाणामपचारे। (विस्मरणादौ) प्रतिनिधिर्न भवति। कुतः, अदृष्टार्थत्वात्। ३. श्रुतद्रव्यापचारे (विहितद्रव्यस्यालाभे) निषिद्धं माषादिद्रव्यान्तरं प्रतिनिधिर्नभवति। कुतः, 'अयज्ञिया उ वै कोद्रवरटा (वरका) अयज्ञिया वै भाषाः' (काठ०सं० २०।८ मै० सं० ३।२।८) इत्यादीनां निषिद्धानामाचरणे दोषात्। ४. स्वामिनि (यजमाने) मृते प्रोषिते कर्मान्तरव्यापृते वः तत्स्थाने अन्यः प्रतिनिधिर्न कार्यः। कुतः, पुरुषान्तरेण क्रियमाणानां ब्रह्मचर्यद्रव्यत्यागादीनां मृते प्रोषिते वा यजमाने फलसंपादनायोगात्। (सत्रे मृते यजमाने तु तत्स्थाने अन्यः क्रियत एव विशेषविधानात्)। इति प्रतिनिधिनिषेधोऽभिहितः (तु०—का०श्रौ० १।६।६-९ विद्याधरः)। तत्र पात्रासादनवेदबन्धनाज्यावेक्षणादिषु यज्ञाङ्गभूतेषु पदार्थेषु तु यजमानस्य प्रतिनिधिर्भवत्येव। कुतः, पात्रासादनादीनां क्रत्वर्थत्वान्। अन्येनापि कृते पदार्थरूपनिष्पत्त्या वैगुण्याऽसंभवात्। एवमेव सत्रिणो यजमानस्यापि प्रतिनिधिः श्रुतिबलाद् भवति। एवं हि श्रूयते—'यदि दीक्षितानां कश्चित् प्रमीयेन तस्य यो नेदीष्ठी स्यात्तमुपदीक्ष्य तेन सह यजेरन्' (तां० ब्रा० ९।८।१) इति विशेषोऽवगन्तव्यः। (तु०—का०श्रौ० १।६।१०-११ विद्याधरः)। अयमत्र संक्षेपः—यत्र इष्टं प्रयोजनमुद्दिश्य द्रव्यादिकं विधीयते तत्र विहितद्रव्यालाभे द्रव्यान्तरेणापि तत्सदृशेन श्रुतद्रव्यनिष्पाद्यं प्रयोजनं संपाद्यते इति कृत्वा श्रुतद्रव्यस्थाने द्रव्यान्तरं प्रतिनिधातुं शक्यते। यानि तु अदृष्टार्थानि देवताऽग्न्यादीनि तेषामदृष्टरूपप्रयोजनमुद्दिश्यैव विहितत्वात् तादृशं श्रुतद्रव्यजन्यमदृष्टरूपं प्रयोजनं प्रतिनिधीयेन द्रव्येण

संपाद्यते इत्यत्र प्रमाणाभावात् न अदृष्टार्थानां प्रतिनिधिर्भवितुमर्हति (तु०—का०श्रौ० १।६।६ टि० विद्याधरः)। इत्येवंरूपः प्रतिनिधिविधिनिषेधविवेकोऽवगन्तव्यः।

**प्रतिपत्ति —** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. एकत्र कृतार्थस्य (विनियुक्तस्य) द्रव्यस्य अन्यत्र विनियोगः प्रतिपत्तिरित्युच्यते। द्र० मी०को० पृ० २८७५। यथा सोमे दीक्षितस्य स्वाङ्गकण्डूयने कृतार्थायाः कृष्णविषाया दक्षिणादानोत्तरं चात्वाले प्रक्षेपो विनियुक्तः २. यागादावुपयुक्तस्य कृतकार्यस्य द्रव्यस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरुच्यते। ३. उपयुक्तस्याकर्षणकरस्य विहितदेशे प्रक्षेपः प्रतिपत्तिरुच्यते। ४. 'आ वह देवान् यजमानाय' इत्याहावाहननिगदस्थं वाक्यं प्रतिपत्तिरित्युच्यते (तु०— आ०श्रौ० १।३।६ नारायणः)। सा च त्रिविधा-प्रधानोत्तरकाला प्रधान पूर्वकाला प्रधान समकाला चेति। द्र० मी०को० पृ० २७२१।

**प्रतिपत्तिकर्मन्—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे हविः श्रपणानन्तरं पात्रीसंक्षालनोदकं गार्हपत्योल्मुकेन अभितप्य अन्तर्वेदि स्फ्येन प्राचीस्तिस्रो रेखाः कृत्वा प्रत्यक् त्रिर्निवपति त्रिभिः स्वाहाकारान्तैर्मन्त्रै इत्येतादृशं कर्म अन्यत्रापि क्रियमाणं यथा—'उल्मुकं प्राच्यां निरस्येत्'इत्यादौ कस्यचिद् वस्तुनो जाते कार्ये विधिप्राप्तविनियोगकरणं प्रतिकर्मेत्युच्यते। अन्यत्र च इष्टिपशुसोमेषु सर्वत्रैवं लक्षणं कर्मप्रतिपत्तिकर्मद्रष्टव्यम्। द्र० प्रतिपत्ति—, हविःश्रपण—, श्रौ०प०नि० पृ० १८। २. प्रतिपत्तिः नाम कर्मभूतोपयोगद्रव्यसंस्कारार्थं दृष्टार्थं सन्निपत्योपकारकं क्रत्वर्थं प्रवृत्तिरूपं वैदिकं कर्म। द्र० मी०को० पृ० २७३१।

**प्रति पद्—** (प्रारम्भणे) यथा—प्रतिपद्यते प्रारभते।

**प्रतिपद्—**(सा०, हौ०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. शस्त्रे स्तोत्रे च प्रयुज्यमाना प्रथमा ऋक् प्रतिपदित्युच्यते। २ प्रतिपद्यते प्रारभ्यते इयमिति प्रतिपत्। आरम्भो वा (तु०— आप०श्रौ० ४।९।२)। ३. प्रतिपदिति प्रथमस्तृच एव। स एव स्तोत्रीय इति चोच्यते। (तां० ब्रा० सा० ६।९।१)।

**प्रतिपद्—** (सा०) शुक्लकृष्णपक्षयोः प्रथमा तिथिः प्रतिपद् प्रतिपदा वोच्यते।

**प्रतिपदनुचरतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनस्य सवनस्य मरुत्ववीयाशस्त्रे तृतीयसवनस्य वैश्वदेवशस्त्रे च तिस्र ऋचो येषु ते तृचाः प्रतिपदनुचरसंज्ञकास्तृचाः उच्यन्ते (तु०—आ०श्रौ० ५।१४।७ देवत्रातः)। एवंभूता एवं तृचाः माध्यन्दिनस्य निष्केवल्य- शस्त्रे तृतीयसवनस्य चाग्निमारुतशस्त्रे होत्रकाणां च शस्त्रेषु स्तोत्रियानुरूपसंज्ञका भवन्ति। (तु०— आ०श्रौ० ५।१०।१८)। १-२ तृच— द्र०।

**प्रतिप्रस्थातृ—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमास विकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासाख्ये चातुर्मास्यद्वितीये पर्वणि वारुण्यां वेद्यां व्यापारकर्ता अध्वर्युसदृशः पञ्चमः ऋत्विक् प्रतिप्रस्थाता उच्यते। अन्यत्र च पशुसोमयज्ञेषु तत्तदवसरेषु कार्यकर्ता ऋत्विक् प्रतिप्रस्थाता उच्यते इतिविशेषोऽवधेयः। श्रौ०प०नि० पृ० ८४ द्र०। २. प्रतिप्रस्थाता अध्वर्योः पुरुषः द्विती-

यवर्गस्थोऽयम्। अर्धी चायं मुख्यदक्षिणाया अर्धं षड् गाः लभते। सत्रेषु 'प्रतिप्रस्थाता अध्वर्युं दीक्षयित्वा अर्धिनो दीक्षयति—, ब्राह्मणाच्छंसिनं ब्रह्मणः (पुरुषं), प्रस्तोतारमुद्गातुः (पुरुषं), मैत्रावरुणं होतुः (पुरुषं)। प्रतिस्थातारं नेष्टा दीक्षयति। द्र० मी०को० पृ० २७३१।

**प्रतिप्रस्थातृनापितप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रतिप्रस्थाता 'नापितोप्तोपपक्षां मे निकृत्तनखां प्रब्रूतात्' अनेन नापिताय क्षुरं प्रयच्छन् प्रेष्यतीति। अयं प्रतिप्रस्थातृ नापितप्रैषः उच्यते। द्र० श्रौ०प०नि० पृ० १९६।

**प्रतिप्रस्थातृवेदि—** द्र० मारुतवेदि—श्रौ०प०नि० पृ० ८५।

**प्रतिराध—**(हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे प्रयोक्तव्यः 'भुगित्यभिगतः... (आ०श्रौ० ८।३।२२)। इति त्रिपदात्मको मन्त्रः प्रतिराध उच्यते। तं ब्राह्मणाच्छंसीपृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयस० शंसति। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्र—।

**प्रतिषिद्धपशु—**(सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीय तत्प्रकृतिकेषु सौमिकेषु अन्यत्र च पशुषु एकशृङ्गः, छिन्नकर्णः, अन्धः, भग्नदन्तः, वामनः, छिन्नपुच्छः, शिपिविष्टः, बधिरः, कच्छनियुक्तः, एकखुरश्च पशुः प्रतिषिद्धपशुः उच्यते। द्र० श्रौ०प०नि० पृ० १२७।

**प्रतिषेध—**(सा०) नञ्, न-शब्देन विहितः प्रतिषेध उच्यते। प्रतिषेधार्थो न शब्दः।

**प्रतिष्ठा —**(सा०) इष्टिपशुसोमयज्ञेषु 'प्रतितिष्ठन्ति' इत्यर्थ वादोक्तौ द्युलोकादीनि ब्रह्मान्तानि षट् प्रतिष्ठास्थानानि यानि सन्ति वषट्कारेण वषट्कर्ता (होता) याज्यान्ते तानि यजमाने प्रतिष्ठापयति। तत्र 'द्यौरन्तरिक्षे प्रतिष्ठिताऽन्तरिक्षं पृथिव्यां पृथिव्यप्स्वापः सत्ये सत्यं ब्रह्मणि ब्रह्म तपसि' इत्येताः षट् प्रतिष्ठा ब्राह्मणे आम्नाताः (तु०—ऐ० ब्रा० सा० ३।६)।

**प्रतिसंधान—** (सा०, आध्व०) प्रसारणं प्रतिसंधानमुच्यते। यथा-(अङ्गुलीः) प्रतिसंदध्यात् इति। द्र० श्रौ०प०नि० पृ० २२।

**प्रतिसर—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्रेष्टिपशुसोमयज्ञेषु च प्रतिसरबन्धविधिना बध्यमानं सूत्रद्वयं प्रतिसर उच्यते। द्र० प्रतिसरबन्ध—, श्रौ०प०नि० पृ० ४५।

**प्रतिसरबन्ध—** (स्मा० सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथम अग्न्याधानप्रकरणे अन्यत्रेष्टिपशुसोमयज्ञेषु च आधानात् पूर्वदिने रात्रौ उदकशान्तिकर्मानन्तरं ब्राह्मणाः सूत्रद्वयमादाय नागेशं वासुकिं तत्र ध्यात्वा त्र्यम्बकमन्त्रेण त्रिवारं ऊर्ध्वं भस्मना सूत्रद्वयमालिप्य अग्निरायुष्मानिति मन्त्रेण यजमानस्य दक्षिणहस्तं गृहीत्वा 'बृहत्सामेति मन्त्रेण एकं सूत्रमपरं सूत्रं पत्न्या वामहस्ते बध्नीयुः। बन्धनस्थाने 'यो ब्रह्मणा' इति मन्त्रेण भस्मना रक्षां कुर्युः। यजमानः पूर्वस्यां दिशि जपकर्त्रे ब्राह्मणाय हिरण्यं दद्यात् दक्षिणस्यां दिशि जपकर्त्रे रजतं, पश्चिमदिशि जपकर्त्रे कांस्यम्, उत्तरस्यां दिशिः जपकर्त्रे वस्त्रं दद्यात् इति तदिदं कर्म प्रतिसरबन्ध इत्यु-

च्यते। द्र० प्रतिसर—, उदकशान्ति—, श्रौ०प०नि० पृ० ४५।

**प्रतिहर्तृ—**(सा०, औ०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रतिहर्ता उद्गातुः पुरुषः। तृतीयवर्गस्थोऽयम्। अयं तृतीय दक्षिणायास्तृतीयांशभाक् चतस्रो गा लभते। प्रतिहर्तारं नेष्टा दीक्षयति। प्रतिहर्ता गाता, न उद्गाता। गातारौ हि प्रस्तोतृ प्रतिप्रस्थातारौ नोद्गातारौ मी०को० पृ० २७४०।

**प्रतिहार—**(सा०, औ०) प्रतिहारः नाम पाञ्चभक्तिकस्य साम्नश्चतुर्थोऽवयवः, साप्तभक्तिकस्य साम्नः। पञ्चमोऽवयवः। द्र० मी०को० पृ० २७४०। द्र० सामभक्ति—।

**प्रतिहारस्थान—**(औ०)।

**प्रतिहाराक्षरपरिमाण—**(औ०)

**प्रतिहोम—**(अव्य०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु विहितस्य होमस्य पुरुषापराधादननुष्ठाने सति अपराधपरिहारायावश्यकर्तव्यत्वेन विहितः पुनर्होमः प्रतिहोम उच्यते।

**प्रतीचीनपृष्ठाहन्—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिरूपस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे प्रथमचतुर्दशरात्रे रथन्तरबृहद्वैरूपवैराजशाक्वर— रैवत सामसाध्यैः पृष्ठस्तोत्रैर्विपरीतक्रमेणोक्तानि पृष्ठान्यहानि प्रतीचीनपृष्ठान्युच्यन्ते। (तु०—तै० सं० सा०भा० ७।३।४)। द्र० चतुर्दशरात्रसत्रस्याहः क्लृप्ति-पृष्ठाहन्।

**प्रतृण्णसंहिता—**(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे 'अथ यत् शुद्धे अक्षरे अभिव्याहरति तत् प्रतृण्णस्य' = शुद्धे विकाररहिते पूर्वोत्तरे उभे अक्षरे अभिव्याहरति, स्पष्टमुच्चारयति इति यदस्ति तत् प्रतृण्णाशब्दाभिधेयस्य पदच्छेदस्यस्वरूपम्। विच्छेदरूपहिंसावचिना प्रतृण्ण शब्देन विच्छिन्नं पदमभिधीयते यदेतत्प्रतृण्णस्य स्वरूपं तत् 'अग्र नु एव।' प्रथमभावि एव। सिद्धेहि पदस्य स्वरूपे पश्चात् संहिता प्रवर्तते। संहितायाः सन्धीयमानपदद्वयधर्मत्वेन पदपूर्वकत्वस्यावश्यं भावात्। (तु०— ऐ० आ० सा० ३।१।३)।

**प्रत्नवती—**(औ०) सोमयज्ञेषु 'अस्य प्रत्नामनुद्युतम्' (सा० ७५५-५७) इत्यादयः स्तोत्रीया ऋचः। प्रत्नवत्य उच्यन्ते।

**प्रत्यक्ष—**(सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु यागं प्रतिचोदितं देवता नामधेयं प्रत्यक्षमुच्यते। तस्य प्रयोगकाले स्वरोच्चारणे नित्यमुपांशुत्वमिति विशेषोऽवधेयः। तदुक्तम्—'प्रत्यक्षमुपांशु' (तु०— आ० श्रौ० १।३।१६ सिद्धान्ती, गार्ग्यनारायणश्च)।

**प्रत्यगाशीर्मन्त्रविधि—**(याज०, सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रत्यगाशिषो मन्त्रान् जपति, अकरणानुपतिष्ठतेऽनुमन्त्रयते तदेवं यजुर्वेदस्याध्वर्यवसमाख्यया सर्वेषां मन्त्राणां आध्वर्यवत्वे प्राप्ते उच्यते-'ये आत्माशीरभिवादिन आध्वर्यवे कर्मणि करणतया चाविनियुक्ता मन्त्रास्तान् जपति, तैरुपतिष्ठते, तैरनूमन्त्रयते वा यजमानो न तु अध्वर्युः'। (तु०—आ० श्रौ० ४।१।३)।

**प्रत्यङ्स्तोमस्य छन्दोमदशरात्रस्य स्तोमक्लृप्ति—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावहीनप्रकरणे अस्ति प्रत्यङ्स्तोमो नाम छन्दोमदशरात्रः तस्य अष्टाचत्वारिंशं, चतुश्चत्वारिंशं, चत्वारिंशं, षट्त्रिंशं, द्वात्रिंशं त्रिंशं, द्वे अष्टाविंशे, पञ्चविंशं, चतुर्विंशं (तु०—आप०श्रौ०

२३।९।८)। इति प्रत्यवरोहक्रमेणदशानां स्तोमानां क्लृप्तिः प्रत्यङ्स्तोमच्छन्दोमदशरात्रस्य स्तोमक्लृप्तिरुच्यते।

**प्रत्यञ्जन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अवत्तं हविरभिधार्य आज्य- स्थाल्याज्येन मन्त्रेण अवदानस्थानान्याप्यायति इति आप्यायनं प्रत्यञ्जनमुच्यते। द्र० श्रौ०-प०नि० पृ० ३१।

**प्रत्यभिघारण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च प्रधानयागार्थं हविषोऽवदानं गृहीत्वा यस्माद् यस्मात् प्रदेशादवदानं गृहीतं स स प्रदेशः यदाज्येन प्रत्यभिघार्यते तत् प्रत्यभिघारणमुच्यते। क्षताभ्यञ्जनम् (क्षताभ्यङ्गः) इति चोच्यते। स्विष्टकृद्यागार्थमवदानं कृत्वा तु प्रत्यभिघारणं न भवतीति विशेषोऽवधेयः। तदुक्तम् अवदाय प्रत्यभिघारणं प्राक्स्विष्टकृतः (का०श्रौ० १।९।११ विद्याधरः) इति।

**प्रत्यभिमर्श—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये न्यग्रोधावरोधादिचमसभक्षणादूर्ध्वं 'शं न एधि हृदये पीतः'... (ऐ० ब्रा० ७।३३) इत्यनेन मन्त्रेण राज्ञा स्वकीय हृदयस्य प्रत्यभिमर्शो हस्तेन संपूर्णः स्पर्शः कर्तव्यः। इत्ययं स्पर्शः प्रत्यभिमर्श उच्यते। द्र० न्यग्रोधावरोहादिचमसभक्षण—।

**प्रत्यवरोह—** (सा०) प्रत्यवरोहः अन्त्यादारभ्यानुष्ठानम्। द्र० मी०को० पृ० २७५०।

**प्रत्यवरोहणीय—** (ज्योतिष्टोम—) द्र० राजसूये पवित्र—, अभ्यारोहणीय—।

**प्रत्यवेतस्वरोपद्रव—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तद्विकृतिषु चैकाहाहीनसत्रेषु चतुर्थमन्द्रादिनीचस्वरेण ये प्रारभ्यन्ते ते प्रत्यवेतस्वरा उपद्रवा उच्यन्ते। (द्रा०श्रौ० धन्वी, ला०श्रौ० ७-८।१)।

**प्रत्याक्रमण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे उद्ग्रहणानन्तरं सव्यपादेनैव प्राङ्मुख एव मन्त्रेण पूर्वमार्गेणैव वेद्या उत्तरत आगच्छति। तदेतत्प्रथमं समन्त्रकमागमनं द्वितीयादिकम-मन्त्रकं चागमनं प्रत्याक्रमणमुच्यते। द्र० श्रौ०प०नि० पृ० २६, उद्ग्रहण—।

**प्रत्याम्नान—, ...म्नाय—** (सा०) प्रत्याम्नानं बाधे प्रमाणम्। प्रत्याम्नानेन प्राकृतं बाध्यते आरभ्याधीतेन अनारभ्याधीतेन द्र० मी०को० पृ० २७५०)।

**प्रत्याम्नाय—** द्र० अपवाद—।

**प्रत्याश्रावण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अन्यत्र च पशुसोमयज्ञेषु १. आग्नीध्र इध्मसन्नहनवेष्टितं स्फ्यमूर्ध्वाग्रं धृत्वा उत्करे दक्षिणामुखः तिष्ठन् सर्वदा आश्रावणानन्तरम् अस्तुशब्दपूर्वकप्लुतादिः श्रौ३षट् (अस्तु श्रौ३षट्) इति पदमुच्चारयतीति तदेतत् प्रत्याश्रवणं प्रत्यश्रुतमिति चोच्यते। अध्वर्योरुत्तरतो दक्षिणामुखस्य स्थितस्य अग्नीध 'अस्तु श्रौ३षट्' इति वचनं प्रत्याश्रावणमुच्यते सर्वत्राश्रावणमध्वर्युः प्रत्याश्रावणमग्नीत् कुर्यात् इति विशेषोऽवधेयः। द्र० आहुतिप्रदान—, श्रौ०-प०नि० पृ० २७।

**प्रत्याश्रुत—**द्र० प्रत्याश्रावण—, श्रौ०प०नि० पृ० २७।

**प्रत्युत्तम्भन—** (सा०) सोमयज्ञेषु अतीतत्वेन नष्टस्य पुनरुद्धरणं प्रत्युत्तम्भनमुच्यते। एतच्चाऽस्तोमकृन्तत्राय सम्पद्यते। स्तोमानां त्रिवृत्पञ्चदशादीनां कृन्तत्रं कृन्तनं छेदः तद्राहित्यमस्तोमकृन्तनं तदर्थमित्यर्थः (तु० ऐ० ब्रा० सा० ४,१६)।

**प्रत्युत्थान—**(सा०) 'प्रति वै श्रेयांसमायान्तमुपतिष्ठति' लोकेऽपि श्रेयांसमतिप्रशस्तमाचार्यपित्रादिकं स्वसम्मुखत्वेन समागच्छन्तं शिष्यपुत्रादयः प्रत्युत्तिष्ठन्तीति। (तु०—ऐ० ब्रा० सा० २।२०)।

**प्रत्युद्ग्रहण—**(औ०) सोमयज्ञेषु सामगाने प्रत्युद् ग्रहणं नाम क्रुष्ट प्रथमाद्युच्चैः स्वरेण प्रारम्भः प्रत्युद्ग्रहणमुच्यते।

**प्रत्यूहन—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च गार्हपत्यादेः सकाशाद् बहिष्कृता नामङ्गाराणां पुनर्गार्हपत्यादौ प्रक्षेपः प्रत्यूहनमुच्यते। द्र० श्रौ०प०नि० पृ० १८।

**प्रथन—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. पुरोडाशस्य सर्वकपालस्पर्शनम् प्रथनमुच्यते। द्र० श्रौ०प०नि० पृ०१८। २. कपालेष्ववस्थापितस्य पुरोडाशस्य हस्तसंघट्टनेन सर्वेषु कपालेषु प्रसारणं प्रथा प्रथनम्। इदं पुरोडाशस्य न चरोः। द्र० मी०को० पृ० २७६०।

**प्रथम—**(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु होता ब्रह्माऽध्वर्युरुद्गाता चेत्येते चत्वार ऋत्विजः प्रथमा उच्यन्ते। द्र० द्वितीयिन्तृतीयिन्—।

**प्रथमचिति—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे प्रथमचित्यर्थः इष्टकासमूहः प्रथमचितिरुच्यते।

**प्रथमप्रयोगे पशुपूर्वाङ्ग—** द्र० पशुपबन्धप्रयोगपूर्वाङ्ग—।

**प्रथमस्थान—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिषु भूतेषु उपांशु स्वरापेक्षया किञ्चिदुच्चैः स्वरेणोच्चारणं प्रथमस्थानं प्रथमा स्वरयात्रा वोत्युच्यते। तत्र उपांशु लक्षणम्-जिह्वोष्ठौ चालयेत् किञ्चिद् देवतागतमानसः। निजश्रवणयोग्यः स्यादुपांशु स जपः स्मृतः इति।

**प्रथमाज्यभागानुवाक्या —** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे विशेषवर्जं अग्निर्वृत्राणि' (ऋ० ६।१६।३४) इति पौर्णमास्यामाग्नेयाऽऽज्यभागस्य (प्रथमाज्यभागस्य) अनुवाक्या। इष्टिपशूसोमेषु च यत्र ते वृधन्वन्तौ पुष्टिमन्तौ इत्यादि विशेषविधिर्न दृश्यते तत्र सर्वत्रैव नित्या प्रथमाज्यभागानुवाक्या (सायणभाष्य— ऋ० ६।१६। ३४ द्र० आग्नेयप्रथमाज्यभागपुरोनुवाक्या— श्रौ०को० १ भा० पृ० २०६६।

**प्रदान—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च वपापुरोडाशहविषां (अङ्गनां) द्रव्याणां संबन्धिनो ये त्रयो यागाः [वपायागः पुरोडाशयागः हविर्यागः (पश्वङ्ग यागः) ] तेषां प्रदानमिति संज्ञा। अर्थात् द्रव्याणि यागाश्च प्रदानानीत्युच्यन्ते। (आ०श्रौ० ३।४।४) तत्र पशुः एक देवत्यो नानादेवत्यश्च भवति। एकदेवत्ये एकस्मिन्नपि पशौ वपापुरोडाशहविषां पुरोनुवाक्याप्रैषयाज्यानां भेदात् परस्परं पृथग्भावाः (परार्थाः) सिद्धाः। तथा नानादेवत्येषु पशुषु वपायागवत् पृथग्भावः सिद्धः याज्यानुवाक्याभेदादेव। तथा पुरोडाशानां हविषामपि, इति पृथग्भावस्या-

विधेयत्वाद् एकदेवतेषु वपानां सकृद् यागः। तथा पुरोडाशानां हविषामपीति। तथा च अवदीयमानहविरर्थत्वात्। मनोताया नानादेवतेषु प्रथम प्रचारे सति अवदानस्य यागव्यवधानात् प्रतिपशु मनोता मन्त्रं (त्वं ह्यग्ने प्रथमः (ऋ० ६।१ ऐ० ब्रा० २।१०) आवर्तयेत्। इति विशेषोऽवगन्तव्यः। तु०—आ०श्रौ० ३।४। ४-६ नारायणः। द्र० पशुप्रदान—।

**प्रदानप्रैष**—(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च प्रदानापावपुरोडाशहविषां सलिङ्गाः (समानदेवत्याः) प्रैषाः प्रैषसमाम्नाये पठिताः (तु०—ऋ०खि० ५।७।१) ते च पुरोनुवाक्यायाज्ययोरन्तराले निवेश्यन्ते (तु०—आ०श्रौ० ३।१।२१)। तेषु प्रदानप्रैषेषु पश्वन्तरेष्वतिदेशात् प्राप्तेषु याः तासु विकृतिषु देवताः तासामेकैकमेव अग्नीषोमीयस्थाने निर्दिश्य यष्टव्यम्, न सर्वा देवताः सकृदेव निर्देष्टव्याः। यावत्यस्तत्र देवताः तावत्कृत्वः प्रैषोऽभ्यसितव्यः। इति विशेषोऽवगन्तव्यः (तु०—आ०श्रौ० ३।४।८।९ नारायणः)।

**प्रदेश** — (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. प्रदिश्यन्ते ज्ञायन्ते यैरुपायैः असमाम्नातान्यपि कर्माणीत्युपायाः प्रदेशा इत्युच्यन्ते। ते च विध्येकदेशभूतत्वात् प्रदेशशब्दवाच्याः। एतदुक्तं भवतिकर्मणां समाम्नातानामसमाम्नातानां च अपरिमेयत्वात् तेषामेकैकदेशो वक्तुमशक्यत्वात् सामान्येन तज्ज्ञानोपाया विध्येकदेशभूताः प्रदेशा भवन्तीति (तु०—आ०श्रौ० १०।५।१५ नारायणः)। २. अन्यत्रोपदिष्टस्य अन्यत्र वचनम् अतिदेशः प्रदेश इत्युच्यते। तस्मिन् प्रदेशे यदन्यत् स्तोत्रियानुरूपाभ्यां तृचेभ्यश्च तद् भवतीति विद्यात् (तु०—शां०श्रौ० भा० १२।३। १५)। द्र० आदेश- अन्वादेश—।

**प्रदोष**—(सा०) रात्र्याः प्रथमो यामः प्रदोषो भवति (तु०—आ०श्रौ० ३।१२

**प्रधान**— (सा०) इष्टिपशुपशुसोमेषु प्रकृतिविकृतिभूतेषु १. देवत्रातः। यतः फलं तदेव प्रधानं (कर्म)। मी०को० पृ० २७६३। २. 'प्रधानस्य (कर्मणः) साङ्गस्यानुष्ठानं ज्योतिष्टोमेऽवभृथे अप्सु द्र० मी को० २७६५ तद्यथा—ज्योतिष्टोमाख्येन सोमेन न यजमानो दीक्षणीयया दीक्षां प्रविष्टः सन् सोमेनेष्ट्वाऽवभृथेष्टौ दीक्षोन्मोचनं कृत्वा तस्मादुत्थितः एवानूबन्ध्यान्तं प्रयोगं समाप्य तदन्तेऽग्नीनरण्योः समारोप्योदग्देवयजनाद् यो देशस्तस्मिन्नग्नीन् मथित्वोदवसानीयया यजते। इति ज्योतिष्टोमस्य साङ्गानुष्ठानं प्रधानम् (तु०—आ०श्रौ० ५।१४।२३ नारायणः)। ३. प्रधानानामाग्नेयादीनामेकदेशकालकर्तृत्वं दर्शपूर्णमासचातुर्मास्यादौ द्रष्टव्यम्। ४. प्रधाने मुख्यशब्दः। ५. प्रधानाङ्गतन्त्रं द्वेधा प्रकृतिप्रधानस्य स्वाङ्गविकृत्या सह तन्त्रं विकृतिप्रधानस्य स्वाङ्गविकृत्या सह इति। ६. (सोमे) प्रधानकर्म स्तोत्रं शस्त्रं च। द्र० मी०को० पृ० २७६५-६७। ७. येन हविषा यत् कर्म व्यपदिश्यते तत् तत्र प्रधानम् (आ०श्रौ० २।१५।९)। देवत्रातः ८. फलसंयुक्तं प्रधानं कर्मोच्यते। ९. फलोद्देशेन यद् विहितं तत् प्रधानमुच्यते (का०श्रौ० १।५।१ टि०। विद्याधरः)। १०. यस्य हि स्थानं तदेव खलु प्रधानम् (का०श्रौ० १५।४।१८ विद्याधरः।

**प्रधानकर्मक्रमानियम**—(सा०) इष्टिपशुसोमादिषु फल-संयुक्तेषु प्रधानकर्मसु अनुष्ठाने पाठतः श्रुतिगतः क्रमनियमो नास्ति। तत्र यः क्रमः स विधानार्थः। सर्वेषां कर्मणां विधेयत्वेन पाठे कस्यचित् कर्मणः किञ्चित् कर्मानन्तर्यं वर्जनीयमेवेति न तत्र क्रमविवक्षा। तस्माद् यानि अग्निहोत्रदर्शपूर्णमासचातुर्मास्यादीनि परस्परभङ्गाङ्गिभावमापन्नानि तेषां तत्तत्पाठक्रममनुसृत्यैव अर्थात् यस्य कर्मणोऽनन्तरं यत्कर्म पठितं तस्य पूर्वमनुष्ठानं कृत्वैव अनन्तरोक्तं कर्मानुष्ठेयमिति नियमो नास्तीत्यवगन्तव्यम् (तु०—का० श्रौ० १ ।५०१६-१७ विद्याधरः)।

**प्रधानकर्मणां सहप्रयोगेऽङ्गकर्मणां सकृदनुष्ठान**—(सा०) इष्टिपशुसोमयज्ञेषु यत्र बहूनि प्रधानानि सहानुष्ठीयन्ते तत्र प्रयाजाद्यङ्गकर्मणां प्रतिप्रधानमावृत्तिर्न क्रियते। यद्यपि प्रधानस्य स्वस्वाङ्गैः सह पृथक् पृथगेव संबन्धात् तत्सिद्ध्यर्थं यावत्प्रधानं पृथगेवाङ्गानि अनुष्ठेयानीत्यौचित्यं तथापि प्रधानकर्मणां यत्र सहानुष्ठानं तत्राङ्गकर्मणां सकृदेवानुष्ठानं भवति न प्रतिप्रधानम्। अत एव दर्शे पूर्णमासे च सहानुष्ठीयमानेषु त्रिषु प्रधानेषु (यागेषु) प्रयाजादीनां वपत्रयमावृत्तिर्न क्रियते सकृदनुष्ठितेनाप्यङ्गेन अदृष्टोपकारकेण अनेकेषां प्रधानानामदृष्टरूपः उपकारः संपादयितुं शक्यत्वात् एकस्मिन् फले संपादनीये अङ्गानां प्रधानानां च संबन्ध श्रवणाच्च। तदेवमेकफलजनकीभूतैरनेकैः प्रधानैः सह अङ्गानां सकृदेवानुष्ठानं श्रूयत इति भावः (तु० —का० श्रौ० १ ।७ ।१-२ विद्याधरः)।

**प्रधानभेदेऽङ्गावृत्तितन्त्रभेद** (सा०) इष्टिपशु सोमयज्ञेषु प्रकृतिविकृतिभूतेषु देवताभेदात् प्रधानभेदो भवति। तत्र प्रतिप्रधानमङ्गमावर्तते। (आवापो भवति)। देवतैक्ये तु तन्त्रं (अनभ्यासः) भवति। यथा वाजपेये सप्तदश पशूनामेकैव प्रजापतिदेवता। तत्र वसाहोमः तन्त्रेणानुष्ठीयते न तु प्रतिपशु अभ्यस्यते इत्यनुसन्धेयम्।

**प्रधानयाग**— (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृति-भूतेषु १. फलोद्देशेन विहिता देवताप्रधानदेवता। प्रधानदेवतार्थं विहितो यागः प्रधानयाग इत्युच्यते। २. अवदानविधिना अवदाय अत्याक्रम्य वषट्कृते प्राक्संस्था उदक्संस्था वा प्रधानाहुतीर्जुहोतीति सोऽयं यागः प्रधानयाग इत्युच्यते।

**प्रधि**— (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टो.....तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयुज्यमाने रथे (शकटे) पार्श्ववर्तिनी फलके प्रधी इत्युच्यते। प्रकर्षेण धीयते धार्यते मध्यफलकमाभ्यामिति प्रधी (तु०—तै० सं० सा०)।

**प्रपद**— (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च 'प्रपदेन बर्हिराक्रम्य' इत्यादौ प्रपदशब्दः 'पादाग्रं प्रपदं पादः' इति कोषात् अङ्गुलिपश्चाद् भागस्य पादाग्रस्य वाचकः। द्र० श्रौ०प०नि पृ० २२।

**प्रपद**— द्र० राजसूये आज्याहुति—।

**प्रमाण**—(सा० १. धर्मस्येति कर्तव्यताया निर्णयविवादे प्रमाणं धर्मसमयो वेदाश्चेति (तु०—सुमन्तुधर्मसूत्रं १)। २. प्रमाणं धर्मे वेदः। द्र० मी०को० पृ० २७७२।

**प्रमाण**— (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे व्रात्यस्तोमसंज्ञकेष्वेकाहेषु प्रमाणं नाम वस्त्रस्य

निर्माणोपक्रमदेश: (तु०—द्रा०श्रौ० धन्वी, ला०श्रौ० ८ ।६ ।२०) ।

**प्रमाणभेद—** (सा०) प्रमाणानि द्विविधानि लौकिकानि अलौकिकानि चेति । तत्र १. प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्ध्यानि षट् लौकिकानि । २. अलौकिकानि (क) धर्मप्रमाणानिविधिअर्थवादमन्त्रनामधेयस्मृतिशिष्टाचाररूपाणि षट् (ख) धर्मभेदकानिशब्दान्तरअभ्याससंख्यासंज्ञागुणप्रकरणान्तराणि षट् । (ग) धर्माङ्गताबोधकानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट् । (घ) क्रमबोधकानिश्रुतिअर्थपाठस्थानमुख्यप्रवृत्तिरूपाणि षट् । (ङ) अतिदेशप्रमाणिवचननामलिङ्गानि त्रीणि । (च) ऊहप्रमाणं स्थानापत्ति: एकम् । (छ)बोधप्रमाणानिप्रत्याम्नातप्रतिषेधअर्थलोपरूपाणि त्रीणि. एवं एकत्रिंशत् अलौकिकानि प्रमाणानि । द्र० मी०को० पृ० २७७२ ।

**प्रयाज—** (हौ०) इष्टिपशुसोमयज्ञेषु (दर्शपूर्णमासयो:, चातुर्मास्येषु, ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे, सौत्रामण्यां, अग्नीषोमीये तत्प्रकृतिकेषु सौमिकपशुषु अवभृथे च) १. आश्रुतादिर्यजमानोपस्थानान्त क्रियाकलाप: प्रयाज इत्युच्यते (तु०—नि० ८ ।२१ दुर्ग:) । २. प्रधानयागात् पूर्वं प्रकर्षेण इज्यन्ते देवता (प्रयाजदेवता:) एभि: ते प्रयाजा उच्यन्ते । (श्रौ०प०नि० पृ० ३०) । तत्र दर्शपूर्णमासयो: समिधो यजति तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्विष्टकृद् यजति' (तै० सं० २ ।६१) इति पञ्च प्रयाजा दर्शपूर्णमासयो: विहिता: सन्ति । अर्थात् प्रकृतौ दर्शपूर्णमासवाच्यायां समित्, तनूनपात्, इड्, बर्हि:, स्वाहाकृतय: । (अग्निरूपा:) इति पञ्च भवन्ति। तत्र पञ्चसु गोत्रभेदेन केषांचिद् द्वितीय: प्रयाज: नराशंस:, केषाञ्चिद् द्वितीय: प्रयाज: तनूनपाद् भवति । तद्यथा—वसिष्ठ शुनकाऽत्रिवध्र्यश्वकश्यपसंकृतिगोत्राणां राजन्य-वैश्य-प्रजाकामानां च नराशंसो द्वितीय: प्रयाज: । एतद्भिन्नानां च तनूनपाद् द्वितीय: प्रयाज: भवतीति (तु०— का० श्रौ० १ ।६ ।१४ टि० विद्याधर:) । तदेव द्वितीय: प्रयाज: यजमानस्य गोत्रेण वसिष्ठत्वे शौनकत्वे आत्रेयत्वे वाध्र्यश्वत्वे सांकृतित्वे क्षत्रियत्वादेर्वा आदौ नराशंसपदघटित: अन्येषां तु तनूनपात्पदादि: प्रयाजा: नाम यागा: 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति दर्शादौ पञ्च आरादुपकारका: द्र० मी०को० पृ० २७७८ । ४. चातुर्मास्वगतासु मुख्येष्टिषु नव प्रयाजा भवन्ति तत्राद्याश्चत्वार: प्राकृता: (दार्शपौर्णमासिका:) एव । तदुत्तराश्चत्वारोऽपूर्वा: विहिता: । तेषां प्रथमस्य दैव्यो द्वारो देवता:, द्वितीयस्य उषासानक्ता, तृतीयस्य दैव्यौ होतारौ, चतुर्थस्य चतस्रो देव्य:, पञ्चम: प्राकृत: (स्वाहाकृति:) एव । एते दर्शपूर्णमासचातुर्मास्यानां प्रयाजा अनृग्रूपा (यजू रूपा:) वीधातूत्तरलोडन्तपदान्तत्वात् वीतवत्पदान्ता: आगुरादयो याज्यात्वाद् वषट्कारान्त: वषट्काराच्च पूर्वं 'वेतु वीतां व्यन्तु' इति पदत्रयान्यतमपदघटिता याज्यान्तत्वप्लुतियुक्ताश्च भवन्ति। पुरोनुवाक्यारहिताश्चापि प्रयुज्यन्ते। तदुक्तम्—'अथ यत्पुरोनुवाक्या: प्रयाजा भवन्ति' (श० ब्रा० ११ ।४ ।१ ।१२) । ५. पशौ (निरूढे, सौत्रामण्याम्, अग्नीषोमीये च) एकादश प्रयाजा ऋग्रूपा भवन्ति । एकादशसु तेष्वपि शाकलसंहितोक्तानां दशानामाप्रीसूक्तानां मध्ये वसिष्ठदृष्टसूक्तगता या एकादश ऋचस्ता वसिष्ठगोत्राणां यजमानानां प्रयाजयाज्या: (द्वितीय:प्रयाज: ऋ० ७ ।२ ।१-

११)। एवमत्रिगोत्रअत्रिदृष्टसूक्तगता ऋचः (ऋ० ५।५।१-११)। वध्र्यश्वगोत्राणां वध्र्यश्वदृष्टसूक्तगताः (ऋ० १०।१७)। (ऋ० १०।७०।११) शुनकगोत्राणां गृत्समदस्य शौनकत्वाद् गृत्समददृष्टसूक्तगताः (ऋ० २।३।१-११)। ऋचः प्रयाजयाज्याः (प्रयाजाः) भवन्ति। अत्र सर्वत्र द्वितीया ऋचो नराशंसपदघटिताः सन्ति। तत एते वैकल्पिकाश्चत्वारः प्रयाजा नराशंसवन्त इत्युच्यन्ते षट् शिष्टास्तनूनपाद्वन्तः। **द्र०** आप्रीदेवता—, आप्रीप्रैष—, आप्रीयाज्या आप्रीसूक्त श्रौ०प०नि० पृ० २९-३०। ६. प्रयाजः द्वितीयो नाराशंसः राजन्यानां वसिष्ठअत्रिवाध्र्यश्वशुनककश्यपसंकृतीनां च। इतरेषां तु तनूनपात् द्वितीयः प्रयाजः इति गोत्रभेदेन अनुष्ठान प्रकारो भिद्यते। **द्र०** मी०को० पृ० २७७७।

**प्रयाजदेवता**—(आध्व०, हौ०) इष्टिपशुसोमयज्ञेषु (दर्शपूर्णमासयोः चातुर्मास्येषु अवभृथे ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे सौत्रामण्यां अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. दर्शपूर्णमासयोः चतुर्णां प्रयाजानां वसन्तग्रीष्मवर्षाशरदो देवताः। पञ्चमस्य तु हेमन्तशिशिरौ समस्तौ देवता। २. समिधो यजति वसन्तमेव, तनूनपातं यजति ग्रीष्ममेव, इडो यजति वर्षा एव, बर्हिर्यजति शरदमेव, स्वाहाकृतिमन्तं यजति हेमन्तमेव **द्र०** श्रौ०को० १. भा० पृ० २०७। ३. ऋतवो वै प्रयाजाः समानीय होतव्याः। **द्र०** मी०को० पृ० २७७८। ४. प्रयाजेषु मान्त्रवर्णिको देवताविधिः। **द्र०** मी०को० पृ० २७७९। ५. चातुर्मास्येषु नवसंख्यादेवतानाम्—तत्राद्याश्चतस्रः, प्राकृताः, तदुत्तराश्चतस्रोऽपूर्वाः तासां प्रथमा देवता दैव्यो द्वारः' द्वितीया 'उषासानक्ता' तृतीया 'दैव्यौ होतारौ' चतुर्थी 'चतस्रो देव्यः' पञ्चमी 'प्राकृता 'स्वाहाकृतिः'। ६. पशौ (निरूढे सौत्रामण्यामग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु) 'होता यक्षदग्निम्' इत्यादि मैत्रावरुणप्रैषमन्त्रेषु 'समिधो अद्य' इत्यादिप्रयाजयाज्यासु चाभिहिताः समिदाद्या एकादश देवताः प्रयाजदेवता इत्युच्यन्ते। (ऐ० ब्रा० २।१८) ताश्च—'समिधः, तनूनपात्, नराशंसः (वैकल्पिकः) इलः, बर्हिः, दुरः, उषासानक्ता, दैव्या होतारः, तिस्रो देव्यः, त्वष्टा वनस्पतिः स्वाहाकृतयः' इत्येताः। तत्र वसिष्ठशुनकात्रिवाध्र्यश्वराजन्येभ्योऽन्येषां द्वितीयस्तनपात्। वसिष्ठादीनां नराशंसो द्वितीय इत्येकादशत्वमिति विशेषोऽवगन्तव्यः। **द्र०** मैत्रावरुणप्रैष—, नराशंसवत्—। ७. ऋतु देवता उ खलु प्रयाजा भवन्तीति (बौ०श्रौ० २४।३ श्रौ०को० १ भा० पृ० ७६०)। 'समिधो यजति वसन्तमेव, तनूनपातं यजति ग्रीष्ममेव, इडो यजति वर्षा एव, बर्हिर्यजति शरदमेव, स्वाहाकृतिमन्त्रं यजति हेमन्तमेव इति प्रकृतौ प्रयाजदेवताः। **द्र०** श्रौ०को० पृ० १ भा० पृ० ३०७।

**प्रयाजप्रैष**— (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्ध-प्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च होत्रा मैत्रावरुणदण्डप्रदानानन्तरं मैत्रावरुणोऽध्वर्युणा समिदादिभ्यः प्रेषितः सन् 'प्रेष्य' इति चोक्त ऋग्रूपप्रयाजानां प्रैषान् आह—'होता यक्षदग्निं समिधा सुषमिधा समिद्धं नाभा पृथिव्याः संगथे वामस्य। वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज' इत्ययं समित् प्रैषः। १। 'होता यक्षत्तनूनपातमदितेर्गर्भं भुवनस्य गोपाम्। मध्वाऽद्य देवो देवेभ्यो देवयानान् पथो अनक्तु वेत्वाज्यस्य होता-

र्यज' इत्येष तनूनपात्प्रैषः यजमानगोत्रानुसारेण ॥ २ ॥ 'होता यक्षन्नाराशंसं नृशस्त्रं नृँ प्रणेत्रम् । गोभिवर्षावान्स्याद् वीरैः शक्तीवान् रथैः प्रथमयावा हिरण्यैश्चन्द्री वेत्वाज्यस्य होतर्यज' इत्ययं नाराशंसप्रैषः यजमानगोत्रानुसारेण पाक्षिकः ॥ २ ॥ 'होता यक्षदग्निमिल ईलितोदेवोदेवाँ आवक्षद् दूतो हवाऽमूरः । उपेमं यज्ञमुपेमां देवो देवहूतिभवतु वेत्वाज्यस्य होतर्यज' इत्यमिट्प्रैषः ॥ ३ ॥ 'होतायक्षद् बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञे वि च प्र च प्रभृता स्वासंस्थं देवेभ्यः । एवमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज' इति बर्हिः प्रैषः ॥ ४ ॥ 'होता यक्षद् दुर ऋष्वाः कवष्योऽकोषधावनीरुदाताभिमिर्जिहतां विपक्षोभिः श्रयन्ताम् । सुप्रायणा अस्मिन् यज्ञे विश्रयन्तामृतावृधो वियन्त्वाज्यस्य होतर्यज' इति दुरां प्रैषः ॥५ ॥ 'होता यक्षदुषासानक्ता बृहती सुपेशसा नृँ पतिभ्यो योनिं कृण्वाने । संस्मयमाने इन्द्रेण देवैरिदं बर्हिः सीरतां वीतायाज्यास्य होतर्यज' इत्ययमुषासानक्ताप्रैषः ॥६ ॥ 'होता यक्षद्दैव्या हौतारा मन्द्रा पौतारा कवी प्रचेतसा । स्विष्टमद्याऽन्यः करदिषा स्वभिमूर्तमन्यऊर्जा स्वतवसेमं यज्ञं दिवि देवेषु धत्तां वीतामाज्यस्य होतर्यज'इत्यवं दैव्यहोतृप्रैषः ॥ ७ ॥ 'होता यक्षत् तिस्रो देवीरपसामपस्तमा अच्छिद्रमद्येदमथस्तन्वताम् । देवेभ्यो देवीर्देवमपो वियन्त्वाजस्व होतर्यज' इत्ययं तिसृणां देवीनां प्रैषः ॥ ८ ॥ 'होता यक्षत्त्वष्टारमचिष्टुमपाकं रेतोधां विश्वयवसं यशोधाम् । पुरुरूपमकामकर्शनं सुपोषः पोषैः स्यात् सुवीरो वीरैर्वेत्वाज्याज्य होतर्यज' इत्ययं त्वष्टृप्रैषः ॥ ९ ॥ 'होता यक्षद्वनस्पतिमुपावस्रक्षद्धियो जोष्टारं शशमनरः । स्वदात् स्वधितिर्ऋतुथाऽद्य देवो देवेभ्यो हव्यावाड् वेत्वाज्यास्य होतर्यज' इत्ययं वनस्पतिप्रैषः ॥ १० ॥ 'एते यद्यपि तनूनपान्न' राशंसभेदेन एकादश संपद्यन्ते तथापि यजमानगोत्रानुसारेण 'होता यक्षत्तनूनपातम्....' 'होता यक्षन्नराशंसं...तनूनपान्न- राशंसयोर्विकल्पेन द्वितीयप्रयाजस्यैकत्वाद् दशैव प्रयाज-प्रैषाः । (तु०—श्रौ०प०नि० पृ० १४३-४४ श्रौ०को० १ भा० पृ० ५७१-७३, श्रौ०को० २ भा० पृ० १९९-२००) । 'होता यक्षदग्निं स्वाहाऽऽज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहा कृतीनां स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा आज्यपाजुषाणां अग्न आज्यस्य व्यन्तु होतर्यज' इत्ययं स्वाकृतिप्रैष एकादशस्य प्रयाजस्य प्रैषः (तु०—श्रौ०प०नि० पृ० १४६ श्रौ०को० १ भा० पृ० ५७६; श्रौ०को० २ भा० पृ० २००-२०१) । **द्र०** मैत्रा- वरुणदण्डप्रदान— ।

**प्रयाजभेद—**(हौ०, सा०) इष्टिपशुसोमयज्ञेषु प्रधानयागात् पूर्वं विहितः प्रयाजा अनृग्रूपाः (यजूरूपाः । ऋग्रूपाश्चेति द्विविधाः । पुनः ऐष्टिकाः पाशुकाश्चेति द्विविधाः । ऐष्टिकाः पाशुकाश्चापि गोत्रानुसारेण द्विविधाः तनूनपाद्वन्तः नराशंसवन्तश्च । पाशुका ऋग्रूपा गोत्रभेदेन पुनर्द्विधा विभक्ताः । तत्र १. ऐष्टिकाः दर्शपूर्णमासयोः (अ) १. 'समिधो अग्न आज्यस्य वियन्तु । २. 'तनूनपादग्न आज्यस्य वेतु ।' ३. इडो अग्न आज्यस्य वियन्तु । ४. बर्हिरग्न आज्यस्य वेतु । ५. स्वाहाऽग्निँ स्वाहा सोमँ स्वाग्निँ स्वाहा प्रजापतिँ स्वाहाऽग्नीषोमौ स्वाहेन्द्राग्नी स्वाहेन्द्रँ स्वाहा महेन्द्रँ स्वाहा देवाँ आज्यपाँ स्वाग्निँ होत्राज्जुषाणा अग्न

आज्यस्य वियन्तु' इति पञ्च प्रयाजाः। तत्र (क) पञ्चमे प्रयाजे पूर्णमासेष्ट्यां 'स्वाहाऽग्निं ॅ स्वाहेन्द्राग्नी (ग) संनयतो दर्शेष्ट्यां 'स्वाहाऽग्निं ॅ स्वाहेन्द्रम्'। संनयतो महेन्द्रयाजिनो दर्शेष्ट्यां 'स्वाहाग्निं ॅ स्वाहा महेन्द्रम्' इति प्रयोगभेदविशेषो द्रष्टव्यः(तु०—श्रौ०को० १ भा० पृ० २०६-७)। (आ) चातुर्मास्येषु वैश्वदेवे १. 'ये३यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू वागोजः सह ओजो मयि प्राणापानौ वौ३षट्' इति प्रथमः। २. 'ये तनूनपादग्न आज्यस्य वेतु वा० वौ०' इति द्वितीयः अन्यत्र वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्यः। ये३ नराशंसो अग्न आज्यस्य वेतु वा० वौ० इति द्वितीयो वसिष्ठादीनाम्। ३. ये३ इडो अग्न अन्यस्य वेतु० वा० वौ०' इति तृतीयः। ४. ये वा 'बर्हिरग्न आज्यस्य वेतु' वा० वौ० इति चतुर्थः। ५. ये स्वाहाऽग्निं स्वाहा सोमं स्वाग्नि...स्वाहा देवा आज्यपा जुषाणा अग्न आज्यस्य व्यन्तु वा० वौ०' इति पञ्चमः (तु०—आ०श्रौ० १।५।१५-२४)। (इ) (क) चातुर्मास्यग्रामुख्येष्टिषु १. 'समिधो अग्न आज्यस्य व्यन्तु' इति प्रथमः प्रयाजः। २. तनूनपादग्न आज्यस्य वेतु' इति द्वितीयः। ३. 'इडो अग्न आज्यस्य व्यन्तु' इति तृतीयः। ४. 'बर्हिरग्न आज्यस्य वेतु' इति चतुर्थः। ५. 'दुरो अग्न आज्यस्य व्यन्तु' इति पञ्चमः। ६. 'उषासानक्ता अग्न आज्यस्य वीतान्' इति षष्ठः। ७. 'दैव्या होताराऽग्न आज्यस्य वीताम्' इति सप्तमः। ८. 'तिस्रो देवीरग्न आज्यस्य व्यन्तु' इति अष्टमः ९. स्वाहाऽग्निं स्वाहा सोम ॅ स्वाहाऽग्नि ॅ स्वाहा सोम ॅ स्वाहा सवितारँ स्वाहा सरस्वती ॅ स्वाहा पूषण ॅ स्वाहा मरुतः स्वतवमः स्वाहा पिश्वान् देवान् स्वाहा द्यावापृथिवी स्वाहाऽग्नि ॅ होतार ॅ स्वाहा देवा आज्यया जुषाणा आज्यस्य व्यन्तु' इति नवमः प्रयाजः। (तु०—श्रौ०को० १ भा० पृ० ४९५-९६ श्रौ०प०नि० पृ० २८-३०)। (ख) वरुणप्रघासे नवमे प्रयाजे पञ्चसंचरेभ्य ऊर्ध्वं 'स्वाहेन्द्रागी स्वाहा मरुतः स्वाहा वरुण ॅ स्वाहा क ॅ स्वाहा देवा आज्यया जुषाणा आज्यस्य व्यन्तु' इति नवमः प्रयाजः (ख) साकमेधे पञ्चसंचरेभ्य ऊर्ध्वं 'स्वाहेन्द्राग्नी स्वाहेन्द्रं वृत्रहणं स्वाहा विश्वकर्माण स्वाहा देवा आज्यया जुषाणा आज्यस्य व्यन्तु' इति नवमः प्रयाजः।(ग) शुनासीरीये पर्वणि पञ्चसंचरेभ्य ऊर्ध्वं 'स्वाहा वायुं नियत्वन्त ॅ स्वाहेन्द्रं ॅ स्वाहा शुनासीर स्वाहा सूर्य स्वाहा देवा आज्यया जुषाणा आज्यस्य व्यन्तु इति नवमः प्रयाजः। इति चातुर्मास्य प्रयाजा अनुसन्धेयाः। **द्र०** चातुर्मास्यदेवता, चातुर्मास्यहविस्—। प्रयाजदेवता—। २. पाशु का ऋग्रूपा प्रयाजाः पशुषु निरूढपशुबन्धे, अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च एकादश भवन्ति। **द्र०** श्रौ०को० १. भा० पृ० ५७०-७३, ५७६; २१ भा० पृ० १९९-२००; श्रौ०प०नि० पृ० ३०, आप्री सूक्त-, प्रयाजप्रैष—।

**प्रयाजयाज्या—**(हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च ऋग्रूपाणां पाशुकानां एकादशानां प्रयाजयाज्यानांगोत्रभेदेन प्रयोगे द्वौ पक्षौ स्तः। 'कण्वाङ्गिरोऽगस्त्यशुनका विश्वामित्रोऽत्रिरेव च। वसिष्ठः कश्यपो वाध्र्यश्वो जमदग्निरथोत्तमः' इत्युक्तगोत्रप्रवर्तकर्षिभिर्ऋग्वेदे दृष्टास्वाप्रीसूक्तगतप्रयाजयाज्यासु 'समिद्धो अग्निः' (ऋ० २।३। १-११) इति प्रयाजयाज्याः शुनकानाम्। 'जुषस्वनः

समिधम्' (ऋ० ७।२।१-११) वसिष्ठानाम्। 'समिद्धो अद्य मनुषः' (ऋ० १०।११०।१-११) इति अन्यगोत्राणामितरेषां सर्वेषां प्रयाजयाज्या भवन्ति। इत्येकः पक्षः। अथवा यथर्षि द्वितीयः पक्षः १. 'सुसमिद्धोन आवह' (ऋ० १।१३।१-१२) इति काण्वगोत्राणामाप्रीसूक्तगतप्रयाजयाज्याः २. 'समिद्धो अग्न आ' (ऋ० १।१४२।१-१३) इत्यङ्गिरोगोत्राणामाप्रीसूक्तगतप्रयाजयाज्याः। ३. 'समिद्धो अद्य राजसि' (ऋ० १।१८८।१-११) इत्यगस्त्यगोत्राणां...प्रयाजयाज्याः। ४.'समित्समित्सुमनसः' (ऋ० ३।४।१-११) इति विश्वामित्रगोत्राणां.. प्रयाजयाज्याः। ५. 'सुसमिद्धाय शोचिषे'(ऋ० ५।५।१-११) इति अत्रिगोत्राणां...प्रयाजयाज्याः। ६. 'समिद्धो विश्वतस्पतिः' (ऋ० ९।५।१-११) इति कश्यपगोत्राणां... प्रयाजयाज्याः। ८. 'समिद्धो अद्य मनुषः' (ऋ० १०।१०।२-११)। इति जामदग्न्यगोत्राणाम् अन्यगोत्राणामन्येषां च प्रयाजयाज्याः। इति द्वितीयः पक्षः। तत्राध्वर्युप्रेषितो मैत्रावरुणः पूर्वोक्तै समित्प्रैषादिभिः प्रैषैर्होतारं प्रेष्यति। होता यजमानगोत्रानुसारेण तत्तत्सूक्तगताः। स्वीयर्षिनामधेय यस्यानुगुणा वा तनूनपान्नराशंसव्यवस्थया च दश आप्र्यः आप्रीसूक्तसंज्ञकयाज्याः पठति। होत्रा च पूर्वाः प्रयाजप्रैषाः उत्तराः प्रयाजयाज्याः पठितव्याः। इदं च जामदग्न्यमाप्रीसूक्तं शुनकवसिष्ठवर्जितानां तत्सहितानां वा तथा अन्यगोत्रियाणां सर्वेषां जमानानामाप्री सूक्तं भवतीति विशेषोऽवधेयः। तदुक्तम्—'समिद्धो अग्निः' इति शुनकानाम् 'जुषस्व नः समिधम्' इति वसिष्ठानां 'समिधो अद्य' इति सर्वेषाम्' (तु०— आ० श्रौ० ३।२।६-७ नारायणः)। तद्यथा — १. प्रैषः — 'होता यक्षदग्निं समिधा. होतर्यज। याज्या- 'ये३यजामहे समिद्धो अद्य मनुषो दुरोणे० प्रचेताः वौ३षट् वागोजः सहजो मयि प्राणापानौ। २. प्रैषः—'होता यक्षत्तनूनपातं' होतर्यज। याज्या नराशंसवर्जिता— 'ये३तनूनपात्पथ ऋतस्य० कृणुह्यध्वरं नः वौ३वागोजः। ३. प्रैषः—'होता यक्षदग्निभिडः होतर्यज। याज्या—'ये३. आजुह्वान ईड्यः यजीयान् वौ३० वागोजः० ४. प्रैषः- होता यक्षद् वर्हिः. होतर्यज। याज्या—'ये ३.. प्राचीनं बर्हिः प्रदिश० स्योनं वौ३० वागोजः०। ५. प्रैषः-'होता यक्षद्दुरः० होतर्यज। याज्या-'ये ३... वाचस्वतीरुर्विया' सुप्रायणाः वौ ३... वागोज. ६. प्रैषः—'होता यक्षदुषा सा नक्ता० होतर्यजं। याज्या— 'ये ३... आ सुष्वयन्ती यजते. दधाने वौ ३... वागोजः० ७. प्रैष—'होता यक्षद् दैव्या होतारा. होतर्यज'। याज्या—'ये३ दैव्या होतारा प्रथमा० दिशन्ता वौ३० वागोजः। ८. प्रैषः—'होता यक्षत्तिस्रो देवीः० होतर्यज'। याज्या—'ये ३.. आनो यज्ञं भारती० सदन्तु वौ ३० वागोजः०' ९. प्रैषः—'होता यक्षत्त्वष्टारं० होतर्यज। याज्या—'ये३... य इमे द्यावापृथिवी० विद्वान् वौ३... वागोजः। (क) प्रैषः—'होता यक्षद० वनस्पतिं० होतर्यज'। याज्या— 'ये ३... उपावसृत्यन्या० घृतेन वौ ३... वागोजः (तु०—तै० ब्रा० ३।६।१-४ ऋ० १०।११० श्रौ०को० २ भा० पृ० ५६४।७०) (ख) अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पूर्वोक्तैः प्रैषैः सह पठनीया दश प्रयाजयाज्याः 'समिद्धो अग्निर्निहितः' (ऋ० २।३) जुषस्वनः समिधम् ऋ० ७।२) इत्या प्रीसूक्त-

गताः ताः शुनकवसिष्ठगोत्राणां 'समिद्धो अद्य मनुषो दुरोणे' (ऋ० १० ।११०)। इत्याप्रीसूक्तगताः सर्वेषामन्यगोत्राणां भवन्ति (तु०— श्रौ०को० २ भा० पृ० २००) (ग) १. सौत्रामण्यां च प्रयाजप्रैषयाज्याश्च द्र० सौत्रामणीत्रिपशुपूर्वाङ्गैन्द्रपशुप्रयाजप्रैष—, सौत्रामणीत्रिपशुपूर्वाङ्गैन्द्रपशुप्रयाजयाज्या— । (घ) निरूढपशुबन्धे एकादशः प्रयाजप्रैषेण पर्यग्निकरणअधिगुप्रैषप्रैष (उपप्रैष)अधिगुप्रैषस्तोकीयानुवचनानामनन्तरं अध्वर्युणा 'स्वाहाकृतीभ्यः प्रेष्य' इति प्रेषितो मैत्रावरुणो होतारं प्रेष्यति—प्रैषः—'होता यक्षदग्निं स्वाहाऽऽज्यस्य स्वाहा भेदसा स्वाहा स्तोकानां स्वाहा स्वाहा कृतीनां स्वाहा हव्यसूक्तीनां स्वाहा देवा आज्यया जुषाणा अग्नं आज्यस्य व्यन्तु होतर्यज' । (ङ) निरूढपशुबन्धे एकादसी स्वाहाकृती प्रयाजयाज्या— पूर्वोक्तेनैकादशेन प्रयाजप्रैषेण प्रेषितो होता मन्त्रेण निरसनोपवेशने कृत्वा 'अग्निर्होता वेतु' इत्यादि स्रुगादापनं पठित्वा 'सद्यो जातो व्यमिमीत यज्ञं.' इत्येकादशीं स्वाहाकृतीं प्रयाजयाज्यां पठति। द्र० श्रौ०प०नि० पृ० १४६ श्रौ०को० १. भा० पृ० ५७६ । (च) अग्नीषोमीयपशौ एकादशः प्रयाजप्रैषः—पर्यग्निकरणउपप्रैषस्तोकीयानुवचनानन्तरं 'होता यक्षदग्निं स्वाहाज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनाम् । स्वाहा देवा आज्यया जुषाणा । अग्न आज्यस्य व्यन्तु होतर्यज' इति । तत्रैवैतत्प्रेषानन्तरं होता 'ये३यजामहे घृतं मिमिक्षे घृतमस्य' वक्षि हव्यं वौ३ ०वागोजाः' इति स्वाहा कृतीमेकादशीं प्रयाजयाज्यां पठति (तु०—श्रौ०को० २ भा० पृ० २००-२०१) । अत्र विषये १. वसिष्ठशुनकात्रिवध्र्यश्वराजन्येभ्योऽन्येषां द्वितीयः प्रयाजस्तनूनपाद् भवति, वसिष्ठादीनां नराशंसो द्वितीयः प्रयाजः (तु०—आ०श्रौ० १ ।५ । २१-२२ नारायणः) । २. आप्रीसूक्तेषु यत्र पशुप्रयाजेषु देवतानामेकादशसंख्याभ्योऽधिका ऋचः पठितास्तत्र द्वितीयप्रयाजस्य तनूनपान्नराशंसयोर्विकल्पेन प्रयोगादेकादशत्वमुन्नेयम्। अर्थात् एवं यजमानगोत्रानुसारेण 'होता यक्षत्तनूनपातम्' होता यक्षन्नराशंसं०' इति वा द्वितीयः प्रयाजप्रैषो मैत्रावरुणेन पठनीयः । ३. पशौ यजमानगोत्रानुसारेण होत्रा दश प्रयाजयाज्याः तत्तत्प्रैषोत्तरं पठनीयाः । एकादशः प्रयाजप्रैषो मैत्रावरुणेन एकादशी प्रयाजयाज्या च होत्रा यजमानगोत्रानुसारेण आप्रीसूक्तानां प्रत्येकमन्तिमा ऋक् प्रयोक्तव्या । एषा एकादशी प्रयाजयाज्या च वपायागात् पूर्वं यष्टव्या (तु०—श्रौ०को० १ भा० पृ० ५६२; २ भा० पृ० २००-२०१ टि०) ४. तत्तत्प्रैषोत्तरपठनप्रकारस्त्वेवम्—निरूढपशुबन्धे अग्नीषोमीये च समिद्भ्यः प्रेष्य इति मन्त्रेण अध्वर्युर्मैत्रावरुणं प्रेष्यति। तदानीं मैत्रावरुणः प्रयाजप्रैषेः 'होता यक्षदग्निं समिधा.' इत्यादिभिर्होतारं प्रेष्यति। तदाना- मैत्रावरूणः प्रयाजप्रैषैः 'होता यक्षदग्निं समिधा....' इत्यादिभिर्होतारं प्रेष्यति होता आप्रीसूक्तगताः 'समिद्धो अद्य' इत्यादीः प्रयाजयाज्याः पठति। एवमध्वर्युः मैत्रावरुणहोतातरौ परस्परसंनिधौ स्वस्वमन्त्रयागं कुर्याताम् । तदाह— बौधायनः—'यदा जानाति समिद्भ्यः प्रेष्येति तन्मैत्रावरुणः प्रेष्यति—'होता यक्षदग्निं समिधा सुषमिधा समिद्धम्, इति। अथ होता यजति—समिद्धो अद्य मनुष्ये दुरोणे' (ऋ० १० ।११० । १-११) । तावेवमेव व्यतिषङ्गमुत्तरेण मैत्रावरुणः प्रेष्यति उत्तरेणोत्तरेण

होता यजति' (तु०—ऐ० ब्रा० सा० २।४)। ५. पुनराधेयेष्टौ १. 'समिधः समिधोऽग्नेऽग्न आज्यस्य व्यन्तु' (संबोधनम्) तनूनपादग्निमग्न आज्यस्य वेतु, (द्वितीया) ३. इलो अग्निनाऽग्न आज्यस्य व्यन्तु (तृतीया) ४. 'बर्हिरग्निरग्न आज्यस्य वेतु (प्रथमा) इति सविभक्तिकाश्चत्वारः प्रयाजाः। 'नराशंसोऽग्निमग्न आज्यस्य वेतु' नराशंस पक्षे (तु०—आ०श्रौ० २।८।२-४ नारायणः)। तत्रैव च अग्न आयाहि वीतये' (प्र०) (ऋ० ६।१।१०), 'अग्निं दूतं वृणीमहे (द्वि०) (ऋ० १।१।२।१)। 'अग्निनाऽग्निः समिध्यते' (तृ०) (ऋ० १।१२।६), 'अग्निर्वृत्राणि जंघनत्' (प्र०) (ऋ० ६।१६।३४), अग्नेः स्तोमं मनामहे' (ऋ० ५।१३।२) (षष्ठी) 'अग्ना यो मर्तो दुव' (ऋ० ६।१४।१) (सप्तमी) इति विभक्तिसंज्ञकाः (आग्नेय्यः) षड् ऋचः षट् प्रयाजाः प्रष्टव्याः (तु०—श्रौ०को० १. भा० पृ० ३३)। ६. चातुर्मास्यान्तर्गतवरुणप्रघासपर्वणि, सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु च अवभृथेष्टौ 'समिधो अग्न आज्यस्य व्यन्तु (१), तनूनपादग्निमग्न आज्यस्य वेतु (२), इडो अग्न आज्यस्य व्यन्तु (३)' इति त्रीन् प्राकृतान् प्रयाजानेष्ट्वा उपभृदाज्यग्रहणनियुक्तप्राकृतमन्त्रेण जुह्वां चतुर्गृहीतेन पञ्चमं स्वाहाकृतिं प्रयाजं यजतीति चत्वारः प्रयाजाः भवन्ति। न बर्हिष्मन्तौ प्रयाजानुयाजौ' (आ०श्रौ० २।१९।१२) इत्याश्वलायनसूत्राद् बर्हिष्मान् चतुर्थः प्रयाजो न भवति (तु०—श्रौ०प०नि० पृ० ९६। अप बर्हिषः प्रयाजान् यजति ज्योतिष्टोमे अवभृथे। **द्र०** मी०को० पृ० २७७८। प्रयाजा उपसत्सु नैव सन्ति 'अप्रयाजास्ता अननुयाजा इति। **द्र०** मी०को० पृ० २७७८। इति विशेषोऽनुसंधेयः।

**प्रयाजवृद्धौ पञ्चमधर्मता—** (हौ०) इष्टिपशुसोमेषु यत्र चातुर्मास्यनिरूढपशुबन्धअग्नीषोमीयादिषु विकृतिषु प्रकृतिसंख्यातो (दर्शपूर्णमासगतपञ्चसंख्यातो)ऽधिकासंख्याकाः नवैकादशरूपा विहिताऽस्ति तत्र आगन्तूनां प्राकृतसंख्यातोऽधिकानां विकृतिमात्रविहितानां सर्वेषां प्रयाजानां अन्तिमप्रयाजधर्मेण सह संबन्धः कार्यः। अतो नव प्रयाजपक्षे एकादशप्रयाजपक्षे च चतुरः प्रयाजान् प्रकृतिवदिष्ट्वा शेषेषु प्रयाजेषु 'पञ्च मम' इत्येवानुमन्त्रणं भवति (तु०—का०श्रौ० ३। ३।६;८ विद्याधरः।

**प्रयाजशेषाभिघारण —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे अन्यत्र चातुर्मास्यनिरूढपशुबन्धाग्नीषोमीयादिषु च १. अध्वर्युः प्रयाजैरिष्ट्वा उदङ्ङ्त्याक्रम्यजुहूस्थाज्यशेषेण ध्रुवामभिघार्य क्रमेण हवींष्याभिघार्य उपभृतमभिघारयति। तदेतत् प्रयाजशेषाभिघारणमुच्यते। **द्र०** श्रौ०प०नि० पृ० ३१। प्रयाजशेषेण हविरभिघारणं हविःषु शेषस्य क्षारणं) प्रतिपत्तिश्च हविः संस्कारश्चेति उपयुक्तोपयोक्ष्यमाणोभयसंस्कारः। **द्र०** मी०को० पृ० २७८६। इति विशेषोऽवधेयः।

**प्रयाजानां नवत्वक्लृप्ति—**(हौ०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्य प्रकरणे नवसु प्रयाजेषु आद्याश्चत्वारः प्राकृताः (दार्शपौर्णमासिकाः) उत्तराश्चत्वारः दुरादयोऽपूर्वाः, नवमः स्वाहाकारः तत्तद्देवतासंकीर्तनपरः। इति नव प्रयाजाः। **द्र०** प्रयाज—।

**प्रयाजानां प्रकृतावनुष्ठानप्रकार—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे अनृग्रूपान् प्राकृतान् पञ्च प्रयाजान् प्राचो यजति प्रतिदिशं वा । समिधः पुरस्तात्, तनूनपातं दक्षिणतः, इडां पश्चात्, बर्हिरुत्तरतः, स्वाहाकारं मध्ये अनुतिष्ठेत् (तु०—ऐ० ब्रा० सा० १ ।२) ।

**प्रयाजानामेकादशत्वक्लृप्ति—**(हौ०, सा०) पशुयज्ञेषु (निरूढपशुबन्धाग्नीषोमीयादिषु) समिधः, तनूनपात्, नराशंसः, इलः, बर्हिः, दुरः, उषासानक्ता, दैव्या होताश्व; तिस्रो देव्यः इति संज्ञया अष्टौ ऐष्टिका (चातुर्मास्याः) एव ऋग्रूपाः, त्वष्टृवनस्पत्यभिधौ नवमदशमौ अपूर्वौ ऋग्रूपौ, अन्तिमः स्वाहाकारः एकादशः । इति संज्ञाभिर्देवताभिर्वा तनूनपान्नराशंसयोर्विकल्पेनैकत्वाच्च प्रयाजानामेकादशत्वम् ।

**प्रयाजानुमन्त्रण —** (हौ०, याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पञ्चसु प्रयाजेषु प्रथमे प्रयाजे होत्रा 'ये३ यजामहे समिधः समिधो अग्न आज्यस्य व्यन्तू ३ वौ३षट्' इति वषट् कृते यजमानः 'वागोजः सह ओजो मयि प्राणापानौ' इति प्रयाजयागमनुमन्त्रयते । एवमेव द्वितीये तृतीये चतुर्थे पञ्चमे च प्रयाजे 'ये३... व्यन्तू ३, वेतू ३ इत्येषामन्ते वषट्कारानन्तरमनुमन्त्रयते । तदेतत्प्रयाजानुमन्त्रणमुच्यते । (तु०—आ०श्रौ० १ ।५ ।१५-२४) ।

**प्रयाजानुमन्त्रण—** (आध्व०, याज०) इष्टियज्ञेषु प्रकृतिभूते...प्रकरणे पञ्चसु प्रयाजेषु प्रथमे इष्टे यजमानः प्रथमं 'एको ममैका तस्य योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इत्यनुमन्त्रणमन्त्रं पठेत् । एवं द्वितीय तृतीयचतुर्थ प्रयाजेषु इष्टेषु क्रमेण 'द्वौ मम द्वे तस्य योऽस्मा० द्विष्मः, त्रयो मम तिस्र स्तस्य यो० द्विष्मः, चत्वारो मम चतस्रस्तस्य यो० द्विष्मः' इत्यादिकमनुमन्त्रणं कुर्यात् । पञ्चमे प्रयाजे इष्टे 'पञ्च मम न तस्य किञ्चन यो. द्विष्मः' इति मन्त्रं ब्रूयात् । ततः पुनः पञ्चसु प्रयाजेषु 'एको मम. द्विष्मः त्विषिमान् भूयासम्, द्वौ मम... द्विष्मः अपरिचितिमान् भूयासम्, त्रयो मम....द्विष्मः यशस्वी भूयासम्' चत्वारो मम० द्विष्मः ब्रह्मवर्चसी भूयासम्, पञ्च मम० द्विष्मः अन्नादो भूयासम्' इत्यनुमन्त्रणद्वयं कुर्यात् (तु०— का०श्रौ० ३ ।३ ।२-५ विद्याधरः) । तैत्तिरीयेषु काठ० सं० पञ्चसु प्रयाजेषु यथासंख्यं 'वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु । वसन्तस्याहं देवयज्ययोर्जस्वान् पयस्वान् भूयासम् ॥ ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु । ग्रीष्मस्याहं देवयज्यया यौजस्वान्भूयासम् ॥ वर्षा ऋतूनां प्रीणामि ताः मा प्रीताः प्रीणन्तु । वर्षाणामहं देवयज्यया पुष्टिमान् पशुमान् भूयासम् ॥ शरदमृतूनां प्रीणामि स्य मा प्रीता प्रीणातु । शरदोऽहं देवयज्ययाऽन्नवान् वर्चस्वान् भूयासम् ॥ हेमन्तमृतूनां प्रीणामि स मा प्रीतः । हेमन्तस्याहं देवयज्यया सहस्वान् वीर्यवान् भूयासम् ॥ द्र० श्रौ०को० १. भा० पृ० २०४-६ । तत्र शाखाभेदेन आम्नातानां प्रयाजाद्यनुमन्त्रणानां 'एको ममैका तस्य' इत्यादीनां 'वसन्तमृतूनाम्' इत्यादीनां समुच्चयः सिद्धो द्रष्टव्यः इति विशेषोऽवधेयः । द्र० मी०को० पृ० २७७९-८० ।

**प्रयाजानुयाजदेवताऽऽवाहन—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीयेदर्शपूर्णमासप्रकरणे अन्यत्र पशुसोमेषु च 'देवा आज्ययाँ आवह' इति प्रयाजानुयाजदेवानामावाहनमुच्यते । आज्ययाः प्रयाजानुयाजदेवताः ।

(तु०—आ०श्रौ० १ ।३ ।२२ षड्गुरुशिष्यः नारायणश्च) ।

**प्रयोग—** (सा०) इष्टिपशुसोमयज्ञे, प्रकृतिविकृतिभूतेषु १. प्रयोगः ऋग्यजुर्मन्त्राणां यज्ञकर्मणि तानस्वरेण भवति । तानः एकश्रुतिः । २. प्रयोगः अङ्गप्रधान (कर्म) साधारणः । द्र० मी०को० पृ० २७९१ । द्र० प्रयोगविधि- ।

**प्रयोगधर्म—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. अथाप्येष प्रयोगाणां धर्मो-येन प्रक्रमस्तेन समाप्तिः (नि०सू० २ ।८ ।७) । २. येनोपक्रमः स्यात्तेनान्तं गच्छेदेष प्रयोगाणां धर्मः । एकेनैव समाम्नायेन प्रारब्धं कर्म समापयेत् । एकस्मिन् यज्ञे किञ्चित् कर्म एकेन (शाकलकेन) कृत्वा पुनः किञ्चित् अन्येन (वाष्कलकेन) कुर्यात् = समापयेद् वेति प्रयोगेषु न क्रियते इति संप्रदायः ।

**प्रयोगविधि—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. साङ्गप्रधानकर्मप्रयोगैक्यबोधकः उत्पत्ति-अधिकार-विनियोग-विधित्रयमेलनरूपः प्रयोगविधिरित्युच्यते । तं च श्रौत्र इत्येके काल्प इत्यपरे आहुः । २. पदार्थान्तराऽव्यवधानेन अविलम्बेन साङ्गप्रधानानुष्ठानबोधको विधिः प्रयोगविधिरुच्यते (तु०—का०श्रौ० १ ।७ ।२ टि० विद्याधरः) । ३.प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरुच्यते । स च अङ्गवाक्यैकताऽऽपन्नः प्रधानविधिरेव । तेन सकलाङ्गानां क्रमबोधको विधिः । क्रमश्च विततिविशेषः पौर्वापर्यस्वरूपो वा । प्रयोगविधौ क्रमबाधकानि प्रमाणानिश्रुतिअर्थ-पाठस्थानमुख्यप्रवृत्त्याख्यानि षट् प्रमाणानि भवन्ति । तत्र क्रमपरवचनं श्रुतिः । प्रबोजनवशेन क्रमनिर्णयः अर्थक्रमः । पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः । स्थानं नामोपस्थितिः । प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमोऽभिधीयते । इत्यर्थोऽवधेयः । द्र० विधि— ।४. प्रयोगविधिना यथा श्रुतिलिङ्गादिभिर्विनियुक्ताः पदार्थाः विधीयन्ते तथा श्रुत्यर्थादिभिर्विनियुक्तत्वात् क्रमोऽपि प्रयोगविधिना विधीयते । द्र० मी०को० पृ० २८०० । श्रुतिलिङ्गादयस्तु श्रुतिलिङ्गवाक्यप्रकरण-स्थानसमाख्यारूपाणि धर्माङ्गबोधकानि षट् प्रमाणानि । द्र० मी०को० पृ० २७७२ ।

**प्रवर—** (सा०) इष्टियज्ञेषु प्रकृतिभूते दर्शपूर्णमास-प्रकरणे— १. सामिधेन्यनुवचनानन्तरं होतृकर्तृकं प्रवरवरणं विहितम् । तत्र प्रवरोनाम आश्वलायनादिभिः प्रवराध्याये यत्र गोत्रस्य यावन्तः प्रकर्षेण वरा ऋषयः संबुद्ध्यन्त तद्धितपदेन उक्तास्ते प्रवराः । यथा 'शाण्डिलानां शाण्डिलाऽसित दैवल' इति । श्रौ०प०नि० पृ० २५ । २. ऋषेरिदमार्षं प्रवरः । गोत्रप्रवर्तकस्य मुनेर्व्यावर्तक-मुनिगण इत्यर्थः । इति पराशरमाधवः । ३. आपस्तम्बादिभिः प्रवराध्याये यत्र गोत्रस्य यावन्तः प्रकर्षेण वरा ऋषयः तद्धितविनिर्मुक्तावत् शब्दान्ता उक्तास्ते प्रवराः । यथा 'शाण्डिलवद् असितवत् देवलवत्' इति । ४. गोत्रं तु वंशपरंपरा प्रसिद्धम् । (तु०—पराशरमाधव १. म भा० द्वि० खण्ड पृ० ७१) । ५. 'ऋषिगोत्रप्रवरान् व्याख्यास्याम । विश्वामित्रजमदग्नि भरद्वाजगौतमात्रि-वसिष्ठकश्यपानां सप्तर्षीणामगस्त्यस्यापि यदपत्यं गोत्रम्', तस्मिन् गोत्रे वराणामृषीणां प्रवराणां प्रवरः । प्रवरकाले यजमानस्य प्रवरं यथोक्तं होता अध्वर्युश्च शंसति (वै०ध० १ ।११ पृ० ४०) । गोत्रभेदेऽपि प्रवरैक्य-मस्ति । यथा यास्कवाधूलमौनामौकानां गोत्रभेदेऽपि भार्गव वैतहव्य सावेतस इति

प्रवरैक्यम् (तु०— मदनपारिजात १. भा० पृ० १३८)। समानगोत्रत्वम् एक एव ऋषिर्यावत् प्रवरेष्वनुवर्तते तावत् समानगोत्रत्वम् ऋतेभृग्वङ्गिरोगणात्। (तत्रैव पृ० १३७)। समानगोत्रत्वं समानप्रवरत्वमित्यर्थ:।

**प्रवरक्रम—** (सा०) इष्टिपशु सोमयज्ञेषु प्रकृतिविकृतिभूतेषु आर्षेयवरणे पूर्वो होतु: प्रवर उत्तर: अध्वर्यो (तु०—मी०को० पृ० २८१०)। अत एव 'ऊर्ध्वानध्वर्युर्वच्छब्दात्' इत्यादिना अध्वर्युप्रवरेषु तद्धितविनिर्मुक्तप्रातिपदिकानां वच्छब्दान्तानां प्रातिलोम्येन पाठविधानात् होतृप्रवरेषु नियतानुपूर्वीसिद्धि: (उक्ता)। द्र० मी०को० पृ० १००५।

**प्रवरण—** (हौ०, आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. आर्षेयवरणे संबुद्ध्यन्तानां तद्धितपदानां तद्धितविनिर्मुक्तवच्छब्दवतां प्रातिपदिकानां च प्रकर्षेण वराणामृषीणामुच्चारणं प्रवरणमित्युच्यते। २. ऋषिर्गोत्रप्रवर्तक: कश्यपभरद्वाजादि:, तस्य संबन्ध आर्षेय:, तं वृणीते कथयति उच्चारयति। 'कश्यपगोत्रोऽहं, भरद्वाजगोत्रोऽहं' इति तदुच्चारणम्। ३. 'आर्षेयं वृणीते' इति यजमानपूर्वजा एव ऋषय:। तत्र 'ऋत्विजो वृणीते' इति वरणसंस्कृतस्य ऋत्विजो विशेषणमार्षेयपदं ऋषिपदस्य (अर्थ:)। ४. 'आर्षेयाणां नामानि अपत्यप्रत्ययान्तानि संबुद्ध्यन्तानि' इत्यत्र न केवलं प्रवरर्षीणां नामामात्रस्य भृगुवसिष्ठेत्यादिरूपस्य कथनमात्रेण विधि: किन्तु सामिधेनीनामुत्तमेन (अन्त्येन) प्रणवेन 'अग्ने महाँ असि ब्राह्मण भारत' इति निगदं संधाय यजमानस्याऽऽर्षेयान् प्रवृणीते यावन्तस्तेऽस्य भवन्ति। अयं पर: अयमपर: इत्यार्षेययोजनेन यजमानाऽऽहवनीययो: पितापुत्रभावसंबन्धेनाग्ने: स्तवनमपि कुर्यात् (तु०— आ०श्रौ० १।२।२७; ३,१-२ नारायण:; मी०को० पृ० १०.४-५)। ५. वषट् कर्तृप्रवरणं प्रवृतहोमकर्तृवरणे द्रष्टव्यम्।

**प्रवर्ग्य—** (सा० अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तस्य द्वितीये तृतीये वा प्रयोगे अन्यत्र प्रवर्ग्यवत्सु प्रवर्ग्यशब्द: पूर्वशान्तिपाठप्रवर्ग्यसामग्रीसंपादनादिअन्तिमप्रवर्ग्यसंबन्धिशालामुखीयोपस्थानान्तकर्मविशेषवचन उच्यते। द्र० श्रौ० प०नि० पृ० २१३-२३९। २. यस्मिन् कर्मणि प्रवृञ्जनं स प्रवर्ग्य:। प्रवृञ्जनं च तप्ते घृते पय: प्रक्षेप:। द्र० मी०को० पृ० २८११। ३. अग्निष्टोमस्य प्रथमप्रयोगे प्रतिषेधात् द्वितीये तृतीये वा प्रयोगे प्रवर्ग्यो भवति। तदुक्तम्—'न प्रथमयज्ञे प्रवृञ्ज्यात् द्वितीये तृतीये वा प्रवृञ्ज्यात्' इति। द्र० मी०को० पृ० २८१४। तत्र पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति (मी०को० पृ० २८१)। इति स च अनूचानव्यतिरिक्तकर्तृके अग्निष्टोम प्रथमप्रयोगे एव स्यात्, कुत: 'कामं योऽनूचान: श्रोत्रिय: स्यात् तस्य प्रवृञ्ज्यात्' इति वचनात् प्रथमप्रयोगे प्रवर्ग्य: स्यात् (मी०को० पृ० २८११)। अनूचानो वेदाध्यापको ब्राह्मण:, श्रौत्रिय: वेदतदर्थज्ञ:)। तथा च अग्निष्टोमप्रथमप्रयोगे अनूचानस्य नित्यं प्रयोग: अन्येषां नित्यमप्रयोग: इति विकल्पोऽप्यवगम्यते इति विशेषोऽनुसंधेय:। द्र० मी०को० पृ० २८१७।

**प्रवर्ग्यपात्र-संभारप्रोक्षण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्रप्रवर्ग्यवत्सु च ब्रह्मणा 'भूर्भुव: स्वर्वृ-

हस्पतिप्रसूत' इति जपित्वा प्रचरत' इत्याज्ञप्तोऽध्वर्युः प्रचरणीयं महावीरं (पात्रं) वेदमपास्व प्रोक्षति—'यमाय त्वा सर्यस्य हरसे' इति। अभिप्राप्नुवन् परान् संभारान् प्रोक्षति। अध्वर्युः प्रोक्षितं पात्रं स्थानान्तरे सादयति। इदं प्रवर्ग्यपात्रसंभारप्रोक्षणमित्युच्यते। द्र० श्रौ०प०नि० पृ० २१५।

**प्रवर्ग्यपात्राच्छादन**— द्र० घर्मपात्राच्छादन—।

**प्रवर्ग्यपात्रासादन**—(आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च त्रिषूपसद्दिनेषु प्रत्यहं सायं प्रातः प्रागुपसदः प्रवर्ग्यं चरन्ति। तत्र पूर्वं द्वारापिधानं ततः शान्तिकरणं ततश्च पात्रासादनं करोति। पूर्वेण गार्हपत्यं प्रागग्रान् कुशानास्तीर्य तेषु द्विशः पात्राण्यासादयति-उपयमनीं महावीरम्, द्वौ परीणासौ (सन्दंशाकारावौन्दुम्बरौ), द्वे पिन्वने दोहनपात्रे), द्वे रौहिणपुरोडाशकपाले, द्वे रौहिणहवन्यौ) (रौहिणपुरोडाशहोमार्थे स्रुचौ), स्थूणां मयूखं च, द्वे धृष्टी (उपवेषौ), रजतशतमानं सुवर्णशतमानम्, स्रुवं वेदं (मुञ्जमयं), धवित्राणि (व्यंजनाः) परिधीन्, द्वे रुज्जू संदानम्, आसन्दीं (राजासन्दीं, कृष्णाजिम्, अभ्रिं सिकताः, इति त्रयोदश द्वन्द्वानि। प्रयोजनवन्ति चान्यानि-स्फ्यं पवित्रच्छेदनानि, पवित्रे, अग्निहोत्रहवणीम्, आज्यस्थालीम्, प्रभूतमाज्यम्, शूर्पम्, पात्रीम्, पिष्टम्, उपसर्जनीपात्रम्, उपशयाम्, इतरौ महावीरौ, होतृषदनम्, मौञ्जं कूर्चम्, औदुम्बरीं समिधम्, इत्येतान्यासादयति। इति सादनमित्युच्यते। (तु०— का०श्रौ० २६।२।९-२४ विद्याधरः)।

**प्रवर्ग्यपात्रोत्सादन**— द्र० प्रवर्ग्योत्सादन—।

**प्रवर्ग्यपूर्वशान्ति**— द्र० पूर्वशान्ति—।

**प्रवर्ग्यप्रायश्चित्ताहुतिमन्त्र**—(आध्व०, प्राय०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च वेदिमध्ये प्राग्बिलमुपयमनं निधाय तस्मिन् सौवर्णराजतौ रुक्मौ मदन्तीश्चानीय 'हिरण्यवर्णाः शुचयः पावकाः' इति चतसृभिर्त्र्गन्ते मार्जयित्वाऽपस्तत्रैव निनीयाऽऽज्यस्थाल्याः स्रुवेणोपहत्य प्रतिमन्त्रं प्रायश्चित्ताहुतीर्जुहोति —'प्राणाय स्वाहा। व्यानाय स्वाहा। अपानाय स्वाहा। चक्षुषे स्वाहा। श्रोत्राय स्वाहा। मनसे स्वाहा। वाचे सरस्वत्यै स्वाहा। पूष्णे स्वाहा। पूष्णे शिरसे स्वाहा। पूष्णे प्रपथ्याय स्वाहा। पूष्णे नरन्धिषाय स्वाहा। पूष्णे घृणये स्वाहा। पूष्णेऽनरुणाय स्वाहा। पूष्णे साकेताय स्वाहा। नमस्ते घर्म भूपतये स्वाहा। नमस्ते घर्मभुवनपतये स्वाहा। नमस्ते घर्मभूतानां पतये स्वाहा। घर्माय स्वाहा। अश्विभ्यां स्वाहा। इन्द्राय स्वाहा। बृहस्पतये स्वाहा। प्रजापतये स्वाहा। ब्रह्मणे स्वाहा। इति प्रवर्ग्यप्रायश्चित्ताहुतिमन्त्राः। यथालिङ्गं त्यागो यजमानस्येति। तत्र प्रायश्चित्ताहुतीभ्यः पूर्वं घर्मभक्षणानन्तरमुच्छिष्टखरे (यजमानः) आचामति आग्नीध्र उच्छिष्टखरे उपयमनं प्रक्षाल्याहरति। अध्वर्युस्तदादायाहवनीये निष्टप्याऽद्भिः पूरयित्वोदग्दिशि किञ्चिज्जलं प्रक्षिपति—'सप्तर्षीन् श्रीणीहि सप्तर्षीन् जिन्व सप्तर्षिभ्यः स्वाहा' इति। सप्तर्षिभ्य इदं न ममेति याजमानम्। जघनेन गार्हपत्यं प्रक्षिपति—'इदमहमग्नौ वैश्वानरेऽमृतं जुहोमि स्वाहा' इति। अग्नये वैश्वानरायेदं न ममेति याजमानम्। अन्तर्वेदि प्रक्षिपति—'अक्षित्यामक्षिताहुतिं जुहोमि स्वाहा।' अक्षित्या इदं न ममेति यजमानः। पूर्ववदग्नीन् परि-

षिञ्चति इति विशेषोऽवधेय:। द्र० घर्मभक्षण—, श्रौ०प०नि० पृ० २२७।

**प्रवर्ग्यप्रैष—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम संस्थायामग्निष्टोमे स प्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च 'होतरभिष्टुहि (तु०—ऐ० ब्रा० १।१८)। इति प्रवर्ग्यप्रैषमन्त्र उच्यते। द्र० प्रवर्ग्यारम्भप्रैष—।

**प्रवर्ग्यभक्षमन्त्र—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च हुतं हविर्मधुहवि... (तु०—ऐ० ब्रा० १।२२)। इति प्रवर्ग्यभक्षमन्त्र उच्यते। द्र० घर्मभक्षण—।

**प्रवर्ग्यसम्भरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च प्रवर्ग्यपूर्वशान्तिप्रभृत्युत्तरशान्तिपर्यन्तं महावीरादिसम्पादनं प्रवर्ग्यसम्भरणमुच्यते। द्र० श्रौ०प०नि० पृ० १८९-१९४।

**प्रवर्ग्यसामग्रीसंपादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च अध्वर्यु: गार्हपत्यस्य पुरस्तादास्तीर्णेषु दर्भेषु सम्राडासन्दीं स्थूणं गोदोहनीं छागायै शङ्कुशफोपयमनं स्रुचं रौहिणहवन्यौ, द्वे धृष्टी त्रीणि धवित्राणि षट् शकलानि (एतान्यौदुम्बराणि) वैकङ्कतीं समिधं त्रयोदशवैकङ्कतान् परिधीन् वैकङ्कतीं प्रचरणीं काष्मर्यमान् परिधीन् सौवर्णराजतौ रुक्मौ द्वे घर्मदुग्धे धेनुं च छागां च बहि: स्थापयित्वा द्वौ कुशमयौ वेदो एकं मौञ्जमपरिवासितं मौञ्जरज्जुदाम मुञ्जप्रलवान् रौहिणपिष्टानि सिकताश्चासाद्य गार्हपत्याहवनीययोरुत्तरत: स्फ्येनाद् वृत्यावोक्ष्य सिकताभि: प्रादेशपरिमितौ परिमण्डलौ खरौ कृत्वा शालाया उत्तरे खण्डे तथैव चतुरस्रमुदङ्निष्यन्दनवन्तमुच्छिष्टखरं कृत्वा प्रचरणीयं महावीरं शफाभ्यां परिगृह्य प्रवृञ्जनीये खरे सादयित्वा मौञ्जेन वेदेनापिधाय आहवनीयस्य दक्षिणत: सम्राडासन्ध्यां कृष्णाजिने प्राग्विलौ उपशयौ महावीरौ वेदाभ्यां परिगृह्यासाद्य अतिशिष्टां मृदं चासाद्य स्थूणां शङ्कुं चादाय जघनेन गार्हपत्यं परीत्य दक्षिणया द्वारोपनिष्क्रम्य होतृदृष्टिगोचरदेशे गोवत्सबन्धनार्थं स्थूणां निहत्य मौञ्जेन दाम्ना घर्मदुधाया गोर्वत्सं तत्र बद्ध्वा तदुत्तरत: शङ्कुं निहत्य तत्र छागां बद्ध्वा छागाया: शिशुं कटादिना प्रच्छाद्य प्रवर्ग्यकतृन् संबुद्ध्यन्तेन एहिपदोत्तरेण यज्ञियेन नाम्नाऽऽहूय शालायाश्चत्वार्यपि पि द्वाराणि वस्त्रादिना परिश्रित्य पत्नीशाले पत्नीमुपवेश्य तस्यापि द्वारं परिश्रित्याग्नीन् दर्भै: परिस्तीर्य गार्हपत्यस्य दक्षिणतो ब्रह्मयजमानावुपवेश्य सपवित्रायां प्रचरण्यां मदन्तीरप आनीयोत्पूय प्रचरणीमादत्ते। तदिदं सम्राडासन्धासादनप्रभृति प्रचरणीग्रहणान्तं कर्म प्रवर्ग्यसामग्रीसंपादनमुच्यते। तत्र सामग्रीसंपादनात् पूर्वं यजमानशासनानन्तरमध्वर्यु-ब्रह्म-प्रतिप्रस्थात्रग्नीत्प्रस्तोतृ होतृयजमाना: मदन्तीजलं स्पृष्ट्वा 'नमो वाचे' इत्यादि शान्तिं जपन्तीति विशेषोऽवधेय:। श्रौ०प०नि० पृ० २१३-१४, प्रवर्ग्यपात्रासदन—।

**प्रवर्ग्यसामन्—** द्र० अग्निष्टोमीयप्रस्तोतृसामन्—।

**प्रवर्ग्याङ्गगार्हपत्योपस्थान—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये

अन्यत्र प्रवर्ग्यवत्सु च सर्वकर्तृकघर्मोपस्थानानन्तरं यजमानो गार्हपत्यमुपतिष्ठते 'त्वमग्ने गृहपतिर्विशामसि। विश्वासां मानुषीणाम्। शतं पूर्भिर्यविष्ठ पाह्यंहसः समेद्धारँ शतँ हिमाः। तं द्रविणँ हार्दिवानम्। इहैव रातयः सन्तु।' तदिदं प्रवर्ग्याङ्गगार्हपत्योपस्थानमुच्यते। द्र० घर्मोपस्थान-, श्रौ०प०नि० पृ० २२०।

**प्रवर्ग्याभिष्टवन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र च प्रवर्ग्यवत्सु प्रवर्ग्याभिष्टवनं नाम घर्मस्य संस्कारोऽभिधानरूप उच्यते (तु०—आ०श्रौ० ४।६।३ नारायणः) अभिष्टवनं पूर्वोत्तरभेदेन द्विविधं भवति। द्र० प्रवर्ग्येऽभिष्टवनी—।

**प्रवर्ग्याभिष्टवनविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च अध्वर्यादिषु प्रवर्ग्येण चरिष्यत्सु होता तीर्थेन प्रपद्य खरमुत्तरेण प्रव्रज्यतस्य पश्चादुपविश्य ततः प्रेषितः सन्नभिष्टुयाद् ऋगावान प्रणुत्यावस्येत् (तु०—आ०श्रौ० ४।६।१।२ नारायणः) द्र० ऋगावान—।

**प्रवर्ग्यारम्भप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च सपवित्रायां प्रचरण्यां मदन्तीरप आनीयोत्पूपाददान आह—'ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः, होतुर्घर्ममभिष्टुहि, अग्नीद् रौहिणौ पुरोडाशावधिश्रय, प्रतिप्रस्थातः प्रवर्ग्यं विहर, प्रस्तोतः सामानि गाय' सोऽयं प्रवर्ग्यारम्भप्रैषः उच्यते (तु०—ऐ० ब्रा० १।१८, श्रौ०प०नि० पृ० २१५।

**प्रवर्ग्यारम्भहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च रौहिणपुरोडाशासादनानन्तरमध्वर्युः प्रचरणीयं महावीरं शफाभ्यां सव्यहस्ते गृहीत्वा आज्यस्थाल्याः सकाशात् सकृदाज्यं स्रुवेण गृहीत्वाऽनवानं सन्तताः सप्ताहुतीर्गार्हपत्ये जुहोति—'प्राणाय स्वाहा, व्यानाय स्वाहा, अपानाय स्वाहा, चक्षुषे स्वाहा, श्रोत्राय स्वाहा, मनसे स्वाहा, वाचे सरस्वत्यै स्वाहा', इति मन्त्रैः। ततश्चतस्र आहुतीः पुनः पुनराज्यमादाय जुहोति—'दक्षाय स्वाहा, क्रतवे स्वाहा, ओजसे स्वाहा, बलाय स्वाहा' इति मन्त्रैः। सर्वत्र यथालिंगप्राणायेदं न ममेत्यादिरूपो यजमानस्य त्यागः सोऽयं प्रवर्ग्यारम्भहोम उच्यते। इति द्र० रौहिणपुरोडाशासादन—द्र० श्रौ०प०नि० पृ० २१६ द्र०।

**प्रवर्ग्येऽध्वर्युप्रतिप्रस्थात्रोरनुज्ञापनमन्त्र—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च 'ब्रह्मन् प्रवर्ग्येण प्रचरिष्यामः' इति प्रवर्ग्यार्थम ध्वर्युमप्रतिप्रस्थात्रोरनुज्ञापनमन्त्रः (तु०— ऐ० ब्रा० सा० १।१८)।

**प्रवर्ग्येऽभिष्टवनीयहार्गण—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च अभिष्टवस्य पूर्वं पटलम् (ऐ० ब्रा० १।१९-२१; आ०श्रौ० ४।६।३)। अभिष्टवस्योत्तरं पटलम् इति पूर्वोत्तरपटलाभ्यामाश्वलायनेन पठिता ऋच प्रवर्ग्ये अभिष्टवनीया ऋच ऋचां गणः उच्यते। (तु०— ऐ० ब्रा० १।२२; आ०श्रौ० ४।७।१-७)। द्र०।

**प्रवर्ग्ये यजमानवाचन-प्रवर्ग्याभिष्टवन—** द्र० यजमानवाचन— ।

**प्रवर्ग्योत्तरप्रथमाहुतिहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च 'विद्युदसि विद्य मे पाप्मानम्' इत्यप उपस्पृशति। ततः प्रथमामाहुतिं जुहोति—'भूः स्वाहा' इति । अग्नय इदं न ममेति याजमानम् । आपराह्णिके तु प्रवर्ग्ये अपी परो माऽह्नोरात्रियै सा पाह्येषा ते अग्ने समित्तया समिध्यस्वायुर्मेऽदा वर्चसा माञ्जीः' इति मन्त्रेण समिदाधानम् । समिदभिमर्शनं पूर्ववत् । 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' इति प्रथमाहुतिः । त्यागः पूर्ववत् इति विशेषः । द्वितीयादिदिनेषु पौर्वाह्णिके तु 'अपीपरो मा रात्रिया अह्नो मा. माञ्जीः' इति समिदाधानम् । अभिमर्शनमन्त्रौ पूर्वोक्तौ । 'सूर्यो ज्योतिर्ज्योतिः सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति होममन्त्रः । सूर्यायेदं न ममेति याजमानम् । इति विशेषः । सोऽयं प्रवर्ग्योत्तरप्रथमाहुतिहोम इत्युच्यते । द्र० श्रौ०प०नि० पृ० २२५-२६ ।

**प्रवर्ग्योत्तरशान्तिपाठ—**(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम संस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च पदं त्रेधा विभज्य 'नमो वाच' इति शान्तिं पठन्तीति । सोऽयं प्रवर्ग्योत्तरशान्तिपाठ उच्यते । द्र० श्रौ०प०नि० पृ० २३४ ।

**प्रवर्ग्योत्तरसमिदाधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र च प्रवर्ग्यवत्सु च उपसादनाङ्गजपान्तरं पुनः प्राङाद्रुत्य 'नमः ईशानाय' इत्यादि मन्त्रेणाहवनीयस्य आदधाति । 'तया देवतयाङ्गिरस्वद् ध्रुवासीद्' इत्यनेन यजुषा 'ता अस्य सूददोहसः' इत्यृचा च तां समिधमभिमृशतीतीदं प्रवर्ग्योत्तरसमिदाधानमुच्यते । द्र० श्रौ०प०नि० पृ० २२५ ।

**प्रवर्ग्योत्सादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च उपसत्समासान्ते शालाकत्रयहोमानन्तरं अवभृथवत् सामगानप्रैषेण प्रस्तोतारं उत्सादनदेशेऽध्वर्युः प्रेष्येत् निधनान्ते सर्वे उत्सादनदेशं गच्छन्ति । (उत्सादनं महावीरादीनां परित्यागः) । तमुत्सादनदेशं 'अचिक्रदत्' (मा०सं० ३८ ।२२) इति त्रिः परिषिच्य उत्सादनदेशे उत्तरवेदौ महावीरादीनि पात्राणि उत्सादयन्ति परिक्षिपन्ति त्यजन्ति वा । तत्र प्रथममुत्तरवेदिनाभेः पुरस्तात् 'चतुः स्रक्तिः' (मा०सं० ३७ ।,२०) । इत्यनेन नाभिपृष्टं महावीरमासादयेत् । तस्मात् प्राक्संस्थौ द्वितीयतृतीयौ महावीरौ पूर्वमन्त्राऽऽवृत्त्या निदध्यात् । उपशयां मृदं महावीराणां पुरस्तात् तूष्णीं निदध्यात् । ततः तूष्णीं परीशासौ महावीरावभितः स्थापयेत् परीशासाभ्यां बहिः प्रदेशे रौहिणहवन्यौ किञ्चित् पश्चादधोभागे स्थापयेत् । रौहिणहवन्यावुत्तरतोऽभ्रिं सादयेत् । रौहिणहवन्योर्दक्षिणतः सम्राडासन्दीं सादयेत् । अभ्रेरुत्तरतः कृष्णाजिनम्, आसादितपात्राणां दक्षिणतः पश्चादुत्तरतश्चैकैकं धवित्राणि, धवित्रवत् परिधींश्चासादयेत् । उपयमन्यां स्रुचि रज्जुसंदानं वेदं च निधाय आसादितपात्रगणस्य पश्चात् तां प्रागग्रां निदध्यात् । उपयमनीमुखस्य पश्चाद्भागे दीक्षादण्डमभितः पिन्वने स्थापयेत् । पिन्वनयोः दक्षिणतः स्थूणामुत्तरतश्च मयूखं स्थापयेत् । स्थूणामयूखयोः पश्चात् रौहिणकपाले । रौहिणकपालयोः पश्चाद् धृष्टी (उपवेषौ) च

स्थापयेत्। अन्यद् घर्मोपयुक्तं स्रुवमौञ्जादि आसादितपात्राणां मध्ये स्थापयेत्। सर्वपात्राणामुत्तरतः प्रचरणीयौ खरावासादयेत्। मार्जालीयधिष्ण्यस्य दक्षिणतः वेदेर्बहिर्भागे उच्छिष्टखरमासादयेत्। इत्येवं क्रमेणैतेषां प्रवर्ग्यपात्राणामुत्तरवेद्यां प्रक्षेपः सादनं स्थापनं त्यागः प्रवर्ग्योत्सादनाख्यमुच्यते कर्मो तत्र महावीरत्रयं, द्वे पिन्वने, उपयमनी, स्रुवः, एतानि सप्त गर्तसंयुक्तानि पात्राणि पयसा 'घर्मैतत्ते' इति मन्त्रावृत्त्या पूरयेत्। प्रवर्ग्योत्सादनववशिष्टं पयो व्रतमिश्रं दीक्षिताय दद्यात्। इति विशेषोऽवधेयः। (तु०— का०श्रौ० २।६।२७, १-३४ विद्याधरः)।

**प्रवर्ग्योद्वासन—** द्र० प्रवर्ग्योत्सादन—। श्रौ० को० २ भा० पृ० १४७।

**प्रवर्ग्योद्वासनप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च आपराह्णिके प्रवर्ग्योपसदौ समस्योपनिष्क्रम्य 'सुब्रह्मण्य सुब्रह्मण्यामाह्वय, प्रतिप्रस्थातः प्रवर्ग्यस्यावृता प्रवर्ग्यँ संसादयोद्वासनाय' इति। सोऽयं प्रवर्ग्योद्वासन प्रैषः उच्यते। तत्र प्रैषात् पूर्वं चात्वालं परिलिखति। पशुवदुत्तरनाभि प्रच्छादनान्तं करोति। आपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्य उपनिष्क्रम्य संप्रेष्यति। 'सुब्रह्मण्य सुब्रह्मण्यामाह्वयद्विस्तनव्रतं दोहयत' इति। तदर्धरात्रे प्रयच्छति। समानमन्यत् अग्नीन् ज्योतिष्मत इत्यादि। अपररात्रे संशास्ति—'एकस्तनव्रतं दोहयताग्नीन् ज्योतिष्मत्' इत्यादि। उदित आदित्ये यथोक्तप्रकारेण वाग्विसर्गानन्तरमुत्तमाभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति—'या ते अग्ने हराशय तनूवर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीन्वेषं वचो अपावधीँ स्वाहा' इति उपसद्धोममन्त्रे विशेषः। शालाया अग्रे तिष्ठन् सुब्रह्मण्यामाहूयार्धस्तनव्रतं प्रयच्छत इत्याह। तत्र कश्चिद्यजमानाय व्रतं प्रयच्छतीति विशेषोऽवगन्तव्यः। **द्र०** श्रौ०प०नि० पृ० २३३-३४ **द्र०**।

**प्रवह्लिका—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ व्यूढद्वादशाह प्रकरणे 'विततौ किरणौ द्वौ...(अथ० २०।१३३१-६) इति षडनुष्टुभः प्रवह्लिकाख्या ऋचो भवन्ति (आ०श्रौ० ८।३।१८) ताः पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसी स्वशिल्पशस्त्रे अर्धर्चशः शंसति।

**प्रवसन—** (सा०, आध्व०) इष्टियज्ञेषु हविर्यज्ञानां, प्रथमे आधानप्रकरणे प्रवसितस्य यजमानस्य अग्निहोत्रिणः प्रवासादगतस्य प्रवासोपस्थानं विधीयते। तत्र 'ग्रामान्तरे नगर्यां वा पल्यां वाऽन्यत्र वा क्वचित्। सीमामतीत्य चेद् रात्रौ वसिः प्रवसनं स्मृतम्। इति प्रवसनलक्षणमुच्यते। (तु०— का०श्रौ० ४। १२।१३ विद्याधरः)।

**प्रवासादागमनविधि—** (आध्व०) इष्टियज्ञेषु हविर्यज्ञानां प्रथमे आधानप्रकरणे प्रवासोपस्थानादिप्रवासविधिनाऽऽहिताग्निः प्रवसनं कृत्वा यदा प्रत्यागच्छति तदा 'सदा स्रुगः' इत्यृचा पन्थानमवरोहति। यद्यनुपस्थिताग्निः प्रवासमापद्यते तर्हि 'इहैव सन् तत्र सन्तं त्वा' इत्यृचा प्रतिदिशमग्नीनुपतिष्ठते 'अपि पन्थामगन्महि' इत्यृचा प्रवासाद् गृहमागच्छति। आयतनेषु अग्नीन् ज्वलतः श्रुत्वा आहवनीयाभिमुखं गत्वा समित्त्रयमादाय वाचंयमः 'विश्वदानीमारभन्त' इत्यृचा अग्नीनां समीपे समिधो निदधाति। 'नमस्ते अस्तु मीढुषे' इत्यृचा आहवनीयमुपतिष्ठते। 'मम नाम तव च जातवेदः'

इत्यृचा च। ततः 'अगन्म विश्ववेदसम्' इत्यृचा समीपे निहितां समिधमाहवनीयेऽभ्याधाय, 'अयमग्निर्गृहपतिः' इत्यृचा गार्हपत्येऽभ्याधाय 'अयमग्निः पुरीष्यः' इत्यृचा दक्षिणाग्नौ अभ्यादधाति। ततो गार्हपत्याहवनीयौ 'इमान्मे मित्रावरुणौ' इत्यृचा ईक्षते (तस्यामृचि अभिरक्षत्वित्यस्य स्थाने 'अभ्यराक्षीत्' इत्यूहो विशेषः)। यथागतमागत्य प्रदक्षिणं परितो गच्छन् 'मम नाम' इत्यृचा आहवनीयमुपतिष्ठते। दशरात्राधिकप्रवासे तु 'मनो ज्योतिः' इत्यृचा चतुर्गृहीतमाज्यमाहवनीये जुहोति। ततोऽग्नीन् परिसमुह्य उदग्विहारादुपविश्य समस्तव्याहृतिभिर्वाचं विसृज्य 'गृहा मा बिभीत' इत्यादिमन्त्रेण गृहानीक्षते। (इदं समन्त्रकं गृहेक्षणमनाहिताग्नेरपि भवति) 'गृहानहं सुमनसः प्रपद्ये' इत्यृचा गृहान् प्रविशति। अग्नीननुवीक्षमाणः त्रिवारं 'शिवं शग्म शंयोः' इति पठति। गृहप्रवेशानन्तरं कृतगृहप्रवेशं जना विदितामपि दुर्वार्तां न ज्ञापयन्ति। अहरहः प्रवासे तु गमने आगमने च 'अभयं वोऽभयं मेऽस्तु' इत्येवोपस्थानं भवति इति पथ्यवरोहणादिरेतदन्तो विधिः प्रवासादागमनविधिरुच्यते। द्र० अहिताग्नि प्रवासविधि—, प्रवासोपस्थान— प्रवसन—। श्रौ०प०नि० पृ० ७१।

**प्रवासोपस्थान—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याध्यानप्रकरणे आहिताग्निः प्रवत्स्यन् सर्वानग्नीन् प्रज्वाल्य गार्हपत्यस्य पश्चादुपविश्य ततोऽतिक्रम्य 'शंस्य पशून्' इत्यादिमन्त्रेणाहवनीयमुपस्थाय 'नर्य प्रजाम्' इत्यादि मन्त्रेण गार्हपत्यमुपस्थाय 'अथर्म पितुम्' इत्यादिमन्त्रेण दक्षिणाग्निमुपतिष्ठते। ततो गार्हपत्याहवनीयावीक्षते-'इमान् मे मित्रवरुणौ' इत्यृधा ततो यथागतमागत्य प्रदक्षिणं परितो गच्छन्नाहवनीयमुपतिष्ठते—'मम नाम प्रथमं जातवेदः' इत्यृचा इति प्रवासोपस्थानमुच्यते। द्र० श्रौ०प० नि० पृ० ७१।

**प्रवृञ्जनीयखर—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च गार्हपत्यस्योत्तरतः प्रादेशपरिमाणं सिकतानिर्मितं मण्डलं प्रवृञ्जनीयखर उच्यते। श्रौ०प०नि० पृ० २२८ प्र० २=खर—।

**प्रवृञ्जनीयखरे रुक्मोपगूहन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु प्रतिप्रस्थाता राजतं रुक्मं प्रवृञ्जनीये खरे उपगूहति—'पृथिवीं तपसस्त्रायस्व' इति। इदं प्रवृञ्जनीये खरे रुक्मोपगूहनमुच्यते। द्र० श्रौ०प०नि० पृ० २१६।

**प्रवृतहोम—** द्र० प्रवृताहुति—।

**प्रवृतहोमकर्तृप्रवरण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पाशुके प्रवृत्तहोमे होत्रध्वर्यु-प्रतिप्रस्थातृ-प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृअग्नीद्यजमाना होमक -र्तारः प्रव्रियन्ते। तथाहि— 'असौ (अमुकशर्मा) 'होता मानुषः' इति मन्त्रेण होतुर्नामाश्राव्य होतारं प्रवृणीते। ततः 'अश्विनावध्वर्यू आध्वर्यवात्' इत्यध्वर्युलिङ्गेन मन्त्रेण अध्वर्यु प्रतिप्रस्थात्रोः नामाश्राव्य तौ प्रवृणीते। 'मित्रावरुणौ प्रशास्तारौ प्रशास्त्रास्' इति मन्त्रेण नामाश्राव्य प्रशास्तारम्। 'इन्द्रो ब्रह्मा ब्राह्मणात्' इति मन्त्रेण नामाश्राव्य ब्राह्मणाच्छंसिनम्। 'मरुतः पोत्रात्' इति मन्त्रेण नामाश्राव्य पोत-

राम्। 'ग्नावो नेष्ट्रात्' इति मन्त्रेण नामाश्राव्य नेष्टारम्। 'अग्निराग्नीध्रात्' इति मन्त्रेण नामाश्राव्य अग्नीध्रम्। 'अग्निर्ह दैवीनाम्' इति मन्त्रेण नामश्राव्य यजमानं प्रवृणीते। इति प्रवृतहोमकर्तृणां नवानां प्रवरणं प्रवृत्तहोमकर्तृप्रवरणमुच्यते। (तु०—का० श्रौ० ९।८।७-१४ विद्याधरः)। अत्र अच्छावाकस्य प्रवरणं न विहितमिति तस्य प्रवरणाभाव इति विशेषोऽवधेयः॥

**प्रवृतहोममन्त्र** — (औ०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने बहिष्पवमाने 'वे कुरानाभासि...सरस्वत्यै स्वाहा' सूर्यो मा दिव्याभ्यः...पार्थिवाभ्यः स्वाहा' इत्येताभ्यां मन्त्राभ्यां उद्गातारस्त्रयोऽपि प्रवृतहोमौ जुह्वतीति द्वौ मन्त्रौ प्रवृत्तहोममन्त्रैः भवतः। (तु०— ता० ब्रा० सा० १।३।१-२)।

**प्रवृताहुति**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च प्रवृत्तहोमे १. प्रवृताहुतिमन्त्रैः संस्कृतमाज्यं (आज्यहोमः) प्रवृताहुतय उच्यन्ते (तु०—आ०श्रौ० ३।१।१३ सिद्धान्ती)। तदाह आश्वलायनः- 'संमार्गैः संमृज्य प्रवृताहुतीर्जुहुयात्- 'जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देवि वाक्। यद् वाचो मधुमत्तमं तस्मिन् माधाः सरस्वत्यै वाचे स्वाहा'। पुनरादाय पञ्च विग्राहं 'स्वाहा वाचे, स्वाहा वाचस्पतये, स्वाहा सरस्वत्यै, स्वाहा सरस्वते, महोभ्यः संमहोभ्यः स्वाहा' इति (आ०श्रौ० ३।१।१३-१४)। तत्र संमार्गैः संमृज्य उदकं स्पृष्ट्वा प्रवृताहुतीर्जुहुयात्। अर्थात् सकृद्गृहीत्वैकां हुत्वा पुनः सकृद्गृहीत्वा पञ्चाहुतीर्जुहुयात् इति नारायणः। सौत्ये एवाहनि अयं होमो नान्यस्मिन्नित्येके इति विशेषोऽवगन्तव्यः (तु०— तत्रैव १।३।१५ नारायणः)। २. होता 'अग्नये समिध्यमानायानुब्रूहि' इति प्रेषितः 'पृथु याजा अमर्त्यः' इति द्वे धाय्यासंज्ञके ऋचौ अधिके कृत्वा वेदिश्रोण्योत्तरया पार्ष्णी समां निधाय स्थित्वा सप्तदश सामिधेनीरनुब्रूयात्। आज्यभागदेवतानामावाहनानन्तरं (प्रधानदेवतावाहने) 'इन्द्राग्नी आ३वह' इति विशेषः। 'वनस्पतिमा ३ वह' इति विशेषः। संमार्गैः संमृज्याय उपस्पृश्य प्रवृत्ताहुतीर्जुहोति प्रत्यगुद्गाहवनीयाद् अवस्थायाज्यस्थाल्याः स्रुवेणाज्यमादाय जुहोति। तत्र मन्त्राः—'जुष्टो वाचे भूयासं जुष्टो वाचस्पतये देविवाक् यद्वाचो मधुमत्तमं तस्मिन् मा धाः सरस्वत्यै वाचे स्वाहा'। पुनः स्रुवेणाज्यमादाय पञ्चाहुतीः विग्राहं जुहोति— 'स्वाहा वाचे, स्वाहा वाचस्पतये, स्वाहा सरस्वत्यै, स्वाहा सरस्वते, महोभ्यः संमहोभ्यः स्वाहा'। वाचे इदमिति त्यागः प्रथमे। द्वितीयादिषु यथालिङ्गं यजमानस्य त्यागः। एताः षडाहुतयः प्रवृताहुतय इत्युच्यन्ते। **द्र०** श्रौ०प०नि० पृ० १४२। ३. वरणक्रमेण होता, अध्वर्युः, प्रतिप्रस्थाता, प्रशास्ता, ब्राह्मणाच्छंसी। (ततोऽच्छावाकः कर्कमते), पोता, नेष्टा, अग्नीत्, यजमानः इत्येते (प्रवृताः) प्रवृतहोमौ प्रत्येकं द्वे द्वे (अष्टादशविंशतिर्वा) आहुतीर्जुह्वति आहवनीये। तत्र 'जुष्टो वाचे भूयासं वाचस्पतये देवि वाक् यत्ते वाचो मधुमत्तमज्जुष्टतमं तस्मिन् माध्वः स्वाहा सरस्वत्यै इति प्रथमाहुतिं प्रचरण्या सकृद्गृहीतेनाज्येन जुहुयात्। पावका न (ना० सं० २०।८४)। इति द्वितीयामाहुतिं जुहुयुः प्रचरण्या सकृद्गृहीतेनाज्येनैवेति (तु०— का०श्रौ० ९।८।१५ विद्याधरः)।

**प्रवृताहुतिमन्त्र—** द्र० प्रवृतहोममन्त्र, प्रवृताहुति- ।

**प्रशास्तृ—** (सा०) पशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु तत्र तत्र प्रकर्षेण सर्वानृत्विजः शास्तिप्रैषमन्त्रेण तत्तद् व्यापारे प्रवर्तयति इति प्रशास्ता ऋत्विक् मैत्रावरुण उच्यते । द्र० मैत्रावरुण— ।

**प्रशास्तृचमस—**(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्यः नैयग्रोधः अधोभागे वक्रः सदण्डः प्रशास्तृ चमसो भवति । द्र० श्रौ० प०नि० पृ० २४९) ।

**प्रशास्त्रादिचमसनयन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितयाज्याप्रचारानन्तरं अध्वर्युः होतुरग्रे उपविशति । प्रशास्त्रादीनां चमसाध्वर्यवः सदसि चमसान् नयन्ति । इदं प्रशास्त्रादिचमसनयनमित्युच्यते । द्र० प्रस्थितयाज्याप्रचार—, श्रौ०प०नि० पृ० २८५-८६ ।

**प्रश्लिष्टसन्धि—**(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे पदपाठक्रमानुपूर्व्येण सन्धिः प्रश्लिष्टसन्धिरित्युच्यते । द्र० संहिता— ।

**प्रसङ्ग—**(सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु यो १. विधिः सकृदुक्तः सर्वत्र प्रसज्यते स प्रसङ्गः । (तु०— आ०श्रौ० १ ।१ ।२२ देवत्रातः) । २. अन्यार्थमनुष्ठितस्य अन्येनोपजीवनं प्रसङ्गः । यथा अग्नीषोमीये पशौ सद आदयः (तु०—का०श्रौ० ६ ।१० ।१६ विद्याधरः) ३. अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिः प्रसङ्गः इत्युच्यते । यथा प्रासादे कृतेन दीपेन राजमार्गेऽपि प्रकाशकरणम् । (तु०— मी०को० पृ० २८२७) । ४. अन्यस्य तन्त्रे प्राप्ते यदन्यत् तुल्यधर्मकमापतति कर्म, तस्य पूर्वकर्मणो येति कर्तव्यता सा प्रसृज्यते । यथा पशौ प्रतते पशुपुरोडाश आपतति । तस्य पाशुकीति-कर्तव्यता प्रसज्यते । द्र० मी०को० पृ० २८३० ।

**प्रसङ्गतन्त्रविवेक—**(सा०) प्रसङ्गस्तत्र, यत्र अन्यार्थेनाङ्गेन अन्यस्योपकारः । यत्र सकृत्कृतं सर्वेषामुपकरोति तत्र तु तन्त्रम् । द्र० मी०को० पृ० २८२७ ।

**प्रसङ्गभेद—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. प्रसङ्गस्त्रिविधः प्रधानप्रसङ्गः, अङ्गप्रसङ्गः, प्रधानाङ्गप्रसङ्गश्चेति । तत्र प्रधानप्रसङ्गः त्रिविधः प्रकृत्योः विकृत्योः प्रकृतिविकृत्योश्चेति । द्र० मी०को० पृ० २८२७ । २. प्रसङ्गः त्रिविधः अनुष्ठानप्रसङ्गः पदार्थप्रसङ्गः शास्त्रप्रसङ्गश्चेति । द्र० तत्रैव— ।

**प्रसङ्गसङ्गति—** (सा०) यत् प्रसक्त्या यो विचारः उत्पद्यते, तत्समाप्तौ स एव बुद्धिस्थो भवति । स विचारः प्रसङ्ग संगति रुच्यते (तु०— मी०को० पृ० २८३०) ।

**प्रसङ्गित्व—** (सा०) भूयसां तन्त्रित्वं, अल्पानां प्रसङ्गित्वम् । प्रसङ्गः उपकारलाभनिमित्तः (यस्य प्रसङ्गेन सिद्धिः स प्रसङ्गी, येन च तन्त्रं स तन्त्री) । द्र० मी०को० पृ० २८३२; प्रसङ्गतन्त्रविवेक— ।

**प्रसर्पक—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने प्रवृताहुत्यन्तरम् आदित्य प्रभृतीन् धिष्ण्यान् सव्यावृतः शामित्रोवध्यगोह—चात्वालोत्कराऽऽस्तावान्, दक्षिणावृतः आग्नीध्रीयं अच्छावाकस्य वादं दक्षिणं मार्जालीयं खरं चोपस्थाय

उत्तरेण आग्नीध्रीयं परिव्रज्य सदसो द्वारदेशं प्राप्य सदोऽभिमृश्य द्वार्ये संमृश्य अपरान् (सदसः शालामुखीयादीन्) उपस्थाय चोपस्थिताननुपस्थितान् सर्वान् पश्यन्तः इतस्ततश्चेक्षमाणाः यथास्वं धिष्ण्योपवेशनार्थं होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, इति पञ्चर्त्विजः सदसः पूर्वया द्वारा, अपरया द्वारा प्रसर्पन्तं ब्रह्माणमनु तेनैव द्वारेण प्रसर्पन्तीति प्रसर्पका उच्ययन्ते (तु०— आ०श्रौ० ५ ।३ ।१३-२३ नारायणः, सिद्धान्ती, देवत्रातः) ।

**प्रसर्पक—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने अन्तर्यामग्रहहोमादूर्ध्वं महाभिषवं कृत्वा ऐन्द्रवायव्यमारभ्य यवमत्यन्तग्रहार्थं तत्तत् पात्रेषु सोमं गृहीत्वा सारितेषु वैप्रुवान् होमान् हुत्वा बहिष्पवमानार्थं प्रसर्पेयुः— सप्त होतारं मनसानुद्रुत्याऽऽहवनीये सग्रहं हुत्वोदञ्चः प्रह्वाः बहिष्पवमानार्थं पञ्चर्त्विज समन्वारब्धाः सर्पन्ति । 'अध्वर्यु प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्रह्माणं यजमानः' इति । आश्वलायनोऽप्याह— 'अध्वर्युमुखाः समन्वारब्धाः सर्पन्त्यातीर्थदेशात् ! तत्स्तोत्रायोपविशन्ति उद्गातारमभिमुखाः । तान् होताऽनुमन्त्रयतेऽत्रैवासीनः—'यो देवानामिह' इति (तु०— ऐ० ब्रा० सा० २ ।२२ आ०श्रौ० ५ ।२ ।६-८) । तत्र 'बहिष्पवमानस्तुत्यर्थमुद्गातारमभिमुखा उपविशेयुः, दक्षिणतो ब्रह्मोदङ्मुखः पश्चान्मैत्रावरुणः प्राङ्मुखः । होता बहिष्पवमानार्थमुपविष्टान् तानत्रैवाऽऽसीनः अनुमन्त्रयते' इति नारायणः । इति प्रसर्पका उच्यन्ते ।

**प्रसर्पक —** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रसर्पन्ति यज्ञमण्डपेषु तत्र तत्रेति प्रसर्पकाः यज्ञे अर्थसंशये निर्णायका यज्ञार्थशालोपविष्टाः विद्वांसः शिष्टाः ब्राह्मणाः त्रिप्रभृतयः । द्र० मी०को० पृ० २८३२ ।

**प्रसव—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सुत्या प्रसव उच्यते (तु०—द्रा०श्रौ० धन्वी, ला०श्रौ० १० ।१ ।१) । द्र० सुत्या— ।

**प्रसव—** (ब्रह्म) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु ब्रह्मणः अध्वर्युहोत्रुद्गातृभ्य आज्ञादानम्, अनुज्ञा, आज्ञा प्रसव इत्युच्यते । अनुज्ञाप्रदानं च अध्वर्युप्रभृतिभिः प्रणयनप्रोक्षणादि तत्तत्कर्म कर्तुं 'ब्रह्मन्ननुजानीहि' इत्यभ्यर्थने कृते ब्रह्मा प्रसवमन्त्रमुक्त्वा 'ओं प्रणय' इत्यादिभिरनुजानातीत्येवं रूपं भवति । तत्र इष्टिपश्वोः १. अपां प्रणयने 'ब्रह्मन्नपः प्रणेष्यामि' इत्यध्वर्युणा अभ्यर्थितो ब्रह्मा 'प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे यजमानो अस्तु । सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धेहि, ओं३प्रणय' इत्यनेन मन्त्रेण प्रणीताप्रणयनार्थमनुज्ञां ददाति । २. हविरिध्माबर्हिषां प्रोक्षणे 'ब्रह्मन् हविः प्रोक्षिष्यामि, ब्रह्मन्निध्मं प्रोक्षिष्यामि, ब्रह्मन् बर्हिः प्रोक्षिष्यामि' इत्यध्वर्युणाऽभ्यर्थितो ब्रह्मा 'प्रोक्ष यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे धेहि, ओं३प्रोक्ष' इत्यनेन मन्त्रेण तत्तत्प्रोक्षणार्थमनुज्ञां ददाति । तत्र 'ओ३म् प्रणय, ओ३म् प्रोक्ष' इत्युच्चैः 'प्रणय यज्ञं देवता' प्रोक्षयज्ञं देवता. इत्यारभ्य 'धेहि' इत्यन्तो मन्त्रः उपांशु प्रयोक्तव्य इति विशेषोऽवधेयः । ३. वेदि परिग्रहे 'ब्रह्मन् पूर्वं परिग्रहं परिग्रहीष्यामि'

इत्यध्वर्युणा पृष्टो ब्रह्मा 'बृहस्पते परिगृहाण वेदिं सुत्रावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां साध्वन्तर्हिस्रा पृथिवी देवी देव्यस्तु देवता वधर्य त्वं नाकस्य पृष्ठे० धेहि, ओं३ परिगृहाण' इत्यनेन मन्त्रेण वेदेः पूर्व-परिग्रहार्थमाज्ञां ददाति। ४. 'सामिधेन्यनुवचने 'ब्रह्मन् समिधेनीरनुवक्ष्यामि' इति होत्रा पृष्टो ब्रह्मा 'प्रजापतेऽनुब्रूहि यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे० धेहि, ओ३म् अनुब्रूहि' इत्यनेन मन्त्रेण सामिधेनीरनुवचनार्थमाज्ञापयति। (तु०—का०श्रौ० २।२।८-१२ विद्याधरः)। ५. वरुणप्रघासवेदिपरिग्रहे तु दक्षिणवेद्यां प्रतिप्रस्थाता, उत्तरवेद्यामध्वर्युः (कर्म कुरुतः) इति कर्तृद्वित्वात् तन् मन्त्रे ऊहः कर्तव्यः। तथा च 'ओं बृहस्पते परिगृहाण वेदी सुगावो देवाः सदनानि सन्वनयोर्बर्हि प्रथेतां साध्वन्तर्हिंस्रे पृथिव्यौ देव्यौ, देव्यौ स्ताम्। देवता वर्धयतं युवां नाकस्य पृष्ठे यजमानो अस्तु सप्तर्षीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं च धत्तम्' इति स्यात् (तु०— तत्रैव टि०) ६. सोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. तृणं प्रयच्छताऽध्वर्युणा। त्रिषु सवनेषु स्तोत्रगानार्थं 'सोमः पवते' इति मन्त्रेण स्तोत्रे उपाकृते (उपाकरणे) सति प्राङ्मुखोपविष्टेन प्रस्तोत्रा 'ब्रह्मन् प्रस्तोष्यामः' इत्यामन्त्रितः (प्रार्थितः) ब्रह्मा 'एतं ते देव सवितः' (मा०सं० २।१२) इति मन्त्रं पठित्वा 'स्तुत सवितुः प्रसवे' इत्युद्गातृभ्यः स्तोत्रगानार्थमाज्ञां ददाति। अथवा 'देव सवितरेतद् बृहस्पते प्र' इत्येतावन्तं मन्त्रमुक्त्वा 'स्तुत सवितुः प्रसवे' इत्यनुज्ञां ददाति। अथवा 'रश्मिना सत्याय. (मा०सं० १५।७-९) इत्यादिकं क्रमेणैकैकं मन्त्रमुक्त्वा 'स्तुतसवितुःप्रसवे' इत्यनेन सर्वत्रानुज्ञां दद्यात्। 'रश्मिना सत्याय' इत्येकोनत्रिंशत् स्तोमभागमन्त्राः, अग्निष्टोमे द्वादश च स्तोत्राणि। अतो द्वादशभिर्मन्त्रैः प्रतिमन्त्रं प्रतिस्तोत्रमनुजानीयादित्यर्थः (तु०—का०श्रौ० ११।१।१९-२१ विद्याधरः)। द्र० स्तोमभाग—। २. अध्वर्युणा स्तोत्रे उपाकृते सति प्रस्तोता ऋत्विक् ब्रह्मणं 'ब्रह्मन् प्रस्तोष्याः प्रशास्तः' इत्यनेन (मन्त्रेण स्तोत्रगानार्थ) प्रार्थयेत्। ततस्तेन प्रार्थितो ब्रह्मा 'भू प्रातःसवने' 'भूरिन्द्रवन्तः स्तुध्वम्' माध्यन्दिनसवने 'भुवरिन्द्रवन्तः स्तुध्वम्', तृतीयसवने 'स्वरिन्द्रवन्तः स्तुध्वम्'। उक्थ्ये वा अतिरात्रे वा 'भूर्भुवः स्वरिन्द्रवन्तः स्तुध्वम्' इति ब्रूयात् (प्रसवं दद्यात्) (तु०—ऐ० ब्रा० सा० ५।३४)। इतीष्टिपशुसोमेषु विशेषवर्जं ब्रह्मण एते प्रसवमन्त्राः प्रसव इत्युच्यते। द्र० प्रस्तोतुः स्तोत्रगानानुज्ञाप्रार्थना—।

**प्रसृत—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावहीनप्रकरणे अश्वमेधे (अश्वत्रिरात्रे) वेदिसाधने परिमाणविशेषः प्रसृत इत्युच्यते। २. एकहस्ताङ्गुलिकोशः प्रसृत उच्यते (तु०—का०श्रौ० २०।१।४ विद्याधरः)।

**प्र सृप्—** (प्रवेशे) यथा प्रसर्पन्ति प्रविशन्ति इति।

**प्रस्कन्दन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च १. उपलया पिष्टानां हविषां दृषदः सकाशात् तस्या अधः स्थापितकृष्णाजिने पातनं प्रस्कन्दनमित्युच्यते। २. पात्राद् हस्ताद् वा यस्य कस्यापि द्रव्यस्य अधः पतनमपि प्रस्कन्दनमुच्यते। द्र० श्रौ०प० नि० पृ० १६)।

**प्रस्तर—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च छिन्नासु चतसृषु दर्भमुष्टिषु या प्रथमा मन्त्रैः संस्कृता दर्भमुष्टिः (दर्भसंघातः)

वेद्यां जुहूर्यस्यां निधीयते, विधृतिसंज्ञकयोः उदगग्रयोर्दर्भयोरुपरि च या प्रागग्रा स्थापिता भवति सा प्रस्तर इत्युच्यते। प्रस्तरः स्रुग्धारणार्थो भवत्यर्थोऽनुसंधेयः। द्र० श्रौ०प०नि० पृ० १२।

**प्रस्तरप्रहरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च सूक्तवाकस्य (निगदस्य) अन्तिमं 'देवेभ्यः' इति पदं श्रुत्वा तिर्यञ्चं हस्तं कृत्वा कर्षन्निव प्रस्तरमाहवनीयेऽनुप्रहरति अध्वर्युस्तत् प्रस्तरप्रहरणमिति गीयते। द्र० श्रौ०प०नि० पृ० ३७। २. 'इदं द्यावापृथिवी.' इत्यादिना सूक्तवाकमन्त्रेण प्रस्तरस्य अग्नौ प्रक्षेपः। द्र० मी०को० पृ० २८३४। ३. अध्वर्युः स्रुचां दक्षिणेनापरेण च प्रदक्षिणेन भूमिलग्नमिव आहवनीयसमीपे होमार्थमानीय प्रस्तरमध्यादेकं तृणं परिशेष्य होतृपठितसूक्तवाकान्ते हस्तेन आहवनीये अनुप्रहरेत् प्रक्षिपेत् (तु०—का०श्रौ० ३-६ ।७-८; १२ विद्याधरः)।

**प्रस्तराञ्जन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च परिध्यञ्जनानन्तरमुपभृतं जलेन संस्पृश्य यथास्थानं स्रुचौ सादयित्वा जुह्वा आधारभूतं सविधृतिपवित्रं प्रस्तरं गृहीत्वा मन्त्रेण प्रस्तराग्राणि जुह्वामनक्ति, तथैव उपभृति मध्यानि अनक्ति, तथैव ध्रुवायां मूलान्यनक्तीति अञ्जनं प्रस्तराञ्जनमित्युच्यते। द्र० परिध्यञ्जन—, श्रौ०प०नि० पृ० ३६।

**प्रस्ताव—**(औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रत्येकं साम पञ्चधा विभज्य गीयते। पञ्चधा विभक्तस्य साम्नः प्रस्तोत्रा गातव्या प्रथमा भक्तिः (भागः) प्रस्तूयते सामानेनेति प्रस्ताव इत्युच्यते। तत्र प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनमिति साम्नः पञ्च विभक्तयः। सर्वस्यापि साम्नो गातारस्त्रयस्त्रय ऋत्विजः— प्रस्तोता उद्गाता प्रतिहर्ता चेति। तत्र प्रथमभागः प्रस्तावाख्यः प्रस्तोत्रा गीयते। द्वितीयो भागः उद्गीथाख्यः उद्गात्रा गीयते। तृतीयः प्रतिहाराख्यः प्रतिहर्त्रा गीयते। चतुर्थपञ्चमौ सर्वैः (त्रिभिः) (तु०—का०श्रौ० भूमिका: विद्याधरः)। सामानि तावद् द्विविधानि अविभाग्यानि विभाग्यानि चेति। तत्र यावति प्रदेशे स्तम्नः प्रथममवसानं (अध्ययनं, विरामः) पारम्पर्यसिद्धं तावान् अविभाग्यानां प्रस्तावो भवति। स्तोत्रीयायाः प्रथममवसानं अविभाग्यानां प्रस्तावः परिभाष्यते इत्यर्थः।

**प्रस्तावान्तलक्षण—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने प्रस्तावोद्गीयप्रतिहारोपद्रवनिधनेषु पञ्चसु भक्तिषु प्रथमा भक्तिः प्रस्तावः स तावदुच्यते 'अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम्'। अर्थात् अवस्यन्ति तस्मिन्नित्यवसानं विरामोऽवसानं, तदवसानं प्रस्तायान्तलक्षणम्। प्रस्तूयतेऽनेनेति प्रस्तावः। प्रस्तावस्यान्तः प्रस्तावान्तः तस्य प्रस्तावान्तस्यावसानं लक्षणं येन लक्ष्यते तल्लक्षणम्। अविभाग्यानामेष धर्मः। (तु०—ला०श्रौ० ६ ।१ ।१ अग्निस्वामी)।

**प्रस्तोतुः स्तोत्रगानानुज्ञाप्रार्थन —** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्तोता 'ब्रह्मन् प्रस्तोष्यामः प्रशांस्तः' इत्यनेन मन्त्रेण ब्रह्माणं प्रत्यनुज्ञां प्रार्थयति। तदिदं प्रस्तोतुः स्तोत्र-

गानानुज्ञाप्रार्थनमुच्यते। (तु०—ऐ० ब्रा० सा० ५।३५)।

**प्रस्तोतृ—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्तोता उद्गातुः पुरुषः। द्वितीयवर्गस्थोऽयम्। १. अयं अर्धी दक्षिणार्धभाक् षट् गा लभते विशेषवर्जम्। द्र० मी०को० पृ० २८३४। २. स्तोत्रसाधकस्य साम्नः प्रथमस्य प्रस्तावभागस्य गाता प्रस्तोतृनामकऋत्विक्। यदा प्रवर्ग्यादौ सर्वे गार्हपत्यसमीपदेशे उपविशन्ति, पुनर्यागकाले अध्वर्युप्रभृतयः आहवनीयसमीपं व्रजन्ति तदा प्रस्तोता गार्हपत्यसमीप एवोपविशतीति तस्य ध्रुवत्वम्। प्रस्तोता (उद्गातृषु) ऋत्विक्षु न गण्यते (तु०—आ०श्रौ० १।१२।३ सिद्धान्ती)। (३) प्रस्तोतृप्रतिहर्तारौ गातारौ न उद्गातारौ। द्र० मी०को० पृ० २८३४।

**प्रस्थितयाग—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातर्माध्यन्दिनतृतीयसवनेषु चमसप्रचारार्थं प्रस्थितानां वेद्यामासादितानां सोमानां होत्रादिहोत्रकैः स्वस्वप्रस्थितयाज्याभिरनुष्ठिता यागाः प्रस्थितयागा उच्यन्ते। यत्र होमे प्रैषे च प्रस्थितशब्दग्रहणं ते प्रस्थितयागा भवन्ति। अत एव पशुवपाहविषोर्यागाः प्रस्थितयागाः नोच्यन्ते। अग्नीषोमीयपशुवपाहविषोर्यागे 'न प्रस्थितमित्याह। प्रसुते प्रस्थितम् इति' (तु०—श्रौ०को० सू० २ भा० पृ० १९८; २१०)। प्रस्थितयागाश्च आ इडाभक्षात् सवनीयपुरोडाशादि कृत्वा चमसैरेव इज्यन्ते इति विशेषोऽवगन्तव्यः। (तु०—का०श्रौ० १०।४।८ विद्याधरः, ऐ० ब्रा० सा० २।१०,

**प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु सप्तानां होत्रकाणां सप्त प्रस्थितयाज्या विधीयन्ते। तत्र प्रातःसवने यदा अध्वर्युणा प्रेषितो मैत्रावरुणः 'आ त्वा वहन्तु' (ऋ० १।१६।१-९) इत्यनुन्नीयमानसूक्तमनुब्रूयात् तदा मैत्रावरुणेन 'होता यक्षदिन्द्रं प्रातः प्रातः सावस्य. पिबतु सोमं होतर्यज' इति प्रेषेण प्रेषितस्य होतुः 'इदं ते सोम्यं मधु' (ऋ० ८।६५।८) इत्येषा प्रस्थितयाज्या भवति। एवं 'मित्रं वयं हवामहे' (ऋ० १।२३।४) इतीयं प्रैषं विना नामादेशं प्रेषितस्य मैत्रावरुणस्य प्रस्थितयाज्या। 'इन्द्रं त्वा वृषभं वयं' (ऋ० ३।४०।१) इति प्रैषं विना नामादेशं प्रेषितस्य ब्राह्मणाच्छंसिनः प्र.। 'मरुतो यस्य हि (ऋ० १।८६।१) इतीयं प्रैषं विना नामादेशं प्रेषितस्य पौतुः प्र० 'आने पत्नीरिहा वह' (ऋ० १।२२।९। इतीयं इति प्रैषं विना नामादेशं प्रेषितस्य नेष्टुः प्र०। 'उक्षान्नाय वशान्नाय' (ऋ० ८।४३।११) इति इतीयं प्रैषं विना नामादेशं प्रेषितस्याग्नीध्रस्य प्र० (तु०—आ०श्रौ० ५।५।१५-१८)। अथ होतृचमसभक्षणानन्तरं 'प्रातर्यावभिरागतं' (ऋ० ८।३८।७) इतीयं, प्रैषं विना नामादेशं प्रेषितस्याच्छावाकस्य प्रस्थितयाज्या (तु०—आ०श्रौ० ५।७।६ श्रौ०को० २ भा० पृ० ३१२-१३, १७)। अथ माध्यन्दिनसवने अध्वर्युणा प्रेषितो मैत्रावरुणः यदा असावि देवं (ऋ० ७।२१।१-११)। इत्युन्नीयमानसूक्तमनुब्रूयात् तदा मैत्रावरुणेन 'होता यक्षदिन्द्रं माध्यन्दिनस्य सव-

नस्य० पिबतु सोमं होतर्यज' इति प्रैषेण प्रेषितस्य होतुः। 'पिबा सोममभि' (ऋ० ६।७१।१) इत्येषा प्रस्थितयाज्या। एवं 'स ईं पाहि य ऋजीषी' (ऋ० ६।७।१२) इतीयं प्रैषं विना नामादेशं प्रेषितस्य मैत्रावरुणस्य प्रस्थितयाज्या 'एवा पाहि प्रत्नथा' (ऋ० ६।७१।३) इतीयं प्रैषं विना नामादेशं प्रेषितस्य ब्राह्मणाच्छंसिनः प्र० 'अर्वाङेहि सोमकामं' (ऋ० ३।३५।६), इतीयं प्रैषं विना नामादेशं प्रेषितस्य पोतुः प्र० 'तवायं सोमस्त्वमेह्यर्वाङ्' (ऋ० ३।३।५।६) इतीयं प्रैषं विना नामादेशं प्रेषितस्य नेष्टुः प्र०। 'इन्द्राय सोमाः' इतीयं प्रैषं विना नामादेशं प्रेषितस्याच्छावाकस्य प्र०। 'आपूर्णो अस्य कलशः' इतीयं प्रैषं विना नामादेशं प्रेषितस्याग्नीध्रस्य प्रस्थितयाज्या (आ० श्रौ० ५।५।१४-१७;१९ श्रौ०को० पृ० ३६८- ७०)। २ भा० पृ० ३६८-७०। तृतीयसवने अध्वर्युणा प्रेषितो मैत्रावरुणः 'इहोपयात शवसो नपातः' (ऋ० ४।३५) इत्युन्नीयमानसूक्तमनुब्रूयात् ततो मैत्रावरुणेन 'होता यक्षदिन्द्रं तृतीयस्य सवनस्य पिबतु सोमं होतर्यज' इति प्रैषेण प्रेषितस्य होतुः 'इन्द्र ऋभुभिर्वाजवद्भिः' (ऋ० ३।६०।५) इतीयं प्रस्थितयाज्या। एवं 'इन्द्रावरुणा सुतयाविमं' (ऋ० ६।६८।१०) इतीयं प्रैषं विना नामादेशं प्रेषितस्य मैत्रावरुणस्य प्र०। 'इन्द्रश्च सोमं पिबतं (ऋ० ४।५०।१०) इतीयं प्रैषं विना नामादेशं प्रेषितस्य ब्राह्मणाच्छंसिनः प्र० 'आ वो वहन्तु (ऋ० १।८५।६) इतीयं प्रैषं विना नामादेशं प्रेषितस्य पोतुः प्र० 'अमेव नः सुहवा' (ऋ० ३।३६।३) इतीयं प्रैषं विना नामादेशं प्रेषितस्य नेष्टुः प्र०। 'इन्द्रा विष्णू पिबतं' (ऋ० ६।६९।९) प्रैषं विना नामादेशं प्रेषितस्याच्छावाकस्य प्र०। 'इमं स्तोममर्हते' (ऋ० १।९४।१) इतीयं प्रैषं विना नामादेशं प्रेषितस्याग्नीध्रस्य प्रस्थितयाज्या। आ०श्रौ० ५।५।१४-१७; १९ श्रौ०को० २ भा० पृ० ४३२-३४)। शंसनप्रकारः याज्यात्वात्। प्रत्येकमासामादौ ये ३ यजामहे' इत्यागूः, अन्ते वौऽषट् इति वषट्कारस्ततः 'सोमस्याग्ने वीहि' इत्यनुवषट्कारः पठ्यते इति विशेषोऽवधेयः। **द्र०** याज्यायाज्या धर्मयाज्यापाठप्रयोग-। अत्र 'यदा होत्राणां (होत्रकाणां) चमसानभ्युन्नयन्ति तदा होत्राः (होत्रकाः) संयाजयन्ति। स प्रथमायां वा होत्रायामिष्टायां वाऽनुमन्त्रयते—'तृप्यन्तु होत्रा मध्वः (मा०सं० ७।१५) इत्यनेन मन्त्रेण। इति विशेषोऽवगन्तव्यः (तु० श्रौ०को० २ भा० पृ० ३१२)। अत्र आग्नीध्रस्य 'ऐभिरग्ने सरथम्' (ऋ० ३।६।९)। इत्येषा अधिका भवति। तदुक्तम्—'तिस्रः प्रस्थितयाज्यास्तु सप्तानामभवन् खलु। आग्नीध्रस्तिसृभिः। सार्धमैरभिरग्ने चतुर्थ्यभूत्' इति। तदेवं चतुर्विंशतिः प्रस्थितयाज्या अवबोध्याः (तु०—ऐ० ब्रा० सा० ६।१४) इति च विशेषोऽनुसंधेयः।

**प्रस्थितयाज्याप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः मैत्रावरुणचमसमादायाऽऽश्राव्याऽऽह 'प्रशास्तर्यज' इति। वषट्कारानुवषट्कारयोर्होमौ। ब्राह्मणाच्छंसीय चमसमादायाऽऽश्राव्याह—'ब्रह्मन् यज' इति। पोतृचमसमादायाश्राव्याह 'पोतर्यज' इति। नेष्टृचमस० व्याह—'नेष्टर्यज' इति। आग्नीध्रचमस० व्याह—'आग्नीध्र यज' इति अयं प्रस्थित याज्याप्रचार इत्युच्यते (श्रौ०प०नि० पृ० २८५।

**प्रहरणप्रैष —** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च (मन्थनात्) जातेऽग्नौ सत्याह—'जातायानुब्रूहि' इति यजमानान्वारब्धोऽध्वर्युर्जातमग्निमाहवनीये 'भवतं नः समनसौ' इत्यृचा प्रहरति। अस्मात् प्रहरणात्पूर्वं 'प्रह्रियमाणायानुब्रूहि' इति यः प्रैषो होतारं प्रति स प्रहरणप्रैष इत्युच्यते। द्र० श्रौ०प०नि० पृ० १२७।

**प्राकाश—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावेकाहप्रकरणे राजसूये १. राज्ञो भूषणविशेषः प्राकाश उच्यते। २. प्राकाशः कुण्डलः (तु०—द्रा०श्रौ० धन्वी) ३. आभरणविशेषौ प्राकाशौ इत्येके, सौवर्णदर्पणौ इत्यन्ये (तु०—तां० ब्रा० सा० १८।१९।१०)। ४. राजसूयगते दशपेये दक्षिणारूपौ 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति'। द्र० मी०को० पृ० २८३६-३७।

**प्राकृतकर्मन्—** (सा०) इष्टिपशुसोमेषु १. प्रकृतिभूतेषु भवं (आम्नातं) कर्म प्राकृतकर्मोच्यते। २. विकृतिषु प्रत्यक्षाम्नानादन्यत् सर्वं स्वप्रकृतितो ग्रहीतव्यमिति सर्वत्रोक्तत्वात् प्रकृतौ भवं प्राकृतं कर्मोच्यते। ३. प्राकृतमङ्गं यत् विकृतौ श्रूयते तदेव विकृतिः निराकाङ्क्षत्वात् स्वीकरोति। द्र० मीको० पृ० २८५०। इति विशेषोऽनुसंधेयः। द्र० प्रकृतियाग—, यज्ञस्वरूप—।

**प्राकृतस्तोम—** द्र० स्तोमभेद-दाशरात्रिकस्तोम—।

**प्राक्संस्थाघार—** द्र० जौहवाघार—।

**प्रागुदक्संस्थकर्मन्—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु सर्वाणि कर्माणि पात्रासादनादीनि पश्चादारभ्य प्राक्संस्थानि कार्याणि दक्षिणतः आरभ्य उदक्संस्थानि कार्याणि। अन्यत् परिस्तरणपर्यग्निकरणपर्युक्षणादिकमप्युदक्संस्थं कार्यम् (तु०—का०श्रौ० १।७।४।२४ विद्याधरः)।

**प्राग्वंश—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. पत्नीशाला प्राग्वंश उच्यते। तत्र आतिथ्या क्रियते। २. प्राचीनवंशा चतुर्दिक्ष्वतीकाशा दक्षिणतो वर्षीयसी चतुर्दिक्षु अरत्निमात्रमध्यद्वारवती षोडशप्रक्रमव्यासा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा। तस्याः शालायाः दक्षिणतो व्रतश्रयणागारं भवति। पश्चात् पत्नीशाला। इयं शाला प्राग्वंश इत्युच्यते। द्र० मी०को० पृ० २८४४, विमित-, शाला-, श्रौ०प०नि० पृ० १८८।

**प्राचीनपृष्ठ—** (औ०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहविकृतौ रात्रिसत्रप्रकरणे प्रथमचतुर्दशरात्रे रथन्तबृहद्वैरूपवैराजशाक्वररैवतसामसाध्यैः पृष्ठस्तोत्रैरनुक्रमेणोक्तानि पृष्ठाह्नानि प्राचीनपृष्ठानीत्युच्यन्ते। (तु०—तै० सं० सा० ७।३।४) द्र० पृष्ठाहन्—, चतुर्दशरात्रसत्रस्याहः क्लृप्ति—, प्रतीनपृष्ठ-।

**प्राचीनवंश—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. यस्य मण्डपविशेषस्य उपरि वंशाः प्रागग्रगा भवन्ति स यज्ञमण्डपः प्राचीनवंशः सोमशाला चोच्यते। २-प्राचीनवंशो नाम मण्डपो दार्शिकीं वेदिमन्तर्भाव्य अवतिष्ठते ज्योतिष्टोमे। द्र० मी०को० पृ० २८४४।

**प्राचीनावीत—** (सा०) इष्टिपशुसोमयज्ञेषु पित्र्येषु कर्मसु १. स्मृत्युक्तविधिना निर्मितं यज्ञसूत्रं

वामेन बाहुना उद्धृतं (सव्योद्धृतं) दक्षिणां संस्थितं प्राचीनवीतमुच्यते। द्र० श्रौ०प० नि० पृ० २१। २. उपवीतविपरीतं सव्योद्धृतं दक्षिणां संस्थितं प्राचीनावीतम् (का० श्रौ० १।७।२६ टि० विद्याधरः)

**प्राजहित—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिसत्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्राजहितः पुरातनो गार्हपत्य उच्यते (तु०—का० श्रौ० ८।६।२१ विद्याधरः) २—प्राजहितः प्राचीनवंशस्थः पश्चिमवह्निरूपो मुख्यो गार्हपत्य एव। इयं च पूर्वाचार्यसंज्ञा। द्र० मी०को० पृ० २८४५, प्रजहित-।

**प्राजापत्यपशु—** (सा०, अव्य०) प्रजापतिदेवताकः (श्याम-तूपरः) पशुः प्राजापत्यपशुरित्युच्यते। स साग्निचित्ये द्वादशाहे, चयने (अग्निचयने) ऐष्टिकः पाक्षिकः, वाजपेये (अन्यत्रापि साग्निचित्येषु महाव्रतादिषु) चाऽऽलभ्यते। तत्र वाजपेये ये प्राजापत्याः श्यामतूपराः सप्तदशपशवस्तेषामालम्भः माध्यन्दिने सवने ब्रह्मसामकाले श्रूयते (तु०—मी०को० पृ० २८४५)। द्र० ऐष्टिक-पशु-, द्वादशाहदीक्षापूर्वभाविपशु।

**प्राजापत्यपशुप्रचार —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतावेकाहप्रकरणे वाजपेये 'प्राजापत्याः सप्तदश पशवो वाजपेये' (मी०को० पृ० २८।४४)। प्राजापत्यांश्च सप्तदशश्यामतूपरान् बस्तान्। (का०श्रौ० १४।२।१३) इति प्रजापतिदेवताकाः सप्तदश (शृङ्गरहिताः साण्डा अजाः) पशवो विहिताः। 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' (मी०को० पृ० ३४८५)। इति तेषां प्रचारकालः उक्तः। तत्र प्रयोगक्रमः—'तृतीयसवने प्रथमम् आर्भवः पवमानः। ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः। ततः अशस्त्रिषु अवशिष्टेषु सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्नः ऊर्ध्वं उक्थ्यादयः सोमविकाराः' (सोमसंस्थाः अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशीवाजपेयोऽतिरात्रोऽप्तोर्यामः) इति। ततः वाजपेये प्राजापत्याः चिरं क्रतुपशुभिः सहोपक्रान्ता अपि पर्यग्निकरणोत्तरं विलम्ब्य पशवः माध्यन्दिनसवने ब्रह्मसामकाले आलभ्यन्ते। क्रतुपशवस्तु प्रातः सवने एव आलभ्यन्ते। तत्र प्राजापत्यपशुषु अङ्गादिश्रपणार्थं कुम्भी-शूल-वपाश्रपणीनां तन्त्रम्। अर्थात् कुम्भ्यादित्रयमेकैकमेव भवति न प्रतिपशु पृथक्पृथगिति। द्र० मी०को० पृ० ३४८२। अयं प्राजापत्यसप्तदश पशुप्रचारः वाजपेये प्राकृतानां वैकृतानां च सर्वेषां सोमानामुपरिष्टात् कर्तव्यः। 'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इत्युक्तत्वात् (द्र० मी०को० पृ० २८४९)

**प्राजापत्यपश्ववदान—** (आध्व०) सोमयज्ञेषु - प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे १. वाजपेये प्राजापत्यपशुषु यानि प्रधानार्थानि स्विष्टकृदर्थानि, इडाभक्षणार्थानि चेति त्रिविधानि अवदानानि (त्रयः, पदार्थाः) तेषामनुष्ठानं पदार्थानुसमयेन कर्तव्यं, न काण्डानुसमयेन। एवं सर्वपशुगणेषु। द्र० काण्डानुसमय-, पदार्थानुसमयः—। २. प्राजापत्यपशुषु सर्वेषामेव दैवतैः अवदानैः दैवतानुसमयः सौविष्टकृतैः सौविष्टकृतानां ऐडैश्च ऐडानाम्। द्र० मी०को० पृ० २८४९।

**प्राणदान—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे साकमेधपर्वणि १. त्रैयम्बकपुरोडाशानां 'यस्ते प्राणः' (का० श्रौ०

२।८।१४) इति मन्त्रेण पुरोडाशाञ्जनं प्राणदानमित्युच्यते। (तु०—का० श्रौ० ५।१०।९ विद्याधरः)। तत्र पुरोडाशशब्देन हविर्मात्रं गृह्यते। घृतेनाभिघारणमञ्जनमुच्यते। २. हविषामुद्वासनकाले उद्वासनात् पूर्वं हविषि आज्यप्रक्षेपः प्राणदानमुच्यते (तु०—का० श्रौ० १।८।३९ टि० विद्याधरः)।

**प्राणभक्ष—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासयोः दर्शविकृतौ पिण्डपितृयज्ञे अन्यत्र चेष्टिपशुसोमेषु प्राणभक्षे उपदिष्टे नासिकया अवघ्राणमात्रं प्राणभक्ष इत्युच्यते। तत्र पिण्डपितृयज्ञे 'अत्र पितरो मादयध्वम्' इत्यादि मन्त्रेण पिण्डान् दत्तान् अनुमन्त्रयते। ततः सव्येनाङ्गेन उदङ्ङावृत्य शक्त्यनुसारेण उच्छ्वासप्रतिबन्धं कृत्वोच्छ्वस्य पिण्डाभिमुखी भूत्वा 'अमीमदन्त पितरः' इत्यादिमन्त्रेण अनुमन्त्रयते। ततः पिण्डचरुशेषं तूष्णीं प्राणभक्षं भक्षयतीति विशेषोऽवधेयः। **द्र०** श्रौ०प०नि० पृ० ७३।

**प्राणभृत्—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे प्राणशब्दोपेतान् मन्त्रानुपधानकाले विभ्रतीति प्राणभृत्संज्ञका इष्टकाः प्राणभृत इत्युच्यन्ते (तु०— तै० सं० सा० ४।३।६)।

**प्राणसंहिता—** (सा०) स्वाध्याये ब्रह्मयज्ञ प्रकरणे वर्णानामेकप्राणयोगः संहिता प्राणसंहिता भवति। (तु०—शु०प्रा० १।१५८)। **द्र०** संहिता—।

**प्राणसंतत—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. प्रयोगकाले अनुच्छ्वस्योक्तिः प्राणसन्ततमित्युच्यते। (तु०— आ०श्रौ० २।१५।१४ षड्गुरुशिष्यः २. प्रणवेनावसायानुच्छ्वस्योत्तरां प्रतिपद्यते इति प्राणसंततमुच्यते। आ०श्रौ० २।१७।४ देवत्रातः।

**प्राणसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे महाव्रतेऽहनि 'इन्द्रं नरः (साम० ३१८) इत्यस्यां 'हाउ३आयुः३सात्य३म्' इति गीयमानं साम प्राणसामोच्यते। तेन साम्ना महाव्रतेऽहनि आहवनीयोऽग्निरुपस्थीयते। परिमात्संज्ञा चास्य विधीयते (तु०—तां० ब्रा० सा० ५।४।१)। **द्र०** परिमाद्—।

**प्रातर्—** (सा०) अह्नः प्रथमो यामः प्रातर्भवति (तु०—आ०श्रौ० ३।१२।२ देवत्रातः)।

**प्रातरनुवाक—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. उपवसथाहरनन्तरं सुत्यादिने (पञ्चमेऽहनि) प्रातःकाले यज्ञं गच्छन्तीति प्रातर्यावाणः अग्निः, उषाः, अश्विनौ इति त्रयो देवाः 'प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि' इति संप्रैषमन्त्रेऽनुवचनार्थं देवानुकूलयितुमनूच्यन्ते। ते देवाः प्रत्येकं सप्तभिः सप्तभिश्छन्दोभिः युक्ताभिर्ऋग्भिर्यज्ञभूमिमागच्छन्ति। तेषां प्रीत्यर्थं सप्तानां गायत्र्यनुष्टुब्बृहत्युष्णिग्जगतीपङ्क्तिच्छन्दसां यथाक्रमं समाम्नात ऋक्समाम्नायस्त्रिभिः आग्नेयोषस्याऽऽश्विनसंज्ञकैः क्रतुभिः (काण्डैः) विभक्तः प्रातरनुवाक उच्यते। २. 'प्रातर्वै स तं देवेभ्योऽन्वब्रवीत् यत् प्रातरन्वब्रवीत् तत्प्रातरनुवाकस्य प्रातरनुवाकत्वम्'। अर्थात् प्रातः काल एन स प्रजापतिः तमनुवाकम् ऋक्समूहं देवार्थमनुक्रमेणाब्रवीत्। यस्मादेवं तस्मात् प्रातरनुवाक इति नाम संपन्नम् (तु०—ऐ० ब्रा० सा० २।१५)। तत्र त्रिषु क्रतुषु (क) आग्नेये क्रतौ प्रातरनुवाके पूर्वोक्तानां गाय-

त्र्यादीनां सप्तच्छन्दसां पृथक् सूक्तेषु १. 'उपप्रयन्त:' (ऋ० १ ।७४) इति गायत्रम्। २. 'यमग्ने वसून्' (ऋ० १ ।४५) इत्यानुष्टुभम्। ३. अबोध्यग्नि: (ऋ० ५ ।१) इति त्रैष्टुभम्। ४. 'एना वो अग्निम्' (ऋ० ७ ।१६) इति बार्हतम्। ५. 'अग्ने वाजस्य' (ऋ० १ ।७९) इत्यौष्णिहम्। ६. 'जनस्य गोपा:' इति जागतम्। ७. 'अग्निं तं मन्ये' (ऋ० ५ ।६) इति पाङ्क्तम्। इत्येतानि सप्तच्छन्दो युक्तानि सप्तसूक्तान्यनूच्यन्ते। (ख) एवमेव उषस्ये क्रतौ प्रातरनुवाके गायत्र्यादि-सप्तच्छंदसां पृथक्सूक्तेषु १. 'प्रति ष्या सूनरी' (ऋ० ४ ।५२) इति गात्रम्। २. 'उषो भद्रेभि:' (ऋ० १ ।४९)। इत्यानुष्टुभम्। ३. 'इदं श्रेष्ठम्' (ऋ० १ ।११३) इति त्रैष्टुभम् ४. 'प्रत्यु अदर्शि' (ऋ० ७ ।८२) इति बार्हतम्। ५. 'उषस्तच्चित्रम्' (ऋ० १ ।९२)। इति इत्यौष्णिहम्। ६. 'एता उत्या' (ऋ० १ ।९२)। इति जागतम्। ७. 'महे नो अद्य' (ऋ० ५ ।७९) इति पाङ्क्तम्। इत्येतानि सप्तच्छन्दोयुक्तानि सप्तसूक्तानि। (ग) आश्विने क्रतौ प्रातरनुवाके गायत्र्यादिसप्तच्छन्दसां पृथक्सूक्तेषु १. 'एषो उषा अपूर्व्या' (ऋ० १ ।४६) इति गायत्रम्। २. 'यदद्य स्थ:' (ऋ० ५ ।७३) इत्यानुष्टुभम्। ३. 'आ भात्यग्नि:' (ऋ० ५ ।७६) इति त्रैष्टुभम्। ४. 'इमा उ वाम्' (ऋ० ७ ।७४) इति बार्हतम्। ५. 'अश्विना वर्ति:' (ऋ० १ ।९२)। इत्यौष्णिहम्। ६. 'अबोध्यग्निर्ज्म' (ऋ० १ ।१ ।५७) इति जागतम्। ७. 'प्रति प्रियतमम्' इति पाङ्क्तम्। इति सप्तच्छन्दोयुक्तानि सूक्तानि च। (तु०—ऐ० ब्रा० सा० २ ।१५; आ०श्रौ० ४ ।१३। ६-८; १४ ।१-२; १५ ।१-२)। यद्यपि आश्रौ० सूत्रे प्रातरनुवाकसमाम्नाये उक्तच्छन्दसामनेकानि सूक्तानि ऋचश्चाम्नाता: किन्तु सर्वेषां छन्दसामेकैकं सूक्तं गृह्णीयात्। एवं क्रियमाणे यावान् ऋक्समूह: सम्पद्यते स एव प्रातरनुवाको भवति। तदुक्तम्—'इत्येतेषां छन्दसां पृथक्सूक्तानि प्रातरनुवाक:' इति विशेषोऽवगन्तव्य: (तु०—आ०श्रौ० ४ ।१५ ।२ नारायण:)। इति प्रथम: प्रातरनुवाक:।

**प्रातरनुवाक**— पूर्वोक्तात् प्रातरनुवाकादन्योऽयं प्रातरनुवाक: 'शतप्रभृत्यपरिमित:' इत्युक्त:। अयं हि शतादधिको द्विशतादर्वाक् अनियतसंख्यो भवतीत्यर्थ:। अत एवास्मिन् द्वितीये प्रातरनुवाकेऽर्थात् (प्रयोजनात्) सूक्तानां खण्डनं भवति। पूर्वस्मिन्। १. प्रातरनुवाके तु सूक्तानामखण्डनम्। अर्थात् यानि त्रिषु क्रतुषु सप्त सप्त छन्दांस्यनुक्रान्तानि तेषां सर्वेषां पृथक्सूक्तानि गृह्णीयात्। न किंचिदपि छन्द: परिवर्जयेत्। सर्वेषां छन्दसामेकैकं सूक्तं गृह्णीयादिति विशेष:। (तु०—आ०श्रौ० ४ ।१५ ।३ नारायण:) अत्रोक्तच्छन्दोनुक्रमे पूर्वस्मिन् कल्पे, शतप्रभृत्यपरिमिते उत्तरस्मिन् कल्पे वा यस्मिन् कल्पे स्वस्य छन्दसोऽधिकानि 'अगन्म महा' (ऋ० ७ ।१२) 'अतारिष्म (ऋ० ७ ।७३) 'ईडे द्यावा पृथिवी' (ऋ० १ ।११२) इति त्रीणि ध्रुवाणि माङ्गलान्यनुवक्तव्यानि। यदा च 'ईडे द्यावापृथिवीयपर्यन्ते सूक्तेऽनूक्ते तमसा उपघातो न जायते तदा तदेव सूक्तमावर्तयेत् यावत् तमोऽपगच्छेत्। तमस्यपगते पूर्वासनादुपसृत्य ईडे द्यावापृथिवीयस्य 'द्युभिरक्तुभि: (ऋ० १ ।११२ । २५) इत्युत्तमयर्चा 'प्रतिप्रियतमम्' (ऋ० ५ ।७५) इति सूक्तमुपसन्तनुयात्। तत्र प्रातरनुवाकस्यादित आरभ्य ईडेद्यावीयपर्यन्तं मन्द्रस्वर:

आरोहिक्रमेण सर्वः प्रयोक्तव्यः। तत्र उत्सृत्य इति उत्सर्पणस्वरूपमेवमुक्तं भवति। बद्धासन एव पूर्वस्थानात् स्थानान्तरे उत्पतन् युगधुरावन्तरेणोपविष्टः सन् प्रथममुपसृत्य पूर्वासनात् परतः सन् 'प्रति प्रियतमम्' (ऋ० ५।७५।१-८) इत्यष्टौ अन्वाह। ततः पुनरुत्सर्पणे द्वार्ये स्थूणे अन्तरेण सन् (प्रातरनुवाकस्य) उत्तमया 'अभूदुषा रुशत्पशुः' (ऋ० ५।७५।९) इत्यनया परिदध्यान् अनभ्याहतं आश्रावणप्रत्याश्रावणवद्भवति। इदं च प्रातरनुवाकानुवचनं प्रधानं कर्म न संस्कारकर्मेति विशेषोऽनुसन्धेयः। (तु०—आ०श्रौ० ४।१५।७; ९-११ नारायणः)। तत्रानूच्यानां मन्त्राणां संख्याविषये विकल्पाः ब्राह्मणयोः श्रौतसूत्रयोश्च प्रदर्शिताः। **द्र०** श्रौ०को० २ भा० पृ० २१९ टि०। इति च विशेषः।

**प्रातरनुवाककाल—** (हौ०, आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातरनुवाकः स्वेतरवैदिकलौकिकवाक्प्रवृत्तेः पूर्वं रात्र्याः संबन्धिनि महत्यवशिष्टे काले पाश्चात्ययामे अनुवक्तव्यः। (तु०—ऐ० ब्रा० सा० २।१५)। २. यः अध्वर्योरुपाकरणप्रैषमन्त्रपाठः स एव प्रातरनुवाकस्य कालः। तदाह आपस्तम्बः—'पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाकमुपाकरोति' (तु०—आप०श्रौ०)। ३. यस्यां रात्रौ अग्नीषोमीयस्य पशोः समाप्तिस्तस्या अन्त्ये चतुर्थयामे प्राक् प्रक्षिणां प्रादनात् प्रातरनुवाकायाऽऽमन्त्रितो (प्रेषितो) होता वाग्यतस्तीर्थेन प्रपद्य अग्नीध्रीये जान्वाचव्य 'आसन्यान्मन्त्रात् पाहि कस्याश्चिदभिशस्त्यै स्वाहा' इत्यनेन मन्त्रेण द्वे आहुती जुहुयात्। ततः आहवनीये 'वागग्रेगा उग्र एतु सरस्वत्यै वाचे स्वाहा' वाचं देवीं मनो नेत्रां विराजमुग्रां जैत्रीमुत्तमां मेह अक्षाम्। तामदित्या नावमिवारुहेमामनुमतां पथिभिः पारयन्तीं स्वाहा' इति द्वे आहुती जुहुयात्। ततो हविर्धानशालायाः पूर्वद्वारे रराटी रज्जुबद्ध्वा तां 'अन्तरिक्षं वीहि' इति मन्त्रेणाभि मृशति। ततो द्वारि भवे स्थूणे 'देवी द्वारौ मा मा सन्ताप्तम्, लोके मे लोककृतौ कृणुतम्' इति मन्त्रेण दक्षिणपाणिना पर्यायेणाभिमृशति। मन्त्रस्तु सकृदेव। हविर्धानयोर्मध्यदेशं प्रपद्य युगधुरावन्तरेणोपविशेत्। तत्रोपविश्य प्रेषितः सन् प्रातरनुवा- क्रमनुब्रूयात् मन्द्रस्वरेण (तु०—आ०श्रौ० ४।१३।१-६ नारायणः।

**प्रातरनुवाकसंप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्योः 'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि' इति संप्रैषः प्रातरनुवाकसंप्रैष इत्युच्यते। तं च संप्रैषं रात्रौ सुप्ताः मनुष्याः पक्षिणो वा यदा वदितुमारभन्ते ततः पूर्वमेव 'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहि' इत्याह अध्वर्युः (तु०—ऐ० ब्रा० सा० २।१५)।

**प्रातरनुवाकादिप्रैष—** (आध्व०, याज० ) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आसन्यहोमानन्तरं 'अग्नय इदम्' इति यजमानः तूष्णीं घृतानुषिक्तं शकलमाहवनीससमीपेऽवधाय तत्रैव तिष्ठन् संप्रेष्यति—'प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि, ब्रह्मन् वाचं यच्छ, सुब्रह्मण्य सुब्रह्मण्यामाह्वय, अग्नीत् सवनीयान् निर्वप, (**द्र०** सवनीयपुरोडाश—) प्रतिप्रस्थातः खरे पात्राणि युङ्ग्धि' इत्येते संप्रैषाः प्रातरनुवाकादौ याज-

मानाः संप्रैषा उच्यन्ते । द्र० आसन्यहोम—, श्रौ०प०नि० पृ० २५९ ।

**प्रातरनुवाकानुवचनप्रकार—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातरनुवाके अर्धर्चशः = एकैकस्मिन् ऋचोऽर्धर्चेऽवसाय अवसाय प्रातरनुवाकोऽनूच्यते । भवति । यथाऽध्ययनकाले प्रत्यर्धर्चमवसाद्य पठति तथैव प्रातरनुवाकानुष्ठानकालेऽपि । न तत्र ऋगन्ते प्रणव प्रक्षेपादिवत् किञ्चिन्नूतनं कर्तव्यमस्तीति विशेषोऽवगन्तव्यः (तु०—ऐ० ब्रा० सा० २ ।१८) । पृष्ठ्यषडहस्य चतुर्थेऽहनि तु यः प्रातरनुवाकस्तस्याद्यायाः 'आपो रेवतीः' (ऋ० १० ।३० ।१२) इत्यस्य ऋचो यावर्धर्चयोरादी तयोर्न्यूङ्खः कर्तव्य इति विशेषोऽवगन्तव्यः (तु०— आ०श्रौ० ७ । ११ ।१ नारायणः) । द्र० न्यूङ्ख—, अर्धर्चक्लृप्ति— ।

**प्रातरनुवाके सर्वकामस्य ऋचामपरिमितानुवचनकाल—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातरनुवाके शतं सहस्रमित्यादि संख्यापरिमाणं परित्यज्य मध्यरात्रादूर्ध्वमुपक्रम्य सूर्योदयात् प्राचीनकाले यावतीः ऋचः अनुवक्तुं शक्तिरस्ति तावतीरनुब्रूयात् इति मध्यरात्रादूर्ध्वं सूर्योदयात् प्राचीनकालः अपरिमितकाल उच्यते । अपरिमितत्वं च शतादूर्ध्वं भवति (तु०—आ०श्रौ० ४ ।१५ ।३ नारायणः) । प्रजापतेः प्रातरनुवाकः प्रियं शास्त्रम्, अतस्तस्मिन् सर्वे कामा अन्तर्भवन्ति । एवं तदनुवचनं सर्वकामप्राप्त्यै भवति । (तु०—ऐ० ब्रा० २ ।१७) ।

**प्रातर्यावदेव—** (सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने सुत्यादिने प्रातःकाले यान्ति यज्ञभूमिं गच्छन्तीति प्रातर्यावाणो देवाः अग्निः उषाः अश्विनाविति त्रय उच्यन्ते । त एते देवाः प्रत्येकं सप्तच्छन्दोयुक्ताभिर्ऋग्भिः शस्ता यज्ञभूमिमागच्छन्तीति । प्रातर्यावाण अभिधीयन्ते । द्र० १. प्रातरनुवाक— ।

**प्रातःकाल—** (सा०, आध्व०) रात्रेश्चतुर्थकालादौ आदित्यस्य प्रथमकालात् प्रातः कालो भवति । (तु०—आ०श्रौ० २ ।२ ।५ देवत्रातः) । द्र० प्रातर्— ।

**प्रातःसवन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. अपोनप्त्रीयाभ्य ऊर्ध्वं पाशुकं कर्म । तदादि प्रातःसवनमुच्यते (तु०—आ०श्रौ० ५ ।१ । ४ देवत्रातः) । २. यज्ञभूमेः पूर्वस्यां दिशि यस्मादग्निस्तस्मादाग्नेयं प्रातः सवनम् । तु०—ऐ० ब्रा० सा० ६ ।४) । ३. उपांशुग्रहादि अच्छावाकशस्त्रपर्यन्तं प्रातःसवनमुच्यते । तत्र सर्वत्र मन्द्रस्वरो भवति, इति विशेषोऽवधेयः (तु०—आ०श्रौ० ५ ।१ ।४ नारायणः) । ४. सवनादिभूतसर्पणकर्मादि सवनान्तभूतसर्पणकर्मपर्यन्तं (प्रसूतान्तं, प्रातःसवनमुच्यते (तु०— का० श्रौ० ९ ।८ । १७-१९; ९ ।१४ ।२०) । द्र० सर्पणकर्मन् । ५. 'प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहि' इत्यादि प्रातरनुवाकप्रैषमारभ्य 'प्रशास्तः 'प्रातर्यावभ्यो होतरनुब्रूहि' प्रसुहि, तेन सर्पेतेत्युक्ते सर्वे यथाप्रसृप्तं निःसर्पन्ति, सन्तिष्ठते प्रातःसवनम्, इत्येतदन्तं कर्म प्रातःसवनमित्युच्यते । द्र० श्रौ०प०नि० पृ० २५९-२९४ । ६. प्रातरनुवाकोपाकरणमार-

भ्याच्छावाकशस्त्रान्ते ऐन्द्राग्नग्रहप्रचारपर्यन्तं प्रातःसवनम्। द्र० श्रौ०को० २ भा० पृ० २१६-३५।

**प्रातःसवनग्रह—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. उपांशुरन्तर्यामश्च वायवश्चैन्द्रवायवः। ततश्च मैत्रावरुणः शुक्रो मन्थी ततः परः॥ तत आग्रयणो नाम ध्रुवो। नवम इत्यतः। इति पूर्वाचार्यैः संगृहीताः प्रातःसवने नवग्रहाः॥ २. नवाध्वर्युः प्रातः सवने ग्रहान् गृह्णाति तानेव पावयन्ति (तु०—तां० ब्रा० ६।८।४)। ३. अध्वर्युणा प्रातः सवने ऐन्द्रवायवमैत्रावरुणादयो धाराग्रहा नवसंख्याका गृह्यन्ते। आश्विनो दशमो गृह्यते। ४. उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, आश्विनः, शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, ध्रुवः, (वैकल्पिको वैश्वानरः), ऋतुग्रहौ, ऐन्द्राग्नः, वैश्वदेवः, इति प्रातःसवनिकाः त्रयोदश ग्रहाः (तु०— का० श्रौ० भूमिका पृ० ४९)। ५. प्रातःसवने उपांशुः, अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, शुक्रः मन्थी, आग्रयणः, उक्थ्यः, ध्रुवाः, आश्विनः इति दश ग्रहा गृह्यन्ते। दशौ तानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति। द्र० मी०को० पृ० २८५०। ६. प्रातः सवने धाराग्रहेभ्यः पूर्वं (अदाभ्यग्रहः), अंशुग्रहः (प्रचर्यते)। द्र० मी०को० पृ० १८५०। द्र० धाराग्रह—। तत्र प्रातः सवने शुक्रामन्थिग्रहप्रचारे अच्छावाकचमसवर्जं नव चमसाः सवनमुखीयाः प्रथममिन्द्राय हूयन्ते। इतरयोस्तु सवनयोर्दश दश। तत्र होत्रकाणां चमसेषु सकृत् सकृत् इन्द्राय हुतेषु तत्तच्छेशेषु सत्वेव अभक्षितेषु पुनरपि द्रोणकलाशात् सोममुन्नीय मित्रावरुणादि- देवताभ्यो हुत्वा तेषु चमसेषु हुत्वा तेषु चमसेषु हुतशेषः सोमः भक्ष्यते इति विशेषोऽवगन्तव्यः। द्र० सवनमुखसोमभक्ष—, मी०को० पृ० २८५०-५१।

**प्रातःसवनच्छन्दस्—** (सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु गायत्री प्रातःसवनच्छन्दः। तच्चाह—निप्रयुज्यते। तस्माद् गायत्रीच्छन्दस्कं हि प्रातः सवनम्।

**प्रातःसवनदेवता—** (सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने देवता अग्निर्भवति, तत आग्नेयं प्रातःसवनमित्युच्यते। (तु०—ऐ०ब्रा० ६।४)।

**प्रातःसवनपदार्थ—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयुज्यमानाः समानाः केचन पदार्थाः। तत्र प्रातरनुवाकादि प्रातःसवनम्। तस्मात् पूर्वं यूपपरिव्ययणीयादि वपान्तं पाशुकं षोमीयं कर्म) कृत्वा ततो महारात्रे १. प्रातरनुवाकशस्त्रम्, २. सूर्योदयात् पूर्वमुपांशुग्रह (प्रचारः) ३. सूर्योदयात् पश्चात् अन्तर्यामहोमः (तु०—शां०श्रौ० भाष्यं पृ० २९६)। ४. उपांश्वन्तर्याम होमानन्तरं ग्रहान् गृहीत्वा बहिष्पवमानस्तवनम्। ५. यजमानहोतृजपानन्तरं सवनीयपशुः प्रचारः (तस्य वपा प्रातःसवने, पुरोडाशः माध्यन्दिनसवने, हविः (अङ्गानि) तृतीयसवने हूयन्ते द्र० प्रदान—)। ६. धिष्ण्योपस्थानादि कृत्वा सवनीयपुरोडाशयागः। ७. द्विदेवत्य-शुक्रामन्थिग्रहप्रचाराद्यनन्तरं चमसोन्नयनादि सवनमुखसोमभक्षणान्तम्। ८. ऋतुयाजादि होतुर्होत्रकाणां च स्तोत्रशस्त्रान्तं कर्म चेति प्रमुखाः पदार्थाः प्रातः सवनस्य पदार्थाः।

**प्रातःसवनशस्त्र–** (हौ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रप्रकरणे...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आज्य-प्रउगाख्ये द्वे शस्त्रे होतुः। मैत्रावरुणशस्त्रं ब्राह्मणाच्छंसिशस्त्रं अच्छावाकशस्त्रमिति त्रीणि शस्त्राणि होत्रकाणामिति पञ्च शस्त्राणि प्रातः सवनस्य शस्त्राणि भवन्ति।

**प्रातःसवनसमाप्ति–** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आज्यशस्त्रेभ्य ऊर्ध्वं प्रातःसवनं समाप्यते (तु०—तां० ब्रा० सा० १।५।१०)। द्र० सर्पणकर्मन्।

**प्रातःसवनस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने आदौ होतुर्बहिष्पवमानस्तोत्रं त्रिवृत्स्तोकम्, (९) ततो होतुर्होत्रकाणां चत्वारि आज्यस्तोत्राणि पञ्चदशस्तोमकानि (मी०को० पृ० २८५०) इति पञ्च स्तोत्राणि। तत्र आज्यस्तोत्रेषु चतुर्ष्वपि एकैकस्मिन् स्तोत्रे तिस्रस्तिस्रः ऋचः १५५ ५-६०)। पठिता भवन्ति इति विशेषोऽवधेयः (तु०—का० श्रौ० १०।१।१६ टि० विद्याधरः)।

**प्रातःसवनस्तोम–** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने त्रिवृत्स्तोमो बहिष्पवमानाख्यं स्तोत्रं वहति निष्पादयति। पञ्चदशस्तोमः चत्वार्याज्यस्तोत्राणि वहति। एवं द्वौ स्तोमौ प्रातःसवनं निर्वहतः। (तु०— तै० सं० सा० ७।१।११)।

**प्रातःसवनान्ते निःसर्पण–** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः 'अग्निर्मूर्धा दिवः' इत्येकामाहुतिं, द्वे मिन्दाहुती, व्याहृतीश्च हुत्वा आह 'प्रशास्तः प्रसुहि, तेन 'सर्पत' इत्युक्ते सर्वे यथा प्रसृप्तं निःसर्पन्ति। संतिष्ठते च प्रातःसवनम्। तदिदं प्रातः सवनान्ते निःसर्पणमुच्यते। द्र० श्रौ०प०नि०। पृ० २९४। प्रातः सवन—।

**प्रातःसवनारम्भ–** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशुवपामार्जनान्ते वसतीवरीपरिहरणानन्तरं पितापुत्रीयसुब्रह्मण्याह्वाने कृते सति ग्रावसु अभिषवणार्थं सोमस्य निधानात् प्रभृति प्रातः सवनमारभ्यते (तु०—का०श्रौ० ८।९।६; ११; ९।१।५;९-११) द्र० वसतीवरीं परिहरणं—। प्रातः सवन—।

**प्रातःसवनार्थसोममानकरण–** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अदाभ्यग्रहहोमानन्तरं पात्रान्तरेऽवनीता होतृचमसीया होतृचमसे आनीय यजमानाय दत्वोपांशुसवनं ग्रावाणां 'देवस्य त्वा' इत्यादिमन्त्रेणादत्ते। 'ग्रावाऽस्यध्वरकृद्देवेभ्यो गम्भीरमिममध्वरं कृध्युत्तमेन पविनेन्द्राय सोमँ सुषुतं मधुमन्तं पयस्वन्तं वृष्टिवनिम्' इत्यभिमन्त्रयते। उपांशुसवनं चर्मणः पूर्वार्धे प्रागायतं निधाय राजानं विस्रस्य उपांशुसवनस्योपरि मिमीते 'इन्द्राय त्वा वृत्रघ्ने, इन्द्राय त्वा वृत्रतुरे, इन्द्राय त्वाऽभिमातिघ्ने, इन्द्राय त्वाऽऽदित्यवते, इन्द्राय त्वा विश्वदेव्यावते' इत्येकैकेन मन्त्रेण क्रमेण। तत्र प्रथममङ्गुष्ठयुक्तया प्रदेशिन्या। द्वितीयमङ्गुष्ठयुक्तयोपकनिष्ठिकया। तृतीयं तथैव प्रदेशिन्या। चतुर्थं तथैव कठिनिष्ठिकया। पञ्चमं तथैव मध्यमया। एवं विमाय पञ्चकृत्वस्तूष्णीं मिमीते। अङ्गुष्ठयुक्तया कनि-

ष्ठिकया प्रथमम्। तथैव उपकनिष्ठिकया द्वितीयम्। तथैव कनिष्ठिकया तृतीयम्। तथैव प्रदेशिन्या चतुर्थम्। महानाम्न्या तथैव पञ्चमम्। एवं दशकृत्वो मिमानोऽर्धं राजानं मिमीते। तदिदं प्रातःसवनार्थं सोममानकरणमित्युच्यते। **द्र०** श्रौ०प०नि० पृ० २६८।

**प्रातःसवनीयप्रचार —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने अध्वर्युः जुहूपभृतोरुप स्तृणानः आह-'प्रातः सावस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रूहि' इति। अवदानादि प्रत्यञ्जनान्तं कृत्वा जुहूपभृतावादाय पृष्ठ्याया दक्षिणतः प्राङ्मुखस्तिष्ठन्नाह— 'प्रातः प्रातः सावस्य इन्द्राय पुरोडाशान् प्रस्थितान् प्रे३ष्य' इति। आमिक्षायास्तूष्णीमिडायामवदानम्। सोऽयं प्रातः सवनीयप्रचार उच्यते। तत्र ऐष्टिकयाशुकानुष्ठानकाले ब्रह्मयजमानौ आहवनीयस्य दक्षिणत उपविशतः तथा द्विदेवत्य प्रचारे। सौमिके तु सदसि पूर्वो यजमानोऽपरो ब्रह्मा। आग्नीध्र उत्करे (उपविशति), सौमिके त्वाग्नीध्रीये। इति विशेषोऽवगन्तव्यः। **द्र०** श्रौ०प०नि० पृ० २८१-८२।

**प्रातःसवनीयप्रस्थितयाज्या—** **द्र०** प्रस्थितयाज्या—।

**प्रातःसवने अच्छावाकप्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवनीये अच्छावाकचमसप्रचारे प्रस्थितसोमानां 'ये३यजामहे प्रातर्यावभिरागतं (ऋ० ८।३९।७१० वौ३षट् सोमस्याग्ने वीहि' इत्यच्छावाकस्य प्रस्थितयाज्या भवति। **द्र०** आ०श्रौ० ५।७।६६; श्रौ०को० २ भा० पृ० ३१७। प्रस्थितयाज्या, प्रस्थितयाज्यप्रचार—।

**प्रातःसवने अध्वर्योः प्रतिगर—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोम तद्विकृतिषु चैकाहाहीनसत्रेषु 'शोंसा|मो दैवोम्' इति प्रातःसवने अध्वर्योः प्रतिगरः। प्रतिगीर्यतेऽनेन होता इति प्रतिगर उच्यते तदुक्तम्—'शोंसामो दैवोम्' इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण (तु०— ऐ० ब्रा० ३।१२)। अध्वर्युः प्रातः सवने शोंसामो दैवोम्' इत्यध्वर्युः प्रतिगृणाति पञ्चाक्षरेण। (तु०— ऐ० ब्रा० ३।१२)। अध्वर्युः प्रातःसवने शोंसामो दैवोम् इति मन्त्रेण। (प्रतिगरेण) होतारं प्रतिगृणाति प्रत्युत्तरं ब्रूयात् इत्यर्थः। **द्र०** प्रतिगर—।

**प्रातःसवने अध्वर्योः शस्त्रोत्तरकालीनमन्त्र—** (आध्व०, हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होत्रा शस्त्रोत्तरकालीने 'उक्थं वाचि' इति मन्त्रे पठिते सति अध्वर्युः 'ओग्रक्थशाः' इति चतुरक्षरं ब्रवीति। सोऽयं चतुरक्षरो मन्त्रः अध्वर्योः शस्त्रोत्तरकालीनो मन्त्र उच्यते (तु०— ऐ० ब्रा० सा० ३।१२)।

**प्रातःसवने आग्नीध्रस्य प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवनीये आग्नीध्रचमसप्रचारे प्रस्थितसोमानां 'ये३यजामहे उशान्नाय वशान्नाय (ऋ० ८।४३।१) वौ३षट् सोमस्याग्ने वीहि' इत्याग्नीध्रस्य प्रस्थितयाज्या (आ०श्रौ० ५।५।१५-१८ श्रौ०को० २ भा० पृ० ३१३)। **द्र०** प्रस्थितयाज्याप्रस्थितयाज्याप्रचार—।

**प्रातःसवने उन्नीयमानसूक्तानुवचन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आश्विनग्रहस्य 'वावृधाना शुमस्पती' (ऋ० ८।५।११)। इति याज्याऽनन्तरं यदा चमसा उन्नीयन्ते सोमेन पूर्यन्ते तदानीमध्वर्युणा प्रेषितो मैत्रावरुणः 'आ त्वा वहन्तु हरयः' (ऋ० १।१६।१-९ आ०श्रौ० ५।५।१४ ऐ० ब्रा० ३।९ श्रौ०को० २ भा० पृ० ३०६) इति नवर्चं सूक्तमन्वाह इदं सूक्तं प्रातःसवने उन्नीयमानसूक्तमनूच्यते। द्र० उन्नीयमानसूक्तानुवचन—।

**प्रातःसवने निविदां स्थान —** (हौ०) सोमयज्ञेषु प्रकृतिभूत........ अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आज्यशस्त्रस्य पुरस्तात् निविदो धीयन्ते। अर्थाद् 'देवेद्ध' इत्यादयो निविदः प्रातः सवनगत सूक्तशस्त्रमन्त्रेभ्यः पूर्वं षष्ठ्यन्ते। द्र० निवित्पदसमाम्नायपठनविधि—, निविदां सवनभेदेन स्थानभेद—।

**प्रातःसवने नेष्टुः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवनीये नेष्टृचमसप्रचारे प्रस्थितसोमानां 'ये३यजामहे अग्ने पत्नीरिहावह' वौ३षट् सोमस्याग्ने वीहि' इति नेष्टुः प्रस्थितयाज्या भवति (आ०श्रौ० ५।५।१५-१८ श्रौ०को० भा० पृ० ३१३)। द्र० प्रस्थितयाज्या—, प्रस्थितयाज्याप्रचार—।

**प्रातःसवने पोतुः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवनीये पोतृचमसप्रचारे प्रस्थितसोमानां ये३यजामहे मरुतो यस्य हि क्षये' (ऋ० १।८६।१) वौ३षट् सोमस्याग्ने वीहि' इति पोतुः प्रस्थितयाज्या भवति (आ०श्रौ० ५।५।१५-१८ श्रौ०को० २ भा० पृ० ३१३) द्र० प्रस्थितयाज्या—, प्रस्थितयाज्याप्रचार—।

**प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवनीये ब्राह्मणाच्छंसिचमसप्रचारे प्रस्थितसोमानां 'ये३य- जामहे इन्द्र त्वा वृषभं वयं' (ऋ० ३।२३।४०।१)। वौ३षट् सोमस्याग्ने वीहि' इति ब्राह्मणाच्छंसिनाः प्रस्थितयाज्या भवति। आ०श्रौ० श्रौ०को० पूर्ववत्।

**प्रातःसवने भक्षिताऽऽप्यायितनाराशंसचमसभक्षमन्त्र—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामि' इति प्रातःसवने नाराशंसचमसभक्षमन्त्रः। (तु०— ऐ० ब्रा० ७।३७)।

**प्रातःसवने मैत्रावरुणस्य प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवनीये मैत्रावरुणचमसप्रचारे प्रस्थितसोमानां 'ये३यजामहे मित्रं वयं हवामहे' (ऋ० १।२३।४) वौ३षट् सोमत्याग्ने वीहि' इति मैत्रावरुणस्य प्रस्थिता याज्या। (आ०श्रौ० श्रौ०को० पूर्ववत्)। द्र० प्रस्थितयाज्या—, प्रस्थितयाज्याप्रचार—।

**प्रातःसवने याज्यापाठनियम—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'अनवानं प्रातः सवने यजेत् (ऐ० ब्रा० ६।८)। द्र० याज्यापाठविधि—।

**प्रातःसवने शस्त्रान्तवाचन—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहा-

हीनसत्रेषु प्रतिगीर्य प्रात:सवने शस्त्रान्ते 'उक्थशा:' इत्युक्त्वा यजमानं वाचयति- 'शस्त्रस्य रयीणाम्' इति तदिदं शस्त्रान्ते वाचनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २८०।

**प्रात:सवने सवनीयपुरोडाशयागस्य पुरोनुवाक्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु प्रात: सवने धानावन्तं करम्भिणम्' (ऋ० ३।५२।१) इति सवनीयपुरो-डाशयागस्य पुरोनुवाक्या। आ०श्रौ० ५। ४।२ श्रौ०को० २ भा० पृ० ३०२।

**प्रात:सवने सवनीयपुरोडाशयागस्य प्रैष—** (हौ०) सोमयज्ञेषु प्रकृतिभूत..अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने 'होता यक्षदिन्द्रं हरि वाँ इन्द्रो' धाना अत्तु पूषणवान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो मित्रावरुणयो: पयस्या प्रात: प्रात: सावस्य पुरोडाशा इन्द्र: प्रस्थिताञ्जुषा-णो वेतु होतर्यज (ऋ०खि० ५।७।४ अ०, आ०श्रौ० ५।४।३ श्रौ०को० २ भा० पृ० ३०२)।

**प्रात:सवने सवनीयपुरोडाशयागस्य याज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने 'ये३यजामहे इन्द्रं हरिवाँ इन्द्रो धाना अत्तु..जुषाणो वेतु वौ३षट्' इति सव-नीयपुरोडाशयागस्य याज्या। **द्र०** श्रौ०को० २ भा० पृ० ३०२। अत्र सव-नीयपुरोडाशस्य य: प्रैष: स एव आदौ 'ये३यजामहे' अन्ते 'वौ३षट्' इति द्वाभ्यां युक्तो याज्या भवतीति विशेषोऽनुसन्धेय:। तु०—तत्रैव श्रौ०को० टि० तथा चाश्वला-यन:— होता यक्षदसौ यजयोस्तु स्थान आगूर्वषट्कारौ यत्र क्व च प्रैषेण यजेत्' (आ०श्रौ० ५।४।५)।

**प्रात:सवने होतुराहाव—** (हौ०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टो- मातिरात्रप्रकरणे सोमप्रथम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु प्रात:सवने 'शोंसावोम्' इति होतु: आहाव:। आहूयतेऽनेनाध्वर्युरित्याहाव उच्यते। तदुक्तम्—'शोंसावोमित्याह्वयते त्र्यक्षरेण' (ऐ० ब्रा० ३।१२)। तत: होता प्रात:सवने शोंसावोमिति आहावेन शस्त्रा-दिषु मन्त्रपाठार्थं अध्वर्युमाह्वयते त्वयाऽनु-ज्ञा देया इति ब्रूते। **द्र०** आहाव— आहावप्रदेश—।

**प्रात:सवने प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु प्रात:सवनीये होतृचमसप्रचारे प्रस्थितसोमानां 'इदं ते सोम्यं मधु..' (ऋ० ८।१८।८) इतीयं होतु: प्रस्थितयाज्या भ-वति। (तु०— आ०श्रौ० ५।५।१५-१८ श्रौ०को० २ भा० पृ० ३१२)। **द्र०** प्रस्थितयाज्या—, प्रस्थितयाज्याप्रचार—।

**प्रात:सवने होतु: शस्त्रोत्तरकालीनमन्त्र—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होता प्रात:स-वने शस्त्रं पठित्वा 'उक्थं वाचि' इति चतुर-क्षरं मन्त्रं ब्रवीति। सोऽयं मन्त्रो होतु: शस्त्रोत्तरकालीनो मन्त्र उच्यते (तु०— ऐ० ब्रा० सा० ३।१२)।

**प्रातिपदिक—** (सा०) १. आकृतिमात्राभिधायकं प्रातिपदिकम्। २. प्रातिपदिकं जातिं ब्रूते लक्षणया तु द्रव्यम्। ३. धातुप्रत्ययतदन्त-भिन्नत्वे सति अर्थवच्छब्दत्वं पातिपदिक-त्वम्। 'अर्थवदधातुरप्रत्यय: प्रातिपदिकम्' 'कृत्तद्धित समासाश्च' (पा० १।२।४५-

४६)। इति सूत्राभ्याम्। द्र० मी०को० पृ० २८५१।

**प्रातिशाख्य—** (सा०) संहितायां यद्दृष्टं तदनेन (प्रातिशाख्येन) शास्त्रेण व्याख्यायते नानेनादृष्टं साध्यते (तु०—शु०प्रा० २।६० उ० भा०)।

**प्रातिशाख्यविषय—**(सा०) १. शिक्षाव्याकरणानां यदयं विवरणात्मको ग्रन्थः, ततोऽत्र नातीव शब्दसंकोच इष्यते। ऋ० प्रा० शु० प्रा० अ०प्रा० शौच इत्येतेषु प्रातिशाख्येषु हि संहिताप-क्रमास्त्रयो विषयाः प्रतिपादिताः सन्ति। तैत्तिरीयप्रातिशाख्ये तु संहितापद-क्रम-जटाः इति चत्वारः। २. प्रातिशाख्यानि वा यानि स्वाध्यायवदधीयन्ते। प्रातिशाख्यैः पुनः वेदसंहिताध्ययनानुगतस्वर-सन्धि-प्रयति-विवृति-पूर्वाङ्गपराङ्गानुसरणात् वेदाङ्गत्वमाविष्कृतम्। तत्र सर्वानुदात्तपदसंहतिः प्रयतिः। असंहिता विवृतिः। स्वरितस्योदात्तोंऽशः पूर्वाङ्गं। अनुदात्तः पराङ्गः। इत्यर्थोऽवगन्तव्यः। द्र० मी०को० पृ० २८५४।

**प्रादेश—** (सा०) इष्टपशुसोमेषु प्रकृतिविकृतिभूतेषु वेदिसाधने परिमाणं विस्तृताङ्गुष्ठाग्रमारभ्य विस्तृततर्जन्यग्रपर्यन्तः प्रादेश इत्युच्यते। तथा च कोषः—'प्रादेशतालगोकर्णास्तर्जन्यादियुते तते अङ्गुष्ठे' इति। द्र० श्रौ०प०नि० पृ० २५।

**प्रादेशकरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमास प्रकरणे तद्विकृतिषु च प्रादेशस्य वेद्यां प्रागग्रतया स्थापनं प्रादेशकरणमित्युच्यते। द्र० श्रौ०प०नि० पृ० २५।

**प्रायणीय—** (सा०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहविवृतिभूतेषु सत्रेषु प्रयुक्त १. प्रायणीयशब्दः प्राथम्यमभिधत्ते। अत एव प्रथमस्याह्नः (ज्योतिष्टोमातिरात्रस्य) प्रायणीयमिति नाम भवति। यस्मात् (स्वर्ग) प्रयन्त्यनेनेति तत्प्रायणीयं नामेति संपन्नम्। २. प्रारभ्य अयते गच्छति प्रवर्तते कर्म अनेनेति व्युत्पत्त्या 'प्राथम्यविशिष्टं कर्म' प्रायणीयं नाम। ३. प्रयन्ति अनेन इति प्रायणीयं, प्रवर्तन्ते अनेन सत्रे इति एष प्रायणीयशब्दः गुणेन क्रियायोगेन तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते। ४. प्रायणीयं द्वादशाहे प्रथममहः गवामयने च प्रथममहः, तयोः प्रकृतिविकृतिभावो नास्ति। इति न द्वादशाहप्रायणीयात् धर्मातिदेशः। द्र० मी०को० पृ० २८६४।

**प्रायणीयातिरात्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिषु द्वादशाहगवामयनसत्रेषु प्रायणीयातिरात्रे द्वादशाहगवामयनयोः ज्यौतिष्टोमिको विध्यन्तः। द्र० मी०को० पृ० २८६५।

**प्रायणीयाहन्—** (अव्य०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे चतुर्विंशाख्यमहाः प्रकर्षेण यन्ति गच्छन्ति स्वर्गमनेनेति प्रायणीयमहरुच्यते। यद्यपि श्रुत्यन्तरे (सत्रेषु) प्रथमविहितस्यातिरात्रस्यैव प्रायणीय इति संज्ञा प्रसिद्धा तथापि प्रथमोत्तमयोरतिरात्रयोः सर्वत्र साधारणत्वादस्यैवाह्नो गवामयने असाधारणं प्राथम्यमिति कृत्वा एतदादिकं गवामयनस्वरूपम् इत्यस्मिन् द्वितीये चतुर्विंशे प्रायणीयशब्दोऽत्र प्रयुज्यते इति विशेषोऽवधेयः (तु०—तां० ब्रा० सा० ४।२।१)।

**प्रायणीयेष्टि—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-

हीनसत्रेषु दीक्षणीयेष्ट्यनन्तरभाविनी प्रायणीयेष्टिः उपक्रमात्मकः कर्मविशेषः । तदुक्तं 'स्वर्गं वा एतेन लोकमुपयन्ति' शंय्वन्ता प्रायणीया सन्तिष्ठते । न पत्नीः संयाजयन्ति' इति (तु०—ऐ० ब्रा० सा० १ ।१७) । सा शंरवन्ता प्रायणीया । द्र० दीक्षणीयेष्टि— ।

**प्रायणीयेष्टि—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत.... तद्विकृतिषु चैकाहाहीनसत्रेषु पत्नीयजमानयोर्दैक्षव्रतभक्षणानन्तरं अध्वर्युः अपररात्रे प्रेष्यति—'त्रिस्तनव्रतं दोहयत, अग्नीज्ज्योतिष्मतः कुरुत, व्रत्य वाचं यच्छ, पत्निवाचं यच्छ' इति । अध्वर्यु प्रतिप्रस्थातारौ पूर्ववद् (व्रतं पयः) दोहयित्वा श्रपयित्वा पूर्ववत् संस्कृत्य शिक्ये स्थापयतः । दैक्षमेन चतुस्तनं व्रतं पत्न्या भवति । यजमानः सूर्योदयादनन्तरमग्रेण शालां तिष्ठन् भूर्भूवः सुवरिति जपित्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति । अध्वर्युः 'ऐहि यजमान' इत्याहूय शालां प्रतिपादयति । यजमानो गार्हपत्यस्य पश्चादुपविश्य प्रायणीयेष्ट्या यक्ष्ये इति प्रकृतिवत् संकल्पयति । तत्र प्रायणीयेष्टिसंबन्धि हविः—व्रीहिमयश्चरुः आज्यं च । पञ्च प्रयाजाः अग्नीषोमावाज्यभागौ, पथ्या स्वस्तिः, अग्निः, सोमः सविता अदितिश्चेति प्रधानदेवताः, 'देवा आज्यपाः' इत्यादि प्रकृतिवत् (दर्शपूर्णमासवद् भवति) । अस्यामिष्टौ अन्वाधानं नास्ति । अध्वर्युः असिदादानादिकर्म प्रकृतिवत् करोति । चरोः पयसि जले वा श्रपणम् जले श्रपणपक्षे तु 'ब्रह्मन्नयः पयश्च प्रणेष्यामि' इति विशेषः । इतीयं प्रायणीयेष्टिरुच्यते । द्र० श्रौ०प०नि० पृ० २०३ ।

**प्रायेष्टि देवता हविस्—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रवणीयाया इष्टेः देवताः—पथ्या (पथ्यास्वस्तिः) अग्निः, सोमः, सविता, अदितिः । अत्र पथ्यादीनां चतसृणां देवतानामाज्येन यागः, अदितेस्तु चरुणा । अत्रापस्तम्बः—'चतुरः आज्यभागान् प्रतिदिशं यजति । पथ्यां स्वस्तिं पुरस्तात्, अग्निं दक्षिणतः, सोमं पश्चात्, सवितारमुत्तरतः, मध्ये अदितिं हविषा' इति (तु०—ऐ० ब्रा० सा० १ ।७) ।

**प्रायणीयेष्टि प्रधानदेवता याज्यानुवाक्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पथ्यायाः स्वस्तेः 'स्वस्ति नः (ऋ० १० ।६३ ।१५) इत्यनुवाक्या, 'स्वस्ति रिद्धि' (ऋ० १० ।६२ ।१०) । इति याज्या । अग्नेः 'अग्ने नय' (ऋ० १ ।१८८ ।१) इत्यनुवाक्या, 'आ देवानाम्' (ऋ० १० ।२३) । इति याज्या । सोमस्य—'त्वं सोमासि' (ऋ० १ ।९१ ।१) । इत्यनुवाक्या, 'या ते धामानि' (ऋ० १ ।९१ ।४) इति याज्या । सवितुः—'आ विश्वदेवम्' (ऋ० ५ ।८२ ।७) । इत्यनुवाक्या, 'य इमा' (ऋ० ५ ।८२ ।९) । इति याज्या । अदितेः—'सुत्रामाणम्' (ऋ० १० ।६३ ।१०) इति अनुवाक्या, 'महीमू षु मातरं' सुव्रतानाम्' (ऋग्वेदे नास्ति) इति याज्या । इत्येताः प्रधानदेवतानां याज्यानुवाक्या उच्यन्ते । (तु०—ऐ० ब्रा० सा० १ ।९) ।

**प्रायणीयेष्टि प्रयाज—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायणीयाया इष्टेः समिधः, तनूनपात्, इडा, बर्हिः, स्वाहाकारः, इति प्राकृताः पञ्च प्रयाजा भवन्ति । तत्र 'समिधो यजति, तनूनपातं यजति' इत्यादिना विहिताः पञ्च प्रयाजाहुतयः । तासां प्रकृतावानुष्ठानप्रकारः

आपस्तम्बेन प्रदर्शितः—'पञ्च प्रयाजान् प्राचो यजति, प्रतिदिशं वा—समिधः पुरस्तात्, तनूनपातं दक्षिणतः, इडां पश्चात् बर्हिरुत्तरतः, स्वाहाकारं मध्ये' इति। स प्रकारोऽत्र चोदकप्राप्तमपोह्य शरीरकान्तिश्रुताध्ययनं संपत्तिं च कामयमानस्य प्रकारान्तरं विधीयते यः पुमान् तेजो ब्रह्मवर्चसमिच्छेत् स प्रयाजाहुतिभिः प्राङ् इयात्। इति विशेषोऽवगन्तव्यः (तु०—ऐ० ब्रा० सा० १।८)।

**प्रायणीयेष्टिसंस्था—** (सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षणीयेष्टेरूर्ध्वं चिरं व्यवधानमकृत्वा प्रायणीयाख्याङ्गैः शंयुवाकपर्यन्तैः प्रायणीयामिष्टिमनुतिष्ठन्ति, दीक्षणीयेष्टिवत् पत्नीसंयाजपर्यन्तानि शंयुवाकात् पराणि नानुतिष्ठन्तीति शंय्वन्तं प्रायणीयं कर्म प्रायणीयेष्टेः संस्था कर्मोच्यते। (तु०— ऐ० ब्रा० सा० ३।४५)।

**प्रायणीयसंकल्प—** (याज०)सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यजमानो गार्हपत्यस्य पश्चादुपविश्य प्रायणीयेष्ट्या यक्ष्ये इति प्रकृतिवत् संकल्पयति। सोऽयं प्रायणीयेष्टिसंकल्प उच्यते। **द्र०** श्रौ०प०नि० पृ० २०३।

**प्रायणीयेष्टि सामिधेनी—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायणीयेष्टौ प्रकृतिभूताः (चोदकप्राप्ताः) धाय्यारहिताः पञ्चदश सामिधेन्य ऋचो भवन्ति।

**प्रायणीयेष्टिस्विष्टकृत्संयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायणीयेष्टेः स्विष्टकृतः संयाज्याख्ये याज्यापुरोनुवाक्ये— 'सेदग्निः' (ऋ० ७।१।१४) इति पुरोनुवाक्या, 'सेदग्निर्यो वः' (ऋ० ७।१।१५) इति याज्या। एते त्रिंशदक्षरे विराजौ भवत (तु०— ऐ० ब्रा० १।११)।

**प्रायणीयेष्टौ पत्नीसंयाजसमिष्टयजुषोरभाव—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायणीयेष्टौ 'पत्नीर्न संयाजयेत्, संस्थितयजुर्न जुहुयात्' (ऐ० ब्रा० १।११)। प्र० प्रायणीष्टिसंस्था—।

**प्रायश्चित्त....त्ति—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. प्रायो नाम नष्टं तस्य चित्तं नाम पुनः संधानं (समाधानं, योगः) प्रयाश्चित्तमुच्यते। यतो हि तद् अकृतस्य कृतत्वसंपादकम्, अन्यथाकृतस्य सुष्ठुकृतत्वसंपादकम्, कृतस्य निषिद्धस्याकृतत्वसंपादकं कर्म विधायकश्रुत्यादिनैव तथा प्रतिपादनात्। तच्च जपहोमादिरूपं तीर्थयात्रास्नानादिरूपं दोषानुसारेण श्रुत्यादिप्रतिपादितं प्रायश्चित्तमिति गीयते। **द्र०** श्रौ०प०नि० पृ० ९-१०। २. दोषनिर्बहरणार्थं प्रायश्चित्तरूपं भवति। तच्चानन्तरं दोषात् कर्तव्यमिति। प्रायश्चित्तार्थं यस्मिन् कर्मणि इष्टिश्चोदिता तत्कर्म समाप्य अन्ते कर्तव्यं न कर्ममध्ये इति विशेषोऽवधेयः। (तु०— आ०श्रौ० ३।१०।१२ देवत्रातः)। ३. प्रायः पापं विनिर्दिष्टं चित्तं तस्य विशोधनम्। **द्र०** प्रायस्—।४. 'विध्यपराधे प्रायश्चित्तिः' (आ०श्रौ० ३।१०।१)। तत्र विधिशब्देन विहितमुच्यते। अपराधोऽन्यथाभावः, अभावो वा। विहितस्याकरणे अन्यथाकरणे च प्रायश्चित्तिः कर्तव्या। प्रायो विनाशः। चित्तिः संधानम्। विनष्टसंधानं प्रायश्चित्तिरित्युक्तं भवति। इति नारायणः।

**प्रायश्चित्तभेद—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रायश्चित्तानि द्विप्रकाराणि १. कानिचिद् वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि, २. कानिचित् निमित्ते कर्माङ्गानि। विध्यपराधे च प्रायश्चित्तानि विधीयन्ते, निमित्ते कर्माङ्गभूतानि। यथा 'भिन्ने जुहोति' इति। समाधानार्थानि यथा—'यदि ऋक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्, अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहेति आहवनीये। यद्यविज्ञातो भूर्भुवः स्वः स्वाहेत्याहवनीय एव इति द्र० मी०को० पृ० २८६७।

**प्रायस्—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. मन्त्रक्रिययोरनुष्ठानम्, अस्थाने तयोरनुष्ठानम्, विहिताकरणम्, निषिद्धाचरणं च प्रायश्चित्तपदैकदेशः (अवयवः) नष्टशब्दापरपर्यायः प्राय इत्युच्यते। तत्र कर्म तावद् द्विविधं समन्त्रकममन्त्रकं चेति। तत्र समन्त्रके कर्मणि यस्मिन् कर्मणि यो मन्त्रः श्रुत्यादिना 'मन्त्रान्ते कर्म कुर्वीत' इत्यादि वचनात् क्वचित् कर्मणः आरम्भात् आदौ, क्वचित्तु उपस्थानादिषु कर्मसु कर्मसमकालमेव करणत्वेन विनियुक्तस्य मन्त्रस्योक्तस्थाने पाठाभावः, अविहितस्थाने पठनं वेति प्रायो विषयः। एवं यत्कर्मणोऽकरणं अस्थाने कर्मानुष्ठानं च तत्रायः शब्देन व्यवह्रियते इति बोध्यम्। द्र० श्रौ०प०नि० पृ० ९। द्र० प्रायस्—।

**प्राशित्र—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु १. प्राशितुः ब्रह्मणोऽयं भाग इति ब्रह्मणो भागः (तु०—का० श्रौ० १।८।४० टि० विद्याधरः) २. ब्रह्मणो दीयमानो हुतहविर्भागः प्राशित्रमुच्यते। ३. बहिः परिधिनिनयनानन्तरं उपभृति विद्यमानमाज्यं जुह्वां कृत्वा यथायतनं जुहूपभृतौ सादयित्वा मन्त्रेण प्राशित्रहरणं (पात्रं) प्रथमप्रधानद्रव्य संबन्धिनं प्राशित्रमवद्यति। स्रुवदण्डेनाभिघार्य प्रणीतानां पश्चिमतश्च सादयति। स भागः प्राशितुः ब्रह्मणः अयामिति विग्रहेण प्राशित्रपदवाच्यः। द्र० श्रौ०प०नि० पृ० ३२, परिधिनयन—।

**प्राशित्रपरिहरण—** (आध्व०, ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु अध्वर्युणा प्रेषितः आग्नीध्रः प्रणीतापश्चिमतः स्थापितं प्राशित्रहरणं (पात्रं) गृहीत्वा आहवनीयपूर्वमार्गेण गत्वा ब्रह्मणे ददाति। ब्रह्मा मन्त्रेण तत्प्राशित्रहरणं दृष्ट्वा मन्त्रेण अञ्जलिना प्रतिगृह्य वेद्यां कुशेषु प्राणदण्डं मन्त्रेण निदधाति। इति तदिदं कर्म प्राशित्रपरिहरणमुच्यते। द्र० श्रौ०प०नि० पृ० ३४।

**प्राशित्रप्राशन—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु ब्रह्मा प्राशित्रहरणपात्रात् प्राशित्रभागमादायं स्थानान्तरं गत्वा मन्त्रेण प्राश्नातीति प्राशनं प्राशित्रप्राशनमित्युच्यते। द्र० श्रौ०प०नि० पृ० ३४।

**प्राशित्रहरण—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु प्रयुज्यमानं खादिरकाष्ठनिर्मित्तं प्रादेशपरिमितं गोकर्णाकारं चतुरङ्गुलपरिमितदण्डयुक्तं पात्रं 'ब्रह्मणे दीयमानो हुतशेषहविर्भागः) ह्रियतेऽनेनेति तत् पात्रशित्रहरणमुच्यते। द्र० श्रौ०प०नि० पृ० ८। तच्च दर्पणसदृशं

वृत्तं भवति। तत्रावदानविधानात् किञ्चित् खातवच्च तद् भवति। अथवा चमसवत् चतुरस्रं वारणवृक्षनिर्मितं भवतीत्यवगन्तव्यम्। तदुक्तम्—'आदर्शाकृतिप्राशित्रहरणं चमसाकृति वा' (का०श्रौ० १।३।४०)।

**प्रेङ्ख—** द्र० महाव्रते प्रेङ्खक्लृप्ति—।

**प्रेङ्खारोहण—** (सा०) प्रेङ्खारोहणं उत्सवादौ सदाचारः महाव्रते इव। **द्र०** महाव्रत— मी०को० पृ० २८७५।

**प्रेरणा—** (सा०) प्रेरणाविधिः, नियोगः शब्दभावना इत्येकोऽर्थः। **द्र०** मी०को० पृ० २८७६।

**प्रेषण—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु प्रेषणं नाम संस्कारार्थं संबोधनम्। (तु०—ला०श्रौ०) १।६।१ अग्निस्वामी।

**प्रैष—** (आध्व०, हौ०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. 'अनुब्रूहि, यज' इत्यादिना लोट्मध्यमपुरुषान्तपदघटितेन येन वाक्येन अध्वर्य्वादिना होत्रादिः प्रेर्यते तद्वाक्यं प्रैष इत्युच्यते। **द्र०** श्रौ०प०नि० पृ० २७ ला०श्रौ० १।९।१३ टि० विद्याधरः। २. 'इदं कुरु, इदं च कुरु' इति आज्ञापनं प्रैषः। **द्र०** मी०को० पृ० २८७७। ३. प्रेषन्त्याह्वानं कुर्वन्ति ऐभिः मन्त्रैः ते मन्त्राः। **द्र०** मी०को० पृ० २८७७। ३. प्रेषन्त्याह्वानं कुर्वन्ति प्रैषा इत्युच्यन्ते। तदुक्तम्—'यज्ञो वै देवेभ्य उदक्रमात् तं प्रैषैः प्रैषमैच्छन्, यत् प्रैषैः प्रैषमैच्छंस्तत् प्रैषाणां प्रैषत्वमिति'। ते च प्रैषाध्यायोक्ताः 'होता यदग्निं समिधा' (ऋ०खि० ५।७।१) इत्यादयः (तु०— ऐ० ब्रा० सा० ३।९)। अध्वर्युकर्तृका मैत्रावरुणकर्तृकाश्च भवन्ति। **द्र०** प्रैषभेद—।

**प्रैषकर्तृकत्व—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. शुद्धकेवलप्रैषेषु अध्वर्युकर्तृकत्वं समाख्यया। (मी०को० पृ० २८८१) २. सर्वप्रैषाणां आध्वर्यवसमाख्यया अध्वर्युकर्तृकत्वम्। इति प्रैषेषु आध्वर्यवसमाख्यया अध्वर्युः कर्ता भवति। **द्र०** मी०को० पृ० २८७९।

**प्रैषभेद—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रैषा द्विविधाः यजप्रैषाः प्रेषप्रैषाश्चेति (तु०—का०श्रौ० १५।४।४ विद्याधरः)। तत्र यजप्रैषो हविर्धर्मतां बोधयति प्रेष्यप्रैषः पशु धर्मतामवबोधयति यतः पशुयागे 'ब्रूहि' इति मन्त्रघटकपदस्य स्थाने 'प्रेष्य' इति संयोज्य मैत्रावरुणं प्रेष्येत् (तु०—का०श्रौ० ३।६।३ विद्याधरः)। तत्र सर्वत्र अध्वर्युणा 'प्रेष्य' इत्युक्ते प्रेषितो मैत्रावरुणो होतारं प्रेषति, प्रत्याह इत्युन्नेयम्। इति विशेषो उभयोरवगन्तव्यः (तु०—का० श्रौ० १५।४।२० विद्याधरः)। पुनः केवलाः (शुद्धाः) अनुवचन मिश्राश्चेति द्विप्रकाराः प्रैषाः श्रूयन्ते। केवला अध्वर्युकर्तृकाः प्रैषानुवचनोभयात्मकाः (मिश्राः) मैत्रावरुणकर्तृकाभवन्तीति। इति विशेषोऽवधेयः।

**प्रैषप्रयाजयाज्यासु— (आप्रीसूक्तगतासु) समानदेवतात्व—** (सा०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च प्रैषेषु (ब्रूहिस्थाने प्रेष्यप्रैषेषु) प्रयाजयाज्यासु (आप्रीसूक्तगतासु च) इध्मादयः समाना एकादश देवता भवन्ति। यद्यपि प्रैषा द्वादश, आप्रीसूक्तगताः प्रयाजयाज्याश्च क्वचित् द्वादशाम्नातास्तथापि तनूनपान्नराशंसयोर्विकल्पभेदेनैकादशत्वमेव। गोत्रानुसारेण केचन यजमानास्तनून पातिनः केचन नराशंसवन्तः इति प्रयोगकाले देवतानामेकादशत्वं संगच्छते। **द्र०** प्रयाजदेवता—, प्रैषभेद—।

**प्रैषमन्त्रपाठविधि**—(सा०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु च प्रैष-(प्रेष्यप्रैष:) मन्त्रपाठकाले मैत्रावरुण: प्रह्व: = विनयेन किञ्चिदवनतशिरा उपविष्ट: प्रैषमन्त्रान् पठति। तदुक्तम्—'प्रह्वस्तिष्ठन् प्रेष्यति' (तु०—ऐ० ब्रा० सा० ३।९)।

**प्रैषाणां मन्त्रत्व** — (सा०) इष्टिपशुसोमयज्ञेषु प्रकृति- विकृतिभूतेषु 'अग्नीदग्नीन् विहर' 'बर्हिस्तृणीहि' (श० ब्रा० ४।२।५।११) इत्यादीनां प्रैषाणां मन्त्रविलक्षणत्वात् एतेषां मन्त्रत्वमस्ति न वा इति सन्देहे यत एतेषामनुष्ठेयार्थस्मारकत्वं न भवति करणमन्त्रवत्, नापि जपमन्त्रवत् केवलमदृष्टार्थता, न वा अग्निमन्थनादिवत् क्रियमाणानुवादिता, अतो मन्त्रकार्याभावात् प्रैषाणां मन्त्रत्वं नास्ति। अत: प्रैषो न मन्त्र: किन्तु कर्मविधायक: प्रैषस्य ज्ञातेऽर्थे प्रवर्तनमेव व्यापार इति चेन्न, 'मन्त्रो वा समभिव्याहारात्'। अर्थात् प्रैषो मन्त्र एव यत: प्रयोगकाले 'अग्नीदग्नीन् विहर' इत्यादीनामुच्चारणं विधीयते। यदि च इमे प्रैषा: कर्मविधायका भवेयुर्नैतेषामुच्चारणं प्रयोगकाले विहितं स्यात्। विधीयते च अत इमे मन्त्रा: एव इति प्रैषाणां मन्त्रत्वं सिद्धमेव (तु०— का०श्रौ० १। १०।१-२ विद्याधर:)।

**प्रैषानुवचनयो:कर्तृकत्व**—(सा०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च प्रैषाश्च अनुवचनानि च तेषां समाहारो वा इति विग्रहे केवलानुवचनेषु (अनुवाक्यासु) हौत्रसमाख्यया होता कर्ता। 'सर्वेषां प्रैषाणां आध्वर्यवत्वम्' इति केवलप्रैषे अध्वर्युसमाख्यया अध्वर्यु: कर्ता। उभयात्मकेषु तु 'होता यक्षत्' इत्यादिषु मन्त्रेषु मैत्रावरुणस्य कर्तृत्वविधि: (तु०—मी०को० पृ० २८७८)। अर्थात् यत्र प्रैषश्चानुवाक्या च सहोच्येते तत्र मैत्रावरुण: (प्रैषकर्ता)। यत्र केवलानुवाक्या न तत्र मैत्रावरुण:। (होतैव तत्र कर्ता)। यत्र वा केवल: प्रैष: तत्रापि न। (अध्वर्युरिव तत्र कर्ता)। यत्रोभे समुच्चीयेते तत्र स (मैत्रावरुण:) भवेत् (कर्ता)। उक्तं च 'तस्मान्मैत्रावरुण: प्रेष्यति चानु चाह' (तु०—मी०को० पृ० २८७८)। तदेवं प्रैषश्च अनुवाक्या च यत्र सहोच्येते तत्र मैत्रावरुण:, न केवलप्रैषेषु न केवलानुवचनेषु च। इति फलितवत् द्र० मी०को० पृ० २८७७।

**प्रोक्षण**—(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु १. निर्वापानन्तरं सशूकायामेवाग्निहोत्रहवण्यां तिर: पवित्रमप आनीय त्रिरुत्पूय उन्मह्यन् (स्तुतियुक्तं मन्त्रमुच्चारयन्) उपस्थाय तेन सपवित्रेणोत्तानेन दक्षिणपाणिना जलेन हविषां यत्सेचनं तत्प्रोक्षणमुच्यते। द्र० निर्वाप—श्रौ०प० नि० पृ० १५। २. प्रोक्षणं पुरोडाशधर्म:, पशुधर्मश्च ३. प्रोक्षणादीनां पौरोडाशिकानां सौमिकपदार्थेभ्य: पूर्वभावित्वंज्योतिष्टोमसुत्यायाम्। द्र० मी०को० पृ० २८८२।

**प्रोक्षणी**—(सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानांतृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु व्रीह्यादिप्रोक्षणार्थमग्निहोत्रहवण्यां गृहीता: संस्कृता आप: प्रोक्षणीपदवाच्य: (प्रोक्षिण्य:) उच्यन्ते। द्र० श्रौ०प०नि० पृ० १७।

**प्रोक्षितशकलाभ्याधान**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अप्रोक्षितशकलनिरसनानन्तरम् प्रात:सवनं अध्वर्यु: अप उपस्पृश्य

प्रोक्षितशकलमभ्यादधाति 'शुक्रैः हा' इति। स्वं प्रतिप्रस्थाता 'मन्थि० हा' इति। तदिदं प्रोक्षितशकलाभ्याधानमुच्यते। द्र० अप्रोक्षितशकलनिरसन—। श्रौ०प०नि० पृ० २८४।

**प्रोञ्छन—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च यस्मिन् यागे व्रीह्यादेर्द्रव्यस्य निर्वापानन्तरमन्यद्रव्यनिर्वापः कर्तव्यो भवति। तत्र एकस्य निर्वापानन्तरं निर्वापे कारणभूताया अग्निहोत्रहवण्या वस्त्रादिना पश्चान्निरूप्यमाणद्रव्ये पूर्वनिरुप्तद्रव्य संबन्धितुषादिसंसर्गाभावार्थं यत् संमार्जनं क्रियते तत् प्रोञ्छनमुच्यते। यच्च तादृशयागे निरुप्तद्रव्यप्रोक्षणात् प्राग् वस्त्रसंमार्जनं क्रियते तदापि प्रोञ्छनमुच्यते। द्र० श्रौ०प०नि० पृ० १७।

**प्रोहण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च दृषदि अध्युप्तानां पुरोडाशीयतण्डुलादीनामुपरि उभाभ्यां हस्ताभ्यामुपलायाः तिर्यक् स्थापितायाः पूर्वस्यां दिशि कर्षणं ततः प्रतीच्यां दिशि कर्षणं चेति प्रोहणमुच्यते। द्र० श्रौ०प०नि० पृ० १५-१६।

**प्लक्षप्रस्रवण—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायनसत्रप्रकरणे सारस्वतसत्रे निर्दिष्टः प्लक्षप्रस्रवणो नाम सरस्वत्या मूलम् (द्रा०श्रौ० धन्वी २१।२)। द्र० सारस्वतसत्र—।

**प्लव—** (सा०) परतीरगमनं प्लव उच्यते। (तु०—ऐ० ब्रा० सा० ६।२१)।

**प्लवसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे 'पुनानः सोम धारय (साम० ५११) इत्यस्यां योनावुत्पन्नं साम प्लव उच्यते। तच्च गवामयने माध्यन्दिने पवमाने बृहतीष्वन्वहं कर्तव्यमिति विशेषोऽवधेयः। (तु०—ता० ब्रा० सा० ५।८।४)।

## फ

**फल—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. द्रव्यगुणसंस्कारेषु फलं (अनुष्ठानजन्यं फलं) भवति। द्र० मी०सू० ३।१।२)। २. फलं यागादिकर्मणां स्वर्गादिकम्। ३. साङ्गाद्धि फलं श्रूयते प्रधानात् न केवलात्। मी०को० २८८८।

**फलचमस—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यदि राजन्यं वैश्यं वा (अध्वर्युः) याजयेत्। स यदि सोमं विभक्षयिषेत् न्यग्रोधस्तिमीराहृत्य ताः संपिष्य दध्न्युन्मृज्य तं फलचमसरूपं अस्मै भक्षं प्रयच्छेत् न सोमम्। तत्र प्लाक्ष-आश्वत्थ-औदुम्बरफलैरभिषुतैः युक्तः चमसा फलचमस उच्यते। द्र० मी०को० पृ० २८९०-९१ ऐ० ब्रा० ७।३०-३३) द्र० न्यग्रोधादिरोधादिचमसभक्षण। २. वैश्यक्षत्रिययोः स्तोमयागे अध्वर्युर्यजमानं भक्षं कारयितुमिच्छन् वर फलस्ववकान् (फलान्यङ्कुरांश्च) चमसोनयनकाले आहृत्य चूर्णयित्वा दध्ना मिश्रणं कृत्वा फलचमसेमुन्नेयत् जुहुयाच्च (का०श्रौ० १०।९।२९-३१ विद्याधरः)।

**फलचमस— फलचमसभक्षण—** द्र० राजसूये राज्ञो दीक्षणीयादि नराशंसफलचमसभक्षणान्तप्रयोग—।

**फलीकरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च १. हविषः उलूखले हविष्करणम्, कण्डनम्, उद्वापः, निष्पवनम्, विवेचनम्, कणनिष्काशनम् इत्येतत्सर्वं फलीकरणमुच्यते। तच्च वारत्रयं कार्यम्। अर्थात् यदवहननादि एकवारं मन्त्रैरनुष्ठितं तदेव वारद्वयं पुनः तूष्णीमावर्तनीयम्। तद्यथा— तूष्णीं त्रिः कण्डनम्, शूर्पादानम्, हविरुद्वपनम्, निष्पवनम्, विवेकीकरणम्, कणनिधानम्, इति (तु०—का० श्रौ० २।४।२२ विद्याधरः)। २. तण्डुलानां कणादिनिरसनेन शोधनम् फलीकरणमुच्यते। ३. पुरोडाशचरुसंबन्धिव्रीह्यादीन् उलूखले मुसलेनावहत्य शूर्पेण निस्तुषकरणं फलीकरणमुच्यते। तत्र ये तुषादयः पतन्ति ते फलीकरणपदवाच्या भवन्ति। द्र० श्रौ०प०नि० पृ० १३-१४।

**फलीकरणपात्र—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च फलीकरणतुषादीनां यागसमाप्तिपर्यन्तं स्थापनाय निर्मितमश्वत्थमयं पात्रं फलीकरणपात्रमुच्यते। द्र० श्रौ०प०नि० पृ० १४।

**फलीकरणहोम—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च १. फलीकरणानां तुषादीनां यागानन्तरं दक्षिणाग्नौ जुह्वां चतुर्गृहीतेनाज्येन सह यागान्ते होमः फलीकरणहोम उच्यते। २. आज्येडामार्जनानन्तरमध्वर्युर्जुह्वां चतुर्गृहीतं गृहीत्वा सव्येनाङ्गेन होतुरग्रेण गार्हपत्यस्य पश्चिममार्गेण गत्वा दक्षिणाग्नौ मन्त्रेण हुत्वा अपरं चतुर्गृहीतं गृहीत्वा इध्मप्रव्रश्चनान्याधाय जुह्वां फलीकरणानोप्य मन्त्रेण जुहोतीति द्वौ होमौ। तत्रैकः पूर्वहोमो दक्षिणाग्निप्रायश्चित्तहोमः, द्वितीयः फलीकरणहोमः। द्र० श्रौ०प०नि० पृ० ३८।

## ब

**बर्हिस्—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च १. प्रकृतीष्टौ चतस्रो दर्भमुष्टयश्छिद्यन्ते। तासु द्वितीया, तृतीया चतुर्थीति तिस्रः मुष्टयः अमन्त्रकसकलक्रियामात्रसाध्याः वेद्यास्तरणार्था हविषां पात्राणां स्थापनयोग्या बर्हिः पदवाच्या भवन्ति। प्रथमा मुष्टिस्तु प्रस्तरः इति विशेषोऽवधेयः। द्र० प्रस्तर-श्रौ०प०नि० पृ० १२-१३। २. कुशाः बर्हिः शब्देनोच्यन्ते। तच्च लवनादिसंस्कारैः संस्कृतमसंस्कृतं वेत्युभयथा याज्ञिकैः कर्मसूपयुज्यते इत्यवगन्तव्यम्। ३. बर्हिः शब्देन उभयमपि शक्यते प्रत्यापितुं तृणं च तृणसदृशं, तृणं साक्षात्, तृणसदृशं च तृणप्रत्ययेन। द्र० मी०को० पृ० २९१८।

**बर्हिरास्तरण—** (आध्व०) इष्टियज्ञेषुप्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च प्रोक्षणीनामुन्नमनादि कृत्वा समन्त्रकं इध्मवेदिबर्हींषि क्रमेण प्रोक्ष्य बर्हिरिध्मप्रणीतोर्मध्येन प्राङ्नीत्वा प्रणीताहवनीययोर्मध्येन पुनराहृत्य वेद्यां पुरोग्रन्थ्यूर्ध्वाग्रं निधाय तिष्ठन् अग्राणि मन्त्रेण प्रोक्ष्य प्रह्वो मन्त्रेण मध्यानि प्रोक्ष्य आसीनो मन्त्रेण मूलानि प्रोक्ष्य प्रत्यङ्मुखाभ्यां स्रुक्पाणिभ्यां ग्रन्थिमासिच्य शिष्टं दक्षिणश्रोणिमारभ्य उत्तरश्रोणिपर्यन्तं प्रथमं प्रस्तरं गृहीत्वा मन्त्रेण, मन्त्रेण निनयति। ततः प्रोक्षणीधानं निरस्य बर्हिर्विस्रस्य मन्त्रेण, तस्मिन् पवित्रे संयोज्य प्रस्तरं यजमानाय ब्रह्मणे वा दत्त्वा बर्हिः सन्नहनं

विस्त्रस्य दक्षिणश्रोणिमारभ्य उत्तरांसपर्यन्तं निधाय तदुपरि प्रथमं दर्भमुष्टिं मन्त्रेण स्तृणाति तस्य पश्चात् द्वितीयं प्रागास्तृतदर्भमूलानि आच्छादितानि यथा स्युः ततस्तृतीयं तथैव स्तृणातीति। तदेतत् कर्म बर्हिरास्तरणमुच्यते। द्र० श्रौ०प०नि० पृ० २०।

**बर्हिरुपस्पर्शन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च उपवेशनानन्तरं वेद्यास्तृतबर्हिः दक्षिणजानुशिरसा मन्त्रेण स्पृशतीति तदेतत् स्पर्शनं बर्हिरुपस्पर्शनमुच्यते। द्र० उपवेशन—, श्रौ०प०नि० पृ० २७।

**बर्हिरुपोषण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च पाशुकसमिदाधानानन्तरं औपयाजिके अग्नौ वेद्यां स्तीर्णं बर्हिरुपोषति—'यत्कुसीदम्' इत्यादि 'भवामि' इत्यन्तेन मन्त्रेणेति। तदिदं बर्हिरुपोषणमुच्यते। द्र० पाशुकसमिदाधान—, द्र० श्रौ०प०नि० पृ० १४०।

**बर्हिरेकदेशानुप्रहरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अध्वर्युकर्तृकनित्यप्रायश्चित्तहोमानन्तरं वेद्यास्तृतसर्वबर्हिर्मुष्टिभ्यः प्रत्येकं किंचित् किंचित् गृहीत्वा ध्रुवायां मन्त्रेण समज्य मन्त्रेणाहवनीये प्रक्षिपति इति प्रक्षेपणम् बर्हिरेकदेशानुप्रहरणमुच्यते। द्र० श्रौ०प०नि० पृ० ३९-४०। द्र० अध्वर्युकर्तृकनित्यप्रायश्चित्तहोम—।

**बर्हिःप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्युणा 'प्रेष्य' इत्युक्ते (मैत्रावरुणः) आह—'होता यक्षद्बर्हिः सुष्टरीमोर्णम्रदा अस्मिन् यज्ञयो वि च प्र च प्रथतां स्वासंस्थं देवेभ्यः एमेनदद्य वसवो रुद्रा आदित्याः सदन्तु प्रियमिन्द्रस्यास्तु वेत्वाज्यस्य होतर्यज' इति। अयं बर्हिः संज्ञकस्य चतुर्थस्य प्रयाजस्य चतुर्थः बर्हिः प्रैषः। द्र० श्रौ०प०नि० पृ० १४३।

**बर्हिः सन्नहन—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च दर्भत्रयं गृहीत्वा प्रदक्षिणमावेष्ट्य अग्रभागे अन्यद्दर्भत्रयं मूलेन संयोज्य वेष्टनेन ग्रथितमिव कृत्वा तदपि तथैवावेष्ट्य तदग्रभागे अन्यद् दर्भत्रयं तथैव कृत्वा पुनस्तदग्रभागे तथा करोति। एवं कृते सन्धित्रयं मध्ये मध्ये सम्पद्यते। तद्दर्भसूत्रं द्विगुणं कृत्वा अन्ते ग्रन्थिः कार्यः। अनेन बर्हिर्बध्यते। इति बर्हिर्बन्धनसाधनभूतं सूत्रं बर्हिः संनहनं शुल्बमुच्यते। द्र० श्रौ०प०नि० पृ० १३।

**बलवद्गेय—** (औ०, सा०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु 'बलवत्' इति स्पष्टाक्षरमुद्गात्रा गातव्यं परिभाष्यते। तद्गेयं बलवद्गेयमुच्यते।

**बस्त—** (सा०) बस्तो मुष्करः साण्डश्छाग इत्युच्यते (तु०—का० श्रौ० १४।५।१५ विद्याधरः)।

**बहिर्वेदिभवनप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशुप्रायश्चित्तहोमान्ते अग्नीषोमीयपशुकर्मानन्तरं हृदयशूलं प्रक्षाल्य स्थापयित्वा (अध्वर्युः) सम्प्रेष्यति 'व्यपक्रामत मा वोऽभिपरिषम्' इति। सोऽयं बहिर्वेदिभवनप्रैष इत्युच्यते। द्र० अग्नीषोमीयप्रायश्चित्तहोम—, श्रौ०प०नि० पृ० २५३।

**बहिष्पवमान–** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु पवमानस्तोत्रेषु प्रथमं १. प्रातः सवने गीयमानं स्तोत्रं बहिष्पवमानसंज्ञं भवति। अस्य च सदसो बहिष्क्रियमाणत्वाद् बहिष्पवमानमिति नामसंपन्नम् (तु०—का० श्रौ० ९ ।६ ।३४ विद्याधरः) २. सदो मण्डपात् (सदसः) बहिश्चात्वालदेशे क्रियमाणत्वात् गीयमानत्वात्) । पूतत्वसंपादकत्वाच्च बहिष्पवमानं स्तोत्रमुच्यते। (तु०—का० श्रौ० १ ।६ ।१७ टि० विद्याधरः) । ३. बहिष्पवमानं ज्योतिष्टोमे (अन्यत्र चैकाहाहीनसत्रेषु) प्रातः सवने स्तोत्रविशेषः । ४. बहिष्पवमानं सदसो बहिः प्रसर्पद्भिः प्रयुज्यते इति बहिष्पवमानमुच्यते। ५. त्रिवृद् बहिष्पवमानमिति नवर्चं बहिष्पवमानम्। द्र० मी०को० पृ० २९४६ ।

**बहिष्पवमानस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातः सवने स्तोत्रविशेषो बहिष्पवमानस्तोत्रमुच्यते। (क) तत्र बहिष्पवमाने अग्नीष्टोमीये बहिष्पवमानस्तोत्रे स्तोत्रियः अनुरूपः, पर्यासश्चेति त्रयस्तृचाः। तेषां प्रथमे स्तोत्रिये तृचे 'उपास्मै गायता नरः,' अभि ते', 'स नः पवस्व' (साम० ६५१-५३) इति तिस्रः स्तोत्रीयः। अनुरूपे द्वितीये तृचे 'दविद्युत्या रुचा', हिन्वानो होतृभिः, ऋधक् सोमं' (साम० ६५४-५६) इति तिस्रः स्तोत्रीयाः। तृतीये पर्यासे (अन्तेके) तृचे 'पवमानस्य ते,' अच्छा कोशं, अच्छा समुद्रम्' (साम० ६५७-५९) इति तिस्रः स्तोत्रीयाः। इति नवानामृचां पाठात् नवस्वृक्षु सामगानं बहिष्पवमानस्तोत्रमुच्यते। तृचेषु ऊर्ध्वगानं त्रिवृत्स्तोमे। (आवृत्तिं पर्यायं) विना ऋचां पाठक्रमेण गानमूर्ध्वगानमुच्यते)। अर्थात् त्रयाणां तृचानां नव ऋच आवृत्तिरहिता गीयन्ते। तासामेव नवानां ऋचां आवृत्तगानं तु पञ्चदश सप्तदशादिस्तोमेषु भवति। द्र० मी०को० पृ० २९४६ श्रौ०को० २ भा० पृ० २७८-८४ का०श्रौ० १० ।१ ।१६ टि० विद्याधरः) । इति विशेषः। (ख) अन्यत्र एकाहाहीनसत्राणां बहिष्पवमानेषु तासामेव नवानां ऋचां आवृत्तगानं तु पञ्चदशसप्तदशादिस्तोमेषु भवन्ति। द्र० मी०को० पृ० २९४६; का०श्रौ० १० ।१ ।१६ टि० विद्याधरः। नवभिः स्तोत्रीयाभिः त्रिवृतस्तोमगताभिः स्तुवन्ति। तासां हिंकारो दशमो भवति (तु०—तां० ब्रा० सा० ६ ।८ ।१)। विहितास्ते ते त्रयस्त्रयः बहिष्पवमानतृचास्तत्र तत्र द्रष्टव्याः। सोमयागेषु बहिष्पवमानमारभ्य यानि सामानि प्रस्तोत्रादिभिर्गेयानि तत्र प्रतिगानं पञ्च विभक्तयः (अवयवाः) 'भवन्ति प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनं चेति। तत्र प्रस्तावः प्रस्तोत्रा गेयः, उद्गीथ उद्गात्रा, प्रतिहारः प्रतिहर्त्रा, उपद्रवः पुनरुद्गात्रा ज्ञेयः। निधनं तु सर्वैः (त्रिभिः) गेयम्। एतदनुसारेण यस्यां ऋचि सामगीयते साऽपि ऋक् पञ्चधा विभज्यते। इति विशेषोऽवगन्तव्यः। तु०—का०श्रौ० १० ।१ ।१६ टि० विद्याधरः श्रौ०को० २ भा० पृ० २७८-२९१ । २. बहिष्पमानं नवभिः स्तोत्रीयाभिः त्रिवृत्स्तोमगताभिः स्तुवन्ति तासां हिंकारो दशमो भवति। तदुक्तं 'नवभिः स्तुवन्ति दशमो हिंकारः' (तु०—तां० ब्रा० सा० ६,८,१ अन्नं करिष्यामीति स्तोमयोगमन्त्रजपानन्तरं सर्वे उद्गातारः तूष्णीं चात्वालगुदपात्रं चावेक्षेरन्। 'सामासि प्रति मा भाहि' इति मन्त्रेण आदित्यं चावेक्षेरन्। ततः बहिष्पवमानं सकृद् हिंकृत्य स्तुवन्ति।

तदुक्तम् 'सकृद्धिङ् कृत्य स्तुवीरन्' (तु०— ला०श्रौ० १।१२।३-७ अग्निस्वामी)। अन्यत्रापि ताण्ड्यब्राह्मणादिषु सर्वत्र हिंकरोति। इति हिं शब्दप्रयोगो दृश्यते। परं बहोः कालादारभ्य प्रायः सर्वत्र सामगाः हुम् इति हिंकारं कुर्वन्ति इति विशेषोऽनुसंधेयः' द्र० श्रौ०को० २ भा० पृ० २७७ टि०।

**बहिष्पवमानस्तोत्रतृचस्तोत्रीया संज्ञा—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु बहिष्पवमानस्तोत्रतृचानां तिस्रः संज्ञा भवन्ति। तत्र प्रथमा स्तोत्रीया रेतस्या संज्ञका उच्यन्ते। सा अहिंकृता (हिंकाररहिता) प्रयुज्यते। रेतस्याया याः परासंज्ञकाः स्तोत्रीयाः तासु हिंकारः स्यात्। रथन्तरवर्णसंज्ञका तृतीया उत्तमा हिंकारसहिता स्यात्। तथा च लाट्यायनः—'अहिंता प्रथमा रेतस्या, हिंकृताः पराः, रथन्तरवर्णोत्तमाऽविसृष्टहिंकारा।' (तु०— ला०श्रौ०१।१२।८-१० अग्निस्वामी)। तस्याः रथन्तरवर्णाया) ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोमेत्' (ला०श्रौ० १। १२।११)। अर्थात् सर्वत्र बहिष्पवमाने उत्तमा रथन्तरवर्णा। अतः तस्याम् ऊर्ध्वं प्रस्तावाच्चत्वारि अक्षराणि भकाररूपाणि स्तोमेत। द्र० श्रौ०को० २. भा० पृ० २८० टि०।

**बहिष्पवमानस्तोत्रदेश—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातःसवने चात्वालस्य समीपदेशे दक्षिणतो बर्हिर्वेदि बहिष्पवमानदेशो भवति। यत्र ऋत्विजो (उद्गातारः) बहिष्पवमानाख्यं स्तोत्रं स्तुवन्ति। बहिष्पवमानस्तोत्रं सदसो बर्हिः चात्वालदेशे गेयमित्यर्थः। २. बहिर्वेदिस्तुवन्ति (उद्गातारः) अन्तर्वेदिस्तुतमनुशंसन्ति होतारः (तु०— तां०ब्रा०सा० ६।८।११।

**बहिष्पवमानस्तोत्रस्तोमयोगादूर्ध्वभाविजप—** (औ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने उद्गाता स्तोमयोगादूर्ध्वं 'अन्नं करिष्यामि, इत्यादिमन्त्रं जपति (तां० ब्रा० सा० १।३।६ द्र० ला०श्रौ० १२।३)। स्तोमयोगस्तु उपवेशनानन्तरं अध्वर्युः प्रस्तरं प्रस्तोत्रे 'सोमः पवते' इत्यनेन मन्त्रेण प्रयच्छति। ततः परं अध्वर्योः सकाशात् प्रतिगृह्य प्रस्तोता 'ब्रह्मन् स्तोष्यामः प्रशस्ति' इति उद्गात्रे प्रयच्छेत्। तेन प्रस्तरेण उद्गाता दक्षिणां जंघां पृष्ट्वा 'अग्नेस्तेजसा' इति मन्त्रेण स्तोमं युञ्ज्यात् (इमं मन्त्रमुच्चारयेत्)। युक्त्वा स्तोमं अनन्तरं 'अन्नं करिष्यामि' इति जपेत्। (तु०— ला०श्रौ० १।१२।१-३ अग्निस्वामी, तां० ब्रा० सा० १।३।५-६)। द्र० स्तोमयोग—।

**बहिष्पवमानस्तोत्रादूर्ध्वभाविजप—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने बहिष्पवमानेन स्तुत्वा उद्गाता 'अन्नमकरम्' इति मन्त्रं जपेत्। इति अयं मन्त्रजपः बहिष्पवमानस्तोत्रादूर्ध्वभावा जप उच्यते (तु०— तां० ब्रा० भा० १।३।७; ला०श्रौ० १।१३। १२)।

**बहिष्पवमानस्तोत्रार्थं निःसर्पण—** (औ०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातः सवने बहिष्पवमाने अध्वर्युः प्रतिप्रस्थाता प्रस्तोता उद्गाता प्रतिहर्ता यजमानः इत्येते अध्वर्य्वादयः परस्परं समारब्धा हविर्धानात् निष्क्रमेयुः। अत्र निष्क्रमतामन्वारम्भणं

कच्छं गृहीत्वैव भवति (तु०— का० श्रौ० ९।६।२५ विद्याधरः)। २. प्रातःसवने बहिष्पवमाने सदसो बहिः प्रह्वा उदञ्चः बहिष्पवमानाय पञ्चर्त्विजः समन्वारब्धाः सर्पन्ति—अध्वर्युं प्रस्तोताऽन्वारभते, प्रस्तोतारं प्रतिहर्ता, प्रतिहर्तारमुद्गाता, उद्गातारं ब्रह्मा, ब्राह्मणं यजमानः इति। तत्र अध्वर्युः प्रस्तोता उद्गाताः प्रतिहर्ता ब्रह्मा यजमानः प्रशास्ता चेति ऐते क्रमेण पुरो गन्तुः कच्छं पाश्चात्त्यो गृहीत्वा पिपीलिकापङ्क्तिवद् गच्छन्ति। अतः अध्वर्युः प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशस्ता इति बहिष्पवमानस्तोत्रार्थं हविर्धानात् बहिर्गच्छतां अन्वारम्भः श्रुतः। कच्छावच्छेदे प्रायश्चित्तिराम्नाता। द्र० मी०को० पृ० २९४७। ला०श्रौ० १।११।१६ तां० ब्रा० ६।७।१०-१५। ३. यदन्तर्हविर्धाने ग्रहान् (अन्तर्यामादिध्रुवपर्यन्तान्) गृहीत्वा बहिष्पवमानं सर्पन्ति। सन्तताः सर्पन्ति। वाम्रा (वल्मीकक्रमयः) इव सर्पन्ति। अध्वर्युः प्रथमः सर्पति, प्रस्तोता द्वितीयः सर्पति, उद्गाता तृतीयः सर्पति, प्रतिहर्ता चतुर्थः सर्पति, यजमानः पञ्चमः सर्पति, ब्रह्मा षष्ठः सर्पति। द्र० श्रौ०को० पृ० २ भा० पृ० २७७। द्र० बहिष्पवमानोपवेशन—।

**बहिष्पवमानस्तोत्रीयाणामेकरूपता—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने बहिष्पवमानस्य सर्वाः स्तोत्रीयाः समानदेवताकत्वात् समानच्छन्दस्कत्वाच्च एकरूपा भवन्ति। सर्वासां समानः सोमो देवता, समानं गायत्रीच्छन्दः। इति बहिष्पवमानस्य स्तोत्रीयाणामेकरूपतोच्यते। बहिष्पवमानं स्तोत्रमेकरूपाभिरनावृत्ताभिः स्त्रोत्रीयाभिः स्तुवन्तीति विशेषोऽवधेयः (ला०श्रौ० सा० ६।८।८०९)।

**बहिष्पवमानस्तोत्रोपाकरण—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातःसवने अध्वर्युः बर्हिषी धुन्वानो बहिष्पवमानाय उदगास्तावं प्रतिसर्पति— 'वागग्रेगा० यजमाने च' इति। आस्तावे यथायतनमुपविश्य प्रस्तोत्रे बर्हिषी (तृणे) प्रयच्छति— 'ऋक्साम. प्राजापत्ये' इति। जपति— वायुर्हिंकर्ता० वृहस्पतिः धन्वोंस्तुध्वम्' इति। बहिष्पवमानस्तोत्रोपाकरणमुच्यते। द्र० श्रौ०प०नि० पृ० २७७। २. (प्रातः सवने) जपत्सु उद्गातृषु अध्वर्युः प्रस्तोत्रे द्वे तृणे समर्पयन् 'सोमः पवते' इति मन्त्रेण पवमानस्तोत्रम् (बहिष्पवमानस्तोत्रम्) आरभते। 'सोमः पवते' इति मन्त्रेणाध्वर्युणा। उद्गातृभ्यस्तृणप्रदानमेवोपाकरणमुच्यते। एवं माध्यन्दिनसवने माध्यन्दिनपवमाने तृतीयसवने आर्भवपवमाने च प्रस्तोत्रे तृणे प्रयच्छन् 'सोमः पवते' इति उपाकरणं कुर्यात् (अध्वर्युः)। तत्र माध्यन्दिनपवमानार्भवपवमानयोरारम्भः सदसि कर्यात्, न प्रातः सवनीयबहिष्पवमानवत्। चात्वालसमीपे बहिः सदसि। सर्वेषु पवमानेषु अहर्गणे द्वादश रात्रादिषु सत्रेषु प्रायणीयोदयनीये उभे अहनी वर्जयित्वा अर्थात् तत्रोभयत्रापि बहिष्पवमानस्तोत्रारम्भश्चात्वाल समीप एव कार्यः। अन्यत्र तु सदस्येवेत्यर्थः। (तु०—का० श्रौ० ९।६। ३४-३५।१०।१।१६-१७ विद्याधरः। 'यज्ञायज्ञा वो आनये' (साम० ३५।७०३) इत्यस्यामृचि गीयमानमग्निष्टोमसंज्ञकं स्तोत्रं (तु) होतृचमसमुपस्पृश्योपाकरोति

प्रारभेत्। यज्ञायज्ञीयस्तोत्रकरणकाले उगात्वत् स्वशिरसः प्रावरणं कुर्यादध्वर्युः। यथा उद्गातुरकर्णकं प्रावरणं विहितं तद्वत् कुर्याद् यदीच्छेदित्यर्थः (तु०— का०श्रौ० १० ।७ । १-२ विद्याधरः)।

**बहिष्पवमानारम्भकवाचन—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु बहिष्पवमानस्य पञ्चम्यामृचि प्रस्तुतायां यजमानं वाचयति- 'श्येनोऽसि. संपारय' (तै०सं० ३ ।२ ।१) इतीदं बहिष्पवमानारम्भकवाचनमुच्यते। द्र० श्रौ०प०नि० पृ० २७७।

**बहिष्पवमानारम्भकहोम—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातः सवने उन्नेता अवकाशकरणानन्तरं अभिमर्शनन्युब्जादि करोति। अध्वर्युः अप उपस्पृश्योपस्तम्भनबर्हिर्मुष्टेः बर्हिर्द्वयमादायउपनिःसर्पति। तं निःसर्पन्तमन्वारभते उद्गाता, उद्गातारं प्रस्तोता, तं प्रतिहर्ता, तं यजमानः, तं ब्रह्मा, तं प्रतिप्रस्थाता मैत्रावरुणो वा। एवमन्वारब्धेषु अध्वर्युराहवनीये स्रुवाहुतिं जुहोति— 'अग्निः प्रातसवने० सहभक्षाः स्याम स्वाहा' इति एतयैवर्चा प्रतिप्रस्थाता। यथा वेदमितरे। सोऽयं बहिष्पमानारम्भकहोम उच्यते। तत्र आश्वलायनयजमानस्य 'द्रप्सश्चसस्कन्द, यस्ते द्रप्सः' इति द्वाभ्यां होमः। स चान्वारम्भक्रमेणेति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २७७, श्रौ०को० २ भा० पृ० २७६। द्र० अवकाश-। २. अध्वर्युणा एषु होमेषु हुतेषु उद्गातारस्त्रयोऽपि प्रवृत्तहोमौ 'वेकुरानामासि जुष्टो स्वाहा' सूर्यो मा दिव्याभ्यः स्वाहा इति द्वाभ्यां प्रसर्पणक्रमेण प्रस्तोता प्रथमं ततः उद्गाता ततः प्रतिहर्ता जुहुयुः। (तु०— तां० ब्रा० सा० १ ।३ ।१-२ श्रौ०को० २ भा० पृ० २७७। द्र० बहिष्पवमाननिःसर्पण)।

**बहिष्पवमानोपवेशन—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रातः सवने बहिष्पवमानस्तुत्यर्थं उद्गातारमभिमुखा अध्वर्युमुखा उपविशेयुः। दक्षिणतो ब्रह्मा उदङ्मुखः पश्चान्मैत्रावरुणः प्रत्यङ्मुखः उपविशेताम्। द्वयोर्हविर्धानसंज्ञकयोरनसोः दक्षिणस्य हविर्धानस्य पश्चात् सव्यावृतः उपविशेयुरुद्गातारः इति बहिष्पवमानोपवेशनमुच्यते। २. तत्र उद्गाता उदङ्मुख उपविशति, प्रत्यङ्मुखः प्रस्तोता, दक्षिणामुखः प्रतिहर्ता। एवमुपविष्टानामुद्गातॄणां पुरस्तादध्वर्युप्रतिप्रस्थातारौ प्रत्यङ्मुखावुपविशेताम्। अध्वर्युप्रतिप्रस्थात्रोर्दक्षिणतः यजमान उपविशेत् (तु०—का०श्रौ० ९ ।७ ।२ विद्याधरः)। ३. चात्वालदेशं प्राप्य अध्वर्यौ उपविष्टे तस्मादध्वर्योः पश्चिमे देशे (उद्गातारः) उपविशेयुः 'यो म आत्मा' इत्यादिना मन्त्रेण। तत्रोपवेशनप्रकारः—प्रस्तोता प्रत्यङ्मुखः (पश्चिममुखः) उपविशेत्। प्रस्तोतरि उपविष्टेऽनन्तरं उद्गाता उदङ्मुखः (उत्तरमुखः) उपविशेत् उद्गातरि उपविष्टे पश्चिमेन गत्वा प्रतिहर्ता दक्षिणपूर्वं अष्टमदिग्भागमीक्षमाणः उपविशेत्। वामान् उरून् अधरान् कृत्वा 'द्यावापृथिव्योः सन्धिमीक्षमाणाः समानि मुखानि धारयन्तः आसीरन् इति। एष उपवेशनप्रकारः सर्वस्तोत्रेषु भवतीति विशेषोऽवधेयः। (तु०— ला०श्रौ० १ ।११ ।१७-२३ अग्निस्वामी, तां० ब्रा० सा० १ ।३ ।४ श्रौ०को० २ भा० पृ० २८२।

**बाध-बाधन्याय—** (सा०) १. अतिदिष्टपदार्थस्य यत् निवर्तनं तद् बाधः। २. उपदिष्टः अतिदिष्टं बाधते। ३. बाधो निवृत्तः, अननुष्ठानम्। इति यावत्। द्र० मी०को० पृ० २९६०।

**बार्हतप्रगाथ—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयुज्यमानो बृहतीसतोबृहत्याख्ययोः द्वयोश्छन्दसोर्योगेन विहितो यो द्वृचः उक्तः स बार्हतसंज्ञकः प्रगाथः (छन्दो विशेषः) उच्यते। द्र० १-२ प्रगाथ—।

**बार्हतप्रगाथतृचक्लृप्ति—**(हौ०, औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. प्रयोक्तुं समाम्नाते द्वे एव अभ्यासकृत प्रगथनेन (यदा) तृचरूपतया संपाद्येते (तु०— ऐ० ब्रा० सा० ३।१७) स प्रगाथः। २. बृहतीसतो बृहत्योः समुदितयोः चतुर्थषष्ठौ (पादौ) अभ्यस्येत प्रगाथे बार्हते सति। बृहत्युभे च ककुभौ सम्पद्यन्ते तथा सति॥ एतच्छ्लोकोक्तविधिना ग्रथिताः तिस्र ऋचः बार्हतप्रगाथतृच इत्यर्थः। ३. बृहतीसतोवृहत्योश्छन्दसोर्योगेन संपन्ने बार्हतसंज्ञके प्रगाथे चतुर्थषष्ठयोः पादयोरभ्यासविधिना तिस्र ऋचः संपद्यन्ते स बार्हततृचप्रगाथ इत्युच्यते। तास्वृक्षु प्रथमा बृहती द्वितीयतृतीये ककुभौ इति त्रीणि छन्दांसि भवन्ति। (तु० वै० अनु० छन्दोनुक्रमणी अ० ४ कारिका ६)। ४. बृहतीसतो बृहत्योः यो द्वृचः स बार्हतः प्रगाथ इत्युच्यते। ककुप्सतो बृहत्योः काकुभः। तस्मिन् चतुर्थषष्ठौ पादौ पुनरभ्य सप्तमपञ्चमयोः पादयोरवस्येत्। इत्यवसानाभ्यासौ। विधीयेते। एवं कृते पूर्वा बृहती उत्तरे ककुभौ भवतः (आ०श्रौ० ५।१५।६ नारायणः)। ५. बार्हतप्रगाथतृचे सायणाचार्येण प्रगथनप्रकार एवं प्रदर्शितः। अस्ति अग्निष्टोमे माध्यन्दिनसवने मरुत्वतीयशस्त्रे ब्राह्मणस्पत्यो नाम बार्हततृचप्रगाथः। तत्र द्वयोर्ऋचोः एव द्वयोर्ऋचोः समूहः प्रगाथः। तथा चाश्वलायन आह 'तृचाः प्रतिपदनुचरा द्वृचाः प्रगाथाः' (आ०श्रौ० ५।१४।७)। इति ऋग्द्वयमेवानुष्ठानकाले प्रगथ्यते। तस्मादयं प्रगाथ इत्युच्यते। ब्राह्मणस्पत्यप्रगाथे 'प्र नूनं ब्रह्मणस्पतिः' इति प्रथमा बृहती 'तमिद् वाचेमा विदथेषु' इति द्वितीया ततो बृहती (ऋ० १।४०।५-६) इति समाम्ना ते द्वे एव ऋचौ प्रगथनेन तृचरूपतया संपाद्येते। तयोः द्वयो 'प्र नूनं ब्रह्मणस्पतिः (१) मन्त्रं वदत्युक्थ्यम् (२) तस्मिन्निन्द्रो वरुणो मित्रो अर्यमा (३) देवा ओकांसि चक्रिरे (४)॥ समिद् वोचेमा विदथेषु शंभुवम् (५) मन्त्रं देवा अनेहसम् (६) इमां च वाचं प्रतिहर्यथा नरः (७) विश्वेद् वामा वो अश्नवत् (८) इत्यष्टौ पादा भवन्ति। तेषां प्रगथनेन (अभ्यासेन) पुनश्चतुरः पादान् प्रग्रथ्य द्वादशपादसंपत्त्या तिस्रो बृहत्यो बार्हततृचप्रगाथः संपाद्यते। तद्यथा 'प्रनूनम्' एषा बृहतीच्छन्दस्का, द्वादशाक्षरेण तृतीयपादेन अष्टाक्षरैश्चान्यैस्त्रिभिर्युक्ता षट्त्रिंशदक्षरसंपत्तेः। सेयमृक् सकृत् पठनीया (प्रथमा)। पुनरपि तत्रत्यमष्टाक्षरं चतुर्थपादं द्विराम्नाय षोडशाक्षरोऽर्धर्चः सम्पादनीयः। इत स्यामृचि प्रथमपादो द्वादशाक्षरः, द्वितीयपादोऽष्टाक्षरः (इति विंशत्यक्षरोऽर्धर्चः)। एतत्सर्वं मिलित्वा द्वितीया बृहती संपद्यते। तत्रत्यमन्तिममष्टाक्षरं पादं द्विरभ्यस्य (इति षोडशाक्षरोऽर्धर्चः)। समाम्नाते उत्तरार्धे द्वादशाक्षरं प्रथमपादम् अष्टाक्षरमुत्तरपादं च पठित्वा तृतीया बृहती संपादनीया। इत्थमयं प्रगथनप्रकारः। प्रगायितपाठस्तु—नूनं

ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम्। यस्मिन्निन्द्रो वरुणोमित्रो अर्यमा देवा ओकांसि चक्रिरे ॥ १ ॥ देवा ओकांसि चक्रिरे देवा ओकांसि चक्रिरे। तमिद्वोचे मा विदथेषु शंभुवं मन्त्रं देवा अनेहसम् ॥ २ ॥ विश्वेद् वामावो अश्नवद् विश्वेद्वामावो अश्नवत् ॥ ३ ॥ इति। एवमेव 'छन्दनेदीय एहि' (ऋ० ८।५३।५-६) इति इन्द्रनिहवप्रगाथादिषु प्रगाथनप्रकारो द्रष्टव्यः। इति विशेषोऽवगन्तव्यः (तु०—ऐ० ब्रा० सा० ३।१७)। **द्र०** १-२ प्रगाथन ६. तृचात्मका बार्हताः प्रगाथः तत्र तत्र सोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रयुक्ता द्रष्टव्याः। ७. सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे पूर्वस्मिन् पक्षसि पञ्चसु मासेषु बार्हताः प्रगाथाः (बार्हतास्तृचाश्च) भवन्ति। तत्र पञ्च मासाश्चतुरभिप्लवाः' इति तेषु विंशतिशतमहानि आभिप्लविकानि भवन्ति। षष्टे तु त्रयोऽभिप्लवाः इत्यष्टादश त्रयः स्वरसामान इत्येकविंशतिः, तदुभयं मिलित्वा एकचत्वारिंशच्छतमहानि भवन्ति। एतेष्वहःसु प्रगाथभेदस्यो- क्तत्वात्। पञ्चसु मासेषु बार्हताः प्रगाथाः (बार्हताः प्रगाथास्तृचा समाप्यन्ते इति। तदुक्तम्—'पञ्चसु भाःसु बार्हताः प्रगाथा आप्यन्ते' यतः 'चतुःशतं ह्यैन्द्राबार्हताः प्रगाथा दाशतय्यां विद्यन्ते। तेषु चत्वारः प्रगाथा ऊर्ध्वायाः बृहद्रथन्तरकालेयस्तोत्रीयाः 'इन्द्र क्रतुं न आभर' इत्युत्तरपक्षीयश्चैकः' इति (तु०—तां० ब्रा० सा० ४।४।१)। बार्हतप्रगाथाः— स्तोत्रीयासु सामरूपातृचेषु ऋग्रूपाश्चेति द्विविधा भवन्तीति विशेषोऽवधेयः।

**बार्हद्गिर सामन्—** (औ०, सा०) 'सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूते द्वादशाहे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रे 'इन्द्रो मदाय (साम० १००२-४) इति तृचे गीयमानं साम बार्हद्गिरमुच्यते। तु०—तां० ब्रा० १३।४।१५;१८)। ब्रह्मवर्चसकामाय ब्राह्मणाय बार्हद्गिरं कुर्यात् (तां० ब्रा० सा० १३।४।१८)।

**बाहिर्वैदिककर्मन्—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु वेदेः (सौमिकोत्तरवेदेः) बहिर्भवानि दीक्षणीया-प्रायणीया-आतिथ्याघर्मोपसद्- उदयनीयादीनि कर्माणि बाहिर्वैदिकान्युच्यन्ते। तान्येतानि अभिजिद्-विश्वतोरेकाहयोः दर्शपूर्णमासवद् युगपत् सहानुष्ठानपक्षे तन्त्रेणोभयोः कर्तव्यानि न पृथगिति विशेषोऽनुसंधेयः। तु०— का० श्रौ० २२। १।४० विद्याधरः।

**बाहु—** (सा०) अंसमणिबन्धयोः मध्यभागो दीर्घदण्डाकारो बाहुरुच्यते। **द्र०** मा०सं० म० १।१०।

**बुद्धिमद्-इन्दुमदाज्यभाग—** (हौ०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूतस्य अग्न्याधानस्य विकृतौ पुनराधानप्रकरणे आहवनीयपुनराधाने पूर्णाहुत्यन्तं समानं (कर्म कृत्वा) ततः पुनराधेष्टिः तत्र आग्नेयः पञ्चकपालः। 'समिधाऽग्निं दुवस्यत्' (ऋ० ८।४४।१), 'एह्यूषु ब्रवाणि ते' (ऋ० ६।१६।१६)। इत्याग्नेयावाज्यभागौ। इमौ क्रमेण बुद्धिपदेन्दुपदघटितत्वात् बुद्धिमदिन्दुमन्तौ इत्युच्येते। **द्र०** श्रौ०प०नि० पृ०६९, पुनराधेयेष्टि—।

**बृसी—** (सा०) तपस्विनामासार्थं तृणवल्लीतालपात्रवेणुदलादिनिर्मिता अल्पकटविशेषा वृस्यः। ताभिः गवामयनस्योत्तरपक्षति उपो-

त्तमे महाव्रतेऽहनि प्रेङ्खस्य स्तम्भस्य कम्बो न भवति तथा स्तम्भमूलस्य परितस्तस्मिन् (अवटे पांसुं प्रक्षिपन्ति। हस्तेन प्रक्षेपणं न कर्तव्यं किन्तु वृसीभिरित्यर्थः। (तु० ऐ० आसा० ५,१,३)। द्र० कूर्च—।

**बृहती—** (सा०) प्रथमद्वितीयपादावष्टाक्षरौ, तृतीयो द्वादशाक्षरश्चतुर्थोऽष्टाक्षरः इति (८,८,१२, ८)। षट्त्रिंशदक्षरा बृहतीच्छन्दः। द्र० छन्दः परिशिष्टम्।

**बृहती—** सोमयज्ञेषु साग्निचित्येषु अग्निचयन-प्रकरणे द्वादश विधा इष्टकाः पञ्चसु चितिषूपधीयन्ते। त्रयोदशश्चतुर्भागाः चतुर्दशाः वक्राश्च होतृधिष्ण्यगार्हपत्ययोः क्रमेणोपधीयन्ते। तदेवं चतुर्दश इष्टकासु चतुर्विंशत्यङ्गुलदीर्घा इष्टका बृहत्य इत्युच्यन्ते। विधासु चतुर्द्वादश विधा इष्टकास्तु १. पद्याः- द्वादशाङ्गुलसमचतुरस्राः, २. अर्धपद्याः,- द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृताः, ३. पादोनपद्याः- द्वादशाङ्गुलसमचतुरस्राः एकेन पादेन (कोणेन) न्यूनाः (त्रुटिताः), ४. जङ्घामात्राः- अष्टादशाङ्गुलसमचतुरस्राः, ५. अध्यर्धाः-अष्टादशाङ्गुलदीर्घा द्वादशाङ्गुलविस्तृताः, ६. अर्धोत्सेधपद्याः- द्वादशाङ्गुलसमचतुरस्राः त्र्यङ्गुलोच्चाद्व्यङ्गुलोच्चा वा, ७. अर्धोत्सेधा अर्धपद्याः- द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृतास्त्र्यङ्गुलोच्चा वा, ८. पादभागाः-षडङ्गुलसमचतुरस्राः, ९. त्रिग्राहिण्यः- चतुर्विंशत्यङ्गुलदीर्घा अष्टादशाङ्गुलविस्ताराः, दीर्घाः १२. अर्धवृहत्यः- चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृताः, १३. चतुर्भागाः (त्रयोदशाः)-त्र्यङ्गुलसमचतुरस्राः। १४. वक्रा अष्टविभागाः-पूर्वमर्धव्यासेन व्याममात्रप्रमाणं वृत्तं विलिख्य तन्मध्ये चतुर्विंशत्यङ्गुलसमचतुरस्रं साधयित्वा तस्य कोणेषु कोणादारभ्य वृत्तं यावद् रेखाः कुर्यात्, एवं चतुरस्रस्य दिश आरभ्य वृत्तं यावद् रेखा दद्यात्। एवं कृते अष्टौ वक्रा विभागा जायन्ते इत्यष्टौ विभागाः (तु०— का०श्रौ० भूमिका० पृ० ६१-६२. विद्याधरः।

**बृहतीभेद—** (औ०, सा०) साध्यासा अनध्यासा चेति बृहत्यो द्विविधाः। तत्र 'परीतोषिंचता-सुतम्' (साम० ५१२), अभिसोमास आयवः' (साम० ५१८, ८५६) इति द्वे बृहत्यौ। तयोरुपरिष्टात् क्रमेण अधीतं 'नृभिर्येमाणो हर्यते विचक्षणः' (साम० ८५८), 'परिस्वानश्चक्षसे देवमादनः' (साम० १३१५) इति द्विपदाद्वयं अध्यास इत्युच्यते। द्विपदाविशिष्टे द्वे अपि बृहत्यौ साध्यासे भवतः। अन्याः सर्वा वृहत्यः अनाध्यासाः। (तु०— द्रा०श्रौ० धन्वी) —।

**बृहतीशत—** (सा०, औ०) षट्त्रिंशत्स्तोत्रीयासङ्घः एका बृहती। तासां शतं बृहतीशतमुच्यते। (तु०— द्रा०श्रौ० धन्वी।

**बृहत्सामधर्म—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसव- पृष्ठस्तोत्रे बृहति साम्नि प्रस्तूयमाने 'उच्चैर्गेयम्', 'बलवद् गेयम्' बृहति स्तूयमाने मनसा समुद्रं ध्यायेत्' इत्यादयः बृहत्सामधर्मा उच्यन्ते। द्र० मी०को० पृ० २९७९।

**बृहत्सामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पृष्ठ्यषडहस्य च द्वितीयेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रे होतुः बृहत्पृष्ठस्तोत्रे प्रयोक्तव्यः 'त्वामिद्धि हवामहे। (ऋ० ६।४६।१; साम० २३४ ८०९९-१०) इत्यस्यां योनौ उत्पन्नं साम बृहत्साम भवति पृष्ठनिष्पादकम्। (२. 'स प्रजापतिः) तूष्णीं

मनसाऽध्यायत् तस्य यन्मनसाऽऽसीत्तद् बृहत्समभवत्। ततः (व रथन्तरसृष्टेरनन्तरं) वृहत् प्राजायत वृहन्मर्या इदं स योगन्तर् अभूदिति बृहतो बृहत्त्वम्' (तु०—तां० ब्रा० सा० ७।६।१।५)। ३. बृहत्साममाध्यन्दिनपवमानानन्तरं माध्यन्दिनसवने उभयसामसु अहःसु पृष्ठ्यषडहादिषु सर्वेषु पृष्ठस्तोत्रेषु पूर्वं गीयते। (तु०—ता०सा० ६।६।९) ४. बृहत्सामा यदि सोमाः स्यात् शुक्राग्रान् ग्रहान् गृह्णीयात् ज्योतिष्टोमे। **द्र०** मी०को० पृ० २९७९)।

**बृहत्सामयोनिशंसन—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने निष्केवल्य बृहत्साम्नः 'त्वामिद्धि हवामहे' (ऋ० ६।४६।१, साम० २३४) इति योनिरुत्पत्तिस्थानमुच्यते। गवामयने चतुर्विंशेऽहनि यदि बृहत्पृष्ठस्तोत्रं न क्रियते तदा योनिं शंसेत् (तु०— आ०श्रौ० ७।३।११ नारायणः)। **द्र०** योनि—, योनिशंसन—, योनिस्थान— ।

**बृहत्सामरोह—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने पृष्ठस्तोत्रे बृहद्गाने बृहतः साम्नो नव रोहान् रोहति। तांश्च त्रीन् तृचस्य प्रथमायां ऋचि, त्रीन् मध्यमायां त्रीन् उत्तमायामृचि रोहति, इति नव रोहाः सम्पद्यन्ते। इति बृहतः नवरोहा उच्यन्ते। (तु०— तां० ब्रा० सा० ७।७।७)।

**बृहद्दिवसूक्त—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतगवामयनसंवत्सरसत्रप्रकरणे द्वितीये प्रायणीये चतुर्विंशेऽहनि माध्यंदिनसवने निष्केवल्यशस्त्रे होत्रा प्रयोक्तव्यं 'तदिदास भुवनेषु ज्येष्ठम्' (ऋ० १०।१२०) इति सूक्तं बृहद्दिसूक्तमुच्यते। इदं सूक्तं गवामयनस्यैवोपान्त्ये महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रेऽपि होत्रा प्रयुज्यते इति विशेषोऽवगन्तव्यः (तु०—ऐ० ब्रा० सा० ४।१४)। **द्र०** महाव्रते निष्केवल्यशस्त्र— ।

**बृहद्रथन्तरयोर्व्याहृति—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने माध्यन्दिनपवमाने बृहद्रथन्तरयोः गाने क्रमेण १. ऐरं बृहतः २. ऐडं रथन्तरस्य। ३. मनो बृहतः ४. वाग् रथन्तरस्य। ५. साम बृहतः ६. ऋग् रथन्तरस्य। ७. प्राणां बृहतः ८. अपानो रथन्तरस्य। ९. असौ लोको बृहतः १०. अयं (लोकः) रथन्तरस्य इति दश व्या- हृतयो भवन्तु (तु०—तां० ब्रा० सा० ७।६।१७)। सूत्रकारेणाप्युक्तम्— 'बृहता वा रथन्तरेण वा स्तोष्य स्तोष्यमाणः प्राक् स्तोमयोगाद् दश व्याहृतीर्मनसा ध्यायेत् 'ऐ रम्'। इति। (ला०श्रौ० २९।७)। तत्र रथन्तरस्य पञ्च व्याहृतयः, बृहतः पञ्च। उभयोरपि व्यतिषक्तास्ताः सर्वा उभयोगानि (स्तोमयोगात्पूर्वं ) मनसा ध्यायेत उद्गाता (तु०—द्रा०श्रौ० धन्वी)।

**बृहस्पतिसव—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे अस्ति बृहस्पतिसंज्ञक एकाहः। स चाग्निष्टोमसंस्थः त्रिवृत्स्तोमकस्तेजो ब्रह्मवर्चसपुरोधाकामस्य स्वतन्त्रोऽनुष्ठीयते। का० श्रौ० २२।५।११ तां० ब्रा० सा० १७। ११।१-२ आ०श्रौ० ९।५।३)। वाजपेयाङ्गभूतस्य वाजपेयस्यादावन्ते चाग्निष्टोम-

वत् क्रियते इयांस्तु विशेषः यदग्नीषोमीयस्य पशुपुरोडाशमनुदेवसूहवींषि निरूप्यन्ते। तद्विधी राजसूये चयने च (तु०— का०श्रौ० १४।१।२ टि० च विद्याधरः)। स्वतन्त्रस्यैतस्य बृहस्पतिसवस्य त्रयस्त्रिंशद् गावोऽश्वश्चेति चतुस्त्रिंशद् दक्षिणा भवन्ति। तथाहि प्रातः सवने द्विनाराशंसं प्रातः सवनमिति प्रथमेषु नाराशंसेषु सत्रेषु सादितेषु) पूर्वं एकादशसंख्या गावो दक्षिणा ऋत्विग्भ्यो दातुं व्यादिशति (प्रतिजानीते) तथा द्विनाराशंसं माध्यन्दिनसवनमिति माध्यन्दिनसवने प्रथमेषु नाराशंसेषु सत्रेषु अश्वसंहिता एकादश गावो दातुं व्यादिशति। तत्पश्चाद् प्रातः सवनमाध्यन्दिनसवनयो व्यादिष्टाः (प्रतिज्ञाताः) उभयोः दक्षिणामाध्यन्दिनसवने अपाकरोति ददाति। तथा तृतीयसवनमेकनाराशंसमिति तृतीयसवने सत्रेषु नाराशंसेषु एकादश गावो दक्षिणाः ऋत्विग्भ्यो दातुं व्यादिश्य मैत्रावरुण्या वशायाः (अनूबन्ध्यायाः पशोः) वपायां हुतायां ददातीति बृहस्पति सवस्य चतुस्त्रिंशद् दक्षिणा भवन्ति (तु०—तां० ब्रा० सा० १७।११।१-२ ला०श्रौ० ८।७।४-७ अग्निस्वामी)। आ०श्रौ० ९।५।७) यद्वा 'एकादशैकादश सहस्राणि, शतानि वा अनुसवनं दाक्षिणा दीयन्ते (तु०— आ०श्रौ० ९।५।८-१०) ला०श्रौ० ८।७-९)। तत्र हुतशिष्टा भक्षिताऽऽप्यायिताश्चमसा नाराशंसा इत्युच्यन्ते। २. स्थापति सवोऽयं बृहस्पतिसवः' इति यं ब्राह्मणं स्थपतित्वाय राजपुरः सरा ब्राह्मणा वृणीरन् स ब्राह्मणः बृहस्पति सवेन यजेत इति विशेषोऽवगन्तव्यः (तु०—तां० ब्रा० सा० १।७।११।६ ला०श्रौ० ८।७। ४)। सवशब्दोऽभिषेकवाची। बृहस्पतिसवे यजमानो घृतेनाभिषिच्यते। ३. 'ब्राह्मणो बृहस्पतिसवेन यजेत' इति प्रसिद्धो (स्वतन्त्राः) बृहस्पतिसवः। 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इत्यत्र तु वाजपेयाङ्गत्वेन विहितो बृहस्पतिसवः कर्मान्तरमेव प्रसिद्धबृहस्पतिसवात् (धर्मातिदेशार्थस्तु कर्मान्तरे बृहस्पतिशब्दप्रयोगः। द्र० मी० को० पृ० २९७९।

**बृहस्पतिसवे आज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...एकाहप्रकरणे प्रातःसवने होतुः 'अग्निर्देवेषु राजति' (ऋ० ५।२५।४-६) इत्याज्यशस्त्रम् (तृचसूक्तम्। संख्यासायणभाष्ये विनियोगं देवत्रातं च दृष्ट्वा निर्णेतव्या) (आ०श्रौ० ९।५४-५)। शिष्टमनाम्नातं प्रकृतिवद् द्रष्टव्यम्।

**बृहस्पतिसवे निविद्धानीयतृचसूक्तविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...एकाहप्रकरणे विकृतिभूतस्य बृहस्पतिशब्दस्य स्वभूतानि यानि सूक्तस्थानानि (प्राकृतसूक्तानि) होतुर्होत्रकाणां च तेषु सर्वेषु तृचाः (तृचसूक्तानि) एव कर्तव्याः (तु०— आ०श्रौ० ९।५।४ नारायणः)।

**बृहस्पतिसवे मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृति...... प्रकरणे माध्यन्दिनसवने 'इन्द्र मरुत्व इह' (ऋ० ३।५१।७-९) इति होतुर्मरुत्वतीयशस्त्रे निविद्धानीयं तृचसूक्तम्। शिष्टमनाम्नातं प्रकृतिवद्— द्र०।

**बृहस्पतिसवे निष्केवल्यशस्त्र—** सोमयज्ञेषु प्रकृति.....प्रकरणे माध्यन्दिनसवने 'नृणामु त्वा' (ऋ० ३।५१।४-६) इति होतुर्निष्केवल्यशस्त्रे निविद्धानीयं तृचसूक्तम्। शिष्टं प्रत्यक्षमनाम्नातं प्रकृतिवद्— द्रष्टव्यम्।

**बृहस्पतिसवे सूक्तमुखीया—**(हौ०) सोमयज्ञेषु प्रकृति.....प्रकरणे माध्यन्दिनसवने मरुत्वतीये निष्केवल्ये च शस्त्रे निविद्धा-

नीयतृचसूक्तस्य पुरस्तात् शंस्तव्ये 'यस्तस्तम्भ सहसा', धुनेतयः सुप्रकेतम्' (ऋ० ४ ।५० ।१-२) द्वे ऋचौ बृहस्पतिसवे सूक्तमुखीये भवतः (तु०—आ०श्रौ० ९ ।५ ।५)। द्र० १-२ सूक्तमुखीया— ।

**बृहस्पतिसवे वैश्वदेवशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृति.....प्रकरणे तृतीयसवने 'उदुष्य देवः (ऋ० ६ ।७१ ।१-३), 'घृतवती भुवनानाम्' (ऋ० ६ ।७० ।१-३) 'इन्द्र ऋभुभिर्वाजद्भिः (ऋ० ३ ।६० ।५-७), स्वस्ति नो मिमीताम्' (ऋ० ५ ।५१ ।११-१३) इति होतुर्वैश्वदेवशस्त्रे चत्वारि निविद्धानीयतृचसूक्तानि। आ०श्रौ० ९ ।५ ।४-५ शिष्टं प्रत्यक्षममाम्नातं प्रकृतिवद्— द्र० ।

**बृहस्पतिसवे आग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृति....... प्रकरणे तृतीयसवने 'वैश्वानरं मनसाग्निम्' (ऋ० ३ ।२६ ।१-३), प्रयन्तु वाजा: १ ।३ ।२६ ४-६), 'समिद्धमग्निं समिधा' (ऋ० ६ ।१५ ।७-९) इति होतुराग्निमारुतशस्त्रे त्रीणि निविद्धानीयतृचसूक्तानि। (आ०श्रौ० ९ ।५ ।४-५)। शिष्टं प्रत्यक्षमनाम्नातं प्रकृतिवद् द्रष्टव्यम्।

**ब्रह्मन्—** (सा०) ऋग्यजुः सामाख्यं ब्रह्म भवति। २. क्रियामयं ब्रह्म नाऽक्रियं ब्रह्म (तु०—बौ०गृ० ३ ।१२ ।९)। ३. ब्रह्म इतिहासमिश्रं ऋङ्मिश्रं गाथामिश्रं भवति (यास्कनिरुक्त० ४-६) अर्थात् इतिहासमिश्रं इतिहास-युक्तम्। स पुनरितिहासः ऋग्वेदः, गाथाबद्धश्च (ऋक्प्रकार एव कश्चित् गाथेत्युच्यते (इति दुर्गाचार्यः)। गाथामिश्र-गायन्ति स्तुवन्ति याभिः ता गाथाः केवलाः स्तुत्यर्था ऋचः (इति स्कन्दमहेश्वरः)। शौनः शेपं आख्यानं परःशतगगाथम् (शां० श्रौ० १५ ।२७ ।१)। =ऋचो गाथामिश्राः परः शताः परःसहस्रा वा (आप० श्रौ० १२ ।१९ ।१०)। परःशतमितमृचां गाथानां च रचितम् (इति शां०श्रौ० आनर्तीयभाष्यम्)। तदेतत् पर ऋक्शतगाथं शौनः शेपमाख्यानम् (तु०—ऐ० ब्रा० सा० ७ ।१३-१८)।

**ब्रह्मन्—** (सा०) १. ब्रह्मा ऋत्विक्। प्रथमगणस्थोऽयम्, पूर्णां दक्षिणां द्वादश गाः लभते। तस्य पुरुषास्त्रयः ब्राह्मणाच्छंसी, अग्नीत् (अग्नीधः) पोता चेति। ब्रह्म वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति। ब्रह्मणः अध्वर्यूद्गातृहोतृणां प्रयोगेषु प्रसक्तं वैकल्यं समाधातु वेदत्रयाध्ययनमपेक्षितम्। द्र० मी०को० पृ० २९८६। २. यः कर्मणि सदा दत्तचित्तः प्रणीता प्रणयनादौ अभ्यनुज्ञाकिर्ता ऋग्यजुः साममन्त्रकर्मप्रैषे गार्हपत्यदक्षिणाग्न्याहवनीयेषु क्रमेण प्रायश्चित्ताहुतिहोमं करोति (बौ०ध०)। अनादिष्टहोमकर्ता (का० श्रौ०) अनुमन्त्रयिता (वैता०श्रौ०)। स ब्रह्मा ऋत्विग्भवति। कर्मकाले यजमानसहितः आहवनीयस्व दक्षिणत उदङ्मुख उपविशति। तस्य पूर्वस्यां दिशि तत्रैवोदङ्मुखो दक्षिणोत्तरिणा उपस्थेन दक्षिणेऽङ्के उत्तात्तानं सव्यं पाणिं प्रागग्रं निधाय तदुपरि तत्रैव न्यञ्चं दक्षिणं निधाय य आस्ते च स ब्रह्मपदवाच्यः। द्र० श्रौ०प०नि० पृ० १-२। ३. वासिष्ठो ब्रह्मा। 'वासिष्ठानां वा ब्रह्मत्वनियमात्' (मी०सू० ६ ।६ ।२४)। सर्वेषां वा प्रतिप्रसवात् य एव कश्चन स्तोमभाग (मन्त्र) मधीयीत स एव ब्रह्मा भवेत्। अर्थात् स्तोमभागान् 'रश्मिरसि क्षपायत्वा' इत्यादयो मन्त्राः स्तोमभागास्तान् अधीयानोऽवासिष्ठोऽपि वासिष्ठकार्यं समर्थः कर्तुमिति (तु०— मी०सू० ६ ।६२५)। विश्वामित्रस्य हौत्रनियमात् भृगुशुनकवसिष्ठानाम् (हौत्रे) अनधिकारः (तु०—

मी०सू० ६ ।६ ।२६) । इत्यत्र विश्वामित्रो होता भवति न वा । विश्वामित्रो होता भवति न वसिष्ठ इति विशेष उन्नेय: । ४. 'ततो वसिष्ठपुरोहिता: प्रजा: प्राजायन्त, तस्माद् वासिष्ठो ब्रह्मा कार्य:' (तु०—तै० सं० ३ ।५ ।२ ।१) तस्मात् वासिष्ठो ब्रह्मा भवति ।

**ब्रह्मकर्तृकनित्यप्रायश्चित्तहोम—** (ब्रह्म०) इष्टियज्ञेषु हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु संस्थाजपानन्तरं ब्रह्मा प्रणीताप्रणयननिनयनान्तरं होतृवत् तत्रैव तिष्ठन् आहवनीये सप्ताहुतीर्हुत्वा संस्थाजपेनोपस्थाय तीर्थेन निष्क्रामति । अयं होमो ब्रह्मकर्तृकनित्यहोम इत्युच्यते । द्र० संस्थाजप—, होतृकर्तृकनित्यप्रायश्चित्तहोम-, श्रौ०प०नि० पृ० ४१ ।

**ब्रह्मकर्तृकप्रायश्चित्तहोम—** (ब्रह्म०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु ब्रह्मा ऋक्त: यजुष्ट: सामत: आर्तौ (विनाशे, भ्रेषे) अविज्ञातसर्वव्यापादि च क्रमेण गार्हपत्ये आग्नीध्रीये (धिष्ण्ये) अन्वाहार्यपचने वा आहवनीये च 'भू: भुव: स्व:' इति व्यस्ताभि: समस्ताभि: (भूर्भुव: स्व:) व्याहृतिभिर्जुहोति । तदुक्तमैतरेयब्राह्मणे 'यदि यज्ञे ऋक्त आर्तिर्भवति भूरिति ब्रह्मा गार्हपत्ये जुहुयाद् । यदि यजुष्टो भुव इति आग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु । यदि सामत: स्वरित्याहवनीये । यद्यविज्ञाता सर्वव्यापद्वा भूर्भुव: स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहुयात्' (ऐ० ब्रा० ५ ।३४) इति । अर्थात् ऋङ्मन्त्रवैकल्ये भूरिति होम: । यजुर्मन्त्रवैकल्ये आग्नीध्रीये (धिष्ण्ये) भुवरिति होम: । सोमयागे हविर्यगे आग्नीध्रीयाभावात् । अग्न्याधेयमग्निहोत्रं दर्श-पूर्णमासामासौ आग्रयणं चातुर्मास्यानि दाक्षायणयज्ञ: कौण्डपायिनामयनं सौत्रामणी वा सप्तमीति हविर्यज्ञेषु आग्नीध्रीयाभावात् दक्षिणाग्नौ जुहुयात् । सामभ्रेषे स्वरित्याहवनीये होम: । यद्यविज्ञातो भ्रेषो यदि वा वेदत्रयभ्रेषसमुच्चय: तत्रोभयत्रापि भूर्भुव: स्वरिति सर्वा: व्याहृतीरुच्चार्य आहवनीय एव जुहुयात् (तु०—ऐ० ब्रा० सा० ५ ।३२ ।३४) ।

**ब्रह्मकूर्चोदक—** द्र० पञ्चगव्यहोम— ।

**ब्रह्मचमस—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ब्रह्मणा प्रयोक्तव्य: नैयग्रोध: चतुरस्रोऽल्पदण्ड: ब्रह्मचमसो भवति । द्र० श्रौ०प०नि० पृ० २४९ ।

**ब्रह्मजप—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च यजमानेन वृतो ब्रह्मा 'अहं भूपतिरहं महतो भूतस्य पतिर्भूर्भुव: स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तदहं मनसे प्रब्रमीमि मनो गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब् जगत्यै जगत्यनुष्टुभेऽनुष्टुप् प्रजापतये प्रजापतिर्विश्वेभ्यो देवेभ्यो बृहस्पति देवानां ब्रह्माहं मनुष्याणाम्' इति मन्त्रं जपति । सोऽयं ब्रह्मणो जपो ब्रह्मजप: इत्युच्यते ।(का०श्रौ० २ ।१ । १८) ।

**ब्रह्मणोऽनुज्ञादान—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु, ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे, अग्नीषोमीये, तत्प्रकृतिकेषु सौमिकेषु च 'ब्रह्मन् अप: प्रणेष्यामि' (का०श्रौ० २ ।३ ।२) इत्यध्वर्युणा पृष्टो ब्रह्मा 'प्रणय यज्ञं देवता वर्धय त्वं, नाकस्य पृष्ठे यजमानो अस्तु । सप्त ऋषीणां सुकृतां यत्र लोक:,

तत्रेमं यज्ञं यजमानं च धेहि' इति मन्त्रमुच्चार्य 'ऊँ प्रणय' इति प्रणीता प्रणयनाय अनुज्ञां ददाति। एवं 'ब्रह्मन् हविः प्रोक्षयिष्यामि, ब्रह्मन् इध्मं प्रोक्षिष्यामि, ब्रह्मन् बर्हिः प्रोक्षिष्यामि' इति अध्वर्युणा पृष्टो ब्रह्मा पूर्वोक्तमन्त्रमुच्चार्य 'ऊँ प्रोक्ष' इति हविषः, इध्मावर्हिषोश्च प्रोक्षणाय अनुज्ञां ददाति। तथैव 'ब्रह्मा पूर्वं परिग्रहं' परिग्रहिष्यामि' इति अध्वर्युणा पृष्टो ब्रह्मा 'बृहस्पते परिगृहाण वेदिं सुगावो देवाः सदनानि सन्त्वस्यां बर्हिः प्रथतां साध्वन्तर्हिता पृथिवी देवी देव्यस्तु' इति मन्त्रमुच्चार्य 'ऊँ परिगृहाणेत्यनुज्ञां ददाति। अथापि अनुयाजार्थमध्वर्युणा 'ब्रह्मन् प्रस्थाष्यामि' इति पृष्टो ब्रह्मा 'एतं ते (मा०सं० २।१२-१३) इति मन्त्रद्वयेनाध्वर्युमाज्ञापयति। तदिदमध्वर्यवे ब्रह्मणोऽनुज्ञादानमुच्यते। तत्र 'एतं ते' इति मन्त्रान्ते 'प्रतिष्ठ' इति क्रियापदं पठेद् वा न वा पठेत्। पाठाभावे प्रणवान्तः (ओमान्तः) एव मन्त्रः पठितव्यः (तु०— आ०श्रौ० २। २।८-१२, ३।५।१ विद्याधरः)।

**ब्रह्मणोऽनुज्ञादान—** (ब्रह्म०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युणा स्तोत्र उपाकृते (प्रारब्धुमनुज्ञाते सति) प्रस्तोता 'ब्रह्मन् प्रस्तोष्यामः' इति मन्त्रेण ब्रह्माणं स्तोत्रगानार्थमनुज्ञां प्रार्थयेत्। ततः प्रस्तोत्रा प्रार्थितो ब्रह्मा प्रातः सवने 'भूरिन्द्रवन्तः स्तुध्वम्' माध्यन्दिन सवने भुवरिन्द्रवन्तः स्तुध्वम्', तृतीयसवने स्वरिन्द्रन्वन्तः स्तुध्वम्' इत्यनुज्ञां ददाति। उक्थ्ये वा अतिरात्रे वा 'भूर्भुवः स्वरिन्द्रवन्तः स्तुध्वम्' इति मन्त्रेण गानार्थे उद्गातृभ्योऽनुज्ञां ददाति। तु०— ऐ० ब्रा० सा० ५।३४; २. प्रसव—।

**ब्रह्मणोऽनुज्ञादान—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च 'ब्रह्मन् सामिधेनीरनुवक्ष्यामि' इति सामिधेन्यनुवचनार्थं होत्रा पृष्टो ब्रह्मा 'प्रजापतयेऽनुब्रूहि यज्ञम्' इत्यनेन मन्त्रेण सामिधेनीर्ऋचः पठितुं होत्रेऽनुज्ञां ददाति इदं ब्रह्मणा होत्रेऽनुज्ञादानमुच्यते। (तु०—का० श्रौ० २।२।११ विद्याधरः)।

**ब्रह्मत्व—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. 'यदेतत् त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वम्' (तु०—ऐ० ब्रा० ५।३३)। २. सप्तपाकयज्ञेषु सप्तहविर्यज्ञेषु सप्तसोमसंस्थासु चेति एकविंशतिसंस्थे यज्ञे सर्वत्र ब्रह्मणः कर्म ब्रह्मत्वमित्युच्यते। तच्च श्रौतयज्ञप्रक्रिया पदार्थानुक्रमकोषे अग्न्याधेये दर्शपूर्णमासयोः चातुर्मास्येषु पाशुके सौत्रामण्यां सोमसंस्थासु च वर्णानुपूर्व्या तत्र तत्र आध्वर्यवे, हौत्रे औद्गात्रे च द्रष्टव्यम्। द्र० १-३ ब्रह्मणोऽनुज्ञा—।

**ब्रह्मभागप्राशन—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च प्रधानयागानन्तरं ब्रह्मा शिष्टाद् हवषो यवमात्रं पिप्पलमात्रं वा गृहीत्वा अध्वर्युणा दीयमानं भागं 'मित्रस्य त्वा चक्षुषा प्रतीक्षे' इति मन्त्रेण प्राशित्रं (स्वभागं) प्रतीक्ष्य 'ऊँ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' (मा०सं २।११) इत्यनेन प्रतिगृह्यवेद्या दक्षिणेंऽसे प्रस्तृतानि बर्हीषि अपसार्य तत्र भूमौ 'ऊँ पृथिव्यास्त्वा नाभौ सादयाम्यदित्या उपस्थेऽग्ने हव्यं रक्ष' (मा०सं २।११) इत्यनेन सपात्रं प्राशित्रं संस्थाप्य अनामिकाङ्गुष्ठाभ्यां 'देवस्य त्वेति' इति मन्त्रेण पुनरादाय दन्तैरचर्वयन्

'अग्नेष्ट्वाऽऽस्येन प्राश्नामि' इति ब्रह्मणः स्वभागस्यप्राशनम्। तत्र ब्रह्मणो भागप्राशनस्य कालद्वयं विहितमस्ति। कालान्तरे (यजमानव्रतविसर्गान्ते) भक्षणपक्षे अंसदेशे आसादनं कार्यम्। प्रधानयागानन्तरं भक्षणपक्षे तु आसादनं न कर्तव्यं किन्तु आसादनमकृत्तैव भक्षणं भवतीति विशेषोऽवधेयः का० श्रौ० २।२।१३-१७ विद्याधरः। **द्र०** प्राशित्र प्राशन—। राजसूये तु दीक्षणीयादिष्विष्टिषु राज्ञोऽहुतादः यजमानस्य भागो ब्रह्मणे परिहृत्यः (समर्पणीयः)। तु०—ऐ० ब्रा० सा० ७।२६) इति ब्रह्मा क्षत्रियस्य अहुतादा यजमानस्यापि भागं ब्रह्मा प्राप्नोतीति च विशेषोऽवधेयः। **द्र०** अहुताद्—।

**ब्रह्मयजमानोपवेशन—**(आध्व०) ऐष्टिकपाशुकानुष्ठानकाले ब्रह्मयजमानौ आहवनीयस्य दक्षिणत उपविशतः तथा सोमे प्रायः सवने द्विदैवेत्यप्रचारे। तथा सौमिके प्रातः सवने द्विदैवत्यप्रचारे। सौमिके तु पूर्वो यजमानोऽपरो ब्रह्मा। **द्र०** श्रौ०प०नि० पृ० २८१।

**ब्रह्मवरण—** (याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च दर्शेष्टौ अमायां प्रातरग्निहोत्रहोमानन्तरं सूर्योदयात्पूर्वं वेदत्रयविहितकर्मकुशलं ब्रह्माणं ब्राह्मणमृत्विजं यजमानः 'भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृणीमहे' इति मन्त्रेण वृणीते। पौर्णमासेष्टौ तु तथैव सूर्योदयादनन्तरं ब्रह्माणं वृणीते। तदेतत्कर्म ब्रह्मवरणमुच्यते। एतच्च वरणं कर्मणि ब्रह्मणः प्रवर्तनार्थं भवति। अतः ब्रह्मा प्रवृत्ते कर्मणि प्रब्रियते प्रणीताप्रणयनकाले। अतः ब्रह्मा प्रवृत्ते कर्मणि प्रब्रियते प्रणीताप्रणयन काले तेन अग्न्याधेये ब्रह्मण आधानकाल एव वृतत्वेन आधानानन्तर भाविनीषु तदङ्गभूतासु पवमानेष्टिषु ब्रह्मा न व्रियते। एवमेव सोमयागे संकल्पानन्तरमेव ब्रह्मणो वृतत्वात् तदङ्गभूतासु तदुत्तरकालीनासु दीक्षणीयादीष्टिषु ब्रह्मा न व्रियते इति विशेषोऽवधेयः। (तु०—का०श्रौ० २।१। १७ विद्याधरः)।

**ब्रह्मवर्ग—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूते १. तत्र तत्र यथापेक्षं वृताः 'ब्रह्माणं ब्राह्मणाच्छंसिनं अग्नीध्रं पोतारम् इति ब्रह्मणः' (तु०—आप० श्रौ० १०।१।९) इति सूत्रोक्ताः चत्वारः पुरुषा ऋत्विजो ब्रह्मवर्ग उच्यते। **द्र०** २. ब्रह्मन् २. तत्र ब्रह्माणं अध्वर्युर्दीक्षयति द्वादशाहे दीक्षायाम्। **द्र०** मी०को० पृ० १९८६।

**ब्रह्मवर्चस—** (सा०) श्रुताध्ययनसम्पत्तिर्ब्रह्मवर्चसमुच्यते।

**ब्रह्मवाग्यम—**(ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुयज्ञेषु च ब्रह्मसदनोपवेशनादारभ्य 'ब्रह्मन् प्रस्थास्यामि' (का० श्रौ० ३।५।१) इति अध्वर्युणा अनुयाजार्थं प्रैषे कृते 'ऊँ प्रतिष्ठ' इत्यभ्यनुज्ञापर्यन्तं ब्रह्मा वाग्यतः तिष्ठति। यद्वा भागमस्मै परिहरति (का०श्रौ० ३।४२५) इति ब्रह्मभागपरिहरणमारभ्य पूर्वोक्तानुयाजप्रसव यावत् ब्रह्मा वाग्यतो भवति इत्यन्यन्तर पक्षमश्रित्य ब्रह्मणो मौनावस्थानम् ब्रह्मणो वाग्यम उच्यते। तदुक्तम्—'वाग्यत आऽनुयाजप्रसवात्'। 'भागपरिहरणादि वा' (का० श्रौ० २।२।३-४) इति। तथा च श्रुतिः— 'अथास्मै ब्रह्मभागं पर्याहरन्ति...स वै वाचं यम एव स्यात् ब्रह्मन् प्रस्थास्यामि इत्येतस्माद् वचसः'। श० ब्रा० १।७।४।१७) इति। (तु०— का० श्रौ० २।२-३ विद्याधरः)।

**ब्रह्मवाग्यम—** (ब्रह्म०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ब्रह्मा प्रातरनुवाकोपाकरणादूर्ध्वम् उपांशचन्तर्यामयोर्ग्रहयोर्होम समाप्तिपर्यन्तम् पवमानस्तोत्रेषु बहिष्पवमानमाध्यन्दिन पवमानार्भवपवमानेषु त्रिषु अध्वर्युणानुज्ञातेषु अन्तिमाया ऋच: समाप्तिपर्यन्तम्, आज्यादिस्तोत्राणां शस्त्रसहितानां तत्तत्स्तोत्रारम्भाद् ऊर्ध्वमावषट्का राद् वौषडिति मन्त्रोच्चारणपर्यन्तं च वाचं यमो भवति। (ऐ० ब्रा० सा० ५ ।३३)।

**ब्रह्मसदनोपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु औदुम्बर्युपस्थानानन्तरं अध्वर्यु: ब्रह्मसदनमुपतिष्ठते—'ब्रह्मज्योतिरसि सुवर्धामा रौद्रेण० सी:' इति। तदिदं ब्रह्मसदनोपस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० २४८, औदुम्बर्युपस्थान—।

**ब्रह्मसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने तृतीये पृष्ठस्तोत्रे १. ब्राह्मणाच्छंसी यत्सामानुशंसति तद् ब्रह्मसाम (द्रा०श्रौ० ६ ।२ ।२ धन्वी)। २. ब्रह्माण (ब्राह्मणाच्छंसिन)-मुद्दिश्य गीयमानं साम ब्रह्मसामोच्यते (तां० ब्रा० सा० १८ ।११ ।१०)। ३. सोमयज्ञेषु प्रकृतिविकृतिभूतेषु ब्राह्मणाच्छंसी स्वपृष्ठस्तोत्रे यत् किञ्चिन्नामकं साम गायति तद् ब्रह्मसामेति नाम्नाऽऽख्यायते। नास्तान्यत् किञ्चित् स्वतन्त्रं ब्रह्मसाम। यथा अभीवर्तं ब्रह्मसाम, श्वैतं ब्रह्मसाम, त्रैशोकं ब्रह्मसामेत्यादि। यजमानस्य कामविशेषु प्रायो ब्रह्मसाम्न: प्रयोगो दृश्यते। तदुक्तं 'ब्रह्मसाम्नि य: कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत' (ला०श्रौ० २ ।१० ।२) इति। द्र० अभीवर्त—।

**ब्रह्मादिवपामार्जन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु च पशुवपाहोमानन्तरं ब्रह्मा होता मैत्रावरुणश्च चात्वाले मार्जयन्ते— 'सुमित्रया न आप ओषधय: सन्तु दुर्मित्रयास्तस्मै सन्तुयोऽस्मान् द्वेष्टि यं च वयं द्विष्म:' इति मन्त्रेण। मैत्रावरुणस्तु दण्डं निधाय (मार्जयते इति विशेष:) इदं ब्रह्मादि वपामार्जनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १४६-४७, पशुवपायाग—।

**ब्रह्मायतनीया—** (औ०, सा०) ज्योतिष्टोमातिरात्रविकृतिषु एकाहाहीनसत्रेषु द्वादशाहिकदाशरात्रिकस्तोमेभ्योऽधिका ये एकिप्रभृतयो वर्धमानस्तोमा: तेषां विष्टुतयो ब्राह्मणे नाम्नाता: तेषु सूत्रकारोक्तपर्यायकृतौ पर्यायस्य प्रथमाया: स्तोत्रीयाया: प्रयोगे भूयिष्ठे सा विष्टुतिर्ब्रह्मायतनीया भवति (तु०—ला०श्रौ० ६ ।६ ।४; ८ अग्निस्वामी)। द्र० विष्टाव—, पञ्च-पञ्चिस्तोमपर्यायकृति—।

**ब्रह्मासन—** (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु 'दक्षिणतो ब्रह्मयजमानावासाते कर्मण: क्रियमाणस्य' इति दक्षिणतो यज्ञे ब्रह्मण: कुशास्तृतं काष्ठादिनिर्मितमासनं भवति। द्र० ब्रह्मयजमानोपवेशन-, ब्रह्मोपवेशन—।

**ब्रह्मासनोपस्थान—** द्र० ब्रह्मसदनोपस्थान—।

**ब्रह्मोद्य—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वत्रिरात्रे (अश्वमेधे) द्वादशाहगते, गवामयनगते च

अविवाक्येऽहनि वक्तव्यम्— १. निर्गुणस्य ब्रह्मणो निरूपणं ब्रह्मोद्यमिति (तु०—का०श्रौ० १२।४।२० विद्याधरः)। २. प्रश्नप्रतिवचनरूपं वादो ब्रह्मोद्यमुच्यते (तु०—द्रा०श्रौ० धन्वी, ला०श्रौ० ९।१०।८-१४ अग्निस्वामी)। ३. गायत्रीं त्रिर्ब्रूयुरिति धानञ्जय्यः। चतुर्होतारमभिप्रेत्यैतदिति गौतमः। तर्के वा कथयेयुर्यथाऽश्वत्रिरात्रे इति ताण्डिः। ४. तत्सवितुर्वरेण्यमिति एषा गायत्री साक्षात् ब्रह्मणः प्रतिपादिका। तस्यास्त्रिर्वचनं ब्रह्मोद्यमिति धानञ्जय्यमतम्। ५. 'चित्तिः स्रुक् चित्तमाज्यम्' इत्यादिकाः पञ्चानुवाकाः चतुर्होतारोऽध्वर्युभिः समाम्नाताः। तेषामाद्यं स्तुतानुशंसनाय होता व्याचष्टे इत्याख्यानं ब्रह्मोद्यमिति गौतमः। यथा त्रिरात्रेऽश्वमेधे वादिप्रतिवादिरूपेण तर्के प्रश्नप्रतिवचने कुर्वन्ति 'कि ँ् स्विदासीत्' इत्यादिभिर्मन्त्रैः क्रियते तथैवात्रापि कर्तव्यमिति शाण्डिल्यः इत्यर्थोऽवगन्तव्यः। तच्चेदं ब्रह्मोद्यद्वादशाहे गवामयने चाऽविवाक्ये दशमेऽहनि भवतीति (तु०—तां० ब्रा० ४।९।१२ ऐ० ब्रा० ५।२५)। ६. ब्राह्मणानामुद्यं संवादो ब्रह्मोद्यमुच्यते। यथा द्वादशाहस्यैकादशे (दशरात्रस्य दशमे) अहनि अविवाक्ये 'असौ (आदित्यः) गृहपतिः' इति ब्रह्मोद्यमन्त्रः। (तु०—ऐ० ब्रा० सा० ५।२५ आ०श्रौ० ८।१३।१४-१५)।

**ब्रह्मोद्यमन्त्रभेद**—(सा०, हौ०) अश्वत्रिरात्रे अविवाक्ये च प्रयोक्तव्या ब्रह्मोद्यमन्त्रास्त्रिप्रकारा भवन्ति। तत्र प्रथमा हौत्राः—'अग्निर्गृहपतिरितिहैक आहुः सोऽस्यलोकस्य गृहपतिः, वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षस्य लोकस्य गृहपतिः, अतौ वै गृहपतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः येषां वै गृहपतिं देवं विद्वान् गृहपतिर्भवति राध्नोति स गृहपतीराघ्नुवन्ति ते यजमानाः। येषां वा अपहतपाप्मानं देवं विद्वान्गृहपतिर्भवत्य स गृहपतिः पाप्मानं हतेऽपते यजमानाः पाप्मानं घ्नतेऽध्वर्यो अरात्स्मारात्म' इति ब्रह्मोद्यसंज्ञका मन्त्राः (तु०— ऐ० ब्रा० ५।२५ आ०श्रौ० ८।१३।१३-१४)। द्वितीया आध्वर्यवाः— 'कः स्विदेकाकी इत्यादयः 'इयं वेदिः परो अन्तः' इत्यन्ता उक्ति-'प्रत्युक्तिरूपा अष्टदश मन्त्राः (मा०सं० २३।४५-६२; का०श्रौ० १२।४।१९-२१; २०।७।१०-१५;) आ०श्रौ० १०।९।२)। तत्र 'कः स्वित्' इत्यादयो मन्त्रा अश्वमेधत्रिरात्रे अभिमेधन-स्वाहाकृतिप्रचारानन्तरं वपाहोमात् प्राक् होत्रध्वर्युः ब्रह्मोद्गातृभिरुद्यन्ते। तत्राष्टादशसु प्रथमैश्चतुर्भिर्मन्त्रैः होत्रध्वर्य्वोः प्रश्नप्रतिवचन रूपः संवादः। द्वितीयैश्चतुर्भिर्मन्त्रैः ब्रह्मोद्गात्रोः संवादः। तृतीयैश्चतुर्भिर्मन्त्रैः पुनः होत्रध्वर्य्वोः संवादः। चतुर्थैश्चतुर्भिर्मन्त्रैः होत्रध्वर्य्वोः प्रश्नप्रतिवचनरूपः संवादः। द्वितीयैश्चतुर्भिमन्त्रैः ब्रह्मोद्गात्रोः संवादः। तृतीयैश्चतुर्भिर्मन्त्रैः पुनः होत्रध्वर्य्वोः संवादः। चतुर्थैश्चतुर्भिर्मन्त्रैश्च पुनः ब्रह्मोद्गात्रोः संवादः। तत ऊर्ध्वेन सप्तदशेन मन्त्रेण अध्वर्योः, अष्टादशेन च यजमानस्य संवादोऽवगन्तव्यः। तृतीया औद्गात्रामन्त्राः

— प्रश्नः — 'पृच्छामि त्वा चितये देवसख यद्यत्त्वमत्र मनसाऽनुवेत्थ येषु विष्णुस्त्रिषु पदेष्टष्वष्ट येषु विश्वं भुवनमाविवेश ॥ १ ॥ उत्तरम्—'अपि तेषु त्रिषु पदेष्वस्मिन्येषु विष्णुस्त्रिषु पदेष्वष्ट तेषु भुवनमाविवेश सद्य पर्येमि पृथिवींद्यामुतेमामेकेनाङ्गेन दिवो अस्य पृष्ठम्' ॥ २ ॥ प्रश्नः— किँ् स्विदन्तः पुरुष आविवेश कान्यन्तः पुरुषे अर्पितान्ये-

तद् ब्रह्मन्नुपवत्थिहामहे त्वा किँ स्विनस्त्वं प्रतिवोचास्यत्र ॥ ३ ॥ उत्तरम्— 'पञ्चस्वन्तः पुरुष आविवेश तान्यन्तः पुरुष अर्पितान्ये तत्तान् प्रतिमन्वानो अस्मिन्नमायया भुवनस्योत्तरोभत् ॥ ४ ॥ प्रश्नः—'पृच्छाम त्वा परमन्तं पृथिव्याः पृच्छामो यत्र भुवनस्य नाभिः पृच्छामस्त्वा वृष्णो अश्वस्य रेतः पृच्छामो वाचः परमं व्योम' ॥ ५ ॥ उत्तरम्—'इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिरद्यं सोमो वृष्णो अश्वस्य रेतः ब्रह्माऽयं वाचः परमं व्योम ॥ ६ ॥ इत्यौद्गात्राः षट् ब्रह्मोद्यमन्त्राः । तत्र ब्रह्मोद्गातृयजमानानां प्रश्नप्रतिवचनरूपः संवादः । ब्रह्मा प्रथमेन मन्त्रेण उद्गातारं पृच्छति । उद्गाता द्वितीयेन मन्त्रेण ब्रह्माणं प्रतिब्रवीति । पुनर्ब्रह्मा तृतीयेन मन्त्रेणोद्गातारं पृच्छति, पुनरुद्गाता चतुर्थेन मन्त्रेण ब्रह्माणं प्रतिब्रवीति । ततः पञ्चमेन मन्त्रेण सर्वे ब्रह्मोद्गातारो यजमानं पृच्छन्ति, षष्ठेन यजमानः सर्वान् प्रतिब्रवीत्यवगन्तव्यम् (तु०— ला०श्रौ० ९ ।१० ।९-१४ अग्निस्वामी) ।

**ब्रह्मोपवेशन—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च यजमानेन 'वाचस्पते यज्ञं गोपाय' इति प्रेषितो ब्रह्मा आहवनीयस्याग्नेः पश्चिममार्गेण पूर्वमार्गेण वा दक्षिणस्यां दिशि उपवेशनार्थं स्वं स्थानं प्रति गत्वा 'अहे दैधिषव्यो दतस्तिष्ठस्वान्यस्य सदने सीद योऽस्मत्पाकतरः' इति मन्त्रेण स्वासनं (ब्रह्मसदनं) समीक्ष्य तस्मादासनात् 'निरस्तः पाप्मा सह तेन यं द्विष्म' इति मन्त्रेण नैर्ऋत्यां दिशि तृणं निरस्य 'इदमहं बृहस्पते सदने सीदामि प्रसूतो देवेन सवित्रा तदग्नये ब्रवीमि तद्वायवे तत्पृथिव्यै' इति मन्त्रेण स्वासने आहवनीयाभिमुखः सन् उपविशतीति तदिदं ब्रह्मण उपवेशनं ब्रह्मोपवेशनमुच्यते (तु०—का० श्रौ० २ ।१ । १९-२२; २ । २ ।१ विद्याधरः) । द्र० ब्रह्मासन— ।

**ब्रह्मौदननिर्वाप—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमास-विकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे सर्वौषधिहोमानन्तरं स्रुवेण 'चित्तं ये' इत्यादिभिः स्वाहाकारान्तैः (जपसंज्ञकैः) मन्त्रैः 'त्वमग्ने अयासि' इत्येतावत्पर्यन्तैः हुत्वा स्रुचि चतुर्गृहीतं गृहीत्वा 'प्रजापते न त्वदेतानि' इत्यृचा अपरं चतुर्गृहीतं गृहीत्वा 'अन्वग्निरुषसाम्' इत्यृचा जुहोति । अथ यजमानः शरावे औपासनाग्नेः सर्वानङ्गारान् (अर्धाऽऽधानपक्षे तु अर्धानङ्गारान्) 'आयुषे वो गृह्णामि' इति गृह्णाति । 'आयुर्मामविशतु' इति मन्त्रेण अङ्गारानादायोत्तिष्ठति । तानध्वर्यवे ददाति । अध्वर्युणान्वारब्धे यजमाने सर्वे यथागतं गच्छन्ति । अध्वर्युरङ्गारान् गार्हपत्ये निदधाति । ततो गार्हपत्यं परिस्तीर्य उत्तरतः दर्भेषु प्रोक्षणीमाज्यस्थालीं चरुस्थालीं मेक्षणम् उद्धरणपात्रीं स्रुवं निर्वपणस्थालीं उलूखलमुसले शूर्पं च सादयति । गार्हपत्याद् दक्षिणतः ब्रह्मा समन्त्रके निरसनोपवेशने करोति । यजमानश्चोपविशति । अध्वर्युः प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षति । ततः सुलोहितं आनडुहं चर्म प्राचीनग्रीवं उत्तरलोमगार्हपत्यस्य पश्चादास्तीर्य सपवित्रया निर्वपणस्थाल्या तस्मिन् चर्मणि पृष्ठस्थाने 'ब्रह्मणे जुष्टं निर्वपामि' इति मन्त्रावृत्त्या चतुष्कृत्वो ब्रीहीन् निर्वपति इति अयं निर्वापो ब्रह्मौदननिर्वाप उच्यते । द्र० सर्वौषधिहोम—, श्रौ०प०नि० पृ० ५६ ।

**ब्रह्मौदनप्राशन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे ब्रह्मौदनव्रीहिनिर्वापानन्तरम् 'आकूत्यै त्वा' इत्यादिमन्त्रेण निरूप्तानभिमृशति व्रीहीन्। शूर्पे निधाय 'ब्रह्मणे जुष्टं प्रोक्षामि' इति मन्त्रावृत्त्या चतुर्वारं प्रोक्षति। चर्माभ्युक्ष्य निरस्यति। चर्मणि उलूखलं निधाय व्रीहीनवहन्ति। त्रिः फलीकृतान् त्रिः प्रक्षालयति तण्डुलान्। चरुस्थाल्यां पवित्रवत्यां निर्वपणपात्रेण निर्वापवदुकमानयति। स्थालीमग्नावधिश्रित्य तिरः पवित्रं निधाय तण्डुलानपवति। आज्यं निरूप्याधिश्रयति। उभयं पर्यग्निं कृत्वा मेक्षणं स्रुवं च संमृज्य चरुं संस्कृताज्येनाभिघार्योदगुद्वासयति। अथ परिकर्मिणः गवामागमनकाले ऋत्विग्भ्यः शृतो ब्रह्मौदन इत्याहुः। अध्वर्य्वादयः सर्वे सहागत्य उत्तरत उपविशन्ति। ब्रह्मा निरसनोपवेशने करोति। यजमानः उद्धरणपात्र्यामुपस्तीर्य ब्रह्मौदनं तस्यां स्थालीमचालयन् उद्धृत्य ओदनमध्ये गर्तं कृत्वा प्रभूतमाज्यमानीय मोक्षणेनावदाय 'प्रवेधसे कवये' इति मन्त्रेण जुहोति। ततोऽध्वर्य्वादीन् उत्तरतोऽनुदिशं परस्पराभिमुखमुपविष्टान् आनुपूर्व्येणाचमय्य ओदनसहितामुद्धरणपात्रीं तेषां मध्ये भूमिमुपस्पृशन् आकर्षन्निव प्रवेशयति। 'यज्ञो मोपनमतु' इति मन्त्रेण ओदनं चतुर्धा कृत्वा पृथक् पृथक् पात्रेषु परिवेशयति। ऋत्विज ओदनमध्याद् ग्रासत्रयं प्राश्य यजमानं प्रशंसन्ति 'राद्धस्ते ब्रह्मौदनः' इति। तदिदं सर्वं कर्म ब्रह्मौदनप्राशनमुच्यते। **द्र०** श्रौ०प०नि० नि० पृ० ५७।

**ब्रह्मौदनप्राशनदक्षिणा—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे ब्रह्मौदनप्राशनानन्तरं यजमानः ऋत्विग्भ्यः साण्डं वत्सतरं ददाति। ऋत्विजो भुक्त्वाऽऽचम्य वत्सतरं प्रतिगृह्णन्ति। अन्यः कश्चिद् ब्राह्मण उत्तरत आसीनः चरुस्थाल्यां संलग्नं क्षामकाषमोदनं प्राश्नाति। यजमानस्तस्मै किञ्चिद्दाति। ततः संस्कृतमाज्यशेषमुद्धरणपात्र्यामुर्वरिताज्यं समानीय प्रसिद्धस्याश्वत्थस्य तिस्रः समिधोऽभ्यज्य 'समिधाग्निम्' इत्यृचाऽग्नौ जुहोति (प्रथमाम्), 'उप त्वा ग्ने' इत्यृचा द्वितीयाम्, 'तं त्वा समिद्भिः' इत्यृचा तृतीयाम्। ततः वत्सतरीं ददाति। ततोऽध्वर्युर्यजमानमाह-'वाचं यमो भविष्यसि संशाधि यत्ते संशिष्यो३म्' इति। यजमानः परिकर्मिणं प्राह ब्राह्मणान् आशयत। अश्वं तदभावेऽनड्वाहं तदभावेऽजं तदभावेऽजां तदभावे कमण्डलुं वा गोपायतम्। संभारान् निधत्त इति। इत्येतावत्कर्म ब्रह्मौदनप्राशनदक्षिणोच्यते। **द्र०** श्रौ०प० नि० पृ० ५७। **द्र०** ब्रह्मौदनप्राशन—।

**ब्राह्मण—** (सा०) १. विधिनिषेधार्थवादादिविभेदैर्मन्त्रलिङ्गादिप्रदर्शितार्थस्य विनियोगप्रतिपादको व्याख्यानोपव्याख्यानभूतः छन्दोविरहितो गद्यसदृशो वाक्यकदम्बकोऽपरो (वेद) विभागः ब्राह्मणराशिः। तु०—मै० सं० भू० पृ० ५)। २. मन्त्रसहितं ब्राह्मणं विधायकं भवति—'न हि मन्त्रैर्बिना केवलो विधिः सद्धारकमन्त्रविशिष्टां भावनां विधातुं समर्थः' (तु०—हि० श्रौ० टी० पृ० २०)। ३. यत्र ब्राह्मणग्रन्थत्वेन प्रसिद्धिस्तद् ब्राह्मणम्। तदन्यो विभागः संहितामन्त्रः इति चेन्न कर्मविधानं ब्राह्मणानि (हि० श्रौ० १।१।८) इति संहितागतानामपि विधायकवाक्यानां ब्राह्मणत्वेन लक्षितत्वात् (तु०—हि० श्रौ० १।१) ब्राह्मणग्रन्थे या

प्रसिद्धिर्ब्राह्मणमिति सा बहु वाब्राह्मणाभिप्रायेण। (हि० श्रौ० १ ।१ ।)। ४. ब्राह्मणं विधायकं च स्तवकं च कर्मणाम्। ५. मन्त्रतात्पर्यप्रकाशको वेदभाग:। ऋ० १। १४६। ४६ सायण:)। ६. ब्राह्मण नाम मन्त्राणां व्याख्यानग्रन्थ: (तु०— पा०का० न्यास-३ ।१ ।३५)। ७. कर्मविधानं ब्राह्मणानि तच्छेषोऽर्थवाद:। निन्दा प्रशंसा परकृति: पुराकल्पश्च। यथोपदिष्टं ब्राह्मणवन्तो यथा रूपमितरे (हि० श्रौ० १ ।१)।८. 'ब्राह्मणम्' इति शब्द: विधीनां अर्थवादानां च समान:। तद्धि तेषां ब्राह्मणं येन विधीयन्ते। द्र० मी०को० पृ २९८९।

**ब्राह्मण—** (सा०) चतुर्षु वर्णेषु प्रथमो वर्ण:। ब्रह्म जानाति ब्राह्मण:। स्वभार्यायां ब्राह्मण्यां ब्राह्मणादुत्पन्नत्वलक्षणमेव ब्राह्मण्यम्। तच्च मात्रेकसमधिगम्यम्, इतरस्य तु दुर्विज्ञानम्। द्र० मी०को० पृ० २९८९।

**ब्राह्मणक्रम—** (सा०) ब्राह्मणोक्तस्य क्रमस्य क्रत्वर्थत्वात् समाम्नायसिद्धस्याक्रत्वर्थत्वात् समाम्नायसिद्धस्य (क्रमस्य) प्रयोगो न प्राप्नोति, इतीष्टिपशुसोमयज्ञादिषु ब्राह्मणसदृश: क्रम: प्रायेणाभ्युपगम्यते। 'अनुब्राह्मणं वानुपूर्व्यम्' इत्युक्तो य: क्रम: स (बह्वृचानां) ब्राह्मणक्रम उच्यते (तु०—आ० श्रौ० ५ ।९ ।२३ नारायण:)। तत्र याजुषसामब्राह्मणोक्तक्रतुक्रम: प्रायस्स्वस्वसंहितानुसारी समाम्नातोऽस्ति, अथर्ववह्वृचसंहितासु तु न कोऽपि क्रतु क्रमोऽवलोक्यते। तथा च देवत्रात:—अध्वर्यूणां छन्दोमानां च शाखायां मन्त्रा: कर्मानुक्रमेणाम्नाता:। अस्माकं बह्वृचानां मन्त्रसमाय: स्वाध्यायोपकार आम्नात: अन्यथा प्रयुज्यते। स्वाध्यायगतो मन्त्राणां योऽधिकार: अनुक्रमश्च य: स आम्नायादेव सिद्ध:। (तु०—आ०श्रौ०१ ।१ ।१ देवत्रात:)। अतोऽध्वर्युच्छन्दोगब्राह्मणक्रमवदेव बह्वृचब्राह्मणयोरैतरेयशांख्ययनयो: क्रमानुपूर्व्यं बह्वृचानामप्यवबोध्यमिति विशेषोऽनु- सन्धेय:। द्र० मन्त्राणां ब्राह्मणोक्तमत्रऽङ्मन्त्राणां समाम्नायसिद्धक्रम-, अध्ययनक्रमद्वैविध्य—, यज्ञस्वरूप—।

**ब्राह्मणक्लृप्तस्तोमविष्टुति —** (औ०) ताण्ड्यमहाब्राह्मणेन द्वितीयतृतीययोरध्याययो: द्वादशाहिकदशरात्रस्य त्रिवृत्पञ्चदशसप्तदशैक- विंश त्रिणवत्रयस्त्रिंशानां विषमाणां स्तोमानां, चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशानां समानां स्तोमानां च या विष्टुतय: क्लृप्ता: ता ब्राह्मणक्लृप्तस्तोम-विष्टुतय उच्यन्ते। एतद्दाशरात्रिकातिरिक्तानां विषमाणां समानां च वर्धमानसंज्ञानां स्तोमानां विष्टुतय: सूत्रकारै: क्लृप्ता इति तु विशेषोऽवधेय:। विष्टुति—, द्र० विष्टुतिप्रयोग—।

**ब्राह्मणदेवता—** (सा०) १. देवानां देवो ब्राह्मणो भावो नामैष देवता इति कौ० सू० ७४ ।१२)। २. देवाधीनं जगत्सर्वं मन्त्राधीनाश्च देवता:। मन्त्राश्च ब्राह्मणाधीनास्तस्माद् ब्राह्मणदैवतम्॥

**ब्राह्मणदेवता—** (सा०) अग्निर्वृहस्पतिश्च देवेषु ब्राह्मणौ देवते भवत:।

**ब्राह्मणधर्म—** (सा०) १. आदायी, आपायी, आवसायी, यथाकामप्रयाप्य: इत्येते चत्वारो धर्मा ब्राह्मणा भवन्ति। तत्रादानं प्रतिग्रह:, आपानं याजनं आवसानं परगृहे भोजनयाचनं, यथाकामप्रयापनं यथेच्छं नि:सारणमित्यर्थोऽवगन्तव्य:। २. ब्राह्मणेन निष्कारण: षडङ्गो वेदोऽध्येयो ज्ञेयश्च। ३. याजनाध्यापनप्रतिग्रहा: ब्राह्मणस्यैव वृत्त्युपाया:। द्र० मी०को० पृ० २९८९। जायमानो ह वै

ब्राह्मणस्त्रिभिर्ऋणे वा जायते-ब्रह्मचर्येण ऋषिभ्य: यज्ञेन देवेभ्य: प्रजया पितृभ्य: । स वै तर्हि अनृणो यदा यज्वा ब्रह्मचारी प्रजावान् । द्र० मी० को० पृ० २९९० । ५. ब्राह्मणस्य द्रव्यार्जने प्रतिग्रहयाजन-अध्यापनान्येव नियतानि । उपायान्तरात्तु प्रत्यवाय: द्र० मी०को० २९९० ।

**ब्राह्मणस्य पात्रता—** (सा०) ब्राह्मणं पात्रे न मीमांसेत यं ब्राह्मणमिव मन्यते प्रदेवपात्रमाप्नोति न मनुष्यपात्राच्छिद्यते (तां० ब्रा० ६ ।५ । ९) । तथा च स्मृति:—'न पृच्छेद् गोत्रचरणे न स्वाध्यायं श्रुतं तथा । हृदये देवं सर्वदेवमयो द्विज:' इति ।

**ब्राह्मणस्वर—**ब्राह्मणे मन्त्रा: भाषिकेण स्वरेण उपदिष्टा: । कर्मप्रयोगे तु त्रैस्वर्येणैव (मन्त्रा:) प्रयोक्तव्या: । द्र० मी०को० पृ० २९९० । कर्म प्रयोगे ऐकश्रुत्येन स्वाध्याये तु त्रैस्वर्येण इति तु संप्रदाय: । द्र० माषिकस्वर— ।

**ब्राह्मणाच्छंसिखर—** (सा०, आध्व०) द्र० ब्राह्मणाच्छंसि- धिष्ण्य— ।

**ब्राह्मणाच्छंसिचमस —** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमपानार्थं प्रयोक्तव्य: न्यग्रोध: उपरि वक्र: सदण्डो ब्राह्मणाच्छंसि चमसो भवति । द्र० श्रौ०प०नि० पृ० २४९ ।

**ब्राह्मणाच्छंसिचमसप्रभृतिभक्षण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने स्तोत्रोपाकरणादि, ब्राह्मणाच्छंसिशस्त्रं प्रतिगीर्य ग्रहमादायाऽऽह—उक्थशा यज सोमानाम् । इति पूर्ववत् हुत्वा हुतेषु चमसेषु संस्रावमवनयति पूर्ववत् । पात्रं निधाय ब्राह्मणाच्छंसिचमसं पूर्ववत् त्र्यो भक्षयन्ति । ब्राह्मणाच्छंसी ब्रह्मादीनुपहूय तच्चमसान् । पुनस्त्रय: पूर्ववत् । ब्रह्मादयस्तममुपहूय स्वस्वचमसान्० मन्त्रे 'इन्द्रेण पीतस्य:' इति विशेष: । प्रत्यभिमर्शनम् । नाप्यायनम् । तदिदं ब्राह्मणच्छंसिचमसप्रभृतिभक्षणमुच्यते । द्र० श्रौ०प०नि० पृ० २९३ ।

**ब्राह्मणाच्छंसिधिष्ण्य—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मैत्रावरुणस्य धिष्ण्यस्योत्तरतोऽरत्निमात्रे ब्राह्मणच्छंसिन: खरं करोति—'तुथोऽसि विश्ववेदा रौद्रेणा० सी:' । सोऽयं खरो ब्राह्मणाच्छंसिधिष्ण्यमुच्यते । द्र० श्रौ०प०नि० पृ० २४९ ।

**ब्राह्मणाच्छंसिन्—** (सा०) १. षोडशर्त्विजां मध्ये ब्रह्मवर्गीयो दक्षिणाया अर्धभागी शास्त्रिहोत्रक: ऋत्विग्विशेषो ब्राह्मणाच्छंसिसंज्ञको भवति । २. ब्राह्मणाच्छंसी ब्रह्मण: पुरुष: । द्वितीयवर्गस्थोऽयम्, अर्थी दक्षिणार्थं षट् गा लभते । द्र० मी०को० पृ० २९९४ ।

**ब्राह्मणाच्छंसिन: पापनाशकतृचशंसन—** (हौ०) सोम-यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि प्रात:सवने प्रतिबन्धकपापनाशार्थं ब्राह्मणाच्छंसी 'पूर्वीष्ट इन्द्रोपमातय:' (ऋ० ८ ।४० ।९-११) इति नभाकदृष्टं तृचं शंसति । इतीदं ब्राह्मणाच्छंसिन: पापनाशकतृचशंसनमुच्यते । (तु०—ऐ० ब्रा० सा० ६ ।२४) । द्र० महावालभिद्— ।

**ब्राह्मणाच्छंसिशस्त्रपरिधानीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु योऽयं नाम ब्राह्म-

णाच्छंसी ऋत्विक् स उभयविधाभिः ऐकाहिकाभिरहीनगताभिश्च परिधानीयाभिर्ऋग्भिः परिदधाति शस्त्रम्। तस्य प्रातःसवने प्रकृतौ 'स न इन्द्रः शिवः सखा' (ऋ० ८।९३।३) इति, विकृतौ 'इन्द्रेण रोचना दिवः' (ऋ० ८।१४।९) इति परिधानीयाद्वयं भवति। माध्यन्दिनसवने प्रकृतौ विकृतौ च 'एवेदिन्द्रं वृषणं वज्रबाहुम्' (ऋ० ७।२३।६) इत्येकैव परिधानीया। एवं ह्यस्य ब्राह्मणाच्छंसिनः प्रातःसवने अच्छावाकस्य साम्यं माध्यन्दिनसवने मैत्रावरुणस्य साम्यं भवतीति ज्ञातव्यमिति विशेषोऽवधेयः (तु०—ऐ० ब्रा० सा० ६।८)।

**ब्राह्मणाच्छंसिशस्त्रपर्यासतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्यो- तिष्टोमातिरात्रविकृतिभूतस्य सत्रद्वादशाहस्य विकृतौ गवामयनप्रकरणे प्रातः सवने 'उद्घेदभि श्रुतामघम्' (ऋ० ८।९३।१-३) इति तृचो ब्राह्मणाच्छंसिनः शस्त्रस्य पर्यासस्तृच उच्यते (तु०—शा० श्रौ० १२।२।७ भाष्यम्)।

**ब्राह्मणाच्छंसिशस्त्रशंसनदेश—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने ब्राह्मणाच्छंसी सदसो मध्यदेशे स्थित्वा इन्द्रदेवताकं शस्त्रं शंसति। तदुक्तम्—'ऐन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यतः प्रातःसवनेऽसुररक्षांस्यपाघ्नते इति।' अग्निष्टोमे प्रातःसवने 'आयाहि सुषुमहिते' (ऋ० ८।१७।१) इतीन्द्रदेवताकं शस्त्रम् (तु०—ऐ० ब्रा० सा० ६।४)।

**ब्राह्मणाच्छंसिशिल्प—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढदशाहप्रकरणे अन्यत्र (अहीनसत्रेषु) च पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसी 'अप प्राच इन्द्र' (ऋ० १०।१३१) इति सुकीर्त्तिदृष्टं सूक्तम्, 'वि हि सोतोरसृक्षत' (ऋ० १०।८६) इति वृषाकपिदृष्टं सन्यूङ्खं निनर्द सूक्तं च शंसति। तदिदं सूक्तं द्वयशंसनं ब्राह्मणाच्छंसिनो विकृतशिल्पमुच्यते। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनो विकृतशिल्पशस्त्र—।

**ब्राह्मणाच्छंसिसामन्—** द्र० ब्रह्मसामन्—।

**ब्राह्मणाच्छंस्युक्थ्यविग्रह—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे द्वितीयायां तृतीयायां वा सोमसंस्थायामुक्थ्ये तद्विकृतिषु (उक्थ्यसंस्थेषु) चैकाहाहीनसत्रेषु उक्थ्यस्थालीग्रहगतं सोमं त्रिधा विभज्य उक्थ्यपात्रे मैत्रावरुणोक्थ्यविग्रहानन्तरं द्वितीयमंशमिन्द्राय गृह्णाति। तदिदं विभज्य द्वितीयांशग्रहणं ब्राह्मणाच्छंसिनः उक्थ्यविग्रहः (विभज्यग्रहः) उच्यते। उक्थ्यग्रहस्य तावत् त्रयः पर्यायाः। तेष्वयं द्वितीयः पर्याय इति विशेषोऽवधेयः (तु०—का० श्रौ० ९।१४।१३ विद्याधरः)। द्र० उक्थ्यद्वितीयांशग्रहण-, उक्थ्यविग्रहः-, विग्रहण—।

**ब्राह्मणायुध—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पुरोडाशविधौ 'स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च, दृषच्च उपला च, इति यानि दश यज्ञायुधानि तान्येव ब्राह्मणायुधानि भवन्ति (तु०—ऐ० ब्रा० सा० ७।३४)। द्र० यज्ञायुध—।

## भ

**भक्त—** (सा०) आमस्य वा पक्वस्य वाऽन्नस्य भक्तसंज्ञा। आ०श्रौ० २।१।४ सिद्धान्ती।

**भक्ष—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु १. यागशिष्टो हविषो हविषो यो भागः पात्रे निक्षिप्य एकत्रीकृत्य च प्रत्येकं ऋत्विग्भ्यो भक्षणार्थं दीयते स भक्षः शेषभक्ष इति चोच्यते। स च कार्यनिमित्तक एव भवतीत्यवधेयम्। २. यागदेवतायै यत् संकल्पितं हविस्तस्य शेषस्य भक्षः यागे भक्ष उच्यते। ३. उपयुक्तशेषा भक्षाः। द्र० मी०को० पृ० २९९७। ४. सोमो दधि जलं चेति त्रयो भक्षाः। तत्र सोमो ब्राह्मणानाम्, दधि वैश्यानाम्, जलं शूद्राणाम्।

**भक्षकारण—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. वषट्कारः समाख्या, होमो, वचनम् इति चत्वारि भक्षस्य कारणानि उच्यन्ते (तु०—आ०श्रौ० ५।६।२२ देवत्रातः)। २. होमाभिषवनिमित्तं वषट्निमित्तं समाख्यानिमित्तं चेति त्रीणि भक्षनिमित्तान्युच्यन्ते (तु०—आ०श्रौ० ५।६।२३ नारायणः)। ४. समाख्या, वाक्यं, वषट्कारः अभिषवसहितहोमश्चेति चत्वारि भक्षणनिमित्तानि। तत्र 'प्रैतु होतुश्चमसः' इत्यत्र समाख्या। हारियोजने 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्ते इति वाक्यम्। 'वषट्कर्तुः प्रथमभक्षः' इति वषट्कारः। हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा.... सदसि भक्षयन्ति' इति अभिषव होमौ। द्र० मी०को० पृ० ३००१।

**भक्षकाल—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. इडाभक्षः २. प्राशित्रभक्षः, ३ चतुर्धाकरणभक्षः, ४. शंयुवाकभक्षश्चेति चत्वारः भक्षाः उच्यन्ते। ततः प्रकृतौ इडा—प्राशित्र—चतुर्धाकरणशंयुवाककाला भक्षा भवन्ति। द्र० मी०को० पृ० २९९७-९८।

**भक्षण—** (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रतिवषट्कारभक्षणं भवति (तु०—आ०श्रौ० ३।९।६ देवत्रातः)।

**भक्षभाग—** (सा०, आध्व०) इष्टियज्ञे, प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु ब्रह्मसंहितानामृत्विजामेकैकस्य चतुर्षु इडाप्राशित्रचतुर्धाकरणशंयुवाककालेषु चत्वारो भक्षभागा भवन्ति।

**भक्षमन्त्र—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनमुख (चमस) सोमभक्षणे प्रातःसवने उन्नीतेषु पुनरभ्युन्नीतेषु च चमसेषु 'भक्षेहि माविश दीर्घायुत्वाय शंतनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोऽसि। अश्विनोस्त्वा बाहुभ्याँ सध्यासम्। नृचक्षसं त्वा सोम सुचक्षा अवख्येषम्। इन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु मन्द्रा स्वर्वाच्यदितिरनाहत शीर्ष्णीवाग् जुषाणा सोमस्य तृप्यत्वेहि विश्वचर्षणे शंभूर्मयोभूः स्वस्ति मा हरिवर्ण प्रचर क्रत्वे दक्षाय रायस्पोषाय सुवीरतायै मा मा राजन् वि बीभिषो मा मे हार्दि त्विषा वधीः। वृषणे शुष्मयायुषे वर्चसे। वसुमद्गणस्य सोम देवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति भक्षमन्त्रः (तु०—श्रौ०को० २ भा० पृ० ३१५) माध्यन्दिनसवने भक्षमन्त्रः — भक्षे हि माविश इत्यादि.... शुष्मायायुषे वर्चसे' इत्यन्तः रुद्रवद्गणस्य सोमते मतिविदो माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि इति विशेषविहितः (तु०—

श्रौ०को० २ भा० पृ० ३७२)। तृतीयसवने भक्षमन्त्रश्च 'भक्षे हि माविश० इत्यादिः शुष्मायायुषे वर्चसे' इत्यन्तः आदित्यवद्गणस्य सोम देवते मतिविदस्तृतीयस्य सवनस्य जगतीच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति विशेषविहितः। (तु०—श्रौ०को० २. भा० पृ० ४३५)। इति त्रिषु सवनेषु सवनमुखसोमस्य भक्षमन्त्र उच्यते। तत्र सोमभक्षस्य 'ग्रहणं अवेक्षणं, भक्षणं, जरणं च' इति चत्वारो व्यापारा भवन्ति। ततः भक्षमन्त्रस्यास्य भागशो विभज्य विनियोगः कार्यः भक्षेहि मा विश...हृदोऽसि' इति भागः प्रतीक्षणे। अश्विनो...सध्यासम्' इति ग्रहणे वा। 'नृ चक्षस त्वा देव सोम सुचक्षा अवख्येषम्' इति भागः अवेक्षणे। 'मन्द्राभिभूतिः केतुर्यज्ञानां वाग् जुषाणा सोमस्य तृप्यतु। वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसोऽग्निहुत इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति भक्षणे। 'हिन्व मे गात्रा हरिणो गणान् मे मा वितीतृषः। शिवो मे सप्तर्षीनुपतिष्ठस्व, मा मेऽवाङ्नाभिमतिगाः' इति जरणे कर्तव्यः। इति विशेषोऽवगन्तव्यः। **द्र०** मी०को० पृ० २९९८-९९ **द्र०** भक्षव्यापार—।

**भक्षमन्त्र—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु सवनमुखसोमभक्षणे प्रातः सवने उन्नीतेषु पुनरभ्युन्नीतेषु चमसेषु 'श्येनो नृचक्षा अग्नेष्ट्वा चक्षुषावपश्यामि। इन्दविन्द्रपीतस्य त इन्द्रियावतो गायत्रच्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि। ऊर्ध्वः सप्त ऋषीनुपतिष्ठस्वेन्द्रपीतो वाचस्पते सप्तर्त्विजोऽभ्युच्छ्रयस्व जुषस्व लोकं माऽर्वागवगाः। सोम रारन्धि नो हृदि पिता नोऽसि मम तन्मा मा हिंसीः॥ सोम गीर्भिष्ट्वा वयं वर्धयामो वचो विदः। सुमृडीको न आविश। आप्यायस्व समेतु ते विश्वतः सोमवृष्ण्यम्। भवा वाजस्य संगथे। श्रौ०को० २ भा० पृ० ३१६। माध्यन्दिनसवने 'इन्दविन्द्रपीतस्य त इन्द्रियावतस्त्रिष्टुप्छन्दसः सर्वगणस्य सर्वगण उपहूत उपहूतस्य भक्षयामि' श्रौ०को० २ भा० पृ० ३७२। तृतीयसवने 'इन्द्रविन्द्र पीतस्य त इन्द्रियावतो जगच्छन्दसः सर्वगणस्य सर्वगण उपहुत उपहूतस्य भक्षयामि' इति **द्र०** श्रौ०को० २ भा० पृ० ४३५।

**भक्षव्यापार—**(सा०, आध्व०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु (सोमभक्षस्य) १. ग्रहणं, २. अवेक्षणं, ३. भक्षणं ४. जरणमिति चत्वारो व्यापारा भवन्ति **द्र०** मी०को० पृ० ३०००। **द्र०** १ भक्षमन्त्र—।

**भग—**(सा०) ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा। (तु०— तै० सं० सा० ४।५।१०)। तथा च 'आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः। शेते निपद्यमानस्य चरातिचरतो भगः। ऐ० ब्रा० ७।१५।

**भगवत्—**(सा०) उत्पत्तिं च विनाशं च भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति। (तु०—तै० सं० सा० ४।५।१०)।

**भरतद्वादशाहक्लृप्ति —** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे भरतद्वादशाहाख्ये द्वादशरात्रे अहीन सति द्वादशोपसद्दिनानि। प्रथममहः अतिरात्रसंस्थम्, द्वितीयमहः अग्निष्टोमसंस्थम्, तृतीयमहारारभ्य दशमपर्यन्तान्यष्टौ अहा-

न्युक्थ्यसंस्थानि, एकादशमहः अग्निष्टोमसंस्थम् द्वादशमहश्च अतिरात्रसंस्थम् । इति द्वादश सुत्यादिनानि । द्वादशदीक्षादिनानि इति मिलित्वा षट्त्रिंशद्दिनानि । अहनिद्वादशाहवर्जितानां सर्वेषामहीनानां मासापवर्गताविधानाम् । अहीनद्वादशाहे तु न मासापवर्गता षट् त्रिंशद्दिनसाध्यवचनात् । तदाहाश्वलायनः-'अथ भरतद्वादशाहः । इममेवैकाहं पृथक् संस्थाभिरुपेयुः, अतिरात्रमग्रेऽथाग्निष्टोमम्, अथाष्टा उक्थ्यान्, अथाग्निष्टोमम्, अथातिरात्रम्, उपेयुर्वा यजेत वा' (आ० श्रौ० १० ।५ ।८-१० ।१२) । उपेयुरिति सत्रलिङ्गं, यजेतेत्यहीनलिङ्गम् ।

**भस्मोद्वाप—** (आध्व०) इष्टियज्ञेषु हविर्यज्ञानां तृतीये अग्निहोत्रप्रकरणे गार्हपत्यादिखरेभ्यः प्रत्यहं भस्मोद्धृत्य यो राशिः क्रियते स भस्मोद्वाप इत्युच्यते ।

**भागनिधान—** (ब्रह्म०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च चतुर्धाकृतभागपरिहरणानन्तरं ब्रह्मा स्वभागं गृहीत्वा अब्निनयनानन्तरं वेद्यां कुशेषु स्थापिते प्रत्यग्दण्डे प्राशित्रहरणे निधाय अध्वर्युणा पूर्वं ध्रुवायाः पूर्वदेशे स्थापितं यजमानभागं तस्य पश्चात् कुशेषु निदधातीति निधानं भागनिधानमुच्यते । द्र० श्रौ०प०नि० पृ० ३५ । द्र० चतुर्धाकृतभागपरिहरण— ।

**भागप्रतिग्रह—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च भागनिधानानन्तरं सर्वे ऋत्विजः स्वं स्वं भागं स्वस्वमन्त्रैः कामस्तुतिनामकैः प्रतिगृह्णन्ति । सोऽयं प्रतिग्रहोभागप्रतिग्रह इत्युच्यते । द्र० श्रौ०प०नि० पृ० ३५ । द्र० भागनिधान— ।

**भागहोम—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च व्रतविसर्गकाले यजमानभक्षणं विहितं तदा ब्राह्मणयजमानभागस्य होमो हस्तेनैव जुहुयात् । तत्र मन्त्रः-'अहं त्वदस्मि मदसि त्वमेतन्मम त्वं योनिस्तव योनिरस्मि । ममैव सन्दिवि देवेष्वधि पुत्रः पित्र्ये लोककृज्जातवेदः स्वाहा' (तु०—का० श्रौ० ३ ।६ ।९-११ विद्याधरः) । क्षत्रियवैश्ययोरप्ययं होमः । किन्तु क्षत्रियवैश्ययोर्भागप्राशनं नास्ति होम एव तयोः । सोमे तु फलचमसप्राशनहोमौ विहिताववेति विशेषोऽवधेयः । द्र० वैश्यराजन्यसोम—, फलचमस— ।

**भागावदान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च हृदयादीनां पश्वङ्गानां भागशोऽवदानं भागावदानमुच्यते । द्र० पशोर्हविष्याङ्गपश्वङ्गावदान— ।

**भार्गवहोतृ—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ राजसूये तदन्तर्गते दशपेयक्रतौ भार्गवो होता भवति । (तु०—तां० ब्रा० सा० १८ ।९ ।२) द्र० २ ब्रह्मन्— ।

**भाव—** (सा०) १. भावो धात्वर्थः क्रियेत्यनर्थान्तरमुच्यते । (तु०— मा०सं० १ ।१ उवटः) । २. भावः क्रियायाः फलमुच्यते (तु०— मा०सं० स एव) । ३. धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते । द्र० मी० को० पृ० ३००४ ।

**भावना—** (सा०) १. भावना हि नाम अनुभूतस्य विषयस्य पुनः पुनः स्मरणात्मिका वृत्तिः । सा हि भूतविषयिणी भवति न जातु भविष्यद्विषयिणी । पुरुषपरिस्पन्दः पुरुषप्रयत्नः आत्मनो व्यापारो भावनोच्यते (तु०—

मा०सं० १ ।१ उवटः ।) ३. भावना अंशत्रयमपेक्षते साध्यं साधनं इति कर्तव्यतां चेति। किं, केन, कथमिति। भावना आख्यातप्रत्ययार्थो भावयितुर्व्यापारः। भावना द्विविधा शब्दभावना, अर्थभावना चेति। लिङ् लेट् लोट् तव्य-प्रत्ययमात्रगता शब्दभावना। सर्वाख्यातगता अर्थभावना। द्र० मी०को० पृ० ३०२२।

**भाववृत्त—** (सा०) भावेषु पदार्थेषु वृत्तः स्थितो भाववृत्तः। परमात्मा इत्युच्यते (तु०—मा०सं० ३३ ।७४ महीधरः)।

**भाषिकस्वर—** स्वाध्याये ब्रह्मयज्ञप्रकरणे भाषिकेण स्वरेण केचित् मन्त्रा ब्राह्मणे उपदिष्टाः, मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः। तत्र भाषिकस्वरः— 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः। उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते। द्र० मी०को० पृ० ३०५७। २. ब्राह्मणपाठगतमन्त्रोच्चारणे यः तत्तच्छाखीयो ब्राह्मणस्वरो भवति स भाषिकः स्वर इत्युच्यते। ३. भाषा नाम स्वरविधायको ग्रन्थः, तत्र उक्तः स्वरः भाषास्वरः उच्यते। द्र० मी०को० पृ० ३०५९। भाषिक स्वरः क्रतौ ब्राह्मणोत्पन्नानां मन्त्राणां प्रयोक्तव्यो न समाम्नाय मन्त्राणाम्। अतः क्रतौ मन्त्रेषु प्रवचनस्वरः (त्रैस्वर्यः) एव प्रयोक्तव्यो न भाषिकः। तत्र भाषास्वरेण मन्त्राणां ब्राह्मणे उपदेशात् कर्मकाले मन्त्राणां प्रवचनकालीनस्य अध्ययनाध्यापनकालीनस्य स्वरस्याप्राप्तावपि यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टः तस्य तथैव प्रयोगः (कार्यः), यस्तु तत्र न दृष्टः ब्राह्मणेन भाषिकेणोपदिष्टः तस्य ब्राह्मणोत्पत्तेः मन्त्रस्य भाषिकेण प्रयोगः स्यात् प्रवचनलक्षणत्वात्। प्रवचनं मन्त्राणां लक्षणम्। यथा प्रोच्यन्ते तथाविधा विज्ञायन्ते। ते च भाषिके एव उत्पन्नाः। तस्माद् यथोत्पन्नाः, तथाविधा एव प्रयोक्तव्याः। द्र० मी०को० पृ० १४९७। अतः ये कर्मकाले जपादयो' मन्त्राः समाम्नाये स्वरान्तरेण (त्रैस्वर्येण) समाम्नाता ते त्रैस्वर्येण ब्राह्मणे च स्वरान्तरेण (भाषिकेण) उपात्तास्ते तथैव भाषिकेण प्रयोक्तव्याः। तस्मात् कर्मकाले जपादिमन्त्रेषु न भाषिकस्वरोपदेशः किन्तु त्रैस्वर्यम् इति सिद्धान्तः। द्र० मी०को० पृ० ३०५८-५९। इति विशेषोऽवगन्तव्यः।

**भाससामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे माध्यन्दिनसवने १. विषुवत्यहनि पृष्ठस्तोत्रेषु अवसाने भासमग्निष्टोमसाम कार्यम्। २. 'प्रक्षस्य वृष्णो अरुषस्य नू महः' (साम० ६०९) इत्यस्यामृच्युत्पन्नं दशस्तोमं सामभासं तत् 'मूर्धानम्' (साम० ११४०-४२) इति तृचे गातव्यम्। (तु०—ऐ० ब्रा० सा० ४ ।६ ।१५)। ३. मूर्धानं दिवो अरतिम्' (साम० ११४०-४२) इति भासं दशस्तोममग्निष्टोमसाम (तु०—आ०क० २ । ६ ।६ ।) अग्निष्टोमसाम कर्तव्यमित्यर्थः। द्र० विषुवद्दिवाकीर्त्यसामन्—।

**भूतेच्छद्—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने ब्राह्मणाच्छंसिना स्वविकृतशिल्पशस्त्रे प्रयोक्तव्यः 'त्वमिन्द्र शर्मरिणा' (अथ० २० ।१३५ ।११-१३)। इति तिस्रोऽनुष्टुभा ऋचो भूतेच्छद उच्यन्ते। ता अर्धर्चशः शंसति। (तु०—आ०श्रौ० ८ ।३ ।२७ ऐ० ब्रा० ६ ।३६)। द्र० पृष्ठ्य षडहस्य षष्ठेऽहनि ब्राह्मणाच्छंसिनो विकृतशिल्प—।

**भूमिकपाल—** द्र० ।

**भूमिदुन्दुभि—** (सा०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे उत्तरपक्षस्युपान्त्ये महाव्रतेऽहनि राज्ञ इषुवेधानन्तरं पश्चादाग्नीध्रीयस्य श्वभ्रं दुन्दुभ्याकृतिकम् अर्धमन्तर्वेदि अर्ध बहिर्वेदि खातं भवति । स भूमि दुन्दुभिरित्युच्यते । स भूमिदुन्दुभिः आर्षभेणोत्तरलोम्ना चर्मणा आच्छादितः स्यात् । तं च 'त्वं वागसि' इत्यादिभिः त्रिभिर्मन्त्रैः प्रतिमन्त्रमुद्गातारो वलधानेन आहन्युः । इति विशेषोऽवगन्तव्यः (तु०—आ०क० २ ।११ ।६ वरदराजः) ।

**भूमिशोधन—** (सा०) भूमेस्तु संमार्जनप्रोक्षणोपलेपनावस्तरणोल्लेखनैर्यथास्थानं दोषविशेषात् प्रायत्यम् (तु०—बौ०ध० १ ।५ । ९ ।११) तथा च मनुः—संमार्जनेनाञ्जनेन सेचनोल्लेखनेन च । गवां च परिवासेन भूमिः शुध्यति पञ्चभिः । (गृहादिषु) देवद्रव्यं तथा वस्त्रमुपानहौ कमण्डलुः । यष्टिका पुस्तकं चैव पश्चात् भूमिविशोधनम् । इति च शोधने क्रमो द्रष्टव्यः ।

**भूयस्कृत्—**(सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने उपधेया इष्टका भूयस्कृद्वाच्या भवन्ति ।

**भूर्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे भूः संज्ञकः एकश्चिद् एकाहः । स चाग्निष्टोमसंस्थो भवति । तत्र आग्नेयः सवनीयः पशुरेक एव ।

**भूर्—** (सा०) भूर्भुवःस्वरिति तिसृषु व्याहृतिषु प्रथमा व्याहृतिर्भूरित्युच्यते ।

**भैषज्य—**(सा०) व्याध्युपशमनं भैषज्यमुच्यते ।

**भ्राजसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे विषुवत्यहनि माध्यन्दिनसवने माध्यन्दिनपवमानमुखे 'अस्य प्रत्लामनुद्युतम् (साम० ७५५, ५७) इति तृचे गातव्यं (दिवाकीर्त्य ) साम भ्राजं साम भवति । (तु०—तां० ब्रा० सा० ४ ।६ ।१४) ।

## म

**मंगलनामाह्वान—** (याज०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे व्यस्तव्याहृतिहोमानन्तरं यजमानो राजसूयवन्मङ्गलनाम्नाऽऽह्वयतिअन्त स्मावयन् सुश्लोको ३ इति संगृहीतारं सुमंगलो३म् इति भागदुघम् । सत्यराजो ३ इति क्षत्रारम् । तदेतत्कर्म मङ्गलनामाह्वानमुच्यते । श्रौ०प०नि० पृष्ठ- १६६, द्र० व्यस्तव्याहृतिहोम- ।

**मण्डलादिहोम —** (स्मा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे उपाकरणोत्सर्जनयोः (ऋङ्) मण्डलादिहोमे 'मा चिदन्यद् विशंसत' (ऋ० ८ ।१ ।१) इत्येषा विनियुज्यते । द्र० सायणभाष्यम् ।

**मदन्ती—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. भर्जनपात्र्यधिश्रयणकाले यज्जलपात्रमधिशृतं भवति तत्रत्याः तप्ता मन्दोष्णाः आपः मदन्त्य उच्यन्ते । २. मदन्तीनामिका आपो यस्मिन् पात्रे सन्ताप्यन्ते तत्पात्रमपि मदन्तीत्युच्यते । द्र० श्रौ०प० नि० पृ० १३ । ३. मदन्त्यो नाम तप्ता आपः । (आ०श्रौ० ४ ।५ ।५ नारायणः) । सोमयज्ञेषु सोमाप्यायने निन्हवे उपसत्सु च ताः प्रयुज्यन्ते इति विशेषोऽवधेयः ।

**मदन्तीयाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तानूनप्त्रावघ्राणानन्तरमध्वर्युराग्नीध्रं पृच्छति—'अग्नीन्मदन्त्यापा: ३' इति। आग्नीध्रस्तमाह—'मदन्ति देवीरमृता ऋतावधा' इति ततोऽध्वर्यु:-'ताभिराद्रव' इत्याहेति। तदिदं मदन्तीयाचनमुच्यते। द्र० तानूप्त्रा- वघ्राण—द्र० श्रौ०प०नि० पृ० २१२।

**मधुपर्क—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्र इष्टिपशुसोमयज्ञेषु चादौ ऋत्विगर्हणार्थं दीयमानं कांस्यपात्राभ्यां संपुटीकृतम् उपरिद्विगुणितसूत्रवेष्टितं मधुमिश्रितं दधिमधुपर्क इत्युच्यते। तत्र विष्टरदानाचमनीयानन्तरं यजमान: मधुपर्क: मधुपर्क: मधुपर्क: प्रतिगृह्यतामिति त्रिरुक्त्वा मधुपर्कं ददाति। ऋत्विजस्तु प्रतिगृह्णीम इत्युक्त्वा प्रतिगृह्णन्ति, पूर्वमाह्रियमाणं मधुपर्कं 'मित्रस्य त्वा' इति मन्त्रेण प्रतीक्षन्ते, देवस्य त्वा' इति मन्त्रेण अञ्जलौ गृहीत्वा वेष्टितं सूत्रं विस्त्रस्य पिधानकं दूरीकृत्य 'मधुवाता:' इति तृचेन मधुपर्कमवेक्ष्य तत्पात्रं वामहस्ते धृत्वा तत्रत्यं मधुपर्कं अङ्गुष्ठानामिकाभ्यां त्रि: प्रदक्षिणम् आलोड्य वसवस्त्वा' इत्यादिमन्त्रेण प्राच्यां दिशि मधुपर्कमङ्गुष्ठानामिकोच्छलनेन प्रोक्षयन्ति. तथैवादित्यास्त्वेत्यादि .मन्त्रेण पश्चिमत:, तथैव 'विश्वे त्वा देवा:' इत्यादि मन्त्रेण उत्तरत:। ततोऽङ्गुष्ठानामिकाभ्यां मध्यात् गृहीत्वा 'भूतेभ्यस्त्वेति मन्त्रेण त्रिवारम् ऊर्ध्वं प्रोक्षन्ति ततस्तत्पात्रं भूमौ निधाय मधुपर्कैकदेशं गृहीत्वा 'विराजो दोहम्' इत्यादि मन्त्रेण भक्षयन्ति। पुनर्लौकिकजलेनाचम्य मधुपर्कैकदेशं गृहीत्वा 'मयि दोह:' इत्यादिमन्त्रेण भक्षयन्ति। ततो लौकिकजलेनाचम्य मधुपर्कशेषं जले प्रक्षिपन्ति। 'अमृतापिधानमसि' इति मन्त्रेण पूर्वदत्ताऽऽचमनीयजलेनाचम्य लौकिकजलेनाचमन्तीति विशेषोऽवधेय:। द्र० श्रौ०प० नि० पृ० ५१।

**मधुपर्कपूजा—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्र इष्टिपशु सोमयज्ञेषु चादौ ऋत्विगर्हणार्थं दीयमानस्य मधुपर्कस्य दानानन्तरं यजमान: गौर्गौर्गौ: प्रतिगृह्यतामिति त्रिरुक्त्वा प्रत्येकमृत्विग्भ्यो गां ददाति। ऋत्विजस्तु प्रतिगृह्णीम इत्युक्त्वा 'माता रुद्राणाम्' इत्यृचं पठित्वा ओमुत्सृजतेति मन्त्रेण गोरुत्सर्जनं कुर्वन्ति। यजमानस्तु नववस्त्रयुग्मं यज्ञोपवीतयुग्मं चन्दनं पुष्पमालाम् अलङ्कारान् फलाद्युपहारं च ऋत्विग्भ्यो ददातीति विष्टरदानप्रभृत्येतावत्पर्यन्ता पूजामधुपर्क: मधुपर्कपूजा तत्र कुरुत इत्यपि पक्षान्तरं विद्यते इति विशेषोऽवगन्तव्य:। श्रौ०प०नि० पृ० ५१। मधपर्के च सोमे च अप्सु प्राणाहुतीषु च। नेच्छिष्टो भवतिं द्विज:॥ द्र० मी०को० पृ० ३०८२।

**मधुभोजन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ द्वादशाहप्रकरणे अन्यत्र सोमयज्ञेषु पृष्ठ्यषडहान्ते च यन्मधुन: घृतस्य वा भोजनं तन्मधुभोजनमुच्यते। तच्च समाप्ते पृष्ठ्यषडहे भवति। समाप्तिश्च नाम पृष्ठ्यषडहविशेषव्यापारो परम: इत्यवगन्तव्यम्। तदुक्तम्-'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत्घृतं वा इति सत्रिभि: (दीक्षितै:) प्राश्येत। ब्रह्मचारिणां निषिद्ध-

मपि मधुप्राशनीयमेव क्रत्वर्थत्वात्। द्र० मी०को० पृ० ३०८१।

**मधुमन्थ—** (सा०) मधुनाऽऽलोडिताः सक्तवो मधुमन्थ इत्युच्यते। (तु०—द्रा० श्रौ० १।२।११ धन्वी)।

**मधुश्च्युन्निधन—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्य-षडहस्य षष्ठेऽहनि तृतीयसवने आर्भव-पवमाने' सोमाः पवन्त इन्दवः (साम० ११०१-३) इत्यस्मिन् तृचे गातव्यं साम मधुश्च्युन्निधनमुच्यते। (तु०— तां० ब्रा० सा० १३।११।१९)

**मध्यतः कारिन्—** (सा०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु १. होत्रध्वर्यु ब्रह्मोद्गातारो महर्त्विजो मध्यतः कारिण उच्यन्ते। (तु०—द्रा०श्रौ० धन्वी, ला०श्रौ० ९।१।९)। २. ब्रह्मयजमानहोत्रुद्गातारः मध्यतः कारिण उच्यन्ते। द्र० मी०को० पृ० ३०८२, १२५०।

**मध्यमस्वरप्रयोग—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च आज्यभागप्रभृति सर्वं प्रधानयाज्यादिकं मध्यमस्वरेण प्रायोक्त-व्यम्। जठराग्निना प्रेरितो वायुः कण्ठदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र वर्णानामभिव्यक्तिं करोति स मध्यमस्वर उच्यते। तथा च शिक्षायामुक्तमुक्तम्—कण्ठे माध्यन्दिनयुगं मध्यममिति। द्र० श्रौ०प०नि० पृ० ३७।

**मध्यमस्वरप्रयोग—** (सा०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु योऽयं जठराग्निना प्रेरितो वायुः कण्ठदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र वर्णानामभिव्यक्तिं करोति स मध्यमस्वर उच्यते। एतेन मध्यमस्वरेण माध्यन्दिनं सवनं प्रयोक्तव्यम्। (तु०—आ०श्रौ० ५।१२।८ नारायणः)। द्र० वाचः स्थान—।

**मध्यमोपसद्धोम—** (आध्व०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु द्विस्तनव्रतदोहनानन्तरं पुनरग्नीन् ज्योतिष्मतः इत्यादि कृत्वा उदित आदित्ये विसृष्टायां वाचि मध्यमाभ्यां प्रावर्ग्योप-सद्भ्यां प्रचरति—'या ते अग्ने रजः शया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीन्त्येषं वचो अपावधीं स्वाहा' इति मध्यमामुपसदं जुहोतीति। सोऽयं मध्यमोपसद्धोम उच्यते। द्र० श्रौ०प०नि० पृ० २३२।

**मध्ये पृष्ठ्यमयन—** द्र० आदित्यानामयन आर्षेय-कल्पः १०।१।

**मनुष्यगवी—** (सा०) चिद्मनाः, घीः रन्ती रभतिः सूनुः सूनरी चेति। (तु०—आप० श्रौ० ४।१०।४)। इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति अध्निये इति (तु०— तै० सं० ७।१।६।८)। इति मनुष्यगव्य उच्यन्ते द्र० देवगवी—।

**मनोता—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्-प्रकृतिकेषु सौमिकपशुषु च प्रयोक्तव्या १. देवानां मनांस्योतानि दृढं प्रविष्टानि यस्यां सा मनोता देवताविशेषः। तदर्थं हृदयाद्ये-कादशपश्वङ्गरूपं हविरवदीयते। तिस्रो हि देवानां मनोतास्तासु हि तेषां मनांस्योतानि, वाग्वै देवानां मनोता...गौर्वै देवानां मनो-ता...अग्निर्मनोता...। तदेवं वाग् गौरग्निरि-

त्येतासु देवतासु देवमनः समक्तत्वात् तिस्रोऽपि देवता मनोतेत्युच्यन्ते। ताश्च तिस्रः सर्वा मनोता अग्निस्वरूपा एवाग्नौ तासां संगतत्वादिति (तु०—ऐ० ब्रा० सा० २।१०)। २. आग्नेयीयं मनोता पश्ववदानकालेऽनु- वाच्या हविषो देवताया वा संस्कारार्था भवतीति ऋग्विशेषः। (तु०—आप० श्रौ० १४।७।७)।

**मनोतासूक्त—** (हौ०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु चानुवक्तव्यं 'त्वं ह्यग्ने प्रथमो मनोता (ऋ० ६।१ १३ ऐ० ब्रा० २।१०) इति सूक्तं मनोता सूक्तमुच्यते।

**मनोतासूक्तानुवचन—**(हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च इडाभक्षणान्ते मार्जनम्। ततः मनोतायै हविषोऽवदीयमानस्यानुब्रूहि' इति प्रैषेणाध्वर्युणा प्रेषितो मैत्रावरुणः अभिहिंकृत्य अध्यर्धकारवर्जं सामिधेनीवत् 'त्वं ह्यग्ने प्रथमो मनोता' इति सूक्त हृदयाद्यङ्गरूपस्य प्रधानहविषोऽवदानकालेऽन्वाह' इति मनोतासूक्तोनुवचनमुच्यते। द्र० श्रौ०-प०नि० द्र० पृ० १४ ७, आ०श्रौ० ३।६। १; ऐ० ब्रा० सा० २।१०।

**मन्त्र —**(सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु प्रयोक्तव्याः १. मन्त्राः मननात्। मन्तव्या हि ते। मन्यन्ते तैरधिदेवादिविषया इति मन्त्राः। २. ऋग्यजुषो मन्त्रसंज्ञाः (तु०—आ०श्रौ० १।१।२१ देवत्रातः द्र०)। १. ब्रह्मन्। द्र० ३. मन्त्राणां स्वरूपनिर्णये अध्येतृप्रसिद्धिं विना अन्यत्रमाणं किमपि अव्यभिचरितम् अपश्यन् अध्येतृप्रसिद्धिमेव शरणीकुर्वाणस्तत्रप्रसिद्धानेव मन्त्रान् अनुवदति (कात्यायनः)—ऋचो यजूंषि सामानि निगदा मन्त्राः (तु०—का० श्रौ० १।३।१ विद्याधरः) इति। तत्र १. ऋचः—नियतपादाक्षरावसानाः। २. यजूंषि— अनियतपादाक्षरवसानानि यजूंषि। ३. सामानि—प्रगीत साध्या ऋच एव सामानि। ४. वाक्यनियमात् (मी० सू० १।२।३२) नियतपदक्रमा हि मन्त्रा भवन्ति 'अग्निर्मूर्धा दिवः' इति, न विपर्येण (इति शबर) वेदे तु आनुपूर्वीनियमाद् वाक्यानि उदाहरति 'शं नं' (इति कैय्यटः)। नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्ति (यास्कः १।१५) 'अग्न आयाहि' इति, न पुनः आयाह्यग्ने' इति तु दुर्गः। ५. स्वाध्याये पठ्यमानेषु येषु मन्त्रपदं स्मृतम्। ते मन्त्रा नाभिधानं हि मन्त्राणां लक्षणं स्थितम्। (द्र० मी० सू० तन्त्रवार्तिकम् २।१।३४)। स्वरवर्णानुपूर्व्यादि विशिष्टे हि प्रयुज्यते। मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते॥ मन्त्रवर्णविकारो वा वर्णलोपोऽपि वा स्मृतः। स्वरान्तरनियोगो वा न मन्त्रस्तत्र नेष्यते॥ (तु०— मी० सू० तन्त्रवार्तिक २।१।३४) अभियुक्तप्रसिद्ध्या हि मन्त्रत्वमवकल्पते (तु० जै० न्या० २।१। ३४)। ६. मन्त्रस्य याज्ञिकसमाख्यानमेव निर्दुष्टं लक्षणम्। मन्त्रस्य लक्षणं विद्याद् यः प्रयुज्येत कर्मणि। (तु० मै० अ० पृ० ५४८)। ७. याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागः (ऋ० १।१६४। ४६ सा० भा० द्र०) ८. मन्त्राश्च कर्मकरणा (आ०श्रौ० १।१।२१)। इति सूत्रात् यैः कर्म क्रियते ते मन्त्रपदवाच्याः (श्रौ०प०नि० पृ० १६) तत्र अनुमन्त्रणाद्यनेकलक्षणलक्षितानां मन्त्राणां मध्ये केवलस्य कर्मकरणलक्षितस्यैव मन्त्रत्वकथनं रूढिवादत्वेन विवादग्रस्त एव। द्र० मन्त्रभेद—। ९. मन्त्राः

विहितानां पदार्थानां अनुष्ठानकाले स्मारकतया साधनभूता:। १०. मन्त्रा ह्यर्थस्मरण द्वारा सान्निपत्योपकारका भवन्ति। ११. ब्राह्मणयोनयोऽपि मन्त्रा अवगन्तव्या:। १२. मन्त्राणां ब्राह्मणार्षेयच्छंदो दैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छति (ऋ० अनुक्रमणी।) १३. एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति (निरु० ७।३)। मन्त्रैर्यस्योदीरितो विधि: (मनु० ३।१७)। तत्र मन्त्रैरुदित उक्तो विधिरिति नायं संबन्ध:। न हि मन्त्रा विधिं वदन्ति। किन्तर्हि प्रयोगावस्थस्य विधेयस्य स्मारका न विधायका:, इति मेधातिथि:। १४. अतोऽन्ये (ब्राह्मणादन्ये) लौकिका: प्रयुज्यमाना अमन्त्रा: यज्ञकर्मार्था मन्त्रा: (हि० श्रौ० १।१)। मन्त्राश्चाकर्मकरणास्तद्वत् (मी० सू० ३।८।१५)। १५. अपौरुषेये वैदिकप्रसिद्धे मन्त्रशब्दो मुख्य:। अन्यत्र गौण: इति श्राद्धमयूखे नीलकण्ठ:।

**मन्त्रकरणत्व—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु अनेन मन्त्रेण इति तृतीयायुक्तं मन्त्रलक्षणं मन्त्रस्य करणत्वमुच्यते।

**मन्त्रत्व—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु कर्माङ्गभूतद्रव्यदेवतास्मारकत्वं मन्त्रत्वमुच्यते॥ प्रयोगकाले तु तदर्थस्मृतिमात्रमेव (तै० सं० भट्टभास्कर: पृ० ६) का०श्रौ० १।६।६ टि० विद्याधर:।

**मन्त्रद्रव्यक्रमं—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु यथोपदिष्टं मन्त्रानुपूर्व्याद् द्रव्यैरभिसंबन्ध: (भा०श्रौ० ४।१।२)।

**मन्त्रपाठ—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु अनुष्ठेयक्रियाप्रकाशको मन्त्र उच्यते। तस्य अनुष्ठेयक्रियासु पाठ उच्चारणं मन्त्रपाठ: उच्यते। स च एकस्य कर्मण: आवृत्तौ (असकृत्करणे) सकृदेव क्रियते। तदुक्तम्—'एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वात्' (का०श्रौ० १।७।८) इति। तथा दीक्षितस्य युगपदनेकदु:स्वप्नदर्शने, युगपदनेकामेध्यदर्शने, युगपदनेकवृष्टिधारावर्षणे, अनेक नदीप्रवाहतरणे विश्रम्य विश्रम्य प्रयागे (यथा वनीवाहनशकटस्य समीहितदेशगमने) च सकृत् पठ्यते। तदुक्तम्—'स्वप्ननदीतरणाववर्षणामेध्यदर्शनप्रयाणेषु तु सकृत् कालद्रव्यैकार्थत्वात्' (का० श्रौ० १।७।१२ विद्याधर:)। इति हविर्ग्रहणे, बर्हिर्लविने, बर्हि:प्रस्तरणे, आज्यग्रहणे तु प्रतिकर्म मन्त्रपाठावृत्ति: क्रियते एव। तदुक्तम्-'न ग्रहणलवनस्तरणाज्यग्रहणेषु तु' (का० श्रौ० १।७।९) न सकृन्मन्त्र: पठ्यते इति शेष:। एवमेव कालभेदेन निमित्तभेदेऽपि मन्त्रपाठावृत्तिर्भवत्येव। तदुक्तम्—'न निमित्तभेदात् (का० श्रौ० १।७।१३) इति।

**मन्त्रप्रधानकर्मन्—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु जपानुमन्त्रणाप्यायनोपस्थानानि कर्माणि मन्त्रप्रधानानि कर्माणि उच्यन्ते न क्रियाप्रधानानि। अभिमन्त्रणाभिमर्शने कर्मणी अपि केचिदत्रान्तर्भावयन्ति। अन्ये तु करणमन्त्रत्वमनयो: साधयन्ति इति विशेषोऽवधेय:।

**मन्त्रप्रयोग —** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु १. छिन्ने पिष्टे तथा लूने सान्नाय्ये मार्तिके तथा पश्चान्मन्त्रा: प्रयोक्तव्या मन्त्रा यज्ञार्थसाधका:॥ (तु०—गो० गृ० टी० पृ० ७१०) २. कर्मकरणमन्त्रेषु मन्त्रान्तेकर्मारम्भ: तथा चोक्तं कौषीतकिना- 'मन्त्रान्तेन करणेषु कर्मण: सन्निपातनम्

(तु०—जै० श्रौ० भा० २।५)। मन्त्रान्तैः कर्मादीनि। सर्वत्र मन्त्रावसाने कर्माणि प्रारभ्यन्ते। ३. प्रत्यगाशिषो मन्त्रान् जपत्यकरणानुपतिष्ठतेऽनुमन्त्रयते (तु०—आप०श्रौ० ४। १।१४)। अयमत्राभिषन्धिः—१. प्रत्यगाशिषो मन्त्रान् जपति। २. अकरणान् मन्त्रान् उपतिष्ठते, अनुमन्त्रयते च। ये सन्निपत्योपकुर्वन्ति ते करणा क्रिया कर्त्रैव प्रयोज्याः। करणमन्त्रास्तु प्रत्यागाशिषोऽप्याध्वर्यवा एव (मी० सू० ३।८।१५)। तदेवं प्रयोगकाले १. करणमन्त्राः, २. अकरणमन्त्राः (जपउपस्थान अनुमन्त्रणा-अभिमन्त्रणाप्यायनमन्त्राः), ३. क्रियमाणानुवादिमन्त्राः इति त्रिविधा एवोपयुज्यन्ते। द्र० मन्त्रभेद—। ४. मन्त्राणां प्रयोगे यदि एकस्मै एव कार्याय नानामन्त्राः प्रयुज्यन्ते तदा तेषां विकल्पेन (पृथक्पृथक्त्वेन प्रयोगो भवति न विकल्पेन। यदा च मन्त्राः त्रिभिश्चतुर्भिः पञ्चभिरिति संख्याविशेष विशिष्टा विधीयन्ते तदा तत्तत्संख्यासमूहरूपेणैव प्रयोक्तव्याः न पृथक्त्वविकल्पेन। तथा च होत्रध्वर्योः सह पठनीययोर्मन्त्रयोः मध्ये होत्रा पठनीयो मन्त्रः अध्वर्युपठनीयेन सह समुचित्य एव पठनीयः (प्रयोक्तव्यः) न विकल्पेनेति विशेषोऽवगन्तव्यः मन्त्राः मन्त्रसमाम्नायपठितत्रैस्वर्येण एव कर्मणि प्रयोक्तव्याः न तु ब्राह्मणगतभाषिकस्वरेण।

**मन्त्रप्रयोजन** —(सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु एतद्धि मन्त्रपदानां दृष्टं प्रयोजनं यत् कर्मसमवेतमर्थं प्रकाशयन्तीति।

**मन्त्रप्रवृत्ति—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिषु भूते कर्मसु चतुष्टयेन मन्त्रा वर्तन्ते स्तुत्याऽऽशिषा निर्देशेनाऽऽशिषा, नैव स्तुत्या नाशिषा न निर्देशेनेति चतुर्थम्। द्र० बौ० श्रौ० २४।१ श्रौ०को० १ भा० पृ० ७५९।

**मन्त्रप्रोक्षण— द्र०** मन्त्रमार्जन—।

**मन्त्रभेद—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु १. द्विविधो मन्त्राः क्रियाप्रकाशकाः फलप्रकाशकाश्चेति। **द्र०** मी०को० पृ० ३०९२। २. मन्त्रास्त्रिविधाः—करणमन्त्राः क्रियमाणानुवादिनो मन्त्राः जपमन्त्राश्च। तत्र यान् मन्त्रानुच्चार्य मन्त्रान्ते कर्म क्रियते ते दृष्टार्थाः करणमन्त्राः। क्रियाकरणकाले एव ये मन्त्राः पठ्यन्ते ते अदृष्टार्थाः क्रियमाणानुवादिनो मन्त्राः। कर्मकाले अदृष्टार्थं ये मन्त्राः पठ्यन्ते ते जपमन्त्रा उच्यन्ते (तु०— का० श्रौ० १।८।८ टि० विद्याधरः)। दृष्टार्था दृष्टार्थप्रसङ्गे (का० श्रौ० १।८।१८३ कर्कः **द्र०**)। पुनस्त्रिविधाः- ऋग् यजुः साम इति भेदेन। पुनस्ते (क) समवेतार्थकाः — सम्बन्धार्थकमन्त्राः। (कर्मसंबद्धार्थकाः)। (ख) असमवेतार्थकाः—असम्बद्धार्थकाः मन्त्राः (कर्मासंबन्धार्थकाः)। (ग) समावेता समवेतार्थकाः मन्त्रा इति। एकस्मिन्नपि मन्त्रे समवेतार्थत्वसमवेतार्थत्वं चेति द्वयमपि भवति। ३. एतेषां मन्त्राणां लक्षणं नानुगमरूपेण वक्तुं शक्यते, यतो बहुप्रकारास्ते कयाऽपि रीत्या नागमयितुं शक्यन्ते, तथापि मन्त्राश्चतुर्धाविभक्ताः। १ करणमन्त्राः २ क्रियमाणानुवादिमन्त्राः ३ अनुमन्त्रणमन्त्राः।४. जपमन्त्रा इति (तु०—का० श्रौ० भूमिका० पृ० २३ विद्याधरः)। षड्विधाः मन्त्राः १. मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत्। शेषिणं (अङ्गिनं) तन्मना भूत्वा स्यादेतदनुमन्त्रणम्॥ २. एतदेवाभिमन्त्रस्य लक्षणं चेक्षणाधिकम्। ३. अद्भिः संस्पर्शनाधिक्यात् तदे-

वाप्यायनं स्मृतम् ॥ ४. उपस्थानं तदेव स्यात् प्रणतिस्थानसंयुतम् । बाह्यं कर्म यदेतेषु मन्त्रकाले क्रियेत तत् ॥ ५. कर्मण: करणास्ते स्युर्विदितार्थप्रकाशनात् । मन्त्रेण कृत्वा मन्त्रान्ते क्रियते कर्म येषु तु ॥ इदं कार्यमनेनेति न क्वचिद्दृश्यते विधि: । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिता: ॥ ६. जपमुच्चारणं विद्यात् क्रत्वर्थमपि तद्भवेत् । अर्थत: कार्यलाभश्चैतदर्थ एव क्रतोर्भवेत् ॥ (इति तु०—आ०श्रौ० १ ।१ ।२१ नारायण:) ।

**मन्त्रमार्जन—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यागानां प्रथमे अग्न्याधानप्रकरणे मन्त्राचमनानन्तरम् आत्मानं मन्त्रैर्मार्जयते ते च मन्त्रा:-'दधिक्राब्ण:' इत्येका, 'यत्किंचेदम्' इत्येका, 'कितवास:' इत्येका, 'हिरण्यवर्णा' इति चतस्र:, 'पवमान: सुवर्' इत्यनुवाक:, 'कया न:' इति तिस्र:, 'तरत्समन्दी' इति चतस्र: समस्ता व्याहृति: 'शं नो देवी:' इत्येका । एभिर्मन्त्रैर्यदात्मानं मार्जयते इति तदेतन्मन्त्रं मार्जनमुच्यते । तत्र पवनं मन्त्राचमनं, मन्त्रमार्जनं च पत्न्यपि करोतीति विशेषोऽवगन्तव्य: । द्र० मन्त्राचमन—, पवन—, द्र० श्रौ०प०नि० पृ० ४६ ।

**मन्त्रलक्षण—** द्र० मन्त्र— ।

**मन्त्रविधि—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु मन्त्र एव स्वयं कर्म प्रब्रूते कर्मानुवादो भवति, मन्त्रमार्गप्रमाणं तु विधाने समुदीरितम् ॥ (तु०— बौ०ध० ४ ।६ ।६ ।९) यच्छन्दसा न शक्नुयात्कल्पयितुं ब्राह्मणेन तच्चिकल्पयिषेद् ब्राह्मणमुहैवैनान् मन्त्रानप्रज्ञातान् विदधातिइदमनेन करोति इदमनेनेति' (तु०— बौ० श्रौ० २४ ।१) ।

**मन्त्रसंज्ञकमन्त्र—** (सा०) इष्टिपशुसोमयज्ञादिषु 'इदं कमनिन इति न क्वचिद् दृश्यते विधि: । लिङ्गादेवेदमर्थत्वं येषां ते मन्त्रसंज्ञिता: ॥ (तु०— आ० श्रौ० १ ।१ ।२१ नारायण:) । यथा—'षष्टिश्चाध्वर्योर्नवतिश्च पाशा... एहीति । नायमुत्थानमन्त्र: पूर्वेणैव निरपेक्षत्वात् । अत ईदृशो मन्त्रो मन्त्रसंज्ञक: इति । (तु०— आ० श्रौ० १ ।३ ।२४) ।

**मन्त्राचमन—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे पवनकर्मानन्तरम् 'आपो हिष्ठा' इति तिसृभिर्त्रैऽग्भि: प्रत्यृचं जलमाचामेत् इति मन्त्राचमनमुच्यते । द्र० पवनकर्मन्—, श्रौ०प०नि० पृ० ४६ ।

**मन्त्रार्थ—** (सा०) इष्टिपशुसोमयज्ञेषु 'यथाविनियोगं मन्त्रार्थान् मन्त्रविदो वर्णयन्ति' इति विनियोगानुसारेण मन्त्रार्थ: । (विनियोगवशेन च अनेकार्थ:, अस्मात् प्रत्येतव्य: इति अतो भवति अनेकार्थ: मन्त्र:) । द्र० मी०को० पृ० ३६४१ ।

**मन्त्रे स्वरक्रिया—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिषु यज्ञकर्मणि प्रयुज्यमाने मन्त्रे तान: (एकश्रुति:) स्वरो भवति न संहिता स्वरो (त्रैस्वर्य), नापि ब्राह्मणस्वर: (भाषिक:) वर्णस्वरूपमात्रोच्चारणप्रयोजनत्वात् । तस्माद् मन्त्रे स्वाध्यायकाले विहितं त्रैस्वर्यं दूरात्संबोधने यज्ञकर्मणि च सुब्रह्मण्यनिगदसामजपन्यूङ्खयाजमानमन्त्रान् विहाय मन्त्रेषु न भवति एकश्रुतिस्वर एव । तदुक्तम्—'एकश्रुति: दूरात् संबुद्धौ यज्ञकर्मणि, सुब्रह्मण्यासाम—जपन्यूङ्खयाजमानवर्जम् (तु०—का०श्रौ० १ ।८ ।१९ विद्याधर:) । उदातानुदात्तस्वरितानामभिव्यञ्जका ये प्रयत्ना आयामविस्रम्भाक्षेपा: तेषामन्यतमस्यैकस्यात्यन्तसन्निकर्षेणासमानजातीय

प्रयत्नाव्यवधानेन यदुच्चारणं तदैकश्रुत्यम् (तु०—आ०श्रौ० १ ।२ ।९ नारायण:) ।

**मन्थ—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे साकमेधपर्वणि महापितृयज्ञे प्रयोक्तः १. क्षीरसंयुक्तो धानासक्तुः मन्थ इत्युच्यते । २. दुग्धमिश्राः सक्तवो मन्थाः । धानापिष्टानि सक्तवः । भर्जितयवा धानाः । द्र० मी० को० पृ० ३१२६ ।

**मन्थनप्रैष—** (आध्व०) द्र० अग्निमन्थनप्रैष— ।

**मन्थिन्....पात्र—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सोमग्रहविशेषः सोमपात्रं पात्रस्थसोमस्वरूपञ्च मन्थी इत्युच्यते सोमरसाधारभूतः स च पात्रविशेषः वैकङ्कतः प्रादेशपरिमाणः उलूखलसदृश उपरि गर्तवान् भवतीति । मन्थिग्रहहोमः प्रतिप्रस्थातृकर्तृको भवतीति विशेषोऽवधेयः । द्र० ग्रह- । २. वैकङ्कतं श्लक्षणं मन्थिपात्रमुच्यते । द्र० श्रौ०प०नि० पृ० २४९ ।

**मन्थिपात्रे सोमग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकहाहीनसत्रेषु प्रातःसवने मन्थिपात्रे सोमं गृह्णाति—'तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं सुवर्विदम् । ...०रोचनम् । उपयामगृहीतोऽसि मर्काय त्वा जुष्टं गृह्णामि इति । बर्हिषा अन्तर्धाय सक्तुभिः श्रीत्वाऽवोद्धृत्य बर्हिषी परिभृज्य सादयति च । तदिदं मन्थिपात्रे सोमग्रहणमुच्यते । द्र० श्रौ०प०नि० पृ० २७४-७५ ।

**मन्द्रस्वर—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च सामिधेनीप्रभृति प्रयाजान्तं शंयुवाकानन्तरं च मन्द्रस्वरेण मन्त्रः पठ्यते । तत्र १. कायाग्निप्रेरितो वायुः उरोदेशे संचारं कृत्वा मुखं प्राप्य यथास्थानं यत्र गम्भीरे स्वरे वर्णानुत्पादयति, गानशास्त्रे यं प्रथमग्राम इति च वदन्ति स मन्द्रस्वरः भवति । तदुक्तं शिक्षायाम्—'मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम् । प्रातः सवनयोगं तं छन्दो गायत्रमक्षितम् । 'मन्द्रस्तु गम्भीरे' इति कोषः । श्रौ०प०नि० पृ० २९ द्र० । अन्यत्र पशुसोमेषु च तत्र २ विहितो मन्द्रस्वरो द्रष्टव्यः । २. उरसा उच्चार्यमाणः स्वरो मन्द्रस्वर उच्यते इत्यर्थः । (तु०—संहितोपनिषद्ब्राह्मणे सायणः १ ।१०, द्र० स्वर-वाचः स्थान— ।

**मरुत्वतीयग्रहद्वयप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने दक्षिणासमनु- देशानन्तरमध्वर्युः प्राङायन्नाह—'इन्द्राय मरुत्वतेऽनुब्रू३हि इति । प्रतिप्रस्थाता मरुत्वतीयौ ग्रहावादाय निष्क्रामति । अध्वर्युर्दक्षिणेन प्रथमं सव्येन द्वितीयं ग्रहमादायोत्तरतः तिष्ठते प्रतिप्रस्थात्रे द्वितीयं प्रदायाऽऽश्राव्याऽऽह—'इन्द्राय मरुत्वते प्रे३ष्य' इति । वषट्कारेऽनुवषट्कारे चोभौ जुहुतः । प्रतिप्रस्थाताऽध्वर्युपात्रे ग्रहस्य संस्रावमवनयतीति मरुत्वतीयग्रहद्वयप्रचारः । द्र० दक्षिणासमनुदेश—, श्रौ०प० नि० पृ० ३०१ ।

**मरुत्वतीयग्रहप्रचार —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने द्विदेवत्यवद्धोमगमने पात्रपरिहरणम् । अध्वर्युर्होत्रे पात्रं प्रदाय तेन भक्षिते तं प्रतिप्रस्थातारं

चोपहूय भक्षयति। भक्षणमन्त्रे 'रुद्रवद्गणस्य' इति वसुमद्गणस्येत्यस्य स्थाने। एवं तावुपहूय प्रतिप्रस्थाता। अध्वर्युः पात्रं निगृह्याऽऽवृत्य इडाजपं कृत्वा शस्त्रं प्रतिगीर्य शस्त्रसमाप्तौ माध्यन्दिनसवने सर्वत्रोक्थं वाचीति वदति। तत्रैव पात्रं निधाय शस्त्रप्रायश्चित्तानि हुत्वा तृतीयं मरुत्वतीयमुपोद्यच्छते। चमसाध्वर्यवो नाराशंसान्। आश्राण्याह उक्थशा यज सोमस्य इति। वषट्कारेऽनु वषट्कारे या जुहोति। चमसाध्वर्यवश्चमसाननुकम्पयन्ति इति प्रचारः। द्र० श्रौ०प०नि० पृ० ३०१-२ द्र० १-२ भक्षमन्त्र—।

**मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होत्रा प्रयोक्तव्यं मरुत्वतीयं नाम माध्यन्दिने प्रथमं शस्त्रम्। तत्र १. प्रतिपत् तृचः, २. अनुचरतृचः, ३. इन्द्रनिवह प्रगाथः, ४. ब्राह्मणस्पत्यः प्रगाथः ५. धाय्याः (शस्त्रमध्ये प्रक्षेपणीया ऋचः), ६. मरुत्वतीयः प्रगाथः, ७. निविद्धानीयं सूक्तम् (सूक्त) शस्त्रपरिधानीया, शस्त्रयाज्या चेति। तथा चायं मरुत्वतीयशस्त्र स्वरूपसंग्रहश्लोकः— प्रतिपदनुचरावनु प्रगाथो हरि निहवोऽथ बृहस्पतेर्ध्रुवश्च। ध्रुवविधिविहितास्तथाऽथ धाय्या वितननमत्र मरुत्वतीयसूक्ते॥ (तु०—ऐ० ब्रा० सा० ३।१५-२०)। शस्त्रक्लृप्तिरियमत्र वर्णानुक्रमेण निर्दिष्टा। द्र० अग्निष्टोमे मरुत्वतीयशस्त्र—।

**मरुत्वतीयशस्त्रस्य अनुचरतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुरनुचरतृचः-'इदं वसो सुतम्'...(ऋ० ८।२।१-३। इति।

**मरुत्वतीयशस्त्रस्य इन्द्रनिहवप्रगाथः—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः इन्द्रनेदीयप्रगाथः— 'इन्द्र नेदीय'... (ऋ० ८।५३।५-६) इति। इन्द्रनिहवप्रगाथः वापि मानिति चोच्यते।

**मरुत्वतीयशस्त्रस्य धाय्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः धाय्याः—१. 'अग्निर्नेता'...(ऋ० ३।२०।४) (आग्नेयी उपसत्)। २. 'त्वं सोमक्रतुभिः'... (ऋ० १।९१।२) (सौम्या उपसत्)। ३. 'पिबन्त्यपो मरुतः-'... (ऋ० १।६४।६) वैष्णी उपसत्)। एकैका धाय्यैकैकस्या उपसदः शस्त्रम्। (ऐ० ब्रा० सा० ३।१८) इति तिस्रो धाय्याः।

**मरुत्वतीयशस्त्रस्य निविद्धानीयसूक्त—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः निविद्धानीयसूक्तम्— 'जनिष्ठा उग्रः'...(ऋ० १०।७३।१)

**मरुत्वतीयशस्त्रस्य परिधानीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः परिधानीया— 'वयः सुपर्णा उपसेदुरिन्द्रम्' (ऋ० १०।७३।११) इति शस्त्रपरिधानीया।

**मरुत्वतीयशस्त्रस्य प्रतिपत्तृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः प्रतिपत्तृचः—आ त्वा रथं यथोतये:........(ऋ० ८ ।६८ ।१-३) इति ।

**मरुत्वतीयशस्त्रस्य ब्राह्मणस्पत्यप्रगाथ—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे सोमप्रथम संस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीन सत्रेषु माध्यन्दिने होतुः ब्राह्मणस्पत्यप्रगाथः—'प्रनूनं ब्रह्मणस्पतिः' (ऋ० १ ।४० ।५-६) । इति ।

**मरुत्वतीयशस्त्रस्य मरुत्वतीयप्रगाथ—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः मरुत्वतीयप्रगाथः—'प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत' (ऋ० ८९ ।३-४) । इति

**मरुत्वतीयशस्त्रस्य याज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे विशेषवर्जं तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः शस्त्रयाज्या—'ये त्वाऽहि हत्ये०'...(ऋ० ३ ।४७ ।४) इति ।

**मरुत्स्तोम—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-रात्रविकृतौ एकाहप्रकरणे मरुत्स्तोमसंज्ञको गणयज्ञ एकाहः । स चाग्निष्टोमसंस्थः । बहूनां भ्रातृणां सखीनां च सङ्घेन प्रयुज्यते इति गणयज्ञ उच्यते ।

**मलवद्वासस्—** (सा०) रजस्वला स्त्री मलवद्वासाः उच्यते ।

**मस्तिष्क—** (सा०) शिरः कपालान्तर्गतं मांसं मस्तिष्क उच्यते ।

**मस्तु—** (सा०) दधिभवं मण्डं मस्तु उच्यते ।

**महर्त्विज्—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु होत्रध्वर्यूद्गातृब्रह्माणो महर्त्विज उच्यन्ते । पूर्णां दक्षिणां द्वादश द्वादश गा लभन्ते । द्र० मध्यतः कारिन्— ।

**महातापश्चितसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहगवामयनयोर्विकृतौ महातापश्चितसत्रे पञ्चसंवत्सरसाध्ये संवत्सरत्रयं यावदुपसदः, संवत्सरं यावद् दीक्षाः, संवत्सरं यावत् सुत्याः इति अष्टशताधिकं सहस्रमहानि भवन्ति । सुत्यादिनानि गवामयनवदनुष्ठेयानि इति विशेषोऽवधेयः । द्र० अहीनसत्रार्हगणानामङ्गप्रधानविधि-, गवामयनसंवत्सरसत्र— ।

**महादिवा कीर्त्यसामन् —** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे विष्णुवत्यहनि माध्यन्दिनसवने विषुवतो मध्ये पृष्ठस्तोत्रेषु तृतीये होतृपृष्ठस्तोत्रे 'बिभ्राड् बृहत् पिबतु (साम० १४५३-५५) इति तृचे गातव्यं साम महादिवाकीर्त्यं सामोच्यते । एतद्धि होतृसाम भवति (तु०—तां० ब्रा० सा० ४ ।६।१५) । द्र० दिवाकीर्त्यसामन्—, विषुवद्दिवाकीर्त्यसामन्— ।

**महानाम्नी—**(हौ०, सा०) 'विदा मघवन्' इत्यस्मिन्ननुवाके (महानाम्न्यर्चिके) प्रोक्ता 'विदा मघवन् विदा' इत्याद्यो नवर्चो महत्त्वसाधनत्वात् महानाम्नीसंज्ञकाः शक्तिमत्त्वाश्छक्वर्यः सिमामह्वयाश्चोच्यन्ते सर्वा ऐन्द्र्यो भवन्ति । (तु०—ऐ० ब्रा० सा० ५ ।७) तां० ब्रा० सा० १३ ।४ ।१) ।

**महानाम्नीच्छन्दस्—** (सा०, हौ०) महानाम्न्यः शक्वर्यः पादचतुष्टयोपेताः अनुष्टुभो भवन्ति न सप्तपादोपेताः शक्वर्यः (शक्वरीच्छन्दस्काः) (तु०— ऐ० ब्रा० सा० ५।७)। अतः नवाना- मनुष्टुभां शक्वरीणां चतुष्पदात्वात् षट्त्रिंशत् पादाः, अष्टादशार्धर्चाः सन्ति। नवापि महानाम्न्यः (अनुष्टुभः) पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रे द्वितीयस्य शाक्वरपृष्ठयस्य (शाक्वरं साम्नः) पादैरर्धर्चैः कृत्वा अध्यर्धकारं स्तोत्रियस्तृचो विधीयते। तदुक्तं—'शाक्वरं चेत्पृष्ठं महानाम्न्यः स्तोत्रियः। ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति' (आ०श्रौ० ७।१२।१०)। अर्थात् यदा सामगैः शाक्वर साम्ना माध्यन्दिनसवने होतुः पृष्ठस्तोत्रं निष्पाद्यते तदानीं महानाम्न्य ऋचः स्तोत्रीयस्तृचः क्रियते। तास्तु स्वभावेन नवसंख्याकाः सन्ति तथापि अध्यर्धाकारं तिस्रः कार्या इति विशेषोऽवधेयः (तु०—ऐ० ब्रा०सा० ५।७)।

**महानाम्नीपाद—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूते द्वादशाहप्रकरणे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने होतुः पृष्ठस्तोत्रे शक्वरीषु गातव्यं शाक्वरं साम कार्यम्। तस्याधारभूतानां महानाम्नीनामृचां प्रत्येकं त्रयोदशपादा अधीयन्ते। तत्र प्रत्यृचगादितो द्वौ द्वौ पादौ मिलित्वा एकैका द्विपदा शक्वर्याः, बहिर्भूता। तत्र 'विदा मघवन् विदा गातुमनुशंसिषो दिशः' इति द्वौ पादौ। ततः 'शिक्षा शचीनां पते। पूर्वीणां पुरूवसो। आभिष्ट्वमभिष्टिभिः'। इति त्रयः सप्ताक्षराः पादाः। ततः 'स्वाऽर्नांशुः' इति व्यूहेन पञ्चाक्षरः पादो धातुसंज्ञकः। ततः 'प्रचेतन प्रचेतय' इति पादो वत्संज्ञकः। एतावपि पादौ शक्वर्याः बहिर्भूतौ स्तोमवत्प्रयोज्यौ। अथ 'इन्द्र द्युम्नाय न इषे' इति ऊधसंज्ञकः पादः शाक्वरः। ततः 'एवा हि शक्रः' इति पञ्चाक्षरः पादः पुरुषसंज्ञकोऽशाक्वरः। ततः 'राये वाजाय वज्रिवः'। 'शविष्ट वज्रिन्नृञ्जसे'। 'महिष्ठ वज्रिन्नृञ्जसे'। इति त्रयः पादाः शाक्वराः। अथ 'आ याहि पिब मत्स्व' इति अध्यास्यनाकः पादः। एवमधीताः त्रयोदश पादाः। तत्र शक्वर्या अवयवभूताः सप्त, अन्ये त्वशाक्वराः षट्स्तोमवच्छक्वरीशेषतया प्रयोज्याः। इति प्रथमा शक्वरी सप्तपदा जाता। एवमुत्तरे द्वे शक्वर्यौ अपि त्रयोदशपादे शाक्वराऽशाक्वरपादविवेकेनावगन्तव्ये। तदुक्तं सूत्रकारेण महानाम्नीः प्रकृत्य 'तासां प्रथम द्वितीये पदे द्विपदास्त्रीणि शक्वराणि धातुर्वत्स ऊधस्तच्छाक्वरं पुरुषस्त्रीणि शाक्वराण्यध्यास्येति पदानि। उत्तमा तु द्व्यध्यासा' (ला०श्रौ० ७।५।९-१०)। सूत्रस्यायमर्थः—तृचस्य तिसृणां शक्वरीणामादित एकैका द्विपदा। ततस्त्रयस्त्रयः शाक्वराः पादाः। ततो धातुः, वत्स ऊधश्चेति संज्ञकास्त्रयः पादाः। तत्र ऊधसंज्ञकः पादः शाक्वरः, ततः पुरुषसंज्ञक एकः पादोऽशाक्वरः, ततः त्रयः पादाः शाक्वराः, ततोऽध्यसैकपदा। उत्तमायां तु 'शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः' इति द्वावध्यासौ। इति (तु०—तां० ब्रा० सा० १३।४।२)। तृचस्य तिसृणां पाठादिस्पष्टार्थप्रतिपत्तिस्तु-सान्तवलेकरसंस्करणे महानाम्नीनां तिसृणामृचां पूर्वोक्तदिशा प्रत्येकं त्रयोदशपादावसानैर्गर्भाङ्कसंकेतैश्च मुद्रिते महानाम्न्यार्चिके संकेतिता अनया च महानाम्नी-, महानाम्नीच्छन्दस्- महानाम्नीपाद— इति त्रयाणां विषयाणामर्थः सुगमो भवेत्। तद्यथा— (१) विदा मघवन् विदागातुमनुशंसिषो दिशः। (२) शिक्षा शचीनां

पते । पूर्वीणां पुरुषसो ॥ १ ॥ आभिष्ट्वमभिष्टिभिः ।(३) स्वा३ऽ३र्नांशुः । प्रचेतनप्रचेतये-(४)-न्द्र सुम्नाय न इषे ॥ २ ॥ एवा हि शक्रो । (५) राये वाजाय वज्रिवः । शविष्ठ वज्रिन्नृञ्जसे । मंहिष्ठ वज्रिन्नृञ्जसे । (६) आ याहि पिब मत्स्व ॥ ३ ॥ इति तृच (प्रथमतृचः) प्रथमा । अथ तृच (द्वितीयतृचः) द्वितीया—(१) विदा राये सुवीर्यं भवो वानानां पतिर्वशी अनु । (२) मंहिष्ठ वज्रिन्नृञ्जसे । यः शविष्ठ शूराणाम् ॥ ४ ॥ यो मंहिष्ठो मघोनाम् । (३) अंशुर्न शोचिः । चिकित्वो अभि नो नय । (४) इन्द्रो विदे तमु स्तुहि ॥ ५ ॥ ईशे हि शक्रम् । (५) तमूतये हवामहे जेतारमपराजितम् । स नः स्वर्षदति द्विषः । (६) क्रतुश्छन्द ऋतं बृहत् ॥ ६ ॥ ततस्तृच तृतीया (तृतीयतृचः)—(१) इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् । (२) स नः स्वर्षदति द्विषः । सनः स्वर्षदति द्विषः ॥ ७ ॥ पूर्वस्य यत्ते आद्रिवोंऽशुर्मदाय । सुम्न आधेहि नो वसो । (४) पूर्तिः शविष्ठ शस्यते । वशी हि शक्रो । (५) नूनं तन्नव्यं संन्यसे ॥ ८ ॥ प्रभो जनस्य वृत्रहन्तसमर्येषु ब्रवामहै । (६) शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ९ ॥ अत्र तिसृषु प्रथमा एकैका द्विपदा मध्येऽवसानरहिता इति प्रत्येकं त्रयोदश त्रयोदश पादा ज्ञेया इति विशेषोऽवधेयः । द्र० शक्वरीपाद— ।

**महानाम्नीव्रत**—(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे स्वाध्यायार्थं यज्ञकर्मणि यानि महाव्रतवर्ज्यानि चतुर्विंतिः सात्रिकाण्यहान्युपदिष्टानि तानि मन्त्रब्राह्मण सूत्राध्ययनेन तदर्थज्ञानेन च विदित्वा तेषामह्नामेकाहाहीनसत्रभावं च ज्ञात्वा यो ब्रह्मचारी विद्यां समाप्य स्नानं कर्तुं न शक्नोति, यश्चापि द्वादश वर्षाण्यध्ययनं कुर्वन्नपि किञ्चिद् ग्रहीतुं न शक्नोति एवंविधं ब्रह्मचारिणं पुनः प्रवेष्टुकाममनुत्सृष्टाध्ययनमाचार्य आश्रमं प्रवेश्य व्रतं ग्राहयित्वासंवत्सरावमं कालं चारयित्वा उत्तरमहर्महाव्रतं प्रब्रूयात् । महाव्रतानुवचनात् पूर्वमाचार्यो महानाम्नीभ्यो व्रतादेशनादिश्रवणान्तं करोति । तदा आचार्येणानुक्तं श्रोष्यन् ब्रह्मचारी उदगयने आपूर्यमाणपक्षे ग्रामाद् बहिर्निष्क्रम्य शुचौ देशे होष्यद्धर्मेण पार्विणवत् तिलमिश्रं स्थालीपाकं नवभ्यो देवताभ्यस्तूष्णीं निर्वापप्रोक्षणे कृत्वा श्रपयेत् । व्रतापराधे लघुप्रमाणकं गुरुप्रमाणकं वा प्रायश्चित्तं कारयित्वा त्वा पुनर्व्रतमादिश्य ततः संवत्सरे पूर्णे एवं श्रावयेत् । अन्वारब्धे ब्रह्मचारिण्याचार्यो जुहुयात् 'अग्नावग्निः' इत्येवमादिभिरत्रैव पठितैर्मन्त्रैः व्याहृतिभिश्चेति । हुत्वा स्विष्टकृतेऽवदाय तमहुत्वैव निधाय 'एतं स्थालीपाकं सर्वमशान' इति संप्रेष्येत् । ततः चरूशेषं ब्रह्मचारी । सर्वमश्नीयात् । भुक्तवन्तं ब्रह्मचारिणं 'त्वं व्रतानां व्रतपतिरसि व्रतं चरिष्यामि...राध्यासम्' इत्यादित्यमुपस्थायति । ततो ब्रह्मचार्यद्भिः पूर्णाञ्जलिनाऽऽदित्यं मन्त्रेणोपतिष्ठेत । आदित्योपस्थानानन्तरं वाचं यच्छेत् । एकरात्रं कालमेवाऽऽसित्वाऽनन्तरे दिवसे आचार्येण सह समवायं गमिष्यमीति य एकरात्राध्ययनेन महानाम्नीरध्येतुं शक्नोति स एकरात्रं ध्यायन् वाग्यमनं कुर्यात् । यो वा नित्याध्यायेनाध्येतुं शक्नोति स त्रिरात्रमेवाऽऽसित्वा चतुर्थेऽहनि आचार्येण समवायं गच्छेत् । ततोः ब्रह्मचारिणा संकल्पितमेकरात्रं त्रिरात्रं वा कालं समीक्षमाण आचार्यो धौतेन वाससा ब्रह्मचारिणो भावसहितं शिरो दृढं वेष्टयित्वा एतं कालमेवं भूतोऽस्वपन् भव इति ब्रूयात् । अथैतस्मिन्

काले सर्वदाऽस्वपन् भवेद् ब्रह्मचारी। ततो गुरुः स्विष्टकृदादि होमशेषं समापयेत्। ततो द्वितीये चतुर्थे वा दिवसे आचार्येऽनुवक्ष्यमाणेऽपराजितायां दिशि बहिर्ग्रामाच्छुचौ देशे उल्लेखनादि कृत्वाऽग्निं प्रतिष्ठाप्य तस्योत्तरत: असिमुदकमण्डलुमश्मानं निधाय तस्यैव प्रत्यगुदग्देशे अग्निसमीपे उच्यमान: शब्दो यत्र न सम्यक् श्रूयेत तत्र वत्सतरीं बध्नीयात्। ततोऽपराजितां दिशमभिसमीमाण आचार्य: पश्चादग्ने: प्रागग्रेषु तृणेषूपविशेत्। ब्रह्मचारी च मुखशरीरगतान् लेपान् शोधयित्वाऽग्निमाचार्यं च प्रदक्षिणं कृत्वा विधिवदुपसंगृह्य पश्चादाचार्यस्य प्रागग्रेषु तृणेषूपविशेत् प्रत्यग्दक्षिणां दिशमभिसमीक्षमाण:। तत: ब्रह्मचारी स्वपृष्ठदेशेनाचार्यस्य पृष्ठदेशं संधायाऽऽसित्वा मनसैव 'महानाम्नीर्भो३ अनुब्रूहि' इति ब्रूयात्। अस्मिन्नपि काले व्रतसंशयान् पृष्ट्वा पूर्ववच्चेदनुब्रूयात् (ब्रह्मचारी)। स्वयमपि संमील्यैव ता: पुनर्नवर्च: नव च पुरीषपदानि ता: सर्वास्त्रिरनुब्रूयात्। अर्थात् 'विदा मघवन्' इत्याद्या० नवर्च:, 'एवा ह्येव' इत्यादीनि नव पुरीषपदानि च (ऐ० आ० ४।१।१) त्रिर्ब्रूयात्। तत: सपुरीषपदामहानाम्नीरनूच्य मुखशिरोवेष्टित मुष्णीषमुन्मुच्य 'मित्रस्य त्वा चक्षुषा प्रतीक्षे मित्रस्य त्वा चक्षुषा समीक्षे' इत्यादित्यमीक्षयेद् ब्रह्मचारिणमाचार्य: 'आदित्यमुपतिष्ठस्व' आदित्यमीक्षस्व पिण्डमशान इत्येवयादिप्रैषं च ब्रूयात्। इत्येतावत् कर्म महानाम्नी व्रतमुच्यते (तु०— आ०श्रौ० ८।१४।२-१७ नारायण:)।

**महानाम्नीव्रतपारणाकांक्षा—**(सा०) अत्र रौरुकिब्राह्मणं भवति-'कुमारान् ह स्म वै मातर: पाययमाना आहु: शक्वरीणां पुत्रका व्रतं पारयिष्णवो भवत' इति। सेयं मातॄणां जातमात्राणां पुत्राणां महानाम्नीव्रतस्य सर्ववेदविद्यापारायणसाधनभूतस्य पारगमनाऽऽकांक्षा महानाम्नीव्रतपारणाकांक्षोच्यते। तत्र (१) अग्ने व्रतपते..। (२) वायो व्रतपते..। (३) सूर्य- व्रतपते..। (४) चन्द्रव्रतपते...।(५) व्रतानां व्रतपत..। इति व्रताहुतिमन्त्रा भवन्ति (तु०—मन्त्रब्राह्मणम् १।६।१०। १४; गो०गृ० पृ० ४७३) इति विशेषोऽवधेय:। द्र० महा नाम्नीव्रत—।

**महानाम्न्यष्टाक्षरपादैकपदासपुरीषपदशंसन—**

(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणो महाबालभिद्विहारस्य पच्छो विहरणे वाच: कूटसंपादनाय प्रयोक्तव्यानां वालखिल्यप्रगाथसूक्तानामादित: षण्णां सूक्तानामष्टाविंशते: प्रगाथानां मध्ये प्रथमत: पञ्चानां प्रगाथानामन्तेषु (१) 'इन्द्रो विश्वस्य गोपति:। (२) इन्द्रो विश्वस्य भूपति:। (३) इन्द्रो विश्वस्य चेतति। (४) इन्द्रो विश्वस्य विराजति। (५) इन्द्रो विश्वं विराजति' इति पञ्चैकपदा: प्रक्षिप्य अनुपसन्तानमृगावानं त्रिमात्रेण प्रणवेन सह शंसेत्। एवं पञ्चसु प्रगाथान्तेषु पञ्चानामेकपदानां शंसनानन्तरम् अवशिष्टेषु त्रयो विंशतौ प्रगाथान्तेषु महानाम्नीनामृचां संबन्धीन्यष्टाक्षराणि पदानि (एकपदा:) 'प्रचेतन प्रचेतय' इत्येवमादीनि यानिपदानि सन्ति तेषां मध्ये यावद्भिरष्टाक्षरै: पादै: प्रक्षेप: संपद्येत तावन्त्यष्टाक्षराणि पदानि (एकपदा:) शंसेत्। इतराण्यनष्टाक्षराणि पदानि महानाम्नी संबन्धीनि न प्रक्षिपेत् (तु०—ऐ० ब्रा० सा० ६।२४; आ०श्रौ० ८।२।२१-२३) अर्थात् अवशिष्टेषु त्रयो-

विंशतेः प्रगाथानामन्तेषु पूर्ववत् अनुपसन्तानमृगवानं प्रणवेन सह महानाम्नीमृचां । '१. प्रचेतन प्रचेतय । २. इन्द्रद्युम्नाय न इषे । ३. राये वाजाय वज्रिवः । ४. शविष्ठ वज्रिन्नृञ्जसे । ५. मंहिष्ठ वज्रिन्नृञ्जसे । ६. मंहिष्ठ वज्रिन्नृञ्जसे । ७. चिकित्वो अभि नो नय । ८. इन्द्रो विदे तमु स्तुहि । ९. तमूतये हवामहे । १०. जेतारमपराजितम् ॥ ११. स नः स्वर्षदति द्विषः । १२. क्रतुश्छन्द ऋतं बृहत् । १३. इन्द्रं धनस्य सातये । १४. स नः स्वर्षदति द्विषः । १५. स नः स्वर्षदति द्विषः । १६. पूर्वस्य यत्ते अद्रिवः । १७. सुम्न आ धेहि नो वसो । १८. पूर्तिः शविष्ठ शस्यते । १९. नूनं तन्नव्यं संन्यसे । २०. प्रभोजनस्य वृत्रहन् । २१. समर्येषु व्रवावहे । २२. शूरो यो गोषु गच्छति । २३. सखा सुशेवो अद्वयुः । इत्येतान् त्रयो विंशतिं पादान् शंसेत् । आश्वलायनमते सपुरीषपदापक्षे पुनरुक्तानां षष्ठचतुर्दश-पञ्चदशानां पदानां स्थानेषु क्रमशः षष्ठे 'एवा ह्येवै वा हि विष्णा३उ' । चतुर्दशे 'एवा ह्ये वैवा हि पूष३न् ।' पञ्चदशे 'एवा ह्येवैवा हि देवा ३' (ऐ० आ० ४ ।१ ।१) इति त्रीण्यष्टाक्षराणि पुरीषपदानि ज्ञेयानि । तदाह देवत्रातः—'सपुरीतीषपदाभ्यः' इति वचनसार्थक्याय पुनरुक्तपदानां त्यागः (तु०—आ०श्रौ० ८ ।२ ।२३) । एवं महावालभिद्विहारस्यार्धर्चशो विहरणे ऋक्शो विहरणे चापि वाचः कूटसिद्धये० मैत्रावरुणः पूर्वोक्तप्रकारेण ता एता अष्टाविंशतिरेकयदा वालखिल्यप्रगाथान्तेषु प्रक्षिप्य शंसेत् । विहरणं चेदं पच्छोऽर्धर्चश ऋक्श इति पर्यायत्रयेण त्रिविधं भवतीति विशेषोऽवधेयः (तु०— ऐ० ब्रा० सा० ६ ।२४) । द्र० महावालभिद्विहार— ।

**महानाम्न्युपसर्गोपसर्जन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रचतुर्थ्यां सोमसंस्थायां षोडशिनि विहृते 'विदा मघवन्' साम० ६४१-६४९ महानाम्न्यार्चिकानुवाके प्रोक्ताः नव ऋचो महानाम्न्यस्तासां संबन्धिन उपसर्गाः पञ्च विधाः ते चाश्वलायनेन दर्शिताः—'प्रचेतन प्रचेतयाऽऽयाहि पिब मत्स्व । क्रतुश्छन्द ऋतं बृहत् सुम्न आधेहि नो वसो' इत्यनुष्टुप् रूपेण दर्शिताः (आ०श्रौ० ६ ।२ ।९) । तत्र प्रचेतनेत्येकः प्रथम उपसर्गः । प्रचेतयेति द्वितीयः, तावुभावपि द्वितीयस्यां महानाम्न्यामाम्नातौ (साम० ६४२) आ याहि पिब मत्स्वेति तृतीय उपसर्गस्तृतीयस्यां महानाम्न्यामाम्नातः (साम० ६४३) क्रतुश्छन्द ऋतं बृहदित्ययं चतुर्थ उपसर्गः । स च षष्ठ्यां महानाम्न्यामानातः (साम० ६४६) सुम्न आधेहि नो वसविति पञ्चम उपसर्गः । स च अष्टम्यां महानाम्न्यामाम्नातः (साम० ६४८) । एतेषु पञ्चसूपसर्गेषु मिलित्वा द्वात्रिंशदक्षरसद्भावादनुष्टुब् भवति । इयं चानुष्टुब् विहृताविहृतषोडशिनोर्मध्येऽविहृतषोडशिनि यथोक्तैव पठनीया (शंसनीया) । अन्यत्र तु विहृतषोडशिनी पञ्चाप्युपसर्गान् विभज्य षट्सु अतिच्छन्दस्सु मध्ये पञ्चसु अनुष्टुप्सम्पादनायेयमनुष्टुप् योजनीया । अत एवोपसृज्यमानत्वादुपसर्गा इत्युच्यन्ते । तदुक्तं—'महानाम्नीनामुपसर्गानुपसृजति' इति (ऐ० ब्रा० ४ ।४) । तदेतत्संयोजनमन्त्रोपसृजतीति शब्देन विधीयते । संयोजनप्रकारश्चेत्थम्—त्रिकद्रुकेषु (ऋ० २ ।२२ ।१-३) इति तृचे येयं

प्रथमाऽतिच्छन्दाः (अष्टिच्छन्दस्का) तस्याश्चतुःषष्ट्यक्षरत्वादनुष्टब्द्वयसंवत्तेनोंपसर्गाकांक्षाऽनुष्टुप्संपादनाय। 'अधत्विषीमान्' (२।२२।२) द्वितीयस्यां षष्ट्यक्षरायामतिशक्वर्यामृचि तदनुष्टुब्द्वयं पूरयितुं 'प्रचेतन' इत्यक्षरचतुष्टयं योजनीयम्। तृतीयस्यां 'साकं जातः' (२।२२।३) षष्ट्यक्षरायामतिशक्वर्यामृचि तदनुष्टुब्द्वयं पूरयितुं 'प्रचेतय' इत्यक्षरचतुष्टयं योजनीयम्। 'प्रोष्वस्मै पुरोरथम्' (ऋ० १०।१३३।१-३) इति तृचेऽपि या प्रथमा 'प्रोष्वस्मै' इति व्यूहेन षट्पञ्चाशदक्षरा शक्वरीच्छन्दस्कात्रऋक्, तस्यामनुष्टुब्द्वयपूर्त्यर्थं 'आयाहि पिब मत्स्व' व्यूहेन इत्यष्टाक्षर उपसर्गो योजनीयः। द्वितीयस्यां 'त्वं सिन्धूँ त्वासृजः' इति षट्पञ्चाशदक्षरायां शक्वर्यामनुष्टुब्द्वयपूर्त्यर्थं 'क्रतुश्छन्द ऋतं बृहत्' इत्यष्टाक्षर उपसर्गो योजनीयः। तृतीयस्यां 'वि षु विश्वा अरातयः' इति व्यूहेन षट्-। पञ्चाशदक्षरायां शक्वर्यामनुष्टुब्द्वयार्थं 'सुम्न आधेहि नो वसो' इष्टाक्षर उपसर्गः संयोजनीयः। (तु०—ऐ० ब्रा० सा० ४।४)। सोऽयं प्रकार आश्वलायनेन चेत्थमुक्तः—'अनुष्टुभमतिच्छन्दःस्ववदध्यात्। द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्याम्। उत्तरास्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत्' इति। अर्थात् 'प्रचेतनं' इत्येतामनुष्टुभमतिच्छन्दः स्वृक्ष्ववधाय, अनुष्टुभः प्रथमं पादं द्विधा कृत्वा 'अध त्विषीमान्, साकं जातः' (ऋ० २।२२।२-३) इत्यनयोर्ऋचोः (सप्त- पदयोः) तृतीयपादावसान उपधाय तत्रावस्येत्। प्रचेतनेनेति द्वितीयस्यां प्रचेतयेति तृतीयस्यामुपदध्यादित्यर्थः। उत्तरासु 'प्रोष्वस्मै (१०।१३३। १-३) इत्येतासु तिसृषु इतराननुष्टुभो द्वितीयतृतीयचतुर्थान् पादान् यथासंख्येन षष्ठान् कृत्वा एकैकामृचं द्वे द्वे अनुभौ कुर्यात्। (तु०—आ०श्रौ० ६।३।११-१३ नारायणः)। द्र० षोडशिन्—।

**महान्याय—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिषु सात्रिकेष्वहःषु अभिजिति द्विषूक्ते माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रे सप्तदशत्वात् पृष्ठस्य निविद्धानसूक्तानां यः संख्यानियमः स तावत्सूक्तो महान्याय इत्युच्यते। तदाह नारायणः—कुशानाम छन्दोगानां स्तुत्यावृत्तिसंख्यार्थानि काष्ठानि। तासां (कुशानां) नवतो दशतो वा विभज्यमानानां यावत्यो निष्केवल्यस्तोमे पूर्णा भवन्ति तावन्ति सूक्तानि येषु माध्यन्दिनेषु ते तावत्सूक्ता माध्यन्दिना इत्युच्यते। अयं न्यायः प्राचुर्येण सर्वेष्वहःसु दृष्ट इति महान्याय इत्युच्यते। (तु०— आ०श्रौ० ८।५।७)।

**महापितृयज्ञ—** द्र० चातुर्मास्यसाकमेधसंबन्धिमहापितृयज्ञ—।

**महाभिषेक—** राजसूये महाभिषेक— (ऐ० ब्रा० ८।१२-२३)।

**महारात्र—** (सा०) त्रिभागावशिष्टा रात्रिः महारात्रमुच्यते। द्र० मी०को० पृ० ३१३२।

**महावद—** (सा०) महान्तं प्रौढं वेदं वदन्तीति ब्रह्मवादिनो महावदा उच्यन्ते।

**महावालभिद्विहार—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने स्वविकृतशिल्पशस्त्रे मैत्रावरुणः १. वालखिल्यानां सूक्तानां (ऋ० ८।४९-५६) षट् आदौ यानि षट् सूक्तानि

(४९-५४) तानि प्रथमं पच्छ (पादशः) विहरेत्। ततो द्वितीयस्यामावृतौ अर्धर्चशो विहरेत्। तृतीयस्यामावृत्तौ ऋक्शो विहरेत्। इति षण्णामपि सूक्तानां तिसृभिरावृत्तिभिर्यः पादविहारः अर्धर्चविहारः, ऋग्विहारः स महावालभिदाख्येन महर्षिणा दृष्टे प्रगाथान्तेष्वेकपदासहितोकचः कूटः महाबालविहार इत्युच्यते। ब्राह्मणे चोक्तम्—'पच्छः प्रथमं षड् बालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक् शस्तृतीयम्। स पच्छो विहरन् प्रगाथे एकपदा दध्यात् स वाचः क्रूरः।' (तु०— ऐ० ब्रा० सा० ६२४)। २. 'अथ महावालभित्। षट् सूक्तानि व्यतिमर्शं पच्छो विहरेद् व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः। प्रगाथान्तेषु चानुपसन्तान ऋगावानमेकपदाः शंसेत् इत्याश्वलायनः (आ०श्रौ० ८।२।१८-२०) तत्र वालखिल्येष्वादितो यानि षट् सूक्तानि तेषां विहारे चत्वारः पर्यायाः। तानि सूक्तानि प्रथमद्वितीयतृतीया वृत्तिषु (पर्यायेषु) क्रमशः पच्छोऽर्धर्चश ऋक्शश्च विहरेत्। चतुर्थे पर्यये अविहृतानेव प्रगाथान् शंसति। इति वालखिल्यानां तृतीयो महावालभिद्विहार उच्यते। विहारोनाम अन्यदीयस्य सूक्तस्य अन्यदीयेन पादादिना संधायाऽऽम्नानम्। द्र० महानाम्नीपाद—, महानाम्न्यष्टाक्षरैकपदासपुरीषपदशंसनव्यतिमर्शविहार—, पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणस्य विकृतशिल्पशस्त्र—।

**महावीर—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च प्रवर्ग्यसम्भरणे सावित्रहोमानन्तरमध्वर्युः 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाददे' इति पूर्वं वेद्यां स्थापितां वैणवीमभ्रिमादत्ते। 'अभ्रिरसि नारिरस्यध्वरकृद्देवेभ्यः' इति अभ्रिं सव्येन धृत्वा दक्षिणहस्तेनाभिमन्त्रयते। 'उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप-प्रयन्तु मरुतः सुदानव इन्द्रमाशूर्भवा सचा' इत्युत्तिष्ठते। 'प्रैतु ब्रह्मणस्पतिः प्रदेव्येतु सुनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः' इति तीर्थेन निष्क्रामति। तूष्णीं दक्षिणतो ब्रह्मयजमानावुपविशयति। 'देवी द्यावापृथिवी अनु मे मँ साथम्।' इति मृदमुपतिष्ठते। 'ऋध्यासमद्य मखस्य शिरः' इति मृदमभ्र्या प्रहरति। अप उपस्पृश्य 'मखाय त्वा' इति मृदं प्रहरति। 'मखस्य त्वा। शीर्ष्णा' इति मृदमुत्तरतः। कृष्णाजिने निवपति। एवभ्रिप्रहरणादि निवपनान्तं समन्त्रकं त्रिः कृत्वा तूष्णीं चतुर्थं करोति। स्वल्पां मृदं परिशेषयति। ततः 'इयत्पय आसीः' इति वराहनिहितमुपतिष्ठते। अभ्रिप्रहरणादि समन्त्रकं त्रिः कृत्वा चतुर्थं तूष्णीं कृत्वा वराहविहितमपि परिशेषयति। देवीर्वम्रीरस्य भूतस्य प्रथमजा ऋतावरीः' इति वल्मीकवपामुपतिष्ठते। अभ्रिप्रहरणादि वराहविहितवत्। 'इन्द्रस्यौजोऽसि' इति दूर्वामुपतिष्ठते। अभ्रिप्रहरणादि पूर्ववत्। 'अग्निजा असि प्रजापते रेतः इति छागापय उपतिष्ठते। अभ्रिप्रहरणादि पूर्ववत्। छागापयसो न परिशेषयति। मृद्वर्जशेषानत्रैव कृष्णाजिने प्रकिरति। अध्वर्यु ब्रह्मयजमाना अन्यतो मुखा अनभिस्वपन्तः 'प्रैतु ब्रह्मणस्पतिरादेव्येतु सूनृता। अच्छावीरं नर्य्यं पङ्क्तिराधसं देवा यज्ञमानयन्तु नः' इति तत् कृष्णाजिनमानयन्ति। 'आयुर्धेहि प्राणं धेहि अपानं धेहि व्यानं धेहि चक्षुर्धेहि हि श्रौत्रं धेहि मनो धेहि वाचं धेह्यात्मानं धेहि प्रतिष्ठां धेहि मां धेहि मयि धेहि' इति कृष्णाजिनं खरे सादयति। अध्वर्युः

अर्भकपालशर्करापिष्ठैरजकृष्णाजिनलोमभिश्च कृष्णाजिनस्थां मृदं संसृज्य 'मधु त्वा मधुना करोतु' इति मदन्तीभिरद्भिः सम्मिश्रयति। 'मखस्य शिरोऽसि इति मृदाः पिण्डं करोति। स्वल्पां मृदं परिशेषयति। यज्ञस्य पदे स्थः' इति अङ्गुष्ठाभ्यां पिण्डं त्रेधा विभज्य त्रीन् पिण्डान् कृत्वैकैकस्य त्रींस्त्रीन् पिण्डान् करोति। गायत्रोऽसि' इति तेषामेकं पिण्डं कर्त्रे प्रयच्छति। कर्ता 'गायत्रेण त्वा छन्दसा करोमि' इति तेन पिण्डेन महावीरस्य मूलं करोति। अध्वर्युः 'त्रैष्टुभोऽसि' इति द्वितीयं पिण्डं प्रयच्छति। कर्ता त्रैष्टुभेन त्वा छन्दसा करोमि' इति तेन मध्यं करोति। अध्वर्युः 'जागतोऽसि' इति तृतीयं पिण्डं प्रयच्छति। कर्ता 'जागतेन छन्दसा त्वा करोमि' इति तेन बिलं करोति। प्रादेशोच्छ्रायं पृथुबुध्नं पृथुग्रीवं मध्ये सन्नतं महावीरं कृत्वा वेणुशलाकयोदरं कृत्वा बिलधस्याधस्त्र्यङ्गुले रास्नां परिमण्डलं पर्यस्यति- 'मखस्य रास्नासि' इति मन्त्रेण 'अदितिस्ते' बिलं गृह्णातु पाङ्क्तेन छन्दसा' इति बिलं प्रकाशयति। 'सूर्यस्य हरसा श्रपय' इति महावीरमादित्येनाभितपति तूष्णीं खरे निदधाति। अध्वर्युर्निहितमनुमन्त्रयते— 'मखोऽसि' इति मन्त्रेण एवमेकस्य प्रथमपिण्डस्य त्रिभिः पिण्डैः कृतोऽमत्रविशेषो महावीर उच्यते। एवं पिण्डद्वयस्य त्रींस्त्रीन् पिण्डान् कृत्वा तैर्महावीरद्वयं समन्त्रकं करोति। अतिशिष्टया मृदा सशेषया तूष्णीं पिन्वने रौहिणकपाले आज्यस्थालीं च करोति। अवशेषितया मृदापि सशेषया प्रवाते प्रतिलिप्योपतापयतीति। तदेवमपरौ उपशयाख्यौ द्वौ महावीरौ रौहिणकपाले रौहिणपुरोडाशभर्जनार्थे कपाले आज्यस्थाली च संपाद्यन्ते इति विशेषोऽवधेयः। द्र० सावित्रहोम—, श्रौ०प०नि० पृ० १९०-९१, प्रवर्ग्यसंभरण—।

**महावीरक्लृप्ति—** द्र० महावीर—।

**महावीरप्रदक्षिणगमन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च घर्मोपस्थानानन्तरं प्रज्वलितेऽग्नौ सौवर्णरुक्ममपकृष्य धवित्राण्यादत्ते— 'गायत्रमसि' इत्येकम्, 'त्रैष्टुभमसि' इति द्वितीयम्, 'जागतमसि' इति तृतीयमिति। गृहीतैर्धवित्रैर्महावीरस्य पश्चात् प्राङ्मुखो जान्वाच्य युगपत्त्रिरूर्ध्वं धुनोति—'मधु मधु मधु' इति मन्त्रेण स्वोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे धवित्रे प्रयच्छति। तयोरेकम् अग्नीध्रे प्रतिप्रस्थाता प्रयच्छति। होतुरभिष्टवनस्य प्रणवे प्रणवे महावीरस्योपरि धून्वन्तोऽध्वर्युप्रतिप्रस्थात्राग्नीध्रा महावीरं त्रिः प्रदक्षिणीकृत्योत्तरतास्तिष्ठन्तीतीदं महावीरस्य प्रदक्षिणगमनमुच्यते। द्र० घर्मोपस्थान, श्रौ०प० पृ० २१८।

**महावीरप्राङ्नयनमन्त्र—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र च प्रवर्ग्यवत्सु महावीरोत्थापनानन्तरं 'तेजोऽसि तेजोऽनुप्रेहि अग्निर्मा पृथिव्याः पातु वायुरन्तरिक्षात् सूर्यो दिवो दिविस्पृङ्मा मा हिँसीः, अन्तरिक्षस्पृङ् मा मा हिँसीः, पृथिवीस्पृङ् मा मा हिंसीः, स्तुवरसि सुर्वर्मे यच्छ दिवं यच्छ दिवो मा पाहि'॥ १॥ इत्यनेन मन्त्रेण महावीरं प्राङ् हरति। 'समुद्राय त्वा वाताय स्वाहा॥ २॥ स विलाय त्वा वाताय स्वाहा॥ ३॥ अनाधृष्याय त्वा वाताय स्वाहा॥ ४॥ प्रतिधृष्याय त्वा वाताय स्वाहा॥ ५॥ वस्यवे त्वा वाताय स्वहा॥ ६॥' इत्येते पूर्वाः षण् मन्त्राः।

अथोत्तरान् षड्यथोपपादं मन्त्रानाह— 'अग्नये त्वा वसुमते स्वाहा (१) सोमाय त्वा रुद्रवते स्वाहा (२) वरुणाय त्वाऽऽदित्यवते स्वाहा (३) बृहस्पतये त्वा विश्वदेव्यावते (४)। सवित्रे त्वर्भुमते, विभुमते, वाजवते स्वाहा (५)। यमाय त्वाऽङ्गिरस्वते पितृमते स्वाहा (६) इत्येते द्वादश मन्त्रा महावीरप्राङ्नयनमन्त्रा उच्यन्ते। तत्रोत्तरेषां षण्णां प्रति मन्त्रमवसानमिति यथोपादमुच्यते इत्यर्थः। **द्र०** श्रौ०प०नि० पृ० २२२, महावीरोत्थापन—।

**महावीरप्रादेशकरण—** (याज०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीराज्यपूरणानन्तरं 'अनाधृष्ण पुरस्ताद् अग्नेराधिपत्ये आयुर्मेदाः। पुत्रवती दक्षिणत इन्द्रस्याधिपत्ये प्रजां मे दाः। सुषदा पश्चाद् देवस्य सवितुराधिपत्ये श्रोत्रं मे दाः। विधृतिरुपरिष्टाद् बृहस्पतेराधिपत्ये ब्रह्म मे दाः, क्षत्रं मे दाः, तेजो मे धाः, यशो मे धाः, तपो मे धाः, मनो मे धाः, इत्येतैः पञ्चभिर्मन्त्रैः क्रमेण यमजानो महावीरस्य प्राग्दक्षिणतः पश्चिमत उत्तरत उपरि च प्रादेशान् करोतीति महावीरप्रादेशकरणमित्युच्यते। तत्र मन्त्रानध्वर्युरपि पठतीति विशेषोऽवधेयः। **द्र०** महावीराज्यपूरण—, प्रादेशकरण—, श्रौ०प०नि० पृ० २१६-१७।

**महावीरप्रेक्षणमन्त्र—**(आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूत... अन्यत्र प्रवर्ग्यवत्सु च होतुः सकाशाद् याभिर्वर्तिकामित्युपश्रुत्याध्वर्युयजमानौ महावीरमुपोत्थाय प्रेक्षतः—'दश प्राचीर्दश भासि दक्षिणा दश प्रतीचीर्दश भास्युदीचीः। दशोर्ध्वा भासि सुमनस्यमानः। स नो रुचं धेह्यनृणीयमाणः। अग्निष्ट्वा वसुभिः पुरस्ताद् रोचयतु गायत्रेण छन्दसा। स मा रुचितो रोत्रय। इन्द्रस्त्वा रुद्रैर्दक्षिणतो रोचयतु त्रैष्टुभेन छन्दसा। स भा रुचितो रोचय। वरुणस्त्वाऽऽदित्यैः पश्चाद् रोचयतु जागतेन छन्दसा। स मा रुचितो रोचय। द्युतानस्त्वा मारुतो मरुद्भिरुत्तरतो रोचय त्वानुष्टुभेन छन्दसा। स भा रुचितो रोचय। बृहस्पतिस्त्वा विश्वैर्देवैरुपरिष्टाद् रोचयतु पङ्क्तेन छन्दसा स मा रुचितो रोचय। रोचितस्त्वं देवघर्मदेवेष्वसि रोचिषीयाहं मनुष्येषु। सम्राड्घर्मरुचितस्त्वं देवेष्वायुष्मांस्तेजस्वीब्रह्मवर्चसी भूयासम्। रुगसि रुचं मयि धेहि। मयि रुक्। दश पुरस्ताद्रोचसे दश दक्षिणा, दश प्रत्यङ् दशोदङ् दशोर्ध्वो भासिसुमनस्यमानः। स नः सम्राडिषभूर्जं धेहि। वाजी वाजिने पवस्व। रुचितो घर्मो रुचीये' इति। अयं मन्त्रसमूहो महावीरप्रेक्षणमन्त्र इत्युच्यते। **द्र०** श्रौ०प० नि० पृ०२१८-१९।

**महावीरसंभारनिधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावेदेः पश्चिमप्रान्तेऽन्तःपात्ये देशे मृदं, वल्मीकवपां,वराहविहितं, पूतीकान्, अजापयः, गवेधुकाः कृष्णाजिनं, अभ्रिं इत्येतान् संभारान् निदधातीति महावीरसंभारनिधानमुच्यते (तु०— का० श्रौ० २६।१।२-३ विद्याधरः।)

**महावीरसादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीरस्य प्रवृञ्जनीये खरे उद्वासनीयखरे च सादनं क्रियते। १. प्रवृञ्जनीय खरे सादने रुक्मोपगूहनानन्तरमध्वर्युः व्यतिषक्तान् प्रागुदगग्रान् कृत्वा रुक्मोपरि

मुञ्जप्रलवान् कृत्वा प्रदक्षिणमादीपयति। तद्यथा—'अर्चिरसि' इति पुरतः। 'शोचिरसि' इति दक्षिणतः। 'ज्योतिरसि' इति पश्चिमतः। 'तपोऽसि' इत्युत्तरतः। तान् प्रवृञ्जनीये खरे संप्रकीर्य सँ्सीदस्व महाँ असि शोचस्व देववीतम। विधूममग्ने अरुषं भियेध्यसृज प्रशस्तदर्शतम्' इति तेषु महावीरं सादयति इदं खरे महावीरसादनमुच्यते। द्र० श्रौ०प०नि० पृ० २१६। २. उद्वासनीयखरे अध्वर्युकर्तृकघर्मस्रावणानन्तरं उपयमने महावीरस्थं पयोऽवनीयोदङ्ङत्याक्रम्यान्तर्वेदिप्राग्बिलं महावीरं सादयति। प्रतिप्रस्थाता राजतं रुक्ममुद्वासनीये खरे उपगूहति। अध्वर्युस्तस्मिन् महावीरं सादयति—'घर्मासि सुघर्मा मेऽन्यस्मे ब्रह्माणि धारय नेत्त्वावातः स्कन्दयात्' इति मन्त्रेण। इदमुद्वासनीये महावीरसादनमुच्यते। द्र० श्रौ०प०नि० पृ० २२३-२४।

**महावीराङ्गारपरिश्रयण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीरप्रादेशकरणानन्तरं यजमानो भूमिमभिमृशति—'मनोरश्वाऽसि भुरिपुत्रा विश्वाभ्यो मानाराष्ट्राभ्यः पाहि सूपसदा मे भूया मा मा हिँ्सीः' इति। अध्वर्युः 'तपोष्वग्ने अन्तराँ् आमित्रान्तपाशँ् समररुषः परस्य। तपा वसो चिकितानो अचित्तान्विते तिष्ठन्तमजरा अयासः' इति गार्हपत्यात् धृष्टीभ्यामुदीचोऽङ्गारान् निरूहति। तैरेनं महावीरं प्रदक्षिणं परिचिनोति—'चितः स्थ परिचितः स्वाहा मरुद्भिः परिश्रयस्व' इदं महावीराङ्गारपरिश्रयणमुच्यते। द्र० श्रौ०प० नि० पृ० २१७, महावीरप्रादेशकरण—।

**महावीराज्यपूरण—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीराञ्जनसादनानन्तरं 'अञ्जन्ति यं प्रथयन्तो न विप्रा वपावन्तं नाग्निना तपन्तः। पितुर्न पुत्र उपसिप्रेष्ठ आ घर्मो अग्निमृतयन्न सादीत्' इति महावीरमाज्येन पूरयति। इदं महावीराज्यपूरणमुच्यते। द्र० महावीराञ्जन—, महावीरसादन—, श्रौ०प०नि० पृ० २१६।

**महावीराञ्जन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अन्यत्र प्रवर्ग्यवत्सु च प्रवर्ग्यारम्भहोमानन्तरं महावीरमाज्येनानक्ति—'देवस्त्वा सविता मध्वनक्तु' इति मन्त्रेण। इदं महावीराञ्जनमुच्यते। द्र० श्रौ०प०नि० पृ० २१६।

**महावीराप्यायन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीरप्रदक्षिणगमनानन्तरमध्वर्युः सर्वाणि धवित्राण्यादायात्मनः पश्चिममार्गेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे द्वे (धवित्रे) प्रयच्छति। तयोरेकं प्रतिप्रस्थाताऽग्नीधे प्रयच्छति। महावीरस्य पश्चात् प्राङ्मुखोऽध्वर्युरुपविशति, पुरस्तात् प्रतिप्रस्थाता, उत्तरत आग्नीध्रः। एवमुपविश्य (होतुरभिष्टवने) प्रणवे प्रणवे धून्वन्तः स्रुवेण महावीरमाप्यायन्ति। इदं महावीराप्यायनमुच्यते। द्र० महावीरप्रदक्षिणगमन—, श्रौ०प०नि० पृ० २१८।

**महावीरे गोपयः प्रक्षेप—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...प्रवर्ग्यवत्सु च घर्मदुधादोहनानन्तरं होत्रा 'उत्तिष्ठ ब्रह्मणस्पते' इत्युक्तेऽध्वर्युः प्रतिप्रस्थात्रे गोपयः प्रदाय यथागतमागत्य शफोपयमनान्यादत्ते। तद्यथा—'गायत्रोऽसि' इति प्रथमं शफम्, 'त्रैष्टुभोऽसि' इति द्वितीयम्, 'जागतमसि' इत्युपयमनम्। होत्रा 'उपद्रव पयसा'

इत्युक्ते प्रतिप्रस्थात्रा आह्रियमाणे (गोरजाया:) पयसी अभिमन्त्रयते 'सहोर्जोभागेनोप मे हीन्द्राश्विना मधुन: सारघस्य घर्म पातवसवो यजता वट्' इति मन्त्रेण। महावीरस्य पुरस्तात् प्रत्यङ्मुख उपविश्य 'स्वाहा' इति स्वपिन्वनेन गोपयो महावीरे प्रक्षिपति इति महावीरे गोपय: प्रक्षेप उच्यते। द्र० श्रौ०प०नि० पृ० २२१।

**महावीरे छागापयोऽवनयन** — (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च प्रतिप्रस्थाता स्वपिन्वनस्थं छागापयस्तूष्णीं महावीरेऽवनयति। इदं महावीरे छागापयोऽवनयनमुच्यते। द्र० श्रौ०प०नि० पृ० २२१।

**महावीरोत्थापन**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च सिद्धघर्ममहावीरग्रहणानन्तरं सव्ये हस्ते शफाभ्यां महावीरं धृत्वा मौञ्जेन वेदेन दक्षिणहस्तेनाधस्तान्मार्जयित्वा 'अन्तरिक्षेण त्वोपयच्छामि' इति उपयमनेनोपयच्छति। 'देवानां पितॄणामनुमतो भर्तुं शकेयम्' इत्यनेन महावीरमादायोत्तिष्ठति। इदं महावीरोत्थानमुच्यते। द्र० सिद्धघर्ममहावीरग्रहण—श्रौ०प०नि० पृ० २२२।

**महावेदि**— (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु अग्नीषोमीये पशौ च मध्यमोपसद्धोमानन्तरं उपनिष्क्रम्य सुब्रह्मण्य सुब्रह्मण्यामाह्वय, द्विस्तनव्रतं प्रयच्छत इति (प्रैषानन्तरं) कश्चिद् व्रतं प्रददाति। अथ (प्रवर्ग्यप्रयोगार्थ) महावेदिप्रकार:। (तत्र महावेदिसाधने) आहवनीयपूर्वशङ्को: सकाशात् षट् प्राञ्चि पदानि प्रक्रम्य शालामुखीयशङ्कुं निहन्ति। तस्माच्छंको: सकाशात् षट्त्रिंशत्पदेषु यूपावटीयं शङ्कुं निहन्ति। शालामुखीयाद् दक्षिणोत्तरयो: पञ्चदशपदे क्रमेण शङ्कुं निहन्ति। तौ महावेद्या: श्रोणिस्थानम्। यूपावटीयाद् द्वादशपदे दक्षिणोत्तरयो: क्रमेण द्वौ शङ्कू निहन्ति। तौ महावेद्या अंसस्थानम्। अक्ष्ण्यामानेन प्रमाय समन्तं स्पन्द्यया रज्ज्वा महावेदिं परित: तनोति। प्राकृतवेदिवत् (दक्षिणवेदिवत्) मध्यसूत्रं पृष्ठ्यासंज्ञकं भवति। इयं महावेदिरित्युच्यते। द्र० श्रौ०-प०नि० पृ० २३२; मध्यमोपसद्धोम—सौमिकवेदिमान—।

**महावेदिकरण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रवर्ग्यवत्सु च चेत् प्रवर्ग्यकर्म, तदनन्तरमग्नीषोमीय: पशुर्महावेद्यामनुष्ठीयते। १. तदर्थमध्वर्यु: पाणी संमृज्य उत्तरपरिग्रहादि करोति। उपरवदेशे स्फ्यं स्तब्ध्वा संप्रैषमाह — 'प्रोक्षणीरासादय , इध्माबर्हिरुपसादय' इति। तत उपरवदेशे प्राकृतमन्त्रेण स्फ्यमुदस्यति। इदं महावेदिकरणमुच्यते। तत्र वेदिकरणात्पूर्वं तस्याग्नीषोमीयस्य पशो: निरूढपशुवद् देवतासंकल्प:। आतिथ्याबर्हिरेव पञ्च विधम् अध्वर्यु: तेनैव प्रस्तरेण सह शुल्बादि संभरति। ते एव विधृती प्रज्ञाते निधाय तैरेव परिधिभिरिध्मं सम्भरति। ततस्त्वां त्रयोविंशतिद्येत्यूह:। परिभोजनीयान् वेदं च कृत्वा महावर्हि: सम्भृत्य अन्यानपि तत्तदर्थमुष्टीन् संभृत्य निरूढपशुवदग्नीषोमीयस्य पशो: शाखां समन्त्रां, तूष्णीं प्लक्षशाखाम्। एवं सवनीयस्य द्वे शाखे। दधिग्रहाय तूष्णीमेकां शाखां मैत्रावरुण्याभिक्षार्थं समन्त्रां दधिघर्मार्थं शृतातक्यार्थमशिरार्थं च

तूष्णीम्। इत्यष्टौ शाखाः क्रमेण युगपद् वा आहृत्य 'इषे त्वा' इत्यादि यजमानस्य 'पशून् पाहि' इत्यन्तम्। अभ्यादधीता घर्ममित्यादि अग्निप्रणयनम्। पदतृतीयं (सोमक्रयणीपदपांसुतृतीयं) शालामुखीयनिकटे तृतीयमुपयमसनीषु, तृतीयभञ्जनार्थं निदधाति। अग्निप्रणयनकाले कश्चिद् राजानमादायोत्तरतस्तिष्ठति। अग्नौ प्रणीते सति तेनैवागत्य आसन्द्यां स्थापयति। ततः स्वयं होमान्तं करोति। ततो ब्रह्माणं दक्षिणत उत्तरवेदेरुपवेशयति। इति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २३९। २. यस्मिन् दिने अग्नीषोमीयः पशुरनुष्ठीयते तदौपसथ्यम्। ततः पूर्वस्मिन् दिने पौर्वाह्णिक्योपसदा प्रचर्य महावेदिं मिमीतेऽध्वर्युः (तु०—का०श्रौ० ८।३।६ विद्याधरः)। द्र० सौमिकवेदिमान—।

**महावेदिगमन**—(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु अग्नीषोमीये पशौ च प्रवर्ग्योत्तरशान्तिपाठोत्तरं इध्मप्रदीपनहोमानन्तरमध्वर्युः द्वाराणि विवृत्य प्रावर्गिकं सर्वं सम्भारमादाय सर्वैः सह पूर्वया द्वारोपनिष्क्रामति। 'अनु नोऽद्यानुमतिर्य...... दा शुषे मयः। अन्विदनुमते, त्वं तारिषः' इति मन्त्रद्वयमध्वर्युरिव पठति। अध्वर्युः महावेदिं (पूर्वकृतां) पद्भ्यामवक्रम्य 'प्रस्तोतः सामगाय' इति प्रेष्यति। प्रस्तोता साम गायति। निधनं सर्वे पठन्ति 'दिवस्त्वा परस्पाया अन्तरिक्षस्य तनुवः पाहि पृथिव्यास्त्वा घर्मणा वयमनुक्रामाय सुविताय नव्यसे' इति। महावेदिमभिक्रम्य मध्यभागे द्वितीयं निधनं पठन्ति 'ब्रह्मणस्त्वा परस्पायाः क्षत्रस्य तनुवः पाहि विशस्त्वा घर्मणा वयमनुक्रामाम सुविताय नव्यसे' इति। उपरवदेशं गत्वा तत्र तृतीयं निधनं पठन्ति 'प्राणस्य वा परस्पायै चक्षुषस्तनुवः पाहि श्रोत्रस्य त्वा घर्मणा वयमनुक्रामाम सुविताय नव्यसे' इति अभिक्रम्योत्तरवेदिसमीपे तिष्ठन्ति। इदं महावेदिगमनमुच्यते। द्र० श्रौ०प०नि० पृ० २३५, सौमिकवेदिमान-।

**महावेदिमान**— द्र० सौमिकवेदिमान—।

**महावेद्यां प्राग्वंशे महाबर्हिरास्तरणादिसंभारसादन**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीये पशौ महावेद्यां बर्हिरासादनादिप्रैषानन्तरं दक्षिणे वेद्यन्ते महाबर्हिषो मुष्टिं स्तृणाति-'देवबर्हिरूर्णामृदसं त्वा' इति प्राकृतमन्त्रेण। महावेदिं बहुलां पुरस्तात् प्रतीचीं स्तृणाति। तूष्णीमर्धस्तनवत्रं प्रददाति। उन्नेता पञ्च ग्राब्णः, सप्तदश वायव्यानि, प्रादेशमात्राणि उलूखलाकाराणि एकतो मुखानि, दश चमसान्, परिप्लुपात्रं सदण्डं, स्रुगाकारं, द्रोणकलशं,दशापवित्रे, चतस्रः स्थालीः उपग्रहादि यदन्यदुपयुक्तं तत्सर्वं प्रक्षाल्य द्रोणकलशे दशापवित्रे विन्यस्य एतत्सर्वं प्राग्वंशे सादयति। इति। द्र० श्रौ०प०नि० पृ० २४८-७४९।

**महावेद्यां बर्हिरासादनादिप्रैष**—(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमा...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशौ औत्तरवेदिकाद्युपस्थानात् प्रभृत्यध्वर्युः प्रत्यक् सदो नातीयात्। तत्रस्थः (सदः स्थः) एव संप्रेष्यति—'स्तृणीत बर्हिः, प्र व्रतं यच्छत, समपिव्रता हूयध्वम्, आस्तावं बहुलं स्तृणीत। उन्नेतर्ग्रावब्णो वायव्यानि द्रोणकलशे दशापवित्रे समवधाय, पत्नी शाले पत्नीं संसादय। अग्नीदाज्यमधिश्रय, प्रति-

प्रस्थातः स्रुचः संमृड्ढि, आज्येनोदेहि, पृषदाज्याय दध्याहर।' इत्ययं प्रैषो महावेद्यां बर्हिरासादनादि प्रैष इत्युच्यते। श्रौ०प० नि० पृ० २४८, औत्तरवेदिकाद्युपस्थान—।

**महावेद्यामनुष्ठीयमानाग्नीषोमीयपशुकर्मन्—** (आध्व०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु महावेदिकरणानन्तरं महावेद्यां क्रियमाणान्यग्नीषोमीयपशुकर्माणि क्रमेणैतावन्ति भवन्ति। तत्र (१) दक्षिणहविर्धानवर्तनीहोमः (२) दक्षिणधुराञ्जनम्, (३) उत्तरहविर्धानवर्तनीहोमः, (४) उत्तराक्षधूरञ्जनम्, (५) हविर्धानप्रवर्तनप्रैषः, (६) अतसोरुपस्तम्भने स्थापनम्, (७) मेथ्यां हविर्धानबन्धनम् (८) रराटी बन्धनम्, (९) हविर्धानगृहनिर्मितिः, (१०) हविर्धानम्, (११) औदुम्बर्यवटखननप्रैषः, (१२) उपरवखननप्रैषः, (१३) सदः, (१३) सदोऽभिमर्शनम्, १४) उपरवसंस्कारः, (१५) उपरवेषु फलकप्रतिष्ठापनम्, (१६) आग्नीध्रीयखरकरणम्, (१७) होतृखरकरणम् (होतृधिष्ण्यम्), (१८) मैत्रावरुणखरकरणम् (मैत्रावरुणधिष्ण्यम्), (१९) ब्राह्मणाच्छंसिखरकरणम् (ब्राह्मणाच्छंसिधिष्ण्यम्), (२०) पोतृखरकरणम् (पोतृधिष्ण्यम्), (२१) नेष्टखरकरणम् (नेष्टृधिष्ण् यम्), (२२) अच्छावाकखरकरणम्, (अच्छावाकधिष्ण्यम्), (२३) मार्जालीयखरकरणम् (मार्जालीयधिष्ण्यम्) (२४) औत्तरवेदिकाग्न्युपस्थानम्, (२५) आस्तावोपस्थानम्, (२६) चात्वालोपस्थानम्, (२७) पशुश्रपणाग्न्युपस्थानम्, (२८) औदुम्बर्युपस्थानम्, (२९) ब्रह्मसदनोपस्थानम्, (३०) शालामुखीयस्थानम्, (३१) गार्हपत्योपस्थानम्, (३२) बर्हिः सादनादिप्रैषः, (३४) महाबर्हिषः स्तरणम् (३५) महावेदिस्तरणम्, (३६) अर्धस्तनव्रतदानम्, (३७) पात्रसादनम्, (३८) दधिपात्रकरणम्, (३९) ऐन्द्रवायवपात्रकरणम् (४०) मैत्रावरुणपात्र-आश्विनपात्र-शुक्रपात्र-मन्थिपात्र-अदाभ्यपात्राणां करणम्, (४१) अतिग्राह्यपात्रकरणम्, (४२) ऋतुपात्रकरणम्, (४३) ब्रह्म-होतृ-ब्राह्मणाच्छंसि-यजमानोद्गातृ-प्रशास्त्र च्छावाकाग्नी चमसानां करणम्, (४४) पवित्रकरणम्, (४५) पशुकुम्भी शाखापवित्रं वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डमित्येतेषां सादनम्, (४६) ब्रह्मणे सोमदानम्, (४६) शालामुखीये होमः, (४७) अग्नीषोमप्रणयनप्रैषः, (४८) अग्नीषोमप्रणयनीयानुवचनम्, (४९) कृष्णाजिने सोमसादनम्, (५०) सोपस्थानम् (५१) आहवनीयोपस्थानम्, (५२) सुब्रह्मण्याप्रैषः। (५३) वसतीवरीग्रहणसादने (५४) वसतीवरीस्थापनम्, (५५) प्रायश्चित्तहोमश्चेत्येतेऽग्नीषोमीयपशुपदार्था महावेद्यामनुष्ठीयन्ते। ते च वर्णानुक्रमेण तत्र तत्र व्याख्याता द्रष्टव्याः। द्र० श्रौ०प०नि० पृ० २३९-२५३।

**महाव्रत—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमादिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ संवत्सरसत्रप्रकरणे गवामयने उत्तरपक्षस्य उपान्त्यं (उदयनीयातिरात्रादन्तिमादह्नः पूर्वभावि) पञ्चविंशं सात्रिकमहर्महाव्रतमुच्यते। २. महतः (अन्नस्य) संबन्धिव्रतं महाव्रतमुच्यते (तु०—तां० ब्रा० सा० ४।१०।२)। ३. महान् भवत्यनेन व्रतेनेति महाव्रतम्, महतो देवस्य व्रतमिति महाव्रतम्, महच्च तद् व्रतमिति महाव्रतस्य त्रिधारा निर्वचनम्। (तु०—ऐ० आ० सा० १।१।१)। ४. महाव्रतसंज्ञकस्तोत्रविशिष्टः सोमयागो महाव्रतमुच्यते। ५. महाव्रतशब्दः

एक: क्रत्वर्थप्रतिपादक:, अपर: स्तोत्रपर्याय: (तु०—का०श्रौ० १३ ।४ ।२ विद्याधर:)। ६. द्वादशाहिकदशरात्रात् परं महाव्रतमग्निष्टोमसंस्थं पञ्चविंशस्तोमयज्ञस्य अन्तिममह: महानवर्तिष्ट अनेन कर्मणेति। (तु०—का० श्रौ० १३ ।२ ।२१ विद्याधर: ।) ७. गायत्र-बृहद्-रथन्तर-भद्र-राजनानां पञ्च साम्नां समुदायो महाव्रता (तु०—द्रा०श्रौ० ६ ।१ धन्वी)। ८. शिर: पक्षौ पुच्छ आत्मेति पञ्चविधं (पक्षिरूपं) होतु: पृष्टस्तोत्रं महाव्रताख्यं महाव्रतमुच्यते (तु०—तां० ब्रा० सा० ५ ।१ ।१)। ९. महाव्रतस्तोत्रं पञ्चविधम्। अत्राध्वर्यु: शिरसोद्गायेत्, मैत्रावरुणो दक्षिणेन पक्षेण, ब्राह्मणाच्छंस्युत्तरेण, गृहपति: पुच्छेन, उद्गाताऽऽत्मना। एवमध्वर्युप्रभृतयो युगपदुद्गातारो भवन्ति (तु०—तां० ब्रा० सा० ५ ।५ ।१)। १०. महाव्रतमिति कर्मणो नामधेयम्। दशममहर्निरवशेषमुक्त्वा तदनन्तरं महाव्रतमाम्नातम् (तु०—ला०श्रौ० ३ ।९ ।१ अग्निस्वामी)। ११. महाव्रतं द्विविधं साग्निचित्यं निरग्नि चित्यं च। पुन: त्रिविधं महाव्रताख्यं कर्म। १. एकाहरूपम्, २. महानाम्न्यवयवरूपम्—, सत्रावयवरूपं चेति (तु०—ऐ० आ० सा० ५ ।१ ।१)। अर्थात् ब्राह्मणे 'प्रजापति: प्रजा असृत' (तां० ब्रा० ४ ।१० ।१) इत्यादिना महाव्रताख्यमेकमहराम्नातम्। तच्च सत्रस्य (गवामयनस्य) उपान्त्यमह:। सत्रे समुत्पन्नस्य महाव्रतस्य वचनबलात् सत्राद् बहिरप्येकाहरूपेण अहीनगत्वेन च पृथक् प्रयोगो भवति। एकाहपक्षे स्वतन्त्र: सर्वजिदपरनामधेय एकाहो भवति। (तु० आ०क० ३ ।७ ।६ वदरराज:। तां० ब्रा० सा० १६ ।७)। अहीनत्वपक्षे तु पौण्डरीकनाम्न एकादशरात्रस्येदं दशममहर्भवति। तत्र सत्रे समुत्पन्नं महाव्रतं प्रकृति:। एकाहरूपमहीनरूपं च विकृति:। अत: सत्रगतस्य महाव्रतस्य प्राधान्येन प्रयोग इति विशेषोऽवगन्तव्य: (तु०—ऐ० आ० सा० ५ ।१ ।१)। द्र० महानाम्नीव्रत-, पौण्डरीकैकादशरात्र-। १३. महाव्रतस्य प्रकृति: ज्योतिष्टोम:। (द्र० मी०को० पृ० ३१३२। १४. महाव्रतशब्देन महाव्रतं, व्रतं चेति शब्दद्वयं व्यवह्रियते। क्रतु: स्तोत्रं च तदर्थ:। तत्र स्तोत्रं माध्यन्दिने होतु: पृष्ठस्तोत्रं व्रतसंज्ञकं पृष्ठं भवति। (तु०—आ०क० २ ।११ ।४-६ वरदराज:) इति विशेषोऽवगन्तव्य:।

**महाव्रतग्रहग्रहणभक्षण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतस्य...गवामयने महाव्रतसंज्ञकेऽहनि माध्यन्दिनसवने 'वि न इन्द्र वाचस्पतिं, विश्वकर्मन्' (मा०सं० ८ ।४४-४६) इति मन्त्रै: महाव्रतीयं ग्रहं गृह्णीयात् (का०श्रौ० १३ ।२ ।२३)। गृहीतस्य महाव्रतीयग्रहस्य द्वादशाहिकपृष्ठ्यषड हातिग्राह्यवद् विधिर्भवति (तु०—का०श्रौ० १२ ।३ ।२-५)। अस्य ग्रहस्य माहेन्द्रग्रहमनु होमो भवति। भक्षणं त्वस्य 'उप मा यन्तु मञ्जय: सनीडा उपमा जक्षुरूप मा मनीषा प्रियामहं तन्वं पश्यमानो मयि रसो देवानां तेजसे ब्रह्मवर्चसाय' इति मन्त्रेण यजमानै: सह कर्तव्यम् (तु०— का० श्रौ० १२ ।२। २४ विद्याधर:)।

**महाव्रते बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ संवत्सरसत्रप्रकरणे गवामयने महाव्रतेऽहनि प्रात: सवने बहिष्पवमानस्तोत्रस्य तृचा:—'उपास्मै गायता नर: (साम० ६५१-५३) इति प्रथमस्तृच:। 'उपोषु जातमप्तुरं (साम० १३३५-३७)

इति द्वितीय:। 'पवस्य वाच अभिय:' (साम० ७७५-७७) इति तृतीय:। पवस्वेन्दो वृषा' (साम० ७७८-८०) इति चतुर्थ:। दविद्युतया' (साम० ६५४-५६) इति पञ्चम:। 'ते असृग्रमिन्दव:' (साम० ८३०-३२) इति षष्ठ:। 'यवं यवं नो अन्धसा' (साम० ९७५-७८) इति सप्तम:। 'पवमानस्य ते' (साम० ६५७-५९) इति अष्टमस्तृच:। इत्यष्टौ तृचा: बहिष्पवमानस्य स्तोत्रीयास्तृचा:। साम-प्राकृतं गायत्रम् (१)। स्तोम:—पञ्चविंशस्तोम:। विष्टुति:—द्र० पञ्चविंशस्तोमविष्टुति-(तु०— आ०क० २।११।१)। इति बहिष्पवमानस्तोत्रम्।

**महाव्रते आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र...गवामयने महाव्रतेऽहनि प्रात: सवने आज्यस्तोत्राणां तृचा:— ('होता देवो अगर्त्य:' (साम० १४७७-७९), 'ता न: शक्तं पार्थिवस्य' (साम० १४६५-६७), सुरूपकृत्नु भूतये (साम० १०८७-९९), आ सुते सिञ्चत प्रियम् (साम० १४८०-८२)। इति चत्वार: स्तोत्रीयास्तृचा: क्रमेण होतृमैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां चतुर्णामाज्यस्तोत्राणां ऋचा:। स्तोम: पञ्चविंशस्तोम:। अस्मिन्नहनि सर्वेषां स्तोत्राणां पञ्चविंश स्तोम: इति वचनात्। साम-आज्यस्तोत्र- तृचस्तोत्रीयासु गातव्यं गायत्रं साम (तु०—तां० ब्रा० सां० ११।७) आ०क २।११।२)। विष्टुति:—द्र० पञ्चविंशस्तोमविष्टुति:, इत्याज्यस्तोत्राणि।

**महाव्रते प्रात:सवने होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽह्नि प्रात: सवने होतुर्यदाज्यशस्त्रम् ऋतुग्रहभक्षणादूर्ध्वं निवित्पदान्युच्चार्य शंसनीयं भवति। तद् विषुवन्नामकादेकाहादस्मिन् महाव्रतेऽतिदिशेत्। स च विजिदाख्य एकाहोऽग्निष्टोमस्य विकृति:। अग्निष्टोमे प्रकृतौ ह्यतुग्रहभक्षणादूर्ध्वं होता निवित्पदानुच्चार्य 'प्र वो देवाय (ऋ० ३।१३) इति सूक्तादिकमाज्यशस्त्रं शंसेत् (तु०—आ०श्रौ० ५।९।१५) इह महाव्रते तु विषुवत एकाहादतिदेशविशेषविधानात्, 'अग्निं नर: (ऋ० ७।१।१-२५) इति पञ्चविंशत्यृचमाज्यशस्त्रसूक्तं विहितम्। तदुक्तम्- (आज्यप्रउगे विश्वजित: (तु०— ऐ० आ० सा० १।१।१-२;५।१।१)। तत्र केचन महाव्रते प्राकृतवैकृते द्वे अपि आज्ये कर्तुमिच्छन्ति किन्तु विशेषविधानाद् वैकृतमेकमाज्यं कुर्यादिति विशेषोऽवधेय: (तु०—तत्रैव सा०मा०) अग्निष्टोमे होतुराज्यशस्त्र—द्र०।

**महाव्रते प्रात:सवने होतु: प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽह्नि प्रात: सवने होतुर्यत् प्रउगशस्त्रं तद् वैश्वदेवग्रहणादूर्ध्वं 'वायुरग्रे गा' इत्यादिकं प्राकृतं होता शंसेत्। तदुक्तम्— 'वायुरग्रे गा यज्ञ प्रीरिति सप्तानां पुरोरुचां तस्यास्तस्या उपरिष्टात् तृचं तृचं शंसेत्, वायवायाहि दर्शतेति सप्त तृचा: द्वितीयां प्रउगे त्रि: (आ० श्रौ० ५।१०।४-६, ऐ० आ० सा० ५।१।१) इति। तत्र वैश्वदेवग्रहणात् ऊर्ध्वं होत्रा शंसनीयं प्रउगनामकं यच्छस्त्रं तद्विषये छन्दो विशेषमाश्रित्य नाना शाखानुसारेण सर्वे पक्षा: संभाविता: सन्ति। गायत्री उष्णिक् अनुष्टुप् बृहती पङ्क्ति: त्रिष्टुप् जगती चेति छन्दांसि। तत्र गायत्रं प्रउगं कुर्यात्, औष्णिहं प्रउगं कुर्यात्, आनुष्टुभं प्रउगं कुर्यात्, बार्हतं प्रउगं कुर्यात्, पाङ्क्तप्रउगं कुर्यात्, त्रैष्टुभं प्रउगं कुर्यात्, जागतं प्रउगं कुर्यात् इत्याहु:। तान्येतानि

छन्दोविशेषात् प्रउगशस्त्राणि तत्र तत्र द्रष्टव्यानीति विशेषोऽवधेयः।(तु०—ऐ० आ० सा० १।१।३)।

**महाव्रते प्रातःसवने मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते प्रातःसवने मैत्रावरुणस्य आ नो मित्रावरुणा (ऋ० ३।६२।१६) इत्यादिकमाग्निष्टोमिकमपोद्य चतुर्विंशोक्तम् 'ता नः शक्तं पार्थिवम्' इत्यादिकं शस्त्रं भवति। तदुक्तम्-होत्राश्चतुर्विंशात् (तु०— ऐ० आ० सा० ५।१।१)। अन्यत्र ऐकाहिकं होत्रकाणां सर्वत्र सात्रिकमेवेति (आ०श्रौ० ८।५।९ नारायणः)।

**महाव्रते प्रातःसवने ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते ब्राह्मणाच्छंसिनः 'आयाहि सुषमा हिते (ऋ० ८।१७।१) इत्यादिकमाग्निष्टोमिकमपोद्य चतुर्विंशोक्तम् 'सुरूपकृत्नम्-तये (ऋ० १।४।१) इत्यादिकं शस्त्रं भवति। तदुक्तम्—होत्राश्चतुर्विंशात्(ऐ० आ० सा० ५।१।१)। तत्र 'सुरूप कृत्नमूतये' इति पठित्वा पश्चात् ईङ्खयन्तीः (ऋ० १०।१५३।१ ) इत्यादिकं पंचर्चमावपेत (तु०— तत्रैव) इति विशेषोऽवधेयः।

**महाव्रते प्रातःसवनेऽच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे अच्छावाकस्य 'इन्द्राग्नी आगतम् (ऋ० ३।१२।१) इत्यादिकमाग्निष्टोमिकमपोद्य चतुर्विंशोक्तमपोद्य 'आ सुते सिञ्चत श्रियम् (ऋ० ८।७२।१३) इत्यादिकं शस्त्रं भवति। तदुक्तम्—होत्राश्चतुर्विंशात्(ऐ० आ० सा० ५।१।१)।

**महाव्रते माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत... गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रीयास्तृचाः—'अस्य प्रत्नामनुद्युतम्' (साम० ७५५-५७) इति प्रथमस्तृचः। 'परीतो षिञ्चता सुतम्' (साम० १३१३-१५) इति द्वितीयस्तृचः। 'अयं सोमः' (साम० १४७१-७३) इति तृतीयस्तृचः। सामानि—तत्र प्रथमे तृचे गायत्रं, आमहीयं, जराबो धीयं, सत्रासाहीयं चेति चत्वारि सामानि। द्वितीये तृचे समन्तं, दैर्घतमसं, रौरवं, यौधाजयं चेति चत्वारि सामानि। तृतीये तृचे पार्थमिकं साम। स्तोमः—पञ्चविंशस्तोमः। विष्टुतिः—द्र० पञ्चविंशस्तोमविष्टुति-। इति माध्यन्दिनपवमानस्तोत्रम्।(तु०— आ०क० २।११।३)।

**महाव्रते माध्यन्दिनसवने पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रेषु व्रतसंज्ञं (महार्व्रताख्यं) होतुः पृष्ठं 'शिरः पक्षौ पुच्छमात्मेति' पञ्चविधमाख्यायते। तस्य स्तोत्रीयास्तृचाः—'इन्द्रमिद्गाथिनः' (साम० ७९६-९८) इति प्रथमस्तृचः। 'इन्द्रो दधीचो अस्थिभिः' (साम० ९१३-१५) इति द्वितीयस्तृचः। 'उद्धेदभि श्रुतमद्यम्' (साम० ८००-८०२) इति तृतीयस्तृचः। 'त्वामिद्धि हवामहे' (साम० ८०९-१०) इति पञ्चमः प्रगाथ तृचः। 'इमानुकं भुवना' (साम० १११०-१२) इति षष्ठस्तृचः। 'तदिदास भुवनेषु ज्येष्ठम्' (साम० १४८३-८५) इति सप्तमस्तृचः। इति सप्त तृचाः। सामानि—प्रथमे तृचत्रये शिरोभागे गायत्रं साम भवति।चतुर्थे तृचे दक्षिणपक्षभागे रथन्तरं साम, पञ्चमे तृचे उत्तरपक्षभागे बृहत् साम, षष्ठे तृचे पुच्छभागे भद्रं साम, सप्तमे तृचे आत्मभागे राजनं साम। स्तोमाः—महाव्रतस्याह्नः सर्वेषु स्तोत्रेषु पञ्चविंशस्तोमः कार्य

इत्युक्तं तथाप्यस्मिन् होतुः पृष्ठस्तोत्रे आत्मैव पञ्चविंशः स्तोमः, शिरः प्रभृतिषु स्तोमान्तरं विहितम्। तद्यथा त्रिभिस्तृचैर्वर्तत इति त्रिवृत् स्तोमः प्राणिनां शिरः लोम-त्वक्-अस्थि भेदेन त्रिवृद्ध्येव। अर्थतः शिरसः त्रिवृतः त्रिवृत् स्तोमो युक्तः। दक्षिणपक्षतया पञ्चस्तोमं रथन्तरं कार्यम्, उत्तरपक्षत्वेन सप्तदशस्तोमं वृहत् कार्यम्। पुच्छत्वेन यज्ञायज्ञीयं पुच्छं एकविंशस्तोमं कार्यम्। भद्रमेकविंशं पुच्छमिति आर्षेयकल्पः। भद्रं साम पुच्छतया कार्यम् (तां० ब्रा० सा०)। 'इन्द्रं नरो नेमाधिता' (साम० ३१८) इत्यस्यामुत्पन्नं राजनाख्यं साम 'तदिदास भुवने (साम० १४८३-८५) इति तृचे अस्य आत्मत्वेन कार्यम्। स्तोमस्तु पञ्चविंशत एव। विष्टुतिः-पञ्चविंशस्तोमविष्टुतिः, त्रिवृदादिस्तोम विष्टुतयश्च द्रष्टव्याः। तु०—आ०क० २।११।६, तां० ब्रा० सा० ५।१।१-९)।

**महाव्रते माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोत्रभेद—** द्र० महाव्रत—।

**महाव्रते मा० सवने पृष्ठेषु होतुः पृष्ठस्तोत्रे परिमात्सामभिराहवनीयादिकोपस्थान—**

(औ०) सोमयज्ञेषु प्रकृतिभूत........गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रेषु होतुः पृष्ठस्तोत्रे १. उपाकृते महावेदेः पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रीयं महाचयनमुत्तरेण गत्वा अग्निचयनस्य पुरस्तात् प्रत्यङ्तिष्ठन्तः (त्रयोप्युद्गातारः) प्राणेन साम्ना आहवनीयमुपतिष्ठेरन्। तेनैव पथा प्रत्यावृज्य पुच्छस्य पश्चात् तिष्ठन्तोऽपानेन साम्ना पुच्छमुपतिष्ठेरन्। व्रतपक्षयोः (साम्नोः) पूर्वेण साम्ना दक्षिणं पक्षमुपतिष्ठेरन्, उत्तरेणोत्तरम्। (प्रत्यङ्मुखा एव प्रजापतेर्हृदयेन (साम्ना) अपि कक्षम्। वसिष्ठस्य निहवेन चात्वालमुपतिष्ठेरन्। चात्वालमुपस्थाय उत्तरेणाग्नीध्रीयं गत्वा तस्य पश्चात् प्राङ्मुखास्तिष्ठन्तोऽपि चात्वालस्थानस्था एव प्रत्यङ्मुखाः सत्रस्याद्र्ध्याग्नीध्रीयमुपतिष्ठेरन्। श्लोकेन साम्ना हविर्धाने उपतिष्ठेरन् पुरस्तात् प्रत्यङ्मुखः। अनुश्लोकेन च पश्चात् प्राङ्मुखाः। यामेन द्वन्द्वेष्वधीयमानेन मार्जालीयमुपतिष्ठेरन्। आयुर्णवस्तोमयोः पूर्वेण साम्ना (सदः) उपतिष्ठेरन् पुरस्तात् प्रत्यङ्मुखा एव उत्तरेण पश्चात् प्राङ्मुखाः (सद एव) उपतिष्ठेरन्। अन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तः ऋश्येन साम्ना गार्हपत्यमुपतिष्ठेरन्। तस्यैव पश्चात् प्राङ्मुखा वा। तत्र गार्हपत्यः = शालामुखीयः। इति प्राणादि परिमात्साभिराहवनीयादिकोपस्थानमुच्यते (तु०—आ०क० २।११।६ वरदराजः)।

२. पक्षिरूपस्य शिरः पक्षौ पुच्छमात्मेति, स्वरूपस्य होतुः पृष्ठस्य महाव्रतस्य उपाकरणानन्तरं लोमनखस्थानीयैर्विधास्यमानैः परिमात्संज्ञकैः प्राणादिसामभिराहवनीयादिकोपस्थानं विहितम्। तत्र प्राणेन साम्ना पूर्वस्यां दिश्यवस्थायाहवनीयमुपतिष्ठन्ते। अर्थात् सदसो निर्गत्य दक्षिणेनाहवनीयं गत्वा चित्याग्निमुत्तरेण आहवनीयस्य पूर्वभागं प्राप्योपतिष्ठन्ते। यथैतं प्रत्यावृज्य पश्चादवस्थाय अपानेन साम्ना चित्याग्नेः पुच्छमुपतिष्ठेरन्। व्रतपक्षयोः पूर्वेण व्रतपक्षेण दक्षिणं पक्षमुत्तरेणोत्तरं चोपतिष्ठेरन्। प्रजापतेर्हृदयेन अपिकक्षं (पक्षमूलमुत्तरं) उपत्तिष्ठेरन्। वसिष्ठस्य निहवेन साम्ना चात्वालमुपतिष्ठेरन्। सत्रस्यार्धिसाम्नाऽऽग्नीध्रं (आग्नीध्रमण्डपस्थमग्निम्) उपतिष्ठेरन्। श्लोकानुश्लोकयोः पूर्वेण श्लोकेन साम्ना हविर्धानयोः पुरस्तात् प्रत्यङ्मुखाः स्थिताः हविर्धाने उपतिष्ठेरन्, हविर्धानयोः

पश्चात् स्थित्वा अनुश्लोकेन साम्ना हविर्धाने एवोपतिष्ठेरन्। यामेन साम्ना मार्जालीयं धिष्ण्यमुपतिष्ठेरन्। वेदेर्दक्षिणभागे हि मार्जालीयं भवति। आयुर्णवस्तोमयोः पूर्वेणायुः साम्ना सदसः पुरस्तात्। स्थित्वा सद उपतिष्ठेरन्, उत्तरेण नवस्तोमेन साम्ना सदसः पश्चात् स्थित्वा सद उपतिष्ठेरन्। ऋश्येन साम्ना गार्हपत्यं = शालामुखीयमुपतिष्ठेरन्। (तु०— तां० सा० ५।४।१-१३) द्र० परिमात्सामन्—।

**महाव्रते माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोत्रोद्गान—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि मा. सवने पृष्ठस्तोत्रेषु होतुः पृष्ठस्तोत्रं 'अध्वर्युः शिरसोद्गायति, मैत्रावरुणोः दक्षिणेन पक्षेण, ब्राह्मणाच्छंस्युत्तरेण पक्षेण, गृहपतिः, पुच्छेन, उद्गाता आत्मना' इति पक्षिरूपं पञ्चविधं भवति (तु०— तां० ब्रा० सा० ५।५।१)। तत्र शिरस्त्वेन परिकल्पितेन त्रिवृता स्तोमेन गायत्रेण साम्ना अध्वर्युः शिरसोद्गायेत्। दक्षिणपक्षत्वेन परिकल्पितेन रथन्तरसाम्ना पञ्चदशस्तोमेन मैत्रावरुणो दक्षिणेन पक्षेणोद्गायेत्। उत्तरपक्षत्वेन परिकल्पितेन सप्तदशस्तोमेन बृहत्साम्ना ब्राह्मणाच्छंस्युद्गायेत्। पुच्छत्वेन भद्रेण यज्ञायज्ञीयेन वेति विकल्पितेन एकविंशस्तोमेन गृहपतिः (यजमानः) उद्गायेत्। आत्मत्वेन परिकल्पितेन राजनसाम्ना (पञ्चविंशेन स्तोमेन) उद्गातोद्गायेत्। आत्मा = मध्यभागः। इत्यर्थोऽवगन्तव्यः। (तु०—तां० ब्रा० सा० ५।६।१-२)। अयमध्वर्य्वादीनां पञ्चानां सहोपक्रम्य युगपद्गानात्मक एकः पक्षः। तदुक्तम्-'सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्' इति। उद्गातैव कृत्स्नस्तोत्रमुद्गायेदित्यपरः पक्षः (तु०— तत्रैव तां० ब्रा० सा०)। २. अग्न्युपस्थानं (चित्याग्न्युपस्थानं) कृत्वा अध्वर्य्वादयः सर्वे) हविर्धानस्य पूर्वया द्वारा प्रपद्य हविर्धानमध्ये सोमपात्राणामुत्तरतः 'इन्द्रमिद्गाथिनो बृहत्, इन्द्रो दधीचो अस्थिभिः, उद्वेदभिश्रुतामघम्' इति गायत्रेण साम्नाऽनिरुक्तेन त्रिवृत्स्तोमेन स्तुवीरन्। एवं हविर्धाने शिरसा स्तुत्वा संरब्धाः प्रत्यञ्च एयुरपरया द्वारा। ते दक्षिणेन मार्जालीयधिष्ण्यं परीत्य पश्चान्मैत्रावरुणधिष्ण्यस्योपविश्य रथन्तरेण साम्ना पञ्चदशस्तोमेन स्तुवीरन्। उदञ्चः सर्पेयुर्जघनेन होतुर्धिष्ण्यं पश्चाद् ब्राह्मणाच्छंसिनोधिष्ण्यस्योपविश्य बृहत्साम्ना सप्तदशस्तोमेन स्तुवीरन्। ते येनैव प्रसर्पेयुस्तेन पुनः निःसृत्य हविर्धानस्य पूर्वया द्वारा निष्क्रम्योत्तरेणाग्नीध्रीयं परीत्य पश्चाद् गार्हपत्यस्योपविश्य पुच्छेन भद्रेण साम्ना एकविंशस्तोमेन स्तुवीरन्। ते येनैव निःसर्पेयुः तेन पुनः प्रसृप्योत्तरेणाग्नीध्रीयं परीत्य हविर्धानस्य पूर्वया द्वारा प्रपद्य संरब्धाः प्रत्यञ्च एयुः। ते दक्षिणेन धिष्ण्यान् परीत्य पश्चान्मैत्रावरुणस्य धिष्ण्यं गत्वा यथायातमुपविशेयुरिति। तु०— आ०क० २।११।६ वरदराजः)।

**महाव्रते माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोत्रोद्गानकाले ऋत्विजामुपवेशन—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ संवत्सरसत्रप्रकरणे गवामयने महाव्रतेऽहनि मा० सवने पृष्ठस्तोत्रेषु होतुः पृष्ठस्तोत्रोद्गानकाले होत्रध्वर्यूद्गातृभिन्नाः सर्वे ऋत्विजो वृसीषूपविशन्ति। तत्र होता प्रेङ्खे (दोलायाम्) उपविशति। अध्वर्युः फलके उपविष्टः सन् महदुक्थशंसनकाले (निष्केवल्यशस्त्रं) प्रतिगृणाति। उद्गाता आसन्द्यां महाव्रतस्तोत्रस्तवनाय (होतुः पृष्ठस्तोत्रोद्गानाय)

उपविशति। इदमृत्विजामुपवेशनमुच्यते। तत्र दर्भमयाः कूर्चा आसनविशेषाः प्रादेशमात्रा वृसीशब्देनोच्यन्ते। औदुम्बरोऽरत्निमात्रो (आप०श्रौ० २१।१७। १४) बाहुमात्रो वा (शां०श्रौ०) औदुम्बर्या सन्दीवत् पादयुक्तः फलकः। प्रादेशमात्रपादा औदुम्बरी अरत्निमात्राङ्गी मुञ्जरज्ज्वा सोमासन्दीवद् व्युताऽऽसन्दी भवति (तु०— का०श्रौ० १३।३।१-५)। इत्यर्थोऽवगन्तव्यः।

**महाव्रते माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोत्रोद्गानपदार्थ—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत...गवामयने होतुः पृष्ठस्तोत्रोद्गानसंबन्धिनः केचन पदार्थाः—१. अभिगरप्रतिगरौ २. वेश्याब्रह्मचारिणोः परस्परनिन्दनम् ३. शूद्रत्रैवर्णिकयोर्वंशाचर्माकर्षणम् ४. बहिर्वेदिमिथुनं (सुरतकरणम्) ५. क्षत्रियसंनाहे कवचपरिधानम् ६. रथारोहणं वशाचर्मवेधनं च ७. दुन्दुभिवादननिष्पादने, ८. पत्नीकर्तृके वीणावादनगाने ९. दासीनां परिगमनम् १०. दासीभिः मार्जालीये कलशानां स्थापनम्। इत्यभिगरप्रतिगरादयः केचन विशेषपदार्था होतुर्व्रताख्ये पृष्ठस्तोत्रे गीयमानेऽनुष्ठीयन्ते। (तु०— ता० ब्रा० सा० ५।६।१३-१९ आ०क० २।१।६ वरदराजः, का०श्रौ० १३।३।६-२८।४ १२ विद्याधरः)।

**महाव्रते माध्यन्दिनसवने पृष्ठेषु होतुः पृष्ठस्तोत्रोपाकरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...गवामयने महाव्रतेऽहनि मा० सवने होतुः पृष्ठस्तोत्रस्य शततन्तुना औदुम्बरेण वाणेनोपाकरणं कर्तव्यम्। तत्र १. वाणो महावीणा (तु०—तां० ब्रा० सा० ५।६।१२)। अत्र वाणे उभयो दश दश छिद्राणि भवन्ति। तत्रैकैस्मिन् दश दश तन्तवः प्रतिमुच्यन्ते। मौञ्जास्तन्तवः। वीणावादनसाधनं काष्ठं वैतसं वेतसवृक्षसंबन्धि भवति (तु०—का०श्रौ० १३।२। २५-२७ टि. विद्याधरः)। २. वाणं तन्त्रीभिः संयोज्य वादयन्ति। शततन्त्रीको भवति (तु०—तां० ब्रा० सा० ५।६।१२-१३)। ३. यथा लोके काण्डवीणा द्वित्रादितन्तुयुक्ता तथा विस्तृतफलकसंपादिता शततन्तुबन्धनपर्याप्ता महती वीणा वाणशब्देनोच्यते (तु०— ऐ० आ० सा० ५।१।४)। इति विशेषोऽवगन्तव्यः। महाव्रते माध्यन्दिनसवने पृष्ठस्तोत्र-इतिप्रभृति एतावत् पर्यन्तं होतुः पृष्ठस्य व्यापारः।

**महाव्रते माध्यन्दिनसवने होतुः पृष्ठस्तोत्रादन्यहोत्रकपृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि मा० सवने होतुः पृष्ठस्य महाव्रतस्तोत्र तृचेभ्योरनन्तरं होत्रकपृष्ठतृचाः—मैत्रावरुणस्य चोदकप्राप्तः 'कयानश्चित्रः' (साम० ६८२-८४) इति प्रथमस्तृचः। ब्राह्मणाच्छंसिनः 'त्रिकद्रुकेषु महिषो यवशिरम्' (साम० १४८६-८८) इत्यतिच्छन्दास्तृचो द्वितीयः। अच्छावाकस्य 'तरोभिर्वो विदद्वसुः' (साम० ६८७-८ इति प्रगाथतृचस्तृतीयः। सामानि-प्रथमे तृचे वामदेव्यम्। (द्वितीये तृचे 'कयानश्चित्रः' इत्यस्यामुत्पन्नं 'इह प्रजा रायस्पोषाय आगन्माम इदं वामं चराचराय' इत्यादिभिः पञ्चभिर्निधनैरुपेतं ब्रह्म साम। तृतीये तृचे स्वासु कालेयम्। स्तोमः-पञ्चविंशस्तोमः। विष्टुतिः— द्र० पञ्चविंशस्तोमविष्टुति—। (तु०— तां० ब्रा० सा० ५।२।८-११ आ०क० २।६।११ वरदराजः 'अत्र आसीना वामदेव्यादिभिः स्तुवीरन्' इति विशेषोऽवधेयः।

**महाव्रते माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने त्रिषु मरुत्वतीयग्रहेषु मध्ये तृतीयस्य होमात् पूर्वं पठनीयं मरुत्वतीयं शस्त्रं, तत् यत् मूलप्रकृतौ (अग्निष्टोमे ।) 'आ त्वा रथम्' (ऋ० ८ ।६८ ।१) इत्यादिकं तस्य विश्वजित्पतिदिष्टस्य (तु०— 'चतुर्विंशेन माध्यन्दिनः '(आ०श्रौ० ८ ।७ ।२) सन्त्यन्ये विशेषाः, तैर्विशेषैः सह तन्मरुत्वतीयं महाव्रतेऽति देष्टव्यम् । तस्यादिष्टस्य मरुत्वतीयस्य चतुर्विंशत् पुनरपि 'अमत्सु' इत्यादिः विस्तारो भवति । तदुक्तम्—'चतुर्विंशान्मरुत्वतीयस्यऽऽतानोऽमत्सु मे...वृषभोरणाय' इति (तु०— ऐ० आ० सा० ५ ।१ ।१) । तद्यथा— शस्त्रस्य प्रतिपत्तृचः—'आ त्वा रथम्' (ऋ० ८ ।६८ ।१-३) । अनुरूपतृचः—'इदं वसो सुतम्' (ऋ० ८ ।२ ।१-३) । इन्द्रनिहवप्रगाथः—'इन्द्र नेदीयः' (ऋ० ८ ।५३ ।५-६) । 'त्रयो ब्राह्मणस्पत्यप्रगाथाः' ।— प्रैतु ब्रह्मणस्पतिः (ऋ० १ ।४० । ३-४) (१) 'उत्तिष्ठ ब्रह्मणस्पते' (ऋ० १ ।४० ।१-२) । (३) 'प्र नूनं ब्रह्मणस्पतिः' (ऋ० १ ।४० ।५-६) । तिस्रो धाय्याः—(१) अग्निर्नेता (ऋ० ३ ।२१ ।४) (२) त्वं सोम' (ऋ० १ ।९१ ।१) (३) पिबन्त्यपः (ऋ० १ ।६४ ।६) त्रयो मरुत्वतीयप्रगाथाः—(१) 'प्र व इन्द्राय' (ऋ० ८ ।८९ ।३-४), (२) 'वृहदिन्द्राय' (ऋ० ८ ।८९ ।१-२), (३) 'न किः सुदासः' (ऋ० ७ ।३२ ।१०-११) । पञ्च निविद्धानीयसूक्तानि— (१) 'अमन्सु मे' (ऋ० १० ।२ ।७ ।१-२४, (२) 'पिबा सोमम्' (ऋ० ६ ।१७ ।१-१५); (३) 'कया शुभा' ऋ० १ ।१६५ ।१-१५), (४) मरुत्वा इन्द्र' (ऋ० ३ ।४७ ।१-५ (५) 'जनिष्ठा उग्रः' (ऋ० १० ।७३ ।१-११) । अत्र अग्निष्टोम चतुर्विंशमरुत्वतीयात् त्रीणि सूक्तान्यधिकानीति आतानः विस्तारः (तु०—ऐ० आ० सा० १ ।२ ।१-२;५ ।१ ।१) । (शस्त्रस्य त्रिः प्रथमा त्रिरुत्तमा । द्र० चतुर्विंशे होतुर्मरुत्वतीयशस्त्र— ।

**महाव्रते माध्यन्दिनसवने निष्क्रमणहोम—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने मरुत्वतीयशस्त्रशंसनानन्तरं विसंस्थितसंचरेण मार्गेण निष्केवल्यशस्त्रशंसनार्थं निष्क्रम्योदङ्मुखो गत्वा होताऽऽग्नीध्रीये धिष्ण्ये 'अनुमामिन्द्र..., आदित्यामा विश्वे..., पितरो मा विश्वम्... । इति त्रिभिर्मन्त्रैः तिस्र आज्याहुतीरौन्दुम्बरेण स्रुवेण जुहोतीति होतृकर्तृको निष्क्रमण होम उच्यते (तु०—ऐ० आ० सा० ५ ।१ ।१) । द्र० विसंस्थितसंचरमार्ग— ।

**महाव्रते मा० सवने मार्जालीयहोम** (हौ०)— सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनार्थं निष्क्रमणहोमानन्तरं सदोहविर्धानयोर्मध्ये योऽयं दक्षिणोत्तरायतः संचरस्तस्य दक्षिणे भागे मार्जालीयनामको धिष्ण्यो वर्तते तस्मिन् मार्जालीये धिष्ण्ये होता दश संख्याका आज्याहुतीर्जुहुयात् । तत्र प्रयोगप्रकारः—उत्तमां दशमीमाहुतिमुद्दिश्य जुह्वां चतुर्गृहीतमाज्यं प्रथममवदाय तदाज्यविशिष्टां तां जुहूं मार्जालीयस्याग्नेरुत्तरभागे स्थापयित्वा दशमाहुतेः पूर्वभाविनीर्नवाहुतीर्मार्जालीये 'अग्निरिव भूयासम्... अन्तरिक्षमिव...भूयासम् । सूर्य इव...भूयासम् । मन इव...भूयासम् । अहिरिव...भूयासम् । गा इव...भूयासम् । आप इव....भूयासम् । अन्नमिव...भूयासम् । ब्रह्मेव...भूयासम् । इत्येतैः स्वाहाकारान्तैर्न-

वभिर्मन्त्रैर्जुहुयात् । ततो दशमीमाहुतिं जुह्वां चतुर्गृहीतेनाज्येन 'यदग्न एषा' (ऋ० १० ।११ ।८) इत्यृचा स्वाहाकारान्तया जुहुयात् (तु०— ऐ० आ० सा० ५ ।१ ।१) इति मार्जालीयहोम उच्यते ।

**महाव्रते मा० सवने आदित्योपस्थान—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्र-शंसनार्थकमार्जालीयहोमानन्तरं मार्जालीयस्य समीपे तिष्ठन् प्राङ्मुखो होता यदा त्वादित्यः पश्चिमायां दिशि पर्यावृत्तस्तदा स्वयमपि प्रदक्षिणं पर्यावृत्य पश्चिमाभिमुखोमार्जालीहोममन्त्रैः 'अग्निरिवानाष्टृष्यः' इत्यादिभिर्दशभिः स्वाहाकाररहितैरादित्यमुपतिष्ठेत एह्येवा३ इदं मधू३ इदं मधु । इमं तीव्रसुतं पिबा३ इदं मधू३ इदंमधु इति मन्त्रान्तैरित्यादित्योपस्थानमुच्यते (तु०— ऐ० आ० सा० ५ ।१ ।१) ।

**महाव्रते मा० सवने दासीप्रैष—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनार्थादादित्योपस्थानादूर्ध्वं होता शिरसि गृहीतोदकपूर्णकुम्भास्त्र्यवमाः षडुत्तमा दासीः प्रेषयेत् । तद्यथा—हे दास्यः स्वस्वशिरस्यवस्थितानुदककुम्भान् वामहस्तैरवष्टभ्य दक्षिणैः पाणिभिः स्वकीयानूरूंस्ताडयन्त्य एह्येवा ३ इदं मधू ३ इदं मधु इति मन्त्रं पठन्त्यश्च मार्जालीयं धिष्ण्यं त्रिवारं प्रदक्षिणी कुरुत । एतावत्कृत्वा च तत ऊर्ध्वमध्वर्युणा सामगान् प्रति स्तोत्रेऽनुज्ञापिते सति स्वस्वकुम्भस्थितमुदकं त्रेधा विभज्य प्रथमं भागं दक्षिणे मार्जालीये द्वितीयं भागमुत्तरे मार्जालीये तत्रोभयत्रावशिष्टं तृतीयं भागं वेदिमध्ये सिञ्चतेति होतुर्दासीप्रैष उच्यते । (तु०—ऐ० आ० सा० ५ ।१ ।१-२) ।

**महाव्रते मा० सवने चित्याग्नेरवयवोपस्थान—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रे शंसनार्थदासीशंसनप्रैषादूर्ध्वमुत्तरवेदिस्थानीयस्य चित्याग्नेः शिरोदक्षिणा पक्षउत्तरपक्ष-पुच्छाऽऽत्मसंज्ञकान् पञ्चावयवान् होतोपतिष्ठेत । तत्र होता मार्जालीयमग्निं प्रदक्षिणं कुर्वन् अग्निचित्यां दक्षिणेन गत्वा यूपस्य पूर्वभागे चित्याग्नेः पुरस्तात् स्वयं प्रत्यङ्मुखस्तिष्ठन् 'नमस्ते गायत्राय यत्ते शिरः' इति मन्त्रेण तस्याग्नेः शिरोभागमुपतिष्ठेत् । इति शिर उपस्थानम् (तु०—ऐ० आ० सा० ५ ।१ ।२) । ततो येन मार्गेण पूर्वस्यां दिशि गतस्तेनैव मार्गेण प्रति निवृत्य दक्षिणस्यां दिशि स्वयमुदङ्मुखस्तिष्ठन् 'नमस्ते राथन्तराय यस्ते दक्षिणः पक्षः' इति मन्त्रेण चित्याग्नेर्दक्षिणं पक्षमुपतिष्ठेत । ततः पश्चिमदिगवस्थितस्याग्निपुच्छस्य पश्चिमभागेन तत्पुच्छमंतिक्रम्योत्तरपक्षस्य पश्चिमायां दिशि प्राङ्मुखोऽवस्थायोत्तरं पक्षं 'नमस्ते बृहते यस्त उत्तरः पक्षः' इति मन्त्रेणोपतिष्ठेत । ततश्चित्याग्नेः पश्चिमदिशि प्राङ्मुखोऽवस्थाय 'नमस्ते भद्राय यत्ते पुच्छं या ते प्रतिष्ठा' इति मन्त्रेण पुच्छमुपतिष्ठेत । ततः पुच्छस्य दक्षिणभागे प्राङ्मुखः स्थित्वा 'नमस्ते राजनाय यस्त आत्मा' इति मन्त्रेणाऽऽत्मानं (मध्यदेहम्) उपतिष्ठेत । तदिदं महाव्रते चित्याग्नेरवयवानामुपस्थानमुच्यते (तु०— ऐ० आ० सा० ५ ।१२) ।

**महाव्रते मा० सवने प्रेङ्खोपक्लृप्ति—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... गवामयने महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रे होतुः सदः प्रवेशात् पूर्वस्मिन् काले महदुक्थ (निष्के-

वल्य) शस्त्रशंसनाय होतुरुपवेशनार्थमध्वर्युभिः प्रेङ्खः सम्पाद्यते। १. स औदुम्बरोऽरत्निमात्रो बाहुमात्रो वा भवति (तु०— का०श्रौ० १३ ।३ ।२ विद्याधरः)। २. प्रकर्षेण २. वायुवदन्तरिक्षे पवते संचरति प्रकर्षेण प्रेङ्खते चलत इति व्युत्पत्त्या प्रेङ्खनाम सम्पन्नम् प्रेङ्खशब्देन दोलाऽभिधीयते। (तु०— ऐ० आ० सा० १ ।२ ।३; ५ ।१ ।३)। तस्य क्लृप्त्यै अध्वर्युः औदुम्बरी पालाशौ वा द्वौ स्तम्भौ, प्रदक्षिणावृत् (दक्षिणहस्तेन निर्मिता) दर्भमयी त्रैगुण्ययुक्ता पञ्चव्यामदीर्घा पलकबन्धनसमर्था दक्षिणरज्जुः, एवमेव सव्यावृत् (वामहस्तेन निर्मिता) दर्भमयी, त्रैगुण्ययुक्ता पञ्चव्यामदीर्घा फलकबन्धनसमर्था उत्तररज्जुः, औदुम्बराणि त्रीणि द्वे वा अधस्तादुपरिष्ट च सम्यक् लक्षणयुक्तानि फलकानि, स्तम्भयोरुपरि तिर्यगवस्थापनीय औदुम्बरः काष्ठविशेषो वीवधः, फलकसंधानहेतवः सूक्ष्माग्राः काष्ठविशेषाः फलकवत् तिस्रो द्वे वा सूच्यः इत्येतानि संपाद्य प्रक्षाल्य तीर्थमार्गेण नीत्वा आग्नीध्रीयधिष्ण्यवामभागे आनीय पूर्व द्वारेण सदः प्रवेश्य सदसो मध्ये सर्वान् धिष्ण्यान् वामभागे कृत्वा होत्रीयधिष्ण्यस्य पश्चाद् भागेऽवस्थापयेत्। ततः सूचीभिः कृतफलकसन्धानमिषुमात्रं (प्राङ्पश्चिमविस्तारं तिर्यक्दक्षिणविस्तारं) उदगग्रं दक्षिणमूलं प्रेङ्खं स्थापयित्वा होतृषदनस्य दक्षिणोत्तरयोः स्तम्भद्वयं निखनेत्। ततः स्तम्भयोरुपरि चतुरत्निमात्रं यजमानस्योत्थितस्य मुखसंमितं वीवधनामकं (तिर्यक्काष्ठं) स्तम्भद्वयनिखातभागादूर्ध्वं यजमानमुखपरिमितयोः स्तम्भयोरग्रभागे स्थापयेत्। ततः पूर्वं स्थापितस्य प्रेङ्खस्य (फलकस्य) चतुर्षु कोणेषु छिद्राणि कुर्यात्। दक्षिणच्छिद्रद्वयो रज्ज्वा द्विगुणीकृताया एकस्या अग्रद्वयं स्यूत्वा तां रज्जुमूर्ध्वमुन्नमयेत्। दक्षिणोत्तरे रज्जू पञ्चव्यामदीर्घे कृत्वा द्विगुणं यथा भवति बध्नीयात्। तत पञ्चव्यामा रज्जुर्द्विगुणीकृता सार्धद्वियामा भवति। तस्याश्च मध्यभागे बाणमात्रं फलकस्याधस्तावदुपक्षेपणीयम्। अवशिष्टोंऽशश्छिद्रद्वयादूर्ध्वमुन्नीत उपरितने वीवधे तदग्रमेकैकं त्रिः प्रदक्षणीकृत्याग्रद्वयेनोर्ध्वग्रन्थिः सहसा[1] मोचयितुं शक्यो निष्टर्क्यः कर्तव्यः। स्तम्भयोर्दाढ्यर्थं स्तम्भमूलस्य परितस्तस्मिन् पांसून् प्रक्षिप्य फलकभूम्योर्मध्ये विभूमे मुष्टिमात्रे (ऊर्ध्वाङ्गुष्ठयुक्ता मुष्टिस्तन्मात्रे) एवोर्ध्वदेशे चतुरङ्गुलोर्ध्वदेशे वा प्रेङ्खः स्यात्, भूमेरुपरि अरत्निमात्रव्यवधाने प्रेङ्खः कार्यः। यद्वा होतृधिण्यन्तस्य होतृधिष्ण्यस्य पश्चाद्भागे लम्बमानस्य फलकस्य (प्रेङ्खस्य) पादमात्रं व्यवधानं च स्यादिति। सेयं महाव्रतेऽध्वर्युभिः सम्पादिता प्रेङ्खस्योपक्लृप्तिरुच्यते (तु०— ऐ० आ०सा० १ ।२ ।४; ५ ।१ ।३)।

**महाव्रते मा० सवने होतुर्वाणधारण—** (हौ०) सोमयज्ञेषु प्रकृतिभूत.....गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनकाले अध्वर्युभिरुपकृते प्रेङ्खकार्ये समाप्ते सति होता चित्याग्निप्रदेशादारभ्य सदः प्रविश्य पश्चादासीन औदुम्बरं शततन्तुं वाणमुभाभ्यां हस्ताभ्यामादायोत्तरपार्श्वे वीणावद् धारयेत्। इति होतुर्वाणधारणमुच्यते (ऐ० आ० सा० ५ ।१४)।

**महाव्रते मा० सवने होतुः प्रेङ्खचालन—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनकाले छन्दोगेभ्यो वाणदानादूर्ध्वं प्रेङ्खमारुरुक्षुर्होता प्रेङ्खस्यापरफलके 'भूतेभ्य-

स्त्वा' इति मन्त्रेण पाणिद्वयं प्रतिष्ठाप्य प्रेङ्खं त्रिविधं चालयेत्। तत्र 'प्राणमनुप्रेङ्खस्व' इति मन्त्रेण प्रेङ्खं पूर्वदिग्गामित्वेन चालयेत्। ततो 'व्यानमन्वीक्षस्व' इति मन्त्रेण स्वात्माभिमुख्येन चालयेत्। ततः 'भूर्भुवः स्वरिति व्याहृतिजपं कृत्वा पुनः प्राणाय त्वेति प्राञ्चम्, व्यानाय त्वेति तिर्यञ्चम्, अपानाय त्वेति त्रिविधं पूर्ववत् प्रतिदिशं चालयेतिति प्रेङ्खचालनमुच्यते। (ऐ० आ० सा० ५।१।४)।

**महाव्रते मा० सवने होतुः प्रेङ्ख समारोहणप्रकार**— (हौ०) सोमयज्ञेषु प्रकृतभूत... गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनकाले प्रेङ्खस्य चालनेन दार्ढ्यपरीक्षणादूर्ध्वं 'वसवस्त्वा गायत्रेण... इति मन्त्रेण पश्चार्धे फलके होता कूर्पराद्यग्रभागारत्निं स्थापयेत्। अथारत्निस्थापनान्तरमूर्ध्वाग्राभ्यां पाणिभ्यां पूर्वफलकम्, कूर्पराभ्यां पश्चिमफलकम्, छुबुकेन मध्यमफलकमभिमृशेत्। ततः फलकत्रयस्पर्शनादूर्ध्वं दक्षिणवामसक्थिभ्यां कृत्स्नशरीरेण च क्रमशः-'रुद्रास्त्वा त्रैष्टुभेनच्छन्दसाऽऽरोहन्तु तानन्वारोहमिति दक्षिणेन सक्थ्ना इति हरति (अधिरोहति)', 'आदित्यास्त्वा जागतेनच्छन्दसाऽऽरोहन्तु तानन्वारोहमिति वामेन सक्थ्ना 'विश्वे त्वा देवा आनुष्टुभेनच्छन्दसाऽऽरोहन्तु तानन्वारोहम्' इति कृत्स्नशरीरेण प्रेङ्खं समारोहेत्। तत्र अरत्निस्थापनादूर्ध्वमेकेन पादेन भूमिं स्पृष्ट्वैवारोहेदिति विशेषोऽवधेयः (तु०— ऐ० आ० सा० १।२।४; ५।१।४) भूमौ पादस्पर्शप्रकारस्तु स्वकीयधिष्ण्यस्य पश्चाद्भागे प्रथमं दक्षिणपादः प्रागग्रः स्थापनीयः। ततः सव्यः पादः स्थापनीयः। यदा दक्षिणस्य पादस्य श्रमः तदानीं सव्यं स्थापयेत्, यदा तु सव्यस्य श्रमस्तदा दक्षिणमित्येवं पर्यायेण तयोः स्थापनं कुर्यात्। न त्वेकदा द्वौ पादौ भूमिस्पर्शरहितौ (उत्पतितौ) कुर्यादिति। सोऽयं होतुः प्रेङ्खसमारोहणप्रकार उच्यते।

**महाव्रते मा० सवने सब्रह्महोत्रकाणां कूर्चसमारोहण**—(हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनकाले होतुः प्रेङ्खसमारोहणानन्तरं प्रशास्ता (मैत्रावरुणः) ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेति होत्रकाः ब्रह्मा च दर्भमयान् कूर्चान् (वृसीः) आरोहेयुः। उद्गाता तु औदुम्बरीमासन्दीमारोहेत् इति विशेषोऽवधेयः। (तु०— ऐ० आ० सा० १।२।४; ५।१।४७)

**महाव्रते मा० सवने होतुः प्रेङ्खादवरोहण**—(हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रस्य वषट्कारानुमन्त्रणादूर्ध्वमध्वर्युणा समाहृतं भक्षं ज्ञात्वा प्राङ्मुखो भूत्वा होता प्रेङ्खादवरोहे दितीदयं होतुः प्रेङ्खादवरोहणमुच्यते (तु०— ऐ० आ० सा० १।२।४; ५।३।२)।

**महाव्रते मा० सवने निष्केवल्यशस्त्रारम्भे जप**— (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रशंसनस्यादौ होतृकर्तृकात् प्रस्तोतृप्रैषवाक्यादूर्ध्वं (होता सुपर्णोऽसि गरुत्मान्...' इति मन्त्रम् (१)। घोषाय त्वा, श्लोकाय त्वा, शृण्वते त्वा, उपशृण्वते त्वा, आश्रुत्यै त्वा, आश्रुताय त्वा' इत्युक्थवीर्यम् (२)। 'सं प्राणो वाचा समहम्...' इति मन्त्रम् (३)। शस्त्रानुज्ञापनार्थम् 'अध्वर्यो शोंसावोम्' इत्याहूय ततो वागिति शब्दं च (४)। इति चतुर्मन्त्रान् जपेत्। इत्ययं जपो होतृक-

तृकनिष्केवल्यशस्त्रस्यादिजप उच्यते (तु०— ऐ० आ० सा० ५ ।१ ।५)।

**महाव्रते मा० सवने निष्केवल्यशस्त्रारम्भ—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने प्रकरणे माध्यन्दिनसवने निष्केवल्यशस्त्रं होता १. हिं इति हिंकारेण प्रतिपद्येत (आरभेत)। तु०— ऐ० आ०सा० १ ।३ ।१ । २. होता अप्रमत्तेन मनसा प्रथमं शस्त्रं पर्यालोच्य पश्चादप्रमत्तया वाचा प्रारभेत शंसेदित्यर्थः (ऐ० आ०सा० १ ।३ ।२)। ३. भूर्भुवः स्वरिति व्याहृतीः पुरस्ताज्जपेत् (ऐ० आ०सा० १ ।३ ।२)। ४. शस्त्रादौ अध्वर्यो शोंसावो३म्। ५. राजनसाम्ना क्रियमाणस्य स्तोत्रस्याधारभूतो यः 'तदिदास भुवनेषु (साम० ४८३-८५ ऋ० १० ।१२० ।१-३) इति तृचस्तेन होता निष्केवल्यशस्त्रं प्रारभेत तदिदासेत्येतदादिशस्त्रम् (५ ।१ ।६) इत्युक्तत्वात् (तु०—ऐ० आ०सा० १ ।३ । ४ ।५ ।१ ।५)। इत्येवं होता निष्केवल्यशस्त्रमारभते।

**महाव्रते मा० सवने निष्केवल्यशस्त्राहाव—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते माध्यन्दिनसवने निष्केवल्यशस्त्रस्य त्रय आहावाः। तत्र १. शस्त्रादौ 'अध्वर्यो शोंसावो३म्' इत्याहावः। तमुक्त्वा पश्चाच्छस्त्रोपक्रमं कुर्यात्। २. शस्त्रमध्ये 'इन्द्रो देव' इत्यादिपदसमूहस्य निविदः उपक्रमे 'शोंसावो३म्।' ३. शस्त्रपरिधानीयायाः (शस्त्रसमाप्तेरर्चः) उपक्रमे 'शोंसावो३म्' इति त्रय आहावा निष्केवल्याहावा उच्यन्ते। न तत्र प्रकृतिवदनुरूपधाय्यादिष्वाहावः पठनीयः। इति विशेषोऽवधेयः (तु०—ऐ० आ०सा० ५ ।१ ।५)।

**महाव्रते माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि माध्यन्दिनसवने १. होत्रा शंसनीयं 'तदिदास' (ऋ० १० ।१२०) इत्यादिकं नवर्चं सूक्तम्, 'तां सु मे कीर्ति मघवन् (ऋ० १० ।५४) इत्यादिकं षड् ऋचं सूक्तम्, भूय इद्वावृधे' (ऋ० ६ ।३०) इत्यादिकं पञ्चर्चं सूक्तम्, 'नृणामु त्वा' (ऋ० ३ ।५१ ।४-६) इत्यादिकास्तिस्र ऋचः। इति 'तदिदासेत्यादि शस्त्रं' निष्केवल्यशस्त्रं भवति। अर्थात् एताः सर्वा ऋचस्त्रयोविंशतिर्भवन्ति। तत्र प्रथमायाः त्रिरावृत्तौ सत्यां पञ्चविंशतिः संपद्यन्ते तच्छस्त्रं भवति। एतच्च सूक्तादौ यस्तृचः राजनसाम्नः स्तोत्रियः, तेन राजनस्तोत्रियेण प्रतिपद्यते उपक्रम्यते। तत्र राजनसाम्नः आधारभूतास्वृक्षु त्रयः पक्षाः संभवन्ति। 'तदिदास' इत्यादिका ऋच इत्येकः पक्षः। ताभ्योऽन्या ऋचः इत्येकः पक्षः। ताश्चान्या द्विधा भिद्यन्ते—उदाहृतेषु सूक्तेषु समाम्नाता असमाम्नाताश्चेति तत्र 'तदिदास' इत्यादिकासु राजनसामगानपक्षे पूर्वोक्तः एव शस्त्रोपक्रमः। यदा तु तदिदाशेत्यादिभ्योऽन्यासु यथोक्तसूक्तगतासु समाम्नासु ऋक्षु उद्गातारो राजनेन स्तुवीरन् तदानीं पूर्वोक्तन्यायेन राजनसामाधारभूताभिरन्याभिर्ऋग्भिः शस्त्रोपक्रमः प्रसज्येत। तथोपक्रमो न कर्तव्यः। किन्तु ता अन्याः समाधारभूता ऋचः स्वस्थान एव पठनीयाः। इमाः 'तदिदास' इत्यादिका इहैव शस्त्रोपक्रम एव पठनीयाः। यदि पुनरुद्गातारो यथोक्तसूक्तेष्वसमाम्नातासु कासुचिन्नवीनासु ऋक्षु राजनेन स्तुवीरन् तदानीं समाम्नातस्य सूक्तस्य मध्ये तावती नूतनानामृचां संख्यया संख्याताः काश्चिद् ऋचः उद्धृत्य तत्र तासामृचां स्थाने ता नवीना ऋचः शंसेत्। इमास्तु 'तदिदास' इत्यादिका इहैव शस्त्रोपक्रम एव। तदेवं यदि 'तदिदास'

इत्यादिषु राजनसामगानं, यदि वा ततोऽन्यासु समाम्नातासु, यदि वा नवीनासु सर्वथापि शस्त्रोपक्रम एकविध एव। इति विशेषोऽनुसंधेयः (तु०—ऐ० आ० सा० ५।१।६)। द्र० राजनसामस्तोत्रीया—।

२. होत्रा शंसनीयं महदुक्थं नाम पक्ष्याकारं निष्केवल्यशस्त्रं आत्मा, ग्रीवा, शिरः, पक्षमूलाख्याविजवः, दक्षिणः पक्षः, उत्तरः पक्षः, पुच्छम्, वशाख्यमुदरम्, ऊरू चेति नवभिरङ्गैरुपेतं भवति। यथा अत्रैव महाव्रते निष्केवल्यस्य शिरोदक्षिणः पक्षः उत्तरः पक्षः पुच्छम् आत्मा इति पञ्चावयवा आम्नाताः (ऐ० आ० २।३।४)। यथा च महाव्रते होतुः पृष्ठस्तोत्रस्य शिरः दक्षिणः पक्षः, उत्तरः पक्षः पुच्छम् आत्मेति पञ्चावयवा आम्नाता (तु०—तां० ब्रा० सा० ५।५।१) तथैव महाव्रते निष्केवल्यशस्त्रस्य नवावयवाः आम्नाताः। ते च पक्षिण इव तत्तदङ्गोपलक्षिता ऋग्रूपा ऋक्शंसनप्रकारविशेषा एवेति निष्केवल्यशस्त्रस्वरूपमवगन्तव्यम्। तदेवं पक्ष्याकारस्य निष्केवल्यशस्त्रस्यादौ १. शस्त्रादिजपः—(द्र० महाव्रते निष्केवल्यशस्त्रादिजप-)। २. तत आहावः- अध्वर्यो शोंसावो३म्। ३. ततो 'हिममिति' इति हिंकारः। ४. तत आत्मस्थानीया ऋचः—'तदिदास' (ऋ० १०।१२०।१८९) इति नव ऋचः, 'तां सु ते' (ऋ० १०।५१।१-६)। इति षड् ऋचः, 'भूय इद् वावृधे' (ऋ० ६।३०।१-५) इति पञ्च ऋचः, नृणामुत्वा' (ऋ० ३।५१।४-६) इतितिस्र ऋचः मिलित्वा त्रयोविंशतिः। 'आद्या त्रिः' इति त्रिरावृत्तयाऽऽद्यया सह पञ्चविंशतिः संपद्यन्ते। (तु०— ऐ० आ०सा० १।३।५)। इमाः राजनसामस्तोत्रियस्याधारभूतस्य 'तदिदास' इति तृचप्रथमाश्च शस्यन्ते। ताः १. नदं व ओदतीनाम्। (ऋ० ८।६९।२) इति नदशब्दोपेतेन मन्त्रेण सह विहरति (व्यतिषजति)। तत्र 'तदिदास' इत्याद्यास्तत्र-त्रयोविंशतिः त्रिष्टुभः, 'नदं वः' इत्येषाऽक्षरैरुष्णिक्। तां पुरुषाक्षरयोजनेन पादैरनुष्टुभं कृत्वा विहरतीति। यद्वा सप्ताक्षरैश्चतुर्भिः पादैश्चतुष्पदत्वादनुष्टब्रूपां भावयेत्। पुरुषाक्षराणि न याजयेत्। तदुक्तम्—त्रिष्टुभे चानुष्टुभं च विहरति (तु०—ऐ० आ० सा० १।३।५; २।३।८)। तद्यथा—'तदिदास भुवनेषु ज्येष्ठं 'पु', नदं व ओदतीनां पु० यतो जज्ञे३ग्रस्त्वेष नृम्णो 'रु' नदं योयुतानां 'रु' सद्योजज्ञानां निरिणातिशत्रून् पतिं वो अघ्न्या (धिया) नाम् 'षो' अनु ये विश्वे भदन्त्यूमा 'षो' धेनूनामिषुध्यसो३म् अत्रापि व्यूहेनाष्टरक्षरत्वमिति (ऐ० आ० सा० १।३।५)। एवमुत्तरत्रापि योजनीयम्। इत्यनुष्टुप्कारं विहरणमुच्यते। २. अथ वृहतीकारं विहरणम् तत्र (क) ताः पूर्वोक्तसूक्तगताः सर्वा ऋचः बृहतीं छन्दः संपद्यन्ते। तद्यथा— त्रिष्टुप्छन्दस्कासु 'तदिदास' इत्याद्यृक्षु एकैकः पाद एकादशाक्षरः, सप्ताक्षरेण 'नदं वः' इत्यादिमन्त्रगतेन पादेन संयुज्यते। तदेतदष्टादशाक्षरात्मकं पादद्वयमेकं अर्ध भवति। तादृशे द्वे अर्धे षट्त्रिंशदक्षरां बृहतीं प्राप्नुतः। एवं (विहरणेन) त्रयोविंशति संख्या ऋचः सर्वा अपि 'नदं वः' इत्यादि संहिताः षट् चत्वारिंशद् बृहत्यो भवन्ति। इति त्रिष्टुबुष्णिहोः बृहतीकारं विहरणम्। (तु०— ऐ० आ० सा० १।३।८)। (ख) 'तदिदास' (ऋ० १०।१२०), तां सु ते (ऋ० १०।५४), भूय इद्वावृधे (ऋ० ६।३०) नृणामुत्वा (ऋ० ३।५१।४-६) इति सूक्तानि ऋचश्च क्रमेण 'नदं वः (ऋ० ८।६९।२) इत्यनया विहरेत्। तत्र 'नदं वः' इत्यादिका येयमृगस्ति तया सहैतानि 'तदि-

दास' इत्यादि सूक्तानि मिश्रयेत्। कथामिश्रणमिति तदुच्यते—एतस्या ऋचः संबन्धिभिः पादैः सह सूक्तगतान् पादान् मेलयेत्—बृहतीकारमिति एकैकामृचं बृहतीं कृत्वेति मेलनम्। तत्र सूक्तस्य पदानि प्रथममुच्चार्य नदशब्दयुक्तान्यृचः पदानि उत्तराणि यथा भवन्ति तथोच्चारयेत्। किं च 'तदिदास' इति प्रथमायामृचि प्रथमद्वितीयपादौ दशाक्षरौ चतुर्थस्तु व्यूहेन दशाक्षरः तेषां त्रैष्टुभस्यैकादशाक्षरपादस्य संपत्तये पुरुषेत्येतानि त्रीणि अक्षराणि प्रक्षिपेत्। प्रथमस्य पादस्यावसाने 'पु' इत्येकमक्षरम्, द्वितीयपादावसाने 'रु' इत्येकमक्षरम्, चतुर्थपादावसाने 'ष' इत्येकमक्षरम्। तृतीयपादे तु एकादशाक्षरपादत्वान्नास्ति अक्षरप्रक्षेपस्यावकाशः। एवं सति षट्त्रिंशदक्षरा बृहती संपद्यते। एवं च 'तदिदास' इति पादे दशाक्षराणि, 'पु' इत्येकमक्षरम्। 'नदं वः' इति पादे सप्ताक्षराणि। 'यतो जज्ञे' इति पादे दशाक्षराणि 'रु' इत्येकमक्षरम्। 'नदं यो युवतीनाम्' इति पादे सप्ताक्षराणि। तदेवं मिलित्वा षट्त्रिंशदक्षराणि संपद्यन्ते। (एका बृहती)। तत्र स्फुटं निदर्शनम्-तदिदासभुवनेषु ज्येष्ठं 'पु', नदं व ओदनीनाम्। यतो जज्ञे उग्रत्वेषनृभ्णो 'रु' नदं यो युवतीनाम्॥ (प्रथमा बृहती)। सद्यो जज्ञानो रिणाति शत्रून्, पतिं वो अध्न्यानाम्। अनु यं विश्वे मदन्त्यूमाः 'षो' धेनुनामिषुध्यसो३म्॥ (द्वितीया बृहती)॥ बृहतीद्वयगार्भितेयं प्रथमा त्रिवारं पठ्यते। त एवमुत्तरत्रापि योजनीयम्। (ऐ० आ० सा० ५।१।६)। तत्र आत्मस्थानीया एता ऋचः (सूक्तानि ऋचः) शस्त्रार्थं 'नदं वः' इति व्यतिषक्ताः (विहरणोपेताः) केवलाश्चेति द्वेधा प्रयुज्यन्ते। तदुक्तम्—'एषां वा एषां सूक्तानाम्' इति। तत्र आद्येन एषामित्यनेन पदेन व्यतिषक्तानि (सूक्तानि ऋचः) परामृश्यन्ते। 'ता नदेन विहरति' इत्येवं व्यतिषक्तानामनन्तरमेव प्रकृतत्वात्। द्वितीयेन एषामित्यनेन व्यतिषक्तान्तर्भूतानि केवलानि परामृश्यन्ते। तानि च 'तदिदास' इत्यादि व्याख्यानप्रकृतानि। इति विशेषोऽवधेयः (तु०—ऐ० आ० सा० १।३।८)। इति निष्केवल्यशस्त्रस्य पक्ष्याकारस्य देहमध्यभागः राजन्सामतृचोत्तर सूक्तावयवनिष्पाद्योऽभिहितः, अस्यावसाने अर्थात्—'तदिदास' इत्यादि० गीर्भिरुक्थ्यैः 'इत्यन्तग्रन्थोक्तस्य निष्केवल्यशस्त्रस्यात्मभागावसा ग्रीवाभागस्य चादौ' ता अस्य सूददोहसः, सोमं श्रीणन्ति पृश्नयः। जन्मन् देवानां विशस्त्रिष्वा रोचते दिवः' (ऋ० ८।६९।३) इति सूददोहाः नाम ऋक् पठनीया। सा पक्ष्याकारस्य निष्केवल्यशस्त्रस्य सर्वेषामवयवानामवसाने शस्त्रसन्तत्यै पठनीयेति विशेषोऽवधेयः। (तु०—ऐ० आ०सा० १।४।१; १५।१।६)। ५. अथ ग्रीवास्थानीया ऋचः—पक्ष्याकारस्य निष्केवल्यशस्त्रस्य ग्रीवासरूपासु शाखान्तरीयासु तिसृषु ऋक्षु (अथ० ६।३३।१-३) प्रथमा—'यस्येदमा—' 'रजस्तुजो युजो वनं सहः। इन्द्रस्य स्तन्यं बृहत्'॥ द्वितीया—नाधृष आदधर्ष...। तृतीया—स नो ददातु...इति। ततः सूददो हाः-'ता अस्य सूददोहसः'...(ऋ० ८।६९।३)। इति ग्रीवास्थानीया ऋचः। (तु०—ऐ० आ० सा० १।४।१; ५।२।१)। ता अर्धर्चेऽवसाय कृत्स्नायामृचि प्रणवः इत्यर्धर्चशस्या भवन्ति। ६. अथ पक्ष्याकारस्य निष्केवल्यशस्त्रस्य शिरः स्थानीयइन्द्रमिद्गाथिनः (ऋ० १।७।१-१०)। इति गायत्रम्।

ततः सूददोहाः-'ता अस्य सूददोहसः' (ऋ० ८ ।६९ ।३)। इति शिरः स्थानीया ऋचः। (तु० ऐ० ब्रा० सा० १ ।४ ।१;५ ।२ ।१)। तासामर्धर्चेऽवसाय कृत्स्नाया ऋचोऽन्ते प्रणवः कार्यः इत्यर्धर्चशस्यत्वमिति विशेषोऽवधेयः (तु०—ऐ० आ० सा० ५ ।२ ।१)७. अथ विजव-(पक्षमूल-, ग्रीवा-धस्तनास्थि-) भागरूपास्तिस्रः अशाखान्तरीया ऋचः तत्र प्रथमा-'सुतस्ते सोम'...। द्वितीया-'स साहतुर्वृत्रहत्येषु'...। तृतीया-'इतो वसुः रामजः'। ता अर्धर्चेऽवसाय कृत्स्नायामृचि प्रणव इत्यर्धर्चशस्या भवन्तीति (तु०—ऐ० आ० सा० ५ ।२ ।१)। ततः सूददोहाः-'ता अस्य सूददोहसः' (ऋ० ८ ।६९ ।३; ऐ० आ० सा० १ ।४ ।१; ५ ।२ ।१) इति विजवस्थानीया ऋचः। ८. अथ दक्षिणपक्षस्थानीयाः (दक्षिणपक्षरूपाः) ऋचः—स्तोत्रियः प्रगाथतृचः—'अभि त्वा शूर (ऋ० ७ ।३२ ।२२-२३)। अनुरूपः प्रगाथतृचः—'अभि त्वा' (ऋ० ८ ।३ ।७-८) इति प्रगथनेन षट् बृहत्यः। ततः सूक्तानि— १. इन्द्रस्य नु (ऋ० १ ।३२ ।१-१५। २. 'त्वेह पितरः' (ऋ० ७ ।१८ ।१-१५) ३. 'यस्तिग्मशृङ्गः' (ऋ० ७ ।१९ ।१-११। ४. 'उग्रो जज्ञे' (ऋ० ७ ।२० ।१-१०)। ५. 'उदु ब्रह्माणि' (ऋ० ७ ।२४ ।१-६। ६. 'आ ते महः' ऋ० ४ ।२० ।१८। ८. न सोम (ऋ० ७ ।२ ।२६ ।१-५)। ९. इन्द्रं नरः (ऋ ७ ।२७ ।१-५)। १०. 'ब्रह्माण इन्द्र (ऋ० ७ ।२८ ।१-५)। ११. अयं सोमः (ऋ० ७ ।२९ ।१-५)। १२. आ न इन्द्रः (ऋ० ४ ।२० ।१-११) १३. इत्था हि सोमः (ऋ० १ ।८० ।१)। देकाधिकं श इत्येका। तस्याः प्राचीनं सर्वमृचां शतं संपद्यते। ततः सूददोहाः—ता अस्य सूददोहसः (ऋ० ८ ।६९ ।३)। इति दक्षिणपक्षरूपा ऋचा (तु०— ऐ० आ० सा० १ ।४ ।२; ५ ।२ ।२)। ९. अथात उत्तरपक्षस्थानीया उत्तरपक्षरूपा ऋचः— स्तोत्रियः प्रगाथ तृचः— १. त्वामिद्धि हवामहे (ऋ० ६ ।४६ ।१-२)। अनुरूपः प्रगाथतृचः २. त्वं ह्येहि चेरवे (ऋ० ८ ।६१ ।७-८) इति प्रगथनेन षट् बृहत्यः। ३. तमुष्टुहि (ऋ० ६ ।१८ ।१-१५)। ४. सुत इत्त्वम् (ऋ० ६ ।२३ ।१-१०)। ५. वृषा मदः (ऋ० ६ ।२४ ।१-१०)। ६. या त ऊतिः (ऋ० ६ ।२५ ।१-९)। ७. अमूदेकः (ऋ० ६ ।३१ ।१-५)। ८. अपूर्व्या पुरूतमानि (ऋ० ६ ।३२ ।१-५)। ९. य ओ जिष्ठः (ऋ० ६ ।३३ ।१-५)। १०. स च त्वे (ऋ० ६ ।३४ ।१-५)। ११. कदा भुवन् (ऋ० ६ ।३५ ।१-५)। १२. सत्रा मदासः (ऋ० ६ ।३६ ।१-५)। १३. अर्वाग्रथम् (ऋ० ६ ।३७ ।१-५)। १४. अपारितः (ऋ० ६ ।३८ ।१-५)। १५. कथा महाम् (ऋ० ४ ।३३ ।१-११)। १६. इन्द्रो मदाय (ऋ० १ ।८१ ।१)। एताव द्व्यधिकं शतं पठित्वा ततः सूददोहाः 'ता अस्य सूददोहसाः' (ऋ० ८ ।६९ ।१) इत्युत्तरपक्षरूपा ऋचः। (तु०— ऐ० आ० सा० १ ।४ ।२ ।५ ।२ ।२)। अथातः पुच्छस्थानीयाः पुच्छरूपा द्विपदा ऋचः-इमा तु कम्' (ऋ० १० ।१५७ ।१-५)। 'आ याहि वनसा' (ऋ० १ ।१७२ ।१-४। ततः असमाम्नाताः शाखान्तरगतनव द्विपदाः-तत्र प्रथमा—'प्र व इन्द्राय' द्वितीया-'अर्चन्त्यर्कं देवतांस्वर्का'...। तृतीया—'उपप्रक्षे मधुमति'...। चतुर्थी 'विश्वतो दावन्...'। पञ्चमी-'स सुप्रवीते'...। षष्ठी-'त्वं ह्येक ईशिषे'...। सप्तमी-'विश्वस्य प्रस्तोम...'। अष्टमी-'इषं नो मित्रावरुणा'...। नवमी-शं पदं मघं'...। तत आश्वलायन-

सूत्रगतास्तिस्रो द्विपदाः—'एष ब्रह्मा य ऋत्वियः' इत्येका। 'विसृतयोः यथा'...इति द्वितीया। 'त्वामिच्छवसस्पते'...इति तृतीया। ततश्चतस्रः ऋचः-१. 'आ धूर्ष्वस्मै (ऋ० ७।३४।४) इति द्विपदा। ततः २. 'ता अस्य सूददोहसः (ऋ० ८।६९।३) इति सूददोहाः।' ३. 'यद्वावान पुरुतमम्' (ऋ० १०।७४।६) इति चतुष्पदा धाय्या। ४. ता अस्य सूददोहसः' इति पुनः सूददोहाः। इति पुच्छरूपा ऋचः (तु०—ऐ० आ० सा० १।४।२; ५।२।३)। ११. अथान्नाशयस्थानीया अन्नरूपास्तृचाशीतयः—पुच्छभागशंसनादूर्ध्वं तिसृणामृचां समूहस्तृचस्तादृशानां तृचानामशीतिः (चत्वारिंशदधिकशतद्वयसंख्याका ऋचः)। ताः गायत्री तृचाशीतिः, बार्हती तृचाशीतिः, औष्णिही तृचाशीतिरिति त्रिविधाः शंस्यते। ततो (क) गायत्रीच्छन्दस्कायास्तृचाशीतेः 'महाँ इन्द्रो यः' इति सूक्तस्य (ऋ० ८।६।१-४५) इति पञ्चचत्वारिंशद् ऋचः। 'पुरोडाशं नः' इति सूक्तस्य (ऋ० ८।७८।१-३) इति तिस्र ऋचः। 'इन्द्र इत्सोमपाः' इति सूक्तस्य (ऋ० ८।२।४-२७, सप्तविंशतिः। अष्टाविंश्याः स्थाने 'नह्यन्नम्' (ऋ० ८।८०।१) इत्येका ऋक्। ततः (ऋ० ८।२।२९-३९) इति षट्त्रिंशद् ऋचः। 'जजानो नु' इति सूक्तस्य (ऋ० ८।७७।१) इत्येका ऋक्। 'पुरुहूतं पुरुहूतम्' इति सूक्तस्य (ऋ० ८।९२।२-३३) इति द्वात्रिंशद् ऋचः। 'उद्धेदमि' इति सूक्तस्य (ऋ० ८।९३।१-३३) इति त्रयस्त्रिंशद् ऋचः। 'प्रकृतान्यृजीषिणः' इति सूक्तस्य (ऋ० ८।३२।१-३०)। इति त्रिंशद् ऋचः। 'आ घा ये' (ऋ० ८।४५।१-४२) इति द्विचत्वारिंशद् ऋचः। 'आ तू न इन्द्र' इति सूक्तस्य (ऋ० ८।८१।१-९) इति नव ऋचः। 'आ प्र द्रव' इति सूक्तस्य (८।८२।१-९) इति नव ऋचः। ततः सूददोहाः—'ता अस्य सूददोहसः' (ऋ० ८।६९।३)। इत्येता ऋचः शस्यन्ते। एवं सति सूददोहसः प्राचीनाश्चत्वारिंशदधिकशतद्वयसंख्याका ऋचो गायत्रीतृचाशीतिः सम्पद्यते। (तु०—ऐ०आ० सा० १।४।३; ५।२।३)। ततो (ख) बृहतीच्छन्दोयुक्तायास्तृचाशीतेः 'मा चिदन्यत्' इति सूक्तस्य (ऋ० ८।१।१-२९) इत्येकोनत्रिंशद् ऋचः। 'पिबा सुतस्य' इति सूक्तस्य (ऋ० ८।३।१-६)। ९-२०) इत्यष्टादश ऋचः। 'यदिन्द्र प्रागपागुदक्' इति सूक्तस्य (ऋ० ८।४।१-१४) इति चतुर्दश ऋचः। 'वयं घ त्वा' इति सूक्तस्य (ऋ० ८।३३।१-१५) इति पञ्चदश ऋचः। 'मो षु त्वा' इति सूक्तस्य (७।३३।१-२;४-९; दशम्येकादश्योः (१०-११) स्थाने 'त्वामिदा ह्यो नरः' इति सूक्तस्य (ऋ० ८।९९।१-२) इति द्वे ऋचौ; १२-२१;२४-२७) इति चतुर्विंशतिर्ऋचः। 'अभि प्र वः' इत्यादि वालखिल्यानां षट्सूक्तानां (ऋ० ८।४९-५४, १-५६। इति षट्पञ्चाशद् ऋचः। 'त्वामिद्धि हवामहे' इति सूक्तस्य (ऋ० ६।४६।२-१२) इति द्वादश ऋचः। 'अयं ते अस्तु' इति सूक्तस्य (ऋ० ३।४४।१-५)। इति पञ्च ऋचः। 'आ मन्द्रैः' इति सूक्तस्य (ऋ० ३।४५।१-५ इति पञ्च ऋचः। 'उभयं शृणवच्च' इति सूक्तस्य (ऋ० ८।६१।१-६।९-१८) इत षोडश ऋचः। 'तरोभिर्वः' इति सूक्तस्य (ऋ० ८।६६।१-१४) इति चतुर्दश ऋचः। 'यो राजा चर्षणीनाम्' इति सूक्तस्य (८।७०।१-१०)। इति एकादश ऋचः। 'तं वो दशमम्' इति सूक्तस्य (८।८८।१-६) इति षड् ऋचः। 'आ नो विश्व सुहव्यः'

इति सूक्तस्य (८।९०।१-६)। इति षड् ऋचः। 'या इन्द्र' इति सूक्तस्य (ऋ० ८।९७।१-९) इति नव ऋचः। इत्येता ऋचः पठ्यन्ते। ततः सूद हो हाः—'ता अस्य सूदहसः (ऋ० ८।६९।३)। एवं सति सूद-दोहसः प्राचीनाश्चत्वारिंशदधिकशत-द्वयसंख्याका ऋचो बार्हती तृचाशीतिः सम्पद्यते। (तु०— ऐ० आ० सा० १।४।३; ५।२।४)। ततः (ग) उष्णिक्छ-न्दोयुक्तायास्तृचाशीतेः 'य इन्द्र सोमपातमः' इति सूक्तस्य (ऋ० ८।१२।१-३३) इति त्रयस्त्रिंशद् ऋचः। 'इन्द्र सुतेषु' इति सूक्तस्य (ऋ० ८।१३।१-३३)। इति त्रयस्त्रिंशद् ऋचः। 'तम्वभि प्रगायत' इति सूक्तस्य (ऋ० ८।१५।१-१२) इति द्वादश ऋचः। 'इन्द्राय साम' इति सूक्तस्य (ऋ० ८।८८।१-१२) इति द्वादश ऋचः। 'सखाय आ' इति सूक्तस्य (ऋ० ८।२४।१-२७) इति सप्तविंशतिर्ऋचः। 'य एक इत्' इति सूक्तस्य (ऋ० १।८४।७-९) इति तिस्र ऋचः। 'आ याह्यद्रिभिः' इति सूक्तस्य (ऋ० ५।४०।१-३) इति तिस्र ऋचः। 'यस्य त्यच्छम्बरम्' इति सूक्तस्य (ऋ० ६।४३।१-३) इति तिस्र ऋचः। इति षड्विंशत्यधिकशतसंख्याकाः स्वतः सिद्धा उष्णिहः। इत ऊर्ध्वं गायत्रीच्छन्दस्का ऋचः—'यदिन्द्राह' इति सूक्तस्य (ऋ० ८।१४।१-१५) इति पञ्चदश गायत्र्यः। 'प संभ्राजम्' इति सूक्तस्य (ऋ० ८।१६।१-१२) इति द्वादश गायत्र्यः। 'आ याहि' इति सूक्तस्य (ऋ० ८।१७।१-१३) इति त्रयो-दश गायत्र्यः। 'बार्हस्पत्याय' इति सूक्तस्य (ऋ० ३।३७।१-१०) इति दशगायत्र्यः। 'सुरूप कृत्नुम्' इति सूक्तस्य (ऋ० १।४।१-१०) इति दश गायत्र्यः। 'आ त्वे तां' इति सूक्तस्य (ऋ० १।५।१-१०) इति दश गायत्र्यः 'युञ्जन्ति ब्रध्नमरुषम्' इति सूक्तस्य (ऋ० १।६।१-१०)। इति दश गायत्र्यः। 'एन्द्रं सानसिम्' इति सूक्तस्य (ऋ० १।८।१-१०) इति दश गायत्र्यः। 'इन्द्रे हि' इति सूक्तस्य (ऋ० १।९।१-१०) इति दश गायत्र्यः। 'स आनयत्' इति सूक्तस्य (ऋ० ६।४५।१-३०)। इति त्रिंशद् गायत्र्यः। 'आ व इन्द्रम्' इति सूक्तस्य (ऋ० १।३०।१३-१५) इति तिस्रो गायत्र्यः। इति त्रयस्त्रिंशदधिकशत-संख्याका गायत्र्यः। ताश्च गायत्र्य उष्णि-क्त्वेन सम्पादनीयाः। तत्संपादनप्रकारस्तु-सप्त गायत्र्यो मिलित्वा षडुष्णिहः संपद्यन्ते। सप्तम्यां गायत्र्यामक्षरचतुष्काणि षड् विद्यन्ते। तेष्वेकैकं चतुष्कमेकैकस्यां गाय-त्र्यां योजनीयम्। तद्यथा—'यदिन्द्राहं यथा त्वमशीय वस्व एक इत्। स्तोता मे गोषरवा स्यात्। व्यन्तरो३म्॥ १॥ शिक्षेयमस्मै दित्सेयं शचीपते मनीषिणे। यदहं गोपतिः स्याम्। क्षमतरो३म्॥ २॥ धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते। गामश्वं पिप्युषी दुहे। मदेसोमो३म्॥ ३॥ न ते वर्तास्ति राधस इन्द्र देवो न मर्त्यः। यद् दित्सति स्तुतो मघम्। स्य रोचनो३म्॥ ४॥ यज्ञ इन्द्रमवर्धयद् यद्भूमिं व्यवर्तयत्। चक्राण ओपशं दिवि। इन्द्रो यदो३म्॥ ५॥ वावृ-धानस्य ते वयं विश्वा धनानि जिग्युषः। अति मिन्द्रा वृणीमहे भिनद् वलो३म्॥ ६॥' एवं सप्तसु गायत्रीषु षड् उष्णिहः सम्पन्ना भ-वन्ति। एवमुत्तरत्रापि सर्वासु गायत्रीषु उष्णिक्त्वं सम्पादनीयम्। अयमत्र विषयः—'यदिन्द्राहम्' (ऋ० ८।१४।१) इत्यारभ्य 'रेवतीर्न' (ऋ० १।३०।१३-१५) इति तृचान्तास्त्रयस्त्रिंशदधिकशतसं-ख्याका (१३३) गायत्र्योऽत्र पठनीयाः,

ताश्च पूर्वोक्तप्रकारेण सप्तसु सप्तसु गायत्रीषु षट्षड् उष्णिहः सम्पद्यन्ते। तथा सति चतुर्दशाधिकशतसंख्याका (११४) उष्णिहः सम्पन्नाः। 'य इन्द्र सोमपातमः' (ऋ० ८।१२।१) इत्याद्यासु स्वतः सिद्धा उष्णिहः षट्विंशत्यधिकशतसंख्याकाः (१२६)। तासां सर्वासां मेलनात् (११४+१२६) औष्णिही तृचाशीतिः सम्पद्यते इति। ततः सूददोहाः—'ता अस्य सूददोहसः' (८।६९।३)। इत्यौष्णिही तृचाशीतिरुच्यते। शंसनप्रकारः—गायत्री बृहत्युष्णिक् छन्दस्कास्तिस्रस्तृचाशीतयोऽर्धर्चशंसनमर्हन्ति। प्रथमेऽर्धर्चेऽवसाय पश्चादुत्तरमर्धर्चं पठेदित्यर्थः। (तु०— ऐ० आ० सा० १।४।३; ५।२।५)। द्र० अर्धर्चशंसनभेद—।

१२. अथोदरस्थानीयोऽन्नरूपोवशः—गायत्र्यादि तृचाशीतीनां शंसनादूर्ध्वं पक्ष्याकारस्य शस्त्रस्य वशाख्यमन्त्रसंघस्य 'त्वावतः पुरूवसो' इति सूक्तस्य (ऋ० ८।४६।२०) इति विंशति र्ऋचः। ततः सूददोहाः—ता अस्य सूददोहसः (ऋ० ८।६९।३)। इत्येकविंशतिसंख्याक उदरस्थानीयोऽन्नो रूपो वशः। (तु०—ऐ० आ० सा० १।५।१; ५।२।५)।

१३. अथोरुस्थानीया ऊरुरूपा ऋचः—वशाख्यमन्त्रसंघशंसनादूर्ध्वं पक्षिरूपस्य निष्केवल्यशस्त्रस्य 'इन्द्राग्नी युवम्' इति सूक्तस्य (ऋ० ८।४०।१-१२) इति द्वादश ऋचः। तासां शंसनप्रकारः—सूक्तस्य 'नहि वाम्' इति द्वितीयाम्, 'इन्द्राग्निभ्याम्,' इति द्वादशीं च परित्यज्यावशिष्टा दशर्चः प्रत्येकं षट्पदाः महापङ्क्तयः। तासु दशसु पादत्रयात्मकमेकैकमर्धर्चं पादद्वयेऽवसाय तृतीयपादे प्रणवः इति गायत्रीं कृत्वा (गायत्रीकारम्) शंसेत्। येयं द्वितीया सप्तपदा शक्वरी तस्या अपि पादत्रयं पूर्वार्द्धे पूर्वोक्तं गायत्रीकारमेव शंसेत्। उत्तरार्धं तु द्वितीयपादेऽवसाय चतुर्थपादे प्रणवः इत्यनुष्टुभं कृत्वा (अनुष्कारम्) शंसेत्। त्रिष्टुप्छन्दस्कां द्वादशीं तु त्रिष्टुभोऽर्वाचीनां गायत्र्यादीनामर्धर्चशंसनविधानात् एकस्मिन् पादेऽवसायोत्तरस्मिन् पादे प्रणवः इति सामान्यतः प्राप्तेन पादशंसनेन शंसेत्। (तु०— आ०श्रौ० ५।१४।९)। तद्यथा—'इन्द्राग्नी युवं सु नः सहन्तामदाथो रयिम्। येन दृढा समत्स्वो३म्। वीढुचित्-साहिषी मह्यग्निर्वनेव वात इन्नभन्तामन्यके समो३म्। इति प्रथमां शंसेत्। एवं तृतीयामारभ्यैकादशीपर्यन्ता ऋचः शंसेत्। 'नहि वां वव्रयामहेऽथेन्द्रमिद् यजामहे शविष्ठं नृणां नरो३म्।' 'स नः कदाचिदर्वता गमदा वाजसातये गमदा मेधसातये नभन्तामन्यके समो३म्।' इति द्वितीयां शंसेत्। 'एवेन्द्राग्निभ्यां पितृवन्नवीयः। मान्धातृवदङ्गिरस्वदवाचो३म्।' 'त्रिधातुना शर्मणा पातमस्मान्। वयं स्याम पतयो रयीणो३म्।' इति द्वादशीं पठेत्। ततो निविद्धानीयं सूक्तम्—'प्र वो महे (ऋ० १०।५०।१-७)। निवित्पदानि-'इन्द्रो देवः सोम'(ऋ० खि०) तत्र सूत्रगतासु-सप्तस्वृक्षु चतस्रः पठित्वा तिस्रोऽवशेष्य मध्ये निवित्पदानि दध्यादिति विशेषोऽवधेयः। ततो द्वे सूक्ते-'वने न वा यो' इति सूक्तम् (ऋ० १०।२९।१-८), 'यो जात एव प्रथमः' इति सूक्तम् (ऋ० २।१२।१-१५)। यद्यायुष्कामः स्यादनयोः सूक्तयोर्मध्ये 'आ याह्यर्वाङ् इति सूक्तम्' (ऋ० ३।४३।१८), विधुं-दद्राणम्' (ऋ० १०।५५।५) इत्येकामृचं च प्रक्षिपेदिति विशेषोऽवधेयः। ततः तार्क्ष्यसूक्तम्—

'त्यमूषु वाजिनः' (ऋ० १० ।१७८ ।१-३) । ततः एकपदा शाखान्तरगता ऋक्—'इन्द्रो विश्वं विराजति । ततः 'इन्द्रो विश्व अवीवृधन्' (ऋ० १ ।११ १-८) इत्यनुष्टुप्छन्दस्कं सूक्तम् । तच्च व्यतिषङ्गेन (विहरणेन) शंसेत् । तत्र शसंनप्रकारः—प्रथमायाः पूर्वमर्धर्चं यथापाठं शस्त्वोत्तरेणार्धर्चेन सह द्वितीयस्या ऋचः पूर्वमर्धर्चं व्यतिषजेत् । एवमाद्यासु सप्तस्वृक्षु (१-७) पादैः पादानां परस्परं व्यतिषङ्गं कृत्वा तेनैव व्यतिषङ्गेणानुष्टुभं कृत्वा (अनुप्कारं) शंसेत् । अर्थात् प्रथमायामृच्यध्ययनक्रमेणैव पादत्रयं पठित्वा द्वितीयस्या ऋचः प्रथमपादमाकृष्य चतुर्थपादत्वेन योजयेत् । सेयमेकाऽनुष्टुप् । ततः प्रथमायामृचि चतुर्थपादं द्वितीयस्यां द्वितीयपादं च संयोज्य प्रथममर्धर्चं कुर्यात् । ततो द्वितीयस्यां तृतीयपादं तृतीयस्यां प्रथमपादं च द्वितीयमर्धर्चं कुर्यात् । सेयं द्वितीयाऽनुष्टुप् । एवमुत्तरत्राप्येकैकपादान्तरितत्वेन द्वौ द्वौ पादौ संयोज्यार्धर्चान् कृत्वा द्वाभ्यां द्वाभ्यामर्ध- र्चाभ्यामेकैकाऽनुष्टुप् संपादनीया । तद्यथा—'इन्द्रं विश्वा अवीवृधन् समुद्र-

व्यचसं गिरोर्रथीतमं रथीनां सुख्ये त इन्द्रं वाजिनो३म् । वाजानां सत्पतिं पतिं मा भेम शवसस्पते त्वामभि प्रणोनुम पूर्वीरिन्द्रस्य रातयो३म् । एवं संपादितात् पूर्वस्मात् पूर्वस्मादर्धर्चादूर्ध्वं सम्पादितमुत्तरमुत्तरमर्धर्चमुत्तरास्वपि संयोजयेदिति । ता एता परस्परव्यतिषक्ताः सप्तानुष्टुभः पठित्वा तत ऊर्ध्वं 'इन्द्रमीशानमो'... भूयस्यो३म् । इति यथापाठं पठित्वा ततः शस्त्रान्ते एतस्याः 'सहस्रं यस्य रातय उत वा सन्ति भूयसीः' इत्युत्तरमर्धर्चं शंसेत् । ततः 'पिबा सोमम्' इति सूक्तस्य (७ ।२२ ।१-६) इति षड् ऋचः । ततः 'योनिष्ट इन्द्र' इति सूक्तस्य (ऋ० ७ ।२४ ।६;५) इति द्वे ऋचौ । परिधानीया—तत्रत्या पञ्चमी शस्त्रपरिधानीया । (तु०— ऐ० आ० सा० १ ।५ ।१-२ ।५ । ३ ।१) । ततः १४. शस्त्वाजपः—१. उक्थं वाचीन्द्राय । २. शाखान्तरगतो 'मूर्धा लोकानाम्' इत्यारभ्य 'यज्ञसमृद्धिं मे धुक्ष्व' इयन्तो मन्त्रसमूह उक्थदोहः । तस्मिनुक्थदोहे प्रथमो मन्त्रः 'मूर्धालोकानामसि वाचो रसः । द्वितीयो मन्त्रः—'एतास्त उक्थ भूतयः'... । तृतीयो मन्त्रः 'प्रजापतिरिदं ब्रह्म ।' चतुर्थो मन्त्रः 'भूर्भुवस्त्रयः'... । पञ्चमषष्ठसप्तमाष्टममन्त्राः—'आयुः... द्युक्ष्व । पशून्...द्युक्ष्व । श्रियं... द्युक्ष्व । लोकं...द्युक्ष्व । इत्युक्थदोहं होता प्रथमं स्वयं जपति, पश्चादध्वर्युं वाचयतीति विशेषोऽवधेयः । ततः शस्त्रयाज्या-'ओमुक्थशा यज सोमस्येतीज्यायै (शस्त्रयाज्यायै) संप्रेषितो होता 'ये३ यजामहे पिबा सोममिन्द्रं' (ऋ० ७ ।२२ ।१) । इति प्राकृतिर्याज्या । ततः १५. अनुवषट्कारानुमन्त्रणम्—'सोमस्याग्ने वीहि ऋगोजः...' इति प्राकृतम् । १६. ततोऽध्वर्युरुक्थपात्रमति- ग्राह्यांश्चमसानाहरति अर्थात् भक्षणार्थमुक्थपात्रातिग्राह्येषु (ग्रहेषु) चमसेषु च यः सोमरसोऽवशेषितस्तमध्वर्युर्होतारं प्रत्यानयेत् । ततो १७ ।१८, हौतुः प्रेङ्खादवरोहणम्-अध्वर्युणा समाहृतं भक्षं ज्ञात्वा प्राङ्मुखो भूत्वा होता प्रेङ्खादवरोहेत् । (तु०—ऐ० आ०सा० १ ।२ ।४; ५ ।३ ।१-२) । ततो १९. होतुर्भक्षणम्—होता प्रेङ्खस्थाने आसीनो 'वाग्देवी सोमस्य तृप्यतु'...इत्यादि मन्त्रेण उक्थपात्रगतं सोमं भक्षयेत् । (तु०—ऐ० आ० सा० ५ ।३ ।२) । इति महाव्रते पक्ष्या-

कारं महदुक्थं नवभागैर्युक्तं निष्केवल्यशस्त्रमुच्यते ।

**महाव्रते आर्भवपवमानस्तोत्र**—(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामय-नप्रकरणे महाव्रतेऽहनि तृतीयसवने आर्भवपवमानतृचा:— 'परि स्वानो गिरिष्ठा:' (साम० १०९३-९५) इति प्रथम स्तृच: । 'पवस्व मधुमत्तम:' (साम० ६९२-९३) प्रगाथतृचो द्वितीय: । 'इन्द्रमच्छ' (साम० ६९४-९६) तृतीयस्तृच: । 'पुरोजिती वो अन्धस:' (साम० ६९७-९९ इति चतुर्थस्तृच: । सामानि—प्रथमे तृचे गायत्र्य स्वाशिरामकसाम्नी । द्वितीय-तृतीयो: शफशुध्ये साम्नी । चतुर्थे तृचे गौरीवितं मधुश्च्युन्निधनं श्यावाश्वोन्धीगवे कावं चेति पञ्चसामानि । स्तोम:-पञ्चविंशस्तोम: । विष्टुति:— **द्र०** पञ्चविंशविष्टुति— । आर्भवे एकमेकर्चं कुर्वन् प्रथमायामादित: कुर्यात् (तु०—ला०श्रौ० ६ ।३ ।१२) ।

**महाव्रते इलान्दमग्निष्टोमस्तोत्र**—(औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि तृतीयसवने इलान्दास्याग्निष्टोमस्तोत्रस्य 'अग्निरस्मि जन्मना' (साम० ६१३) इत्यस्यामुत्पन्नस्य 'अग्ने तव श्रव:' (साम० १८१३-२१) इति इलान्दस्य षड् ऋच: । सामइलान्दमग्निष्टोमसाम । तत्र इलान्दाधारभूतासु 'अग्ने तव श्रव:' इत्यादिषु ऋक्षु समुद्रश्छन्द: । द्वयोर्द्वयोर्ऋचो: साम समाप्यते । प्रत्यृचं चत्वारिंशदक्षराणि मिलित्वा अशीत्यक्षराणि संपद्यन्ते । एवमेकैका स्तोत्रीया अशीत्यक्षरा भवति । अस्य च साम्न: 'एव्रतम्, एसुव:, शकुन:' इति त्रीणि निधनानि भवन्ति । इति विशेषोऽवगन्तव्य: । अथवा अग्निष्टोमस्तोत्रं द्रष्टव्यम् । तु०—तां० ब्रा० सा० ५ ।३ ।१-६) । अग्निष्टोमस्तोत्रं च आग्निमारुतशस्त्रस्य पुरस्तात् कार्यमिति विशेषोऽवधेय: ।

**महाव्रते तृतीयसवने होतुर्वैश्वदेवशस्त्र**— (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि तृतीयसवने होतुर्वैश्वदेवशस्त्रस्य आहाव: । प्रतिपत्तृच:-'तत्सवितुर्वृणीमहे' (ऋ० ५ ।८२ ।१-३) । इत्यैकाहिक: । अनुचरतृच:—'अद्या नो देव' (ऋ० ५ ।८२ ।४-६) । इत्यैकाहिक: । प्रथमं सावित्रं निविद्धानसूक्तम्—'तद्देवस्य सवितु:' (ऋ० ४ ।५३ ।१-७) । निवित्पदानि— ऋ०खि० ५ ।५ ।४ । ऐकाहिका धाय्या—आ०श्रौ० ५ ।१८ ।५ । द्वितीयं द्यावापृथिवीयं निविद्धानसूक्तम्—'कतरा पूर्वा कतराऽपरा' (ऋ० १ ।१८५ । १-११; आ०श्रौ० ७ ।७ ।८) । निवित्पदानि— ऋ०खि० ५ ।५ ।५ । धाय्या—ऐकाहिका (आ०श्रौ० ५ ।१८ ।५) । तृतीयमार्भवं निविद्धान— सूक्तम् 'अनश्वो जातो अनभीषु:' (ऋ० ४ ।३६ ।१-९, आ०श्रौ० ७ ।७ ।२ ।८) । निवित्पदानि— ऋ०खि० ५ ।५ ।६ । तिस्रो धाय्या: ऐकाहिका: आ०श्रौ० ५ ।१८ ।५ । चतुर्थं वैश्वदेवं निविद्धानसूक्तद्वयम् — 'उषासानक्ता' (ऋ० १० ।३६) । इत्यस्य निविद्धान सूक्तस्य स्थाने 'अस्य वामस्य' (ऋ० १ ।१६४ ।१-४१), 'आ नो भद्रा:' (ऋ० १ ।८९ ।१-९९; ऐ० आ०सा० १ ।५ ।३; ५ ।३ ।२) । निवित्पदानि ऋ०खि० ५ ।५ ।७ । शस्त्रपरिधानीया-(ऋ०१ । ८९ ।१० आ० श्रौ० ५ । १८ । १२) । शस्त्वा जप:, शस्त्रयाज्या आ०श्रौ० ५ ।१८ ।१३; ७ ।७ ।२ । **द्र०** अभिप्लवषडहस्य षष्ठेऽहनि होतुर्वैश्वदेवशस्त्र— ।

**महाव्रते तृतीयसवने होतुराग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि तृतीयसवने होतुराग्निमारुतशस्त्रस्य महाव्रतेऽहनि छन्दोगैर्विकल्पेन यज्ञायज्ञीयम्, इलान्दं चेति द्वे सामनी प्रयुज्येते । यज्ञायज्ञीयपक्षे प्रथमं वैश्वानरीयं निविद्धानसूक्तम्—'वैश्वानराय धिषणाम्' (ऋ० ३ ।२ ।१-१५) । निवित्पदानि— ऋ० खि० ५ ।५ ।८ । रौद्री—'स नः करत्यर्वते' (ऋ० १ ।४३ ।६) । द्वितीयं मारुतं निविद्धानसूक्तम्—'प्रयज्यवो मरुतः' ।(ऋ० ५ ।५५ ।१-१०) । निवित्पदानि—ऋ० खि० ५ ।५ ।९) । स्तोत्रियः प्रगाथतृचः—'यज्ञायज्ञा वः' (ऋ० ६ ।४८ ।१-२) । अनुरूपः प्रगाथतृचः 'देवो वः' (ऋ० ७ ।१६ ।११-१२) । जातवेदस्या—'जातवेदसे सुनवाम' (ऋ० १ ।९९ ।१) । तृतीयं जातवेदसीयं निविद्धानसूक्तम्—'इमं स्तोमम्' (ऋ० १ । ९४ ।१-१६, ऐ० आ०सा० १ ।५ ।३) । निवित्पदानि—ऋ०खि० ५ ।५ । १०) । आपोहिष्ठीयतृचादिशिष्टं शस्त्रमग्निष्टोमे होतुराग्निमारुत शस्त्रवद् द्रष्टव्यम् । इलान्दपक्षे पूर्वोक्तं यज्ञायज्ञीय प्रगाथद्वयं परित्यज्य तस्य स्थाने स्तोत्रियस्तृचः— 'अग्ने तव श्रवः' (ऋ० १० ।४० ।१-३) । अनुरूपस्तृचः—'इरज्यन्नग्ने' (ऋ० १० । १४० ।४-६,) ऐ० आ० सा० ५ ।३ ।२) इति विशेषोऽवधेयः ।

**महाव्रते तृतीयसवने होत्रकशस्त्राभाव—** महाव्रतस्याग्निष्टोमसंस्थत्वाद् होत्रकाणां मैत्रावरुणब्राह्मणच्छंस्यच्छावाकानां तृतीयसवने शस्त्राणि न विद्यन्ते ।

**महाव्रतशंसननियमविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि सन्ति केचन शंसननियमविधयः । १. तत्र एकाहाहीनसत्ररूपं महाव्रतं त्रिविधं भवति । सत्ररूपं तन्महाव्रतं दीक्षितो यजमानः शंसति नादीक्षितः । सत्ररूपे महाव्रते होता दक्षितः सन् यजमानो भवति । यजमानत्वात् स एव महाव्रतं शंसति । २. एकाहाहीनयोस्तु होता न यजमानः किन्वन्य एव यजमानः । स स्वार्थेऽग्निष्टोमादौ दीक्षितः एकः, सोमयागराहित्याददीक्षितोऽपरः' इति द्विविधो भवति । तयोर्मध्ये यो दीक्षितः स परकीये महाव्रते शंसनं कुर्यात् नत्वदीक्षितः । ३. तत्र परकीयं महाव्रतं चित्याग्निसहितं तद्रहितं चेति द्विविधं भवति । तयोर्मध्ये चित्याग्निसहिते महाव्रतप्रयोगे शंसनं मुख्यं न तु चित्याग्निरहिते । तत्रापि पित्राचार्यव्यतिरिक्त यजमानार्थं शंसनं न कुर्यात् । ४. संवत्सरसत्रव्यतिरिक्ते क्रतौ क्वापि न शंसेदित्येकः पक्षः पित्राचार्ययोः स्वस्मादन्यत्वेऽपि देहप्रदानेन विद्याप्रदानेन चोपकारित्वात् तयोरर्थे यच्छंसनं तत्स्वार्थमेव भवति । अतो न तत्र निषेधः । इति विशेषोऽवधेयः । तदुक्तम्—'नादीक्षितो महाव्रतं शंसेत्, नानग्नौ, न परस्मै, नासंवत्सर इत्येके, कामं पित्रे वाचार्याय वा शंसेत्, आत्मनो हैवास्य तच्छस्तं भवति । (तु०— ऐ० आ०सा० ५ ।३ ।३) इति महाव्रतशंसननियमविधिरुच्यते ।

**महाव्रताध्ययनसमाप्तिकाल—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतस्याध्ययनं (प्रयोगः) यस्मिन् दिने प्रक्रान्तं तस्मिन्नेव समाप्तं न कुर्यादिति जातूकर्ण्यस्य मतम् । गालवस्य तु कुर्यादिति मतम् । आग्निवेश्यायनस्य कियदेव समापयेदिति मतम् । गायत्र्यादिभ्यस्तृचाशीतिभ्यः प्राचीनमाज्यप्रउगादिकं यदस्ति तदेवैकास्मिन्

दिने समापयेत्। इतरभागं (अवशिष्टभागं) तु दिनान्तरे समापयेत्। यथैवोत्तरभागस्यान्यस्मिन् दिने समापनं तथैवान्यमुत्तरभागमन्यस्मिन् देशे शमयमानः समापयन्नवतिष्ठेत्। इति भिन्ने काले भिन्ने देशे च महाव्रताध्ययनस्य समाप्तिरुच्यते। (तु०— ऐ० आ० सा० ५ ।३ ।३)।

**महाव्रताध्यापननियम—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रते अहनि अध्यापको महाव्रतं स्वस्यान्तेवासिने प्रब्रूयात्। तत्र गुरुः-अनुगन्तव्योऽभिवाद्यश्च भवति। अन्तेवासी च १. य आहूतश्चाप्यधीयीत, लब्धं च गुरवे निवेदयेत्। अक्रोधनोऽनसूयः सर्व लाभं चाहरन् गुरवे सायंप्रातरमत्रेण भिक्षाचार्यं चरेत् भिक्षमाणोऽन्यत्रापात्रेभ्योऽभिशस्ताच्च, इत्येतैर्गुणैरुपेतो भवति। तस्मै नियमवते महाव्रतप्रतिपादकं ग्रन्थं प्रब्रूयात्। एतैर्गुणैर्विहीनाय अनन्तेवासिने च न ब्रूयात्। २. नियमवानपि य आचार्यसमीपे सुश्रूषां संवत्सरं कृत्वा न तिष्ठेत् तादृशायापि न ब्रूयात्। ३. ब्रह्मचारिणे ब्रूयात् अर्थात् अष्टाविधस्त्रीसङ्गरहिताय ब्रूयात्। ४. तथाविधब्रह्मचर्यरहिताय न ब्रूयात्। तथा च स्मर्यते-श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः। विपरीतं ब्रह्मचर्यमेतदेवाष्टाङ्गलक्षणम्। इति। ५. एवंविधव्रतोपेतैर्ब्रह्मचारिभिः सह वसतीति स ब्रह्मचारी, एकस्मादध्यापकादध्येतारः ब्रह्मचारिणः ब्रह्मचारिण उच्यन्ते। तैः सह वसतीति स ब्रह्मचारी तस्मै ब्रूयात् नासहब्रह्मचारिणे। ६. आचार्यो यस्मिन् देशे निवसत्येतं देशमनभिप्राप्ताय न ब्रूयात्। ७. शिष्याणामध्यापनं एकपर्यायं पर्यायद्वयं वा कार्यम्, न ततो भूयः शिष्येभ्यः प्रब्रूयात् अत्यन्तरहस्यत्वेन गोपनीयत्वात्। ८. तिष्ठन्नाचार्यस्तिष्ठन्ते शिष्याय न ब्रूयात्।शयानः शयानाय, नोपर्यासीन उपर्यासीनाय, ब्रूयात्। आचार्यो भूमावेवासीनः भूमिष्ठायशिष्यायैव ब्रूयात् (तु०— ऐ० आ० सा० ५ ।३ । ३)। इति।

**महाव्रत—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र- विकृतौ एकाहप्रकरणे सर्वजिदपरनामधेयो महाव्रतसंज्ञकः पञ्चत्रिंशस्तोमोऽग्निष्टोमसंस्थ एकाहो भवति। स १. महाव्रतेन समानः। तस्यैकाहिकस्य पृष्ठस्तोत्रेषु ब्राह्मणच्छंसिनः पृष्ठे पञ्चनिधनं वामदेव्यमपनीय तस्य स्थाने 'आनो विश्वासु हव्यम् (साम० १४९२-२३) इति प्रगाथतृचे श्यैतं ब्रह्मसाम (ब्राह्मणाच्छंसिनः साम) कार्यम्। 'पुरोजिती वः' (साम० ६९७-९९) इति तृचे गौरीवितस्थाने तस्यामौदलम्। 'महाव्रतस्य पृष्ठे उपाकृते' इत्यादि पृष्ठधर्मा अत्रापि कर्तव्याः (तु०— आ०क० ३ ।६ ।६१-३ वरदराजः। होत्रा सूर्यसम्बन्धि बृहती सहस्राख्यं शस्त्रं शस्यते इति च विशेषोऽवधेयः (तु०—तां० ब्रा० सा० १६ ।७ ।४)।

**महाव्रत—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे पौण्डरीकसंज्ञक एकादशरात्रोऽहीनः। तस्य दशममहोर्महाव्रतं भवति।

**महाव्रते सवनीयपशु—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे महाव्रतेऽहनि विश्वकर्मदेवताक ऋषभः सवनीयस्य चोदकप्राप्तस्य पशोः स्थाने वैकल्पिकः पशुः कार्यः। ऐतरेयिणामयं पशुः

समुच्चीयते (तु०— ऐ० आ० सा० ५ ।१ ।१)।

**महाव्रते सवनीयपश्वङ्गसामिधेनी—**(हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयनप्रकरणे महाव्रतेऽहनि या मूलप्रकृतौ दर्शपूर्णमासेष्टौ 'प्र वो वाजः । इत्याद्या ऋच एकादशसंख्याकाः सामिधेन्यसमाम्नाताः । **द्र०** श्रौ०को० १. भा० पृ० १९८-९९ आ०श्रौ० १ ।२ ।७)। तासामेकादशानां मध्ये 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनानुसारेणाऽऽवृत्तौ सत्यां याः पञ्चदश संपद्यन्ते । ताश्चातिदेशपरम्परया गवामयने विषुवन्नामके मध्यमेऽहनि सवनीयपशौ प्राप्ताः । तत्र तासां पञ्चदशानां मध्ये 'समिध्यमानो अध्वरे' (ऋ० ३ ।२७ ।४)। नवम्याः 'समिद्धो अग्न आहुत' (ऋ० ५ ।२८ ।५) इति दशम्यश्चान्तराले 'पृथुपाजा अमर्त्यः' (ऋ० ३ ।२७ ।५-१०) इति षड् ऋचः प्रक्षेपणीयाः । तथा चाश्वालयन आह-'पृथुपाजा अमर्त्यः इति षड् धाय्याः सामिधेनाम्' (आ०श्रौ० ८ ।६ ।३)। इति । सेयमेकविंशति-संख्या विषुवदहर्गता महाव्रते चोदकेन प्राप्ता । तस्यामेकविंशतौ येयमुपोत्तमा 'समिद्धो अग्न आहुत' इति । तस्या पूर्वं 'समिधाग्निं दुवस्यत'(ऋ० ८ ।४४ ।१-४) इति चतस्त्र ऋचः प्रक्षेपणीयाः । तथा च सति सामिधेनीनां पञ्चविंशतिसंख्या पूर्यते । इति महाव्रते सवनीयपशौ पञ्चविंशतिः सामिधेन्यो भवन्ति (तु०— ऐ० आ०सा० ५ ।१ ।१)। **द्र०** पञ्चदशसामिधेनी-, विषुवत्सवनीयपशुसामिधेनी—, सामिधेनी— ।

**महासूक्त—** (सा०, हौ०) दशर्चताया अधिकं महासूक्तं विदुर्बुधाः । इति पूर्वाचार्यैर्लक्षितं सूक्तं महासूक्तमित्युच्यते । **द्र०** सूक्त— ।

**महास्तोमाहन्—** (सा०, औ०) सोमयज्ञेषु सप्तदशैकविंशादिस्तोमेभ्योऽधिकैश्चतुर्विंशादिस्तोमैर्युक्तानि अहानि महास्तोमान्यहान्युच्यन्ते ।

**महास्तोमाहः स्तोमातिशंसननिमित्तः सूक्तावाप—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अहर्गणेषु होत्रकाणां शस्त्रेषु माध्यन्दिनसवने चतुर्विंशत्रिणवत्रयस्त्रिंशचतुश्चत्वारिंशाष्टाचत्वारिंशैर्महास्तोमैर्युक्तेष्वहःसु यक्षसामगैर्विवृद्धः (वर्धमानो) स्तोमः क्रियते तदानीं यथा स्तोत्रं तथा शस्त्रम्' इति न्यायात् होत्रकैः (मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकैः) माध्यन्दिनसवने प्राकृतां महास्तोमर्कसंख्यामुल्लङ्घ्याधिकानामृचां शंसनाय सूक्तावापः कर्तव्यः । तत्र मैत्रावरुणः—'को अद्य मर्यो देवकामः' (ऋ० ४ ।२५ ।१-८) इत्यष्टर्चं सूक्तमावपेत । ब्राह्मणाच्छंसी 'वने न वा यो न्यधायि'(ऋ० १० ।२९ ।१-८)। इत्यष्टर्चं सूक्तमावपेत । अच्छावाकः— 'आयाह्यर्वाङुपबन्धुरेषाः' (ऋ० ३ ।४३ । १-८)। इत्यष्टर्चं सूक्तमावपेत (ऐ० ब्रा० सा० ६ ।१९ आ०श्रौ० ७ ।१२ ।१)। अत्र अष्टर्चावापे कृते सति तेनाप्यनतिशस्ते सोमे इन्द्रदेवत्यानि मरुच्छब्दवर्जितानि त्रैष्टुभानि सूक्तान्यावपेरन् होत्रकाः । तदुक्तम्-'तैरप्यनतिशस्त ऐन्द्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन्' (आ०श्रौ० ७ ।१२ ।२) इति । सूत्रे 'आवपेरन्' इति पुनर्वचन महरन्तरेष्वपि अस्य विधे प्रापणार्थम् । तेनायमापः सत्रेषु सर्वेष्वहःसु स्तोमातिशंसनार्थं भवति । एतान्यष्टर्चानि अनोप्य अन्यैरन्यैः शंसनं नैव कर्तव्यम्(आ०श्रौ० ७ ।१२ ।३)। सत्रेष्वहरन्तरेषु प्राप्त्यर्थतया अष्टर्चानामेकाहाहीनेषु प्राप्तिर्विधीयते (तु०— नारायणः)।

अथाष्टर्चावापोऽयमुपरिष्टात् पारुच्छेपीनां विधीयते (आ०श्रौ० ७।१२।२)। स च पृष्ठ्यषडहस्य षष्ठेऽहन्येव संभवति। अन्यत्र तु अहरहः शस्यसूक्तानन्तरं विधीयते इति विशेषोऽवगन्तव्यः। द्र० अहर्गण—, सांघातिकाह—, स्तोमातिशंसन—।

**महाहविस्—** द्र० चातुर्मास्य साकमेधसंबन्धि-महापितृयज्ञ—।

**महिमग्रह—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वत्रिरात्रे (अश्वमेधे) द्वितीये उक्थ्यसंस्थेऽहनि 'हिरण्यगर्भः' (मा०सं० २३।१)। इत्यनेन मन्त्रेण सौवर्णेनोलूखनेन, 'यः प्राणतः' (मा०सं० २३।३)। इत्यनेन मन्त्रेण राजते नोलूखनेन च गृह्यमाणौ प्रथमद्वितीयौ ग्रहौ महिमग्रहावुच्यते।

**महिषी—** (सा०) राज्ञो भार्याणां मध्ये प्रथमलब्धा स्त्री महि षीत्युच्यते (तु०—का०श्रौ० १६।३।२० विद्याधरः) सा चाग्निचयनेऽश्वमेधे राजसूयाभिषेके च यथाविहितं कर्म कुरुते।

**महीया—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने अवभृथे कर्मणि ऋत्विजः समिध आदायोन्नेतारमग्रतः कृत्वा तीर्थमनवेक्षमाणा देवयजनदेशं प्रत्यागच्छन्तो महीयां जपन्ति—'अपाम सोममभृता अभूमादर्शा ज्योतिरविदाम देवान्' किमस्मान्कृणवदरातिः किमुधूर्तिरमृतं मर्त्यस्य' (तै० सं० ३।१।४।५ आप०श्रौ० १३।२।२५)। इत्येषा महीया। द्र० अवभृथ—।

**मातृकापूजन—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्र इष्टिपशुसोमयज्ञेषु चादौ पुण्याहवाचनानन्तरं 'गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः॥ धृतिः पुष्टिस्तुष्टिरात्मनकुलदेवता ब्राह्मी माहेश्वरी कौमारी वैष्णवी वाराहीन्द्राणी चामुण्डा गणपतिः। एतासां देवतानां षोडशोपचारैः पञ्चोपचारैर्वा पूजनं मातृकापूजनमुच्यते। द्र० पुण्याहवाचन—, श्रौ०प०नि० पृ० ४९।

**माध्यन्दिनपवमानच्छन्दः सामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं माध्यन्दिनपवमानस्य त्रीणि गायत्री-त्रिष्टुब्-बृहत्यश्छन्दांसि, गायत्राऽऽमहीयव-रौरव-यौधाजयौशनानि पञ्च सामानि भवन्ति। ऐतैश्छन्दोभिः सामभिश्च माध्यन्दिनसवनं पूयते। माध्यन्दिनपवमानस्तवनमेव माध्यन्दिनसवनस्तवनमुच्यते। तेन यावन्ति माध्यन्दिने पवमाने सामानि सन्ति तावन्त्येव माध्यन्दिने सवने सामानि भवन्तीति। तत्राग्निष्टोमे गायत्रं साम त्र्यावृद् भवति। आमहीयवं निधनवद् (ऋगक्षरतो बहिर्भूनिधनं) भवति। यौद्याजयौशने अनिधने (निधनरहिते) भवतः। रोरेवमैडं (इडानिधनं भवतीति विशेषोऽवगन्तव्यः (तु०— तां० ब्रा० सा० ७।३।२;५)।

**माध्यन्दिनपवमानसूक्त —** (औ०) माध्यन्दिनपवमाने त्रीणि सूक्तानि (तृचसूक्तानि) आम्नातानि। द्र० मी०को० पृ० ३१४०।

**माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने 'माध्य-

न्दिनः पवमानो नाम स्तोत्रं अग्निष्टोमे माध्यन्दिने सवने प्रथमम् भवति । ततः चत्वारि च पृष्ठस्तोत्राणि इति पञ्च स्तोत्राणि माध्यन्दिने सवने' । द्र० मी०को० पृ० ३१३९ ।

**माध्यन्दिनसंहिताखिलमन्त्र—**(सा०) १. 'इषे त्वा' इति प्रारभ्य दर्शपूर्णमासाग्निहोत्रपशु चातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्नि सौत्रामण्यश्वमेधसंबद्धा मन्त्रा व्याख्याताः । अथेदानीं खिलानि अनुक्रमिष्यामः । अग्निष्टोमाग्नि सौत्रामण्यश्वमेधपुरुषमेधसर्वमेधपितृमेधप्रवर्ग्योपनिषत्संबद्धा मन्त्रा व्याख्येयाः । त इह (इतः परं) उच्यन्ते । ये अत्र (अग्निष्टोमादिषु) संबद्धा मन्त्रास्तेषां तदेवार्षम् । असंबद्धानां तु आदित्य एव 'आदित्यानीमानि यजूँषीति वा आहुः' इति श्रुतेः । अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः(तु०—मा०सं० २६ ।१ उवटः) । २. 'इषे त्वा' इत्यरभ्य दर्श-पौर्णमासपितृयज्ञाग्निहोत्रोपस्थानपशुचातुर्मास्याग्निष्टोमवाजपेयराजसूयाग्निसौत्रामण्यश्वमेधसंबद्धा मन्त्रा व्याख्याताः । इदानीं खिलानि (खिलमन्त्राः) उच्यन्ते क्वचिद् विनियोगानुक्तेः । तेषां (खिलमन्त्राणां) विवस्वानृषिरन्यस्यानुक्तेः । 'आदित्यानीमानि यजूंषि व्याख्यायन्ते' (बृहदारण्यक० ५ ।५ ।३३) इति श्रुतेः याज्ञवल्क्यो वा 'याज्ञवल्क्येन व्याख्यायन्ते' इति । (तु०— मा०सं० २६ ।१ महीधरः) । ३. इदानीं (२६ अध्यायादौ सूचिताः) प्रवर्ग्याग्निकाश्वमेधोपनिषत्संबद्धाः (ये) मन्त्रास्तान् व्याख्यास्यामः । तत्राग्निकाः 'उग्रश्च' (मा०सं० ३९ ।७ १७ ।८६) इत्येवमादयः । तान् पुनः प्रजापतिरपश्यत् । अग्नि ँ हृदयेन' (मा०सं० ३९ ।८) । इत्येवमादय आश्वमेधिकाः आ अध्यायात् प्रजापतेरार्षम् । परिशिष्टं दध्यङ्ङाथर्वणोऽपश्यत् । 'ऋचं वाचं' (मा०सं० ३६) प्रवर्ग्यस्यादावन्ते च शान्तिप्रकरणेऽध्यायः । विश्वेदेवा आग्निकानामाश्वमेधिकानां च मन्त्राणाम् इह समाम्नानं दिवाकीर्त्यसामान्यात् (तु०— मा०सं० ३६ ।१ उवटः) । ४. पञ्चाध्यायी (३६-४०) आथर्वणेन दधीचा 'दध्यङ् ह वा आथर्वण एत ँ शुक्रमेतं यज्ञं विदांचकार (श० ब्रा० १ ।१ ।२०) इति श्रुतेः । 'उग्रश्च' (मा०सं० ३९ ।७;१७ ।८६) इत्याग्निको मन्त्रः । 'अग्निं हृदयेन' (३९ ।९)-१३) इत्याद्यध्यायसमाप्तिपर्यन्तमाश्वमेधिकम् । तद्वयं वर्जयित्वा शान्तिप्रकरणस्य माद्यन्तयोः 'ऋचं वाचम्' इत्यध्यायेन शान्तिप्रकरणं कार्यम् । स्वाध्याये मन्त्रपाठे प्रवर्ग्य मन्त्रादावध्यायस्य दर्शनात् (तु०—मा०सं० ३६ ।१ महीधरः) । अत्रायमाशयः—पूर्वाध्यायेषु पूर्वप्रकरणेषु च पठितानां मन्त्राणां पुनः परिशिष्टाध्यायेषु पूर्वोक्तप्रकरणेष्वेव पुनः पाठ इति परिशिष्टरूपेण पठिता मन्त्राः खिलानि खिलमन्त्रा इत्युच्यन्ते । तेषां क्वचिद्विनियोगः क्वचिच्च विनियोगः पूर्वोक्तप्रकरणेष्वेव भवतीति । अविनियुक्तानां लैङ्गिको विनियोग इत्युवटः ।

**माध्यन्दिनसवन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं प्रातःसवनानन्तरं उत्तरार्धेक्षणान्ते अध्वर्युः प्राङायन्नाह— 'अभिषोतार एतदाह्वयत ग्रावस्तुतम्, 'एहि यजमान' इति ग्रावस्तुत्प्रैष उच्यते । (श्रौ०प०नि० पृ० २९४) एतत्प्रभृति 'प्रशास्तः प्रसुहीत्युक्ते यदुक्तं तत् पूर्ववत् । अथ माध्यन्दिनं सवनमित्यारभ्य एतदन्तं कर्म माध्यन्दिनमित्युच्यते । द्र० श्रौ०-

प०नि० पृ० ३।४। माध्यन्दिनसवने तत्र ग्रावस्तुत्प्रैषः, माध्यन्दिनसवनीयप्रेक्षणवाचनादि, अवशिष्टसोमार्धमानम्, उष्णीषदानम्, माध्यन्दिनसवनीयाभिषवः, ग्रहेषु माध्यन्दिनसवनीयसोमग्रहणम्, माध्यन्दिनपवमानार्थं सदः प्रसर्पणाम्, दधिधर्मार्थं दध्याहरणप्रैषः, होतृमाद्य-प्रैषः, दधिधर्मप्रचारः, दधिधर्मभक्षः, माध्यन्दिनसवनीयप्रचारः, माध्यन्दिनसवनीयचमसोन्नयनप्रैषः, माध्यन्दिनसवनीयपशुप्रचारः शुक्रामन्थिप्रैषः, माध्यन्दिनसवनीयप्रस्थितयाज्याप्रचारः, दक्षिणानयनम्, दक्षिणाविभाजनम्, सौमिकदक्षिणादानम्, दक्षिणोत्तरवैश्वकर्मणहोमः, दक्षिणोत्तराङ्गहोमोपस्थानम्, दक्षिणासमनुदेशः, मरुत्वतीयग्रहद्वयप्रचारः, तृतीयग्रहपात्रे सोमग्रहणम्, माध्यन्दिनपवमानस्तोत्रोपाकरणम्, माहेन्द्रग्रहप्रचारः, आग्नेयातिग्राह्यग्रहप्रचारः, ऐन्द्रातिग्राह्यग्रहप्रचारः, सौर्यातिग्राह्यग्रहप्रचारः, अतिग्राह्यभक्षणम्, तत आत्माभिमर्शनादि 'प्रशास्तः प्रसुहि' इति प्रैषान्तं कर्म इत्येते पदार्था अनुष्ठातव्या भवन्ति। पदार्थाश्चैते तत्र तत्र वर्णानुक्रमक्रमेण द्रष्टव्या इति विशेषोऽवगन्तव्यः।

**माध्यन्दिनसवन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योति...विशेषवर्जं प्रातःसवनान्ते अध्वर्युणा प्रशास्तः प्रसुहि इत्युक्तः प्रशास्ता 'सर्पत' इत्यृत्विज आज्ञापयेत्। अर्थाद् यदाध्वर्युः 'प्रशास्तः प्रसुहि' इति ब्रूयात्। तदा प्रशास्ता (मैत्रावरुणः) 'सर्पत' इति ब्रूयात्। तता होता दाक्षिणेनोदुम्बरीं गत्वा इतरे च स्वस्य धिष्ण्यस्यार्जवेन गत्वा सर्वेऽपरया द्वारा निष्क्रम्योत्तरां वेदिश्रोणीमभिनिःसर्पन्ति। निःसर्पणानन्तरं वेदिं प्रविश्य वेद्यां ये धिष्ण्यास्तेषां समस्तोपस्थानं कृत्वाऽपरया द्वारा सदोद्वार्ये चाभिमृश्य तूष्णीमृत्विजः प्रसर्पन्ति। यजमानस्तु पूर्वयैव द्वारा प्रतिसर्पणं कुर्यात्। एकाहाहीनेषु सर्वेषु गृहपतिरेवेति विशेषः। ततो ग्रावस्तुतः उपस्थानं प्रसर्पणं च भवति। ग्रावस्तुत् पूर्वया द्वारा हविर्धाने प्रपद्यते। दक्षिणस्य हविर्धानस्य उत्तराक्षशिरसः प्रागुदग् यो देशस्तस्मिन् मन्त्रेण निरसनं कृत्वा राजानमभिमुखोऽवतिष्ठेत् दक्षिणामुखः प्रत्यग्दक्षिणामुखो वा। अथास्मै ग्रावस्तुते अध्वर्युः उष्णीषं प्रयच्छति। तदञ्जलिना प्रतिगृह्य त्रिः प्रदक्षिणं शिरः संमुखं वेष्टयित्वा यदा सोमलताः अभिषवार्थमध्वर्यवः (उपांशुसवने ग्राब्णि) प्रक्षिपन्ति तदा ग्राब्णामभिष्टवनं अभिष्टवनविधिना कुर्यात्। इदं ग्रावस्तोत्रमारभ्य माध्यन्दिनं सवनं मध्यमस्वरेण प्रवर्तते (तु०—आ०श्रौ० ५।११।१-८, नारायणः) ग्रावस्तोत्रानन्तरं दधिधर्मेण चरन्ति प्रवर्ग्यवांश्चेत् क्रतुः। ततो होतृवाद्यप्रैषादि होतुः होत्रकाणां च शस्त्रयाज्याभिः सह सवनसंस्थानिमित्तकर्मान्तं माध्यन्दिनं सवनं भवतीत्यनुसंधेयम्। तत्रत्या हौत्रपदार्थास्तु तत्र तत्र वर्णानुक्रमेण द्रष्टव्याः (तु०—आ० ऐ० श्रौ० ५।११-१२-५।१५।१६ नारायणः)

**माध्यन्दिनसवनग्रह—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने शुक्रः, मन्थी, आग्रयणः, उक्थ्यः, त्रयो मरुत्वतीयाः, माहेन्द्रः, दधिग्रहश्चेति नव ग्रहा भवन्ति। द्र० ग्रह—।

**माध्यन्दिनसवनच्छन्दस्—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योति... तद्विकृतिचैकाहाहीनसत्रेषु माध्यन्दिने प्रयोक्तव्यं छन्दस्त्रिष्टुब्

भवति माध्यन्दिनसवनच्छन्दोऽहनि प्रयुज्यते (तु०—तां० ब्रा० सा० ७ ।३ ।२; ५) ।

**माध्यन्दिनसवनधाराग्रह—** (आध्व०, सा०) । द्र० ग्रहग्रहण— ।

**माध्यन्दिनसवनशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होतुः मरुत्वतीयशस्त्रम्, निष्केवल्यशस्त्रम्, इति द्वे शस्त्रे । होत्रकाणां च मैत्रावरुणशस्त्रम्, ब्राह्मणाच्छंसिशस्त्रम्, अच्छावाकशस्त्रम्, इति त्रीणि शस्त्राणि । मिलित्वा पञ्च शस्त्राणि भवन्ति । तत्र शस्त्रारम्भे 'अध्वर्यो शोंसावोम्' इत्याहावः । स्थानानि माध्यन्दिनसवने पञ्च शस्त्राणि, पञ्चाहावानि च भवन्ति । तदुक्तम् 'पञ्चाहावानि माध्यन्दिने' (आ०श्रौ० ५ ।१० ।१२) । (तु०— का०श्रौ० ९ । १३ ।२९ टि० आ०श्रौ० ५ ।९ ।१-८) । तत्र मरुत्वतीयशस्त्रे चायं संग्रहश्लोकः— प्रतिपदनुचरावनुप्रगाथो हरिनिहवोऽथ बृहस्पतेर्ध्रुवश्च । ध्रुवविधिविहितास्तथाऽथ धाय्या विततनमत्र मरुत्वतीयसूक्ते ॥ (ऐ० ब्रा० सा० ३ ।१५) । निष्केवल्यशस्त्रस्य चायं संग्रहश्लोकः — स्तोत्रियो योऽनुरूपश्च धाय्या प्रागाथिकं तथा । निविद्धानीयं सूक्तं च निष्केवल्ये प्रकीर्तितम् ॥ इति (तु०—ऐ० ब्रा० सा० ३ ।२१) अत्रोक्तम्- 'आत्मा वै स्तोत्रियः, प्रजाऽनुरूपः, पत्नी धाय्या, पशवः प्रगाथो, गृहाः सूक्तम् (ऐ० ब्रा० ३ ।२३) । तत्र आहावः 'शोंसावोम्' इति मन्त्रः । स्तोत्रिये प्रथमा मध्यमोत्तमास्तिस्र ऋचः । याज्यान्ते पठितव्यो वषट्काराः । तदेतत् पञ्चकं शस्त्रस्वरूपमिति चावधातव्यम् । (तु०— ऐ० ब्रा० सा० ३ ।२३) । द्र० सत्रेषु होत्रकाणां प्रतीकषट्क— ।

**माध्यन्दिनसवनस्तोत्र —** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवनस्य माध्यन्दिनपवमानस्तोत्रम्, चत्वारि पृष्ठस्तोत्राणीति पञ्च स्तोत्राणि । तत्र उद्गात्रा पठितव्यः साम्न आदौ हिमित्येवं शब्दो हिंकारः । प्रस्तोत्रा गातव्यः सामावयवः प्रस्तावः । उद्गात्रा गातव्य उद्गीथः । प्रतिहर्त्रा गातव्यः प्रतिहारः अन्ते सर्वैर्गातव्यो भागो निधनम् । तदेतत्पञ्चकं स्तोत्रस्वरूपमिति विशेषोऽवगन्तव्यः । (तु०— ऐ० ब्रा० सा० ३ ।२३) ।

**माध्यन्दिनसवनस्तोत्र —** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे माध्यन्दिनसवने पञ्चदशस्तोमो माध्यन्दिनं पवमानस्तोत्रं वहति । सप्तदशस्तोमः चत्वारि पृष्ठस्तोत्राणि वहति । एवं द्वौ स्तोमौ माध्यन्दिनसवनं वहतः । तु०— तै० सा० मा० ७ ।१ ।१ ।१) ।

**माध्यन्दिनसवनान्ते पात्रासादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अतिग्राह्यभक्षणानन्तर मात्मानमभिमृशते । चमसाप्यायनं न भवति । तान् प्रक्षाल्य स्त्रुचां पश्चात् मैत्रावरुणचमसप्रमुखाः सादयन्ति । अध्वर्युः प्रतिप्रस्थातरिमे चतुर्षु पात्रेष्वपि सृज इति वदति । प्रतिप्रस्थाता ऋतुपात्रे शुक्रपात्रमतिग्राह्यांश्च मार्जालीये प्रक्षाल्य स्वस्थाने सादयति । तदिदं माध्यन्दिनसवनान्ते पात्रसादनमुच्यते । तत्र मैत्रावरुणचमसमित्यादित्रयः उक्थपर्यायाः प्रातः सवनवद् भवन्ति । सर्वत्र ग्रहेषु सोमग्रहणे मन्त्रे 'इन्द्राय त्वा जुष्टं गृह्णामि' इति । सादन

मन्त्रः एष ते योनिरिन्द्राय त्वा' इति । भक्षणमन्त्रे 'इन्द्रेण पीतस्य' इति यजमानेन सह हविर्धानं गत्वा आधवनीयमुत्तानं कृत्वा तस्मिन् सर्वा वसतीवरीरेकधानाश्चावनीय मृष्ट्वा यथास्थानं न्युब्जति । सवनप्रायश्चित्ते अग्निर्मूर्धा' इत्यस्य स्थाने 'भुवो यज्ञस्य रजसश्च नेता' इत्यृचा होमः । इति विशेषोऽवगन्तव्यः । द्र० अतिग्राह्यभक्षण—, श्रौ०प०नि० पृ० ३०४ ।

**माध्यन्दिनसवनीयचमसादिभक्ष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु षड्ढोत्राः संयोज्याग्रेण होतारमुपविश्याऽज्याऽग्नीदित्यादि इडोपह्वानानन्तरं प्राशित्रहरणं तूष्णीमन्तर्वेदिप्रणीतानिनयनम् । इडोपहूतांश्चमसान् भक्षयन्ति । नेष्ट्रनन्तरमच्छावाकः प्रातः सवनवत् । 'भक्षेहि' इति मन्त्रे 'रुद्रवद्गणस्येति माध्यन्दिनस्य सवनस्य त्रिष्टुप्छन्दसः'.इति यथास्थानमूहः । प्रातः सवनवन्नाराशंससादनम्, यजमानस्य हविः शेष प्राशनम्, पत्न्या हविष्यभोजनम् । सोऽयं माध्यन्दिनसवनीयचमसादिभक्षण उच्यते द्र० श्रौ०प०नि० पृ० २९८-९९ ।

**माध्यन्दिनसवनीयचमसोन्नयनप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सर्वेषां सवनीयानां प्रातःसवन एव निर्वापे पशुपुरोडाशेन प्राशित्रान्तेन प्रचर्य माध्यन्दिनीयैः प्रचर्य प्राङायन्नाह—'उन्नी० हि होतुश्चमसमनून्नयध्वम्, उभयतः शुक्रान् कुरुध्वम्, अच्छावाकस्य चमसाध्वर्योऽपि त्वं चमसमुन्नयस्व प्रतिप्रस्थातश्चतुभिर्मा शकलैः प्रोक्षिताप्रोक्षितैः प्रत्युपलम्बस्व' इति । सोऽयं माध्यन्दिनसवनीयचमसोन्नयनप्रैष उच्यते । द्र० श्रौ० प० नि० पृ० २९८ ।

**माध्यन्दिनसवनीयनाराशंससादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युर्होत्रे पात्रं प्रदाय तेन भक्षिते उक्तमन्त्रेण भक्षयति । होतृचमसं होत्रध्वर्युप्रतिप्रस्थातारः 'नराशंसपीतेन भक्षयन्ति । ब्रह्मादयो होतारमुपहूय नराशंसपीतेन स्वस्वचमसम् । आत्मानमभिमृश्याप्याय्य नाराशंसान् सादयन्ति इति । द्र० श्रौ०प०नि० पृ० ३०२ ।

**माध्यन्दिनसवनीयनिर्वाप—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पूर्ववत् स्तोत्रे प्रक्रान्ते अग्नीत् सवनीयान् निर्वप इत्याह । आग्नीध्रः प्रथममेकादशकपालं पुरोडाशं सवनीयांश्चामिक्षावर्जं तन्त्रेण निर्वपति । अयं माध्यन्दिन सवनीयनिर्वापः । द्र० श्रौ०-प०नि० पृ० २९१ ।

**माध्यन्दिनसवनीयपशुपुरोडाशप्रचार—** द्र० माध्यन्दिनसवनीयप्रचार— ।

**माध्यन्दिनसवनीयपुरोडाशानुवाक्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु 'माध्यन्दिनस्य सवनस्य धानाः' (ऋ० ३ ।५२ ।५) इति माध्यन्दिनसवनीयपुरोडाशस्यानुवाक्या भवति । द्र० श्रौ०को० २ भा० पृ० ३६८ ।

**माध्यन्दिनसवनीयपुरोडाशप्रैष—**(हौ०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु 'होता यक्षद् इन्द्र हरिवाँ इन्द्रो धाना अत्तु...प्रस्थिताञ्जुषाणो वेतु होतर्यज' (ऋ० खि० ५ ।७ ।४ आ०) द्र० श्रौ०को० २.

भा० पृ० ३६८ । इति माध्यन्दिनसवनीयपुरोडाशस्य प्रैषः ।

**माध्यन्दिनसवनीयपुरोडाशयाज्या—**(हौ०) सोमयज्ञेषुप्रकृति... चैकाहाहीनसत्रेषु 'ये३यजामहे इन्द्रं हरिवाँ इन्द्रो धाना अत्तु...प्रस्थिताञ्जुषाणो वेतु वौ३षट्' (ऋ०खि० ५ ।७ ।४ श्रौ०को० २ भा० पृ० ३६८ । इति माध्यन्दिनसवनीयपुरोडाशस्य याज्या । तत्र प्रैषः एव 'होता यक्षत्' इत्यस्य स्थाने ये३यजामहे', होतर्यज इत्यस्य स्थाने 'वौ३षट्' इति प्रयुक्तः याज्या भवतीति विशेषोऽनुसन्धेयः ।

**माध्यन्दिनसवनीयप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु निर्णिज्य पात्रं प्रयच्छति । तूष्णीं शाखां मेक्षणं च प्रहृत्योपवेषं निरस्यति । आग्नीध्रः भिन्नपात्र्यां पुरोडाशं पूर्ववत्सवनीयांश्चोद्वास्य खरे सादयति । अध्वर्युः यजमानेन आसन्नभिमर्शने कृते आग्नेयेन पशुपुरोडाशेन पचर्य जुहूपभृतोरुपस्तृणान् आह—'माध्यन्दिनस्य सवनस्येन्द्राय पुरोडाशानामवदीयमानानामनुब्रू३हि' इति सवनीयानां द्विर्द्विरवद्यति, अभिघारयति प्रत्यनक्ति । उपभृति पुरोडाशस्यावदाय सवनीयानामवद्यति, द्विरभिघारयति, न प्रत्यनक्ति । प्रथमं जुहूपभृतोरुपस्तीर्य पुरोडाशस्योपभृत्याप्युपस्तीर्य नाभिघार्येष्ट्वा तस्योपरि सवनीयानामवदानं जुह्वामुपस्तरणं वा । 'माध्य०डाशान् प्रस्थितान् प्रेष्य' इति प्रेष्यति । ततः स्विष्टकृतं हुत्वा प्रातःसवनबद्धोतुरग्रे इडापात्रं निदधातीति । अयं माध्यन्दिनसवनीयप्रचार उच्यते । श्रौ०प०नि० पृ० २९८ द्र० ।

**माध्यन्दिनसवनीयप्रस्थितयाज्या—** द्र० प्रस्थितयाज्या— ।

**माध्यन्दिनसवनीयप्रस्थितयाज्याप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु नेष्टृचमसहोमानन्तरं अच्छावाकचमसहोमः । सोऽयं माध्यन्दिनसवनीयप्रस्थितयाज्या प्रचार उच्यते । श्रौ०प०नि० पृ० २९८ द्र० ।

**माध्यन्दिनसवनीयप्रेक्षणवाचनादि—** (याज०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः यजमानाभिषोतृभिश्च सह पूर्वया द्वारा हविर्धानं प्रविश्य होतृचमसे आधवनीयापोऽवनीय चर्मणि निधाय ताः प्रेक्षमाणं यजमानं वाचयति—'निग्राभ्यास्थ' इत्यादि पूर्ववत् । ता यजमानाय चतुर्णामन्यतमं ग्रावाणमादत्ते 'देवस्य त्वा' इत्यादि मन्त्रेण । 'ग्रावासि' इत्यादिमन्त्रेणाभिमन्त्रयते । इति । तदिदं माध्यन्दिनसवनीयप्रेक्षणवाचनादि उच्यते । द्र० श्रौ०प०नि० पृ० २९४ ।

**माध्यन्दिनसवनीयशुक्रामन्थिप्रचार—** द्र० शुक्रामन्थिप्रचार— ।

**माध्यन्दिनसवनीयशुक्रामन्थिप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु (अध्वर्युः) आह— 'माध्यन्दिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो० प्रेष्य' इति । सोऽयं माध्यन्दिनसवनीयशुक्रामन्थिप्रैष उच्यते । तत्र प्रैषात् पूर्वं प्रातःसवनवच्छुक्रामन्थिप्रचाराय सर्वांश्चमसानुन्नयन्ति इति विशेषोऽवगन्तव्यः । द्र० श्रौ०प०नि० पृ० २९८ ।

**माध्यन्दिनसवनीयाभिषव—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... । अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यजमानः अद्भिरभ्युक्ष्य राजवासोऽध्वर्यवे प्रयच्छति । यजमानोऽद्भिरभ्युक्ष्यराजवासोऽध्वर्यवे अध्वर्युः पूर्ववदुपसृजति । सम्प्रयौति । तिरश्चर्यफ-

लके अभिमृशति। यजमानं वृद्धिर्वाचयति। अभिषोतारः प्रातःसवनवत् पर्युपविशन्ति। अध्वर्युः आहरोपसृज इत्याह। उपर्यर्धे होतृचमसेऽशून् परिप्लावयन्ति—'प्रागपाग्' इत्यादिमन्त्रेण अंशूंश्चर्मणि निधाय होतृचमसस्था अपो राज्ञि प्रक्षिप्य राजानं प्रविभज्याकृष्याह—'इहा ३ इहा ३ इहा ३' इत्युक्त्वा यावद् रसनिस्राव मपरिमितमभिषुण्वन्ति-आहरोपसृजेत्यादि। उन्नेता आधवनीयाहुदञ्चनेन सम्भरणीये उपसृजति। प्रागपागित्यादि सम्भरणीयेंऽशून् परिप्लावयन्ति। अंशून् निधाय संभरणीयजलेन राजानमुपसिच्य विभज्याकृष्याह इहा३ इहा३ इहा३ इत्युक्ता ग्रावाण मूर्ध्वमुत्क्षिप्य नीचैः पातयन्ति इत्यादिक्रीडारूपेणाभिषुण्वन्ति अपरिमितं यावद्रसनिस्रावम्। पुनराहरोपसृजेत्यादि होतृचमसे तूष्णीमंशून् परिप्लावयन्ति। अभिषुत्य राजानं हस्तेन निष्पीड्य सम्भरणीये राजानं सम्भृत्यान्तरेणेषे उन्नेत्रे प्रयच्छति। उन्नेता आधवनीयापोऽम्भ्रणान्तरेऽवदीयाऽऽधवनीये पवित्रं वितत्य सम्भरणीमेव नयति। एष एकः पर्यायः। अम्भ्रणान्तरस्था आधवनीयापो होतृचमसेऽवनीय 'श्वात्रा स्थेत्यादि। एवं द्वितीयम्। एवं तृतीयम्। तृतीयपर्यायस्य तृतीयेऽभिषवे इहा३ इत्यस्य स्थाने बृहत् बृहत् बृहत्। ऋजीषं चर्मणि निधाय सम्मुखान् ग्राब्णः कृत्वा' ग्रावामुखे ऋजीषं चतुर्धा कृत्वा व्यपोहति। उद्गातृभ्यः प्रात- 'सोमोऽभिषुत' इति। सोऽयं माध्यन्दिनसवनीयाभिषव उच्यते। **द्र०** श्रौ०प०नि० पृ० २९५।

**माध्यन्दिनसवने अच्छावाकस्य प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीये अच्छावाकचमसप्रचारे 'इन्द्राय सोमाः प्रदिवो वि दानाः' (ऋ० ३।३६।२) इति। अच्छावाकस्य प्रस्थितयाज्या (याज्या) भवति। **द्र०** आ०श्रौ० ५।५।१५-१७, **द्र०** प्रस्थितयाज्या—।

**माध्यन्दिनसवने अध्वर्योः प्रतिगर—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः माध्यन्दिने सवने शंसाऽऽमोदैवोम् इति मन्त्रेण (प्रतिगरेण) होतारं प्रतिगृह्णाति (प्रत्युत्तरं ब्रूयात् (तु०—ऐ० ब्रा० सा० ३।१२) **द्र०** प्रतिगर—।

**माध्यन्दिनसवने अध्वर्योः शस्त्रोत्तरकालीनमन्त्र—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होत्रा शस्त्रोत्तरकालीने 'उक्थ्यं वाचीन्द्राय' इति मन्त्रे पठिते सति अध्वर्युः 'ओमुक्थशा' इति चतुरक्षरं मन्त्रं ब्रवीतीति मन्त्रोऽध्वर्योः शस्त्रोत्तरकालीनो मन्त्र उच्यते। (तु०— ऐ० ब्रा० सा० ३।१२)।

**माध्यन्दिनसवने आग्नीध्रस्य प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीये आग्नीध्रचमसप्रचारे 'आ पूर्णो अस्य कलशः स्वाहा...' (ऋ० ३।३२।१५) इति। आग्नीध्रस्य प्रस्थितयाज्या (याज्या) भवति (**द्र०** आ०श्रौ० ५।५।१५-१७।१९ प्रस्थितयाज्या—।

**माध्यन्दिनसवने उन्नीयमानसूक्तानुवचन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिन-

सवने सवीयपुरोडाशस्य 'होता यक्षदग्निं पुरोडाशानाम् (ऋ० खि० ६ ।७ ।४३) इति स्विष्टकृत्प्रैषानन्तरं यदा चमसाः उन्नीयन्ते सोमेन पूर्यन्ते तदानीमध्वर्युणा प्रेषितो मैत्रावरुणः-'असावि देवं गो ऋचीकमन्ध...' (ऋ० ७ ।२१ ।१-१०) इति दशर्चं सूक्तमन्वाह— **द्र०** आ०श्रौ० ५ ।५ ।१४ ऐ० ब्रा० ६ ।९ श्रौ०को० २ भा० पृ० २६८, उन्नीयमानसूक्तानु- वचन— ।

**माध्यन्दिनसवने निविदां स्थान—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवनप्रयोगे शस्त्राणां निविद्धानीयसूक्तेषु मध्यतो निविदो धीयन्ते। तदुक्तम्—'मध्यतो माध्यन्दिने (निविदः) धीयन्ते (ऐ० ब्रा० ३ ।१०) इति।

**माध्यन्दिनसवने नेष्टुः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीये नेष्टृचमसप्रचारे तवायं 'सोमस्त्वमेह्यर्वाङ्'.. (ऋ० ३ ।३५ । ६) इति। नेष्टुः प्रस्थितयाज्या (याज्या) भवति। (तु०— आ०श्रौ० ५ ।५ ।१५-१७ ।१९)। **द्र०** प्रस्थित- याज्या— ।

**माध्यन्दिनसवने पोतुः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीयो पोतृचमसप्रचारे 'अर्वाङेह सोमकामं त्वाऽऽहुः' (ऋ० १ ।१०-४ ।९) इति। पोतुः प्रस्थितयाज्या (याज्या) भवति (तु०—आ०श्रौ० ५ ।५ । १५-१७;१९)। **द्र०** प्रस्थितयाज्या— ।

**माध्यन्दिनसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्या—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रअग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीये ब्राह्मणाच्छंसिचमसप्रचारे एवा याहि प्रत्नथा मन्दतु।' (ऋ० ६ ।१७ ।३) इति ब्राह्मणाच्छंसिनः प्रस्थितयाज्या (याज्या) भवति। (तु०—आ०श्रौ० ५ ।५ ।१५-१७;१९)। **द्र०** प्रस्थित- याज्या— ।

**माध्यन्दिनसवने भक्षिताप्यायित नाराशंसचमसभक्षमन्त्र—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'नराशंसपीतस्य देव सोम ते मतिविद ऊर्वैः पितृभिर्भक्षितस्य भक्षयामि' इति माध्यन्दिनसवने नाराशंसभक्षमन्त्रः। तु०— ऐ० ब्रा० ७ ।३४।

**माध्यन्दिनसवने माध्यन्दिनपवमानार्थं सदः प्रसर्पण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय निःसर्पति। उद्गात्रादिषु प्रातः सवनवत्समन्वारब्धेषु आहवनीये स्रुवाहुतिं जुहोति- 'विश्वे देवा मरुत० स्याम स्वाहा' इति। यथावेदमितरे। द्रप्साहुती प्रातःसवनवद्यजमानः। एतयैव प्रतिप्रस्थाता। अध्वर्युः पूर्ववत् पवमानार्थं सदः प्रसर्पतीति। तदिदं माध्यन्दिनसवने पवमानार्थं सदः प्रसर्पणमुच्यते। तत्र अध्वर्युः प्रसर्पणात् पूर्वं द्रोणकलशमुपर्यर्धं कृत्वा पयसा हिरण्येन सक्तुभिः क्रमेण श्रीत्वा परिप्लुपात्रं प्रास्य द्रप्सानुमन्त्रणम्। उन्नेतारमाह-'अतिरिक्तं पूतभृतं कुरु, पवमानस्य ग्रहान् ग्रहीष्यामि' इति। उन्नेता पूतभृति पवित्रं वितत्याधवनीयाद् द्वौ वा त्रीन् वोदञ्च मानयति। अध्वर्युः अरिक्तौ पूतभृदाधवनीयौ पयसा सक्तुभिः घृतेन च श्रीत्वा द्रोणकलशमभिमृशति- 'उप० सीन्द्राय त्वा' इति। अनेनैव

मन्त्रेणाधवनीयं पूतभृतं च । उन्नेतारमाह– 'उन्ने० न्युब्जतात्' इति । उन्नेताऽवकाशोपस्थानान्ते तथा करोतीति विशेषोऽवगन्तव्यः । द्र० श्रौ०प०नि० पृ० २९६ ।

**माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रोपाकरण—** (अध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. उन्नेता पूतभृति पवित्रं वितत्य द्रोणकलशमवनीय मृष्ट्वा न्युब्जति । अध्वर्युः अप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ्ङाद्रुत्य माध्यन्दिनपवमानस्तोत्रमुपाकरोतीति । तदिदं माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रोपाकरणमुच्यते । द्र० श्रौ०प० नि० पृ० ३०२ । २. माध्यन्दिनपवमानस्तोत्रारम्भः सदसि कुर्यादध्वर्युः । न प्रातःसवनवत् चात्वालसमीपे सदसो बहिः । तदुक्तम्—'सदसि पवमानोपाकरणम्' (का०श्रौ० १० ।१ । १६ विद्याधरः ।

**माध्यन्दिनसवने मैत्रावरुणस्य प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीयमैत्रावरुणचमसप्रचारे 'य ई पाहि य ऋजीषी तरुत्रः'...(ऋ० ६ ।१७ ।२) इति मैत्रावरुणप्रस्थितयाज्या (याज्या) भवति । आ० श्रौ० ५ ।५ ।१५-१७ ।१९) । द्र० प्रस्थितयाज्या— ।

**माध्यन्दिनसवने होतुः प्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रस्थितसोमानां माध्यन्दिनसवनीये लीने होतृचमसप्रचारे 'पिबा सोममभि यमुग्र०' (ऋ० ६ ।१७ ।१) इति होतुः प्रस्थितयाज्या (याज्या) भवति । (तु०—आ०श्रौ० ५ ।५ ।१५- द्र० प्रस्थितयाज्या—) ।

**माध्यन्दिनसवने होतुः शस्त्रोत्तरकालीनमन्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने होता शस्त्रं पठित्वा 'उक्थं वाचीन्द्राय' इति षडक्षरं मन्त्रं ब्रवीति । अयं मन्त्रो होतुः शस्त्रोत्तरकालीनो मन्त्र उच्यते । (तु०— ऐ० ब्रा० सा० ३ ।१२) ।

**माध्यन्दिनसवने होतुराहाव—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होता माध्यन्दिनसवने 'अध्वर्यो शोंसावोम्' इति मन्त्रेण (आहावेन) अध्वर्युमाह्वयते (त्वयानुज्ञादेयेति) । द्र० १. आहाव-, ऐ० ब्रा० ३ ।१२ ।

**मानसग्रह—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहेऽविवाक्यस्य दशमस्याह्नोऽङ्गं मानसं (ग्रहः) भवति । तदुक्तम्— 'अनया त्वा पृथिव्या समुद्ररसया प्रजापतये त्वा जुष्टं मानसं प्राजापत्यं गृह्णाति' इति । तथा च 'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इत्येषा श्रुतिः दशमस्याह्नोऽङ्गं मानसमिति बोधयतीत्यवधेयम् । दशमेऽहनि मानसाय प्रसर्पन्ति । द्र० मी०को० पृ० ३१४१ द्र० अविवाक्य— ।

**मारुतवेदि—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासपर्वणि उत्तरवेदिसहितायाः पाशुबन्धिक्याः वेदेः त्रयोदशाङ्गुलं दक्षिणतो मुक्त्वा प्रतिप्रस्थाता दार्शपौर्णमासिकीं वेदिं करोति । उभे पश्चिमपार्श्वे समे भवतः । पूर्वपार्श्वे विषमे । उत्तरा दीर्घा, दक्षिणा ऊना । प्रतिप्रस्थातृवेदेरुत्तरश्रोण्ये-

सवद् अध्वर्युर्वेदे: दक्षिणत: त्रयोदशाङ्गुलमात्रात् परौ भवत:। उभयोर्वेद्योरुत्तर एव उत्कर:। इयं दार्शपौर्णमासिक्या वेद्या तुल्या मारुती वेदि: प्रतिप्रस्थातृवेदिरिति चोच्यते। द्र० श्रौ०प०नि० पृ० ८५, पाशुबन्धिकवेदि—।

**मारुतीप्रचार—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासपर्वणि (अध्वर्युरष्टमे (समानयने) सर्वं समानयति। प्रतिप्रस्थाता उपभृतिं अनुयाजार्थमाज्यं परिशेषयति। याजमानं वैश्वदेववत्। अध्वर्यु: प्रयाजशेषेण (आज्येन) ध्रुवामभिघार्य आग्नेयादिषु हवींष्यभिघारयति। तत: प्रतिप्रस्थाता ध्रुवाभिघार्य मारुतीयामिक्षामभिघार्योपभृतमभिघारयति। ततोऽध्वर्युर्वारुणीमेक (आमिक्षां) एककपालं पृषदाज्यं च अभिघारयति। उभावाज्यभागान्तं प्रचरत:। तत: प्रतिप्रस्थातोपरमति। अध्वर्युराग्नेयादिषड्ढविर्भिर्यजति। तत उपरमति। प्रतिप्रस्थाता मारुत्या आमिक्षाया: प्रथमावदानेन सह शमीपर्णकरीरसक्त्वामिक्षास्तोकानामर्धमवद्यति। द्वितीयावदानेन सह शमीपर्णार्धं मेषीं चावद्यति। 'प्राणैर्ऋध्यासमिति यजमानानुमन्त्रणम्। तत: प्रतिप्रस्थातोपरमति। सोऽयं मारुतीप्रचार: मारुतीयाग इति चोच्यते। द्र० समानयन—। श्रौ०प०नि० पृ० ९३।

**मारुतीयाग—** द्र० मारुतीप्रचार—।

**मार्जन—** (आध्व०, सा०)—मार्जनं द्विविधं चोदितं लैङ्गिकं च। तत्र परिस्तरणैरञ्जलिमन्तर्धाय आसेचयते' (आ०श्रौ०) सब्रह्मकाश्चात्वाले मार्जयन्ते (आ०श्रौ०) इति चोदितम्। प्राच्यां दिशि देवा ऋत्वजो मार्जयन्ताम् (आ०श्रौ०) इति लैङ्गिकम्।

**मार्जालीय—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. महावेद्या उत्तरांसीयाच्छंकोर्वेद्यन्ते दश प्रतीच: प्रक्रमान् प्रक्रम्य पञ्चारित्नि अन्तर्वेद्यर्धम्, अर्ध बहिर्वेदि आग्नीध्रागारं कृत्वा परिश्रित्य दक्षिणतो द्वारं करोति। एतेन दक्षिणो मार्जालीयो व्याख्यात:। तस्योदीचीं द्वारं कुर्वन्तीति विशेष:। तदिदं गृहं महावेद्या दक्षिणतो निर्मितं मार्जालीयपदेनोच्यते। श्रौ०प०नि० पृ० २४४ द्र०। २. सदस: पूर्वद्वाराद् दक्षिणतो ग्रहचमसादिप्रक्षालनस्थानं मार्जालीय उच्यते। ३. मार्जालीयो नाम सौमिकवेदेर्दक्षिणभागेऽवस्थित: स्थानविशेष: (बौ० ध० सं० १।६।१३।३२)। ४. मार्जालीयस्य चतुर्वारं विहरणं सोमे। द्र० मी०को० पृ० ३१४५।

**मार्जालीयखर—** द्र० मार्जालीयधिष्ण्य—।

**मार्जालीयधिष्ण्य—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु- १. आग्नीध्रीयखरवन्मार्जालीये खरं करोति- 'शुन्ध्यूरसि मार्जालीयो रौद्रेण० सी:' इति। सोऽयं खरो मार्जालीयधिष्ण्यमुच्यते। द्र० श्रौ०प०नि० पृ० २४७-४८। २. सदोहविर्धानयोर्मध्ये योऽयं दक्षिणोत्तरायत: संचारस्तस्योत्तरभागे यथाऽऽग्नीध्रीयो धिष्ण्यस्तथा दक्षिणभागे मार्जालीयनामको धिष्ण्य:। (ऐ० आ० सा० ५।१।१) स दक्षिणोत्तरभेदेन द्विविध: (तु०—तत्रैव ५।१।२)।

**मासाहुति—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयण प्रकरणे ब्रीहिश्यामकाग्रयणे एककपालहोमानन्तरं

आज्यस्थाल्याः स्रुवेण जुहोति—'मधुश्च स्वाहा' इत्यादिभिः। ता इमा आहुतयः मासाहुतय उच्यन्ते। द्र० एककपालहोम-। श्रौ०प०नि० पृ० ७७।

**माहेन्द्रग्रहग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने अध्वर्युः द्रोणकलशात् परिप्लुपात्रेण शुक्रपात्रे माहेन्द्रं गृह्णाति—'महाँ इन्द्रो० वावृधे उप० महेन्द्राय० मि०' इति। परिमृज्य सादयति—'एष ते योनिर्महेन्द्राय त्वा' इति। तदिदं माहेन्द्रग्रहग्रहणमुच्यते। तत्र माहेन्द्रग्रहग्रहणात् पूर्वमध्वर्युः तत्रैव पात्रं निधाय प्राङेत्य शुक्रपात्रमाददान आह—'उन्नेतर्यदेदं माहेन्द्रं ग्रहं गृह्णामि अथोदञ्चं राजानं पूतभृतमभिसंपातयतात्। दशाभिः द्रोणकलशं मृष्ट्वा न्युब्जतात्' इति षेष्यतीति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० ३०२।

**माहेन्द्रग्रहप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने प्रतिप्रस्थातृनेष्ट्रादयोऽभिषोतारश्चर्मणि ग्रावभिः शुक्राभिषवं कुर्वन्ति स्तोत्रसमाप्तिपर्यन्तम्। तथा आग्नीध्रो मुसलेनोलूखलमुच्चैर्वादयति। अध्वर्युः 'अग्नीत् सवनीयान् निर्वप' इत्याह। स्तोत्रसमाप्त्यनन्तरमाग्नीध्रः प्रातः सवनवद् आमिक्षावर्जं सवनीयान् निर्वपति। अध्वर्युः इडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्राङेत्य माहेन्द्रं ग्रहमुद्यच्छते। चमसाध्वर्यवो नाराशंसान्। पूर्ववदाश्रावणाद्यं वषट्कारहोमान्तं भवति। सोऽयं माहेन्द्रग्रहप्रचार उच्यते।

**माहेन्द्रस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृति चैकाहाहीनसत्रेषु माध्यन्दिनसवने १. 'अभित्वा शूर नो नुमः' (साम० ६८०-८१) इति प्रगाथतृचे गीयमानं माहेन्द्रस्तोत्रं रथन्तरपृष्ठं) पृष्ठमित्युच्यते (तु०—का०श्रौ० १०।३।१२ विद्याधरः)। २. माहेन्द्र ग्रह याज्याभ्यासस्तोत्रं पृष्ठम् (रथन्तरपृष्ठम्) (का०श्रौ० १२।३।७ विद्याधरः)। ३. माहेन्द्रं इत्यादीनि चत्वारि (रथन्तर-वामदेव्यः-नौधसकालेयानि) पृष्ठस्तोत्राणि ज्योतिष्टोमे। द्र० मी०को० पृ० ४. माहेन्द्रस्तोत्रादीनि चत्वारि पृष्ठानि ज्योतिष्टोमे न सर्वाणि षडपि ३१५०।

**माहेन्द्रस्तोत्रार्थं प्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने अध्वर्युः द्रोणकलशस्थं सर्वं सोमं पूतभृत्कलशे निनीय 'अभि त्वा शूर' (साम० ६८०-८१) इति प्रगाथतृचे गीयमानं माहेन्द्रस्तोत्रं (पृष्ठं) उपाकृत्य 'प्रैतु होतुश्चमसः ब्रह्मणः...होत्राणां चमसाध्वर्यवः उपावर्तध्वम्' (का०श्रौ० ९।११।३) इति प्रैषेणानुज्ञां दत्त्वा 'अभिषोतारोऽभिषुणुतौलूखलानुद्वादयत, अग्नीदाशिरं विनय सौम्यस्य वित्तात्' इति प्रेष्येत् इति माहेन्द्रस्तोत्रार्थं प्रैष उच्यते। (तु०—का०श्रौ० १०।३।१२)। इह प्रकृतौ माहेन्द्र स्तोत्रोपाकरणं (का०श्रौ० ९।६।३४-३६। ११।३) इति विहितं भवति। विकृतौ पृष्ठ्यषडहस्य प्रथमेऽहनि तु तत्स्थाने रथप्रैषो विधीयते। 'उपावर्तध्वम्' इति प्राकृतेऽपि मन्त्रः प्रवर्तन एव (का०श्रौ० १२।३।७ विद्याधरः)

**मिथ्याप्रत्यय—** (सा०) यो हि जनित्वा प्रध्वंसते नैतदेवमिति स मिथ्याप्रत्यय उच्यते। कालान्तरे पुरुषान्तरे अवस्थान्तरे देशान्तरे वा विपर्येति। तस्मादवितथः। द्र० मी०को० ३१५२।

**मित्रावरुणयोरयन—** द्र० सारस्वतसत्र—।

**मीमांसा—**(सा०) १. समस्तवैदिक तर्कोपसंहारात्मिका वेदशब्दवाच्या 'विधिर्विषयस्तर्कश्च वेदः' इत्येतस्मिन् दर्शने सति भवति। मी०को० पृ० ३१५३। २. मीमांसा च इतिकर्तव्यतात्वेन अङ्गम्। तदुक्तम् 'धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इति कर्तव्यताभागं मीमांसा पूरयिष्यति। मी०को० पृ० ३१५३।

**मीमांसाविषय—** (सा०) द्वादशलक्षण्यां मीमांसायां प्रमाण-भेद-शेषत्व-प्रयुक्ति-क्रम--अधिकार-सामान्यातिदेश-विशेषा-तिदेश--ऊह-बाध-तन्त्र-प्रसङ्ग इति द्वादश विषयाः विचारिताः (तु०— मी०को० पृ० ३१५३)।

**मीमांसा संप्रदाय—** (सा०)

मीमांसासम्प्रदायः

जैमिनिः वादरिः

चोदना प्रयोजन (फल) प्रधाना चोदना नियोग (आज्ञा) प्रधाना

शबरः — शबरः

कुमारिलमतम् (भाभमृतम्) प्रभाकरमतम् (गुरुमतम्)

इति द्विधा विभक्तो मीमांसा संप्रदायस्तैस्तैराचार्यैः प्रतन्यते।

**मुखविमार्जन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पत्नीयोक्त्रविमोचनानन्तरं होता (आश्वलायने), अध्वर्युः (बोधायने), तद्योक्त्रं पत्यञ्जलौ निधाय तस्मिन् जलमानयति मन्त्रेण। पत्नी तु तेन जलेन स्वमुखमार्जनं बाह्याङ्गे करोतीति। तदिदं मुखविमार्जनमुच्यते। द्र० पत्नीयोक्त्रविमार्जन—, द्र० श्रौ०प०नि० पृ० ३९।

**मुखसंमार्ग—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अध्वर्य्वाग्नीध्रान्वारम्भानन्तरं होता स्फ्यवेष्टनेध्मसंनहनाग्रैः सकृन्मन्त्रेण द्विस्तूष्णीं स्वमुखमध्यात्मं स्पृशति। तदेतत्स्पर्शनं मुखसंमार्ग उच्यते। द्र० अध्वर्य्वाग्नीध्रान्वारम्भ—, श्रौ० प० नि० पृ० २७।

**मुञ्जकुलाय—** (सा०) सोमयज्ञेषु अग्निचयने चितिचयने उखामध्ये प्रक्षेपार्थं मुञ्जतृणनिर्मितं पक्षिनीडं मुञ्जकुलाय उच्यते।

**मुसल—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु चोपयोगि उलूखलार्धत्रिगुणायामं खादिरकाष्ठनिर्मितं कण्डनोपयोगिपात्रं मूसलमित्युच्यते। द्र० श्रौ०प०नि० पृ० ८।

**मुसल—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिचयने वृत्तं प्रादेशमात्रमौदुम्बरं मुसलमुच्यते।

**मूत—** इष्टियज्ञेषु प्रकृतिभूते दर्शपूर्णमासप्रकरणे तद्विकृतिषु च तृणवत्यादिनिर्मितं धान्यावापपात्रं मूत उच्यते।

**मूलप्रकृति—** (सा०) १. यज्ञानां तिस्रो मूलप्रकृतय इष्ट्याग्निहोत्रसोमाः (तु०— तां० ब्रा० सा० १।१।१) २. अग्निहोत्रम्, इष्टिः, सोमश्चेति। त्रिविधाः प्रकृतिभेदा उच्यन्ते। (मा०सं० १।१ महीधरः)। द्र० प्रकृतिभेद—। ३. मूलप्रकृतित्वम् इष्ट्यग्नि होत्रसोमानाम्। द्र० मी०को० पृ० ३१६४।

**मूर्धन्वती**— सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे मूर्धशब्दोपेतैर्मन्त्रैरुपधेया इष्टका मूर्धन्वत्यः (तु०— तै० सं० सा० ४।५।५)।

**मृगतीर्थ**—(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. उत्तरां वेदिश्रोणीमभि यो देशः एतत् स्थानं मृगतीर्थमित्याचक्षते ब्रह्मवादिनः। (तु०—आ० श्रौ० ५।११।२ देवत्रातः)। २. आग्नीध्रीयस्य पश्चाद् यो देशः स मृगतीर्थं नाम। (तु०—द्रा०श्रौ० धन्वी ५।२)।

**मृत्खनन**— (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे मृद् यस्मिन् प्रदेशे खन्यते स प्रदेशो मृत्खनन उच्यते। (तु०— तै० सं० सा० ४।१।१२)।

**मृत्युग्रहहोमादियज्ञविमोकान्तकर्मन्**—(आध्व०) इष्टि निरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे यजमानस्य लोमाद्यङ्ग संमर्शनानन्तरं (सौत्रामण्यां)। चयनपक्षे स्विष्टकृतः पुरस्तात् मृत्युग्रहहोमो भवति। 'विद्युदसि विद्य वृष्टिरसि वृश्च मे' आग्नीध्राः स्रुवाचादाय स्विष्टकृत्प्रभृति इडान्तैः पशुभिः प्रचरति। मृत्युग्रहभक्षश्च। अथैनान् पुरोडाशान् पाचयति-ऐन्द्रमेकादशकपालम्, सावित्रं द्वादशकपालम्, वारुणं दशकपालं च। 'अग्नीत् पुरोडाशानाहर' इति प्रेषितः आग्नीध्रो दक्षिणेनाज्यस्थालीमित्यादिरीत्या व्याहृतिमन्त्रेण हवींष्यन्तर्वेदि आसादयति। यजमानः 'यन्मे अग्ने' इत्यादिनाऽभिमन्त्रयते। अप्रैषः सप्रैषो वा प्रचारः। अप्रैष इति तु युक्तम्। अत एव होतुरादेशोऽपि भवति। 'अश्विनोरहं देवयज्यायेन्द्रियावी भूयासम्, सरस्वत्या अहं देवयज्यया स्वस्तिमान् पशुमान् भूयासम्, इन्द्रस्य सुत्राम्णोऽहं देवयज्यया घर्मभाग्भूयासम्। एतानि क्रमेण आश्विनसारस्वतैन्द्रयागानां यजमानस्यानुमन्त्रणानि। सर्वेषां यागानाम् 'अन्नादः' इत्येव वाऽनुमन्त्रणम्। इडामार्जनान्ते तन्त्रेण स्विष्टकृदिडान्तम् इति। आपस्तम्बोक्तपक्षे अत्र मृत्युग्रहभक्षः। गर्भिणीं वडवामत्र वा ददाति। ततो हविरुच्छिष्टमुद्वासयति। (सौत्रामण्याः) चयनपक्षे मैत्रावरुण्याऽऽमिक्षया प्रचर्य वाजिनेनेष्ट्वा अग्नीद् औपयजान् अङ्गारान्' इत्यादि करोति। समुदितैः त्रयाणां पशूनां गुदकाण्डैः उपयाजप्रचारो भवति। 'दिवं वो धूमो गच्छत्वन्तरिक्षम्'० पृणध्वं स्वाहेत्यूहः। यद्येकस्तदा प्रकृतिवत्। सूक्तवाके यथालिङ्गमूहः आज्यभा गदेवतानन्तरं अश्विनोरहमुज्जिति मनूज्जेषम्। सरस्वत्यां अहमुज्जितिमनूज्जेषम्। देवानामाज्यपानामित्यादि प्रकृतिवत्। त्रीणि समिष्टयजूंषि भवन्ति। यजमानो विष्णुक्रमान् क्रान्त्वा व्रतं विसृज्य यज्ञ विमोकान्तं (कर्म) करोति। इति मृत्युग्रहहोमादि यज्ञविमोकान्तं कर्म (आश्विनसारस्वतेन्द्रसत्रामयागः) भवति। द्र० श्रौ०प०नि० पृ० १६७-६८।

**मृदाद्यनुप्रकीर्ण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च 'घर्मैतत्तेऽन्नमेतत्पुरीषं तेन वर्धस्व चाव चाप्यासिषीमहि' इति मन्त्रेण मृदं सिकतां मुञ्जरौहिणैरनुप्रकिरतीति। प्रवर्ग्ये अनुकीर्णामुच्यते। द्र० श्रौ०प०नि० पृ० २३७।

**मेक्षण**—(सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अश्वत्थकाष्ठनिर्मितं अरत्निपरिमितं अग्र-

भागे चतुरङ्गुलचतुरस्रफलकयुतं भर्जनपात्र्यां समुप्तस्य पिष्टस्य मदन्तीभिरद्भिः संमेलनकरणादौ करणतया विहितं फलकाविशिष्टभागदण्डयुतं मेक्षणपात्रम् भवति। द्र० श्रौ०प०नि० पृ० ९।

**मेखला**—(सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु वेदिनिर्माणे- १. वेद्याः बाह्यतः चतुरङ्गुलोत्सेधा चतुरङ्गुलायामा मृत्तिकानिर्मिता प्रथमा मेखला भवति। २. अथ च वेद्याः बाह्यतः चतुरङ्गुलोत्सेधाया चतुरङ्गुलायामाया मृत्तिकानिर्मितायाः प्रथमाया मेखलाया उपरिद्व्यङ्गुलोत्सेधा द्व्यङ्गुलायामा द्वितीया मेखला भवति। इति वेद्या द्वे मेखले भवत इत्यवधेयम्। द्र० २ वेदि—।

**मेखलाद्वय**—(सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु वेदिनिर्माणे गार्हपत्यायतनस्य बाह्यतः शुद्धमृत्तिका निर्मिता षडङ्गुलपरिमितोच्छ्राया षडङ्गुलपरिमितायामा प्रथमा मेखला। प्रथमाया मेखलाया उपरि षडङ्गुलपरिमितोच्छ्राया चतुरङ्गुलपरिमितायामा द्वितीया मेखला भवति। ताभ्यां च कुण्डं युक्तं भवतीति विशेषोऽवगन्तव्यः। २ वेदि- द्र० श्रौ०-प०नि० पृ० ३-४।

**मेथी**—(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानस्य ईषाग्रभागावस्थापनकाष्ठं मेथ्युच्यते।

**मेथ्यां हविर्धानबन्धन**—(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अनसोरुपस्तम्भने स्थापनानन्तरम् अध्वर्युः—'दिवो वा विष्णवुत वा पृथिव्यामहो वा विष्णवुत वाऽन्तरिक्षाद् हस्तौ वृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यात्। इति दक्षिणतो मेथीं निहन्ति। 'विष्णो नुकं वीर्याणि प्रबोचं यः पार्थिवानि विममे रजाँ्सि। योऽस्कभायदुत्तरँ् सधस्थं विचक्रमाणस्त्रेधोरुगायः' इति मेथीमनसा सह बध्नाति। एवमेव प्रतिप्रस्थातोत्तरहविर्धानस्योत्तरतो मेथीं निहत्य एवमेव बध्नाति इति। तदिदं मेथ्यां हविर्धानबन्धनमुच्यते। द्र० श्रौ०प०नि० पृ० २४१।

**मेध**—(सा०) मेधश्च यज्ञः।द्र० मी०को० पृ० ३१६५।

**मेधा**—(सा०) ग्रन्थतदर्थावधारणशक्तिर्मेधा।

**मेनि**—(सा०) परोपद्रवकारिणी क्रोधरूपा शक्तिः मेनिरित्युच्यते।

**मैत्र**—(सा०) मित्रमेव मैत्रम्। स्वार्थे अण् प्र०। मैत्रो ब्राह्मण उच्यते। तदुक्तम्—'जप्येनैव संसिद्ध्येद् ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते॥ (मनु० २।८७)।

**मैत्रावरुण**—(सा०) पशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. अध्वर्युत्वेन होतृत्वेन च यथाविहितकार्यस्य कर्ता ऋत्विग् विशेषो मैत्रावरुणः प्रशास्ता च उच्यते। तेन मैत्रावरुणकार्यं क्वचिदाध्वर्यवं क्वचिद्धौत्रमुच्यते इति विशेषोऽवधेयः। षोडशर्त्विजां मध्ये होतृवर्गीयो दक्षिणाया अर्धभागी शस्त्रिहोत्रको मैत्रावरुणः। ३. मैत्रावरुणः होतुः पुरुषः। द्वितीयवर्गस्थोऽयम्। अयं अर्धी दक्षिणाया अर्धं षड् गा लभते। द्र० मी०को० पृ० ३१७४।

**मैत्रावरुणकर्मन्**—(हौ०, आध्व०) पशुसोमयज्ञेषु प्रकृतिविकृतिषु १. मैत्रावरुणस्य ऋत्विज: प्रैषानुवचनरूपे द्वे कार्ये भवत:। ततस्तस्य प्रैषकार्येण अध्वर्यौ अन्तर्भाव:, अनुवचनकार्येण च होतरि इत्येवं होतु: अध्वर्योश्च कार्यद्वयं करोति मैत्रावरुण:। तदुक्तम्—'मैत्रावरुण: प्रैष्यति चानु चाह' इति। २. सर्वेषां होत्रादीनां प्रैषकर्ता। होत्रादयो मैत्रावरुणेन प्रेषिता: स्वस्वव्यापारं कुर्वन्तीत्यर्थ:। ३. मैत्रावरुणाख्य ऋत्विक् सदसो दक्षिणभागे स्थितस्तत्तत्सोमयज्ञेषु प्रातर्माध्यन्दिनतृतीयसवनेषु मित्रावरुणदेवताकं मैत्रावरुणाख्यं यथाविहितं शस्त्रं शंसति। ऐन्द्राग्नप्रकृतिकेषु सौमिकेषु पशुषु च होतु: सकाशाद्दण्डादिकं गृह्णातीति चास्य कर्म।

**मैत्रावरुणखर**— द्र० मैत्रावरुणधिष्ण्य—।

**मैत्रावरुणग्रहपात्र**—(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्यं पिलकाचिह्नितं पात्रं मैत्रावरुणग्रहपात्रमुच्यते। द्र० श्रौ०प०नि० पृ० २४९।

**मैत्रावरुणग्रहप्रचार** — (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने ऐन्द्रवायवग्रहप्रचारान्तरम् अध्वर्यु: प्रदक्षिणमावृत्य हविर्धानं प्रविश्य प्रतिप्रस्थातुर्दक्षिणेन पात्रं हृत्वा स्वयमुत्तरतो गत्वा होत्रे पात्रं प्रदाय प्राङायन्नाह—'मित्रावरुणाभ्यामनुब्रू३हि' इति। प्रतिप्रस्थाता तथैव मैत्रावरुणस्य प्रतिनिग्राह्यं गृह्णाति-'उदया० स्पृत० मि'। ऐन्द्रवायवमादाय निष्क्रामति। पूर्ववत् प्रतिनिग्राह्यं प्रदायाऽऽश्राव्याह—'मित्रावरुणाभ्यां प्रेष्य' इति। वषट्कृते सहोभौ जुहुत: यज० वाचयति 'नमो मित्रा० यानि' इति प्रतिप्रस्थाता संस्रावं पूर्ववदवनयति। अध्वर्यु: उभयोरर्धं प्रतिप्रस्थातु: पात्रे। स तदादित्यस्थाल्यामवनयति—'विश्वदेवेभ्यस्त्वा' इति। अयं मैत्रावरुणग्रहप्रचार उच्यते। द्र० ऐन्द्रवायवग्रहप्रचार—, श्रौ०प०नि० पृ० २८२-८३।

**मैत्रावरुण चमसपूरण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात: सवने अध्वर्यु: अप्सुहुतमाज्यं मैत्रावरुणचमसेनोपप्लावयति—'कार्षिरस्यपापां मृध्रम्' इति। बर्हिषी अन्तर्धाय मैत्रावरुणचमसं पूरयति। 'समुद्रस्य वोक्षित्या उन्नये इति। तदिदं मैत्रावरुणचमसपूरणमुच्यते। द्र० श्रौ०प०नि० पृ० २६४।

**मैत्रावरुणचमसादिभक्षण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात: सवने उपाकरणादि प्रायश्चित्तहोमान्तं कृत्वा आह उ० सोमानाम् इति। पूर्ववज्जुहोति। चमसाध्वर्यवश्चमसान् जुह्वति। पूर्ववन्मैत्रावरुणचमसे संस्रावम० इति। उत्तरखरश्रोण्यां पात्रं निधाय चमसं मैत्रावरुणाध्वर्यु प्रतिप्रस्थातारो भक्षयन्ति। वसु० मित्रा० सि इति। मैत्रावरुणो ब्रह्मादिचमसांस्तं चमसिनमुपहूय। तच्चमसं त्रय: पुन: पूर्ववत्। ब्रह्मादयो मैत्रावरुणमुपहूय। इदं मैत्रावरुणचमसभक्षणम्। द्र० श्रौ०प० नि० २९२।

**मैत्रावरुणदण्डप्रदान**— (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सोमिकेषु पशुषु च प्रवृत्ताहुतिहोमानन्तरं 'प्रशास्तस्तीर्थेन

प्रपद्यस्व' इति मैत्रावरुणं प्रत्याह। ततः प्रशास्ता तीर्थेन प्रपद्यते। होता प्राङ्मुखः प्रशास्त्रे दण्डं प्रददाति दक्षिणोत्तराभ्यां पाणिभ्यां 'मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रशिषा प्रयच्छामि' इति मन्त्रेण ततः प्रशास्ता 'मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रयच्छामि' इति मन्त्रेण। ततः प्रशास्ता 'मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रोः प्रतिगृह्णाम्यवक्रो विथुरो भूयासम्' इति दण्डं प्रतिगृह्णाति। इदं कर्म मैत्रावरुणदण्डप्रदानमित्युच्यते। द्र० प्रवृताहुतिहोम—, श्रौ०प०नि० पृ० १४३; आ०श्रौ० ३।१।१६।

**मैत्रावरुणधिष्ण्य—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्रेणाहवनीयं पर्याहृत्य होतृधिष्ण्याद् दक्षिणतोऽरत्निमात्रे मैत्रावरुणस्य 'श्वात्रोऽसि प्रचेता रौद्रेणा हिंसीः' इति। सोऽयं खरः मैत्रावरुणखरः मैत्रावरुणधिष्ण्यमिति चोच्यते। द्र० श्रौ० प० नि० पृ० २४७।

**मैत्रावरुणपात्रे रसग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने ऐन्द्रवायवपात्रे रसग्रहणानन्तरं मैत्रावरुणपात्रे रसं गृह्णाति—'अयं वां मित्रावरुणा० श्रुतं हवं उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वा जुष्टं गृह्णामि' इति। बर्हिषी अन्तर्धाय पयसा श्रीत्वा अपोद्धृत्य बर्हिषी दशापवित्रेण परिभृज्य यथास्थानं सादयति—'एष ते योनिर्ऋतायुभ्यां त्वा' इति। इदं मैत्रावरुणपात्रे रसग्रहणमुच्यते। द्र० श्रौ०प०नि० पृ० २७४।

**मैत्रावरुणप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्युणा आश्रावय' इत्याश्रावणानन्तरं यत्र कर्मणि मैत्रावरुणोद्देश्येन प्रैषः क्रियते स मैत्रावरुणप्रैष उच्यते। तत्र चतुर्थ्यन्तं देवतापदमुच्चार्य अनन्तरं 'प्रेष्य' इति पदमुच्चारयेत्—'अग्नये प्रेष्य' इति। तद्यथापशौ 'आश्रावय' इति आश्रावणे कृते तत आग्नीध्रेण 'अस्तु श्रौषट्' इत्यभ्यनुज्ञाते अध्वर्युः 'इन्द्राग्निभ्यां छागस्य वपां भेदः प्रेष्य' इति मैत्रावरुणमुद्दिश्य प्रेष्येति प्रेषितो मैत्रावरुणः तद्देवताकामनुवाक्यां पठित्वा तदन्ते 'हविर्होतर्यज' इति होतारं प्रति प्रेष्यति इति। यत्र तु इष्ट्यादौ मैत्रावरुण ऋत्विक् नास्ति तत्र 'अमुं यज' इत्येव होतारं प्रतिप्रेष्यत्यध्वर्युः। यथा—आग्नेये 'अग्निं यज्ञ' उपांशुयाजे 'विष्णुं यज' इति विशेषोऽवगन्तव्यः। तदुक्तम्—'आश्राव्य प्रैषे च' (तु०—का०श्रौ० १।९।१४ विद्याधरः)। मैत्रावरुणभिन्ने प्रैषे तु देवतापदं द्वितीयान्तमेव भवति। यतो होतुर्याज्यावाचनार्थम् अध्वर्युणा आवहितदेवतापदं द्वितीयान्तमुच्चार्य 'यज' इत्यन्तं पठ्यते। तद्यथा 'अग्निं यज' 'सोमं यज' इति। तदुक्म्—'अमुं यज' इति (तु०—का०श्रौ० १।९।१५ विद्याधरः) इति।

**मैत्रावरुणप्रैषवचनविधि—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु मैत्रावरुणाय होतुर्दण्डप्रदानानन्तरं मैत्रावरुणः (प्रशास्ता) दण्डं प्रतिगृह्योत्तरेण होतारमतिव्रजेद् दक्षिणेन दण्डं हरेत्। न चानेन कञ्चिदपि स्पृशेत् आ प्रैषवनात्। होतृषदनाद् दक्षिणतः प्रह्वोऽवस्थाय वेद्यां दण्डमव-

ष्टव्य ब्रूयात् । प्रैषांश्चादेशमनुवाक्यां च स प्रैषे पूर्वां प्रैषात्, पर्यग्नि-स्तोकमनोतोन्नीयमानसूक्तानि सोमे । उपविश्यान्यत् पठेत् । इति मैत्रावरुणप्रैषवचनविधिरुच्यते । **द्र०** श्रौ०प०नि० पृ० १४३ ।

**मैत्रावरुणशंसनदेश—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने मैत्रावरुण: सदसो दक्षिणत: शस्त्रं शंसति । तदुक्तम्— 'यज्ञमाना: मित्रावरुणाभ्यामेव दक्षिणत: प्रात: सवनेऽसुररक्षांस्यपाघ्नते (तु०—ऐ० ब्रा० ६ ।४)

**मैत्रावरुणस्य पापनाशकतृचशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि प्रात:सवने प्रतिबन्धकपापनाशार्थं मैत्रावरुण: 'य: ककुभो विधारय' (ऋ० ८ ।४१ ।४-६) इति नभाकर्षिदृष्टं तृचं शंसति । इतीदं मैत्रावरुणस्य पापनाशकृचशंसनमुच्यते । (तु०—ऐ० ब्रा० सा० ६ ।२४, आ०श्रौ० ७ ।२ ।१७) । **द्र०** महावालभिद्— ।

**मैत्रावरुणस्य माध्यन्दिनीयशस्त्रक्रम—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहविकृतिभूतगवामयनसत्रप्रकरणे माध्यन्दिनसवने मैत्रावरुणशस्त्रस्य स्तोत्रिय: २ श्व:स्तोत्रियोऽनुरूप: ३ प्रगाथ: ४ उक्थमुखी या ('आरम्भणीया)' ५ सूक्तानि (शिल्पसूक्तानि) ६ अहीनसूक्तानि ७ तत्स्थाने संपाता: ८ ऋच: ९ पर्यासतृच: १० परिधानीया इत्येते पदार्था: क्रमेणानुष्ठीयन्ते ।

**मैत्रावरुणस्य सत्रेषु प्रात:सवने पर्यासतृच—** सोमयज्ञेषु प्रकृति- भूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे प्रात: सवने 'प्रति वां सूर उदिते मित्र गृणीषे' (ऋ० ६ ।६ ।७-९) इति तृच: मैत्रावरुणस्य पर्यासस्तृच उच्यते । यदा तु 'प्रति वां सूर उदिते' इत्ययं तृच: स्तोत्रियत्वे वाऽनुरूपत्वेषा विनियुक्तस्तरा मैत्रावरुणस्य 'काव्येभिरदाभ्या (ऋ० ७ ।६६ । १७-१९) इत्ययं तृच: पर्यासो भवति । अथवा विद्यमाने श्वस्तनस्तोत्रिये 'काव्येभिरदाभ्या' इति पर्यासो भवति । (तु०—शां०श्रौ० भाष्य० १२ ।३ ।६) । **द्र०** ब्राह्मणाच्छंसिनसत्रेषु प्रात:सवने शस्त्रपर्यासतृच— ।

**मैत्रावरुणस्य होत्रध्वर्य्वोर्विकारत्व—** (सा०) १. मैत्रावरुण: प्रैषे अध्वर्युविकार: अनुवचनेषु च होतुर्विकार: । २. यत्र प्रैषश्चानुवाक्या च सहोच्येते तत्रैव न केवलप्रैषेषु केवलानुवचनेषु च । ३. मैत्रावरुणस्य प्रैषानुवचनकर्तृत्वम् (मी०को० पृ० ३१७४) **द्र०** मैत्रावरुणकर्मन्— ।

**मैत्रावरुणस्योक्थ्यविग्रह—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु उक्थ्यस्थालीगतं सोमं त्रेधा विभज्य उक्थ्यपात्रे प्रथमांशं प्रथमतो मित्रावरुणाभ्यां गृह्णाति स मैत्रावरुणस्य उक्थ्यविग्रह: (विभज्यग्रह:) उच्यते । (उक्थ्यग्रहस्य त्रय: पर्याया:) तत्रायं प्रथम: (का० श्रौ० ९ ।१४ ।१३) पर्याय: इति विशेषोऽवधेय: । **द्र०** उक्थ्यप्रथमांश—, १-२ उक्थ्यविग्रहण— ।

**मैत्रावरुणानुवचनीयानुवाक्या —** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च सप्रैषे कर्मणि या अनुवाक्या

तां मैत्रावरुण: प्रैषात् पूर्वां ब्रूयात् न उत्तराम्। होता तामनुवाक्यां न ब्रूयात्। (तु०— आ० श्रौ० ३।१।२१ देवत्रात:)।

**मोक्ष:**—(सा०) १. मोक्ष: ज्ञानात् भवति। कथम्? इत्थम्। यो हि देहात् विविक्तं अनन्तं अजरं अमरं अदु:खमात्मानं जानाति, तस्य देह संप्रयोगविरक्तस्य पूर्वकृतानां कर्मणां फलोपभोगेन क्षयात् तन्निमित्ते शरीरे पतिते अनागतानां च कर्मणामननुष्ठानादेव असत्त्वात् देहान्तरानुत्पत्ते: अत्यन्तासंबन्ध: शरीरेण भवति। 'तत्र ज्ञातात्मतत्त्वानां भोगात् पूर्वक्रियाक्षये। उत्तर प्रचयासत्त्वाद् देहो नोत्पद्यते पुन:॥ १॥ कर्मजन्योपभोगार्थं शरीरं न प्रवर्तते। तदभावे न कश्चिद्धि हेतुस्तत्रावतिष्ठते॥ २॥ मोक्षार्थी न प्रवर्तेत काम्यनिषिद्धयो:। नित्यनैमित्तिके कुर्यात् प्रत्यवायजिघांसया॥ ३॥ प्रार्थ्यमानं फलं ज्ञातं न चानिच्छोर्भविष्यति। आत्मज्ञे चैतदस्तीति तज्ज्ञानमुपजायते॥ ४॥ २. मोक्ष: ब्रह्मविषयकसविलासाज्ञाननिवृत्ति:। ३. शरीरसंबन्ध:, तदभावो मोक्ष:। तेन निष्पन्नानां देहानां य: प्रध्वंसाभाव: यश्च अनुत्पन्नानां प्रागभाव: स मोक्ष:। कर्मनिमित्तश्च बन्ध: कर्मक्षयादेव न भवति। द्र० मी०को० पृ० ३१७५।

**मोक्षसाधन**— (सा०) १. ज्ञानम्—सम्यग्दर्शनसंपन्न: कर्मभिर्न निबध्यते। दर्शनेन विहीनस्तु संसारं प्रतिपद्यते। कर्म—अहिंसेन्द्रियासङ्गैर्वैदिकैश्च कर्मभि:। तपश्चरणैश्चोग्रै: साधयन्तीह तत्पदम्॥ (तु०— मनु० ६।७४-७५) तदेवं ज्ञानकर्मणो: समुच्चयान्मोक्ष इत्येतत् श्लोकद्वयं ज्ञापयति। तज्जीवस्य मोक्षसाधनमाह—कर्मपरं अहरह: सन्ध्यामुपासीत, याज्जीवमग्निहोत्रं जुहुयात्। ज्योतिष्टोमं स्वर्गकामो यजेत। ओमिति ब्रह्म, ओमितीदं सर्वम्, ओमित्यग्निहोत्रमनुजानाति। (तु०— सांख्यसंग्रह: पृ० २१५)। ३. यज्ञार्थात् कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन: (गीता)। ४. ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यध:॥ कानि पुनस्तानि ऋणानि अधीत्य विधिवद् वेदान् पुत्रांश्चोत्पाद्य धर्मत:। इष्ट्वा च शक्तितो यज्ञैर्मनो मोक्षे निवेशयेत्॥ (तु०— मनु० ६।३५-३६)। त्रिभिर्ऋणैर्ऋण वा जायते यज्ञेन देवेभ्य: प्रजया पितृभ्य: स्वाध्यायेनर्षिभ्य:। इति श्रुत्यनुवादिनी स्मृतिरियम्। (तु०— बौ०ध० २।६।११-३६)। ५. अन्ये त्वाहु: ब्रह्मत्वप्राप्तौ योग्या क्रियते। न हि कर्मभिरेव केवलैर्ब्रह्मत्व प्राप्ति: प्रज्ञानकर्मसमुच्चयात् किल मोक्ष:। एतैस्तु संस्कृत आत्मा उपासनास्वधिक्रियते। तथा च श्रुति: य एतदक्षरं गार्ग्यविदित्वा यजते जुहोति। तपस्तप्यते अधीते ददात्यन्तवदेवास्य तद् भवति। (तु०— मनु० २।२८ टी० बृहदारण्यक:) यज्ञै: साक्षात् परंपरया वा संस्कारशुद्ध्यादिभिर्मोक्षश्चरमपुरुषार्थ: सुलभो भवति। तद्योग्यता वा संपद्यते। महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनु:॥ (तु०—मनु० २।२८) तथा च श्रुतिवाक्यानि—'एष ह महान् देवो यद् यज्ञ:। (गोपू० २।१६)। यज्ञो वै विष्णु: (मा०सं० २२।१०; श० ब्रा० १३।१।८।८; कौ० ब्रा० ४।२)। यज्ञो हि श्रेष्ठतमं कर्म तै० सं० ३।२।१।४; मा०सं० १।१; श० ब्रा० १।७।१५)। यज्ञो वै विशो यज्ञे हि सर्वाणि भूतानि विष्टानि (श० ब्रा० ८।७।२।२१। सैषा त्रयी विद्या (=ऋक्सामयजूंषि) यज्ञ: (श० ब्रा० १।४।३)॥ इति गीता च—सहयज्ञा:

प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमाप्स्यथ॥ ३।१०-११)।

### य

**यजति—** (सा०) इष्टिपशुसोमयज्ञादिषु १. येषु यागेषु तिष्ठता होमः, वषट्कारेण प्रदानम्, याज्यापुरोनुवाक्यामन्त्राश्च पठ्यन्ते ते यागा यजतय उच्यन्ते। तदुक्तम्— 'तिष्ठद्धोमा वषट्कारप्रदाना याज्यापुरोनुवाक्यावन्तो यजतयः इति (तु०—का० श्रौ० १।२।६ विद्याधरः)। २. यजति शब्देन यजतिग्रहणेन वा आज्यादीनां होमः समिदादीनामभ्याधानं च गृह्येते। (तु०—आ०श्रौ० १।११।९ सिद्धान्ती)। ३. यागपदार्थनिरूपणमधिकरणम् यजतिः (तु०—मी० सू० ४।३।२७) द्र०।

**यजनीयदिन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे दर्शपूर्णमासयागकालो यजनीयदिनमुच्यते। द्र० श्रौ०प०नि० पृ०११९।

**यजमान—** (सा०) इष्टिपशुसोमयज्ञादिषु १. यजतेऽसौ यजमानः इति विग्रहे यजमानशब्दः स्वार्थकर्मानुष्ठानकर्तृवाचकः (द्र० श्रौ०प०नि० पृ०१। २. यागे प्रधानकर्मफलभाक् स्वामी यजमान उच्यते। ३. यः स्वर्गादिफलकामनया यजतेऽसौ स्वार्थकर्मानुष्ठानकर्ता यजमान उच्यते। स च कर्मकाले आहवनीयस्य दक्षिणत उदङ्मुख उपविशति। ४. स एष यज्ञायुधी यजमानः स्वर्गं लोकमेति (तु० पितृमेधसूत्र० २।७।३६), श० ब्रा० १२।५।२।१५)। ५. यजमानः स्तुतस्य स्तुतमसि इति सर्वं स्तोत्रमनुमन्त्रयते, शस्त्रस्य शस्त्रमसीति सर्वं शस्त्रम् (तु०— वै० श्रौ० १५।२०।५-६)।

**यजमानकर्तृकगार्हपत्योपस्थान— द्र०** गार्हपत्योपस्थान— श्रौ०प०नि० ४१।

**यजमानकार्य—** (सा०, याज०) इष्टिपशुसोमयज्ञादिषु १. यागोपयोगिसंभारोपकल्पनं, हविस्त्यागः, दक्षिणादानादि, आत्मगामिफलप्रार्थनारूप (आशीर्वचनरूप) मन्त्रपाठः, वपनादिसंस्काराः, दीक्षादिनियमाः, यजमानशब्देन विहितानि च कर्माणि (यथा यजमानः उखां करोति, यजमानो वेदं करोति) इत्यादिकार्यजातं यजमानस्य कार्यमुच्यते। तदुक्तम्—'प्रधानं स्वामी, फलयोगात्। पुरुषयोगिमन्त्रसंस्कारयोस्त्यागे सामर्थ्यात्। वचनादन्यत्' (का०श्रौ० १।७।१९-२१ विद्याधरः)। तथा च दानवाचनाऽन्वारम्भण-वर-वरण-व्रत-प्रमाणानि न यजमानकार्याणि भवन्ति। तदुक्तम् 'दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमान प्रतीयात्' (तु०—का०श्रौ० १।१०।१२)। इति। एतानि कार्याणि यजमानेनैव कर्तव्यानीत्यर्थः (तु०—विद्याधरः)। अन्यानि च तत्रा तत्रोपदिष्टानि यजमानकर्तव्यानि यथायथं तत्र तत्र द्रष्टव्यानीति विशेषोऽवगन्तव्यः। २. यजमानेन साङ्गकर्मणि त्यागमात्रं कर्तव्यम्, इतरत् सर्वमृत्विग्भिः कर्तव्यम्, तदर्थमेव तेषा परिक्रीतत्वात्। साक्षात् परम्परया च यजमानस्यैव सर्वकर्तृत्वात् फलभोक्तृत्वं यजमानस्य न विरुद्धम्। द्र० मी०को० पृ० ३१८२। यजमानस्य यानि कर्माणि तान्यनुष्ठातुमेव परिक्रीता ऋत्विजाः इति विशेषोऽवधेयः। द्र० मी०को० ३१८२।

**यजमानघर्मोपस्थान —** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथ-

मायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च यजमानो घर्ममुपतिष्ठते—'एतत् त्वं देव घर्म देवो देवानुयागाः। इदमहं मनुष्यो मनुष्यान् सोमपीथानुमेहि। सह प्रजया सह रायस्पोषेण' इति। तदिदं यजमानघर्मोपस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० २३८।

**यजमानचमस—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्यो नैयग्रोधो विस्तीर्णाग्रः सदण्डो यजमानचमसो भवति। द्र० श्रौ०प०नि० पृ० २४९।

**यजमानद्वैविध्य—** (सा०) इष्टिपशुसोमयज्ञादिषु द्विविधा यजमानाः। चतुरवत्तिनः पञ्चावत्तिनश्चेति। तत्र हविषां चतुर्भिरवदानैर्युक्तः चतुरवत्ती पञ्चभिरवदानैर्युक्तः पञ्चावत्ती इति भेदेन यजमानानां द्वैविध्यमुच्यते। ततः केचन चतुरवत्तिनो यजमानाः केचन जामदग्न्यादयः पञ्चावत्तिनो भवन्तीति भावः।

**याजमानभाग—** (याज०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च ब्रह्मभागसादनानन्तरम् इडापात्रं वेद्यामुदगग्रं निधाय तस्मिन् यावन्ति प्रधानद्रव्याणि तावदर्थं सकृदेव उदक्संस्थम् आज्य-स्थाल्याज्येनोपस्तीर्य प्रथमप्रधानद्रव्यदक्षिणार्धादवदानदेशसंस्पर्शमकुर्वन् मन्त्रेण अवदाय इडापात्रे उपस्तीर्णदेशे निधाय उत्तरार्धात् तु तूष्णीं अवदानदेशसंस्पर्शं कुर्वन् एवावदाय तथैव निदधाति। ततस्तस्यैव द्रव्यस्य पूर्वभागात्र्यङ्गुलं चतुरङ्गुलं खण्डं तूष्णीमवदाय आज्यस्थाल्याज्येन सुसंतृप्तं संतर्प्य ध्रुवायाः पूर्वभागे निदधाति तत्खण्डं यजमानकर्तृप्राशनार्थत्वात् यजमानभाग उच्यते। द्र० प्राशित्र-, श्रौ०प०नि० पृ० ३२ द्र०।

**यजमानभागप्राशन—** (याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च ध्रुवाप्यायनानन्तरं यजमानः स्वभागं ब्रह्मणा प्राशित्रहरणस्य पश्चात् कुशेषु वेद्यां स्थापितं मन्त्रेण प्राश्नतीति। एतद् यजमानभागप्राशनमुच्यते। द्र० ध्रुवाप्यायन—, श्रौ०प०नि० पृ० ३९ द्र०।

**यजमानरूप—** (सा०) इष्टिपशुसोमयज्ञादिषु यजमानस्य द्वे रूपे (१) क्रियाकर्तृत्वम् (२) फलभोक्तृत्वं च। तयोः फलभोगोऽदृष्टः क्रियानिष्पत्तिस्तु दृष्टः इत्यवधेयम्।

**यजमानवाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च अध्वर्युर्यजमानं वाचयति—'रन्तिर्नामासि दिव्यो गन्धर्वः। तस्य ते पद्वद्धविर्धानम्। अग्निरध्यक्षाः रुद्रोऽधिपतिः। समहमायुषा, सं प्राणेन, सं वर्चसा, सं पयसा, सं गौपत्येन स॒ँ रायस्योषेण व्यासैः, यो स्मा. द्विष्मः। अचिक्रद् वृषा हरिः। महान् मित्रो न दर्शतः। स॒ँ सूर्येण रोचते। चिदसि समुद्रयोनिः। इन्दुर्दक्षः श्येन ऋतावा। हिरण्यपक्षः शकुनो भुरण्युः। महान् सधस्थे ध्रुव आनिषत्तः। नमस्ते अस्तु मा मा हि॒ँसीः। विश्वावसुं सोमगन्धर्वम्। आपो ददृशुषीः। तदृतेनाव्यायन्। तदन्ववैत्। इन्द्रो रारहाण आसाम्। परि सूर्यस्य परिधि॒ँ रपश्यत्। विश्वावसुरभि तन्नो गृणातु। दिव्यो गन्धर्वो रजसो विमानः। यद्वाद्या सत्यमुत यन्न विद्मः। धियो हिन्वानो भिय इन्नो अव्यात्। सस्निमविन्दच्चरणे नदीनाम्। अपावृणोद् दुरो अश्वमव्रजानाम्। प्रासां गन्धर्वो अमृतानि वोचत्। इन्द्रो दक्षं परि-

जानादहीनाम्' इति। तदिदं प्रवर्ग्ये यजमान- वाचनमुच्यते। तत्र यजमानवाचनात् पूर्वम् अनेनोदकुम्भेन सन्ततया धारया त्रिः प्रदक्षिणं परिषिञ्चन् 'परीहि' इत्याग्नीध्रं प्रेष्यति। आग्नीध्रः पूर्ववत् प्रदक्षिणं परिषिच्य कुम्भं निधाय त्रिरपशलैः पर्येनीति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २३७-३८।

**यजमानशासन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षितज्ञापनानन्तरं 'दीक्षितोऽसि दीक्षितवादं वद, सत्यमेव माऽनृतं मा स्मयिष्ठा मा काण्डयथा माऽपावृधा। यदि स्मयासै अपि गृह्य स्मयासै यदि कण्डयासै कृष्णविषाणया कण्डयासै यदि वाचं विसृजेर्वैष्णवी-मृचमनुद्रवतात् मा स्वाऽन्यत्र दीक्षितविमितात्सूर्योऽभ्युदियान् माऽभिनिर्मुक्तात् यानि देवतानामानि यथाख्यातं तान्याचक्ष्व अथ यानि अन्यदेवतानानि यथाख्यातं तान्याचक्षाण उपरिष्टाद् विचक्षणं धेहि च न सितवतीं विचक्षणवतीं वाचं वद कृष्णाजिन्मा व्यच्छेथा दण्डाच्च। इति यजमानं संशास्तीति यजमानशासनमुच्यते। श्रौ०प०नि० पृ० २०० द्र० दीक्षितत्वज्ञापन- २. अध्वर्युः यजमानं संशास्ति—'सन्तरा मेखलां समायच्छस्व, सन्तरां मुष्टी कुरुष्व, तप्तव्रत एधि, मदन्तीभिर्मार्जयस्वोत्पुर्वव्रतन्॑ सृज, या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा इत्येतेनातोऽधिव्रतय' इति। यजमानो यथा प्रैषं करोति। तदिदं यजमानशासनमुच्यते। तत्र शासनात् पूर्वमवान्तरदीक्षाप्रैषानन्तरं यजमान आह्वनीयमुपतिष्ठते—'अग्ने व्रतपते त्वं व्रतानां व्रतपतिरसि या मम तनूरेषा सा त्वयि या तव तनूरिय्॑ सा मयि सह नौ व्रतपते व्रतिनोर्व्रतानि इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २१३ द्र० अवान्तरदीक्षाप्रैष—।

**यजमानसंस्कार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. यजमानसंस्कारः हि दीक्षार्थः। २. 'केशश्मश्रुवपते, दतो धावते, नखानि निकृन्तते, स्नाति, तं अभ्यनक्ति, शरेषीकया अनक्ति' इति वपनादयः यजमानस्य संस्कारा भवन्ति। ते प्रधानोपकारका नाङ्गोपकारकाः। द्र० मी०को० पृ० ३१४८।

**यजमानस्थान —** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च वेदिनिर्माणे उत्करनिर्माणार्थं स्थितं यत्सूत्रं तदेव सूत्रं तस्मिन्नेव चिह्ने धृत्वा दक्षिणतः आकर्षणीयं चिह्नसंसृष्टा भूमिः यागकाले यजमानस्य तत्रोपवेशनात् यजमानस्थानमित्युच्यते। द्र० २ वेदि-, श्रौ०प०नि० पृ० ५।

**यजमानस्य व्रतकरणवाद—** (याज०, आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु च पूर्वोत्तरभेदेन व्रतकरणवादो द्विविधः। तत्र १. यजमानः नक्षत्रोदये जाते सति दण्डकृष्णाजिने समादाय पूर्वद्वारेण बहिर्निष्क्रम्य शालाया अग्रतस्तिष्ठन् भूर्भुवः स्वरिति सकृदुपांशूक्त्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति। सोऽयं यजमानस्य पूर्वोव्रतकरणवादः उच्यते। तत्र अध्वर्युणा वाचं यच्छेति प्रोक्तस्य वाङ्नियमस्येदानीमेव विसर्ग इति बोध्यम्। २. यजमानः सूर्योदयानन्तरम् अग्रेण शालां तिष्ठन् भूर्भुवः स्वरिति जपित्वा व्रतं कृणुतेति त्रिरुच्चैर्वदति। इति यजमानस्योत्तरो

व्रतकरणवाद उच्यते। तत्र व्रतकरणवादात् पूर्वमध्वर्युः अपररात्रे प्रेष्यति—'त्रिस्तनव्रतं' दोहयत, अग्नीन् ज्योतिष्मतः कुरुत, व्रत्य वाचं यच्छ, पत्नि वाचं यच्छ' इति अध्वर्युप्रतिप्रस्थातारौ पूर्ववद्दोहयित्वा श्रपयित्वा पूर्ववत्संस्कृत्य शिक्ये स्थापयतः। दैक्षमेव चतुस्तनं व्रतं पत्न्या भवतीति द्र० विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २०२-२०३।

**यजमानस्य सदस्युपवेशन—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यजमानः सदः प्रविशति—'नमः सद० थिव्यै' इति। मैत्रावरुणधिष्ण्यस्य दक्षिणतः स्वायतनाद् बहिः सदसस्तृणं नैर्ऋत्यां दिशि निरस्यति—'अहे० तरः' इति। अप० स्पृश्योदङ्मुख उपविशति 'उन्नी० गेषम्।' इति। पृथिवीं दृष्ट्वा द्यामीक्षते—'पातं० ह्वेः' इति। प्राचीनावीती दक्षिणार्धमीक्षते—आगं० व्यास्त इति। अप उपस्पृश्य तूष्णीमुत्तरार्धं परोक्षते। तदिदं यजमानस्य सदस्युपवेशनमुच्यते। तत्रोपवेशनात् पूर्वं प्रातःसवने कुम्भ्याऽवदाननिक्षेपानन्तरम् उत्करे स्फ्यादीन् विधनान् निधाय यजमानमुपस्थापयति — 'स्फ्यः स्वस्ति० ह्वयन्ताम्' इति। यजमान आहवनीयमुपतिष्ठते—'नमोऽग्नयेमर्व्यात्'। ने नो रु०पाहि' इति आग्नीध्रीयम्, सदसः पूर्वद्वारि प्रत्यङ्मुखस्तिष्ठन् होत्रीयम्, 'नम इन्द्रा० र्वधी' इति, सव्यमावृत्य प्राङ्मुखो जपति—'दृढे स्थः शि० ष्येभ्यः' इति। प्रदक्षिणमावृत्य सदसः पूर्वे द्वार्बाहू युगपदभिमृशति—'देवी० प्तम्' इति सदः प्रविशतिनमः सद० पृथिव्यै विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २८०-८१।

**यजमानहस्तसंमर्शन—** (आध्व०) इष्टिनिरूढविकृतौहविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे यजमानाभिषेचनानन्तरमध्वर्युः 'कोऽसि कतमोऽसि कस्मै त्वा कतमाय त्वा' इति वाक्यद्वयेन यजमानस्य हस्तौ सम्मृशतीति यजमानहस्तसंमर्शनमुच्यते। द्र० यजमानाभिषेचन, श्रौ०प०नि० पृ० १६६।

**यजमानाभिषेचन—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अध्वर्युः प्रत्यङ्मुखस्तिष्ठन् आसन्द्यामासीनं यजमानम् आश्विनपात्रस्थसंस्रावेणाभिषिञ्चति-'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि' इति मन्त्रेण। ततः सारस्वतपात्रस्थ संस्रावेणाभिषिञ्चति—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि' इति मन्त्रेण। ततः ऐन्द्रपात्रस्थसंस्रावेणाभिषिञ्चति। 'देवस्य त्वा सवितुः प्रसवेनाश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्। इन्द्रस्येन्द्रियेण श्रियै यशसे बलायाभिषिञ्चामि' इति। तदेतद्यजमानाभिषेचनमुच्यते। द्र० श्रौ०प०नि० पृ० १६५-६६, आसनासीनयजमानाभिमन्त्रण—।

**यजमानावर्तन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च हृदयाभिमर्शनानन्तरं यजमानः अपः उपस्पृश्य उदङ्मुखः सन् मन्त्रेण प्रदक्षिणमावृत्य मन्त्रेणापसव्यमावर्तते। एतद् यजमानावर्तनमुच्यते। द्र० हृदयाभिमर्शन—श्रौ०प०नि० पृ० ४१।

**यजमानासन—** (सा०) इष्टिपशुसोमयज्ञादिषु दक्षिणतो ब्रह्मयजमानावासाते। कर्मणः

क्रियमाणस्य इति दक्षिणतो यज्ञे यजमानस्यासनं भवतीति। द्र० ब्रह्मयजमानोपवेशन—।

**यजुस्**— (सा०) इष्टिपशुसोमयज्ञादिषु प्रयुज्यमानं १. यजुर्यजते। प्रायेण हि याजुष्या होममन्त्राः भवन्ति (तु० निरुक्तस्कन्दमहेश्वर तृतीयो भागः पृ० ६६-६७)। २. यश्चान्यकरणैर्युक्तो न च पादोऽक्षरैर्वृतः। अनिर्युक्तावसानश्च तद्यजुः परिकीर्तितम्। (मै० अ०)। ३. अनियतपादाक्षरावसानानि यजूंष्युच्यन्ते। ४. जपातुमन्त्रणाप्यायनोपस्थानकर्मकरणा अनार्चिका ये मन्त्रास्तानि यजूंषि भवन्ति। (तु०—आ०श्रौ० देवत्रात० ३।२।१६ उच्चैः प्रयोगाः पूर्वलक्षणसंयुक्ताश्च मन्त्रा निगदाः। (=अनियताक्षरावसाना अपरिमिताः) (आ०श्रौ० देवस्वामी २।२।१६)। द्र० निगद—, मन्त्र—, मन्त्रभेद- ५. वृत्त-गीति-वर्जितत्वेन प्रश्लिष्टपठिता मन्त्रा यजूंषि। द्र० मी०को० पृ० ३१८६।

**यजुर्मन्त्रपाठस्वर**— (सा०) इष्टिपशुसोमयज्ञादिषु यजुर्मन्त्राणामग्निहोत्रादिकर्मसु प्रयुज्यमानानां पाठः (उच्चारणम्) उपांशुस्वरेण क्रियते। तदुक्तम्-उच्चैर्ऋचा क्रियते उच्चैः साम्ना उपांशु यजुषा। इति (हि० श्रौ० १।१।१)।

**यजुर्मन्त्रविनियोग** — (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु तत्तत्प्रकरणाम्नातानां यजुर्मन्त्राणां विनियोगः तत्तन्मन्त्रप्रतिपाद्यार्थानुरोधेन भवति। तदुक्तम्-'तेषां (यजुर्मन्त्राणाम्) आरम्भे (विनियोगे) अर्थतो व्यवस्था तद्वचनात्' (का०श्रौ० १।३।४) इति। अत एव अनुष्ठेयार्थस्मारकव्यवस्थया विनियुक्तानां मन्त्राणामनुष्ठानकाले मन्त्रमुच्चार्य तत्समाप्तिक्षणे एव यागार्था क्रियाऽनुष्ठीयते इति विशेषोऽवगन्तव्यः। तदुक्तम्—'मन्त्रान्तैः कर्मादिः सान्निपात्योऽभिधानात्' (का०श्रौ० १।३।५) इति। (तु० विद्याधरः)।

**यजुर्वाक्य**— (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. (यजुर्मन्त्राणां) यावति पदसमूहे उच्चारिते पदान्तराकाङ्क्षा न उदेति तावत्पर्यन्तमेकं यजुर्यजुर्वाक्यं वा यजुर्मन्त्रमानं वोच्यते। तदुक्तम्—तेषां वाक्यं निराकाङ्क्षम्' (का०श्रौ० १।३।२) इति। यत्र च श्रूयमाणैः पदैराकांक्षाशान्तिर्न भवति तत्र तच्छामकं तैः संबद्धुं योग्यं पदमध्याहर्त्तव्यम्। तेषामर्थानुसारेण विनियोगः। उच्चारणानन्तरं (मन्त्रान्ते) कर्म कर्तव्यं भवतीति विशेषोऽवधेयः। द्र० निगद—द्र० (तु०—का०श्रौ० १।३।२-७ विद्याधरः)। २. यावत्पदजातं यजुर्लक्षणलक्षितं यागसाधनं अथ च विभागे साकांक्षं तावदेकं यजुः। मी०को० पृ० ३१८४।

**यजुर्वेद**— १. पैप्लादाय संहितामाद्यां बह्वृचाख्यामुवाच ह। वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम्। (भागवत० १२।६।५२)। २. व्यासशिष्यो वैशम्पायनो निगदाख्यं यजुर्वेदं पठित्वा शिष्यांश्चकार (तु०—चव्यू० महीदासः)। ३. एक एव यजुर्वेदः तं चतुर्धा व्यकल्पयत् (तु०— विष्णुपुराणः) ४. यज्ञोपयोगित्वसूपयोगात् सर्वोऽपि वेदो यजुर्वेद इत्युच्यते (चव्यू० महीदासः)। ५. कृष्णं शुक्लमिति द्वेधा तत् कृष्णं तैत्तिरीयकम्। बुद्धिमालिन्यहेतुत्वाद् यजुः कृष्णामीर्यते। याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान्। व्यवस्थितप्रकरणं यजुः शुक्लम्। (तु०—काण्वसंहिता सा० भा०) ६. यजुर्वेदोपनिषदे मन्त्राः शाकलसंज्ञकाः उपदिष्टाः शौनकेन आत्मशिष्याय वृद्धये,

तेषां शाकलमन्त्राणां यजुःसंज्ञाः समीरिताः (तु०—चव्यू० महीदासः२)। ७. अपि चास्मिन् यजुर्वेदे सर्वोमन्त्रो यजुर्भवेत्। यजुषाऽध्वर्युकर्मेति श्रुतौ कल्पेऽपि कीर्तितम् (तु०—ऋग्यजुः परिशिष्ट. ६)। ८. तत्र यजुषामध्वर्युवेदे बहुत्वात् क्वचिद् ऋचां सद्भावेऽपि यजुर्वेद इत्येवाख्यायते (तु०—तै० सं० भाष्यभूमिका)। वाजसनेयके यजुर्वेदाम्नाये सर्क्के सखिले सशुक्रिये ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः (शु० आ० १।१। ९. यजुर्वेद द्रव्य देवताक्रियं सकलमाम्नायते। वेदान्तरे तु क्रियामात्रं संकीर्त्य स्तोत्रशस्त्रादीनि पठ्यन्ते। ततश्च द्रव्यदेवताकाङ्क्षित्वमपनीतं इत्यशक्यं स्वतन्त्रक्रियाभिधानम्। यजुर्वेदे तु समस्तस्वरूपाम्नानात् विनापि स्तोत्रादिभिः शक्यते यागो निर्वर्तयितुम्। **द्र०** मी०को० पृ० ३१८६। १० ऋक्सामभिन्नमन्त्रत्वं यजुष्ट्वम् **द्र०** तत्रैव।

**यजुर्वेदप्रत्ययव्याख्यान—** **द्र०** अध्वर्युप्रत्ययव्याख्यान—।

**यजुर्वेदप्रमाण—**(शुक्ल०, सा०) अष्टौ सहस्राणि शतानि चाष्टावशीत्यन्यान्याधिकानि यजूंषि। एतत्प्रमाणं यजुषां तु केवलं सशुक्रियं सखिलं याज्ञवल्क्यम्॥ (तु०—शु० प्रा० वनारस संस्करण०)। तथा च द्वे सहस्रे शते न्यूने मन्त्रे वाजसनेयके। ऋग्गणः परिसंख्यातः शेषमन्यद् ऋचो यजुः॥ ऋग्वेदादस्मिन् शुक्लयजुर्वेदे मन्त्राः संगृहीतास्तत्र काण्वानां मन्त्रा द्वाषष्टिः, अन्ये ६४१ मन्त्रा अन्येषामृषीणां सन्ति (तु०— सात० काण्वसंहिता भूमिका पृ० ७) वासिष्ठ्यां शिक्षायां शुक्लयजुषि १४६७ ऋचः सन्ति। यजूंषि तु २८२३। (तु०—शिक्षासंग्रहे पृ० ४५)।

**यजुर्वेदस्य कर्मसु प्राधान्य—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु कर्मकाण्डविषये यजुर्वेदस्यैव प्राधान्यात्, आनुपूर्व्या कर्मणां स्वरूपं यजुर्वेदे समाम्नातम्। तत्र तत्र विशेषापेक्षायामपेक्षिताः शस्त्राभिष्टवनयाज्यापुरोनुवाक्यादय ऋग्वेदे समाम्नायन्ते स्तोत्रादीनि तु सामवेदे। तथा सति भित्तिस्थानीयो यजुर्वेदः चित्रस्थानीयावितरौ। तस्मात् कर्मसु यजुर्वेदस्य प्राधान्यम्। (तु०— काण्वसंहिताभाष्यभूमिका ९ पृ०)। **द्र०** यजुस्—।

**यजुष्क्रिया—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु येषु खातलूनछिन्नावहतपिष्टदुग्धदग्धेषु कर्मसु अनुष्ठानकाले यजूंषि मन्त्रा न पठ्यन्ते क्रिया समाप्तौ च तानि तानि यजूंषि पठ्यन्ते इत्यनन्तरभाविनी या यजुषां क्रिया सा यजुष्क्रिया उच्यते। तत्र खातं = यूपावटखननादि। लूनं = बर्हिर्लवनादि, छिन्नं = यूपादिकम्, अवहतं = ब्रीह्यादीनामवहनम्। पिष्टं = तण्डुल पेषणम्, दुग्धं = होमार्थं गोदोहनम्। महावीरादिदहनम्। इत्येवमर्थोऽवबोध्यः। तदुक्तम्— 'खातलून-छिन्नावहतपिष्टदुग्धदग्धेषु यजुष्क्रिया संभवात्' (का०श्रौ० १।१०।१४) इति (तु०— विद्याधरः)।

**यजुष्ट्वकल्पना—**(सा०) क्वचिद् यजुषां नित्यावसानत्वम्—यथा हविष्कृदित्यादि कल्पब्राह्मण उच्चितान्॥ तेषां नित्यावसानेषु यजुष्ट्वमुपकल्पयेत् (तु०— मै० अ० १४।१५)। तस्मिन् यजूंषि वक्ष्यामि लक्षणेन निबोधत। त्रिंशत् षडक्षरादूर्ध्वं यत् किंचिद् यजुरेव तत्॥ २९॥ प्रमाणादूर्ध्वमेतस्माद् यथा सप्तदशर्त्विजः। अल्पोल्पं चादाय तस्य पादवृतेषु दृश्यते मै० अ० ३०।

**यजुष्मती**—(सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने या इष्टका मन्त्रैरुपधीयन्ते ता यजुष्मत्य इत्युच्यन्ते।

**यजूरथ**—(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ पञ्चम्यां षष्ठ्यां वा सोमसंस्थायां वाजपेये सप्तदशस्तोमे एकाहे १. यः 'इन्द्रस्य' इत्यादियजुर्वेदोक्तैर्मन्त्रैः 'सज्जीक्रियते' स यजुर्युक्तो मुख्यः रथः यजूरथ उच्यते। स च वाजपेये दक्षिणाकाले अध्वर्यवे दीयते इति विशेषोऽगन्तव्यः। २. यस्मिन् रथे अश्वौ यजुषा मन्त्रेण युक्तौ भवतः। यो रथो यजुषा युक्तोऽश्वयुक्तः कृतः सः यजुर्युक्तः (यजूर्युक्तः (यजूरथः)। इत्युच्यते। एवं ऋग्युक्तः सामयुक्तः इत्यपि। तेन तस्य अध्वर्योः भागः नियम्यते। यजुर्युक्तो रथः अध्वर्यवे एव दीयते नान्यस्मै इति। यथा ऋग्युक्तः होत्रे एव सामयुक्तः उद्गात्रे एव इति। द्र० मी०को० पृ० ३१८५।

**यज्ञ**—(सा०) १. (यज्ञः) याच्ञ्यो भवतीति याच्यन्ते देवतास्तस्मिन्निति। (तु०—निरु० ३। १९)। यज्ञं व्याख्यास्यामः। द्रव्यं देवता त्यागः। (का०श्रौ० १।२।१-२)। २. तेषां (हविषां) पृथक् पृथग् धर्माः पृथगधिकरणानि...यज्ञ इति। किमुपज्ञो यज्ञः श्रद्धोपज्ञो मांगल इति। (उपज्ञः = आदि ज्ञानम्, मांगल = आचार्यः यद्वा फलितं तत्प्रयुक्तो यज्ञ इति)। 'क उ खलु यज्ञ इति पुरुष इति। (यज्ञः—कर्म न तत्र सन्देहः अधिदेवतायां सन्देहः, पुरुष इति विष्णुनाम पुरुषो वै यज्ञो यज्ञो वै विष्णुः, पुरुष एवेदं सर्वमिति)। यज्ञो हि मेधा यज्ञश्च त्यागः। द्र० मी०को० पृ० ३१८८। ३. यो नमसा स्वध्वर इति नमस्कारेण वै खल्वपि, न वै देवा नमस्कारमति। यज्ञो वै नम इति ह ब्राह्मणं भवति। (तु०—आ० गृ० १।१।४)। ४. यजुषा ह वै दैवाः अग्रे यज्ञं तेनिरेऽथवाऽथसाम्ना। तदिदमप्येतर्हि यजुषैवाग्रे यज्ञं तन्वतेऽथर्चाऽथ साम्ना। (तु०— श० ब्रा० ४।६।७।१३)। तस्मान्नानभिप्रेषितमध्वर्युणा किञ्चन क्रियते यदैवाध्वर्युराहाऽनुब्रूहि यजेत्यथैव ते कुर्वन्ति (श० ब्रा० ४।६।७।१९)। ५. त्रीणि तेजांसि अग्न्यादीनि (अग्निवायुसूर्यात्मकानि) मनुष्यं यजे प्रेरयन्ति। 'त्र्यर्यमा। मनुषो देवताः' (ऋ० ५।२९।१) अतो यज्ञः-अग्निभक्तिः वायु-भक्तिः सूर्यभक्तिः, एतावत् यज्ञस्य स्वरूपम्। कथमग्निः परिचरणीयः कथं वायुः परिचरणीयः कथं सूर्यः परिचरणीयः इति सर्वं यज्ञः शिक्षयति, यज्ञात् सर्वं प्रसिद्ध्यतीत्यर्थः। ६. सप्त सुत्याः सप्त च पाकयज्ञा ये हविर्यज्ञाः सप्त तथैकविंशतिः। सर्वे ते यज्ञा अङ्गिरसोऽपियन्ति नूतना यानृषयः सृजन्ति ये च सृष्टाः पुराणैः (तु०—गो० ब्रा० १।५।२५)। तत्र कियत्यः पाकयज्ञसंस्थाः कियत्यो हविर्यज्ञसंस्थाः कियत्य सोमसंस्था इति। हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम (ऐ० ब्रा० सा० ४।४०) इति सप्तपाकयज्ञसंस्था इति। अपरिमिता उ हैके ब्रुवते। यच्च किञ्चान्यत्र विहाराद्ध्रूयते सर्वास्ताः पाकयज्ञसंस्था इति। अथ हविर्यज्ञसंस्थाः- अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षयणयज्ञः कौण्डपायिन्य इति। सौत्रामणिमु हैके ब्रुवते। अत्र पशुर्न सौत्रामण्यावोपहृक्षितः स्यात् अथ सोमसंस्थाः—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशीवाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्थाः। यदग्निष्टोमस्य क्रतुकरणं (अनुष्ठानम्) तदस्याग्निष्टोमस्य। यदु-

क्थ्यस्य तत् षोडशिवाजपेययोः। यदतिरात्रस्य तदप्तोर्यामस्येति। सप्तानां सोमसंस्थानां द्वे सत्राणि न गच्छतो वाजपेयश्चाप्तोर्यामश्चेति विशेषोऽवधेयः। बौ०श्रौ० २४।४ श्रौ०को० १ भा० पृ० ७६० द्र० ।७. मृतो यज्ञस्त्वदक्षिणः। (महाभारत वनपर्व यक्षयुधिष्ठिरप्रश्नअध्याय-३१३;)। ८. तस्माद् शूद्रो यज्ञेऽनवक्लृप्तः (तु०— तै० सं० ७।१।१।६) ९. यज्ञं व्याख्यास्यामः। स त्रिभिर्वेदैर्विधीयते। ऋग्वेदेन यजुर्वेदेन सामवेदेन सर्वैर्ज्योतिष्टोमः। ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ। यजुर्वेदेनाग्नि- होत्रम्। (तु०— हि० श्रौ० १।१।१-५) द्र० मोक्षसाधन-।

**यज्ञकर्मांश—** (सा०) इष्टिपशुसोमयज्ञादिषु त्रयोंऽशाः (अवयवाः) भवन्ति यज्ञकर्मणः। तदुक्तम् यज्ञं व्याख्यास्यामः। द्रव्यं देवता त्यागः' इति (तु०—का०श्रौ० १।२।१-२)। तत्र द्रव्यं = दधिसोमव्रीहियवादि। देवता = अग्नीन्द्रादिः। त्यागः = तद्दुद्देशेन क्रियमाणः स्वत्वनिवृत्त्यनुकूलो व्यापारः। इदमेव यागस्वरूपम् (तु०—विद्याधरः)।

**यज्ञक्रम—** (सा०) इष्टिपशुसोमादियज्ञानां क्रमाः—१. अथातो यज्ञक्रमाः-अग्न्याधेयमग्न्याधेयात्पूर्णाहुतिः० हुतेरग्निहोत्रम्० त्राद्दर्शपूर्णमासौ...साभ्यामाग्रयणम्० णात् चातुर्मास्यानि० स्येभ्यः पशुबन्धः० न्धादग्निष्टोमः० व्याद्राजसूयः ०याद् वाजपेयः ०यादश्वमेधः.मेधात्पुरुषमेधः ०धात्सर्वमेधः...(गो० पू० ५।७)। सप्तसुत्याः सप्त च पाकयज्ञा ये हविर्यज्ञाः सप्त तथैकविंशतिः। सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतना यानृषयः सृजन्ति ये च सृष्टाः पुराणैः (गो०पू० ५।५।२५) २. तं (यज्ञं) संवत्सरमभिसमभरन्—। द्वादशाहमभिसमभरन्।...तं पृष्ठ्यं षडहं समभिभरन्।...तं त्रिरात्रं, तं द्विरात्रं, तमप्तोर्यामं, तमतिरात्रं, तं वाजपेयं, तं षोडशिनं, तमुक्थ्यं, तमग्निष्टोमं, तमिष्टिपशुबन्धान्। तं चातुर्मास्यानि, तं दर्शपूर्णमासौ, तमेते अग्निहोत्राहुती अभिसमभरन् (तु०—जै० ब्रा० १।३)। ३. चत्वारो वै महायज्ञाः—अग्निहोत्रं, दर्शपूर्णमासौ, ज्योतिष्टोमः, पितृपिण्डयज्ञः इति। (मी० सू० शावर ४।४।२०)। ४. अग्निहोत्रदर्शपूर्णमासौ चातुर्मास्यानि सौम्योऽध्वर इति। तेन अग्निहोत्रादिचतुर्भेदभिन्नः सर्वो यज्ञः। (तु०—तां० ब्रा० सा० ८,६,५)। ५. स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः (ऐ० आ० २।३।३)। ६. अग्निष्टोमः सर्वेषां एकाहहीनसत्राणां मूलप्रकृतिः। उक्थ्यः षोडशी, अतिरात्रः, अप्तोर्यामश्च अग्निष्टोमस्य गुणविकाराः। षोडशिगुणविकारभूता वाजपेय संस्था। ७. यज्ञक्रमो ब्राह्मणात् (वैता० श्रौ० ४।३।४५)। यथा यष्टुस्तथाध्येतुरेषा ब्राह्मी प्रतिश्रुतिः। (वैता० श्रौ० ४।३।४७)। ८. यज्ञेषु अग्निष्टोमस्य प्राथम्यम्। अर्थात् ऋक्सामब्राह्मणेषु यज्ञानामग्निष्टोमपूर्वकता वर्तते। द्र० मी०को० पृ० ३१८८; ब्राह्मणक्रम—।

**यज्ञतनु—** (सा० आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयने चितिसाधने यज्ञतनुप्रतिपादकशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका यज्ञतनव उच्यन्ते (तु०— तै० सं० सा० ४।४)।

**यज्ञतनुमन्त्र—** (सा०, आध्व०) द्र० तै० सं० ४।४।

**यज्ञदक्षिणाभागक्लृप्तिः—** (याज०) इष्टिपशुसोमेषु यज्ञेषु ऋत्विग्भ्यो दक्षिणायाः यस्य यावान् भागः आभजति स्वयमेव यजमानेन

विभज्य तस्य तावान् कल्पयितव्यः न परिषदा । द्र० मी०को० पृ० ३१८८ ।

**यज्ञदार्ढ्य—** (सा०) इष्टिपशुसोमयज्ञादिरूपस्य यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तत् यद् ऋचा तद् दृढमिति । (तु०— तै० सं० सा० ६ ।५ ।११ ।

**यज्ञदेवाकृति—** चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश । (ऋ० ४ ।५८ ।३) । यज्ञदेवस्यास्य चत्वारि शृङ्गा = चत्वारो वेदाः । त्रयः पादास्त्रीणि सवनानि प्रातर्माध्यन्दिनतृतीयानि । द्वे शीर्षे सत्राणामाद्यान्त्ये प्रायणीयदयनीये द्वे अहनी । सप्त हस्तासः गायत्र्यादिजगत्यन्तानि सप्तछन्दांसि । त्रिधा बद्धः प्रयोगविधौ मन्त्र-ब्राह्मण-कल्पसूत्रैः संदृब्धः सन् वृषभः कामानां वर्षिता इत्येवंरूपः स महान् दाता यज्ञदेवो याज्ञिकान् पुरुषान् व्याप्नोदिति । तथा च स्वर्यन्तो नापेक्षन्त आद्यां रोहन्ति रोदसी । यज्ञं ये विश्वतो धारं सुविद्वांसो वितेनिरे (तु०— शौ० ४ ।१४ ।४) मा० १७ ।६८, निरु० १३ ।६ ।७) । द्र० यज्ञयाग— ।

**यज्ञपात्र—** (सा०, आध्व०) इष्टिपशुसोमयज्ञादिषु स्रुवस्फ्यजुहूपभृद्वर्जितानि होमसंबन्धीनि सर्वाणि यज्ञपात्राणि विकङ्कतवृक्षकाष्ठघटितानि कर्तव्यानि । स्फ्यस्रुवौ तु खदिरवृक्ष काष्ठनिर्मितौ भवतः । तथा च हूयते अनया सा जूहूः होमसाधनभूता स्रुक् पलाशवृक्षकाष्ठनिर्मिता कार्या उपभृन्नाम्नी स्रुक् च अश्वत्थकाष्ठकृता भवति । तदुक्तम्— 'वैकङ्कतानि पात्राणि । खादिरः स्रुवः' । स्फ्यश्च । पालाशी जुहूः । आश्वत्थ्युपभृत्' । (तु०— का० श्रौ० १ ।३ ।३२-३६ विद्याधरः) इति । अहोमसंयुक्तानि यज्ञपात्राणि च बारणवृक्षकाष्ठघटितानि भवन्ति । अर्थात् यैः पात्रैर्होमो न क्रियते तानि पात्राणि वारणानि स्युरिति विशेषोऽवगन्तव्यः । (तु०— तत्रैव १ ।३ ।३७ विद्याधरः । द्र० यज्ञायुध— ।

**यज्ञपात्रधारण —** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु यज्ञपात्राणि आ अन्तात् (यावज्जीवं) धारयितव्यानि, 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति वचनात् । तेषां धारणं च आधानमारभ्यैव । द्र० मी०को० ३१९६ ।

**यज्ञपात्रशुद्धि—** (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृ-ति भूतेषु यज्ञकर्मणि यज्ञपात्राणां पाणिना सम्मार्जनेन (शुद्धिर्भवति) (तु०— वि०ध० ३२) । चरुस्थालीस्रुक्स्रुवाणामुष्णेनाम्भसा । स्फ्यशूर्पशकटमुतलोलूखलानां प्रोक्षेणेन (वि०ध० ३२ । ८-१२) शुद्धिर्भवतीति शेषः ।

**यज्ञपुच्छ—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तद्विकृतिषु चैकाहसत्रेषु १. तृतीयसवने हारियोजनग्रहणप्रभृति यज्ञपुच्छमित्युच्यते । तच्चाहीनेषु तु एकत्रिंशे त्रिंशे वाऽहनि भवति मासापवर्गा अहीनाः (ला० श्रौ० ९ ।५ ।१) इति वचनात् । तदुक्तम्—'एकत्रिंशेऽहनि त्रिंशे वा (ला० श्रौ० ९ ।५ ।४) । तु०— द्रा०श्रौ० धन्वी । २. यज्ञपुच्छमतिरात्र इति अग्निस्वामी । ३. अनुयाजादि हारियोजनग्रहप्रचारान्तं यज्ञपुच्छमुच्यते । ४. अनूपाजादि उदवसानीयान्तं अग्निष्टोमादौ यज्ञपुच्छं भवति । द्र० मी०को० पृ० ३१९९ ।

**यज्ञपुनरालम्भ—** (आध्व०) इष्टियज्ञेषु हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु उत्तराहवनीयपरिषेकानन्तरं यामेकां ऋचं जपति

सा ऋक् यज्ञस्य पुनरालम्भ इत्युच्यते। द्र० श्रौ०प०नि० पृ० ४२, उत्तराहावनीयपरिषेक—। द्र० श्रौ०प०नि० पृ० ४२, उत्तराऽहवनीयपरिषेक—।

**यज्ञपूर्वोत्तरततिज्ञान—** द्र० पूर्वोत्तरततिज्ञान—।

**यज्ञप्रमाण—**(सा०) मन्त्रब्राह्मणे यज्ञस्य प्रमाणम्। साङ्गो यज्ञः प्रतीयते ज्ञायते, येन परिच्छिद्यते तस्य तत्प्रमाणम्। मन्त्रब्राह्मणाभ्यां साङ्गोपाङ्गो यज्ञः प्रतीयते...अतः साङ्गो यज्ञो मन्त्रब्राह्मणाभ्यां प्रतीयते। (तु०—आपस्तम्बयज्ञपरिभाषा १।३३ कपर्दी)। तेषामेव ब्राह्मणविहिता यज्ञाः, येषु यज्ञकार्त्स्न्यमविप्रतिषिद्धम्। (तु०— हि० श्रौ० ३।१।८)।

**यज्ञभेद—** (सा०) १. यज्ञं व्याख्यास्यामो देवानां पितृणां च कौ० सू० १।९)। 'यज्ञैरथर्वा प्रथमः पथस्तते' (ऋ० १।८३।५)। २. यज्ञः सदक्षिणोऽदक्षिणश्च। सत्रव्यतिरिक्ता यज्ञाः सदक्षिणाः सत्राणि त्वदक्षिणानि। स्वामिनो हि सर्वे सत्रेषु। तेषां प्रतिग्रहो न विद्यते। (तु०— ला० श्रौ० १०।१७।१७)। स एष यज्ञः पञ्चविधः— अग्निहोत्रम्, दर्शपूर्णमासौ चतुर्मास्यानि पशुः सोमः (तु०— ऐ० ब्रा०) द्र० यज्ञक्रमः—प्रकृतियाग—।

**यज्ञमहिमन्—** (सा०) १. सर्वेण वै यज्ञेन देवाः सुवर्गं लोकमायन् इति स एष हुतादिः आ सहस्रसंवत्सरान्तः सर्वो यज्ञो यो हि यद्वेद स्वाध्याय-जपकर्ममानसेषु तेनैवोऽस्य तद्गुणोनेष्टं भवति इति। तदेतन्मन्त्रब्राह्मणं व्याख्यातम् (तु०— हि०गृ०शेष ९ पृष्ठ ४३)। २. तदेतत्सत्यं मन्त्रेषु कर्मणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि। तान्याचरथ नित्यं सत्यकामाः एष पन्थाः सुकृतस्य लोके...यस्याग्निहोत्रमदर्शपूर्णमासमचातुर्मास्यानाग्रयणमतिथिंवर्जितं च। (मुण्डकोपनिषत् १।२।१)। ३. 'यज्ञे यज्ञे स मर्त्यो देवान् सपर्यति। यः सुम्नैर्दीर्घश्रुत्तम, आविवासात्येनान्'। (ऋ० १०।९३।२)। 'यज्ञैरथर्वा प्रथमो विधारयत्'...(ऋ० १०।८।१०। 'यज्ञैरथर्वा प्रथमः पथस्तते' (पथः = मार्गान्) (ऋ० प० ८३।५; शौ० २०।५।५)। ४. एतद्वै देवा अब्रुवन् केनेमान् कामान् प्रतिगृहीष्याम इत्यात्मनैवेत्यब्रुवन्-यज्ञो वै देवानामात्मा यत उ एव यजमानस्य स यदाह यज्ञेन कल्पन्तामित्यात्मना मे कल्पन्तामिति। (तु०— वजप्रसवीये होमे श० ब्रा०)। ५. अयं यज्ञः समसदद्धविष्मानृचा साम्ना यजुषा देवताभिः। तेन लोकान् सूर्यवतो जयेमेन्द्रस्य सख्यममृतत्वमश्यामिति (तै० ब्रा० ३।७।६।१२ हि० श्रौ० ६।२।२०)। ६. यज्ञस्य वै समृद्धेन देवाः सुवर्गं लोकमायन् यज्ञस्य ०पृद्धेनासुरान् पराभावयन्...यज्ञस्यैव तत्समृद्धेन यजमानः सुवर्णं लोकमेति, यज्ञस्य व्यृद्धेन भ्रातृव्यान् पराभावयति (तै० सं० १।६।१०।२)। ७. नास्त्ययज्ञस्य लोकोऽयं कुतोऽन्यः कुरुनन्दन। (गीता) ८. अग्नेर्वै चक्षुषा मनुष्या विपश्यन्ति यज्ञस्य देवा आग्नं च विष्णुं च स्वेन भागधेयेनोपधावन्ति। (तु०—तै० सं० २।२।९)। ९. यज्ञो बभूव स आ बभूव स प्रजज्ञे स उ वा वृधे पुनः। स देवानामधिपतिर्बभूव सोऽस्मानधिपतीन् कृणोतु (तु०—शां० श्रौ० ३।२७)। १०. महायज्ञैश्च यज्ञैश्च ब्राह्मणीयं क्रियते तनुः (मनु० २।२८)। अस्यार्थः- (१) ब्रह्म परमात्मा कारणपुरुषः तस्येयं सम्बन्धिनी तनुः शरीरम्, एतैः श्रौतस्मार्तैः सर्वैः कर्मभिः क्रियते। ब्रह्मसम्बन्धिता च तद्भावापत्तिलक्षणा। स हि परः पुरुषार्थः।...ततो मोक्षप्राप्तिरुक्ताभवति। ब्राह्मीत्यनेन तनुशब्देन च तदधिष्ठाता पुरुषो लक्ष्यते। तस्य ह्येते

शरीरद्वारकाः संस्काराः तस्यैव च मोक्षप्राप्तिः शरीरस्य पञ्चतापत्तेः। २. एतेषां कर्मणां ब्रह्मप्राप्तिः फलं न श्रुतं नित्यां कर्मणां फलाभावात् काम्यानां तु अन्यदेव फलं न मोक्षः इत्यतः कैश्चिदर्थवादोऽयमिति व्याख्यायते। संस्कारविधिः स्तुत्यर्थः। ब्राह्मीयमिति यत्किञ्चिदालम्बनमाश्रित्य गुणवादेन नीयते ब्रह्म वेद तदुच्चारणार्हा, तत्कर्माधिकारिणी च। (तु०— मेधातिथि मनु० २ ।२८)। ११. कर्मात्मनां च देवानां सोऽसृजत्प्राणिनां प्रभुः। साध्यानां गणं सूक्ष्मं यज्ञं चैव सनातनम् (मनु० १.)। तज्जीवस्य मोक्षसाधनमाह—'कर्मपरं अहरहः सन्ध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहुयात्। ज्योतिष्टोमं स्वर्गकामो यजेत। 'ओमिति ब्रह्म"। ओमितीदं सर्वम्। ओमित्यग्निहोत्रमनुजानाति (तु०— सांख्यसंग्रहः पृ० २१५)। १२. अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्। किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृतं मर्त्यस्य ॥ (ऋ० ८ ।४८ ।३; तै० ३ ।२ ।५४) इति महीयाजपः। १३. यत्पुरुषेण हविषा देवा यज्ञमतन्वत। वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः (मा०सं० ३१ ।१४) तं यज्ञं बर्हिषि प्रोक्षन् पुरुषं जातमग्रतः। तेन देवा अयजन्त साध्यां ऋषयश्चये ॥ सप्तास्यासन् परिधयस्त्रिः। सप्त समिधः कृताः। देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्। यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः (तु०— ऋ० १० ।९०; मा०सं० ३१ ।९ ।१- १६) इति पुरुषसूक्तम्। १४. भूर्भुवः स्वः प्रणय यज्ञं देवता वर्धय त्वं नाकस्य पृष्ठे स्वर्गे लोके यजमानोऽस्तु। सप्त ऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानं (मानाय) धेहि ॥ देवस्य सवितुः प्रसवे बृहस्पतिप्रसूतः। ओं प्रणय (तु०— वा०श्रौ० १ ।१ ।५ ।१० का०श्रौ० २ । २ ।८-१२ वौ० श्रौ० ३ ।२४; आप० श्रौ० ३ ।१९ ।१-३)। द्र० मोक्षसाधन—।

**यज्ञमुख—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु सकलयज्ञसंबन्धिनः एकैकस्याङ्गस्यानुष्ठानं यज्ञमुखं भवति। (तु०—तै० सं० सा० ४ ।२ ।८)।

**यज्ञयोगमन्त्र—** इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च व्रीह्यादेरवघातानन्तरं यजमानः किं शब्दवन्तं यं मन्त्रं जपति स मन्त्रो यज्ञयोगमन्त्र उच्यते। द्र० श्रौ०प०नि० पृ० १५।

**यज्ञवर्त्मसंस्कर्तृ—** (सा०) इष्टिपशुसोमयज्ञादिषु यज्ञस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा, वाचा होताऽध्वर्युरुद्गाताऽन्यतराम्। इति ब्रह्महोत्रध्वर्यूद्गातारो यज्ञवर्त्मसंस्कर्तारो भवन्तीति।

**यज्ञविभ्रष्ट—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु यज्ञं प्रारब्धवतो यजमानस्य कुतश्चिन्निमित्तात् समाप्त्यभावेन प्रधानैकदेशविस्मरणाद् वा यज्ञो विच्छिन्नः स्यात् तदा यजमानो यज्ञाद् विभ्रष्टो यज्ञविभ्रष्ट इत्युच्यते। (तु०—तां० ब्रा० सा० १७ ।८- १-२)।

**यज्ञविमोक—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च यमजानकर्तृकगार्हपत्योपस्थानानन्तरं यमेकं यजुर्मन्त्रं पठति स मन्त्रः यज्ञ समाप्तौ पठ्यमानत्वाद् यज्ञविमोक इत्युच्यते। द्र० यजमानकर्तृकगार्हपत्योपस्थान, क्रतुयुक्तिविमुक्ति—, यो विमोक—, श्रौ०प०नि० पृ० ४२।

**यज्ञवेशस** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु यज्ञवेशसः यज्ञविधातः इत्युच्यते ।

**यज्ञसमृद्ध—(द्धि)** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु १. 'एतद् वै यज्ञस्य समृद्धं यद्रूपं समृद्धं, यत् कर्म क्रियमाणम् ऋग्यजुरभिवदति' (तु०—ऐ० ब्रा० १ ।१७) । २. 'यद्वै यज्ञेऽभिरूपं तत् समृद्धम्, यज्ञस्यैव समृद्ध्यै' (शां० ब्रा० ८ ।७) ।

**यज्ञसंस्था—** द्र० यज्ञ— ।

**यज्ञसंभारसंभरण** — (याज०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु 'एष ह उ त्वेवं संभृतसंभारेण यज्ञेन यजते (यः संभारान् वेद) । सम्भाराऽज्ञाने किमु स यज्ञेन यजेत यो यज्ञस्य संभारान् न विद्यात्' (तु०— मै० सं० ३ ।६ ।४)

**यज्ञसंभृति—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु 'तेऽब्रुवन् देवशरीरैरिदं वा इदममृतशरीरैः समापयामः, न वा इदं मनुष्याः संभारयन्ति, एतेमं यज्ञं संभराम इति' (तु०— जै० ब्रा० १ ।३) ।

**यज्ञस्यारम्भप्रतिष्ठा—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु 'विज्ञायते स्वाहा यज्ञं मनसा, स्वाहाद्यावापृथिवीभ्याम्, स्वाहोरोरन्तरिक्षात्, स्वाहा यज्ञं वातादारभे इति वात एव यज्ञस्यारम्भः, वातः प्रतिष्ठा' इति यज्ञस्यारम्भप्रतिष्ठे उच्येते । द्र० बौ० श्रौ० २४ ।२; श्रौ०को० १ भा० पृ० ७६० ।

**यज्ञानुष्ठानफल—** (सा०) इष्टिपशुसोमानां प्रकृतिविकृतिभूतानां यज्ञानामनुष्ठानेन 'मानुषाद् देवत्वपरिग्रहः' इति यज्ञानुष्ठानफलमुच्यते । यज्ञाश्च सप्त सुत्याः सप्त च पाकयज्ञाः हविर्यज्ञाः सप्त तथैकविंशतिः । सर्वे ते यज्ञा अङ्गिरसोऽपि यन्ति नूतनान् यानृषयः सृजन्ति ये सृष्टाः पुराणैः (तु०— गो० ब्रा० १ ।५ ।२५) । इति विशेषोऽवधेयः । द्र० क्रतुस्वाध्यायफल— ।

**यज्ञान्वायत्ततन्त्र** — (सा०) इष्टिपशुसोमयज्ञेषु त्रीणि तन्त्रा-णि यज्ञमन्वायत्तानि भवन्ति— पञ्च प्रयाजं नव प्रयाजमेकादशप्रयाजमिति । पञ्चप्रयाजेन दर्शपूर्णमासौ काम्या इष्टय इति वर्तन्ते । नव प्रयाजेन चातुर्मास्यानि एकादशप्रयाजेन पशुः सोम इति यज्ञान्वायत्तन्त्राण्युच्यन्ते । द्र० बौ० श्रौ० २४ ।११ श्रौ०को० १ भा० पृ० ७६३ ।

**यज्ञायज्ञीयसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. तृतीयसवने प्रयुज्यमानं 'यज्ञायज्ञा वो अग्नये' (साम० ३५) इत्यस्यां योनावुत्पन्नं साम यज्ञायज्ञीयम् । तस्य साम्नः संबन्धिस्तोत्रं (साम० ७०३-४) तृतीयसवने प्रवर्तते (तु०—तै० सं० सा० ४ ।७ ।१३), २. यज्ञायज्ञीयं साम बृहतीसतोबृहतीच्छन्दस्कऋग्द्वयात्मके सूक्ते प्रगथनेन जगती-ककुब्द्वयरूपतृचात्मके तृतीयसवने गीयते । एकविंशश्च तत्र स्तोमः । 'यज्ञा यज्ञा वो आग्नये' (साम० ७ ।३) इति बृहती, 'ऊर्जो न पातं' (साम० ७०४) इति सतो बृहती । द्र० मी०को० पृ० ३१९९ ।

**यज्ञायतन—** (सा०) इष्टिपशुसोमयज्ञानां पञ्च यज्ञायतनानि (वेदयः) इमानि भवन्ति । तत्र १. अग्निहोत्रस्य दर्शपूर्णमासादीनां वेदिः दक्षिणवेदिः । २. चातुर्मास्यान्तर्गतवारुणप्रघासिकपर्ववेदिः (दक्षिणोत्तरवेदिद्वयम्) । २. चातुर्मास्यान्तर्गतवारुणप्रघासिकपर्ववेदिः (दक्षिणोत्तरवेदिद्वयम्) । ३. स्वतन्त्रपशुयागवेदिः (पाशुबन्धिकवेदिः, उत्तरवेदिः) पशुबन्धे दक्षिणोत्तरवेदिद्वयं भवतीति

विशेषोऽवधेयः। ४. सोमार्था सौमिकी महावेदिः। (आपस्तम्बकात्यायनानुसारिणी)। ५. अग्निचित्स्थण्डिलमग्निचिद्वेदिः पञ्चप्रस्तारा तत्र सुपर्ण (श्येन) चितेः द्वितीय चतुर्थप्रस्तारयोः स्वरूपम् (द्वितीयप्रस्तारः चतुर्थप्रस्तारश्च)। तस्या एव प्रथमतृतीयपञ्चमप्रस्ताराणां स्वरूपम् (प्रथमप्रस्तारः तृतीयप्रस्तारः पञ्चमप्रस्तारश्च) इति पञ्चप्रस्तारा चयनवेदिः।

**यज्ञायुध—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विविकृतिषु च १. पुरोडाशसंपादनार्थं स्फ्यश्च कपालानि च, अग्निहोत्रहवणी च शूर्पं च, कृष्णाजिनं च शम्या च, उलूखलं च मुसलं च, दृषच्चोपला च, एतानि दशयज्ञायुधानि दर्शपूर्णमासयोराम्नायन्ते। तत्र स्फ्येनोद्धन्ति, कपालेषु श्रपयति, अग्निहोत्रहवण्या हवींषि निर्वपति, शूर्पेण विविनक्ति कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति, शम्यां (शम्यायां) दृषदमुपदधाति, प्रोक्षिताभ्याम् उलूखलमुसलाभ्यामवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि। इत्येवंरूपा विधयो विशिष्टक्रियासु व्यवस्थिताः स्फ्यादिसाध्यकर्मणामाम्नाताः। अतः 'यज्ञायुधानि संभरति' इत्यत्र यज्ञायुधानां दशानां संभरणस्य विधिरिति विशेषोऽवगन्तव्यः। २. एभ्यो दशभ्य इतराणि जुहूः उपभृत् स्रुवः ध्रुवा प्राशित्रहरणम् इडापात्रं मेक्षणं पिष्टोद्वपनी प्रणीताप्रणयनं आज्यस्थाली वेदः दारुपात्री योक्त्रं वेदपरिवासनानि धृष्टिः इध्मप्रव्रश्चनानि अन्वाहार्यस्थाली मदन्ती फलीकरणपात्रं अन्तर्धानकटं चेत्यादयः एते पदार्था अन्ये च विकृतिषु उपयुक्ताः ते सर्वे यज्ञायुधानि यज्ञपात्रपदेन च श्रुतौ गीयन्ते। द्र० यज्ञपात्र—, श्रौ०प०नि० पृ०१५।

**यज्ञियदीक्षित—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे 'द्वादशाऽहानि दीक्षितो भवति यज्ञिय एव तैर्भवति' अर्थात् द्वादशसु दिनेषु दीक्षाख्यनियमेऽनुष्ठिते दीक्षितोऽयं यजमानपुरुषो यज्ञयोग्य एव भवति (तु०— ऐ० ब्रा० सा० ४।२४)।

**यज्ञियनामन्—** (सा०) स्मार्ते नामकरणप्रकरणे करिष्यमाणेषु पञ्चसु नामसु 'सोमयाजी' इति तृतीयं यज्ञियं नाम कुर्वीतेति विज्ञायते। (तु०—हि०गृ० २।४।१५ अग्निवेशगृह्य- २।२।५)।

**यज्ञोपवीत—** (सा०) इष्टिपशुसोमयज्ञादिषु कर्मसु १. दक्षिणबाहुना उद्धृतं सव्यांसस्थितं स्मृत्युक्तरीत्या निर्मितं सूत्रं यज्ञोपवीतमुच्यते। तदुक्तं कोशे 'उपवीतं यज्ञसूत्रं प्रोद्धृते दक्षिणे करे' इति। द्र० श्रौ०प०नि० पृ० २१, का०श्रौ० १।७।२३ टि० विद्याधरः)। २. यज्ञोपवीतं (नवतन्तुकं वासो विशेषश्च)। 'यज्ञोपवीत्यधीयीत, अध्यापयेत्, यजेत, याजयेत' इति कठशाखाविहितस्य नवतन्तुकत्रिवृद्ग्रन्थिकस्य यज्ञोपवीतस्य प्राचीनावीतनिवीतत्वाख्ययोः विन्यासविशेषयोः स्मृतिप्राप्तं पितृमनुष्यप्रधानकर्मविषयत्वम्। द्र० मी०को० पृ० ३२००। यद्यपि उपवीतं नाम कर्तुः वासो विन्यासमात्रं गुणो भवति। उपवीतं दर्शपूर्णमासाङ्गं दैविके कर्मणि भवति। 'नित्योदकी नित्ययज्ञोपवीती' इति स्मृति-विहितं पुरुषार्थम्। तथा अन्यथा उपवीतम्, अन्यथा यज्ञोपवीतम्। उपवीतं हि कर्तुर्वासो विन्यासः, यज्ञोपवीतं तु सूत्रस्य विन्यासविशेषः तत्समाचारतः सर्वकर्मार्थं

प्राप्तम्, उपवीतं तु प्रकरणाद् दर्शपूर्णमासयोरेव इति यज्ञोपवीतोपवीतयोः विषयभेदो वर्तते तथापि यज्ञोपवीतेन उपवीतस्याविरोधात् समुच्चयोऽवगन्तव्यः (तु०— टुप्टीकायां वार्त्तिककारः)। द्र० मी०को० पृ० ११६७। अतः यज्ञोपवीतम्, उपवीतम् ब्रह्मसूत्रम्, यज्ञसूत्रमिति पर्यायार्यवाचिनः इत्यवगन्तव्यम्।

**यथाऽऽयतनसादन —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे अन्यत्र च पूर्वं यस्मात् स्थानात् स्रुचौ गृहीते, तस्मिन्नेव स्थाने पुनः स्थापनं, तदेतत्पुनः स्थपनं यथा 'यथायतनं स्रुचौ सादयति' इति यथाऽऽयतनसादनमुच्यते। द्र० श्रौ०प०नि० पृ० २६।

**यथार्थोह—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु यो यस्य शब्दस्य अर्थः तस्य अर्थस्य तथैव ऊहेन (शब्दान्तरेण) वचनं अर्थवशेन अभिधानं यथार्थवचनम् ऊहो यथार्थोह उच्यते। द्र० ऊह—।

**यथोपपादम्—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च महावीरप्राङ्नयनमन्त्राणां यथोक्तं प्रतिमन्त्रं अवसानं यथोपपादनमुच्यते। द्र० महावीरप्राङ्नयनमन्त्र—।

**यथोपपादम्—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे उत्तरपक्षस्य उपान्त्ये महाव्रताख्येऽहनि माध्यन्दिनसवने निष्केवल्यशस्त्रे उदरभागरूपं वशनामकं शस्त्रं होता शंसति। तत् वशनामकेनर्षिणा दृष्टं 'त्वावतः पुरूवसो' (ऋ० ८।४६।१-३३) इति त्रयस्त्रिंशद् ऋगात्मकं सूक्तं वशमित्युच्यते। तस्य 'त्वावतः' इत्यारभ्य 'सनितः सुसनितः' इत्यन्ताः विंशतिः (१-२०)। ततः 'ता अस्य सूददोहसः (ऋ० ८।६९।३) इत्येका। एवमेकविंशतिः शंस्तव्याः। तदुक्तम्—'त्वावतः पुरूवसविति वशः सनितः सुसनितरित्येतदन्तो 'ददी रेक्णः' (१५) इति द्विपदा 'नूनमथ' (१५) इत्येकपदा, ता अस्य सूददोहस इत्येतदन्तः सूददोहाः (ऐ० आ० ५।२।५)। ताः परस्परविलक्षणच्छन्दोयुक्ताः (विच्छदसः गायत्र्यादिना नाच्छन्दस्काः) सन्ति। तासां शंसनकाले प्रणवं प्रणुत्य पुनःपुनः प्रणवमुचार्य तत्तच्छन्दो यथा न विपर्येति तथा तत्र कृत्वा (आ०श्रौ० ६।५।११-१५) इत्यत्रोक्तनियममनतिक्रम्य यथा शंसनमुपद्यते यथा शंसनं यथोपपादमुच्यते। अर्थात् 'पच्छो द्विपदाः। उपसन्तनुयादेकपदाः' (आ०श्रौ० ५।६।५।११-१२) इति निर्दिष्टनियमेन याः सूक्तगता ऋचो द्विपदाः सन्ति ताः पच्छः शंसनीयाः-प्रथमपादं पठित्वा ततोऽवसाय पश्चाद् द्वितीयं पादं पठित्वा अन्ते प्रणवं कुर्यादिति। याः एकपदाः सन्ति ताः पुरस्तादुपरिष्टाच्च प्रणवाभ्यां सन्तनुयात्। मध्ये च नावस्येत् 'इतीदृशं शंसनं यथोपादमुच्यते। इह वशसूक्ते तु०— ददीरेक्णः' (१५) इति द्विपदा। 'नूनमथ' (१५) इत्येकपदा। ते अनेन प्रकारेण शंस्तव्ये। शिष्टा विच्छन्दसः अर्धर्चशस्येषु पच्छः शस्याः, पच्छः शस्येषु अर्धर्चशस्याः (तु०— आ०श्रौ० ६।५।१४ नारायणः) इति साधारणेन विधिना पच्छः शस्यगतानामर्धर्चशस्यगतानां पच्छः शस्ये कर्तव्ये त्रिष्टुब्जगतीभ्योऽन्या या ऋचस्ताः पच्छो न शंस्तव्याः (तु०—आ०श्रौ० ६।५।१६ नारायणः)। तेनाऽत्रजगतीच्छन्दस्के द्वे ऋचौ एव पच्छः शंस्तव्ये। इतरा अर्धर्चशः इति विशेषोऽनुसंधेयः। (तु०— ऐ० आ० सा० १।५।१)।

**यम—** (सा०) १. मन्द्रस्वरस्य सप्त यमा भवन्ति। तत्र षष्ठेन यमेन याज्या पठ्यते सप्तमेन वषट्कारः 'उच्चैस्तरां बलीयान् याज्यायाः' आ०श्रौ० १।५।६) इत्याश्वलायनसूत्रात् 'उच्चैस्तरां वा वषट्कारः' (पा० १।२। ३५) इति पाणिनिसूत्राच्च। तत्र उच्चनीचभावेन आरोहावरोहक्रमेण संपाठ्यमाना गानशस्त्रे षड्जादिनामभिः प्रासिद्धा यमा इत्युच्यन्ते। द्र० श्रौ०प०नि० पृ० २९। २. क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रअतिस्वार्याः एते स्वराः खलु यमा नाम। ३. मन्द्रादिषु त्रिषु स्थानेषु षष्ठेन यमेन दर्शपूर्णमासयोर्मन्त्राणां प्रयोगः सप्तमेन वषट्कारः। एवं पञ्चमचतुर्थतृतीयप्रथमैः उखासंभरणीयाप्राजापत्यादीक्षणीयाप्रायणीयाऽऽतिथ्याः प्रयोक्तव्याः। दीक्षणीयायाः प्राग्भावि उखासंभरणीयादे सोमधर्म उपांशुत्वादिर्न भवतीति विशेषोऽनुसंधेयः। (तु०— आ०श्रौ० ४।३।१७ नारायणः)

**यमगाथा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे यमो गीयते यास्वृक्षु ता यमगाथा ऋचः यमगाथा इत्युच्यन्ते। (तु०— तै० स० सा० ४।१।८)। गवामयने महाव्रतेऽहनि अपि यमगाथा गीयन्ते इति। विशेषोऽवगन्तव्यः।

**यमातिरात्र—** द्र० द्वितीयमेकान्नपञ्चाशद्रात्रसत्र—।

**यवाग्रयणकाल—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयणप्रकरणे 'वसन्ते यवैरिति' वसन्तो यवाग्रयणकालो भवति।

**यवाग्रयणेष्टि—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयणप्रकरणे यवाग्रयणे सर्वं व्रीह्याग्रयणेष्टिवद् भवतीति तदर्थंव्रीह्या ग्रणेष्टिद्रष्टव्या। यवाग्रयणव्रीह्याग्रयोः भेदेनानुष्ठानमिति। द्र० मी०को० पृ० ३२२७। द्र० आग्रयण-, व्रीह्याग्रयणेष्टि-, श्रौ०प०नि ०पृ० ७५।

**यवाचित—** (सा०) यवपूर्णं शकटं यवाचितमुच्यते।

**यशस्—** (सा०) सत्कुलदानादिजन्या कीर्तिर्यश उच्यते।

**यशोदा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिचयने उपधेया इष्टका यशोदा उच्यते।

**याग—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. द्रव्यं देवता त्याग इत्येत्त्रितयं याग उच्यते। तत्र द्रव्यं दधि-सोम-व्रीहियवादि, देवता अग्नीन्द्रादिः। त्यागः देवतोद्देशेन क्रियमाणः स्वस्वत्वनिवृत्त्यनुकूलो व्यापारः इत्यवगन्तव्यः। २. देवतोद्देशेन द्रव्यस्य त्यागमात्रं याग उच्यते। विहितदेवतोद्देशेन द्रव्यस्य त्यागो यागो भवतीत्यर्थः। त्यागहोमयोरयमेव विशेषः यदत्र यागे केवलं त्याग एव भवति, होमे तु प्रक्षेपपूर्वको त्यागो भवतीत्यवधेयम्। ३. उद्दिश्य देवतां द्रव्यत्यागो यागोऽभिधीयते। (ऐ०—ब्रा० सा० १।१) ४. यागस्य रूपे द्वे-देवता द्रव्यं च (द्रव्यदेवतं तथेति चेत्=मी०सू० ११।२।९ वृत्तौ)। द्र० यजति-' यज्ञ—, यज्ञदेव-, यज्ञकर्मांश-। ५. यागा हि देवताऽऽराधनरूपाः 'यज्-देवपूजायाम्' इति स्मरणात्। द्र० मी०को० पृ० २१२५ तत्र यजति निष्पन्नो यागशब्दः स्वरूपतोऽभिधया देवपूजां संगतिकरणं दानं चेत्यर्थत्रयमभिदधाति। लक्षणेन देवता द्रव्य त्यागात्मको यज्ञ इति याज्ञिकैः परिभाष्यते। देवताः उद्दिश्य द्रव्याणामग्नावुत्सर्गविधौ याः क्रियाः क्रियन्ते यथा च तंत्र व्याप्रियते तत् साकल्येन कर्मकाण्डमभिधी-

यतेऽभियुक्तैरिति विशेषोऽवगन्तव्यः । द्र० कर्मकाण्ड— । ६. यजति चोदना यजति यजेत् यजेत इति यजधातुः द्रव्यं च देवता च 'न मम' इति त्यागरूपा क्रिया च तेषां समाहारं द्रव्यदेवताक्रियं ब्रवीति, एतावात् यागपदार्थः । यजति चोदनायाः समुदाये = द्रव्यदेवतासमुदाये कृतार्थत्वात् अर्थतः परि- पूर्णत्वात् । द्र० मी०को० पृ० ३१८१ ।

**यागकण्टक—** (सा०) इष्टिपशुसोमयज्ञादिषुमन्त्राणां दैवतं छन्दो निरुक्तं ब्राह्मणान् ऋषीन् । कृत्तद्धितादींश्चाज्ञात्वा यजन्तो यागकण्टकाः इत्युच्यन्ते ।

**यागकाल—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. 'यः इष्ट्या पशुना सोमेन यजेत स पौर्णमास्याममायां वा यजेत' (तु०— आप०श्रौ० १० ।२ ।८) । २. 'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः । तैरमावास्यायां पौर्णमास्यां वा यजेत' (आ०श्रौ० २ ।१ ।१-२) । ३. 'आपूर्यमाणपक्षेषु (शुक्लपक्षेषु) यजन्ते' इति शुक्लपक्षः यागकालः (तु०— ऐ० ब्रा० सा० ४ ।२७) । ४. अहोरात्राभीज्या अग्निहोत्रम् । पूर्वपक्षापरपक्षाभीज्या दर्शपूर्णमासौ । ऋत्वभीज्या चातुर्मास्यानि । ओषधिभक्त्यभीज्या आग्रयणेष्टिः । उदगयनदक्षिणायनयोः पशुः । संवत्सराभीज्या सोमः । नि० सू० २.५ । गृहस्थाश्रमी वैवाहिकाग्नौ पाकयज्ञान् कुर्यात् । सायंप्रातश्चाग्निहोत्रम्, चन्दार्कसन्निकर्षविप्रकर्षयोर्दर्शपूर्णमासाभ्यां यजेतं' शरद्ग्रीष्मयोराग्रयणेन व्रीहियवपाकयोर्वा । प्रत्ययनं पशुना । त्रैवार्षिकाभ्यधिकान्नः प्रत्यब्दं सोमेन । (तु०— विष्णुस्मृतिः ५९ । २-९) ।

**यागकालसमृद्धि—** (सा०) यत्र त्रीणि सन्निपतितान्यृतुर्नक्षत्रं पर्व तत्समृद्धम् । विप्रतिषेधे ऋतुर्नक्षत्रं च बलीयः । द्र० कर्मारम्भकाल— ।

**यागहोमयोर्विवेक—** (सा०) इष्टिपशुसोमयज्ञादिषु याज्या पुरोनुवाक्यापुरःसरं हूयमानाः यागाः, तद्रिहिताः होमाः इति यागहोमयोर्विवेकः । (तु०— अथर्वभाष्य० सा० १७ ।१ । १८) । द्र० यजति— ।

**याजमान—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु (यजमानः) १. प्रत्यगाशिषो मन्त्रान् जपति अपकरणानुपतिष्ठतेऽनुमन्त्रयते । (तु०—आप०श्रौ० ४ ।१ ।३) । २. प्रत्य- गाशिषोऽकर्मयुक्ता मन्त्रा याजमानम् (वा० श्रौ०१ ।१ ।२ ।१२) । ३. इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु तत्र तत्र एतदतिरिक्तं यदन्यदुपदिष्टमतिदिष्टं वा यजमानकर्तृत्वेन तत्सर्वं याजमानमुच्यते इति विशेषोऽवगन्तव्यः । ४. दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीयात् (का०श्रौ० १ ।१० ।१२) । सूत्रोक्ताः पदार्था अनुक्रमेण तत्र तत्र द्रष्टव्याः इति विशेषोऽवधेयः ।

**याजमानत्रैविध्य—** (सा०) इष्टिपशुसोमयज्ञादिषु क्रत्वर्थं स्वार्थं उभयार्थमिति त्रिविधं याजमानमितियाजमानत्रैविध्यमुच्यते । तत्र क्रत्वर्थं पात्रासादनादिकम् । स्वार्थं वपनव्रतादिकम् । उभयार्थं क्रत्वर्थं पुरुषार्थरूपं चेति विशेषोऽवधेयः । (तु०—का०श्रौ० १२ ।१ ।१४ विद्याधरः) ।

**याज्या—** (हौ०, सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. यजत्यनयेति याज्या । 'ऋहलोर्ण्यत्' (पा० ३ ।१ ।१२४) इति यति प्रत्यये यजया च (पा० ७ ।३ ।६६) इति कुत्वाभावः । यथा इज्यते सा याज्या देवतो-

पलक्षणार्था प्रदानार्था। मी०को० पृ० ३२४१। २. देवतावाहनानन्तरं (देवतादेशानन्तरं) ऋचा हविः प्रयच्छति सा ऋग् याज्या उच्यते (तु०— विद्याधरः का०श्रौ० १।९।१५)। ३. येऽयजामहे इति आगुः पूर्विका वौ३षट् इति वषट्कारान्ता हविः प्रदानार्था इज्यतेऽनया इति याज्या ऋक् याज्योच्यते तु०—का०श्रौ० १।८।९, टि० विद्याधरः)। ४. उपरिष्टाल्लक्ष्मा याज्या। अर्थात् मन्त्रप्रतिपाद्याया देवताया नाम यस्यां ऋचि उत्तरार्धे विद्यते याज्या सेति। (तु०— ऐ० ब्रा० सामश्रमी सं० १।४, पृ० ४५ टि०) ५. याज्यानुवाक्यासमाम्नाये युग्मेषूत्तरं पठिता ऋचो याज्या अवगन्तव्याः। पूर्व पठिता पुरोनुवाक्या। ६. यजेति चोदिते याज्या भवति। (याज्यानुवाक्यायुगलेषु) सा चोत्तरा ज्ञेया। (तु०—आ०श्रौ० १।६।१ देवत्रातः)। ७. आगूः पूर्विका वषट्कारान्ता प्रायशोऽर्धर्चावसाना बहुस्थानेषु एकैव (केवला) ऋग्याज्या भवति। क्वचिदनृगपि याज्यापदेनोच्यते। श्रौ०प०नि० पृ० २८ **द्र०** ८. काश्चिद् याज्या अध्वर्युसंप्रैषेणेज्यन्ते, काश्चित् पुनर् अध्वर्युप्रेषितो मैत्रावरुणः प्रेष्येति प्रैषैर्होतारम् (आ०श्रौ० ३।२।४) इति मैत्रावरुणप्रैषेणेज्यन्ते। (तु०—आ०श्रौ० २।१६।१५ सिद्धान्ती)।

**याज्यात्व**—(हौ०, सा०) इष्टिपशुसोमयज्ञेषु देवतां यागकाले येन मन्त्रेण उद्दिशति तस्य याज्यात्वम्। **द्र०** मी०को० पृ० ३२४३।

**याज्याधर्म**—(सा०, हौ०) १. आगूरेकश्रुतियाज्यान्तप्लुतिवषट्कारा अनुवाक्यापूर्वाः क्वचिद् ग्रहादिषु प्रैषपूर्वाश्च याज्याधर्मा भवन्ति (तु०—आ०श्रौ० २।१६।१६)। २. तिष्ठन् याज्यामन्वाह। मी०को० पृ० ३२४१। आसीनत्वम्, अनवानत्वं (एकश्रुतित्वम्), वषट्कारान्तत्वम् पुरोनुवाक्यापूर्वकत्वम् इत्यादयो धर्मा याज्यायाः (आसीनो यजति, अनवानं यजति, याज्याया अधिवषट्करोति, पुरोनुवाक्यां च प्रथमं प्रयुङ्क्ते) **द्र०** मी०को० पृ० ३२४४।

**याज्यानामाद्यन्तावयव**— (हौ०) इष्टिपशुसोमयज्ञादिषु याज्यानाम् आदिः— 'ये३यजामहे। अन्तः—'वौ३षट्'। (तु०— वैता० श्रौ० १९।८)।

**याज्यानुमन्त्रणविधि**—(हौ० सा०) इष्टिपशुसोमयज्ञेषु 'वागोजः सह ओजो मयि प्राणापानौ' इति वषट्कारमुक्त्वोक्त्वा३नुमन्त्रयते'। सर्वस्यायं विधिरिति (तु०— आ०श्रौ० १।५।१७ नारायणः)।

**याज्यानुवाक्ययोर्धर्म**— (सा०) (क) तत्र अनुवाक्या = १. देवतास्मरणार्थाः ह्यनुवाक्या। २. ह्वयति चानुवाक्यया। ३. अनुब्रूहि- इति प्रैष अनुवचनलक्षणमन्त्रः। (ख) याज्या = १. हविः स्मरणार्था च याज्या। २. प्रयच्छति याज्यया। ३. होतर्यजआश्राव्याह—।

**याज्यापाठप्रयोग**— (सा०) इष्टिपशुसोमयज्ञादिषु याज्याया अचां मध्ये अन्त्योऽच्प्लुतो भवति, रुस्थानिको विसर्गः याज्याया अन्ते भवति चेद् वषट्कारेण सन्धौ अवसानाभावात् रेफ एव विसर्गस्थानेऽवतिष्ठते, रेफस्थानिको यत्र विसर्गस्तत्रलोप एव विसर्गस्य भवति। याज्यान्तानामन्येषां तु व्यञ्जनानां यथा व्याकरणं वषट्कारेण सह सन्धिर्भवति। एकारस्य ऐकारस्य वा याज्यान्तत्वे तयोः सन्ध्यक्षरत्वात् प्लुतमकारं पृथगुच्चार्य इकारं ह्रस्वमेव अन्ते पठित्वा वषट्कारं पठेत्। एवम् ओकारस्य औकारस्य वा तथात्वे तयोरपि प्लुतं अकारं

पृथगुच्चार्य उकारमन्ते पठित्वा वषट्कुर्यात्। तत्र केवलः रकारः रेफः। सोऽयं पाठप्रकारः याज्यापाठ प्रयोग उच्यते। श्रौ०प०नि० पृ० २८।

**याज्यापुरोऽनुवाक्ययोर्लक्षण—** (सा०, हौ०) इष्टिपशुसोमेषु पुरस्ताल्लक्ष्मा पुरोऽनुवाक्या। यस्या ऋचः पूर्वार्धे देवतालिङ्गं सा पुरोनुवाक्येत्यर्थः।उपरिष्टाल्लक्ष्मा याज्या। उत्तरार्धे तल्लिङ्गं चेद् याज्येत्यर्थः। एतस्य लक्षणस्य प्रदर्शनार्थत्वात् क्वचिदेतद् व्यभिचरति। तत्र सर्वत्राम्नानक्रमो नियामकः। पुरस्तादाम्नाताः पुरोनुवाक्याः। पश्चादाम्नाताः याज्याः। तस्मादिष्टिक्रमं मन्त्रक्रमं च परीक्ष्यैकैकस्यामिष्टावेकैकं मन्त्रयुग्मं प्रयोज्यम्। (तु०— हि० श्रौ० टीका २२।२।५) द्र० पुरोनुवाक्या—।

**याज्यापुरोनुवाक्ययोः परिमाण—** (सा०, हौ०) यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः पुरोनुवाक्यानां याज्यानां च संख्या प्रायेण समानैव दृश्यते (ऐ० ब्रा० सा० ६।९)। यत्र प्रकरणे बह्वयः याज्याः पठिताः तत्रापि हविः समर्पणार्थत्वरूपदृष्टफलकत्वात् एकयैव याज्यया तत्कार्यसिद्धिः। तदुक्तम्— 'न याज्यानुवाक्यासु विरोधात्।' इति न समुच्चयः। तथा च एकाऽनुवाक्या भवत्येका याज्या (श० ब्रा० ५।१।३।४) इति दर्शनाच्च एकैव याज्या एकैव पुरोनुवाक्या च भवति न समुच्चयः। न द्वे बह्वयः। इत्यर्थः। (तु०—का०श्रौ० १।८।९-१० विद्याधरः)। द्र० पुरोनुवाक्या—।

**याज्या-याज्या—**सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु याः सोमद्रव्यसंबन्धिनन्यो याज्या विधीयन्ते तासु सर्वासु 'सोमस्याग्ने वीहि' इत्यनुवषट्कारसंज्ञको मन्त्रो याज्यात्वेन भवति (शां०श्रौ० ७।३।४ भा० पृष्ठ ३०५)। अयमनुवषट्कारो याज्यानां याज्योच्यते। द्र० ४-अनुव- षट्कार—।

**याज्यावषट्कारयोर्यम—** (सा०) मन्द्रादेः एकैकस्य स्वरस्य सप्त सप्त यमा भवन्ति। यदि याज्या षष्ठेन यमेन तदा सप्तमेन वषट्कारः प्रयोक्तव्यः। अथ यदि याज्या मन्द्रस्वरा मन्द्रेणैव वषट्कारोऽपि। आ०श्रौ० १।५,६ सिद्धान्ती) द्र० यम—।

**याज्याविकल्प—** (सा०, हौ०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. यत्र एकाधिके याज्यानुवाक्ये श्रूयेते तत्र याज्याविकल्पो भवति न समुच्चय इति। २. याज्यानुवाक्ययोः गायत्रीत्वपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतौ यथायथं समुच्चयः। मी०को० पृ० ३२४१। द्र० याज्यापुरोनुवाक्या- परिमाण—।

**याज्यास्वरूप—** (सा०) इष्टिपशुसोमयज्ञादिषु याज्यायाः पुरस्तात् ये३यजामहे इत्यागूः, आगुर आदौ प्लुतिः, ततो याज्यापाठः, याज्याया अन्ते प्लुतिः, याज्याया उपरिष्टात् वौ३षट् इति वषट्कारः, वषट्कारस्यादौ प्लुतिः। ततो 'वागोजः सह ओजो मयि प्राणापानौ' इत्यनुमन्त्रणमन्त्रः। इति याज्यास्वरूपमुच्यते। (तु०—आ०श्रौ० १।५।२० नारायणः)। द्र० याज्याधर्म, याज्यापाठ—।

**यामसामन्—** (औ०) सोमयज्ञेषु प्रकतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयने 'नाके सुपर्णम्' इत्यस्यां पठितम् 'औ होई इया हाऊ अहो हो३वा नाके सुपा' इत्यादि यामं सामोच्यते। तेन साम्ना गवामयने महाव्रतेऽहनि मार्जालीयं धिष्ण्यमुपतिष्ठन्ते। वेदेर्दक्षिणभागे हि

मार्जालीयं भवति। अस्य साम्नः परिमात् संज्ञा च भवति। (तां० ब्रां० सां० ५।४।११)। द्र० परिमाद्–, मार्जालीय—।

**यावदुक्तकर्मन्–** (सा०) सामान्येन 'प्रकृतिवद् विकृति: कर्तव्या' इति शास्त्रेण तत्तत्कर्मणां स्वस्वप्रकृतित: पदार्थानां प्राप्तौ सत्यामपि पुन: यत्र कर्मणि केषांचनाङ्गानामाम्नानं तद् यावदुक्तं कर्मोच्यते। अर्थात् स्वप्रकृतित: एव प्राप्तानां येषामङ्गानां यत्र विकृत्यादिषु पुनरुपदेशस्तानि कर्माणि यावदुक्तकर्माणि परिभाष्यन्ते इति। (तु०—का० श्रौ० २।२०।२१ विद्याधर: टि०)

**युग्मायुक्संहार–** द्र० वर्धमानस्तोमपर्यायाणां युग्मायुक्संहारपक्ष—।

**यून–** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतेहविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च यज्ञियकाष्टानां बर्हिषां च बन्धनार्था कुशनिर्मिता रज्जुः यूनमुच्यते। तत्र रज्जुश्च विषमसंख्याकतृणमुष्टिभिर्निर्मातव्या। यागे वेद्यामस्तरणीयस्य बर्हिषो बाहुल्यात् तद् बन्धनार्था रज्जुरपि बहुभि: कुशमुष्टिभिरयुग्मसंख्याकैर्निर्मातव्येति विशेषोऽवधातव्य:। १. यूनं च अयुग्मैः बहुभि: कुशै: क्रियते। साम्प्रतं तु याज्ञिकै: नवभि: कुशैर्यूनं निष्पाद्यते इति विद्याधर:। तत्र बर्हिषां बन्धने प्रागग्रे यूने उदगग्राणि बर्हींषि आचीयन्ते। इध्म काष्ठानां बन्धने च उदगग्रे यूने प्रागग्राणि इध्मकाष्ठानि आचीयन्ते। इध्मं बर्हिश्च यूनेन गाढं बद्ध्वा यूनस्याग्रमूले एकीकृत्य एकीकृते अग्रमूले इध्माबर्हिषो: पश्चाद् (मूल-) भागेन रज्वा अध: प्रोतयित्वा अवगूहयेत् इत्येवं ग्रन्थिबन्धनं चावधेयम्। २. यूनं सन्नहनरज्जुरित्यप्युच्यते। (तु०— का०श्रौ० १।३।१४-१७ विद्याधर:)।

**यूप–** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ पशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च १. छेदनतक्षणादिभि: दृष्टसंस्कारै: प्रोक्षणादिभिरदृष्टसंस्कारैश्च साध्य: पशुबन्धनार्थ: काष्टविशेषो यूप इत्युच्यते।(तु०— का०श्रौ० १।४।१५ विद्याधर:)। २. खदिरादीनां हि काष्ठानां संस्कारै: यूप: क्रियते छेदनादिभिर्न तु अन्येषाम्। ३. बैल्वो वा खादिरो वा पालाशो वा (वाजपेयात्) अन्येषां यज्ञक्रतूनां यूपा भवन्ति। द्र० मी०को० पृ० ३२५८। वाजपेये खादिर एव। मी०को ३२५७। ४. यूप: खादिर: पालाशोरौहितको वा ज्योतिष्टोमे पशुत्रयार्थं (अग्नीषोमीय: सवनीयानुबन्ध्यार्थ) तन्त्रम्। मी०को० ३२५७। ५. अश्वमेधे रज्जुदाल:, पौतुरारव:, बैल्व:, खादिर: पालाश: यूपा भवन्ति (तु०—का० श्रौ० ८।४।१७-१९)।

**यूपच्छेदन–** द्र० यूपशाखाच्छेदन—।

**यूपधर्म–** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरू...सौमिकेषु...पशुषु च यूपस्य धर्मा:-१-घृतेनाञ्जनम्, उच्छ्र्यणम्, अवटस्य समूहनम्, यूपमूलस्य परिबृंहणम्, मध्ये च रशनया परिव्याणम् इति। २. जोषण-तक्षण-उच्छ्रयण-पर्यूहण-परिदृंहण-परिषेक-अञ्जन-प्रोक्षणादयो यूपधर्मा:। द्र० मी०को० पृ० ३२६९।

**यूपनिखनदेश–** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरू... सौमिकेषु पशुषु च यूपनिखनने अर्धं अन्तर्वेदि अर्धं बहिर्वेदि इत्युपलक्षितो देशविशेष: यूपनिखननदेशो विधीयते। अन्तर्वेदिबहिर्वेदिमध्यगतो

देशो यूपनिखननदेशो भवतीत्यर्थः (तु०— मी०को० पृ०)। ३२६९ ।७१)।

**यूपपरिमाण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढ... सौमिकेषु पशुषु च त्र्यरत्नि परिमाणकश्चतुररत्निपरिमाणको वा यूपो भवति। एतेषां मते एकारत्न्यादि चतुरत्न्यन्तपरिमाणका यूपा भवन्ति। अग्नीषोमीये तत्प्रकृतिकेषु सवनीयादिषु पशुषु पञ्चारत्निः सप्त-दश-चतुर्दशारत्नि-वर्जं पञ्चदशारत्निपर्यन्तो यूपो भवति। अथवा अपरिमितपरिमाणकः षोडशारत्नि-प्रभृतिर्यूपः कार्यः। सप्तदशारत्निर्यूपो वाजपेये कार्यः। अश्वमेधे सर्वे (एकविंशतिः) यूपा एकविंशत्यरत्नयो भवेयुः। तदुक्तम् 'त्र्यरत्निश्चतुररत्निर्वा। एकारत्निप्रभृतीनेके। पञ्चारत्निः पञ्चदशपर्यन्तः सोमे, दश-सप्त-चतुर्दशवर्जमपरिमितो वा सप्तदश वाजपेये। एकविंशतिरश्वमेधे' (तु०— का०श्रौ० ६।१।२४-२५।२९-३१ विद्याधरः)।

**यूपपरिव्याण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिनिरूढः... सौमिकेषु पशुषु च १. रशनया यूपस्य वेष्टनं यूपपरिव्याणमुच्यते। २. यूपपरिव्याणं 'परिवीरसि' इति मन्त्रेण अध्वर्युः करोति। अध्वर्युणा क्रियमाणं परिव्याणं होता 'युवा सुवासः' इति मन्त्रेणानुवदति। इति विशेषोऽवधेयः। द्र० मी०को० पृ० ३२७०।

**यूपप्रक्षालन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीष्टोमीये तत्प्रकृतिकेषु सौमिकेषु च प्रदक्षिणावृत्त्या प्रत्यङ्ङादुत्य तूष्णीं संस्कृता यवमतीः प्रोक्षणीः बर्हिमुष्टिं सस्रुवां स्मार्ताज्यस्थालीं स्वरुं रशनेमैत्रावरुणदण्डं प्रथमपतितयूपशकलं हिरण्यमुदपात्रं चादायोत्तरवेदिसमीपे निधायोदपात्रोदकेन यूपं प्रक्षालयति 'यत्ते शिक्वः परावधीत्' इत्यृचा। एतद्यूपप्रक्षालनमुच्यते। द्र० श्रौ०प०नि० पृ० १२४।

**यूपप्रोक्षण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपप्रक्षालनानन्तरं चात्वालोत्करयोर्मध्यमार्गेण यूपमानीय यूपावटस्य पुरस्ताद् यूपं प्रागग्रं शाययित्वोत्तरवेद्या उत्तरतस्तिष्ठन् 'पृथिव्यै त्वा' इत्यादि मन्त्रेण यवमतीभिः प्रोक्षणीभिर्मूलादारभ्याग्रपर्यन्तं सकृदेव प्रोक्षति। तदिदं यूपप्रोक्ष- णम् उच्यते। द्र० यूपप्रक्षालन-श्रौ०प०नि० पृ० १२४।

**यूपयोग्यशाखोपस्थान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न...पशुबन्धप्रकरणे अग्नीषोमीये... पशुषु च अध्वर्युः यूपाहुत्यनन्तरं पुनश्चतुर्गृहीतं गृहीत्वा सस्रुवामाज्यस्थालीं, बर्हिः, हिरण्यम्, उदपात्रं चादाय सपरशुं तक्षाणमाहूय 'एहि यजमाने' इत्युक्त्वा पूर्वद्वारेण शालाया बर्हिर्निष्क्रम्य यस्माद् वृक्षाद् यूपग्रहणं चिकीर्षितं तस्य समीपं गत्वा प्रतीच्यां दिशि प्रह्वां शाखां स्वयं प्राङ्मुखः 'अत्यन्यानगान्' इत्यादि यजुर्मन्त्रेणोपतिष्ठते। तदिदमुपस्थानम् यूपयोग्यशाखोपस्थानमुच्यते। द्र० यूपाहुति-श्रौ०प०नि० पृ० १२०।

**यूपरशना—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्न... पशुबन्ध प्रकरणे अग्नीषोमीये...पशुषु च यूपस्य वेष्टनार्थं या रज्जुः सा यूपरशना भवति। द्र० श्रौ०प०नि० पृ० १२१ द्र०।

**यूपवृक्ष—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्न....... पशुबन्धप्रकरणे अग्नीषोमीये पशुषु च यूपवृक्षाः—खदिरः, बिल्वः, पलाशः, रोहितकः इति। द्र० यूप—। अश्वमेधे रज्जुदालः (श्लेष्मातकः) इति विशेषः।

**यूपवृक्षीयधर्म—** (सा०) पशुयज्ञेषु ऐन्द्राग्न...पशुबन्धप्रकरणे... अग्नीषोमीये...पशुषु च १. समे जातमशाखजं बहुपर्णशाखमप्रतिशुष्काग्रमशुषिरे (यूपं) कुर्यात् इति। (तु०—आप०श्रौ० मी० को० ३२७४)। २. पालाशं (पलाशवृक्षविकारं) बहुलपर्णमशुष्काग्रं ऊर्ध्वशाखं (ऊर्ध्वा: शकला वेष्टनत्वचः = शाखा: प्ररोहा यस्य तं) मध्ये अग्रे च वक्रम्, अव्रणं (नास्ति व्रणं ग्रन्थिर्यस्य तं) यूपं कुर्यात्। एवं लक्षणलक्षितस्य वृक्षस्य यूपं कुर्यादित्यर्थ:। तत्र निरूढपशौ पलाशयूपाभावे खदिरादिवृक्षीयान् यूपान् कुर्यात्। सोमे खदिरस्यालाभे बैल्वान् रौहितकान् कुर्वीत। तदुक्तम्—'पालाशं बहुलपर्णमशुष्काग्रमूर्ध्वशकलशाखं मध्याग्रोपनतमव्रणम्। अभावे खदिरबिल्व रोहितकान्। खदिराभावे सोम इतरान्। (तु०—का०श्रौ० ६।१।८-१० विद्याधर:)।

**यूपशकलप्रक्षेप—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ... सौमिकेषु पशुषु च यूपावटहीना अध्वर्यु: यज्ञोपवीती प्रथमपतितं यूपशकलं यूपावटे प्रक्षिपति-'स्वावेशोऽस्यग्रे गा:' इत्यादि मन्त्रेण। सोऽयं यूपशकलप्रक्षेप उच्यते। द्र० श्रौ०प०नि० पृ० १२४. यूपप्रोक्षण-, यूपावटहोम—।

**यूपशाखाच्छेदन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ... सौमिकेषु पशुषु च यूपशाखाञ्जनानन्तरं 'ओषधे त्रायस्वैनं' इति मन्त्रेण यूपमूले ऊर्ध्वाग्रं बर्हिरनूच्छ्रयति। तदुपरि स्वधितिना तिर्यक् छिनत्ति 'स्वधिते मैनं हिंसी:' इति मन्त्रेण। इदं यूपशाखाच्छेदनमुच्यते। द्र० श्रौ०प०नि० पृ० १२०, यूपशाखाञ्जन—।

**यूपशाखाच्छेदनप्रयुक्तहोम—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ...सौमिकेषु पशुषु च यूपशाखाच्छेदनानन्तरं यूपशाखां छित्वाऽप उपस्पृश्य प्राच्यामुदीच्यां वा पतन्तं यूपं 'दिवमग्रेण मा लेखी:' इत्यादि यजुषाऽनुमन्त्रयते। वृक्षस्य छेदनदेशे हिरण्यं निधाय परितीर्य परिषिच्य पूर्वाहुतेन चतुर्गृहीतेन 'वनस्पते शतवल्शम्' इत्यादि यजुषा स्वाहान्तेन जुहोति। वनस्पतय इदमिति यजमानस्य त्याग:। अयं यूपशाखाच्छेदनप्रयुक्तहोम उच्यते। द्र० श्रौ०प० नि० पृ० १२०, यूपशाखाच्छेदन—।

**यूपशाखाञ्जन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ...... सौमिकेषु पशुषु च यूपयोग्यशाखोपस्थानानन्तरम् आज्यस्थाल्या: स्रुवेणोपहत्य शाखामूलनक्ति—'देवस्त्वा सविता मध्वा' इत्यादि यजुषा। इदं यूपशाखाञ्जनमुच्यते। द्र० श्रौ०प०नि० पृ० १२०, यूपयोग्यशाखोपस्थान—।

**यूपशाखावान्तरशाखाच्छेदन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न- प्रकृतिके निरूढ... सौमिकेषु पशुषु च यूपशाखाच्छेदनप्रयुक्तहोमानन्तरं 'सहस्रवल्शा वि' इति पादेन स्वहृदयमभिमृशति। हतोऽथ उपपृश्य काष्ठतक्ष्णा परशुना मूलादारभ्याग्रपर्यन्तं यूपशाखाया: सर्वा अवान्तरशाखा अध्वर्युश्छेदयति—'यं त्वाऽयं स्वधिति:' इत्यादियजुषा। तत्र सकृन्मन्त्रव्यापारो न प्रत्यवान्तरशाखम्। हस्तपरिष्वङ्गादनधिकं प्रादेशपरिमाणादन्यूनं उपरेण पञ्चारत्निं चषालस्थापनार्थं चतुरङ्गुलमग्रत: छिनत्ति—'उच्छिन्नो राय: सुवीर' इति मन्त्रेण। छिन्नशेषस्य मूले चतुरङ्गुलमात्रं उपरं त्यक्त्वाऽवशिष्टं अष्टास्रिं चतुरस्रिं वा तक्षति। स्वर्वर्थं एकं शकलं, अधिमन्थनार्थं त्रीणि शकलानि क्वचित्

प्रज्ञातं स्थापयति। यूपाहतिप्रभृत्येतावन्तं कर्म यूपाहरणमित्युच्यते । इति च विशेषोऽवधेय: । द्र० श्रौ०प०नि० पृ० १२०-२१ ।

**यूपसंस्कार—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु १. यूपप्रक्षालनप्रभृति एतावन्तं (स्वरूपगूहनान्तं) कर्म यूपसंस्कार उच्यते । द्र० श्रौ०प०नि० पृ० १२६ । २. यूपप्रक्षालनम्, यूपप्रोक्षणम् यूपशकलप्रक्षेप:, यूपाग्रचषालप्रतिमोचनम्, यूपाञ्जनम् चषालावेक्षणम्, यूपसंनहनम्, यूपपरिव्ययणम्, यूपस्वरूपप्रवेश:, इति नव संस्कारा: तेषां व्याख्या तत्र तत्र वर्णानुक्रमेण द्रष्टव्या । ३. प्रोक्षणं अञ्जनं उच्छ्रयणं परिव्ययणं चेति पञ्च संस्कारा । यूपैकादशिनी गते उपशये यूपे न भवन्ति । द्र० मी०को० पृ० ३२७४ । इत्ति विशेषोऽवगन्तव्य: ।

**यूपसंनहन —** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ... सौमिकेषु पशुषु च चषालावेक्षणानन्तरं 'ब्रह्मवनिं त्वा' इत्यादि मन्त्रेणावटे प्रदक्षिणं मृत्तिकां प्रवेशयति । मैत्रावरुणदण्डेन यूपमभित: संहन्ति-'ब्रह्म दृंह क्षत्रं दृंह' इत्यादि मन्त्रेण । तदिदं यूप संहननमुच्यते । द्र० चात्वालावेक्षण-, श्रौ०प०नि० पृ० १२६ ।

**यूपाञ्जन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च। यूपाग्रे चषालप्रतिमोचनानन्तरं तक्षणकाले चिह्नितामष्टास्त्रि स्रुवेणाभिघारयन्नाह—यूपायाज्यमानायानुब्रूहीति । अञ्जनप्रभृतिस्वर्ववगूहनपर्यन्तं पत्नी-यजमानौ यूपं नोत्सृजेयाताम् । अध्वर्युरूपर्याज्यं मानयति । यजमानस्तेनाज्येन यूपमुपरवर्जं सर्वत: समनक्ति । पत्नी उपरमनक्ति । इतीदं यूपाञ्जनमुच्यते । द्र० श्रौ०प०नि० पृ० १२५ । उपरचाषाल-, चषालप्रतिमोचन— ।

**यूपाञ्जप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ...सौमिकेषु पशुषु च १. 'अञ्जमो यूपम्' इति अनुब्रूहि' इत्याह अध्वर्यु: (तु०—ऐ० ब्रा० २ ।२) । २. अग्रं यूपाय' इत्यादि प्रैषो; इत्युच्यते । द्र० श्रौ०प०नि० पृ० १२५ ।

**यूपाञ्जनीया—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपाञ्जनाय हिता ऋच: यूपाञ्जनीया उच्यन्ते । ता: 'अञ्जन्ति त्वा' (ऋ० ३ ।८,१), 'उच्छ्रयस्व वनस्पते' (ऋ० ३ ।८ ।३), 'समिद्धस्य श्रयमाण:' (ऋ० ३ ।८ ।२), 'ऊर्ध्व ऊषु' (ऋ० १ ।३६ ।१३), 'ऊर्ध्वो न: पाहि' (१ ।३६ ।१४) 'जातो जायते' ऋ० ३ ।८ ।५), 'युवा सुवासा: (ऋ० ३ ।८ ।४) । इति (ऐ० ब्रा० २) ।

**यूपाञ्जनीयानुवचन—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च 'यूपायाज्यमानायानुब्रूहीति' प्रेषितो होता पाशुबन्धिक्या वेदे: पश्चान्मन्त्रेण निरसनोपवेशने कृत्वा यूपाञ्जनीया ऋचोऽन्वाह । आदौ सामिधेनीवत् हिंकृत्य 'अञ्जन्ति त्वामध्वरे वेदयन्त:' इति ऋचं त्रिवारं अनुब्रूयात् । तृतीये वचने 'अर्धर्चमुक्त्वा प्रैषान्तरश्रवणपर्यन्तं विरमेत् । 'यूपायोच्छ्रीयमाणायनुब्रूहीति' प्रेषितो द्वितीयार्धर्चान्तिम- प्रणवान्तेन 'उच्छ्रयस्व वनस्पते' इत्यृचं सन्धाय तदन्तिमप्रणवेन 'समिद्धस्य श्रयमाण: पुरस्तात्' इत्यृचं तत

उक्तरीत्यैव 'ऊर्ध्व ऊषुण ऊतये'इति द्वे ऋचौ, ततो 'जातो जायते सुदिनत्वे अह्नाम्' इति ऋचं सन्धाय तस्या अर्धर्चे प्रैषान्तरश्रवणपर्यन्तं विरमेत्। ततो 'यूपाय परिवीयमाणायानुब्रू३हीति' प्रेषितोऽवसिष्ठार्धर्चप्रणवान्तेन 'युवा सुवासाः परिवीत आगात्' इत्यृचं परिधानीयां त्रिवारमनुब्रूयात्। समस्तव्याहृतिमन्त्रेण वाग्विसर्गः। तदिदं यूपाञ्जनीयानुवचनमुच्यते। द्र० श्रौ०प०नि० पृ० १४२।

**यूपान्तराल—** द्र० यूपैकादशिनीपरिमाण—।

**यूपान्तिकाहुति—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ- सौमिकेषु पशुषु च यूपस्य यूपानां वाऽन्तिके या आहुतिः सा यूपान्तिकाऽऽहुतिरुच्यते। तदुक्तम्। 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति इति। सा च यूपबहुत्वेऽपि तन्त्रेणैव (सकृदेव) कार्या। इति विशेषोऽवधेयः।

**यूपावट—** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ...सौमिकेषु पशुषु च यूपरोपणार्थं यो गर्तः खन्यते स यूपावट इत्युच्यते। द्र० श्रौ०प०नि० पृ० १२३।

**यूपावटखननसंप्रैष —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशौ तद्विकृतिषु च उपरवखननानन्तरं उन्नेता उपरवपुरीषं दक्षिणस्य हविर्धानस्य पुरस्तान्न्युप्य चतुरस्रं खरं सिकताभिराभ्राशिनं कृत्वा 'देवस्य त्वा' इत्यभ्रिमादाय 'अभ्रिरसि' इत्यादिना यूपावटं 'परिलिखितम्' इत्यादिना परिलिख्य संप्रेष्यति—'अग्नीदेहि इमं यूपावटं खन उपरवसंमितं प्राक् पुरीषमुद्वपतात् चतुरङ्गुलेनोपरमतिखनतात्। इत्ययं यूपावटखननसंप्रैष उच्यते। द्र० श्रौ०प०नि० पृ० २४३।

**यूपावटपरिलेखन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्न प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पाशुकपात्रासादनानन्तरं ब्रह्माणं दक्षितस्तूष्णीमुपवेश्य पृष्ठ्यां स्तीर्त्वा पवित्रे कृत्वा यजमान! वाचं यच्छेत्युक्त्वा 'वेषाय त्वा' इत्यग्निहोत्रहवणीमादाय 'प्रत्युष्टम्' इत्यादिमन्त्रेण गार्हपत्ये प्रकृतिवत् प्रतप्य प्रोक्षणीः संस्कृत्य 'प्रोक्षिताः स्थ' इत्यन्तं कृत्वा पाशुकपात्राणि प्रकृतिवत्प्रोक्ष्याज्यं निरूप्य तूष्णीं दधि निरूप्यापूर्वाज्यं च निर्वपति। आज्यमधिश्रित्य पर्यग्नि करोति। पशुपूर्वेष्ट्यशक्तौ तु एतस्मिन्काले स्मार्तवत्संस्कृताज्येन चतुर्गृहीतेन अग्निपदं चतुर्थ्यन्तमुद्दिश्य स्वाहान्तेन पूर्णाहुतिहोममात्रं भवति। निर्वापानन्तरं प्राकृतमन्त्रेण वेदं गृहीत्वा प्रकृतिवत् पाशुकीं वेदिं त्रिः संमर्ष्टि। तस्याः पश्चादुपविश्य स्फ्यादानादि अग्नीदितस्त्रिर्हरित्यन्तं प्रकृतिवत् करोति। अथ स्फ्यमुदपात्रं बर्हिः शम्यामित्येतत्समादाय यजमानपत्नीभ्यां सह चात्वालदेशं गत्वा वरुणप्रघासवच्चात्वालं कृत्वा उत्तरवेदिनाभिप्रच्छादनान्तं करोति। ततो 'देवस्य त्वा' इत्यादिनाऽभ्रिमादाय 'अभ्रिरसि नारिरसि' इत्यभिमन्त्र्य तयाऽर्धमन्तर्वेदि अर्ध बहिर्वेदिपदमात्रविष्कम्भं यूपावटं परिलिखति। 'परिलिखितम्' इत्यादि यजुषा सकृत् द्विस्तूष्णीमिति। तदिदं यूपावटपरिलेखनमुच्यते। द्र० श्रौ०प०नि० पृ० १२२।

**यूपावटहोम—** (आध्वर्यव), पशुयज्ञेषु ऐन्द्राग्नप्रकृतिकेषु निरूढपशुबन्धप्रकरणे अग्नीषोमीयप्रकृतिकेषु सौमिकेषु पशुषु च यूपप्रोक्ष-

णानन्तरं 'शुन्धन्तां लोकः' इत्यादि मन्त्रेण यूपावटेऽतिशिष्टाः प्रोक्षणीर्निनयति। 'यवोऽसि यवय' इत्यादि मन्त्रेण यूपावटे यवान् प्रक्षिपति। प्राचीनावीती बर्हिर्मुष्टिं द्वेधा कृत्वा एकं भागं प्रागग्रमपरं दक्षिणाग्रं च कृत्वा द्वयोर्मध्यं यूपावटस्य मध्ये यथा-स्यात्तथा। भागद्वयं निदधाति। 'पितृणां सद नमसि' इति मन्त्रेण। तस्य मध्ये हिरण्यं निधाय तस्योपरि 'पितृभ्यः स्वाहेति' मन्त्रेण स्रुवाहुतिं जुहोति। यजमानोऽपि प्राचीना-वीति भूत्वा पितृभ्य इदं न ममेति त्यागं पठतीति। सोऽयं यूपावट होम उच्यते। श्रौ०प०नि० पृ० १२४-२५,

**यूपावटादिखननप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिकेषु निरूढपशुबन्धप्रकरणे अग्नीषोमीये तदा प्रकृतिकेषु सौमिकेषु पशुषु च उन्नेत्रा उपरवखनने कृते सति उप-रवपुरीषं दक्षिणस्य हविर्धानस्य पुरस्ता-न्न्यूप्य चतुरस्रं खरं सिकताभिराभ्राशिनं कृत्वा 'देवस्य त्वा' इति अभ्रिमादाय 'अभ्रि-रसीत्यादिना यूपावटं 'परिलिखितमित्या-दिना परिलिख्य संप्रेष्यति—अग्नी देहि इमं यूपावटं खन, उपरवसंमितं प्राक् पुरीषमुद्र-पतात्, चतुरङ्गुलेनोपरमतिखनतात् इति। सोऽयं यूपावटादि प्रैष उच्यते। श्रौ०प०नि० पृ० २४३ द्र०।

**यूपाषि—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरूढपशुबन्धप्रकरणे अग्नी-षोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपस्य चतस्रोऽष्टौ वा अस्रयः (कोणाः) भवन्ति। द्र० श्रौ०प०नि० पृ० १२५।

**यूपाहरण—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्र-कृतिकेषु सौमिकेषु पशुषु च मन्थनानन्तरम-ध्वर्युरग्नीन् विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा आहव-नीये मयनस्वत्या हुत्वा उद्धरणपक्षे पुनर्वि-हृत्य षड्ढोतारं मनसाऽऽद्रुत्यान्वारब्धे यज-माने चतुर्गृहीतेनाज्येनाहवनीये जुहोति। वाचस्पतये ब्रह्मण इदं न ममेति यजमानस्य त्यागः। पुनर्विहृत्योपस्थानवरदानान्तः कूष्माण्ड होमः। पुनर्विहृत्य प्रत्येकं चतुर्गृ-हीतेन सारस्वताहुतीः पुनर्विहृत्य चतुर्गृहीतेन 'उरु विष्णो विक्रमस्व' इत्यृचा जुहोति। विष्णवे इदमिति त्यागो यजमानस्य इति अथाध्वर्युः पुनश्चतुर्गृहीतं गृहीत्वा सस्रुवा-माज्यस्थालीं बर्हिर्हिरण्यमुदपात्रं चादाय सपरशुं तक्षाणमाहूय 'एहि यजमाने पूर्वद्वा-रेण शालाया बहिर्निष्क्रम्य यस्माद् वृक्षाद् यूपग्रहणं चिकीर्षितं तस्य समीपं गत्वा प्रतीच्यां दिशि प्रह्वां शाखां स्वयं प्राङ्मुखोऽ'त्यन्यान्यानगान्' इत्यादि यजु-र्मन्त्रेणोपतिष्ठते। ततः आज्यस्थाल्याः स्रुवे-णोपहत्य शाखामूलमनक्ति 'देवस्त्वा सविता मध्वेत्यादि यजुषा। ततः 'ओषधे त्रायस्वेनमिति मन्त्रेण यूपमूले ऊर्ध्वाग्रं बर्हि-रनुच्छ्रयति। तदुपरि स्वधितिना तिर्यक् छिनत्ति-'स्वधिते मैनँ हिंसीः' इति मन्त्रेण। तत्र शाखाच्छेदनकाले यः प्रथमः शकलः परापतति तं यूपावटे प्रक्षेपणार्थं क्वचित् प्रज्ञातं स्थापयति। ततो यूपशाखां छित्वाऽप उपस्पृश्य प्राच्यामुदीच्यां वा पतन्तं यूपं 'दिवमग्रेण मा लेखीरित्यादि यजुषाऽनुमन्त्रयते। वृक्षस्य छेदनदेशे हिरण्यं निधाय परिस्तीर्य परिषिच्य पूर्वाहृ-तेन चतुर्गृहीतेन 'वनस्पतये शतवल्शमि-त्यादि यजुषा स्वाहान्तेन जुहोति। वनस्पतय इदमिति यजमानस्य त्यागः। ततः 'सहस्रवल्शावीति पादेन स्वहृदयमभि-मृशति। ततोऽप उपस्पृश्य काष्ठक्षणा पर-शुना मूलादारभ्याग्रपर्यन्तं यूपशाखायाः

सर्वा अवान्तरशाखा अध्वर्युश्छेदयति— 'यं त्वायं स्वधितिः इत्यादि यजुषा। सकृन्मन्त्रपाठो न प्रत्यवान्तरशाखम्। हस्तपरिष्वङ्गादनधिकं प्रादेशपरिमाणादनूनं उपरेण पञ्चारत्निं चषालस्थापनार्थं चतुरंगुलाधिकमग्रतः प्रादेशपरिमाणादनूनं उपरेण पञ्चारत्निं चषाल स्थापनार्थं चतुरंगुलाधिकमग्रतः छिनत्ति—'अच्छिन्नो रायः सुवीरः' इति मन्त्रेण। छिन्नशेषस्य मूले चतुरङ्गुलमानमुपरं त्यक्त्वाऽवशिष्टमष्टास्त्रिं चतुरस्त्रिं वा तक्षति। स्वर्वर्थमेकं शकलम्-अधिमन्थनार्थं त्रीणि शकलानि स्थापयति। तदिदं यूपाहुति प्रभृत्येतावदन्तं कर्म यूपाहरणमुच्यते। द्र० श्रौ०प०नि० पृ० ११९-१२१, यूपाहुति–, यूपयोग्यशाखोपस्थान—यूपशाखाञ्जऽन-, यूप शाखाश्छेदन—, यूपशाखाच्छेदनप्रयुक्तहोमयूपशाखाऽवान्तरशखाच्छेदन—।

**यूपाहुति–** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीयप्रकृतिकेषु सौमिकेषु पशुषु च मन्थनानन्तरमध्वर्युरग्नीन् विहत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये मनस्वत्या हुत्वा उद्धरणपक्षे पुनर्विहृत्य षड्ढोतारं मनसाद्रुत्यान्वारब्धे यजमाने चतुर्गृहीतेनाहवनीये जुहोति। वाचस्पतये ब्रह्मण इदं न ममेति यजमानस्य त्यागः। पुनर्विहृत्योपस्थान वरदानान्तः कूष्माण्डहोमः। पुनर्विहृत्य प्रत्येकं चतुर्गृहीतेन सारस्वताहुतीः पुनर्विहृत्य चतुर्गृहीतेनो विष्णो विक्रमस्य इत्यृचा जुहोति। विष्णवे इदमिति त्यागो यजमानस्य। सेयमाहुतिः करिष्यमाण यूपग्रहणार्थत्वाद् यूपाहुतिरुच्यते। श्रौ०प० नि० पृ० १२० द्र०।

**यूपैकादशिनीपरिमाण–** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशु-प्रकृतिकः स्तोमायनसंज्ञकः सवनीयः पशुर्विहितः। तेन सह पशुर्विहितः यदा (पक्षे) एकादश पशवो विकल्प्यन्ते तदा तेषां नियोजनार्थं यूपानामेकादशिनी विधीयते। तत्रैकादशानां यूपानामवटेषु उत्तरदक्षिण परिलेखनव्यवस्थया परिमाणानि अवगन्तुं शक्यन्ते। तत्र उत्तर परिलेखनव्यवस्था चेत्थम्— प्रथमं मध्यमसंज्ञकः केन्द्ररूपः प्रथमोऽवटः परिलिख्यते। तत्र मितो यूप एकविंशत्यरत्निपरिमाणको भवति। तस्मादुत्तर-दक्षिणक्रमेणान्ये दश यूपा मीयन्ते। मध्यमादुत्तरो द्वितीयो यूपो विंशत्यरत्निः। मध्यमाद् दक्षिणस्तृतीयो द्वाविंशत्यरत्निः। उत्तरश्चतुर्थ एकोनविंशत्यरत्निः। दक्षिणः पञ्चमस्त्रयोविंशत्यरत्निः। उत्तरः षष्ठोऽष्टादशारत्निः। दक्षिणः सप्तमश्चतुर्विंशत्यरत्निः। उत्तरोऽष्टमः सप्तदशारत्निः। दक्षिणो नवमः पञ्चविंशत्यरत्निः। उत्तरो दशमः षोडशारत्निः। दक्षिण एकादशः षड्विंशत्यरत्निः। यदि तु दक्षिणपरिलेखनक्रमो वैकल्पिकोऽभ्युपगम्यते। तदाना-मध्यमे केन्द्ररूपेऽवटे परिलिखितः प्रथमो यूप एकविंशत्यरत्निः। तस्माद् दक्षिणो द्वाविंशत्यरत्निः द्वितीयः। मध्यमादुत्तरस्तृतीयो विंशत्यरत्निः। दक्षिणश्चतुर्थस्त्रयोविंशत्यरत्निः। उत्तरः पञ्चम एकोनविंशत्यरत्निः। दक्षिणा षष्ठश्चतुर्विंशत्यरत्निः। उत्तरः सप्तमोऽष्टादशारत्निः। दक्षिणोऽष्टमः पञ्चविंशत्यरत्निः। उत्तरो नवमः सप्तदशारत्निः। दक्षिणो दशमः षड्विंशत्यरत्निः। उत्तर एकादशः षोडशारत्निरिति परिमाणक्रमो ज्ञेयः। सूपै-

कादशिन्या अन्ते द्वादशः उपशयो यूपः पञ्चारत्निर्भवति। यूपैकादशिन्यां यूपानामन्तरालानि रथाक्षमात्राणि (चतुरधिकशतमङ्गुलयो रक्षाक्षशब्देनोच्यन्ते)। कर्तव्यानि। अग्निचयने च पक्षसंमिता यूपैकादशिनी क्रियते। श्येनाकारस्य स्थण्डिलस्य (चितेः)। आत्मनः (मध्यभागस्य) पुरस्ताद् अग्निष्ठः (मध्यमः) यूपो निखेयः। दक्षिणोत्तरपक्षयोः पुरस्तात् अवशिष्टा दश यूपा निखेयाः। प्रसरितयोः पक्षयोर्यावत्परिमाणं भवति तावति परिमाणो यूपैकादशिनी परिसमापनीया। यथा च सवनीयपशौ यूपैकादशिन्यामग्निष्ठो यूपो दीर्घतमः क्रियते। तत्र अग्निष्ठो यूपः प्रथमः। ततः प्राच्यां दश यूपाः खातव्याः। ते चाग्निष्ठापेक्षया एकैकेनारत्निना क्रमशो न्यूनाः कर्तव्याः। इति विशेषोऽवगन्तव्यः। (तु०—८।८।६; ८।११।१९-२० विद्याधरः)।

**यूपोच्छ्रयण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढ... सौमिकेषु पशुषु च यूपोच्छ्रयण प्रैषानन्तरं अध्वर्युर्यजमानेन सह यूपमुच्छ्रयति 'यद्दिवं स्तभान' इत्यादिमन्त्रेण। 'या ते धामानि' इति द्वाभ्यामृग्भ्यां यूपमवटे प्रवेशयति। अग्निष्ठामस्रिमाहवनीयस्याभिमुखीं करोति। एतद् यूपोच्छ्रयणमुच्यते। श्रौ०प०नि० पृ० १२६।

**यूपोच्छ्रयणप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीयतत्प्रकृतिकेषु सौमिकेषु पशुषु च १. अध्वर्युःअवटाद् बहिर्यूपमुच्छ्रयन्नाह। २. उच्छ्रीयमाणायानुब्रूहि, इति। श्रौ०प०नि० पृ०१२६। उच्छ्रीयमाणायानुब्रूहि इति होतारं प्रेष्यति तदुक्तम्-उच्छ्रीयमाणायानुवाचयति का०श्रौ० ६।३।६ विद्याधरः)। सोऽयं यूपोच्छ्रयण प्रैष उच्यते।

**यूपोपस्थान—** द्र० अन्तिमयूपोपस्थान— श्रौ०प० नि० पृ० १४१।

**योक्त्र—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च कर्मकाले आग्नीध्रोऽध्वर्युप्रेषितः पत्नीं मन्त्रेण येन गुणेन (रज्ज्वा) मुञ्जमयेन वेष्टनेन त्रिगुणितेन कटिदेशे संनह्यति स गुणो रज्जुः योक्त्रमुच्यते। द्र० श्रौ०प०नि० पृ० १०।

**योग—** इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु उपहितानि कपालानि येन मन्त्रेण परस्परसंयुक्तानि क्रियन्ते स मन्त्रो योग इत्युच्यते। द्र० श्रौ०प०नि० पृ० १६।

**योग—** (सा०) योगः क्रम इत्यनर्थान्तरम्। अथवा योगः संघातः (तु०—आ०श्रौ० १।१।१ सिद्धान्ती)।

**योगक्षेम—** (सा०) अलब्धस्य लाभो योगो लब्धस्य परिपालनं क्षेमः उच्यते। (तु०—तै० सं० सा० ४।२।२)।

**योगविमोक—** (सा०, आध्व०) इष्टिपशुसोमेषु १. येनादौ यागो युज्यते (संबध्यते) स यागस्य योजनात् योगः येन चान्ते यागो विमुच्यते (विसृज्यते) यागस्य विमोचनाद् विमोकः। तावेतौ योगविमोकौ यागस्य योगविमोकावुच्येते। २. अग्निचयनप्रकरणे 'अग्निं युनज्मि शवसा घृतेन' इति जुहोति। अग्निमेवैतद् युनक्ति' इति मन्त्रेण होमो योगः। स च सर्वान्ते वार्तिककारमतेन प्रधानान्ते भाष्यमतेन द्र० मी०को० पृ० ३२७४। अग्निचयने (एव) 'इमं स्तनं' इति मन्त्रहोमो विमोकः। स च प्रधानान्ते भाष्यमतेन सर्वान्ते वार्तिकमतेन। द्र० मी०को० पृ० ३६५०। ३. योगविमोकौ (होमवि-

शेषौ) अग्निचयने प्रधानादौ प्रधानान्ते च, न तु सर्वादौ सर्वान्ते चेति। अर्थात् योगविमोकौ प्रधानार्थौ इति प्रधानार्थे विमोक इति भाष्यमतम्। अङ्ग प्रधानार्थौ योगविमोकौ इति सर्वान्ते विमोका इति वार्तिककारमतम् (केवलानन्दः)। ४. योगविमोकौ द्वादशाहे अहर्गणे प्रत्यहं दर्शयति। स वा अहरहः युनक्ति अहरहः विमुञ्चति' इति द्र० मी०को० पृ० ३२७४)। द्र० क्रतुयुक्ति—विमुक्ति—।

**योजन—** (सा०) १. चतुः क्रोशं योजनमुच्यते। यथासाद्यस्क्रेष्वेकाहेषु होता पूर्वदिने रात्रौ पूर्वस्यां दिशि योजने वसतीति। २. हस्तो वितस्तिद्वितयं दण्डो हस्तचतुष्टयम्। तत्सहस्रद्वयं क्रोशो योजनं तच्चतुष्टयम्। द्र० मी०को० पृ० १२७९।

**योधाजयसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे माध्यन्दिनसवने माध्यन्दिनपवमाने 'पुनानः सोम' (साम० ६७५-७६) इति बृहतीषु (बार्हतप्रगाथतृचे) त्रिणिधनेन योधाजयेन साम्ना स्तुवन्तीति माध्यन्दिनपवमानस्य योधाजयं साम भवति। तत्र 'षसी' इत्येकं निधनम्, 'दासी' इत्यपरं, 'ण्या या' इत्युत्तममिति निधनत्रयसद्भावात् त्रिणिधनमित्युक्तम् (तु०— तां० ब्रा० सा० ७।३।१७)।

**योनि—**(हौ०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने निष्केवल्यशस्त्रे शस्या १. साम पूर्वं यासु ऋक्षु गीयमानं (भवति) सा योनिरित्युच्यते। (तु०—आ०श्रौ० ५।१५।१६ देवत्रातः) सा च बृहद्रथन्तरोभयसामलक्षणा, चतुर्विंशदिष्वहः सूक्ता चेति द्विविधाऽवधेया। २. साम्न उत्पत्तिर्यस्यामृचि सा योनिरित्युच्यते। एकस्या एव योनित्वे सत्यपि योनिशंसने क्रियमाणे यत्साम यास्वृक्षु प्रयोगकाले गीयते ताः समस्ता ऋचः शंस्तव्याः नैकैकशः तत्सामसम्बधेन तत्सामसम्बधिनीनामृचां विवक्षितत्वात् इति विशेषोऽवधेयः (तु०—आ०श्रौ० ७।५।६-७ नारायणः)। ३. माध्यन्दिनसवने रथन्तर-बृहत्-वैरूप वैराज शाक्वर रैवतसाम्नां योन्यः ऋचः एव शस्यन्ते। भवन्तीति योनिभूताः सामरहिता ऋचो योनयो भवन्ति। ताः साम्ना विना शस्यन्ते। इति।

**योनिवर्णवशेन गीत—** (औ०, सा०) योनौ (ऋचि) यस्मिन् भागे 'आई' भावस्तस्मिन् एव भागे यदि उत्तरासु 'आ ई' भावः क्रियते तदा योनिवर्णवशेन गीतं भवति।

**योनिशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र- विकृतिषु चतुर्विंशपृष्ठ्यभिप्लवषडह - विषुवद् - विश्वजिद्-विवाक्येष्वहर्गणेषु माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रे होत्रकाणां च शस्त्रेषु पृष्ठेषु स्तोत्रेषु योनिशंसनं क्रियते। पृष्ठ्ये च बृहदादीनां यथास्थानमस्वयोनिभावं वा दृष्ट्वा यथाविधियोनिशंसनं कर्तव्यमिति (तु०—आ०श्रौ० ८।४।२७)। शंसने च पृष्ठ्ये षडहे युग्मायुग्मेष्वहःसु बृहद् रथन्तरयोरक्रियमाणयोर्योनिशंसनमित्येकं निमित्तम्। तस्य तृतीयेषु चतुर्ष्वहःसु वैरूपवैराजशाक्वररैवतानां चतुर्णां द्वितीयानां पृष्ठानां यथास्थानेऽक्रियायां योनि शंसनमिति द्वितीयं निमित्तं भवतीति विशेषोऽनुसन्धेयः (तु०—आ०श्रौ० ७।३।११; ७।५।२-६)। द्र० - योनि—।

**योनिस्थान—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने निष्केवल्यशस्त्रे होतुः 'यद् वावानं' (ऋ० १० ।७४ ।६) इति धाय्याया ऊर्ध्वं योनिस्थानं वेदितव्यम् । तदुक्तम्— 'ऊर्ध्वं धाय्याया योनिस्थानम्' (आ० श्रौ० ५ ।१५ ।१८) । धाय्या च अनुरूपादानन्तरा भवति । तस्या श्चोर्ध्वं सामप्रगाथानि भवन्ति इति विशेषोऽवधेयः (तु०— आ०श्रौ० ५ ।१५ ।२१ देवत्रातः) । होत्रकाणां तु ऊर्ध्वमनुरूपाद् योनिस्थानं भवति (तु०— आ०श्रौ० ८ ।६ ।१६ ।१८ नारायणः) ।

## र

**रक्त—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे अध्ययनविधौ अनुनासिको वर्णः रक्त उच्यते ।

**रङ्ग—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे अध्ययनविधौ सानुनासिके वर्णः रङ्गमुच्यते ।

**रजस्वलाधर्मत्व—** (सा०) रजस्वलाव्रतानां भूमिशयन - अस्नान - अमांसभक्षणअनभ्यङ्ग-अनञ्जन - अविलेखन - अकर्तन - अदन्तधावन-अनखच्छेदन-अरज्जुसंसर्जनादीनां त्रिरात्रविषयाणां दर्शपूर्णमासातिरिक्तस्त्रीधर्मत्वं रजस्वलाधर्मत्वमुच्यते । द्र० मी०को० पृ० ३२८१-८२ ।

**रथकार—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमास विकृतौ हविर्यागानां प्रथमे अग्न्याधानप्रकरणे १. विधेयः माहिष्येण करण्यां जातो रथकार उच्यते । तदुक्तम्- माहिष्येण करण्यान्तु रथकारः प्रजायते (याज्ञ०सं० १ ।४२) । तत्र क्षत्रियाद्वैश्यायां जातो माहिष्यः । वैश्येन शूद्रायां जाता च करणी भवतीत्यवधेयम् । २. रथकारस्य 'वर्षासु रथकारोऽग्नीनादधीत' इति आधानमात्रेऽधिकारेऽपि नोत्तरकर्मसु अधिकारः, विद्याभावात् । इति च विशेषोऽवधेयः । मी०को० पृ० ३२८५ ।

**रथचक्रचित्—** (अव्य०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनविकृतौ रथाकारावृत्तचितिः स्थण्डिलं रथचक्रचिदुच्यते ।

**रथनीड—** (सा०) रथस्योपस्थं पाश्चात्यभागो धान्याद्यावपनस्थानं रथनीड इत्युच्यते । (तु०— का० श्रौ० १८ ।५ ।१८ विद्याधरः) ।

**रथन्तरसामगानधर्म—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने रथन्तरं 'नोच्चैर्गेयम्, न बलवद् गेयम्, रथन्तरे प्रस्तूयमाने संमीलयेत्, स्वर्दृशं प्रति वीक्षेत' इत्येवमादयो रथन्तरधर्मा उच्यन्ते । द्र० मी०को० पृ० ३३०३ ।

**रथन्तरगाननियम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. माध्यन्दिनसवने रथन्तरं क्षिप्रं गेयम् । २. अक्षरेणाक्षरेण प्रतिष्ठापयतोद्गेयम् । ३ भूमिमालभ्योदगेयम् । ४. चक्षुरुन्मील्य (मुकुलितं कृत्वा) प्रस्तोतव्यम् । ५. रथन्तराश्रयभूतायामृचि अध्ययनप्राप्तस्य तस्थुष इति पदस्य स्थाने अतस्थुष इति सुतस्थुष इति वा प्रयोक्तव्यम् । ६. रथन्तरगानात् पूर्वं 'व्यस्ते गोषु इत्ययं मन्त्रो जप्तव्य इत्यादयः रथन्तरसामगाने बहवो नियमा भवन्ति ।

**रथन्तरवर्णा—** (औ०) सोमयज्ञेषु प्रकृतिभूत ज्योति...तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने बहिष्पवमानस्तोत्रस्य अविसृष्टहिं-

कारा उत्तमा (अन्त्या) स्तोत्रीया रथन्तरवर्णेत्युच्यते।

**रथन्तरसामन्**— (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. माध्यन्दिनसवने निष्केवल्यस्तोत्रे स्तोतव्यं 'अभि त्वा शूर' (साम० ६८०) इति बृहतीयोनिः, 'न त्वावाँ अन्यः' (साम० ६८१) इति सतोबृहती, तयोः प्रगथनेन ऋक्त्रयं भवति। तत्र गातव्यं साम रथन्तरं भवति। (मी०को० पृ० ३२८८)। २. 'अभि त्वा शूर नोनुमः' (साम० २३३१ इत्यस्यामृच्युत्पन्नं साम रथन्तरं साम भवति। तस्मादियमृक् रथन्तरसाम्न उत्पत्तिस्थानं योनिरिति चोच्यते। उद्गातारो ह्यतिरात्रे रथन्तरसामसाध्येनान्तिमेन सन्धिना स्तोत्रेण (साम्ना) आश्विनशस्त्रप्रदर्शनार्थमेव स्तुवते। इति विशेषोऽवधेयः। (तु०—आ०श्रौ० ७।३।१२ नारायणः)। हौ० द्र० रथन्तरसामन्—।

**रथन्तरबृहत्सामसृष्टि**—(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने 'स (प्रजापतिः) वाचं व्यसृजत सा वाग् रथन्तरमन्वपद्यत। रथं मर्याः० रथन्तरस्य रथन्तरत्वम् इति (तु०—तां० ब्रा० ७।६।३-४)। रथन्तरं च साम माध्यन्दिन पवमानानन्तरमुत्पद्यते। ततो माध्यन्दिनसवने एव रथन्तरसृष्टेः पश्चाद् बृहत्साम प्राजायत। तदुक्तम्— 'ततो बृहदनु प्राजायत बृहन्मर्या इदं स ज्योगन्तरभूदिति तद्बृहतो बृहत्वम्' इति। (तु०—तां० ब्रा० सा० ७।६।५)।

**रथाक्ष**— (सा०) चतुरधिकशतम् अङ्गुलयः परिमाणं रथाक्षमुच्यते। यथा यूपैकादशिन्यां यूपान्तरालानि रथाक्षमात्राणि भवन्ति। द्र० यूपैकादशिनीपरिमाण—।

**ररादि – टी– रराट्या**— सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन सत्रेषु १. रराटिर्नाम हविर्धानस्योपरिस्थिता काचित् काशमयी यष्टिरिति सत्याषाढः (तु०—द्रा०श्रौ० धन्वी ३।१; तां० ब्रा० सा० १।१।८)। २. हविर्धानमण्डपस्य चिकीर्षितस्य प्राच्यां द्वारि बन्धनीया दर्भमाला रराटी। रज्जुविशेषो रराटी। २. रराट्या नाम द्वारस्योपरिस्थितं मण्डलं ललाटस्थानीयम्। (तु०—ला० श्रौ० १।९।९ अग्निस्वामी) ४. रज्जुविशेषो रराटी। तत्र मेध्यां हविर्धानबन्धनानन्तरमध्वर्युः दक्षिणहविर्धानस्याग्रभागादरत्नि मात्रे गर्त्ते खात्वा तस्य दक्षिणोत्तरयोर्युगान्तार्जवेन गर्तद्वयं खनति। एवं प्रतिप्रस्थाता उत्तरहविर्धानस्योत्तरतो गर्त्तत्रयं खनति। एवं सति षट् गर्त्ताः सम्पद्यन्ते। एवमेव षट् पश्चात् हविर्धानयोः। ततो द्वादश गर्त्ता भवन्ति। तेषु गर्त्तेषु प्राचीनकर्णाः स्थूणा उच्छ्रत्य तासु उदञ्चौ वंशौ प्रोह्य 'विष्णोरराटमसि' इति पुरस्ताद् रराटीं बध्नातीति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २४२।

**रशना**—(सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे, अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशुबन्धनार्था यूपपरिव्ययणार्था च रज्जू रशनोच्यते। सा च त्रिवृद् भवति, दर्भमयी भवति, प्रपिष्टानां कर्तव्या' इति त्रिवृदादयश्च तस्या धर्मा उच्यन्ते (तु०—मी०को० पृ० ३३०३। रज्जू द्वे द्वे भवत इति विशेषोऽवधेयः।

**राका—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासे अन्यत्र च पर्वणि ग्राह्या १. या उत्तरा पौर्णमासी सा राका । पूर्णे निशाकरे राका । चतुर्दशीसंयोगाभावेन पूर्णे चन्द्रमण्डले सति राकेत्युच्यते । २. संपूर्णचन्द्रमण्डलयुक्ता पौर्णमासी राका भवति । (तु०—ऐ० ब्रा० सा० ३ ।३७) ।

**राक्षसी वाच्—** (सा०) यां वै दृप्तो वदति यामुन्मत्त: सा वै राक्षसी वाक् । (तु०—ऐ० ब्रा० २ ।७) ।

**राक्षोघ्नी—**(सा०) रक्षोहननलिङ्गोपेता ऋक् राक्षोघ्नीत्युच्यते । राक्षोघ्न्य ऋचश्च अग्निमन्थनीययोर्मध्ये द्रष्टव्या: । द्र० अग्निमन्थनीया

**राज्—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे द्वन्द्वसोमेषु राट्संज्ञक एकाहोऽस्ति । स चाग्निष्टोमसंस्थो द्वन्द्वसोमेषु प्रथमो राजन्यस्य राज्यकामस्य भवति । अस्य द्वन्द्वसोमस्यादावन्ते च इन्द्रदेवत्य ऋषभ: पशुर्भवति । तत्र द्वन्द्वो नाम सह भाव: । प्रथमेऽहनि राजा (एकाहेन) सह विराडाख्यस्यापरस्य एकाहस्य अव्यवधानेन द्वितीयेऽहन्यवश्यानुष्ठानाद् द्वयो राड्विराजोर्द्वन्द्वसोमत्वमिति बोध्यम् ।

**राजक्रयाहन्—** द्र० सोमक्रयाहन्— ।

**राजन्—**(सा०) १. राजशब्द: क्षत्रियजातौ रूढ:, न तु राज्ययोग: तस्य प्रवृत्तिनिमित्तम् । २. राजशब्द: क्षत्रियजातेरेव वाचक:, न तु ब्राह्मणादीनां राज्यकर्तृणामपि । द्र० मी०को० पृ० ३३१२ ।

**राजनसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयनप्रकरणे महाव्रते अहनि माध्यन्दिनसवने पृष्ठस्तोत्रेषु होतु: पृष्ठस्तोत्रे आत्मत्वेन परिकल्पितस्य राजनसाम्न: 'इन्द्रं नरो नेमधिता' (साम० ३१८) इतीयमृग् योनिरुच्यते । अस्यामुत्पन्नं राजनाख्यं साम 'तदिदास भुभवनेषु' (साम० १४८३-८५) इति तृचे गेयम् (तु०—तां० ब्रा० सा० ५ ।२ ।६) । द्र० महाव्रते माध्यन्दिनसवने पृष्ठेषु होतु: पृष्ठस्तोत्रोद्गान— ।

**राजनसामस्तोत्रीया—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने महाव्रतेऽहनि माध्यन्दिनसवने होतुर्विहतनिष्केवल्यशस्त्रस्य 'तदिदास भुवनेषु' इत्यारभ्य नृणामु त्वा नृतम् गीर्भिरुक्थैरिति तिस्र:' (ऐ० आ० ५ ।१ ।६) इत्यन्तस्य शस्त्रस्य ऋक्षु प्रथमस्य 'तदिदास' (ऋ० १० ।१२० ।१-३; सा० १४८३-८५) इति तृचस्य यास्तिस्र ऋचस्ता राजनसाम्न: स्तोत्रीया उच्यन्ते । राजनस्तोत्रियेण प्रतिपद्येत इति तत्र राजनसाम्न आधारभूता स्वृक्षु 'तदिदास' इत्यादिका ऋच इत्येक: पक्ष: । ताभ्योऽन्या ऋच इत्येक: पक्ष: । ताश्चान्या द्विधा भिद्यन्ते । उदाहृतेषु सूक्तेषु समाम्नाता असमाम्नाताश्चेति । तत्र 'तदिदास' इत्यादिकासु राजनसामगानपक्षे पूर्वोक्त: (तदिदास गीर्भिरुक्थै:) इत्यन्त एव शस्त्रोपक्रम:, नान्यासु इति विशेषोऽनुसंधेय: । अन्यासु यदि उद्गातारो राजनसाम गायेयुस्तदानीं सूददोहोनामिकाया: 'ता अस्य सूददोहस: (ऋ० ६९ ।३) इत्येतस्या: पूर्वं नवीना राजनसामाधारभूता ऋच: तत्र प्रक्षिपेत् । इत्यपरो विशेष: । (तु०— ऐ० आ० सा० ५ ।१ ।६) ।

**राजयज्ञ—** (अव्य०) राजसूयोऽश्वमेध: पुरुषमेध: सर्वमेध: सोमसव: पृथिवीसवो मृत्युसव: कानान्धयज्ञ: शुनस्कर्णयज्ञ इति च राजयज्ञा उच्यन्ते । द्र० वौ० श्रौ० २४ ।११ श्रौ०को० १ भा० पृ० ७६२ ।

**राजसूय—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे १. क्षत्रियस्य यज्ञाधिकारनिर्णयानन्तरं (तु०—ऐ० ब्रा० ७।१९)। राजा वाजपेयेन इष्ट्वा राजसूयेन यजेत (आ०श्रौ० ९।९।१९) 'अग्निष्ठिनो वाजपेयेन' (का०श्रौ० १५।१।१)। इति विहितः सप्तसोमयागावयवात्मको महाक्रतुः क्षत्रियराज्ञो राजसूय उच्यते। तत्र १. पवित्राख्योग्निष्टोमसंस्थः अभ्यारोहणीयः प्रथमो यागः। ततः चातर्मास्यानि। २. ततः अभिषेचनीय उक्थ्यसंस्थो बृहत्पृष्ठउभयसामा च द्वितीयः। ३. ततः संसर्पेष्टिपूर्वको दशपेयस्तृतीयः। ४. ततः केशवपनीयोऽतिरात्रसंस्थः चतुर्थः। ५-६ ततो व्युष्टिद्व्यहः (द्विरात्रः पञ्चमषष्ठौ। तत्र प्रथममहः अग्निष्टोमसंस्थम्। द्वितीयमतिरात्रसंस्थम्। ७. ततः क्षत्रस्य धृतिः अग्निष्टोमसंस्था सप्तमी चेति सप्त सोमयागाः क्रमेणानुष्ठीयन्ते। ते राजसूयसंज्ञका सप्तैकाहा अहर्गणो राजसूयः (तु०—आ०श्रौ० ९।१।१ देवत्रातः)। २. सूयतेऽभिषिच्यते यजमानः (राजादिः) यस्मिन् महाक्रतौ सोऽयमभिषेकयुक्तो महाक्रतुः सवः (राजसूयः) उच्यते (तु०—तां० ब्रा० सा० १८।८।१)। राजसूयसंबन्धिनः सर्वे यज्ञाः पवित्राख्याग्निष्टोम-अभिषेचनीय-दशपेय-केशवपनीय-व्युष्टिद्विरात्रक्षत्रस्य धृत्यादयः (तु०—तां० ब्रा० सा० १९।१।१)। ३. 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' (श० ब्रा० ५।२।२।२) इत्यादीनामिष्टीनाम्, 'आदित्यां मल्हां गर्भिणीमालभते' (श० ब्रा० ५।४।४।८) इत्यादीनां पशूनाम्, पवित्रश्चतुर्दीक्षः (का० श्रौ० १५।१।३) इत्यादीनां समुदितानां सोमयागानां भिन्नतन्त्रं राजकर्तृकं कर्म राजसूय इत्युच्यते। 'राजा राजसूयेन स्वराज्यकामो यजेत' इति वाक्यश्रुतेन यजिनः संग्रहात् सर्वेषां तेषामेव फलम्। अतोनात्र फलभेद प्रयुक्ता भिन्नतन्त्रता किन्तु कालभेदप्रयुक्ता भिन्नतन्त्रतेति अनुसन्धेयम्। (तु०—का० श्रौ० १५।१।२ विद्याधरः)। ४. राजसूयः, राजा तत्र सूयते, राज्ञो वा यज्ञः राजसूयः। मी०को० पृ० ३३१२। ५. राजसूयशब्दः इष्टि-पशु-सोम-दर्विहोमरूपाणामनेकेषां प्रधानानां संघस्य नामधेयम्। द्र० मी०को० पृ० ३३२२। तत्र इष्टयः (क) १. 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' २ 'नैर्ऋतमेककपालम्' ३. 'आदित्यं चरूं निर्वपति' ४. 'आग्नावैष्टवमेककपालं, इत्यादयः। (ख) पशवः—'आदित्यां मल्हां गर्भिणीमालभते', मारुतीं पृश्निम्,' पष्ठौहीमश्विभ्याम्' इत्यादयः। (ग) सोमाः—पवित्रः, (अभ्यारोहणीयः) अभिषेचनीयः, दशपेयः, इत्यादयः। (घ) होमाः-वल्मीकवपायां होमः, इत्यादयो दर्विहोमाः। ऐते सर्वे यागरूपाः प्रधानम्। अयागरूपाः पष्ठौहीं दीव्यति,' अक्षैर्दीव्यति,' राजन्यं जिनाति,' शौनः शेपमाख्यापयति, इत्यादयः। एतानि तु अङ्गानि। द्र० मी०को० पृ० ३३१४। ६. ये सोमाः पशव इष्टयश्च ते सर्वे (प्रधानभूता राजसूयसंज्ञा भवन्ति। (तु०—आ०श्रौ० ९।३।१ नारायणः) ७. राजसूये अनुमत्याद्याः इष्टयः, मल्हाद्याः पशुयागाः, पवित्राद्याः सोमाश्च भवन्ति। सर्वे ते समप्रधाना एव न परस्परमङ्गाङ्गिभावाः। (तु०—का०श्रौ० भूमिका पृ० ५९ विद्याधरः)।

**राजसूयदक्षिणा—** द्र० न्यायक्लृप्तदक्षिणा—।

**राजसूयप्रयोगक्रम —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे इष्टि पशु सोमसमुदिते राजसूये प्रथमं पवित्राख्यः सोमयागः। तत्र चतस्रो

दीक्षातिस्र उपसदः एका सुत्या इत्यष्टदिन साध्योऽयं यागः फाल्गुनशुक्लाष्टम्यां परिसमाप्यते। राजसूयस्य राजकर्तृत्वाद् राज्ञश्च सोमभक्षणनिषेधात् न्यग्रोधस्य सफलानङ्कुरानादाय तेषां सोमेन साकं क्रयणाभिषवादीन् संस्काराननुष्टय दध्नासह संमेल्य चमसोन्नयनकाले यजमानचमसे तमेव रसं गृह्णीयात्। होमकाले च तं हुत्वा। तमेव (यजमानो राजा) भक्षयेत्। अवभृथान्ते तिस्रोऽनूबन्ध्याः। उदगवसानीयस्थाने त्रैधातवीयेष्टिः इत्येकः सोमयागः ततो दशम्यामनुमतिरिष्टिः, अष्टाकपालः पुरोडाशो द्रव्यम्। एकादश्यामाग्नावैष्णवः एकादशकपालः पुरोडाशः। द्वादश्यामग्नीषोमीय एकादशकपालः पुरोडाशः। त्रयोदश्यामैन्द्राग्नो द्वादशकपालः पुरोडाशः। चतुर्दश्यामाग्रयणेष्टिः त्रिहविष्का (यवाग्रयणं व्रीह्याग्नयणं च)। इत्यनुमत्यादयः पञ्चेष्टयः। ततश्चातुर्मा- स्यप्रयोगः—तत्र प्रथमं फाल्गुन्यां पूर्णिमायां वैश्वदेवपर्व। ततश्चैत्रकृष्णप्रतिपत्प्रभृति चैत्रामान्तं प्रत्यहं पौर्णमासेष्टिः प्रकृतिवत्। ततश्चैत्र शुक्लपक्षप्रतिपत्प्रभृति चैत्रशुक्लपौर्णमासीपर्यन्तं प्रत्यहं दर्शेष्टिः प्रकृतिवत् पिण्डपितृयज्ञं वर्जित्वा। प्रतिपदि तु राजसूयेष्ट्यनन्तरं नित्यादर्शपूर्णमासेष्टिः, नित्यश्च पिण्डपितृयज्ञः। ततो वैशाखज्येष्ठाऽऽषाढमासेषु एवमेव कृष्णपक्षेषु पौर्णमासेष्टिः, शुक्लपक्षेषु दर्शेष्टिः। प्रतिपत्सु नित्येष्टयोऽपि कर्तव्याः। इति वैश्वदेवपर्व। तत आषाढ्यां पौर्णमायां वरुणप्रघासाः। ततः प्रभृति कार्तिकीपर्यन्तं प्रतिदिनं पूर्ववदेव दर्शपूर्णमासेष्टीनामनुष्ठानम्। ततः कार्तिक्यां साकमेधाः। तेषां द्व्यहकालत्वात् चतुर्दश्यां राजसूयिकं दर्शं समाप्य अनीकवत्याद्यनुष्ठानम्। पूर्णिमायां त्रैयम्बकान्तं कृत्वा दर्शेष्ट्यारम्भः। ततो मार्गशीर्षकृष्णप्रतिपत्प्रभृति फाल्गुनाऽमान्तं दर्शपूर्णमासेष्टीनामनुष्ठानं प्रतिदिनं पूर्ववत्। ततः फाल्गुनकृष्णायामेव शुनासीरीयं राजसूयिकम्। इति चातुर्मास्यप्रयोगः। ततः तस्मिन्नेव दिने पञ्चवातीय होमः—तत्राहवनीयखरमध्ये एवाग्नेश्चतुर्षु दीक्षु प्रेरणं कृत्वा मध्ये चावशिष्य स्रुवेणाज्यं पञ्चसु 'अग्निनेत्रेभ्यः' (मा० सं० ९।३५) इति यथालिङ्गं जुहुयात्। पञ्चधा विभक्तमाहवनीयमेकीकृत्य 'ये देवा' (मा० सं० ९।३७) इति पञ्चभिर्मन्त्रैश्च प्रत्येकं जुहुयात्। (ततस्तस्मिन्नेव, दिने इन्द्रतुरीयं कर्म—तत्र आग्नेयोऽष्टाकपालः, वारुणो यवमयश्चरुः, रौद्रो गावीधुकश्चरुः, वहिन्या दधि ऐन्द्रम् इति चत्वारि हवींषि। ततस्तस्मिन्नेव दिनेऽपामार्गहोमः। ततः फाल्गुनशुक्लप्रतिपदि त्रिषंयुक्ताख्येषु त्रिषु कर्मसु प्रथमा इष्टिस्त्रिषंयुक्ता। तत्र प्रथमं हविः वैष्णवस्त्रिकपालः ऐन्द्रावैष्णवश्चरुर्द्वितीयं हविः, वैष्णवश्चरुस्तृतीयं हविः। ततश्चतुर्थ्यां द्विहविष्केष्टिः—तत्र वैश्वानरो द्वादशकपालः, वारुणो यावश्चरुः। तस्तस्मिन्नेव दिने द्वादश रत्नहविः संज्ञका इष्टीः प्रारभेत्। तत्र चतुर्थीप्रभृति फाल्गुनशुक्लपूर्णिमान्तमेकैकस्मिन् दिवसे राजसंबन्धिनः एकैकस्य पुरुषस्य गृहे एकैकेष्टिरनुष्ठेया। तत्र सेनान्यो गृहे प्रथमा। तत्राग्नयेऽनीवतेऽष्टाकपालः पुरोडाशः। पुरोहितगृहे द्वितीया, तत्र बार्हस्पत्यश्चरुः। यजमानगृहे तृतीया, तत्रैन्द्रश्चरुः। महिष्या गृहे चतुर्थी, तत्रादित्यै चरुः। अश्वसारथेर्गृहे पञ्चमी, तत्र वारुणो यावश्चरुः। ग्रामनेतुर्गृहे षष्ठी, तत्र मारुतः सप्तकपालः। मन्त्रिणो दूतस्य वा गृहे सप्तमी, तत्र सावित्रोऽष्टाकपालः। रथयोजयितुर्गृहेऽष्टमी, तत्राश्विनो द्विकपालः। परिवेषणकर्तुर्गृहे नवमी, तत्र

पौष्णश्चरुः। यजमानस्य गृहे दशमी, तत्र गवेधुकानां रौद्रश्चरुः। दूतस्य गृहे एकादशी, तत्र चतुर्गृहीतमाज्यम्। परिवृत्त्या (पतिपुत्ररहितायाः) गृहे द्वादशी, तत्र नखनिर्मिन्त्रौ नैर्ऋतः कृष्णव्रीहिचरुः। इति रत्न हविः संज्ञका इष्टयः। ततस्तस्मिन्नेव दिने सोमारौद्रश्चरुः, मैत्राबार्हस्पत्यश्चरुश्च० चैत्रकृष्णपक्षे किमपि कर्म न भवति। अथ अभिषेचनीयदशपेयसोमयागौ। चैत्रशुक्लप्रतिपदि अभिषेचनीयदशपेयाख्ययोः सोमयागयोः युगपदारम्भसंकल्पः। उभयोः सहैव सोमक्रयणम्, सोमेन सह क्षत्रियार्थं न्यग्रोधस्तिमि (फलङ्कुर) क्रयणं च। देवयजन द्वयम्, पञ्चदिनसाध्योऽभिषेचनीयः प्रकृतिवत्। तत्रायंविशेषः— अग्नीषोमीयपशुसन्निधौ देवहवींषि। तानि द्वौ पुरोडाशौ षट् चरव इत्यष्टौ। तत्र निरूढव्रीहि सम्पाद्यः सवितृसत्यप्रसवदेवताकोऽष्टाकपालः, आशुव्रीहि (पक्षत्रयपक्वव्रीहि) संपाद्योऽग्नये गृहपतयेऽष्टाकपालः, श्यामाकश्चरुः सोमाय वनस्पतये, गृहपतये वाचे नैवारश्चरुः, इन्द्राय ज्येष्ठाय रक्तशालिचरुः, रुद्राय पशुपतये गावेधुकश्चरुः, मित्राय सत्याय स्वयं जातव्रीहिचरुः, वरुणाय धर्मपतये यावश्चरुः, इति देवहवींषि। ततो राज्ञोऽभिषेकाय सारस्वतीः, ऊर्मिद्वयस्यन्दमानाः, प्रतिलोमाः, अपयतीः, सूद्याः (वीचिस्थाः, निवेष्याः, स्थावराः, आतपवर्ष्याः, सरस्याः, कूप्याः, प्लुष्वाः, मधुरमधुमिश्राः) गोरल्व्याः (गोप्रसवकालीनाः) घृतम् (घृतमिश्राः) इति सप्तदशप्रकारा अपः मन्त्रैर्गृह्णीयात्। ततः सपरिकरो राजाभिषेकः। ततः शौनः शेपाख्यमाख्यानश्रवणम्। ततो वाजपेयवद् रथारोहणादि। तत औदुम्बर्यामासन्द्यामक्षदेवनार्थमुपवेशिताय यजमानायाक्षदानम्। ततो देवनम्। देवनकर्तारश्च यजमानः (राजा), राजभ्राता, सूतः, ग्रामणीः, तद्भ्राता चेति पञ्च। ततः द्यूतकरणप्रैषानन्तरं द्यूतकरणम्। ततः स्विष्टकृद्यागमिडान्तं कुर्यात् माहेन्द्रग्रहग्रहणादि च। तत त्रैधातव्युदवसानीयेष्टिः। ततो दश संसृपां हवींषि। तत्र च चैत्रशुक्लप्रतिपत्प्रभृति पञ्चम्यन्तं पञ्चदिनसाध्यमभिषेचनीयं कृत्वा षष्ठीमारभ्यैकादशीपर्यन्तं षट्सु दिनेषु एकैकं हविरनुष्ठाय सप्तमे दिने द्वादश्यामवशिष्टानि चत्वारि हवींषि प्रचरेत्। ततो द्वादश्यामेव दशपेयस्य द्वितीयदिनमारभ्य चैत्र्यां सुत्या। दशपेयस्य प्रथमदिनकर्मदीक्षादिकमभिषेचनीये कृतम्। शिष्टं चतुर्दिनकृत्यं द्वादशीप्रभृतिपूर्णिमान्तं भवतीति विशेषोऽवधेयः। तत्र दशानां हविषां मध्ये प्रथमं हविः अभिषेचनीयशालाया (देवयजनस्य) उत्तरतोऽनुष्ठाय ततः किञ्चित् किञ्चिद् दूरंगत्वा द्वितीयादिकं हविरनुष्ठाय दशमस्य हविषो दशपेयदेवयजनेऽनुष्ठानम्। अत्र हविषु सावित्रो द्वादशकपालोऽष्टाकपालो वा प्रथमं हविः। सारस्वतश्चरुर्द्वितीयं हविः। त्वाष्ट्रो दशकपालस्तृतीयं हविः। पौष्णश्चरुश्चतुर्थं हविः प्रपिष्टानाम्। ऐन्द्र एकादशकपालः पञ्चमं हविः। बार्हतश्चरुः षष्ठं हविः। वारुणो यवमयश्चरुः सप्तमं हविः। आग्नेयोऽष्टाकपालोऽष्टमं हविः। सौम्यश्चरुर्नवमं हविः। वैष्णवस्त्रिकपालः पुरोडाशः चरुर्वा दशमं हविः। इति दशहवींषि भवन्ति। इति च विशेषोऽनुसन्धेयः (तु०—का० श्रौ० १५।८।५ टि० विद्याधरः)। अथ चमसभक्षणम्— तत्र दशपेये यजमानचमसे न्यग्रोधस्तिमिरसः, इतरत्र तु सोमरसः। एकैकं चमसं दश दश ब्राह्मणा भक्षयेयुः। तत्रैक ऋत्विक् इतरे नव अप्रकृताः। यजमानचमसेऽपि ब्राह्मणा एव

भक्षकर्तार:। अर्थात् नेष्टृचमसे चत्वारोऽध्वर्युपुरुषा:, षडन्ये। होतृचमसे (चतुर्षु) ग्रावस्तुद् द्वितीय: षडन्ये। उद्गातृचमसे चत्वार: सामगा:, षडन्ये। अन्येषु चमसेषु नव नवान्ये। यजमानचमसे यजमानव्यतिरिक्ता दश ब्राह्मणा एव क्षत्रिययजमानस्य सोमभक्षणनिषेधात् (तु०—का०श्रौ० १५।८।१८ विद्याधर:)। ततो वैशाखशुक्लपूर्णिमायां पञ्चविल: (अवेष्टि:) कर्तव्य:। तत्र आग्नेयोऽष्टाकपाल:, ऐन्द्र-एकादशकपाल:, सौम्यो वा चरुर्वा, वैश्वदेवश्चरु:, मैत्रावरुणी पयस्या, बार्हस्पत्यश्चरु:, इति पञ्च हवींषि। ततो वैशाख्यां पञ्चविलानन्तरं द्वादश प्रयुग्धवींषि (इष्टय:) मासान्तराले मासि मास्येकैकं कृत्वा मासान्तरेण कर्त्तव्यानि। अतस्तस्मिन्नेवाहनि प्रथमं हवि:, ज्येष्ठ्यां द्वितीयम्, आषाढ्यां तृतीयम्, श्रावण्यां चतुर्थम्। एवमेव भाद्रपद्यादिषु। हवींषि तु आग्नेय:, सौम्य:, सावित्र:, बार्हस्पत्य:, त्वाष्ट्र:, वैश्वानर: इति षट् पुरोडाशा:। सारस्वत:, पौष्य:, मैत्र:, क्षैत्रपत्य:, वारुण:, आदित्यश्चेति षट् चरव:। इति मासान्तरालपक्ष:। अथवा एकस्मिन्नेव काले अध्वर्युराहवनीयसमीपे स्थित्वा प्राचीं दिशं शम्यां प्रक्षिपेत्, सा यत्र पतति तत्र गार्हपत्यस्थानम्। तत्र प्रथमेन यष्टव्यम्। तदन्ते पुनरप्याहवनीयसमीपे स्थित्वेत्यादि कर्तव्यम्। एवं षण्णां शम्याप्रासे शम्याप्रासेसेऽनुष्ठानं कृत्वा पुनरावृत्तौ गार्हपत्यसमीपे स्थित्वा प्रतीचीं दिशं शम्यां प्रास्यति, सा यत्र पतति तदाहवनीयस्थानम्। तत्र यथोक्तं गार्हपत्यस्य करोति। एवं शम्याप्रासे शम्याप्रासे आहवनीयं प्रत्यावृतस्य सारस्वताद्याश्चरवो भवन्ति। इति शम्याप्रासपक्ष:। तत: पशुबन्धद्वयम्। तत्र वैशाखामावास्यायां गर्भिणीभ्यां गोभ्यां भिन्नतन्त्रौ द्वौ पशुबन्धौ कर्तव्यौ। प्रथमे पशुबन्धे रक्तवर्णा गौ: आदित्येभ्य आलभेत अथवा आदित्यै:। द्वितीये पशुबन्धे विचित्रवर्णा गौ: विश्वेभ्यो देवेभ्य:, अथवा मरुद्भ्य आलभेत (तु०—का०श्रौ० १५।९।१२-१४ विद्याधर:)। इति अभिषेचनीयदशपेयौ स विशेषौ तृतीयचतुर्थौ द्वौ सोमयागौ। तत: केशवपनीयाख्यश्चतुर्थोऽतिरात्रसंस्थ: सोमयाग:। तस्य पशुबन्धद्वयान्ते वैशाखस्य अमायामारम्भसंकल्प:। ततो ज्येष्ठशुक्लैकादशीमारभ्य एका दीक्षा तिस्र उपसद: एका सुत्या इत्येकादशीमारभ्य ज्येष्ठपूर्णमास्यन्तेषु पञ्चदिनेषु प्रकृतिवदनुष्ठानम्। (दशपेये कृते य उत्तर: शुक्लपक्ष आगच्छति वैशाख: तस्मिन् केशवपनीयो नाम एकाहो बृहत्पृष्ठोऽतिरात्रसंस्थ: (आ०श्रौ० ९।३।२३) इति नारायण:)। केशवपनीयो मासान्तर: पौर्णमासीसुत्य: (तु०—का०श्रौ० १५।९।१६)। इति केशवपनीय:। ततो १. व्युष्टिद्विरात्रसंज्ञक: प्रथम: क्रतु: मासापवर्ग: मासान्तरे स्यात्। तस्य आषाढकृष्णप्रतिपदि आरम्भसंकल्प:। तस्य चाहीनत्वात् षोडश दीक्षा, द्वादशोपसद: द्वे सुत्ये इति मासेन समाप्योऽयं क्रतु:। २. व्युष्टिद्विरात्रसंज्ञक: द्वितीय: क्रतु: मासापवर्ग: स्यात्। अस्य ज्येष्ठकृष्णद्वितीयायां प्रारम्भ:। आषाढ्यां प्रथमं सौत्यमह:। प्रतिपदि द्वितीयम्। षोडश दीक्षा:, द्वादशोपसद:, द्वे सुत्ये। अस्त्राहीनद्वादशाहवत् गवां सहस्रं दक्षिणा:, अश्वदास्यौ, तिस्रोऽनूबन्ध्या:, त्रैधातवी चेति तद्धर्मा: आषाढ्यां प्रथममहरग्निष्टोमसंस्थम्, प्रतिपदि द्वितीयमतिरात्रसंस्थमित्यह: संस्था। इति मासान्तरो व्युष्टिद्विरात्र: पञ्चमषष्ठौ

सोमयागौ (तु०—का० श्रौ० १५ ।९ ।१७-१८ विद्याधर:) । ततो मासान्तरे श्राणकृष्ण-प्रतिपदि क्षत्रस्य धृतिराभ्यते । श्रावण्यां क्षत्रधृतिसंज्ञक: सोमयागोऽग्निष्टोमसंस्थ: कार्य: । अर्थात् क्षत्रस्य धृति: श्रावणकृष्ण-प्रतिपदि प्रारभ्यते श्रावण्यां च सन्तिष्ठते । इति सप्तम: क्षत्रधृति: सोमयाग: । तत: कार्तिक्यां पूर्णिमायां राजसूयाङ्गभूता । त्रिप-शुका (आश्विन- सारस्वतैन्द्रा) सौमिकी चरकसौत्रामणी कर्तव्या । इति इष्टिपशुसो-मसंघाते राजसूये पृथक् पृथक् स्वतन्त्राणा-मिष्टिपशुसोमानां प्रयोगक्रम उच्यते । **द्र०** का०श्रौ० भूमिका पृ० ५९-६१; १५ अध्याय—, चरकसौत्रामणी-राजसूयि-कसोमारम्भकाल- ।

**राजसूयसंस्थास्तोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाह-प्रकरणे इष्टिपशुसोमसंघातस्य राजसूयस्य क्षत्रिययागस्य ज्योतिष्टोमोऽग्निष्टोम एव संस्था (समाप्ति:) । तस्मिन्नग्निष्टोमे त्रिवृ-त्पञ्चदशसप्तदशैकविंशाश्चत्वार: स्तोमा भवन्ति । तेषां चतुर्णां तेजो वीर्यप्रजननप्रति-ष्ठासाधनरूपत्वात् तदनुष्ठानेनैनं क्षत्रियं यज्ञास्यान्ते तेज आदिभि: समृद्धं करोति । तस्मात् क्षत्रियस्य त्रिवृदादिस्तोमचतुष्टय-विशिष्टो ज्योतिष्टोम: समाप्ति: । तत्र पृथक् सोमेषु तु प्रथमस्य पवित्रस्य अग्निष्टोम-स्तोत्रं संस्था, द्वितीयस्य अभिषेचनीयस्य तृतीयस्य दशपेयस्य च उक्थ्यस्तोत्रं संस्था । चतुर्थस्य केशवपनीयस्य अतिरात्र-स्तोत्रं संस्था । व्युष्टिद्विरात्रे प्रथमस्य अग्निष्टोमस्तोत्रं संस्था, द्वितीयस्यातिरात्र-स्तोत्रं संस्था । सप्तमस्य क्षत्रधृते: अग्नि-ष्टोमस्तोत्रं संस्थेति विशेषोऽवधेय: (तु०—ऐ० ब्रा० सा० ८ ।४) ।

**राजसूयिकसोमारम्भकाल—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाह-प्रकरणे राजसूयस्य महाक्रतो: १. सप्तानां सोमयागानां स्वतन्त्रप्रधानभूतानां सचातु-र्मास्यानां फाल्गुन्या: पौर्णमास्या: पुरस्तात् शुक्लपक्षे अपर्वण्येव अभ्यारोहणीयाख्येन पवित्रसंज्ञकेनाग्निष्टोमसंस्थेन यष्टव्यम्, तत: फाल्गुन्यां पौर्णमास्यां चातुर्मास्यान्यारभ्य-न्ते प्रथमं वैश्वदेवपर्व पर्वणि (पौर्णमास्यां) अनुष्ठीयते । पर्वणामन्तराले यान्यहानि तेषु च चक्राभ्यां (शुक्लपक्षे दर्श-कृष्णपक्षे पौ-र्णमासाभ्यां) याग: कर्तव्य: । पर्वान्तरेषु चक्राभ्यां यागे कर्तव्ये अहर्विपर्ययं पक्षवि-पर्ययं वा कृत्वा चरन्ति । **द्र०** चातुर्मास्य-पर्व— । एवं चातुर्मास्यै: संवत्सरे परिसमाप्यमाणे फाल्गुन्यां शुनासीरीयेण यागेन संवत्सर: परिसमाप्तो भवति । तत उत्तरमेव कृष्णपक्षम् अतीत्यानन्तरे शुक्ल-पक्षे द्वितीयतृतीयौ अभिषेचनीय दशपेयौ सहानुष्ठेयौ (तु०—आ०श्रौ० ९ ।३ ।२-७) । दशपेयेऽनुष्ठिते य उत्तर: शुक्लपक्ष आगच्छति वैशाखस्तस्मिन् चतुर्थ: केशव-पनीय: कर्तव्य: । केशवपनीयादूर्ध्वं द्वयोर्मा-सयोर्य: शुक्लपक्ष: आषाढस्तत्र पञ्चमषष्ठौ सोमयागौ व्युष्टिद्विरात्र: (द्व्यह:) कर्तव्य: । व्युष्टिद्व्यहादूर्ध्वं य: शुक्लपक्ष: श्रावणस्त-स्मिन् क्षत्रस्य धृति: सप्तमो याग: कर्तव्य: । (तु०—आ०श्रौ० ९ ।३ ।२५-२७ नारा-यण:) । तदेव फाल्गुनशुक्लपक्षादय: श्राव-णशुक्लपक्षान्ता: कालराजसूयिक-सोमारम्भकाल उच्यन्ते । २. फाल्गुनीप-क्षस्य प्रथमायां दीक्षेत अभ्यारोहणीयाय (पवित्राय) ज्योतिष्टोमाय । प्रत्यवरोहणीये-नेष्ट्वा संवत्सरादूर्ध्वमपषेचनीयेन दशपे-येन च यजेत । संवत्सरादूर्ध्वं केशव-पनीयाय दीक्षेत । तस्य पौर्णमास्यामति-

रात्रः। केशवपनीयस्योदवसानीययेष्ट्वाऽनिष्ट्वा वा पौर्णमासेन व्युष्टिद्विरात्राय दीक्षेत व्युष्टिद्विरात्रेणेष्ट्वा अवकाश सद्भावे तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेत (तु०—आ०क० ४।१४।१-६ वरदराजः)। इति राजसूयिकसोमानामारम्भकालाः द्रष्टव्याः। नैकाहौ नाहीनौ चातुर्मास्यानि राजसूयश्चेति विशेषोऽनुसन्धेयः।

**राजसूये आदिष्टदक्षिणा—** (याज०, हौ०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये ऋत्विज आदिश्याऽऽदिश्य विहिता दक्षिणा आदिष्टदक्षिणा इत्युच्यन्ते। तत्र सुवर्णमयी माला उद्गात्रे, अश्वः प्रस्तोत्रे, सवत्सा गौः (धेनुः) प्रतिहर्त्रे, अजः सुब्रह्मण्याय, हिरण्यप्राकाशौ, कुण्डले वा अध्वर्यवे, राजतप्राकाशौ प्रतिप्रस्थात्रे, द्वादश गभिर्ण्यः प्रष्ठौह्यः (पञ्चवर्षाः) ब्रह्मणे, वशा (प्रजननासमर्थाः) मैत्रावरुणाय, रुक्मो होत्रे, ऋषभो ब्राह्मणाच्छंसिने, कार्पासं वासः पोत्रे, क्षौमी वरासी (आतसी स्थूला शाटी) नेष्ट्रे, एकानुडुद्युक्तं यवपूर्णं शाकटं अच्छावाकाय, अनुड्वान् (बलीवर्दः) आग्नीध्राय, वत्सतरी उन्नेत्रे, त्रिवर्णः साण्डो वृषभो ग्रावास्तुते। इति ऋत्विग्भ्य आदिष्टा दक्षिणा राजसूये आदिष्टदक्षिणा उच्यन्ते (तु०—आ०श्रौ० ९।४।८-२० नारायणः)

**राजसूये आसन्द्यारोहणप्रत्यवरोहण—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये क्षत्रियो राजा पुनरभिषेकेणाभिषिच्यते। पुनरभिषेकार्थमुपकल्पितेषु संभारेषु उदुम्बरनिर्मिता काचिदासन्दी भवति। तस्याः चत्वारः पादाः प्रादेशपरिमिताः। तेषां पादानामुपरिभागे अन्वक्तिर्यक्स्थितानि शीर्षाण्यनूच्यान्यरत्निपरिमितानि भवन्ति। (अरत्निः प्रादेशद्वयम्)। एवं संपादितामा- सन्दीं स्फ्यस्य दक्षिणरेखायां प्रागग्रामवस्थापयेत्। तस्या- उत्तरदिग्गतौ द्वौ पादौ अन्तर्वेदि तिष्ठतः। दक्षिणादिग्गतौ द्वौ पादौ बहिर्वेदि स्थापनीयौ ततः प्रस्थापितामासन्दीं व्याघ्रचर्मणाऽऽस्तृणीयात्। अर्थात् तस्या उपरि व्याघ्रचर्मास्तरणं कुर्यात्। आसन्द्याः पश्चाद् भागे यजमानः प्राङ्मुख उपविश्य दक्षिणे जानुभूमिलग्नं कृत्वा सव्यं जानूर्ध्वमुखमवस्थाप्योभाभ्यां पाणिभ्यामासन्दीं स्पृष्ट्वा 'अग्निष्ट्वा गायत्र्या सयुक् छन्दसाऽऽरोहतु' इत्यादिमन्त्रेण तामभिमन्त्रयेत्। तेनैव मन्त्रेण दक्षिणेन जानुना प्रथममारोहेत्। ततः सव्येनारोहेदित्यारोहणम् (तु०—रो० ब्रा० सा० ८।५-६)। अभिषेक (सुरा)पानान्तरमासन्द्यामुपविष्ट उपर्येव स्वयमुपविष्टः प्रथमतः पादौ भूमावस्थाप्य 'प्रतिष्ठासि द्यावापृथिव्योः' इत्यादि मन्त्रं पठित्वा प्रत्यवरोहे दित्यवरोहणमुच्यते (तु०— ऐ० ब्रा० सा० ८।८)।

**राजसूये क्षत्रियस्य दीक्षितत्वावेदन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये ब्राह्मणस्येव क्षत्रियस्य यज्ञप्राप्तेरनन्तरं (यज्ञाधिकारानन्तरं) यज्ञेच्छायां सत्यां देवयजनलाभे 'स यदहर्दीक्षिष्यमाणो (दीक्षितो वा) भवति' (ऐ० ब्रा०) ७।१९)। इति दीक्षानन्तरं देवानां मनुष्याणां चाग्रे यत एतदीया दीक्षा कथनीयाऽतः कारणात् दीक्षाया आवेदनस्य ब्राह्मणस्य इव क्षत्रियस्य प्रकटीकरणमुचितम्। तदुक्तम्—'यथैवैतद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति, एवमेवैतत्क्षत्रियस्यावेदयेत् पुरोहित-

स्यार्षेयेण'। अर्थात् दीक्षितब्राह्मण इव दीक्षितः क्षत्रियोऽपि ब्राह्मणोऽयमित्युद्घुष्यते। न केवलं क्षत्रिय एव वैश्योऽपि दीक्षितो ब्राह्मणोऽयमित्युच्यते। तदाहापस्तम्बः-'अदीक्षिष्टायं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्ता इति ब्राह्मणो वा एष जायते यो दीक्षते तस्माद् राजन्य वैश्या अपि ब्राह्मण इत्येवमावेदयति' इति (तु०—ऐ० ब्रा० सा० ७।२५)। तदिदं क्षत्रियस्य दीक्षितत्वावेदनमुच्यते।

**राजसूये क्षत्रियस्य देवयजनयाच्ञा—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योति...राजसूये क्षत्रियस्य राज्ञो यज्ञाधिकारप्राप्त्यनन्तरं यतो देवयजनमपेक्ष्यतेऽतः स देवाः इज्यन्ते यस्मिन् देशे तद्देवयजनमिति तद्याचते। तदर्थं स राजा यस्मिन्नेवाहनि दीक्षितुमुद्युक्तः स्यात्तस्याह्नः पूर्वाह्णकाले एवोद्यन्तमादित्यं 'इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम्' (ऋ० १०।१७०।३), 'इत्यृचा, देव सवितर्देवयजनं मे देहि देवयज्यायै' इति यजुषा चोपस्थाय देवयजनं याचति। इति देवयजनयाचनमुच्यते (तु०—ऐ० ब्रा० सा० ७।२०)।

**राजसूये क्षत्रियस्य पुनरभिषेक—** (आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये अभिषेचनीये पूर्वमभिषिंक्तो क्षत्रियो राजा दीक्षितः सन् राजसूययज्ञे प्रवर्तमानो यदाऽवभृथाख्यं कर्म समाप्तं कृत्वा ततोऽनूबन्ध्याख्यया कयाचित् इष्ट्या पशुयाग- स्थानीययेष्ट्वा (यागं कृत्वा) पश्चादुदवसानीयाख्येष्ट्या कर्माऽवसानं करोति। तदानीमेनं क्षत्रियं राजानमुदवसानीयामिष्टौ समाप्तायां पुनरपि कर्माङ्गत्वेनर्त्विजोऽध्वर्य-वोऽभिञ्चिन्तीति क्षत्रियस्य राज्ञः पुनरभिषेक उच्यते (तु०— ऐ० ब्रा० सा० ८।५)।

**राजसूये क्षत्रियस्य पुनरभिषेकप्रकार—** (सा०) सोमयज्ञेषु प्रकृतिभूत...राजसूयेऽभिषेचनीये शान्तिवाचनानन्तरं क्षत्रियमुदुम्बरशाखामन्तर्धाय शिरसि उदुम्बरशाखया व्यवधानं कृत्वा 'इमा आपः शिवतमा इमाः सर्वस्य भेषजीः। इमा राष्ट्रस्य वर्धिनीरिमा राष्ट्रभृतोऽमृताः॥ १॥ या भिरिन्द्रमभ्यषिञ्चत् प्रजापतिः सोमं राजानं वरुणं यमं मनुम्। ताभिरद्भिषिञ्चाभ त्वामहं राज्ञां त्वमधिराजो भवेह॥ २॥ महान्तं त्वामहीनां सम्राजं चर्षणीनाम्। देवी जनित्र्यजीजनद् भद्राजनित्र्यजीजनत्॥ ३॥ इति तिस्र ऋचः। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रिवर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रिये यशसेऽन्नाद्याय' इति यजुः। कामनाभेदेन भूः। भूर्भुवः। भुर्भुवः स्वरिति। इति पृथक् व्याहृतयः। एवं तिसृभिर्ऋग्भिरेकेन यजुषा व्याहृतिभिश्च प्रौढचमसैर्दध्यादिभिरभिषिञ्चेत् (होता स्नापयेत्) इति पुनरभिषेकप्रकार उच्यते (तु०—ऐ० ब्रा० सा० ८।७)।

**राजसूये क्षत्रियस्य पुनरभिषेकसंभार—** (सा०, याज०) सोमयज्ञेषु प्रकृतिभूत एकाहप्रकरणे राजसूयेऽभिषेचनीये द्वितीये सोमयागे पुनरभिषेककालात् प्रागेव संपादिता—१. उदुम्बरकाष्ठैर्निर्मिता काचिदासन्दी। तस्याश्चत्वारः पादाः प्रादेशपरिमिताः। तेषां पादानामुपरिभागेऽवस्थितानि शीर्षाण्यन्वक्तिर्यगवस्थितानि काष्ठान्यनूच्यानि अरत्निपरिमितानि भवन्ति। सा आरोहणार्थमुपयुज्यते। २. मुञ्जनिर्मितसूत्रं विवयनं

रज्जूनामोतप्रोतरूपेण संयोजितमासन्दीजालम्। ३. आसन्द्या उपर्यास्तरणार्थं व्याघ्रचर्म। ४. दध्यादिप्रक्षेपार्थः प्रौढ उदुम्बरकाष्ठनिर्मितश्चमसः। ५. सूक्ष्मोदुम्बरशाखा। ६. तस्मिन्नेवौदुम्बरे प्रौढे चमसे स्थापनीयानि अष्टतयानि-दधि,-मधु, सर्पिः इति त्रीणि। आतपवर्ष्या आपश्चतुर्थम्। शष्पाणि श्यामतृणानि पञ्चमम्। तोक्मान्यंकुराणि षष्ठम्। सुरा सप्तमम्। दूर्वा अष्टमम्। इति त्रयोदश पदार्थाः पुनरभिषेकस्य संभारा इत्युच्यन्ते। (तु०— ऐ० ब्रा० सा० ८।५)।

**राजसूये क्षत्रियस्य पुनरभिषेकाङ्गहोम—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...राजसूये अभिषेचनीये पुनरभिषेकानन्तरं 'ब्रह्म प्रपद्ये स्वाहा,' 'क्षत्रं प्रपद्ये' इति द्वाभ्यां मन्त्राभ्यामाहुति द्वयं जुहुयात्। इत्याहुतिद्वययात्मको होमः पुनरभिषेकाङ्गहोम इत्युच्यते (ऐ० ब्रा० सा० ८।७)।

**राजसूये क्षत्रियस्य पुनरभिषेकान्ताज्याहुति—** (आध्व०, या०) सोमयज्ञेषु प्रकृतिभूत...राजसूये अभिषिक्तः क्षत्रियो राजा वरदानामन्तरं वाग्विसर्जनान्ते 'समिदसि' इत्यादि मन्त्रेण आहवनीये समिधमाधाय (प्रक्षिप्य) प्राङ्मुख उदङ्मुखो वा प्राङुदङ्ङित्यन्तरालवर्तिनीमैशानीं (अपराजितां) दिशं त्रीणि पदानि 'क्लृप्तिरसि दिशां मयि' इत्यादि मन्त्रेणोदक्रामेत। ततोऽपराजितां दिशमुपतिष्ठते। तामुपस्थाय गृहान् प्रत्यागच्छेत् 'आप प्राच इन्द्र' इति व्यपनुत्तिमृचं च ब्रुवन्। ततो गृह्यस्योपासनस्याग्नेः पश्चाद्भागे उपविष्टस्य यजमानस्य (राज्ञः) सिद्ध्यर्थमध्वर्यु राजसूयस्य सर्वप्रयोगान्ते कांस्यपात्रेण चतुर्थगृहीता इन्द्रदेवताकास्तिस्र आज्याहुतीः 'पर्यूषु प्रधन्व वाजसातये' इत्यादिना 'ईयसे स्वाहा' इत्यन्तेन प्रथमेन, 'अनु हि त्वा सुतम्' इत्यादिना 'प्रगाहसे स्वाहा' इत्यन्तेन द्वितीयेन, 'अजीजनो हि पवमान' इत्यन्तेन तृतीयेन मन्त्रेण प्रपदं यथा भवति तथा जुहुयात्। इति पुनरभिषेकान्तास्तिस्र आज्याहुतयः पुनरभिषेकान्ताज्याहुतय उच्यन्ते। तत्र प्रपदं नाम प्रकृष्टं पदम्। तथा चाहुः—'पादा यस्यास्तु यावन्नो यावदक्षरसंमित्यः। ऋच्यध्ययनमेतेषां प्रपदं तद्विदुर्बुधाः'॥ अतः प्रपदशब्देनाक्षरपादादि वैकल्यरहितं लाक्षणिक- मुच्चारणमभिधीयते। एवंभूतस्योच्चारणस्य प्रपदमिति 'नाम संपन्नम्। तस्मात् प्रक्षिप्तं पदजातं यस्मिन्नुच्चारणे तत्प्रपदमुच्यते। तत्रोक्तमन्त्राणां प्रपदक्लृप्तिः प्रथममन्त्रे 'पर्यूषु प्रधन्व वाजसातये, परिवृत्राणिः सक्षणिः। द्विषस्तरध्या ऋणया न ईयसे' (ऋ० ९।११०।१) इत्येषा प्रथमा ऋक् तस्याः 'परिवृत्राणि सक्षणिः' इति द्वितीयः पादः। तस्मिन् पादे 'वृत्राणि' इति यत् त्र्यक्षरं पदं तस्याऽऽद्ययोः 'वृत्रा' इति द्वयोरक्षरयोरग्रे 'भूर्ब्रह्म' इत्यादिकं 'सह पशुभिः' इत्यन्तं प्रक्षिप्तं पदजातमुच्चार्य 'णि' इति तृतीयमक्षरं प्रक्षिप्य 'सक्षणिः' इत्यादिकं 'ईयसे स्वाहा' इत्यन्तं पदजातमुच्चारयेत्। तद्यथा—'पर्यूषु प्रधन्व वाजसातये' 'वृत्रा' भूर्ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभिः 'णि' सक्षणिर्द्विषस्तरध्या ऋणया न ईयसे स्वाहा' इति। सेयं प्रथममन्त्रक्लृप्तिः। 'अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये। वाजाँ अभि पवमान प्र गाह से' (ऋ० ९।११०।२) इति द्वितीया ऋक्। अस्यामृचि 'महे समर्यराज्ये' इति द्वितीयः पापादः। तत्र 'समर्य' इति यत् त्र्यक्षरं तस्य 'सम' इत्यक्षरद्वयं 'महे' इत्यस्याग्रेऽवस्थाप्य 'भुवो (वर्) ब्रह्म' इत्यादिकं

'सह पशुभिः' इत्यन्तं प्रक्षिप्तं पदजातमुच्चार्य 'र्य' इति तृतीयमक्षरं प्रक्षिप्य 'राज्ये' इत्यादिकं 'प्रगाहसे स्वाहा' इत्यन्तं पदजातमुच्चारयेत्। तद्यथा—'अनु हि त्वा सुतं सोम मदामसि महे 'सम' भुवो ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभिः 'र्य' राज्ये वाजाँ अभि पवमान प्रगाहसे स्वाहा' इतीयं द्वितीयमन्त्रक्लृप्तिः। 'अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः। गौजीरया रंहमाणः पुरंध्या' (ऋ० ९,११०,३)। इति तृतीया ऋक्। अस्यामृचि 'विधारे शक्मना पयः' इति द्वितीयः पादः। तत्र 'शक्मना' इति त्र्यक्षरं यत् पदं तस्य मध्ये 'श' इत्येकमक्षरं 'विधारे' इति पदस्याधस्तादुच्चार्य 'स्वर्ब्रह्म' इत्यादिकं 'सह पशुभिः' इत्यन्तं प्रक्षिप्तं पदजातमुच्चार्य 'क्मना' इत्यक्षरद्वयं प्रक्षिप्य 'पयो गोजीरया रंह (रम्भ) माणः पुरंध्या स्वाहा' इत्युच्चारयेत्। इति तृतीयमन्त्रक्लृप्तिः। तद्यथा—'अजीनो हि पवमान सूर्यं विधारे 'श' स्वर्ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये। सह प्रजया सह पशुभिः 'क्मना' पयो गोजीरया रंह (रम्भ) माणः पुरंध्या स्वाहा' इति त्रयाणां मन्त्राणां प्रपदप्रक्लृप्तिरवगन्तव्या। (तु०—ऐ० ब्रा० सा० ८।१०-११।

**राजसूये क्षत्रियस्य पूर्वोत्तरकालीनहोम—** (याज०) सोमयज्ञेषु प्रकृतिभूत...राजसूये देवयजनयाच्ञानन्तरं क्षत्रियस्य राज्ञः कर्त्तव्यत्वेन इष्टापूर्त्तस्यापरिज्यानिसंज्ञकौ द्वौ होमौ (द्वे आहुती) विहितौ। तत्र दीक्षायाः पूर्वं 'पुनर्न इन्द्रो मघवा ददातु' इत्यृचा 'ब्रह्म पुनरिष्टं पूर्त्तं दात् स्वाहा' इति यजुषा च प्रथमामाहुतिमाहवनीये जुहुयात्। अनन्तरं अनुबन्ध्याख्यपशोः संबन्धीनि यानि त्रीणि समिष्टयजूंषि सन्ति तेषामुपरिष्टात् 'पुनर्नो अग्निर्जातवेदा ददातु' इत्यृचा, क्षत्रं पुनरिष्टं पूर्त्तं दात् स्वाहा' इति यजुषा च द्वितीयामाहुतिमाहवनीय एव जुहुयात्। इतीष्टापूर्त्तस्यापरिज्यानि संज्ञकौ पूर्वोत्तरकालीनौ होमावुच्येते। पक्षान्तरे तु 'ब्रह्म प्रपद्ये ब्रह्म मां क्षत्राद् गोपायतु ब्रह्मणे स्वाहा' इति दीक्षणीयेष्टेः पूर्वकालीनो होममन्त्रः। 'क्षत्रं प्रपद्ये क्षत्रं मा ब्रह्मणो गोपायतु क्षत्राय स्वाहा' इत्यनुबन्ध्याख्यपशोः समिष्टयजुषामुत्तरकालीनो होममन्त्रः। इति होममन्त्रयोर्भेदे विशेषोऽवगन्तव्यः। (तु०—ऐ० ब्रा० सा० ७।२१-२२)।

**राजसूये क्षत्रियस्य पूर्वोत्तराहवनीयोपस्थान—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्यो...राजसूये क्षत्रियो राजा इष्टापूर्तस्यापरिज्यानि संज्ञकाहुतिद्वयहोमानन्तरं उपद्रव्यशान्त्यर्थं 'नेन्द्राद् देवताया एभि न त्रिष्टुभश्छन्दसः' इत्यादिना 'ब्रह्म प्रपद्ये ब्रह्म भवामि' इत्यन्तेन मन्त्रेण दीक्षणीयेष्टेः पूर्वोक्ताः पूर्वामाहुतिं हुत्वाऽऽहवनीयमुपतिष्ठेत। उत्तरहोमादूर्ध्वं शान्त्यर्थं ततः 'नाग्नेर्देवताया एभि न गायत्र्याश्छन्दसः' इत्यादिना 'य एवास्मि सोऽस्मि' इत्यन्तेन मन्त्रेण समिष्ट यजुषामुपरिष्टात् पूर्वोक्तामुत्तरामाहुतिं हुत्वाऽऽहवनीयमुपतिष्ठेत। इति पूर्वोत्तराहवनीयोपस्थामुच्यते। (तु०—ऐ० ब्रा० सा० ७। २३-२४)। द्र० राजसूये क्षत्रियस्य पूर्वोत्तरकालीनहोम—।

**राजसूये क्षत्रियस्य फलाभिषव—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...राजसूये राज्ञोऽर्थे सोमक्रयणात् पूर्वं न्यग्रोधोदुम्बराश्वत्थप्लक्षवृक्षाणां फलाङ्कुरावरोधादीनि संपादितानि भवन्ति। ततः ऊर्ध्वं सोमः क्रियते। ततोऽध्वर्युप्रभृतयोऽग्निष्टोमवत्

(प्रकृतिवत्) उपवसथदिनात् पूर्वप्रसिद्धैः क्रियाविशेषैः। (आतिथ्योपसदग्निप्रणयनाग्नीषोमप्रणयनादिभिः)। अनुतिष्ठेयुः। तत औपवसथ्यमहः। औपवसथ्येऽहनि अध्वर्युः प्रथममेव अधिषवणचर्म, अधिषवणफलके, दशपवित्रं, ग्रावाणः, पूतभृदाधवनीयौ कलशौ, कुम्भः, उदञ्चनम् (रसोन्नयनपात्रम्), चमसः (रसभक्षार्थं दारुपात्रम्) इत्येतानि संपाद्य यदा सोमं प्रातःकालेऽभिषोतारोऽभिषुण्वन्ति तदानीं पूर्वं संपादितानि न्यग्रोधावरोधफलादीनि द्वेधा विभजेत्। तत्रैकभागगतानि प्रातःसवनेऽभिषुणुयात्। इतरभागगतानि तु माध्यन्दिनसवनाय स्थापयेत्। (तु०—ऐ० ब्रा० सा० ७।३२)। इति क्षत्रियस्य फलचमसाभिषव उच्यते।

**राजसूये क्षत्रियस्य फलचमसभक्षण—**(आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूत...राजसूये फलचमसोन्नयनकाले दर्भद्वयहोमानन्तरं यदा होत्रादीनां चमसान् ऋत्विजः आ हरेयुस्तदानीं यजमानस्य राज्ञश्चमसं (फलचमसम्) (अध्वर्युः आहरेत्। आहृतान् होत्रादिचमसान् ऋत्वजो यदा भक्षणार्थमूर्ध्वं धारयेयुस्तदानीं राज्ञो यजमानस्य चमसं (फलचमसं) भक्षणार्थमूर्ध्वं धारयेदध्वर्युः। तत ऊर्ध्वं यदा होता इलामुपह्वयेत् उपहूय च स्वकीयं चमसं यदा भक्षयेत् तदानीं यजमानचमसं (फलचमसं) राजा 'यदत्र शिष्टं राशिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः। इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि' इति मन्त्रेण भक्षयेत्। इति क्षत्रियस्य फलचमसभक्षणमुच्यते। (तु०—ऐ० ब्रा० सा० ७।३३)। तत्र फलचमसभक्षणादूर्ध्वं राज्ञा 'शं न एधि हृदे पीतः प्र ण आयुर्जीवसे सोम तारीः' इत्यनेन मन्त्रेण स्वकीयहृदयस्य हस्तेन संपूर्णः स्पर्शः कर्तव्यः। इति विशेषोऽवधेयः। (ऐ० ब्रा० सा० ७।३३)।

**राजसूये क्षत्रियस्य फलचमसोन्नयन—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत...राजसूये फलचमसाभिषवादूर्ध्वं यदैतान् ब्रह्महोत्रादिचमसान् दशसंख्याकान् उन्नयेयुस्तदानीं यजमानस्य राज्ञश्चमसं (अध्वर्युः) उन्नयेत् (अभिषुतेन न्यग्रोधावरोधादिरसेन पूरयेत्) आप्यायस्व' (ऋ० १।९१।१६) सं ते पयांसि (ऋ० १।९१।१८) इति द्वाभ्याम्। तस्मिन् पूरिते चमसे (फलचमसे) अल्पं दर्भद्वयं प्रक्षिप्य तयोर्मध्ये प्रथमप्रक्षिप्तं दर्भं (होत्रा) वषट्कारे कृते सति 'दधिक्राव्णो अकारिषम्' (ऋ० ४।४।६) इत्येतयर्चा स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत्। अनुवषट्कारे कृते सति अपरं दर्भं 'आ दधिक्राः शवसा' (ऋ० ४।३९।१०) इत्यनयर्चा स्वाहाकारसहितया परिधीनामन्तः परिक्षिपेत्। इति फलचमसोन्नयनमुच्यते। (तु०— ऐ० ब्रा० सा० ७।३३)।

**राजसूये क्षत्रियस्य फलनाराशंसचमसभक्ष—**(आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूत...राजसूये फलचमसभक्षणानन्तरं हृदयस्पर्शाऽऽप्यायनादूर्ध्वं यदैतान् होत्रादीनां चमसान् आप्यायितान् सादयेयुस्तदानीं यजमानस्य राज्ञः फलचमसं अध्वर्युः) सादयेत्। सादनादूर्ध्वं होत्रादीनां चमसान् यदा प्रकम्पयेयुस्तदा (अध्वर्युः) राजचमसं (फलचमसं) अनुप्रकम्पयेत्। तदनन्तरं भक्षणार्थमाहृतं प्रकम्पितमेनं फलचमसं राजा 'नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामि' इति मन्त्रेण प्रातःसवने भक्षयेत्। तत्र राजसूये प्रातःसवने यथाऽयं फलनाराशंसभक्ष-

प्रयोगोऽनुष्ठितस्तेनैव प्रकारेण माध्यन्दिनसवने तृतीयसवने चानुष्ठेयः। भक्षमन्त्रे तु माध्यन्दिन सवने 'ऊमैः पितृभिः' इत्यस्य स्थाने 'ऊर्वैः पितृभिः', तृतीयसवने च 'काव्यैः पितृभिः' इति प्रयोगः कर्तव्यः। इत्ययं फलनाराशंसचमसभक्ष उच्यते (तु०— ऐ० ब्रा० सा० ७।३४)।

**राजसूये क्षत्रियस्य यज्ञाधिकारप्राप्ति—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये अन्यत्र च क्षत्रियस्याग्निष्टोमाश्वमेधादिमहायज्ञानुष्ठाने श्रद्धायामुत्पन्नायां सत्यां क्षत्रियस्य यज्ञाधिकारप्राप्त्यर्थमुपाख्यानमुक्तं ब्राह्मणे पुरा प्रजापतिर्ज्योतिष्टोमाख्यं यज्ञं सृष्ट्वा तदनन्तरं ब्राह्मणक्षत्रियजातिद्वयं तत ऊर्ध्व हुतादश्चाहुतादश्चोभयविधाः प्रजा असृजत। तत्र ब्राह्मणा हुतादः राजन्यवैश्वशूद्रा अहुतादः। ब्राह्मणानामार्त्विज्यसद्भावाद् ब्राह्मणा हुतशेषमदन्तीति ब्राह्मणा हुत्वादः। राजन्यवैश्यशूद्राणामार्त्विज्याभावात्ते हुतशेषं न भक्षयन्तीति राजन्यवैश्यशूद्रा अहुतादो भवन्ति। तेषु ये ब्राह्मणास्तेषां स्फ्य-कपालादीनि यज्ञोचितान्यायुधानि सन्ति, तैस्त उपजीवन्ति। तस्माद् ब्राह्मणानामेव यज्ञेऽधिकारः सम्पन्नो नान्येषाम्। ये पुना राजन्यास्तेषां रथकवचबाणधनुरादीनि आयुधानि भवन्ति। तैस्त उपजीवन्ति, न तानि यज्ञोपयोगीनि। ब्राह्मणो यज्ञैर्यजति याजयति चेति दृष्ट्वा क्षत्रियस्यापि मनसि यागानुष्ठाने श्रद्धा समुत्पन्ना मयापि यज्ञोऽनुष्ठातव्य इति स यज्ञकुशलं ब्राह्मणमुपगम्योवाच भो ब्राह्मण मामपि यज्ञमनुष्ठातुमनुजानीहि ब्राह्मणोऽब्रवीत् 'तथास्तु' इति। प्रतिवचनं दत्त्वा चोपदिदेश-हे क्षत्रिय! तव यज्ञप्राप्तावपेक्षायां सत्यां स्वकीयानि रथकवचादीनि अयज्ञियान्यायुधानि क्वचिदन्यत्रावस्थाप्य ब्राह्मणस्यैव यज्ञियैः स्फ्यकपालाधायुधैः ब्राह्मणस्य योग्येन शान्तिश्रद्धालुत्वयुक्तेन वेषेण च युक्तो ब्राह्मणसदृशो भूत्वा यज्ञं प्रत्युपावर्तस्व (यज्ञे प्रवर्तस्व)। ततः स क्षत्रियस्तथेत्यङ्गीकृत्य स्वकीयानि धनुरादीन्यायुधानि परित्यज्य शान्तवेषेण यज्ञं प्राप्तवान्। यस्मादादिसृष्टावेवं संपन्नं तस्मादिदानीमपि क्षत्रियो ब्राह्मणवेषेण धनुरादिरहितेन यज्ञमनुतिष्ठति। इत्युपाख्यानद्वारोपदिष्टा राजसूये क्षत्रियस्य यज्ञाधिकारप्राप्तिः। तु०— ऐ० ब्रा० सा० ७।१९)।

**राजसूये क्षत्रियस्य स्वोचितभक्ष—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये 'सोमो दधि जलमिति' त्रिविधेषु भक्षेषु मध्ये क्षत्रियस्य नैकोऽपि भक्ष उपादेयस्त्रिषु दोषदर्शनात्, ते त्रयोऽपि भक्षानोपादेया हेया एव। ततः क्षत्रियस्य न्यग्रोधावरोहान् (वटवृक्षस्य शाखाभ्योऽवाङ्मुखत्वेन प्ररोहतो मूलविशेषान्) उदुम्बराश्वत्थप्लक्षाख्यानां वृक्षाणां फलानि च सोमवदभिषुत्य निष्पन्नो रस एवैको निर्दोष उचित उपादेयो भक्षः। तं क्षत्रियो राजा भक्षयेत्। तदुक्तम्—'अथास्यैष स्वोभक्षो न्यग्रोधावरोहाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात् तानि भक्षयेत् सोऽस्य स्वो भक्षः' इति। अयं राजसूये क्षत्रियस्य स्वोचितभक्ष उच्यते। (तु०—ऐ० ब्रा० सा० ७।३०)।

**राजसूये चरकसौत्रामण्यां त्रिपशुहविर्निर्वाप—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...राजसूये सावित्रो वारुण ऐन्द्रश्चेति त्रयः पशव आम्नाताः। तत्र सावित्राय अष्टकपालो द्वादशकपालो वा पुरोडाशः, वारुणाय यवमय-

श्चरुः, ऐन्द्राय एकादशकपालः पुरोडाश इति हवींषि निर्वपति (तु०—का० श्रौ० १५।१०।१७ विद्याधरः)। हविर्यज्ञानां सप्तमसंस्थायां कौकिलसौत्रामण्यां तु ऐन्द्रः, सारस्वतः, आश्विन इति त्रिपशुसंज्ञास्त्रयः पशवो विहिता इति विशेषोऽवधेयः।

**राजसूये दशपेयचमसभक्षण—** (सा०) सोमयज्ञेषु प्रकृतिभूत... राजसूये दशपेययागे संसृपेष्टिप्रचरणानन्तरं यजमानचमससहिता दशचमसाः प्रत्येकं यजमानयुक्तैर्दशभिर्दशभिर्ऋत्विग्भिः पीयन्ते (भक्ष्यन्ते)। अर्थात् एकैकं चमसं दशपुरुषा भक्षयन्ति। ते भक्षितार एवं शत संख्याकाः संपद्यन्ते। तदुक्तं 'शतं ब्राह्मणाः पिबन्ति' इति। तत्र दश नित्याश्चमसिनः प्रकृतिभूतज्योतिष्टोमोक्ता एव। तैः सह संख्यापूर्त्यर्थमन्ये ये पुरुषा अनुसर्पन्ति तेषां मातृतः पितृतश्चोभयतो ये दश पूर्वाः पुरुषाः स्युस्ते विद्यया तपसा पुण्यैः कर्मभिः प्रतिषिद्धवर्जितैश्च युक्ता वैदिकं पन्थानं सम्यगनुष्ठितवन्तोऽब्राह्मण्यं च न गमेयुरित्येतादृशा भवितुमर्हन्ति। तानेवं विधानपुरुषाननुपसर्पेयुः। अर्थात् मातृतः पितृतश्चोभयत पूर्वं ये दश पुरुषास्तेषडङ्गवेदाध्ययनेन तदर्थज्ञानेन च श्रौतस्मार्तानुष्ठानेन च युक्ताः शूद्रायाम् अपत्योत्पादनम-कृतवन्तो येषां पुरुषाणां तानेवं विधान्पुरुषाननुपसर्पेयुः। तत्र नवचमसवद् दशमो यजमान चमसोऽपि ब्राह्मणैरेव दशभिः पेयः क्षत्रियस्य यजमानस्य सोमभक्षाविधानादिति विशेषोऽनुसंधेयः। (तु०—आ०श्रौ० ९।४।१८-२०; मी० को० पृ० ३३१४)।

**राजसूये दशपेयाभिषेचनीयदक्षिणा—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योति...राजसूये मुख्येभ्योऽध्वर्यूद्गातृहोतृब्रह्मभ्य एकैकस्मै द्वात्रिंशत् सहस्राणि दक्षिणा (गाः) दद्यात्। द्वितीतिभ्यः (अर्धिभ्यः) एकैकस्मै षोडश सहस्राणि, तृतीयिभ्य एकैकस्मै अष्टौ सहस्राणि, पादिभ्य एकैकस्मै चत्वारि सहस्राणि दद्यादिति। दशपेये तु सहस्रं दक्षिणा दद्यात् तत्रैव पूर्वं सप्तानां संसृपेष्टीनामाग्नेय्यां प्रथमायां हिरण्यं (अनियतसुवर्ण) दक्षिणसारस्वत्यां द्वितीयायां वत्सतरी सावित्र्यां तृतीयायां अवध्वस्तः (पांशुवर्णोऽजः)। पौष्ण्यां श्यामश्चतुर्थ्यां, बार्हस्पत्यां पञ्चम्यां शितिपृष्ठः (कृष्णपृष्ठः), ऐन्द्र्यां षष्ठ्यां ऋषभः, वारुण्यां सप्तम्यां महानिरष्टः (युवा बलीवर्दः) इति दक्षिणा देयाः। तत्र योऽयं 'एवं प्राया दक्षिणाः' इत्यादि-'समावत्त्वेव दक्षिणा नयेयुः' (आ०श्रौ० ९।१।६-११) इत्यन्तैः सूत्रैर्विहितो दक्षिणाप्रकारो 'न्यायक्लृप्ता दक्षिणाः' इति परिभाषितः स दक्षिणाप्रकारोऽभिषेचनीये दशपेये च न प्रवर्तते। तत्र 'एवं प्राया दक्षिणाः' इत्यस्य द्वादशशतप्राया दक्षिणा इत्यर्थोऽवगन्तव्यः। राजसूये आदिष्टा दक्षिणास्तु सहस्रदक्षिणाभिः सह समुच्चयेन दीयन्ते एव। इति विशेषोऽनुसन्धेयः। (तु०—आ०श्रौ० ९।४।२-८ नारायणः)।

**राजसूये प्रातःसवनतृतीयसवनयोः स्तोत्रशास्त्रयोः माध्यन्दिनसवने विशेष—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रविकृतौ एकाहप्रकरणे राजसूये क्षत्रियस्य राज्ञा स्वोचितफलचमसभक्षणानन्तरं प्रातरादिसवनेषु क्रमप्राप्तानि स्तोत्राणि शस्त्राणि च प्रयोक्तव्यानि। तत्र 'प्रकृतिवद्विकृतिः कार्या' इति न्यायेन एकाहानां प्रकृतिभूते अग्निष्टोमे ये उभे प्रातःसवनतृतीयसवने समाने ते। तयोर्यानि स्तोत्राणि शस्त्राणि च सन्ति तानि तथैवात्र राजसूयेऽपि प्रयोक्त-

व्यानि, न स्तोत्रशस्त्रयो: कश्चिद् विशेषोऽस्ति। तदुक्तम् 'ऐकाहिकं प्रात:सवनमैकाहिकं तृतीयसवनम्' (ऐ० ब्रा० ८।१)। इति तत: प्रात:सवने होतुर्बहिष्पवमानस्तोत्रम्, होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानामाज्यस्तोत्राणि, होतुराज्य प्रउगशस्त्रे, होत्रकाणां शस्त्राणि च, तथा तृतीयसवने आर्भवपवमानस्तोत्रम्, अग्निष्टोमस्तोत्रं च, वैश्वदेवाग्निमरुतशस्त्रे चाग्निष्टोमवद्द्रष्टव्यानि नात्र पृथगुक्तानि यथा च प्रात:सवनतृतीयसवनयोरग्निष्टोमाद् विशेषो नास्ति तथैव माध्यन्दिनसवनेऽपि होतुमरुत्वतीयशस्त्रमैकाहिकं होत्रकाणां शस्त्राणि चैकाहिकानि। माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रे तु विशेषो (भेदो)ऽस्ति। अत्र यो माध्यन्दिनपवमान: सोऽभिजिदवदुभयसामा भवति। बृहद्- रथन्तरं चेत्युभयविधं साम यस्मिन्नभिजिदादौ सोऽयमुभयसामा बृहत्पृष्ठोऽभिजिदादि:। तदाहाश्वलायन: 'अभिजिद् बृहत्पृष्ठ उभयसा यद्यपि रथन्तरं यज्ञायज्ञीयस्य स्थाने' (आ०श्रौ०८।५। १-२)। इत्युक्तस्य तादृशस्योभयसाम्नो बृहत्पृष्ठस्याभिजिदादेर्यो माध्यन्दिन: पवमान उक्त: स एवात्र राजयज्ञे माध्यन्दिन: पवमानो द्रष्टव्य: तत्र बृहद्रथन्तरं चेत्युभयविधसाम्नो: माध्यन्दिन पवमानस्तोत्रे रथन्तरं साम, पृष्ठस्तोत्रे बृहत्साम इत्युभयसाममत्वस्य व्यवस्था ज्ञेया। अतोऽस्मिन् माध्यन्दिनपवमानस्तोत्रे सामगा रथन्तरं साम कुर्वन्ति। पृष्ठस्तोत्रं तु बृहत्सामोपेतं कुर्वन्ति। तदिदमुभयत्वं सवीवधतायै संपद्यते। उभयत: शिक्यद्वयेन जलकुम्भादिद्वयं वोढुं य: काष्ठविशेष: पुरुषाणामंसे स्थीयते स वीध इत्युच्यते। सामद्वयेऽपि तस्य माध्यन्दिनसवनयोगस्य वीवधसदृशत्वाद् वीवधेन सह वर्तते इति सवीवधत्वमस्तीति विशेषोऽवधेय:। क्षत्रियस्यास्य राजसूयस्याद्य: अभ्यारोहणीय: (पवित्र:) अग्निष्टोमसंस्थ:, अन्त्य: क्षत्रस्य धृतिरग्निष्टोमसंस्थ: इत्यग्निष्टोमसंस्थत्वमनुरुध्य सवनानां स्तोत्रशस्त्राणां प्रकृतिगामिता निरूपितो (तु०—ऐ० ब्रा० सा० ८।१;४) आर्षेयकल्पे तु राजसूयिकानां सप्तानां सोमानां बहिष्पवमानादीनि स्तोत्राणि क्रमेण पृथक् पृथक् कलृप्तानि (तु०— ४।१४।१-७ वरदराज: तां० ब्रा० सा० १८।८।१-१८।११। ११) इति च विशेषो द्रष्टव्य:। **द्र०** राजसूयसंस्थास्तोमस्तोत्र—।

**राजसूये माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये अभिषेचनीये सोमयागे यस्मान्माध्यन्दिनपवमाने स्तोत्रे 'आ त्वा रथम्' (साम० १७७१-७३) 'इदं वसो सुतमन्ध:' (साम० ७३४-३६) इत्याभ्यां तृचाभ्यां रथन्तरं साम सामगै: स्तुतं तस्माद्धोतुर्मरुत्वतीयशस्त्रस्य प्रतिपत्तृच:— 'आ त्वा रथम्' (ऋ० ८।६८।१-३)। अनुचरतृच:—'इदं वसो सुतमन्ध:' (ऋ० ८।२।१-३, ऐ० ब्रा० ८।१)। इति प्राकृतौ (आग्निष्टोमिकौ) प्रतिपदनुचरतृचौ)। शेषा इन्द्रनिहवप्रगाथब्राह्मणस्पत्यप्रगाथधाय्यामरुत्वतीयप्रगाथनिविद्धानीयसूक्त निवित्पदशस्त्वाजपशस्त्रयान्ता मरुत्वतीयशस्त्रावयवा यथाऽग्निष्टोमे माध्यन्दिनसवनेऽनुष्ठीयन्ते। तथैव राजसूये माध्यन्दिनसवनेऽपि। प्राकृतादग्निष्टोमादत्र कश्चिद् विशेषो न विद्यते परमिदं मरुत्वतीयं शस्त्रं पवमानोक्थ (शस्त्र)- मुच्यते आग्निष्टोमिकं तु ग्रहोक्थं भवति, इयानेव विशेष:। उक्थशस्त्रं तावद् द्विविधं पवमानोक्थं ग्रहग्रहोक्थं च। अत्र पवमानोक्थमिति विशे-

ष्यते । किञ्च ब्राह्मणस्पत्यः प्रगाथो बृहद्रथन्तरयोरुभयोः साम्नो रूपमत उभे बृहद्रथन्तरे सामनी तस्मिन् प्रगाथे सामगैरभिधीयेते इति च विशेषोऽवधेयः (तु०—ऐ० ब्रा० सा० ८ ।१) । द्र० अग्निष्टोमे मरुत्वतीयशस्त्र— ।

**राजसूये मा० स० होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...राजसूये अभिषेचनीये माध्यन्दिनसवने होतुर्निष्केवल्यशस्य स्तोत्रियः प्रगाथतृचः—'त्वामिद्धि हवामहे' (ऋ० ६ ।४६ ।१-२) । अनुरूपः प्रगाथतृचः—'अभि त्वा शूर नोनुमः' (ऋ० ७ ।३२ ।२२-२३) । धाय्या— यद्वावान पुरुतमम्' (ऋ० १० ।७४ ।६) । सामप्रगाथः—'उभयं शृणवच्चनः' (ऋ० ८ ।६१ ।१-२) । निविद्धानीयसूक्तम्—'तमुष्टुहि' (ऋ० ६ ।१८ ।१-१५) । निवित्पदानि-'इन्द्रो देवः'(ऋ०खि० ५ ।५ ।३) । शस्त्वा जपः—'शस्त्रं वाचीन्द्रायोपशृण्वते' (आ०श्रौ० ५ ।१५ ।२) । शस्त्र-याज्या— 'पिबा सोममिन्द्र' (ऋ० ७ ।२२ ।१) । इति । दशपेयस्य निष्केवल्यमरुत्वतीमयोर्निविद्धानीययोराधे 'नवग्वासःसुतसोमासः (ऋ० ५ ।२९ ।१२), 'सखा ह यत्र सखिभिर्नवग्वैः' (ऋ० ३ ।३९ ।५) इति द्वे ऋचावधि भवतः । इति विशेषोऽवधेयः (तु०—आ०श्रौ० ९ ।३ ।२२ नारायणः) ।' इहापि माध्यन्दिनपवमानस्तोत्रवत् स्तोत्रियप्रगाथतृचे बृहत्साम (बृहत्पृष्ठं), अनुरूपप्रगाथतृचे रथन्तरं साम (रथन्तरपृष्ठं) इत्यग्निष्टोमविपरीते द्वे सोमनी, प्रगाथे च बृहद्रथन्तरे उभे सामनी सामगैः गीयेते इत्यग्निष्टोमाद् विशेषोऽवगन्तव्यः । पृष्ठस्तोत्रं तु बृहत्सामोपेतं कुर्वन्ति । सोऽयं द्विसामको बृहत्पृष्ठोपेतः क्षत्रिययज्ञो राजसूयः संपूर्ण उच्यते । यत्र क्व चैकसामकेन (बृहद्रूपेण वा रथन्तररूपेण वा) क्रतुना क्षत्रियो यजेत तत्र पृष्ठस्तोत्रं बृहत्सामयुक्तमेव कुर्यात् । तदप्यनुष्ठानं संपूर्णं भवति । (तु०— ऐ० ब्रा० सा० ८ ।२-३) ।

**राजसूये मा० स० होत्रकशस्त्राणां विशेषाभाव—** (हौ०) सोम-यज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूयेऽभिषेचनीये होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाक्यानां शस्त्राण्यैकाहिकानि (अग्निष्टोमिकानि) भवन्ति । प्रकृतिवद् विकृतिः कार्येत्यतिदेशात् क्षत्रिययागे विकृतौ राजसूयेऽग्निष्टोमात्कश्चिद् विशेषो नास्ति । तदुक्तम्—'ऐकाहिका हौत्राः' ।(तु०—ऐ० ब्रा० सा० ८ ।४ । तत्र एकाहे प्रकृतिरूपे विहिताः क्रिया ऐकाहिकाः । एकाहाहाश्च द्विविधाः सर्वस्तोमसर्वपृष्ठाः तद्विपरीताश्च । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशरूपा इति षट् सर्वे स्तोमाः सर्वस्तोमा पृष्ठ्ये षडहे प्रतिपादिताः । तस्मिन्नेव पृष्ठ्यषडहे रथन्तरबृहद्वैरूपवैराजशाक्वररैवताख्यानि षट्संख्याकानि पृष्ठानि सर्वपृष्ठानि निर्दिष्टानि । एतैर्मुक्ताः सर्वस्तोमसर्वपृष्ठा एकाहा उच्यन्ते । तैः सर्वैः स्तोमैः पृष्ठैश्च युक्तेभ्य एकाहेभ्यो व्यतिरिक्ताः कतिपयस्तोमपृष्ठयुक्ता एकाहा असर्वस्तोमा असर्वपृष्ठाश्चाभिधीयन्ते । त एते असर्वस्तोमा असर्वपृष्ठाश्चैकाहा यत्र क्वाऽनुष्ठीयन्ते तत्र स सर्वत्रैकाहिका एव होत्राः क्रियाः स्युः । न तु नूतनो विशेषः कश्चिदस्ति । इति विशेषोऽनुसंधेयः (तु०— ऐ० ब्रा० सा० ८ ।४) ।

**राजसूये ब्रह्मणे यजमानभागपरिहरण—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत...राज-

सूयेऽभिषेचनीये क्षत्रियस्य सोमभक्षाभावात् क्षत्रियस्य यजमानभागो ब्रह्मणे परिह्रियते। ब्रह्मा हि क्षत्रियस्य पुरोहितस्थानं वेदत्रयवैकल्यपरिहर्तृत्वेन यज्ञस्य प्रतिष्ठा भिषग्रूपश्च भवति। अतो ब्रह्मा यजमानभागं प्राश्नाति न क्षत्रियो यजमानः। (तु०— ऐ० ब्रा० सा० ७।२६)।

**राजसूये वरदान—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये पुनरभिषेकेणाभिषिक्तः क्षत्रियो राजा आसन्द्याः प्रत्यवरोहणादूर्ध्वं भूमावासनविशेषं कृत्वा प्राङ्मुख आसीनः 'नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मणे' इति नमस्कारमन्त्रं त्रिः पठित्वा ब्रह्मणे (ब्राह्मणाय) नमस्कारं कृत्वा 'वरं ददानि जित्या अभिजित्यै विजित्यै संजित्यै' इति मन्त्रेण वाचं विसृज्य ब्राह्मणाय वरं गां ददामीति वरदानमुच्यते। तत उत्थायासनात् 'समिदसि सम्वेङ्क्षस्वेन्द्रियेण वीर्येण स्वाहा' इति मन्त्रेणाहवनीये समिधमादध्यात् (प्रक्षिपेत्) इति च विशेषोऽवधेयः (ऐ० ब्रा० सा० ८।९)।

**राजसूये शौनःशेपाख्यानकथन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूयेऽभिषेचनीये द्वितीये सोमयागे माध्यन्दिनसवने समाप्ते मरुत्वतीयशस्त्रेऽनारब्धे निष्केवल्यस्तोत्रे दक्षिणत आहवनीयस्यासीनं राजानमभिषिञ्चन्त्यध्वर्यवः। तस्मा अभिषिक्ताय राज्ञे पुत्रपौत्रादिभिर्बन्धुभिः सुहृद्भिः परिवृताय होता शौनःशेपमाख्यानं कथयेत्। होता च यदोपाख्यानं कथयति तदानीं हिरण्यकशिपौ (सुवर्णसूत्रैर्निष्पादिते आसने) उपविशेत्। तदाख्यानमध्येऽध्वर्युश्च हिरण्यकशिपावासीनः प्रतिगरं ब्रूयात्। आख्यानपरिमाणम्—अस्मिन्नुपाख्याने कल्पस्य नूनम्। (ऋ० ९।२४) इत्यादिकाः 'अस्मै रयिं निधारय' (ऋ० १।३०।२२) इति पादान्ताः सप्ताधिकनवतिसंख्याका ऋचः, 'त्वं नः, स त्वम् (ऋ० ४।१।४-६) इत्यादिकास्तिस्र ऋचः एवमृचां शतमाम्नातम्। पूर्वोक्तात् ऋक्शतादधिका एकत्रिंशत्संख्याकाः 'यं न्विमं पुत्रमिच्छन्ति' (ऐ० ब्रा० ७।१३) इत्याद्या गाथाः सन्ति। तत्र होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्ते अध्वर्योः 'ओम्' इति प्रतिगरो भवति। अर्थात् ऋचामन्ते ओमिति, वैदिकमनुज्ञावचनं भवति। गाथानामन्ते तु 'तथा' इति प्रतिगरो भवति। तथेति लौकिकमनुज्ञावचनं भवतीत्यर्थः। तदेवं शुनःशेपेन दृष्टाः सप्ताधिकनवतिसंख्या युक्ता ऋचो याः सन्ति अन्येन (वामदेवेन) दृष्टास्तिस्र ऋचो याः सन्ति ब्रह्मणे प्रोक्ता एकत्रिंशद् गाथाविशेषा ये च सन्ति तैः सर्वैरुपेते 'हरिश्चन्द्रोह वैधसः (ऐ० ब्रा० ७।१३-१८) इत्यादिके संपूर्णे शुनःशेपविषये आख्याने या ब्राह्मणजाः श्लोका गाथायाश्च शुनःशेपदृष्टा ऋचस्तासामेवान्ते ओमिति तथेति च प्रतिगरौ भवेत नान्यत्रेति यदुक्तं तत् ताभ्यामाभ्यां वैदिकलौकिकाभ्यामों, तथा शब्दाभ्यां प्रतिगरभूताभ्यामेनं राजानं पापादेनसः प्रमुञ्चति तत्पाठेन होता। तदुक्तम्—'ओमित्यृचः प्रतिगर एवं तथेति गाथायाः, ओमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति' इति (ऐ० ब्रा० सा० ७।१८; आ०श्रौ० ८।३।१०-१२ नारायणः)।

**रात्रि—** (सा०) सोमयज्ञेषु १. रात्रिशब्दः अहोरात्रवचनः। अहः शब्दोऽपि अहोरात्रवचनः। २. द्विरात्रादयोऽहीनाः। तेषु द्विरात्रादिपदान्तर्गतः। षष्टिघटिकात्मकदिनपरः रात्रिशब्दः।

३. रात्रिशब्द: 'सत्रं' इत्यस्मिन्नर्थे समुदायप्राधान्येन, 'त्रयोदशरात्र: इत्येकवचनान्तेन प्रयुज्यते । द्र० मी०को० पृ० ३३२३ ।

**रात्रि—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे पञ्चम्यां षष्ठ्यां वा सोमसंस्थायामतिरात्रे तृतीयसवने रात्रावनुष्ठीयमानास्तुतशस्त्रचतुष्टययुक्ताऽऽश्विनशस्त्रसन्धिसामोपेता पञ्चमी षष्ठी वा सोमसंस्था रात्रिशब्देनोच्यते । द्र० अतिरात्र—, अतिरात्रसंस्था— ।

**रात्रिच्छन्दस्—** (सा०) प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयसवने अतिरात्रे रात्रौ प्रयुज्यमानमनुष्टुप्छन्दो रात्रिच्छन्द उच्यते ।

**रात्रिपर्यायचमसगणक्लृप्ति—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे १. रात्रेः (अतिरात्रसंस्थायाम्) तृतीयसवने होत्रा होत्रकैश्च त्रय: पर्याया: शंसनीया भवन्ति । तत्र पर्याया नाम चमसगणानां क्रमानुष्ठानम् । चमसगणा द्वादश सन्ति । तेषामनुष्ठानाय त्रय: पर्याया अपेक्षिता: । तेषु एकैकस्मिन् पर्याये चत्वारो गणा (द्वादश चमसा:) अनुष्ठीयन्ते (तु०— ऐ० ब्रा० सा० ८ ।५) । गुणनेन द्वादशसंख्याका रात्रे: पर्याया:, द्वादश चमसगणाश्च संपद्यन्ते । तेषु पर्यायेषु रात्रे: दश दश घटिका एकैको भाग इत्येवं त्रयो भागा:, एकैकस्मिन् भागे चत्वारश्चत्वार इत्येवं त्रय: पर्याया: । तत्र होतृचमसमादिं कृत्वा यश्चमस गण: प्रवर्तते स प्रथमश्चमसगण:, मैत्रावरुणचमसमादिं कृत्वा द्वितीयश्चमसगण:, ब्राह्मणाच्छंसिचमसमादिं कृत्वा तृतीयश्चमसगण:, अच्छावाकचमसमादिं कृत्वा चतुर्थश्चमसगण: इति । (ऐ० ब्रा० सा० ३ ।४१) । २. होतुर्होत्रकाणां च द्वादशशस्त्राणि पर्याया उच्यन्ते । तेषामाद्यानि चत्वारि प्रथम: पर्याय:, मध्यमानि मध्यम:, उत्तमानि उत्तम: (तु०—आ०श्रौ० ६ ।४ ।१ नारायण:) । ३. अतिरात्राख्यं क्रतुं यदाऽनुतिष्ठति तदानीं चोदकप्राप्तं (विधि विहितं) सर्वमनुष्ठायानन्तरं सायंकाले षोडशिग्रहसंबन्धिनश्चमसान् पूरयित्वा तत ऊर्ध्वं द्वादशचमसगणपर्याप्तं सोममवस्थाप्य षोडशिग्रहप्रचारं कृत्वा तत ऊर्ध्वं रात्रिपर्यायै: प्रचरेत् । तेष पर्यायेषु च होतृचमसमादिं कृत्वा यश्चमसगण: प्रवर्तते सोऽयं प्रथम: मैत्रावरुणचमसस्यादित्वे द्वितीयश्चमसगणो भवति । ब्राह्मणाच्छंसिचमस्यादित्वे तृतीयश्चमसगणो भवति । अच्छावाकचमस्यादित्वे चतुर्थश्चमसगणो भवति । तेषु चतुर्षु गणेषु प्रथमद्वितीयाभ्यां गणाभ्यामध्वर्युरनुतिष्ठेत् । तृतीयचतुर्थाभ्यां तु प्रतिप्रस्थाताऽनुतिष्ठेत् । एवं गणचतुष्टयानुतिष्ठेत् एवं गणचतुष्टयानुष्ठानमेक: पर्यायो भवति । पुनरपि द्वितीयतृतीयपर्यायौ तथैवानुष्ठेयौ । तेषु पर्यायेषु द्वादश गणा: संपद्यन्ते । एवं त्रय: पर्यायाश्चत्वारश्चमसगणा: क्लृप्ता भवन्ति इति रात्रिपर्यायचमसगणक्लृप्तिरुच्यते (तु०—ऐ० ब्रा० सा० ३ ।४१) । पर्यायाश्च सर्वेऽपि पञ्चदशस्तोमयुक्ता:, तदीयस्तोत्रेषु तृचगतानामृचामावृत्तिविशेषेण पञ्चदशस्तोमस्य सामगै: संपादितत्वात् । इति च विशेषोऽवधेय: । द्र० अतिरात्र—, अतिरात्रसंस्था— ।

**रात्रिसत्र—**(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ सत्रप्रकरणे १. त्रयोदशरात्रादीनि शतरात्रान्तानि सत्राणि रात्रिसत्राण्युच्यन्ते । तदाह- आश्वलायन:—'द्वौ त्रयोदशरात्रौ...... शतरात्रमायुष्कामा: इति रात्रिसत्राणीति । (तु०— आ० श्रौ० १ ।१ ।६ ।१५-१६) अर्थात्

द्वादशाहादूर्ध्वभाविनः त्रयोदशरात्रचतुर्दशरात्रादयः सत्रविशेषाः समुदायरूपेण रात्रिसत्रनाम्ना प्रसिद्धाः रात्रिसत्राण्युच्यन्ते। २. रात्रिसत्रं नाम न कश्चित्सत्रविशेषः, किन्तु त्रयोदशरात्रचतुर्दशरात्रादीनि यानि सत्राणि तान्येव रात्रिसत्रशब्देन व्यपदिश्यन्ते। द्र० मी०को० पृ० ३३२३।

**रात्रिसत्रेषु न्यायक्लृप्तिः—** (सा०) रात्रिसत्रेषु संख्यासंपदार्थं यान्यहानि मध्ये ओप्यन्ते तानि आवापाः न्यायाः अवोच्यन्ते। तत्र एकाहार्थे महाव्रतम्। द्व्यहार्थे गो आयुषी। त्र्यहार्थे त्रिकद्रुकाः। अभिप्लवत्र्यहः पूर्वः त्रिकद्रुका इत्याचक्षते। चतुरहार्थे त्रिकद्रुका महाव्रतञ्च। पञ्चाहार्थे अभिप्लवपञ्चाहः। षडहार्थेऽभिप्लवषडहः। इत्येवमावापाः क्रियन्ते। एतेषामह्नां यावत्प्रयोजनं सकृदावापे कृतेऽपि यदि अभीष्टा संख्या न पूर्यते तदा पुनरपि यावत्प्रयोजनमेकाहादयः षडहान्ता आवापाः क्रियन्ते। तदेवं रात्रिसत्राणामनुक्तपूर्णसंख्याकानां संख्यापूर्त्यर्थं याऽह्नां क्लृप्तिः सा न्यायक्लृप्तिरुच्यते। (तु०—आ०श्रौ० ११।१।१-१४)। द्र० आवाप—।

**रात्रिहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अश्वत्रिरात्रे (अश्वमेधे) त्रिष्वहःसु अग्निष्टोमसंस्थे प्रथमेऽहनि रात्रौ प्रतिप्रहरं आज्य-सक्तु-धाना-लाजानामेकैकं द्रव्यमादाय 'प्राणाय स्वाहा' (मा०सं० २२।२३) इत्यादिभिर्द्वादशभिर्मन्त्रैर्द्वादशस्वनुवाकेषु पठितैः यावद्रात्रिम् आवर्त्याऽऽवर्त्य ये होमा हूयन्ते ते होमा रात्रिहोमा इत्युच्यन्ते रात्रिहोमान्ते प्रातरग्निष्टोमसाम क्रियते इतीदं प्रथममहरग्निष्टोमसंस्थं भवतीति विशेषोऽवधेयः।

**रायो वाजीयसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य पञ्चमेऽहनि 'स्वादो रित्था' (साम० १००५) इत्यस्यामृचि गेयं साम रायोवाजीयमुच्यते। तत्साम च पशुकामस्य वैश्यस्य ब्रह्मसाम भवति। तदुक्तम्—'रायो वाजीयं वैश्यस्य' (तां० ब्रा० १३।४।१८)।

**रास्ना—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचनयनप्रकरणे रसना-(काञ्चीगुण) सदृशी भाण्डस्य गलगता रेखा रसना भवति। सा उखायाः गले रास्ना क्रियते (तु०—तै० सं० सा० ४।१।५)।

**राष्ट्रभृत्—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे गोपितृयज्ञेऽभ्यातानहोमानन्तरं अन्यत्र यत्र क्व च वृद्धौ 'ऋताषाड् ऋतधामा' इत्यादिभिर्द्वाविंशतिमन्त्रैः स्वाहाकारान्तैराज्यं जुहोति, इत्येते मन्त्रास्तदाहुतिहोमाश्च राष्ट्रभृत उच्यन्ते। तत्र राष्ट्रभृताम् अग्निचयने उत्पन्नानां उद्वाहे उपदेशः, 'राष्ट्रभृतो जुहोति' इति। उद्वाहकर्मसु वचनादतिदेशः इति विशेषोऽवधेयः। द्र० मी०को० पृ० ३३२५।

**रुक्म—** १. द्र० रुक्मधारण—। २. रुक्मः परिमण्डलः सौवर्ण आभरणविशेषः। (तु०—का०श्रौ०१४।५।१५ विद्याधरः)

**रुक्मधारण—** (आध्व०, याज०) सोमयज्ञेषु साग्निचित्येषु अग्नि- चयनप्रकरणे यजमानेन कण्ठे धृतः सन् उरसि लम्बमानः सौवर्णः आभरणविशेषो रुक्मं नाम। उखास्थितोऽग्निः शिक्येऽवस्थापिताः कण्ठे धार्यमाण उरः प्रदेशं यथा न दहेत् तथा व्यवधानत्वेन यद्धारणं तद् रुक्मधारणमुच्यते। तच्च वचनादिसंस्कारोत्तरं (दीक्षि-

तेन) कार्यम्। तत्रादौ वपनादिसंस्कारा: पश्चाद् रुक्मधारणं कार्यमिति विशेषोऽवगन्तव्यः। द्र० मी०को० पृ० ३३२६।

**रुक्मोपगूहन — द्र०** प्रवृञ्जनीयखरे रुक्मोपगूहन—।

**रुद्र—** (सा०) रुद्रः अग्निः। 'त्वमग्ने रुद्रो असुरो महो दिवः' इत्यादौ अग्नौ प्रयोगदर्शनात् 'रुद्रो वा एष यदग्निः' इति चार्थवाददर्शनात्, 'रुद्रमग्निं द्विजाः प्राहुः' इति आरण्यके पर्वणि (महाभारते) कुमारसंभवोपाख्याने दर्शनात्। मी०को० पृ० ३३२६)।

**रुद्र—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे रुद्राभिषेकपाठप्रयोगे 'वाजश्च (१) सत्यम् (२) ऊर्क्च (३) अश्मा च (४) अग्निः (५) अंशुः (६) तथाग्निकः (७) एका चैव (८) चतस्रश्च (९) त्र्यविः (१०) वाजा (११) इति क्रमः॥ इत्युक्तैरेकादशप्रतीकैरुक्तान् चमकान् एकादशधा विभज्य एकैकं भागं रुद्राष्टाध्याय्याः पञ्चमाध्यायस्य षट्षष्टिनमकमन्त्रेषु संयोज्य यदा पठेत् तदा चमकनमकसंवलितः स पाठक्रमो रुद्र इत्युच्यते। तैरेकादशरुद्रैः लघुरुद्रः। तैरेकादशगुणैः महारुद्रः। तैरेकादशावृत्तैरतिरुद्रोः भवतीति विशेषोऽवगन्तव्यः।

**रुद्रजप्यषडङ्गक—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे रुद्रजप्यसंज्ञकमन्त्रस्य रुद्रस्य 'हृच्छिरस्तु शिखा वर्म नेत्रं चास्त्रं महामते। प्राहुर्विधिज्ञा रुद्रस्य षडङ्गानि च शास्त्रतः'॥ इति षडङ्गानि कल्पितानि। अङ्गानां पाठन्यासक्रमस्तु १. 'शिवसंकल्पहृदयं सूक्तं स्यात्पौरुषं शिरः। प्राहुर्नारायणीयं च शिखा स्याच्चोत्तराभिधम्॥ आशुःशिशानकवचं नेत्रं बिभ्राड्बृहत्स्मृतम्। शतरुद्रियमस्त्रं स्यात् षडङ्गक्रम ईरितः॥ २. शिखा तस्य तु रुद्रस्योत्तरनारायणं द्विजः। शिरः पुरुषसूक्तं च शिवसंकल्पकं च हृत्॥ कवचं चाप्रतिरथं नेत्रं बिभ्राड् बृहत् पिबत। शतरुद्रियमन्त्रेण देवस्यास्त्रं प्रकल्पयेत्। द्र० बृहत्पराशरस्मृतिः ११ (कलकत्ता) अध्यायः ९।

**रुद्रजप्याध्यायविषय—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे माध्यन्दिनशाखिनां योऽयं रुद्रमन्त्रपाठस्तस्याष्टावध्यायाः प्रवर्ग्यशान्तिस्वस्तिवाचनाध्यायाभ्यां द्वाभ्यां सह दशाध्यायाः सन्ति। तेषु प्रथमाध्याये क्रमेण अश्वमेधगताः (मा०सं० २३।१९।३३-३४); अनारभ्याध्यायाधीताः (मा०सं० ३४।४९; ३४।१-६) मन्त्राः गणपतिमृत्युभयच्छादकच्छन्दः स्मरण ब्रह्महत्यादि पापनाशन-मनः समाधानार्थाः संकलिताः। द्वितीयाध्याये पुरुषमेधगताः पूर्वनारायणप्रतिपादकाः (३१।१-१६) उत्तरनारायणीया- (३१।१७-२२) श्च मोक्षे विनियुक्ता मन्त्रा उक्ताः। तृतीयाध्याये अग्निचयनक्रतुगता आहवनीये अग्नौ चित्यां प्रति नीयमाने ब्रह्मजपादिरूपाः (मा०सं० १७।३३-४९) मन्त्राः समाम्नाताः। चतुर्थाध्याये सर्वमेधगताः सूर्यस्तुत्संज्ञके सर्वमेधस्य तृतीयेऽहनि विनियुक्ता (मा०सं० ३३।३०-४६) मन्त्रा आम्नाताः। पञ्चमाध्याये पुनरग्निचयनक्रतुगताः शतरुद्रीयहोमे विनियुक्ताः (मा०सं० १६।१-६६) मन्त्राः संगृहीताः। षष्ठाध्याये चातुर्मास्यक्रतौ साकमेधगतपितृयज्ञे जपादौ विनियुक्ताः (मा०सं० ३।५६-६३) मन्त्राः संकलिताः। सप्तमाध्याये पुनरश्वमेधगता अरण्येऽ- नूच्या अश्वाङ्गप्रायश्चित्ताहुतिमन्त्राः। (मा० सं० ३९।७-१३) समाम्नाताः। अष्टमाध्याये पुनरग्निचयनक्रतुगात्रः वसोर्धारादिहोममन्त्राः (मा०सं० १८।१-२९) 'वाजश्च' इत्यादि 'वेट्

स्वाहा' इत्यन्ता उद्धृताः। नवमाध्याये अग्निष्टोमादि प्रवर्ग्यवद्यज्ञगताः प्रवर्ग्यस्य (उग्रकर्मणः) आदावन्ते च पठितव्याः शान्तिकरणमन्त्राः समाम्नाताः। दशमाध्याये सर्वकर्मस्वादौ वाच्याः स्वस्तिप्रार्थनामन्त्राः। संगृहीताः। इति रुद्राध्यायस्य दशानामध्यायानां विषयसंकेतोऽवगन्तव्यः। पूर्वोक्तानां अश्वमेधादिमहायज्ञानां विशिष्टमन्त्राणां हृदयादिन्यासपूर्वकं नित्यस्वाध्यायेन तैर्महायज्ञैरिष्टवान् पूतोऽपहतपाप्मा निरामयो ब्रह्मीभूतो भवेदिति विशेषोऽवधेयः। अत्र संग्रहे गणेशः विष्णुः शक्तिः सूर्यः शिवश्च इति पञ्चदेवोपासनाः गाणपतवैष्णवशाक्तसौरशैवसंप्रदायाश्च ध्वनिता इति चावधेयम्।

**रेतः सिच्—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे उपधीयमाना रेतःसिक्संज्ञका इष्टकाः रेतःसिगुच्यते। रेतःसिचौ च द्वे पद्ये भवतः। द्वियजुषो द्वितीये पद्यालोके अनूकममितः उदङ्मुखोऽध्वर्युरुभे उपदधातीति विशेषोऽवधेयः (तु०—का०श्रौ० १७।५।२२ विद्याधरः)।

**रेतस्या—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने बहिष्पवमानस्तोत्रस्य प्रथमा स्तोत्रीया अहिंकृता रेतस्योत्युच्यते। तदुक्तम्—'अहिंकृता प्रथमा रेतस्या' (तु०—ला०श्रौ० १।१२।८)। २. रेतस्या नाम प्रथमा द्युरुच्यते।

**रेफ—** (सा०) द्र० याज्यपाठप्रयोग—।

**रैवतसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने पृष्ठ्यषडहस्य षष्ठेऽहनि, सर्वपृष्ठे विश्वजिति च माध्यन्दिनसवने निष्केवल्यशस्त्रे पृष्ठनिष्पादकं मी०को० पृ० ३३३७) नष्केवल्यस्तोत्रे यदि रैवतं साम स्यात्तदानीं 'रेवतीर्नः स सधमादे' (ऋ० १।३०।१३, आ०श्रौ० ८।१।१६; नारायणः सा० १५३; १०८४-८६) इत्यस्यां योनावुत्पन्नं तृचे च गेयं साम रैवतं (रेवत्यः) साम भवति। तद्रैवतं साम पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनपवमानस्तोत्रे 'इन्द्रायेन्दो' (साम० १०७६-७८) इत्यस्मिन् तृचे च गेयम् (तु० तां० ब्रा० सा० १३।९।१४)। इति विशेषोऽवगन्तव्यः।

**रैवतसामयोनि—** द्र० रैवतसामन्—, योनि—, योनिशंसन—, योनिस्थान—।

**रौरवसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रे रौरवं साम 'पुनानः सोमधारयापः' (साम० ६७५-७६) इति बार्हते प्रगाथतृचे गेयं साम रौरवं साम भवति। तत्र प्रथमा 'पुनानः' इति बृहती, 'दुहानः' इति द्वितीया सतोबृहती। तत्र प्रगथनेन द्वे वृहत्यौ उत्तरे निष्पादितव्ये। द्र० मी०को० पृ० ३३३।

**रौहिणकपाल—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च रौहिणपुरोडाशभर्जनार्थे द्वे कपाले रौहिणकपाले उच्येते तत्र महावीरानन्तरं पिण्डद्वयस्य त्रीस्त्रीन् पिण्डान् कृत्वा तैर्महावीरद्वयं समन्त्रकं करोति। अतिशिष्टया मृदा सशेषया तूष्णीं पिन्वने रौहिणकपाले आज्यस्थाल्यां च करोति। अवशेषितया मृदाऽपि सशेषया प्रवाते प्रतिलिप्योपवातयति। इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १९१।

**रौहिणपुरोडाशश्रपण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च अध्वर्युराहवनीये काष्मर्यमयान् परिधीन् परिधाय तस्य समीपे औदुम्बरान् शकलान् वैकङ्कतीं समिधं च सादयित्वा गार्हपत्यसमीपे त्रयोदश वैकङ्कतान् परिधीन् सौवर्णराजतौ रुक्मौ मुञ्जप्रलवान् रौहिणपिष्टानि सादयति । आग्नीध्रः गार्हपत्यस्य पश्चाद्भागे धृष्टिभ्यां प्रतीचोऽङ्गारान् निरुह्य रौहिणकपाले उदक्संस्थे तदुपर्युपधाय मदन्तीभिः रौहिणपिष्टानि संयुत्य पिण्डौ कृत्वा कपालयोरधिश्रित्य स्थाल्यां तिरः पवित्रमाज्यमानीयाधिश्रित्योभयं पर्यग्निकृत्वा रौहिणौ पुरोडाशौ श्रपयति । इदं रौहिणपुरोडाशश्रपणमुच्यते । द्र० श्रौ०प०नि० पृ० २१५ ।

**रौहिणपुरोडाशासादन—** सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च रौहिणपुरोडाशश्रपणानन्तरं प्रतिप्रस्थाता मौञ्जवेदाग्रेण महावीरं, स्रुवं, पिन्वने, रौहिणहवन्यौ, उपयमनं च सम्मृज्याज्यमुत्पूय रौहिणहवन्योरुपस्तीर्य रौहिणपुरोडाशावभिघार्योद्वास्य रौहिणहवनीभ्यां परिगृह्य वेद्यां दक्षिणं पुरोडाशं दक्षिणपरिधिसन्धिसमीपे पौर्वाह्णिके प्रवर्ग्ये प्राञ्चौ अपराह्णिके तु प्रत्यङ्मुखौ यथा भवतस्तथा सादयतीति रौहिणपुरोडाशासादनमुच्यते । द्र० श्रौ०प०नि० पृ० २१५ ।

## ल

**लक्षण—** (सा०) १. येन लक्ष्यते तल्लक्षण- मुच्यते । (तु०—मी० सू० शा० १ ।१ । २) । २. तन्नाम लक्षणमुच्यते येन तद्व्यतिरिक्तेभ्यस्तस्य स्वरूपं व्यावृत्ताकारं निरूप्यते इति । ऋषयोऽपि पदार्थानां नान्तं यान्ति पृथक्त्वशः । लक्षणेन तु सिद्धानामन्तं यान्ति विपश्चितः । द्र० मी०को० पृ० ३३३९ ।

**लय—** (सा०) १. लीयन्ते श्लिष्यन्तेऽनेन, लयन्ति व्रजन्ति साम्यं गीतादयोऽत्रेति वेति । २. गीत-वाद्य-पादादिन्यासानां क्रियाकालयोः परस्परं समता लय उच्यते ।

**लिङ्ग—** (सा०) १. कर्मसु विनियुज्यमानमन्त्रेषु देवतावाचकं पदं लिङ्गमुच्यते । तद्देवता लिङ्गमुच्यते इत्यर्थः । २. अनेककर्मसाधारणं लिङ्गमुच्यते । ३. लिङ्गं सामर्थ्यमुच्यते अभिधानशक्तिः । (तु०—मा०सं० ३४ ।१ उवटः) । ४. लिङ्गं नाम मन्त्राणामर्थप्रत्यायनसामर्थ्यम् (तु०—मी० तन्त्रवा० ३ ।२१, मी०को० पृ० ३३४९) ।

**लिङ्गभेद—** (सा०) लिङ्गं द्विविधं शब्दगतं अर्थगतं च । द्विरात्रत्रिरात्रादिगणेषु द्वादशाहिको विध्यन्तः प्रवर्तते । तत्र शब्दगतं लिङ्गं अहः शब्दः रात्रिशब्दश्च । अहः शब्दोऽपि अहोरात्रवचनः । रात्रिशब्दोऽपि । अर्थगतं लिङ्गं गणत्वम्, गण एव संघातवधमैर्गणमनुग्रहीतुं समर्थः । इति शब्दार्थगतेन अहोरात्रशब्देन संघातधर्मेण च लिङ्गं द्विविधमुच्यते । द्र० मी०को० पृ० ३३४८ ।

**लिङ्गविनियोज्य—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु 'उपहोमाः, अच्छिद्रकाण्डम्' इति लिङ्गविनियोज्यानि । ततः श्रौते स्मार्ते वा यत्र मन्त्रापेक्षा तत्र तदुचितं लिङ्गं पर्यालोच्य स मन्त्रो बुद्धिमद्भिर्विनियोजनीयः । यत्र विशेषविनियोगो नोपलभ्यते तत्र लिङ्गानुसारात्तद्देवतायुक्ते कर्मणि समाख्याबलात् उपहोमार्था मन्त्राः (विनियोज्याः) । समाख्याऽपि श्रुतिलिङ्गादिवद् विनियोगेषु प्रमाणम् । (तु०—तै० ब्रा० सा० भा० २ ।४ ।१ ।१) । द्र० १-उपहोम— ।

**लैङ्गिकविनियोग—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु यत्र कुत्रापि १. अविनियुक्तानां मन्त्राणां लैङ्गिको विनियोगः कल्पनीयः। लिङ्गं नाम (अर्थ) प्रकाशनसामर्थ्यमुच्यते। यो हि यमर्थं वदितुं समर्थः स तत्र श्रुत्या विनियुज्यते। (तु०— मा० २६ ।१ उवटः)। २. विशेष-विनियोगस्तु यत्र श्रौतो न सूत्रितः। स्मार्तं तत्र विजानीयाद् ऋग्विधानादिसूत्रतः॥ ३. १- माध्यन्दिनसंहितायाश्चतुस्त्रिंशेऽध्याये लैङ्गिको विनियोगः। लिङ्गं च सामर्थ्यमुच्यते अभिधान शक्तिः। (तु०—मा०सं० ३४ ।१, उवटः)। २-चतुस्त्रिंशोऽध्यायः अनारभ्याधीतः। आदित्ययाज्ञवल्क्यदृष्टा मन्त्राः (लैङ्गिकविनियोगात्) पाठे (स्वाध्याये) विनियुक्ताः (तु०—तत्रैव महीधरः)। एवमेव (क) माध्यन्दिनसंहितायास्त्रयस्य 'प्र वायुमच्छा बृहती' इत्यादयस्त्रयोऽनुवाकाः पुरोरुचामनारभ्याधीता व्याख्येयाः आदित्यस्य वा याज्ञवल्क्यस्य वा (तु०—मा०सं० ३३ ।५५-९७ उवटः)। (ख) अथ पञ्चदशपञ्चदशत्रयोदशर्चास्त्रयोऽनुवाकः पुरोरुचः अनारभ्याधीताः श्रौतकर्मण्यविनियुक्ताः (लैङ्गिकविनियोगात्) ब्रह्मयज्ञार्हाः आदित्ययाज्ञवल्क्यदृष्टाः (तु०—तत्रैव महीधरः)। ४. सायणोऽपि ऋग्वेदभाष्ये यस्य येषां वा मन्त्राणां विनियोगं न पश्यति तदर्थं तत्र तत्र 'विनियोगस्तु लैङ्गिकः' इत्युदाजहार। **द्र०** अनारभ्याधीत, माध्यन्दिनसंहिताखिल-।

**लोकम्पृणा—** आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्नि- चयनप्रकरणे चितिसाधने १. 'लोकं पृण छिद्रं पृण' (मा०सं० १५ ।५९) इति मन्त्रेणोपधीयमानेष्टका लोकंपृणोच्यते। तथा च अनुष्ठिते चिति कर्मणि न्यूनत्वादि दोष समाधानेन संपूर्तिहेतुत्वं लोकं पृणेष्टकाया प्रयोजनं ब्राह्मणवाक्येनावगम्यते— 'यदेवास्योनं यच्छिद्रं तदेतया पूरयति— 'लोकं पृण छिन्द्रं पृण' इति। २. या इष्टका मन्त्रैर्विना तूष्णीमुपधीयन्ते ता लोकम्पृणा उच्यन्ते।

**लोगेष्टका—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चित्तिसाधने मृत्युखण्डानि यथा प्रमाणानि लोगेष्टका उच्यन्ते।

**लोप—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे पदावस्थायां श्रुतस्य संहितायामदर्शनं लोप उच्यते (तु०—तै० प्रा० १ ।५७)।

**लोपः—**(सा०) इष्टिपशुसोमादिषु शेषकार्याभावो लोपस्तदयोग्यत्वात् प्रकृतितः प्राप्ते सत्यपि। ३. अदर्शनं लोपः = प्राप्तव्य क्रियाया बाधनिषेधार्थं संयोगादिभिरभावः।

**लोमादिसंमर्शन—** (याज०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रमणीप्रकरणे यजमानो यथा लिङ्गमङ्गानि संमृशति— 'लोमानि प्रयतिर्मम' इति लोमानि। 'त्वङ्म आनतिरागतिः' इति त्वचम्। 'मांसं म उपनतिः' इति जिह्वाम्। 'वस्वस्थिमज्जा म आनतिः' इति मज्जानमिति। तदिदं लोमादिसम्मर्शनमुच्यते। तत्र लोमादिसंमर्शनात् पूर्वमासन्दीप्रत्यवरोहणानन्तरमध्वर्युराज्याहुतिं जुहोति—'त्रयो देवा एकादश त्रयस्त्रिंशाः। सुराधसः। बृहस्पतिपुरोहिताः। देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामाहुतयो मे कामान् सनर्धयन्तु स्वाहा।' देवेभ्य इदम्० इति यजमानस्य त्यागः। अध्वर्युः पुनराज्याहुतिं जुहोति—'भूः स्वाहा'। यजमानः अग्नय इदं न ममेति यजमानस्य त्यागः। अन्ते च लोमादीनि मज्ञान्तानि अङ्गानि सम्मृश्याप उपस्पृशतीति विशेषोऽवगन्तव्यः (द्र०

श्रौ०प०नि० पृ० १६७। आसन्दीप्रत्यवरोहण—।

**लौकिकाग्नि—**(सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. अपवृत्ते (समाप्ते) कर्मणि वैदिकोऽग्निः लौकिकः सम्पद्यते। यतः यदर्थं स वैदिकाद् गार्हपत्यादग्नेः उद्धृतः सोऽर्थः इदानीं सम्पन्नः इति अपवृत्त कर्माऽग्निः लौकिक उच्यते। तदुक्तम्— 'अपवृत्तकर्मा लौकिकोऽर्थसंयोगात्' (तु०—का० श्रौ० १।३।२८ विद्याधरः) इति। २. चतूरात्रमहूयमानोऽग्निर्लौकिको भवति इति ब्राह्मणम्। ३. द्वादशरात्रमहूयमानोऽग्निर्लौकिको भवति। (तु०—वै० श्रौ० २०।१५; ७।८) ४. असंस्कृतोऽग्नि लौकिक उच्यते।

**वङ्क्रि—** (सा०) वक्राणि पार्श्वास्थीनि वक्रयः। ताः अश्वस्य एकस्मिन् पार्श्वे सप्तदश, एवमितरपार्श्वे, इत्यश्वस्य चतुस्त्रिंशत् वंक्रयः इतरेषां पशूनां तु त्रयोदश त्रयोदश एकैकस्मिन् पार्श्वे इति षड्विंशतिर्वङ्क्रयो भवन्ति। तत्र अश्वमेधे प्रथमस्य सवनीयस्य अश्वस्य चतुस्त्रिंशत्, द्वितीयस्य सवनीयस्य तूपरस्य षड्विंशतिः, तृतीयस्य सवनीयस्य गोमृगस्य च षड्विंशतिर्वङ्क्रयो भवन्तीतिविशेषोऽवगन्तव्यः। द्र० अश्वमेधसवनीयपशु—।

**वक्रत्व—** (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे नैर्ऋत्यामुपक्रम्यैशान्यां समापनं वक्रत्वमुच्यते। (तु०—तै० सं० सा० ४।३।२)।

**वक्रा—**(आध्व०, सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे क्षेत्रस्य अष्टधा वक्रविभागे साधिते तदाकारेण वक्रदारुघटनेन निष्पादिता इष्टका वक्रेष्टकाः उच्यन्ते।

**वज्र—** द्र० स्फ्य—।

**वत्स—**महानाम्नीनामृचां अन्यतमः पादो वत्स उच्यते। द्र० महानाम्नीपाद—।

**वत्सापाकरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते तृतीये दर्शपूर्णमासप्रकरणे १. दर्शयोगे प्रतिपदि दधि होतुं दध्नो निष्पत्त्यै रात्रावमावास्यायां गावो दोग्धव्या इति तद्दोहनार्थं प्रातर्लौकिकदोहादूर्ध्वं स्वमातृभिः सह चरन्तो वत्साः स्वमातृभ्यः पलाशशाखयाऽपाकरणीया भवन्तीति इदं अपाकरणं वत्सापाकरणमुच्यते। (तु०—मा०सं० १।१, महीधरः)। २. शाखाहरणविधिनाऽऽहृतया पलाशशाखया शमीशाखया वा षण्णां ततोऽधिकानां वा गवां वत्सानां समन्त्रकं दूरीकरणं वत्सापाकरणमुच्यते। तत्र सान्नाय्यदधिपयसोः सम्पादने गवां संख्या अशक्तत्वाद् न्यूना क्रियते चेत् षट्त्वसंख्यातो न्यूना न कर्तव्या। षड्भ्यो गोभ्यो न्यूनसंख्याका गावो न कार्याः। ततोऽधिकाश्चेदिष्टापत्तिरेवेति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १ २।

**वनस्पतिप्रयाजप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वपायागे अध्वर्युणा प्रेष्येत्युक्ते (मैत्रावरुण)आह-होता यक्षद् वनस्पतिमुपावस्रक्षदधियो जोष्टारं शशमं नरः। स्वदात्स्वधितिर्ऋतुधाऽद्य देवो देवेभ्यो हव्यवाड् वेत्वाज्यस्य होतर्यज' इति। अयमेकादशो वनस्पतिप्रयाजप्रैष उच्यते। द्र० श्रौ०प० नि० पृ० १४४, श्रौ०को० २ भा० पृ० २००।

**वनस्पतियाग—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च

दिग्धोमानन्तरमध्वर्युः प्रदक्षिणमावृत्त्य जुह्वामुपस्तीर्य स्रुवेण पृषदाज्यं सकृद् गृहीत्वा आह—'वनस्पतयेऽनुब्रू३हि' इति। द्विरभिघार्य प्रसव्यमावृत्याश्राव्य प्रत्याश्राविते आह—'वनस्पतये इदमिति यजमानस्य त्यागः, आयुष्मानित्यनुमन्त्रणं चेति। सोऽयं पशुहविषः स्विष्टकृद्याज्यायाः पुरस्तात्कर्तव्यो' वनस्पतियाग उच्यते। द्र० दिग्घोम—द्र० श्रौ०प०नि० पृ० १३७। श्रौ०को० २ भा० पृ० २०७;१०।

**वनस्पतियागपुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशुहविषः स्विष्टकृद्यागात् प्राक् कर्तव्यस्य वनस्पतियागस्य अध्वर्युणा 'वनस्पतयेऽनुब्रूहि' इत्युक्ते मैत्रावरुणो 'देवेभ्यो वनस्पते हवींषि' (ऋ० ३०।५।७।२ ओ०) इति पुरोनुवाक्यां पठतीति पशुहविषो वनस्पतियागस्य पुरोनुवाक्या। द्र० श्रौ० प०नि० पृ० १४८ श्रौ०को० २ भा० पृ० २१२।

**वनस्पतियागप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्र.... सौमिकेषु पशुषु च पशुहविषो वनस्पतियागस्य पुरानुवाक्यानन्तरं अध्वर्युणा 'वनस्पतये प्रेष्य' इत्युक्ते मैत्रावरुणो 'होता यक्षद् वनस्पतिमभि हि पिष्टतमया रभिष्टया रशनया धिता यत्राग्नेराज्यस्य हविषा प्रियाधामानि, यत्र सोमस्याज्यस्य हविषः प्रिया धामानि, यत्रेन्द्राग्न्योः (यत्राग्नीषोमयोः) छागस्य हविषः प्रिया धामानि, यत्र वनस्पतेः प्रिया धामानि, यत्र देवानामाज्यपानां प्रिया धामानि, यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद् रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषेतां हविर्होतृर्यज' इति प्रैषेण होतारं प्रेष्यति। अयं वनस्पति याग प्रैष इत्युच्यते। द्र० श्रौ०प०नि० पृ० १४८, श्रौ०को० २ भा० पृ० २१२।

**वनस्पतियागयाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्न प्रकृ... सौमिकेषु पशुषु च वनस्पतियागप्रैषानन्तरं होता 'वनस्पते रशनया निपूय' (ऋ०खि० ५।७।२) इति वनस्पतियाज्यां पठति। द्र० श्रौ०प०नि० पृ० १४८; श्रौ०को० २ भा० पृ० २१२ तत्र पशुयागेषु वपा पुरोडाशो हविः (पश्वङ्गानि) इति द्रव्यत्रयसंबन्धिनस्त्रयो यागाः कर्तव्या भवन्ति। तेषां पुरोनुवाक्या प्रैषो याज्येति प्रदानक्रमो विज्ञेयः। तदुक्तम्— 'अनुवाक्यां च सप्रैषे पूर्वां प्रैषात्'। प्रैषमभितो याज्यानुवाक्ये' (आ०श्रौ० ३।१।१५; ३।६।९)। अर्थात् प्रैषस्य पुरस्तादनुवाक्या, उपरिष्टाद् याज्या मध्ये च प्रैषः सर्वत्र मैत्रावरुणेन होत्रा च पठितव्यमिति विशेषोऽनुसन्धेयः। द्र० श्रौ०प०नि० पृ० १४८; श्रौ०को० २ भा० पृ० २१२।

**वनस्पतियागास्विष्टकृत्पुरोनुवाक्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्न प्रकृ...सौमिकेषु पशुषु च वनस्पतियागयाज्यानन्तरं अध्वर्युणा 'अग्नये स्विष्टकृते अनुब्रूहि' इत्युक्ते मैत्रावरुणः 'पिप्रीहि देवां उशतो यविष्ठ' इति पशु हविषो वनस्पतियागस्य स्विष्टकृतः पुरोनुवाक्यां पठति। द्र० श्रौ०प०नि० पृ० १४८, श्रौ०को० २ भा० पृ० २१२।

**वनस्पतियागस्विष्टकृत्प्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके...सौमिकेषु पशुषु च वनस्पतियागस्विष्टकृत्पुरोनुवाक्यानन्तरमध्वर्यु 'णा 'अग्नये स्विष्टकृते प्रैष्य' इत्युक्ते मैत्रावरुणः 'होता यक्षदग्निं स्विष्टकृतमयाऽग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट्, सोमस्याज्यस्य हविषः प्रिया धामान्ययाड्,

इन्द्राग्नयोः (अग्नीषोमयोः) छागस्य हविषः प्रियाधामान्ययाट् वनस्पतेः प्रिया धामान्याड्, देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इषः कृणोतु सो अध्वरा जातवेदा जुषतां हविर्होतर्यज' (ऋ० खि० ५ ।७ ।२,अः) इति होतारं प्रेष्यति । इत्ययं पशुहविषो वनस्पतिस्विष्टकृद्यागस्य प्रैष उच्यते । द्र० श्रौ०प०नि० पृ० १४८, श्रौ०को० २ भा० पृ० २१२ ।

**वनस्पतियागस्विष्टकृद् याज्या —** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृति...अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वनस्पतियागस्विष्टकृत्प्रैषानन्तरं होता स्विष्टकृन्निगदरहिताम् 'अग्ने यदद्य विशो अध्वरस्य होतः' इति पशुहविषो वनस्पतियागस्य स्विष्टकृतो याज्यां पठति । इति वनस्पतियागस्य स्विष्टकृतो याज्या । द्र० श्रौ०प०नि० पृ० १४८; श्रौ०को० २. भा० पृ० २१२. ।

**वनिष्ठु—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत प्रकृतिकेषु सौमिकेषु पशुषु च प्रयोक्तव्यः १. पशोः स्थूलमात्रं वनिष्ठुरुच्यते (तु०— आप०श्रौ० भाष्ये ७ ।२६ ।१०) । २. पशोर्वपायाः समीपवर्ती मांसखण्ड उलूक सदृशः पश्वङ्गविशेषः । ३. पशोः अङ्गविशेषः वनिष्ठुरुच्यते । स च अग्नीधे भक्षणार्थं दीयते । अग्नीधे यः पश्वङ्गभागः स वनिष्ठुरिति । ४. वनिष्ठुः वपासंनिहितः तत्सदृशो मांसविशेषः । धूर्तस्वामी तु स्थविरान्तविशेष इत्याह । द्र० मी०को० पृ० ३४१३ ।

**वनीवाहन—** (आध्व०, सा०) सोमयज्ञेषु साग्निचित्येषु अग्नि- चयनप्रकरणे १. दीक्षादिवसेषु क्रत्वर्थं द्रव्योपार्जनार्थं अनसि उख्यमग्निं संस्थाप्य देशान्तरप्रयाजरूपं कर्म वनीवाहनमुच्यते । तत्र यजमान उख्यस्याग्नेरग्नेः प्रागीषं शकटं संस्थाप्य तत्रोरव्येऽग्नौ सामिधमाधाय आसन्द्यां स्थापितमुख्यमग्निमनसः पूर्वभागे स्थापयति स्वयं च दक्षिणतस्तिष्ठति । अनड्वाहौ युक्त्वाऽऽदौ प्राङ्गत्वा ततो यस्यां दिशि द्रव्यार्जनसम्भवः तस्यां गच्छति । वासस्थाने च प्राप्ते तत्रोत्तरस्यां दिशि पञ्चभूसंस्कारसंस्कृते देशेऽग्निं शकटादवतार्य समिधमादधाति । सर्व कर्म मन्त्रैः क्रियते क्रत्वर्थद्रव्याभाव एव चानुष्ठीयते इति विशेषोऽवधेयः । २. उखायाग्निं भृत्वा तस्य 'एष संवत्सरभृतो भवति (श० ब्रा० ६ ।७ ।१ ।१९) इत्यादिना संवत्सरादिकालेषु उख्यस्याग्नेर्धारणं विहितम् । धारणानन्तरं तमुख्यमग्निमनसि कृत्वा तदनः अनडुद्भ्यां स्ववसतिपर्यन्तं वाहयति । तदेतत्कर्म वनीवाहनमुच्यते । तत्र प्रतिप्रयाणं मन्त्रपाठो न भवति किन्तु गमनप्रारंभे सकृदेव भवतीति विशेषोऽवगन्तव्यः (तु०— का०श्रौ० १ ।७ ।१२ टि० विद्याधरः)

**वपा—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशुत्वक्छेदनवपोद्धरणा (वपोत्खेदना)-नन्तरं प्रयोक्तव्या 'हृन्मेदस्तु वपा वसा' इति कोषात् भेदो विशेषः सर्वोदरव्यापी पोलिकाकारोऽतिश्वेतवर्णो वपेत्युच्यते । द्र० श्रौ०प०नि० पृ० १३१ ।

**वपाप्रक्षालन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरू... सौमिकेषु पशुषु च वपोद्धरणानन्तरमुद्धृतया तया वपया सशाखां वपाश्रपणीं 'घृतेन' इत्यादि 'प्रोर्णवाथाम्' इत्यन्तेन मन्त्रेण प्रच्छादयति । अविशाखया

वपाश्रपण्या वपाया अधोभागं गृहीत्वा स्वधितिना 'अच्छिन्नो राय:' इत्यादि मन्त्रेण छिनत्ति। प्राङ्मुख: पर्यावृत्य वपामद्भि: प्रक्षालयति एतद्वपाप्रक्षालनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १३१।

**वपाप्रचार**—द्र० वपायाग—।

**वपाप्रतितपन**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्न-प्रकृतिके निरू... सौमिकेषु पशुषु च वपाप्र-क्षालनादूर्ध्वं तां वपां शामित्राग्नौ प्रतितपति। एतद्वपा प्रतितपनमुच्यते। द्र० श्रौ०प०नि० पृ० १३१।

**वपामार्जन**—(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृति-केनिरू...सौमिकेषु पशुषु च वपाश्रपण्यनु-प्रहरणानन्तरं 'ऊर्ध्वनभसे मारुताय इद-मिति' यजमानस्य त्यागादूर्ध्वं वपाश्रपण्यो-रुपरि संस्रावेणाभिजुहोति। तत उदङत्याक्रम्य यथायतनं स्रुचौ सादयित्वा षड् ऋत्विजो यजमान: पत्नी च चात्वालदेशं गत्वा परस्परस्याह्वानं कुर्यु:। तद्यथा 'पत्नि एहि, हो तरेहि, ब्रह्मन्नेहि, प्रतिप्रस्थातरेहि, प्रशास्तरेहि, अग्नीदेहि, यजमान एहि' इत्य-ध्वर्युराह्वयति। तत: पत्नी होत्रादीन-ध्वर्युपर्यन्तान् उक्तरीत्याऽऽह्वयति। एवं होतृब्रह्म प्रतिप्रस्थातृ प्रशास्त्राग्नीद्यजमाना: क्रमेण आत्मानं वर्जयित्वा सर्वेषाम् उक्त-रीत्याऽऽह्वानं कुर्यु:। तत: 'इदमाप: प्रवहत' इति, निमुञ्चामि शपथात्' इति च द्वाभ्या-मृग्भ्यां चात्वाले सर्वे मार्जयन्ते। यजमान: 'सुमित्रा न आप ओषधय: सन्तु' इति मन्त्रे-णाञ्जलिनाऽपोगृह्णाति, दुर्मित्रास्तस्मै भूयासु:' इत्यादि मन्त्रेण नैर्ऋत्यां दिशि ता अपो निरस्यति। सर्वे अप: स्पृष्ट्वा स्वे स्वे स्थाने उपविशन्ति। इदं वपामार्जनमित्यु-च्यते। द्र० श्रौ०प०नि० पृ० १३३।

**वपामार्जन**— (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्र-कृतिकेषु सौमिकेषु पशुषु च 'होता यदादि-न्द्राग्नी (अग्नीषोमौ वा) छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज' इत्यनेन प्रैषेण प्रेषितो होता 'शुचिं नु स्तोमं नवजातमद्य' इति तां यजति। इति वपाहोमानन्तरं ब्रह्मा होता मैत्रावरुणश्च चात्वाले मार्जयन्ते 'सुमित्र्या न आप ओषधय: सन्तु दुर्मि-त्र्यास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्म:' (आ०श्रौ० ३.५.११) इति मन्त्रेण। मैत्रावरुणस्तु दण्डं निधाय। इदं ब्रह्मादिव-पामार्जनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १४६-४७)।

**वपायाग**— (आध्व०) इष्टियज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्र-कृतिकेषु सौमिकेषु पशुषु च 'इन्द्राग्निभ्यां (अग्नीषोमाभ्यां' वा) छागस्य हविषो वपाया (वपायै) मेदसोऽनुब्रूहि' इति वपावदानप्रैषा-दूर्ध्वम्, 'इन्द्राग्निभ्यां (अग्नीषोमाभ्यां वा) छागस्य वपां भेद: प्रस्थितं (न प्रस्थितं श० ब्रा०) प्रेष्य' इति वपायागप्रैषाच्चोर्ध्वं 'स्वाहा देवेभ्य:' इति मन्त्रेण पुरस्तात् स्रुवेणाज्या-हुतिं जुहोति। 'देवेभ्य इदम्' इति यजमा-नस्य त्याग:। अध्वर्युर्होतुर्याज्याया उपक्रमकाले 'जातवेदो वपया' इत्यृचं स्वाहाकारान्तां पठन् वषट्कारसमकालं स्रुङ्मुखेन वपां जुहोति। याजमानं प्रकृति-वत् (इन्द्राग्निभ्यामिदम्, अग्नीषोमाभ्यामिदं वा)। 'देवेभ्य: स्वाहा' इति मन्त्रेणोपरिष्टात् स्रुवाहुतिं जुहोति। याजमानं पूर्ववत्। तदिदमाज्यभागानन्तरमेतावत् कर्म वपा-याग इति वपाप्रचारो वपाहोम इति वोच्यते द्र० श्रौ०प०नि० पृ० १३२-३३।

**वपायागपुरोनुवाक्या—** (हौ०) पशुयज्ञेषुऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशो: पर्यग्निकरणात्पूर्वं प्रयाजकाले दश प्रयाजानिष्ट्वा 'जुषस्व सप्रथस्तमम्' (ऋ० १।७५।१) इत्यादिस्तोकानुवचनादूर्ध्व (तु० ऐ० ब्रा० सा० २।१२) वपायागस्यैकादशीं स्वाहाकृतिप्रयाजयाज्यां पठित्वा आज्यभागयागानन्तरम् ऐन्द्राग्ने पशौ अध्वर्युणा 'इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽवदीयमानस्यानुब्रूहि' इति प्रेषितो मैत्रावरुण: 'आ वृत्रहणा वृत्रहभि: शुष्मै:' इति अनुवाक्यां पठति। अग्नीषोमीये पशौ तु 'होता यक्षदग्नीषोमौ छागस्य वपाया मेदसो जुषेतां हविर्होतर्यज' इति प्रेषित: 'अग्नीषोमाविमं सु' (ऋ० १।९३।१) इति पुरोनुवाक्यां पठति। इति वपायागपुरोनुवाक्या। (तु०—श्रौ०प०नि० पृ० १४६, श्रौ० को० २ भा० पृ० २०१)।

**वपायागपुरोनुवाक्याप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नं प्रकृतिके निरूढपशुबन्धप्रकरणे वपायागे आज्यभागादूर्ध्वम् अपूर्वाज्येन जुह्वामास्तीर्य तदुपरि हिरण्यशकलमवधाय (पञ्चावत्तां कृत्वा) वपामेकीकृत्य स्रुवेणाददान आह—'इन्द्राग्निभ्यां छागस्य हविषो वपाया मेदसोऽनु- ब्रूहि, इति। अयं वपायागानुवाक्या प्रैष उच्यते। द्र० श्रौ०प०नि० पृ० १३२।

**वपायागयाज्या—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके... अग्नीषोमीये पशुषु च वपायागपुरोनुवाक्यानन्तरं ऐन्द्राग्ने पशौ इन्द्राग्निभ्यां छागस्य वपाया मेदस: प्रेष्य' इति प्रेषित: सन् 'होता यक्षदिन्द्राग्निभ्यां छागस्य मेदसो जुषेतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति, इति प्रैषेण प्रेषिता होता 'शुचिं नु स्तोमं नवजातमद्य' तां (वपां) यजति। अग्नीषोमीये पशौ तु 'युवमेतानि दिवि' (ऋ० १।९३।५) इति यजति। इति वपायागयाज्या। द्र० श्रौ०प०नि० पृ० १४६ श्रौ०को० २ भा० पृ० २०१।

**वपायागयाज्याप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे वपायागे वपां स्रुचि निधाय तदुपरि हिरण्यशकलं निधायापूर्वाज्येनाभिघार्यापूर्वामाज्यस्थालीं सस्रुवामाहवनीय सकाशे निधायात्याक्रम्याश्राव्य प्रत्याश्रावित आह—'इन्द्राग्निभ्यां छागस्य वपां भेद: प्रस्थितं ('न प्रस्थितं' शं० ब्रा०) प्रेष्ये' इत्ययं वपायाज्याप्रैष उच्यते। द्र० श्रौ०प०नि० पृ० १३२।

**वपायागाज्यभागपुरोनुवाक्या—** (आध्व०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे वपायागे यद्याज्यभागौ क्रियेते तदा अध्वर्युरुत्तमप्रयाज (स्वाहा कृति) प्रचारानन्तरं उदङ्ङत्याक्रम्य प्रयाजशेषेण ध्रुवामभिघार्यपृषदाज्यमभिघार्य दक्षिणतो गत्वा वपामभिघार्य यथागतं प्रतिनिवृत्य चतुर्वारं ध्रुवाया आज्यं गृह्णानो मैत्रावरुणं प्रथमेन 'अग्नय आज्यास्यावदीयमानस्यानुब्रूहि' इति प्रैषेण प्रेष्यति। अग्नीषोमीये तु 'होता यक्षदग्निमाज्यस्य जुषतां होतर्हविर्यज' इति प्रैष: (अनेन प्रैषेण मैत्रावरुणेन प्रेषितो होता 'अग्निर्वृत्राणि जङ्घनात्' (ऋ० ६।१६।३४) इति पुरोनुवाक्यां पठति। इति वपायागाज्यभागपुरोनुवाक्या। द्र० श्रौ०प०नि० पृ० १३२ श्रौ०को० २ भा० पृ० २०१ टि०।

**वपायागाज्यभागपुरोनुवाक्या—** (आध्व०, हौ०) इष्टियज्ञेषु वपायागाज्यभागयागे प्रथमाग्नेयाज्यभागानन्तरमध्वर्युर्द्वितीयेन 'सोमाया-

ज्यस्यावदीयमानस्यानुब्रूहि' इति प्रैषेणाग्नेयाज्यभागवत् मैत्रावरुणं प्रेष्यति। अग्नीषोमीये तु 'होता यक्षत्सोममाज्यस्य जुषतां होतर्हविर्यज' इति प्रैषः। अनेन प्रैषेण मैत्रावरुणेन प्रेषितो होता 'त्वं सोमासि सत्पतिः' (ऋ० १।९१।५) इति पुरोनुवाक्यां पठति। इति वपायाग द्वितीयाज्यभागपुरोनुवाक्या। द्र० श्रौ०प०नि० पृ० १३२ श्रौ०को० २ भा० पृ० २०१ टि०।

**वपायागाज्यभागयाज्या**— (आध्व०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे पुरोवाक्यानन्तरमध्वर्युरत्याक्रम्याश्राव्य प्रत्याश्राविते 'अग्नय आज्यं प्रस्थितं प्रेष्य' इति प्रैषेण मैत्रावरुणं प्रैष्यति। अनेन प्रेषितो होता 'जुषाणो अग्निराज्यस्य वेतु' इति याज्यया यजति। अर्थात् होत्रा वषट्कृतेऽध्वर्युः प्रकृतिवत् प्रथमाज्यभागेन प्रचरति। इति वपायागाज्यभागयाज्या। द्र० श्रौ०प०नि० पृ० १३२ श्रौ०को० २ भा० पृ० २०१।

**वपायागाज्यभागयाज्या**— (आध्व०, हौ०) पशुयज्ञेषु प्रकृति... वपायागाज्यभागे पुरोनुवाक्यानन्तरमध्वर्युरत्याक्रम्याश्राव्य प्रत्याश्राविते 'सोमायाज्यं प्रस्थितं प्रेष्य' इति प्रैषेण मैत्रावरुणं प्रेष्यति। अनेन प्रैषेण प्रेषितो होता 'जुषाणः सोम आज्यस्य वेतु' इति याज्यया यजति। प्रथमाग्ने याज्यभागवत् होत्रा वषट्कृतेऽध्वर्युः प्रकृतिवत् द्वितीयेनाज्यभागेन यजतीत्यवगन्तव्यम्। द्र० श्रौ०प०नि० पृ० १३२ श्रौ०को० २ भा० पृ० २०१। एतावाज्यभागौ ऐच्छिकौ स्तः (तदुक्तम्—'यत्राग्ने राज्यस्य हविष इत्याज्यभागौ' (आ०श्रौ० ३।६।१)। यद्याज्यभागौ क्रियेते इति नारायणः। तदेवं वपायाः पशोर्वा प्रथमद्वितीयावाग्नेयसौम्यावाज्यभागौ द्रष्टव्यौ।

**वपालङ्करण**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च वपाश्रपणानन्तरं वपायां शृतायां सत्यां पात्रान्तरेऽपूर्वाज्येन उपस्तीर्य वपाश्रपणी सकाशात् वपामुद्धृत्य तस्मिन् पात्रेऽवधायाग्नावधिश्रित्य अपूर्वाज्येनाभिघार्योदगुद्वास्य तेनैवाज्येन सान्नाय्यवन्मन्त्रेणालङ्करोतीति। इदं वपालङ्करणमुच्यते। द्र० श्रौ०प०नि० पृ० १३२।

**वपाश्रपण**—द्र० स्तोकाहुति—।

**वपाश्रपणी**— (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्र...पशुबन्धप्रकरणे...सौमिकेषु पशुषु च प्रयोक्तव्या वपा श्रप्यते यस्यां सा वपाश्रपणी पात्रमुच्यते। द्र० श्रौ०प०नि० पृ० १२१, कुम्भी। इयं वपाश्रपणी ऐकादशिनेषु पशुषु वाजपेये सप्तदशसु प्राजापत्येषु पशुषु च तन्त्रं (एकैव) भवति। द्र० मी०को० पृ० ३४१७। इति विशेषोऽवधेयः।

**वपाश्रपण्यनुप्रहरणहोम**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र... पशुबन्धप्रकरणे... सौमिकेषु पशुषु च वपायागानन्तरं विशाखां वपाश्रपणीं प्रत्यग्रां च कृत्वाऽऽहावनीये 'स्वाहोर्ध्वनभसम्' स्वाहाकृते ऊर्ध्वनभसं मारुतं—गच्छतम् (श्रौ०को० २ भा० पृ० १९४। इत्याद्यृचा सस्वाहाकारयाऽनुप्रहरतीति वपाश्रपण्यनुप्रहरणमुच्यते। तत्र ऊर्ध्वनभसे मारुतायेति यजमानस्य त्यागः, वपाश्रपण्योरुपरिसंस्रावेणाभिजुहोति इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १३३, वपायाग-।

**वपासादन—**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र...पशुबन्धप्रकरणे सौमिकेषु पशुषु च वपालङ्करणानन्तरं स्रुचां दक्षिणत: 'अग्निर्होता' इत्यादिना पञ्चहोत्रा मन्त्रेण वपामासादयतीति वपासादनमुच्यते। द्र० श्रौ०प०नि० पृ० १३२, पञ्चहोतृ-वपालङ्करण—।

**वपोत्खेदन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्र... पशुबन्धप्रकरणे... सौमिकेषु पशुषु च त्वक्छेदनानन्तरम् अप उपस्पृश्य छिन्नप्रदेशं पुनर्विस्तीर्णं कृत्वा 'इषे त्वा' इति मन्त्रेण वपामुद्धरति। तदिदं वपोद्धरणं वपोत्वेदनमिति चोच्यते। द्र० श्रौ०प०नि० पृ० १३१।

**वपोद्धरण—** द्र० वपोत्खेदन—।

**वयस्या—** (आध्व०, सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने वय:शब्दोपेतैस्त्र्यविर्वयस्त्रिष्टुप्छन्द इत्यादिभिर्मन्त्रैरुपधेया इष्टका वयस्या:। (तु०—तै० सं० सा० ४।३।५)।

**वर—** (सा०) इष्टिपशुसोमयज्ञादिषु प्रकृतिविकृतिभूतेषु १. दक्षिणात्वेन दीयमानं धेनुसुवर्णादिकं व्रियतेऽनेनेति व्युत्पत्या दक्षिणा वर उच्यते। द्र० श्रौ०प०नि० पृ० ४३ द्र० का० श्रौ० १।९।१३ टि० विद्याधर:। २. श्रेष्ठत्वाद् गौर्वर: उच्यते। ३. अभीप्सितं वस्तु वर उच्यते।

**वरण—**(सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. सत्कारपुर:सरम् 'अग्निर्होता' इत्यादिमन्त्रै: ब्राह्मणानां (ऋत्विजां) प्रार्थना वरणमुच्यते। २. वरणं नाम सत्कारपुर:सरं 'अग्निर्होता' इत्यादिमन्त्रेण ब्राह्मणप्रार्थना द्र० मी०को० पृ० ३४२०। मन्त्रस्तु अग्निर्मे होता, आदित्यो मेऽध्वर्यु:, चन्द्रमा मे ब्रह्मा पर्जन्यो मे उद्गाता आकाशो मे सदस्य: आपो मे होत्राशंसिन: इति।

**वरणप्रयोजन—** (सा०) इष्टिपशुसोमयज्ञादिषु यागेषु हि १. भविष्यद्दानसूचनेनर्त्विजामुत्साहं जनयतीति वरणस्य प्रयोजनमुच्यते। सत्रेषु ऋत्विजां वरणं न भवति। तदुक्तम्-'सत्रे य ऋर्त्विजस्त एव यजमाना:' इति विशेषोऽवधेय:। द्र० मी०को० पृ० ३४२०। २. वरणमृत्विजामाननमनार्थम्। द्र० मी०को० पृ० ३४१९।

**वरत्रा—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे प्रयोक्तव्या चर्ममयी रज्जुर्वरत्रोच्यते। (तु०—तै० सं० सा० ४।२।५)।

**वराहविहत—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु वराहेणोत्खाता मृत्तिका वराहविहतमुच्यते। द्र० श्रौ०प०नि० पृ० १९०, प्रवर्ग्यसम्भरण—।

**वरुणपास—** (सा०) वरुणपाशो नाम जलोदरदेवता। द्र० मी०को० पृ० ३४२२।

**वरुणप्रघास—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे १. चातुर्मास्यानां द्वितीयं पर्व बहुदेवताकत्वेऽपि वरुणाय घासप्रदानेन वरुणस्य मुख्यत्वाद् वरुणप्रघास पदवाच्यमुच्यते। द्र० श्रौ०प०नि० पृ० ९८। २. प्रकृष्टो घासो भक्ष्यविशेषो येषु हविर्विशेषेषु ते प्रघासा:। वरुणमुद्दिश्य प्रघासा: वरुणस्य पाशरूपं कर्म घ्नन्तीति वा वरुणप्रघासा उच्यन्ते। ३. चातुर्मास्येषु द्वितीयं पर्व 'वरुणप्रघासा उच्यन्ते। द्र० मी०को० पृ० ३४२२।

**वरुणप्रघासनिष्कासावभृथानुष्ठान—** इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु नवहवींष्याम्नातानि। तेष्वष्टमं हविः वारुणी आमिक्षा, नवमं हविः कायः एककपालः। वारुण्यामामिक्षायां यवपिष्टनिर्मितं मेषमवददाति। ततः आमिक्षासंयुक्तं मेषं सर्वमवदाय हुत्वा, तत एककपालेन कायेन प्रचर्य भाण्डलिप्तेन आमिक्षाया निष्कासेन (खुरचन इति भाषायाम्) यवतुषैश्च अवभृथमनुतिष्ठन्ति। तदिदं वरुणप्रघासेषु निष्कासेनावभृथानुष्ठानमुच्यते। तदुक्तं 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति द्र० मी०को० पृ० ३४२८। एतच्च सौमिकादवभृथात् भिद्यते वरुणप्रघासेषु अवभृथशब्दः सौमिकावभृथधर्मानतिदिशान् तद्धर्मसंयुक्तं कर्मान्तरं विधत्ते' इति वचनात्। द्र० मी०को० ३४२४।

**वरुणप्रघासप्रतिप्रस्थातृवेदि—** द्र० मारुतवेदि-।

**वरुणप्रघासप्रयोगक्रम—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे द्वितीये वरुणप्रघासपर्वणि वरुणप्रघासानामनुष्ठानार्थं उत्तरदक्षिणरूपं विहारद्वयं, द्वयोरुपरि स्थापितमाहवनीयद्वयं साङ्गानि नव हवींषि, पञ्चर्त्विजं पत्नीयजमानौ इति मुख्याः पदार्था उद्दिष्टाः एवं च विहारद्वये पृथक् स्थापितयोर्द्वयोराहवनीययोरुपरि पञ्चर्त्विजः साङ्गानि नव हवींषि यजन्ति, अन्तेऽवभृथमनुतिष्ठन्ति। ऋत्विजामनुष्ठानक्रमे तु विहारद्वये होत्राग्नीध्रब्रह्मणां तन्त्रम्। (एकैकत्वम्), अध्वर्यु प्रतिप्रस्थात्रोस्तु वचनात् भेदः विहितः। (तु०—मी०को० पृ० ३४२४। २८)। वरुणप्रघासेषु पदार्थानां प्रयोगानुक्रमः—वरुणप्रघाससंभारान् संभृत्य यजमानोऽरण्योरग्नीन् समारोप्य उदवसाय मथित्वा विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचिचतुर्गृहीतं गृहीत्वाऽऽहवनीये मनस्वत्या जुहोति। ततो यजमानः वरुणप्रधानां अग्नीषोमावाज्यभागौ। आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रो द्वादशकपालः पुरोडाशः, सारस्वतश्चरुः, पौष्णश्चरुः, ऐन्द्राग्न एकादशकपालपुरोडाशः, मारुत्याभिक्षा, वारुण्यामिक्षा, कायः एककपालः पुरोडाशः इति हवींषि 'देवा आज्यपाः' इत्यादि वैश्वदेवपर्ववत् यक्ष्ये इति संकल्पयति। तत्र संकल्पे 'सविता कः' इत्युपांशु। अन्या देवता उच्चैर्विरुच्चार्यन्ते। तत ऋत्विजां कर्तव्यक्रमे प्रथमं अध्वर्यु प्रतिप्रस्थातारौ भेदेन सह वा स्वानि कर्माणि कुरुतः। अध्वर्युः 'इडा देव हूः' इत्यादिना अग्नीन् विहृत्याग्नीनन्वादधाति। तथैव प्रतिप्रस्थाता। ततो व्रतग्रहणान्ते प्रतिप्रस्थाता शाखाहरणादि करोति। बर्हिःसंभरणे अध्वर्युः। प्रथमं प्रस्तरपूर्वं पञ्च मुष्टीन् संभरति। संभरणक्रमेण उभौ बर्हिषो मुष्टीन् सादयतः। परिभोजनीयान् कृत्वा इध्मसंनहनायापि द्वयोः (अध्वर्युप्रतिप्रस्थात्रोः) वैश्वदेवपर्ववत् प्रयोगः। ततोऽध्वर्युरुत्तरवेदिं (पाशुबन्धिकीं) करोति। प्रतिप्रस्थाता दार्शपौर्णमासिकीं (दक्षिणवेदिं) च करोति। एवं वेदिद्वयं विमाय परिस्तीर्य अध्वर्युप्रतिप्रस्थातारौ शाखाहरणक्रमेण शाखापवित्रादि सायंदोहान्तं कुर्याताम्। तत्र वारुणं दोहमध्वर्युः, मारुतं दोहं प्रतिप्रस्थाता करोति। एतावत् प्रथमदिनकृत्यम्। अथ द्वितीयदिने अग्निहोत्रहोमानन्तरमुभौ (अध्वर्युप्रतिप्रस्थातारौ) पाणिसंमर्शनादि कुरुतः। अग्निपरिस्तरणमध्वर्युरेव करोति. स उत्तरस्यां वेद्यां वैश्वदेववत् पात्राणि च सादयति। प्रतिप्रस्थाता दक्षिणस्यां वेद्यां

स्फ्यम्, अग्निहोत्रहवणीं, जुह्वादिचतुष्टयं, आज्यस्थालीं, वेदं, आमिक्षाश्रपणार्थं स्थालीं, मेक्षणं, अमिक्षां, उद्धरणपात्रीं, वेदपरिवासनं, उपवेशं, चैतानि पात्राणि शमीमयानि प्रकृत्युक्तानि चासादयति। ततः अध्वर्युरिव ब्राह्मणं तूष्णीं दक्षिणत उपवेश्य प्राकृतवेद्यां पृष्ठ्यां स्तृणाति। उभौ मन्त्रेण पवित्रौ कुरुतः। अध्वर्युरिव प्रणीता प्रणयनमुत्तरवेदेरुत्तरतः करोति। दक्षिणेन (हस्तेन) अग्निहोत्रहवणीं सव्येण शूर्पं चादत्ते। प्रतिप्रस्थाता तु मन्त्रेण अग्निहोत्रहवणीमेव। एवं मन्त्रेण (प्रतिप्रस्थात्रा) प्रतितपनम्। ततोऽध्वर्युर्वैश्वदेववदाग्नेयादिपञ्चहवींषि निरूप्य ऐन्द्राग्नं निर्वपति। उभौ प्रोक्षणीः संस्कुरुतः। ततः अध्वर्युः करम्भपात्राणि, मेषं मेषीं द्विशताधिकानि शमीपर्णानि, करीरसक्तून्, ऐषीकं शूर्पं च हविर्भिः सह प्रोक्षति। उभौ स्वस्वपात्राणि प्रोक्ष्य प्रोक्षणीः निधत्तः। ततः अध्वर्युः कृष्णाजिनावधूननादि तण्डुलप्रक्षालननिनयनान्तं करोति, तुषनिरसनकाले कांश्चित् तुषान् अवभृथार्थमवशेष्य इतरान् निरस्यति। उभयोः प्रातर्दोहः सायं दोहश्च। अथाध्वर्युः कृष्णाजिनावधूननादि दधिवपनान्तं करोति। कपालोपधाने च स एव अग्नये अष्टौ कपालान्युपधाय सौम्यचरुस्थालीमधिश्रित्य सवित्रे द्वादश कपालान्युपधाय सारस्वतचरुस्थालीमधिश्रित्य पौष्णचरुस्थालीमधिश्रित्यइन्द्राग्निभ्यामेकादशकपालान्युपदधाति। प्रतिप्रस्थाता तदुत्तरतः उपवेषेण अङ्गारान् निरुह्य मारुतस्थाल्यां तिरः पवित्रं प्रातर्दोहमानीय मेक्षणेनालोड्य श्रपयति। ततः अध्वर्युः तदुत्तरतो वारुणस्थालीमधिश्रित्य तदुत्तरतः कायं एककपालमुपदधाति। संवपने अध्वर्युः इन्द्राग्निभ्यां काय इति वदति। ततः अध्वर्युणा ऐन्द्राग्नपुरोडाशाधिश्रयणे कृते प्रतिप्रस्थाता मारुतीप्रातर्दोहे सायं दोहं दध्यानीय आमिक्षावाजिने पृथक्कृत्य शीतले देशे निदधाति। सद्यस्कालपक्षे आभिक्षार्थं पय आतञ्चनं लौकिकदध्ना करोति। ततः अध्वर्युः वारुण्यामिक्षां वाजिनं च पृथक्कृत्य निदधाति। ततः स एव एककपालमधिश्रयति, आज्यदधिनी निर्वपति, अपूर्वाज्यं च। प्रतिप्रस्थाता तु प्रकृतिवत्। ततः अध्वर्युः पुरोडाशानां त्वचं ग्राहयित्वा करंभपात्राणि, मेषं, शताधिकानि शमीपर्णानि, करीरसक्तूंश्च हविर्भिः सह पर्यग्नि करोति। ततः प्रतिप्रस्थाता मारुत्यामिक्षया सह मेषीं, शत्यधिकानि शमीपर्णानि, करीरसक्तून्, ऐषीकं शूर्पं, स्वाज्यानि च हविर्भिः सह पर्यग्नि करोति। ततः अध्वर्युः पाशुक्यां वेद्यां (उत्तरवेद्यां) पात्रीसंक्षालननिनयनान्तं करोति। अथोभौ वेदावायायं त्रिः संमृष्टः। अध्वर्युः पाशुबन्धिक्यां वेद्यां स्तम्बयजुर्हरति। प्रतिप्रस्थाता दक्षिणस्यां (स्तम्बयजुर्हरति)। ततः अध्वर्युः पूर्वं मृदमादाय उत्करे न्युप्य तिष्ठति। प्रतिप्रस्थाता पाशुबन्धिक्या वेदेः पश्चान्मार्गेण मृदमाहृत्य उत्करे न्युप्य पूर्वं यथेतं प्रत्यागच्छति। ततः अध्वर्युः प्रत्यागच्छति। एवं त्रिर्यजुषा चतुर्थं तूष्णीं सह बर्हिषा। पूर्वौ परिग्रहौ परिगृह्णीतः। अध्वर्युरिव करणं जपति। तस्मिन् करणमन्त्रे 'इमां वेदिं वसुमतीं रुद्रवतीमादित्यवताम्' इति पदानां स्थाने इह वेदिद्वित्वात् 'इमे वेदी वसुमत्यौ रुद्रवत्यौ आदित्यवत्यौ' इत्यूहः कर्तव्यः। उभौ स्वस्ववेदिं स्फ्येनोद्धतः। ततः अध्वर्युरिव आग्नीध्रमाह—'अग्नीदितश्चामुतश्च त्रिस्त्रिर्हर' इति। अथाध्वर्युः स्फ्यं, उदपात्रं, शम्यां, बर्हिश्चादाय ऐहीति यजमानमामन्त्र्य यजमानपत्नीभ्यां सह

चात्वालदेशं गत्वा स्फ्येनोद्धृत्यावोक्ष्य चात्वालपूर्वदेशे उदीनकुम्बां शम्यां निधायान्तरतः स्फ्येनोल्लिखति उदगपवर्गं 'वित्तायनीमेऽसि' इति मन्त्रेण। दक्षिणता प्राचीनकुम्बां शम्यां निधाय पूर्ववत् स्फ्येनोल्लिखति प्राचीनापवर्गं 'तिक्तायनी मेऽसि' इति मन्त्रेण। पश्चादुदीनकुम्बां शम्यां निधाय अन्तरतः स्फ्येनोल्लिखत्युदगपवर्गं 'अवतान्मा नाथितम्' इति मन्त्रेण । उत्तरतः प्राचीनकुम्बां शम्यां निधाय अन्तरतः स्फ्येनोल्लिखति प्रागपवर्गम् 'अवतान्मा व्यथितम्' इति मन्त्रेण। ततः चात्वाले उदगग्रं बर्हिर्निधाय यजमानपत्नीभ्यामन्वारब्धः तस्य मूले स्फ्येन प्रहरति 'विदेरग्निर्नभः' इति मन्त्रेण। अप उपस्पृश्य छिन्नं बर्हिर्मूलं मृदं चादत्ते-'आयुषा नाम्नेहि' इति मन्त्रेण। हृत्वा उत्तरवेद्यां निर्वपति-'यत् तेऽनाधृष्टं नाम' इत्यादि मन्त्रेण। स्फ्येन बर्हिर्मूलप्रहरणादि पुनर्द्वितीयम्। तत्र मन्त्रे 'योऽस्यां पृथिव्याम्' इत्यत्र अस्यामित्यस्य स्थाने द्वितीयस्याम् इति पदस्य प्रयोगः। ततस्तृतीयम्, तत्र प्रहरणमन्त्रे अस्याम्, इत्यस्य स्थाने तृतीयस्याम्, इत्यस्य प्रयोगः। तूष्णीं चतुर्थम्। अवशिष्टं बर्हिषा सह प्रहरति। पूर्वेषु त्रिषु पर्यायेषु केवलं मृदाहरणं वा। ततः स्फ्येन चात्वाले पुरीषमुद्धृत्याह—'अग्नीदितः त्रिःस्त्रिहर' इति। आग्नीध्रश्चात्वालात् पुरीषमादाय उत्तरवेद्यां त्रिर्निवपति। इति चात्वालसंस्कारं करोति। ततोऽध्वर्युरिव उत्तरवेद्यां न्युप्तं पुरीषं संयौति-'सिंहीरसि' इति मन्त्रेण। पुरीषं प्रथयति-'उरु प्रथस्व' इत्यादिमन्त्रेण। 'ध्रुवाऽसि' इति मन्त्रेण स्फ्येन संहन्ति। 'देवेभ्य शुन्धस्व' इति मन्त्रेण उत्तरवेदिमद्भिरवोक्षति। 'देवेभ्यः शुम्भस्व' इति मन्त्रेण सिकतां समुपकिरति। उत्तरवेदिं दर्भैः प्रच्छायति। तत उभौ (अध्वर्युप्रतिप्रस्थातारौ) प्रत्येकं प्रणयनीयमिध्ममाहवनीये आधत्तः। ततः अध्वर्युः स्मार्तवदाज्यं संस्कृत्य पञ्चगृहीतं गृहीत्वा तूष्णीमुत्पूताः प्रोक्षणीश्च परिकर्मिहस्ते दत्त्वा ब्रह्मणो हस्ते दैव दारवान् परिधीन् प्रादेशमात्रान् त्रीन्, सुगन्धितेजनं, मेषशृङ्गमध्ये उत्तरप्रदेशाद्गृहीतां शुक्लां ऊर्णास्तुकां च दत्वा संप्रैषमाह—'अग्नये प्रणीयमानायानुब्रू३हि,' अग्नीदेकस्फ्यानुसन्धे इति। होत्रा अयममुष्येत्यारब्धे चात्वालमृदा पूरितां पात्रीं अग्न्युद्धरणात्र्या अधस्तादुपयम्य यजमानपत्नीभ्यामन्वारब्धः स्वमिध्ममादाय उत्तरतस्तिष्ठति। प्रतिप्रस्थाता स्मार्तवदाज्यं संस्कृत्य सकृद् गृहीत्वा अध्वर्युगृहीतस्येध्मस्य शालामुखीयस्य च मध्येन गत्वा प्रदक्षिणमावृत्य प्रत्यङ्मुखः तथैव कल्पितोपयमन्यां प्रणयनपात्रे स्वमिध्ममादाय अपसलैः पर्यावृत्य तिष्ठति। ततः अध्वर्यु प्रमुखा पाशुबन्धिकीं वेदिं (उत्तर वेदिं) अनतिक्रामन्त उत्तरेण शनैः गच्छेयुः। तत आग्नीध्रः स्फ्येन लिखितया लेखया होतुः पदं प्रच्छादयन्नेति। सर्वे गत्वा उत्तरवेदेः पश्चात् पदमात्रे तिष्ठेयुः। प्रतिप्रस्थाता अध्वर्युगमनकाले पाशुबन्धिक्या वेदेः पश्चान्मार्गेण दक्षिणतो गत्वा द्वयोर्वेद्योः मध्येन प्राग् गत्वा प्रदक्षिणमावृत्य प्रत्यङ्मुखः तिष्ठति। ततः अध्वर्युः अन्यहस्तेऽग्निं दत्त्वा परिकर्मिहस्ताद् इन्द्रघोषवतीः प्रोक्षणीः गृहीत्वा उत्तरवेदिं प्रथमं पुरस्तादारभ्य मध्ये समापयन् 'इन्दघोषस्त्वा' इत्यादिमन्त्रेण प्रोक्षति। एवं दक्षिणत आरभ्य 'मनोजवास्त्वा' इत्यादि मन्त्रेण। पश्चादारभ्य 'प्रचेतास्त्वा' इत्यादिमन्त्रेण उत्तरत आरभ्य 'विश्वाभ्यस्त्वा'

इत्यादिमन्त्रेण (प्रोक्षति)। ततः स एव परिकर्मिहस्तात् पञ्चगृहीतमाज्यमादाय हिरण्यं स्रुङ्मुखे लम्बयित्वा उत्तरवेदिं अक्ष्णया व्याघारयति-प्रथमं दक्षिणांशादारभ्य मध्ये समापयन् 'सिंहीरसि' इत्यादि स्वाहाकारान्तेन मन्त्रेण। 'सिंहीरसि सुप्रजावनिः स्वाहा' इति मन्त्रेण। उत्तरश्रोणीमारभ्य मध्ये समापयन् व्याघारयति। 'सिंहीरसि रायस्पोषवनिः स्वाहा' इति मन्त्रेण दक्षिणश्रोणीमारभ्य मध्ये समापयन्, तथैवोत्तरांसमारभ्य 'सिंहीरस्यादित्यवनिः स्वाहा।' इति मन्त्रेण। 'सिंहीरस्या- वहदेवान् देवयते यजमानाय स्वाहा' इति मन्त्रेण मध्ये व्याघारयति।(सर्वत्र उत्तरवेद्या 'इदं न मम' इति यजमानस्य त्यागः इति विशेषोऽवधेयः)। ततः 'भूतेभ्यस्त्वा' इति मन्त्रेण स्रुचमुद्गृह्णाति। ततोऽध्वर्युरेव ब्रह्मणो हस्ताद् दैवदारवान् परिधीन् गृहीत्वा उत्तरनाभिं परिदधाति— 'विश्वायुरसि' इत्यादि मन्त्रेण मध्यमम्। 'ध्रुवक्षिदसि' इत्यादिमन्त्रेण दक्षिणम्। अच्युतक्षिदसि' इत्यादिमन्त्रेण उत्तरं परिदधाति। ततः स एव 'अग्नेर्भस्मासि' इत्यादिमन्त्रेण गुग्गुलु, सुगन्धि तेजनं, शुक्लामूर्णास्तुकां चोत्तरनाभ्यां निवपति। पूर्वं निहितानां संभाराणाम् आपरिशेषेणाधारणं कृत्वा प्रदक्षिणमावृत्य अग्निं गृहीत्वा उत्तरवेदेः पुरस्तात् प्रत्यङ्मुखः संभारेषु प्रज्वलितमिध्मं 'यज्ञ प्रतितिष्ठ' इत्यृचा प्रतिष्ठापयति। प्रतिप्रस्थाता अस्मिन् काले दक्षिणवेदेः पूर्वार्धे शालामुखीयाद् आहृतमग्निं तूष्णीं प्रतिष्ठापयति। ततः अध्वर्युः प्रणयनीयमिध्मं विस्रस्य परिसमुह्य पर्युक्ष्य परिस्तीर्य ज्वलयति। प्रतिप्रस्थाता एवमेव ज्वलयति। ततः अध्वर्युः कांचित् समिधमाधाय यजमानान्वारब्धः स्मार्तवत्संस्कृताज्येन 'अग्निर्यज्ञं नयतु प्रजानन्' इत्यादितिसृभिर्ऋग्भिः स्वाहाकारन्ताभिः स्रुवेण तिस्रः आज्याहुतीः जुहोति। यथालिङ्गं यजमानस्य त्यागः। ततो यजमानः तेनैवाज्येन 'अग्निरन्नादोऽन्नपतिः' इत्यादिभिस्त्रिभिः यजुर्मन्त्रैः स्वाहाकारान्तैः तथैव जुहोति। अग्नयेऽन्नादाय इदं० वायवे प्राणदाय इदं०, आदित्याय भूरिदाय इदं० इति क्रमेण यजमानस्य त्यागः। प्रतिप्रस्थाता एवमेव समिधमाधाय सकृद् गृहीतेनाज्येन तूष्णीं एकामाहुतिमभिजुहोति। तत्र एतस्मिन् प्रणीताग्नन्यभिहोमकाले ब्रह्मा दक्षिणस्या वेदेः दक्षिणतः मन्त्रेणोपविशति, (तस्य पश्चात् यजमानः इति विशेषोऽवधेयः)। ततोऽध्वर्युरेव संप्रैषमाह-'ब्रह्मन्नुत्तरौ परिग्राहौ परिग्रहीष्याव इति। तत उभौ 'ऋतमसि' इत्यादि 'यजन्ते' इत्यन्तं कृत्वा स्फ्यौ तिर्यञ्चौ स्तब्ध्वा तिष्ठतः। ततः अध्वर्युरेव संप्रैषमाह—(हे परिकर्मिणः) 'प्रोक्षणीरासादयतम्, इध्मावर्हिषी उपसादयतम्, स्रुवौ च स्रुवश्च संमृष्टं, पत्नीं सन्नह्य आज्याभ्यां दध्ना चोदेतम्' इति। ततः आग्नीध्रः प्रोक्षणीः प्रतिप्रस्थातुः दक्षिणेन हृत्वा उतरस्यां वेद्यां स्फ्यस्य वर्त्मनि सादयति। प्रतिप्रस्थाता तथा स्वप्रोक्षणीः सादयति। उभौ (आग्नीध्रप्रतिप्रस्थातारौ) स्फ्योपरि किंचित् प्रोक्षणीजलं निनीय 'यो मा हृदा' इत्यादि स्फ्यप्रक्षालनान्तं कुरुतः। आग्नीध्रः प्रतिप्रस्थातुः उत्तरवेदिमग्रेण पाशुबन्धिकीं वेदिमपरेण वैश्यदेववद् आज्यदध्नोरासादनं करोति। (अत्र गमनमार्गः संचर इत्युच्यते)।

इति विशेषोऽनुसन्धेयः। ततः प्रतिप्रस्थाता दक्षिणवेदिपात्राणि संमृज्य पत्न्यवेक्षणादि भेदेन कृत्वा स्ववेद्यां आज्यमासादयति। यजमानश्च दक्षिणस्या वेदेः दक्षिणतः

स्वायतने उपविश्य दक्षिणं प्रतिप्रस्थातुराज्यं अवेक्ष्य पाशुबन्धिक्या वेदेः दक्षिणतः उपविश्य उत्तरमध्वर्योः आज्यमवेक्षते। अथवा वेदिसन्धौ उपविश्य दक्षिणमवेक्ष्य उत्तरमवेक्षते। ततः अध्वर्युः वैश्वदेववद् आज्यानि गृह्णाति। प्रतिप्रस्थाता दक्षिणस्यां वेद्यां प्रकृतिवद् अध्वर्योर्ग्रहणकाले आज्यानि गृह्णाति। स अध्वर्योः पृषदाज्यग्रहण्युपस्तरणाभिघारणकाले चतुरुपभृति गृह्णा- ति। ततो यजमान उभयं (ग्रहणद्वयं) सहानुमन्त्रयते। (तत्रानुमन्त्रणमन्त्रेषु 'त्वा' इत्यस्य स्थाने 'वाम' इत्यूहः, 'हविर्देवानाम्' इत्यस्य स्थाने हविषी देवानाम् इत्यूहः। इति विशेषः। ततः अध्वर्योः 'आपो देवीः' इत्यादिपरिधिपरिधानान्तं वैश्वदेववद् भवति, प्रतिप्रस्थातुस्तु प्रकृतिवत्। तत उभौ (अध्वर्युप्रतिप्रस्थातारौ) प्रस्तरपाणी (सन्तौ) प्राञ्चौ अभिसृप्य काष्मर्यमयान् परिधीन् परिधत्तः। यजमानोऽनुमन्त्रयते। यजमानस्य एतदनुमन्त्रणमन्त्रेषु 'असि' इत्यस्य स्थाने 'स्थ' इति पदं प्रथमध्रुवपदस्य 'ध्रुवौ' इति, 'उग्रः' इत्यस्य स्थाने 'उग्रौ' इति। 'अभिभूः' इत्यस्य स्थाने 'अभिभुवौ' इति, 'त्वा' इत्यस्य स्थाने 'वाम्' इति। 'जातवेदाः इत्यस्य स्थाने 'जातवेदसौ' इति। ते इत्यस्य स्थाने 'वाम्' इति। इत्येवमूहोऽवधेयः। अध्वर्युप्रतिप्रस्थात्रोः 'विशो यन्त्रे स्थः' इत्यादि हविरुद्वानपर्यन्तं समानम्। ततः हविरुद्वासने उभौ आज्यस्थाल्यादीन्यादाय गार्हपत्यस्य पश्चात् प्राङ्मुखौ उपविशतः। तत्र दक्षिणतः प्रतिप्रस्थाता उत्तरतोऽध्वर्युः इति विशेषः। ततः अध्वर्युः आग्नेयप्रभृतीनि ऐन्द्राग्नान्तानि हवींषि उद्वासयति। प्रतिप्रस्थाता व्युद्धरणपात्र्यां तूष्णीमुपस्तीर्य मारुतीं गार्हपत्ये पुनरधिश्रित्य अभिघार्य उद्वास्य आमिक्षाशेषं स्थाल्यां परिशेषयन् व्युद्धरणपात्र्यां प्रतिक्षिप्य तदुपरि मेषीमवधाय तस्या मुखे शमीपर्णानि करीरसक्तून् अतिशिष्टामिक्षास्तोकं चावधाय तदुपरि वाजिनशेषम् आनीय अभिघार्य 'यस्त आत्मा' इत्यादि मन्त्रेणालंकरोति। अध्वर्युरपि मारुती (आमिक्षा) वद् वारुणीमामिक्षामुद्वासयति। तस्यां मेषमवदधातीति विशेषः। वारुण्याः क्षामकाषं चावभृथार्थं पृथक् स्थापयति। ततः स एव आग्नेयादीन्यैन्द्राग्नान्तानि हवींषि अन्तर्वेद्यामासादयति। प्रतिप्रस्थाता मारुतीं मेषीमादाय दक्षिणवेद्यामासादयति। ततः अध्वर्यु वारुणीं (आमिक्षां), एककपालं च स्ववेद्यामासादयति। व्याहृतिमन्त्रः प्रत्यासादनमावर्तते इति विशेषोऽवधेयः। उभौ अध्वर्युः प्रति प्रस्थाता च स्रुवौ ध्रुवयोरवधत्तः, शालामुखीयस्य पुरस्ताद् वाजिनं च तूष्णीमासादयतः। ततः यजमानो दक्षिणस्यां वेद्यामासन्नाऽभि-मन्त्रणं कृत्वा उत्तरस्यामासन्नाभिमन्त्रणं करोति। अध्वर्युरिव वैश्वदेववदग्निमन्थनं करोति। अध्वर्युप्रतिप्रस्थातारौ स्वस्वेध्मात् समिधमादत्तः। ततः अध्वर्युरिव 'अग्नये समिध्यमानायानुब्रूहि' इति संप्रेष्यति। उभौ (अध्वर्युप्रतिप्रस्थातारौ) च प्रणवे प्रणवे स्वस्वाग्नौ समिधमाधत्तः। यजमानः अग्निभ्यामिदं न मम' इति ब्रुवन् 'उच्छुष्मावग्नी यजमानायस्तं निशुष्मावभिदासते अग्नी देवेद्धौ मन्विद्धौ मन्द्रजिह्वौ' इत्यनुमन्त्रयते। उभयोरपि स्रौवाघारान्तं सगानम्। यजमानः 'मनसी स्थः प्रजापतये मनसा भूतेनाविशतम्' इति स्रौवाघारमनुमन्त्रयते। ततः अध्वर्युराह— 'अग्नीदग्नीं स्त्रिस्त्रिः समृद्धि' इति। ततः आग्नीध्रः उत्तरवेदिगतं आहवनीयं संमार्ष्टि। प्रतिप्रस्थाता स्वाग्निपरिधीन्

संमृज्य स्वाग्निसंमार्जनमकृत्वा पत्नीं पृच्छति—'पत्नि कस्ते जार' इति। पत्नी जारं दर्शयति। जाराभावे 'पाप्मा मे जार:' इति वदति। प्रतिप्रस्थाता आह 'तं वरुणो गृह्णातु'। अथ स एव ऐषीके शूर्पे करम्भपात्राणि समोप्य पत्न्यै प्रयच्छति। पत्नी शिरसि एड्वं निधाय तस्योपरि शूर्पं निदधाति। तत: प्रतिप्रस्थाता पत्नीं दक्षिणया द्वारोपनिष्क्रमय्य दक्षिणेन अन्वाहार्यपचनं दक्षिणेन द्वे वेदी परीत्य प्राचीमुदायन् वाचयति— 'प्रघास्यान् हवामहे' इति गायत्रीमृचम्। अध्वर्यु: उत्तरमार्गेणागत्य दक्षिणस्या वेदे: पुरस्तात् प्रत्यङ्मुखस्तिष्ठति। तस्य दक्षिणतो यजमान: तस्य दक्षिणत: पत्नी (तिष्ठति)। यजमान: पत्नीहस्तात् करंभपात्रसहितं शूर्पं गृहीत्वा शिरसि किंचित् निधाय तस्योपरि शूर्पं निधाय अप्रणवां 'मो षू ण इन्द्र पृत्सु देव' इत्यृचं पुरोनुवाक्यां वदति। पत्न्या सह यजमान: 'यद्ग्रामे यदरण्ये' इत्यृचा स्वाहाकारान्तया याज्यया जुहोति। 'वरुणायेदं न मम' इति यजमानस्य त्याग:। शूर्पमानौ अनुप्रहरति। अथवा शूर्पमद्भि: प्रोक्ष्य तेन लौकिकानि कार्याणि कुर्यात् तत: अध्वर्यु: यजमानपत्नीप्रतिप्रस्थातृन् गच्छतोऽनुमयते—'अक्रन् कर्म कर्म कृत:' इत्यृचा। तत: प्रतिप्रस्थाता दक्षिणमग्निं संमार्ष्टि—'अग्ने वाजजित्' इत्यादिमन्त्रेण। उभयोरपि अध्वर्युप्रतिप्रस्थात्रो: 'भुवनमसि' इत्यादि 'ज्योतिराङ्क्ताम्' इत्यन्तं समानम्। यजमान: जौहवाघारयो: दक्षिणहस्तेन प्रतिप्रस्थातारं दर्भेण अध्वर्युं चान्वारभते। ततो जौहवाघारौ अनुमन्त्रयते—'इन्द्रायेदं वाचौ स्थ ऐन्द्यौ सपत्नक्षपण्यौ वाचामेन्द्रियेणाविशतम्' इति अध्वर्युरिव स्फ्यद्वयं गृहीत्वा प्रवरं वृणीते। तत: घृतवती शब्दश्रवणानन्तरमध्वर्युप्रतिप्रस्थातौ स्वस्वस्त्रुवौ आदाय प्रत्याक्रम्य तिष्ठत:। तत: अध्वर्युराश्रावयति आग्नीध्र: प्रत्याश्रावयति। आग्नीध्र: प्रत्याश्रावयति। अध्वर्यु: प्रेष्यति-'समिधो यज' इति। वषट् कृते उभौ सह स्वाग्नौ जुहुत:। उभयोरपि चतुर्थाष्टमयो: (प्रायाजयो:) समानयनम्। तत्र अध्वर्युरष्टमे सर्वं समानयते, प्रतिप्रस्थाता उपभृति अनुयाजार्थमाज्यं परिशेषयति। (उपभृदाज्यस्य जुह्वां ग्रहणं समानयनमित्युच्यते)। यजमानं तु वैश्वदेववत्। तत: अध्वर्यु: प्रयाजशेषेण ध्रुवामभिघार्य आग्नेयादिषड्ढवींषि अभिघारयति। तत: प्रतिप्रस्थाता ध्रुवामभिघार्य मारुतीमभिघार्य उपभृतमभिघारयति। तत: अध्वर्यु: वारुणीं, एककपालं, पृषदाज्यं चाभिघारयति। उभौ आज्यभागान्तं प्रचरत:। तत: प्रतिप्रस्थाता उपरमति। अध्वर्यु: आग्नेयादिषड्ढविभिर्यजति। तत उपरमति। तत: प्रतिप्रस्थाता आमिक्षाया: प्रथमावदानेन सह शमीपर्णकरीरसक्तू आमिक्षास्तोकानाम् अर्धमभिघारयति। द्वितीयावदानेन सह शमीपर्णाद्यर्धं मेषीं चावद्यति। तत: 'प्राणैर्ऋध्यासम्' इति याजमानानुमन्त्रणम् तत: प्रतिप्रस्थातोपरमति। तत: अध्वर्यु: प्रतिप्रस्थातृवद् वारुणीमवद्यति। मेषीस्थाने मेष इति विशेष:। 'धर्मभाग्भूयासम्' इति यजमानानुमन्त्रणम्। ततोऽध्वर्यु: द्यावापृथिव्यवत् कायेन प्रचरति। 'शविष्ठो भूयासम्' इति यजमानस्यानुमन्त्रणम्। तत: अध्वर्यु: 'नभश्च स्वाहा' इत्यादिभिर्मन्त्रै: चतसृभि: स्रुवाहुतिभि: एककपालमभिजुहोति। यजमानस्य यथालिङ्गं त्याग:। तत: स्विष्टकृदवदाने अध्वर्यु: ऐन्द्राग्नान्तानाम् उत्तरार्धादवदाय विरमति। प्रतिप्रस्थाता मारुत्या अवदाय विरमति। तत: अध्वर्यु: वारुण्या एककपालस्याऽऽशयाज्या-

च्चावदाय द्विरभिघारयति। उभौ स्वस्वमेक्षणान्यादाय अत्याक्रम्य स्विष्टकृद्धोमानन्तरं स्वस्वाग्नौ अनुप्रहरतः। ततः प्रतिप्रस्थाता औपभृतमाज्यं जुह्वामानीय यथायतनं स्रुचौ सादयति। अध्वर्युस्तु पृषदाज्यग्रहणीमध्याद् आज्यम्। अनानीयैव सादयति। ततः अध्वर्युरिव प्राशित्रमवद्यति। स एव इडापात्र्यां ऐन्द्राग्नान्तान्यवदाय इडापात्रं प्रतिप्रस्थात्रे प्रयच्छति। ततः प्रतिप्रस्थाता मारुत्या इडामवदाय इडापात्रं अध्वर्यवे प्रयच्छति। ततः अध्वर्युः वारुण्या अवदाय आशयाज्यादवदाय अभिघार्य इडापात्रं होत्रे प्रयच्छति। प्रतिप्रस्थातुरन्वारब्धो भक्षणं च (प्रयच्छति)। ततः अन्वाहार्यमासाद्य द्वादश गा द्वादशवासांसि वा ददाति तत्र अध्वर्युप्रतिप्रस्थात्राग्नीधां प्रतिग्रहमन्त्रे यथाद्रव्यं रुद्राय गां सोमाय वासः इत्यूहः कर्तव्यः। ततो वैश्वदेववत् वाजिनयोरासादनम्। तत्र पवित्रकरणान्तमुभयोः। 'यजमान वाचं यच्छ' इति प्रैषः अध्वर्योरेव। 'वेषाय त्वा' इत्यादि उभौ कुरुतः। ततः अध्वर्युरिव संप्रैषमाह—'प्रोक्षणीरासादयतं, चमसौ संमृष्टम्' इति। ततः अग्नीत्प्रतिप्रस्थातारौ प्रोक्षण्यासादनं कुरुतः। अध्वर्युप्रतिप्रस्थातारौ स्फ्योद्यमनादि कुरुतः। अग्नीत्प्रतिप्रस्थातारौ स्वस्ववेद्यामासादनान्तं कुरुतः। ततः यजमानः दक्षिणस्यासन्नाभिमन्त्रणं कृत्वोत्तरस्य करोति। अध्वर्युरिव 'ब्रह्मन् प्रस्थास्यामः' इति ब्रवीति। ततः अध्वर्युप्रतिप्रस्थारौ परिशेषितां स्वस्वसमिधमाहवनीये आधत्तः। ततः अग्नीत्प्रतिप्रस्थातारौ परिधिसंमार्गादि इध्मसन्नहनप्रहरणान्तं कुरुतः। इदानीमध्वर्युः पृषदाज्यं जुह्वां समानयति ततः उभौ (अध्वर्युप्रतिप्रस्थातारौ) स्वस्वस्रुवौ आदाय अत्याक्रम्य नवानुयाजान् यजतः। अध्वर्युरिव प्रथमेऽनुयाजे 'देवान् यज' इति प्रेष्यति द्वितीयतृतीयौ असंप्रेष्य चतुर्थादिषु 'यज' इति संप्रेष्यति। स्रुग् व्यूहने यजमानसाहित्यविधानात् प्रतिप्रस्थाता दक्षिणवेद्यां प्रथमं स्रुचौ व्यूहति, ततोऽध्वर्युः। उभौ स्वस्व- प्रस्तर-समञ्जनं कुरुतः। अध्वर्युरिव आश्राव्य 'इषिता दैव्या होतारः' इति प्रैषमाह। तत उज्जितिवाचने ऐन्द्राग्नान्तानां अध्वर्युः वाचयति। मरुतां प्रतिप्रस्थाता (वाचयति)। तदनन्तरमध्वर्युरिव (करोति)। उभौ सह प्रस्तरं प्रहरतः। यजमानस्यानुमन्त्रणम्। यजमानस्यानुमन्त्रणमन्त्रे 'त्वा' इत्यस्य स्थाने 'वाम्' इत्यस्योहः। ततः अध्वर्युणा 'अग्नीत्' इत्युक्ते आग्नीध्रः 'संवदेथाम्' इत्याह। अध्वर्युणा 'अगच्छावाग्नीत्' इत्युक्ते आग्नीध्रः 'अगच्छतम्' इत्याह। अध्वर्युणा 'इमे ब्रूहि' इत्युक्ते आग्नीध्रः 'अनुप्रहरतम्' इत्याह। तत उभौ (अध्वर्युप्रतिप्रस्थातारौ) स्वस्वतृणे प्रहरतः। अध्वर्युरिव शंयुवाकप्रैषमाह। तत आहवनीयोपस्थानादि संस्रावहोमान्तं उभौ कुरुतः। ततो यजमानस्य परिधिविमोकानुमन्त्रणम्। विमोकानुमन्त्रणमन्त्रे 'ते' इत्यस्य स्थाने 'वाम' इत्यूहः, तथा 'धत्तात्, ब्रूयात्, 'इत्यनयोः 'धत्तं ब्रूतं' इति क्रमेणोहः। तत्र अध्वर्योः स्रुग्विमोको वैश्वदेववत्। प्रतिप्रस्थातुः प्रकृतिवत्। अथ संमृष्टौ चमसौ स्वस्ववेद्यां निधाय पूर्ववत् वाजिनमानयतः। 'वाजिभ्योऽनुब्रूहि' इति प्रैषादि 'वाजिनो यज' इत्यन्तमध्वर्योरेव प्रतिप्रस्थातुस्तु तूष्णीं चमसं गृहीत्वा अत्याक्रमणमात्रम्। वषट् कृते उभौ जुहतः। अनुवषट्कारे संस्रावहोमानन्तरं प्रतिप्रस्थाता अध्वर्युणा सह प्रत्याक्रम्य वाजिनशेषं अध्वर्योः वाजि-

नपात्रे निनयति। तत उपहवप्रकरणे प्रतिप्रस्थाता 'वाजिने तृतीयः' (आ०श्रौ० २।१७।१५) इति सूत्रात् प्रतिप्रस्थाता तृतीयो भक्षणे तु चतुर्थः। मन्त्रस्तु अध्वर्योः यः स एव प्रतिप्रस्थातुरपि। ततः पत्नीसंयाजाः अध्वर्योरिव ततः अध्वर्युप्रतिप्रस्थातारौ यजमानाय वेदं दत्त्वा वाचयतः। वाचनमन्त्रे 'वेदौ स्थो वित्ती स्थो विदेयकर्मणी स्थः करणे स्थः क्रियासँ् सनीस्थः सनितारौ स्थः सनेयः घृतवन्तं कुलायिनँ् रायस्पोषँ् सहस्रिणं वेदौ दत्तां वाजिनम्' इत्यूहः कर्तव्यः। उभौ ध्रुवाप्यायनादि प्रायश्चित्तहोमान्तं पृथक् कुरुतः। यजमानध्रुवाप्यायनानुमन्त्रणमन्त्रे 'ध्रुवा' इत्येकवचनस्य स्थाने 'ध्रुवे' इति द्विवचनान्तस्योहः। ततोऽध्वर्युः वैश्वदेववत् त्रीणि समिष्टयजूंषि जुहोति। प्रतिप्रस्थातातु प्राकृतमेकमेव। ततः ब्रह्मोपस्थानप्रणीतानिनयन विष्णुक्रमान्तं उत्तरवेद्यां भवति। तस्य कर्ताऽध्वर्युः। नेदानीं व्रतविसर्गः। यजमानः उत्करे उपवेषौ निगूहति—यौ देवा, मनुष्येषूपवेषावधारयन्। ये अस्मद्चेतसस्तानस्मभ्यमिहाकुरुताम्' इत्यूहविशिष्टेन मन्त्रेण। अथोपवेषनिगूहनानन्तरं वरुणप्रघासाङ्गभूतावभृथानुष्ठानार्थं अध्वर्युः दर्भमुष्टिं वेदं च कृत्वा पाणी संमृश्य अग्नीन् परिस्तीर्य स्फ्यं, अग्निहोत्रहवणीं, जुहूं, स्रुवं, आज्यस्थालीं, वेदं, योक्त्रं, वेदपरिवासनं व्युद्धरणार्थस्थालीं च शालामुखीयस्य पुरस्ताद् उत्तरतो वा सादयित्वा उत्तरवेदिसमीपे ब्रह्माणं तूष्णीमुपवेश्य पृष्ठ्यां स्तीर्त्वा पवित्रं कृत्वा 'यजमान वाचं यच्छ' इत्युक्त्वा 'वेषाय त्वा' इति मन्त्रेण अग्निहोत्रहवणीमादाय निष्टप्य प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्ष्य आज्यं निरूप्य अधिश्रित्य वारुणीनिष्कासेन सह पर्यग्निकृत्वा स्फ्यमादाय वेद्यां स्तब्ध्वा संप्रैषमाह—'प्रोक्षणी रासादय, स्रुवं च स्रुचं च समृद्धि, पत्नीं सन्नह्य आज्येनोदेहि' इति। स्फ्यमुदस्य 'प्रत्युष्टं रक्षः प्रत्युष्टा अरातयोऽग्नेर्वां तेजिष्ठेन तेजसा निष्टपामि' इति मन्त्रेण निष्टप्य संमृज्य अग्रेणोत्करं सादयित्वा पत्नीं सन्नह्य गार्हपत्यमाज्यं चावेक्षयित्वा आज्यं गार्हपत्येऽधिश्रित्यादाय गत्वा उत्तरवेद्यामधिश्रित्य यजमानमीक्षयित्वा स्वयमेवोत्पूय 'वैष्णवमसि वैष्णवं धामासि प्राजापत्यम्' इत्यभिमन्त्र्य गार्हपत्येऽधिश्रित्य व्युद्धरणपात्र्यामुपस्तीर्य वारुणीनिष्कासं तस्मिन्नुद्धृत्य अभिघार्य अलंकृत्य वेद्यामासाद्य यजमानेनासन्नाभिमन्त्रणे कृते सस्रुवामाज्यस्थालीं, वेदं, जुहूं, बर्हिः, प्रतिवसनीये वाससी, स्फ्यं, समिधं, वारुणीनिष्कासं तुषांश्च आदाय अन्तरेण चात्वालोत्करौ उदङ् निष्क्रामति—'उरुं हि राजा वरुणश्चकार' इत्यृचा। यत्रापस्तत्र गत्वा अपो दृष्ट्वा 'शतं ते राजन् भिषजः इत्यृचं यजमानं वाचयति। सर्वे अपां समीपमभितिष्ठन्ति 'अभिष्ठितो वरुणस्य पाशः' इति मन्त्रेण (प्राच्यां कर्म कर्तव्यमिति यां दिशमवभृथार्थं व्रजन्ति सैव प्राची)। तत्र 'अग्नेरनीकमप आविवेश' इत्यादि मन्त्रेण अप्सु बर्हिः प्रास्यति। 'प्रति ते जिह्वा' इति मन्त्रेण बर्हिष उपरि स्रुवाहुतिं जुहोति। 'अग्नय इदम्' इति यजमानस्य त्यागः।

ततः अध्वर्युः आग्नीध्रं प्रेष्यति—'अग्नीदयः त्रिः समद्धि' इति। आग्नीध्रः परिभोजनीयदर्भान् स्फ्येनोपसंगृह्य उपः संमार्ष्टि 'आपो वाजजितो वाजं व आपः सरिष्यन्तीर्वाजं जेष्यन्तीर्वाजिनीर्वाजजितो वाजजित्यायै संमार्ज्म्यपो अन्नादा अन्नाद्याय' इति मन्त्रेण। अध्वर्युः वेदमुपभृत्स्थाने धृत्वा प्राकृतमन्त्रेण जुह्वां चतुर्गृहीतं गृहीत्वा तेन

प्रकृतिवत् त्रीन् प्रयाजान् यजति। उपभृदाज्यग्रहणनियुक्तप्राकृतमन्त्रेण जुह्वां चतुर्गृहीतेन पञ्चमं प्रयाजम्। (अत्र चतुर्थप्रयाजप्रथमानुयाजौ न भवत: 'न बर्हिष्मन्तौ प्रयाजानुयाजौ' (आ०श्रौ० ६।१३।४) इति निषेधात्)। तत: प्रयाजशेषेण आज्यस्थालीमभिघार्य निष्कासमभिघार्य आज्यस्थालीं पुनरभिघारयति। तत: प्राकृतेन ध्रुवाज्यग्रहणमन्त्रेण जुह्वां चतुर्गृहीतेन प्रथममाज्यभागम्, पुनस्तथैव गृहीतेन (चतुर्गृहीतेन) द्वितीयमाज्यभागं (जुहुयात्) प्रयाजाज्यभागसंबन्धाज्यग्रहणे यजमानानुमन्त्रणं प्रकृतिवत् (कार्यम्)। तत: अध्वर्यु: 'अर्चिस्त्वा' इत्यादिना जुह्वामुपस्तीर्य निष्कासादेव अवद्यन्नाह—'वरुणायानुब्रूहि' इति तूष्णीं द्विरवदाय 'अर्चिस्त्वा' इत्यादिनाऽभिघार्य आश्राव्य आग्नीध्रेण प्रत्याश्राविते आह—'वरुणं यज' इति। वषट्कृते अप्सु जुहोति। यजमान: वरुणायेदं. अनुमन्त्रणे मन्त्रे 'धर्मभागम्' इति विशेष:। स एव पुन: 'अर्चिस्त्वा' इत्यादिना उपस्तीर्य पूर्वमेव निष्कासं गृहीत्वा स्रुचि स्थाप्य चाह-'अग्नीवरुणाभ्यां स्विष्टकृद्भ्यामनुब्रूहि' इति। 'अर्चि' इत्यादिनाऽभिघार्य आश्राव्य आग्नीध्रेण प्रत्याश्राविते आह-अग्नीवरुणौ स्विष्टकृतौ यज' इति। यजमान: 'अग्नीवरुणाभ्यामिदं न मम'। ततो यजमान: 'अग्नीवरुणयो: स्विष्टकृतौ यज' इति। यजमान: 'अग्नीवरुणाभ्यामिदं न मम'। ततो यजमान: 'अग्नीवरुणयो: स्विष्टकृतोरहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयम्' इत्यनुमन्त्रयते। अथाध्वर्यु: परिधिस्थानमुद्दिश्य मन्त्राभ्यां अन्त:परिधि बहि: परिधि च संक्षालननिनयने करोति। तत: संप्रैषमाह— 'अग्नीत् अप सकृत् संमृद्धि' इति। आग्नीध्र: स्फ्यरहितैर्दर्भैरप: समार्ष्टि— 'आपो वाजजितो वाजं व आप: सस्नुषीर्वाजं वा जिग्युषीर्वाजजितो वाजजित्यायै संमार्ज्यपो अन्नादा अन्नाद्याय' इति मन्त्रेण। तत: अध्वर्यु: 'ज्योतिस्त्वा' इत्यादिना जुह्वां चतुर्गृहीत्वा प्राकृतौ द्वितीयतृतीयानुयाजौ यजति। 'देवौ यज यज' इति प्रैषो याज्याया:। अप्सु स्रुचं प्रतिष्ठापयति- 'समुद्रे ते हृदयमप्स्वन्त:'इति मन्त्रेण। तत: स्रुवमद्भि: पूरयति-'सं त्वा विशन्त्वोषधीरुताप:' इति मन्त्रेण। 'यज्ञस्य त्वा यज्ञपते' इत्यादिमन्त्रेण अप्स्वेवापो जुहोति। यजमान: यज्ञपतय इद०। तत: अध्वर्युर्निष्कासस्थालीमप्सु निक्षिपति। यजमान: 'सुमित्रा न आप ओषधय: सन्तु' इति मन्त्रेण अञ्जलिना अपो गृह्णातिं। 'दुर्मित्रास्तस्मै सन्तु' इत्यादिमन्त्रेण नैर्ऋत्यां दिशि निक्षिपति। अध्वर्यु: तूष्णीमप्सु तुषान् विकरति। यजमानो बुद्बुदान् तुषनिक्षेपोत्पन्नान् स्पृशति। अध्वर्यु: वरुणप्रघासानुष्ठानकाले निबद्धं पत्नीयोक्त्रं बौधायनोक्तमन्त्रेण विमुञ्चति। तत: पत्नीयजमानौ अनूपमज्जन्तौ अन्योन्यस्य पृष्ठे धावंत:। स्नात्वा च प्रतिवसनीये वाससी परिधाय यजमान: पत्नी च प्रतिप्रस्थातारमाहतु:—प्रतिप्रस्थातर् उन्नो नय' इति। प्रतिप्रस्थाता तयो: हस्तौ गृहीत्वा 'उद्वयं तमसस्परि, उदुत्यं जातवेदसम्, चित्रं देवानामुदगादनीकम्' इति तिसृभिरुद्वतीभिर्ऋग्भि: यजमानं पत्नीं चोदानयति। ततोऽन्ये स्वयमेवोत्तरन्ति। तत्र यजमान उत्तरन् दक्षिणपादेन तीरदेशं नोद्यतीति विशेषोऽवधेय:। तत: 'प्रतियुतो वरुणस्य पाश: प्रत्यस्तो वरुणस्य पाश:' इति मन्त्रेण सर्वे तीर्थमनवेक्षमाणा देवयजनदेशं गच्छन्ति। गच्छन्त: सर्वे अर्धमार्गे तिस्रस्तिस्र समिधो गृह्णन्ति। एकैकसमिद्ग्रहणे

'एधोऽस्येधिषीमहि' इति मन्त्रः सर्वेषाम्। ततः सर्वे आगत्य क्रमेण आहवनीये तिस्रः समिधः प्रक्षिपन्ति 'समिदसि स्वाहा' इति प्रथममन्त्रेण, प्रथमां 'तेजोऽसि स्वाहा' इति द्वितीयेन द्वितीयाम्, मयि धेहि तेजः स्वाहा' तृतीयेन तृतीयाम् (अग्नय इदमिति यजमानस्य त्यागः। ततः सर्वे अपो अन्वचारिषम्' इत्यृचा आवहनीयमुपतिष्ठन्ते। ततः अस्मिन् अवभृथावसानकाले यजमानो व्रतं विसृजति। उत्तरवेद्यग्निसमारोपणस्य विकल्पेन करणे पत्नी यजमानाभ्यामन्वारब्धोऽध्वर्युः समिधि उत्तरवेद्यग्निं समारोपयति—'अयं ते योनिर्ऋत्वियः' इति। (अत्रत्योऽ- ग्निरस्यां सामिधि प्रविशतु इति भावनया वह्नौ समिधः व्रतपनं समारोपणमुच्यते। इति विशेषोऽवधेयः)। ततः समारोपिताग्निं तां समिधं शालामुखीयेऽभ्यादधाति-'अजुह्वानः सुप्रतीकः पुरस्तात्' इत्यृचा। ततः 'उद्बुध्यस्वाग्ने' इत्यृचा आहवनीयं ज्वलयित्वा अपूर्वाज्येन चतुर्गृहीतेन 'सप्त ते अग्ने' इत्यृचा पूर्णाहुतिं जुहोति। यजमानस्ततो ऽध्वर्यवे वरं ददातीत्येतावान् वरुणप्रघासप्रयोगक्रमो बोधव्यः। द्र० श्रौ०प०नि० पृ० ८३-९८।

**वरुणप्रघासमारुतीप्रचार—** द्र० मारुतीप्रचार—।

**वरुणप्रघासविहार—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्श- पूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु द्वौ उत्तरदक्षिणौ विहारौ (उत्तरवेदिः दक्षिणवेदिश्चेति) पृथक् पृथक् भवतः। तदुक्तम्- 'पृथगग्निः प्रणयतः, पृथग्वेदी कुरुतः' इति। तत्र श्रूयते 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। अर्थात् वरुणप्रघासेषु नव हवींषि विहितानि। तेषु अष्टौ अध्वर्युरुत्तरे विहारेऽनुतिष्ठति नवमीं मारुतीमामिक्षां प्रतिप्रस्थाता दक्षिणास्मिन् विहारेऽनुतिष्ठति। इति उत्तरदक्षिणे द्वे वेदी वरुणप्रघासविहारावुच्येते। द्र० मी०को० पृ० ३४२४-२५।

**वरुणप्रघासवेदि—** द्र० १-३ दक्षिणवेदि-, १. उत्तरवेदि—, पाशु-बन्धिकवेदि—, वरुणप्रघासविहार—, वरुणप्रघासप्रयोगक्रम—।

**वरुणप्रघाससंकल्प—**(याज०) इष्टियज्ञेषु प्रकृतिभूत...पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु संभारान् संभृत्य यजमानोऽरण्योरग्नीन् समारोप्य उदवसाय मथित्वा विहृत्य गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वाऽऽहवनीये मनस्वत्या जुहोति। ततः वरुणप्रघासहविर्भिः यक्ष्ये इति संकल्पयति। तत्र अग्नीषोमावाज्यभागौ, आग्नेयोऽष्टकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रो द्वादशकपालः पुरोडाशः, सारस्वतश्चरुः, पौष्णश्चरुः, ऐन्द्राग्नः एकादशकपालः पुरोडाशः, मारुत्यामिक्षा, वारुण्यामिक्षा, कायः एककपालः पुरोडाशः देवा आज्यया इत्यादि वैश्वदेववत् संकल्पः। सविता कः, इत्युपांशु। अन्या उच्चैः। अध्वर्युः 'इडा देवहूः' इत्यादिनाऽग्नीन् विहृत्यान्वादधाति। प्रतिप्रस्थाता तथैव चादधाति। (वरुणप्रघासेषु अध्वर्युः प्रति- प्रस्थाता च तदेव तद्भिन्नं वा कर्म पृथक्कुरुतः इति सर्वत्र द्रष्टव्यम्)। व्रतग्रहणान्ते प्रतिप्रस्थाता शाखाहरणादि करोति। बर्हिः संभरणे—अध्वर्युः प्रथमं प्रस्तरपूर्वं पञ्चमुष्टीन् संभरति, ततः प्रतिप्रस्थाता प्रस्तरपूर्वं मुष्टित्रयम्। इति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० ८४। वरुणप्रघासप्रयोगक्रम—।

**वरुणप्रघाससंभार—** (आध्व०, या०) इष्टियज्ञेषु प्रकृतिभूत...पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु त्रिश्वेतशलली, लोहितक्षुरः, द्वात्रिंशत् कपालानि, आमिक्षास्थाल्यौ, । तिस्रः चरुस्थाल्यः, पञ्च मेक्षणानि, द्विशताधिकानि शमीपर्णानि, करीरसक्तवः, ऐषीकं शूर्पं कुशमयं वा, गार्हपत्ये ईषद्- भ्रष्टानां यवानां सूक्ष्मवितुषी कृतानां सप्तभिरद्भिः घृतेन च संयुतानां (राशिः), यजमानस्य पुत्रपौत्रनप्तृदुहितृभार्याः, समसंख्याकानि एकातिरिक्तानि दीपकाऽऽकाराणि करम्भपात्राणि, सशृङ्गो मेषः, अशृङ्गा मेषी (द्वावपि शुक्लोर्णाप्रच्छनौ), यवतुषं च, दार्शपौर्णमासिकी वेदिः, (दक्षिणवेदिः) पाशुबन्धिकी (उत्तरवेदिः) च, द्विगुणितानि पात्राणि, द्विगुणिते इध्माबर्हिषी, प्रस्तरं प्रसूमयं केचिदिच्छन्तीति चेते वरुणप्रघाससंभारा इत्युच्यन्ते । द्र० श्रौ०प०नि० पृ० ८३-४ । वरुणप्रघासप्रयोगक्रम— ।

**वरुणप्रघासाग्निप्रणयन—** २. द्र० अग्निप्रणयन— ।

**वरुणप्रघासाङ्गावभृथेष्टि—द्र०** वरुणप्रघासप्रयोगक्रम— ।

**वरुणप्रघासेषु पर्यग्निकरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतः..... पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु हविर्निर्वापानन्तरम् अध्वर्युः पुरोडाशानां त्वचं ग्राहयित्वा करंभपात्राणि मेषं शताधिकानि शमीपर्णानि करीरसक्तूंश्च पर्यग्नि करोति । ततः प्रतिप्रस्थाता मारुत्यामिक्षया सह मेषीं, शताधिकानि शमीपर्णानि, करीरसक्तून्, ऐषीकं शूर्पं, स्वाज्यानि च पर्यग्नि करोति। इति वरुणप्रघासेषु पर्यग्निकरणमित्युच्यते । द्र० श्रौ०प०नि० पृ० ८६ । वरुणप्रघासप्रयोगक्रम— ।

**वरुणप्रघासेषु प्रणीताप्रणयन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूत... पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु वेदिद्वयं विमाय परिस्तीर्य अध्वर्युप्रतिप्रस्थातारौ शाखाहरणक्रमेण शाखापवित्रादिसायं दोहान्तं कुर्याताम् । तत्र अध्वर्युः वारुणदोहं प्रतिप्रस्थाता च मारुतदोहं करोतीत्यवगन्तव्यम् । तदनन्तरं द्वितीयदिने अग्निहोत्रहोमानन्तरम् उभौ (अध्वर्युप्रतिप्रस्थातारौ) पाणिसंमर्शनादि कुरुतः । ततः अग्निपरिस्तरणं अध्वर्युरिव करोति । तत उत्तरस्यां वेद्यां वैश्वदेववत् पात्राणि स एव सादयति । प्रतिप्रस्थाता तु दक्षिणस्यां वेद्यां स्फ्यं, अग्निहोत्रहवणीं, जुह्वादि चतुष्टयं, आज्यस्थालीं, वेदं आमिक्षाश्रपणार्थं स्थालीं, मेक्षणं, आमिक्षां, उद्धरणपात्रीं वेदपरिवासनं, उपवेषं चैतानि पात्राणि शमीमयानि प्रकृत्युक्तानि चासादयति । ततोऽध्वर्युः ब्रह्मणं तूष्णीं दक्षिणत उपवेश्य प्राकृतवेद्यां पृष्ठ्यां स्तृणाति । उभौ मन्त्रेण पवित्रे कुरुतः । अध्वर्युरिव प्रणीता प्रणयनमुत्तरवेदेः उत्तरतः करोति । इत्येतावत् कर्म, वरुणप्रघासप्रणीताप्रणयनमुच्यते । द्र० श्रौ०प०नि० पृ० ८५ । वरुणप्रघासप्रयोगक्रम— ।

**वरुणप्रघासेषु वरुणमारुतसायंदोहकर्मन्— द्र०** वरुणप्रघास-प्रणीताप्रणयन—वरुणप्रघासप्रयोगक्रम— ।

**वरुणप्रघासे हविर्निर्वाप प्रोक्षणश्रपण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूत...पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु प्रणीता प्रणयनानन्तरं अध्वर्युः दक्षिणेन अग्निहोत्रहवणीं सव्येन शूर्पमादत्ते, प्रतिप्रस्थाता तु मन्त्रेण अग्निहोत्रहवणीमेव । एवं मन्त्रेण प्रतपनम् । ततोऽध्वर्युः वैश्वदेववद् आग्नेयादिपञ्च हवींषि निरूप्य ऐन्द्राग्नं निर्वपति ।

तत उभौ प्रोक्षणीः संस्कुरुतः। अध्वर्युरिव करम्भपात्राणि, मेषं, मेषीं, द्विशताधिकानि शमीपर्णानि, करीरसक्तून्, ऐषीकं शूर्पं च हविर्भिः सह प्रोक्षति। उभौ (अध्वर्युप्रतिप्रस्थातारौ) स्वस्वपात्राणि प्रोक्ष्य प्रोक्षणीः निधत्तः ततोऽध्वर्युः कृष्णाजिनावधूननादि तण्डुलप्रक्षालननिनयनान्तं करोति। तुषनिरसनकाले—स एव कांश्चित् तुषान् अवभृथार्थमवशेष्य इतरान् निरस्यति। तत उभयोः प्रातर्दोहः सायंदोहवद् भवति। अध्वर्युश्च कृष्णाजिनावधूननादि अधिवपनान्तं करोति। ततः कपालोपधाने—स एव अग्नये अष्टौ कपालान्युपधाय सौम्यचरुस्थालीमधिश्रित्य सावित्रे द्वादशकपालान्युपधाय सारस्वतचरुस्थालीमधिश्रित्य पौष्णचरुस्थालीमधिश्रित्य इन्द्राग्निभ्यामेकादशकपालान्युपदधाति। प्रतिप्रस्थाता तदुत्तरत उपवेषेण अङ्गारान् निरुह्य मारुतस्थाल्यां तिरः पवित्रं प्रातर्दोहमानीय मेक्षणेनालोड्य श्रपयति। ततः अध्वर्युः तदुत्तरतो वारुणस्थालीमधिश्रित्य तदुत्तरतः काय एकं कपालमुपदधाति। संवपने- अध्वर्युः 'इन्द्राग्निभ्यां काय' इति वदति। तत अध्वर्युणा ऐन्द्राग्नपुरोडाशाधिश्रयणे कृते प्रतिप्रस्थाता मारुतीप्रातर्दोहे सायं दोहे प्रातर्दोहं दधि आनीय आमिक्षावाजिने पृथक्कृत्य शीतले देशे निदधाति। (सद्यस्कालपक्षे आमिक्षार्थं पय आतञ्चनं लौकिकदध्ना वा करोति) ततोऽध्वर्युः वारुण्यामिक्षां वाजिनं च पृथक्कृत्य निदधाति। तत एक कपालमधिश्रयति। आज्यदधिनी निर्वपति अपूर्वाज्यं च। प्रतिप्रस्थाता तु प्रकृतिवत् करोति। इत्येतावत् कर्म हविषां निर्वापः, प्रोक्षणं श्रपणं चोच्यते। द्र० श्रौ०प०नि० पृ० ८५-८६। वरुणप्रघासप्रयोगक्रम—।

**वरुणप्रघासोत्तरवेदि—** द्र० १. उत्तरवेदि—। वरुणप्रघासप्रयोगक्रम—।

**वरुणप्रघासोत्तरवेदिपरिधान** —द्र० उत्तरवेदिपरिधान—।

**वरुणप्रघासप्रयोगक्रमवरुणप्रघासोत्तरवेदिप्रोक्षण—** द्र० उत्तरवेदिप्रोक्षण—।

**वरुणप्रघासोत्तरवेदिव्याघारण—** द्र० उत्तरवेदिव्याघारण—। वरुणप्रघासप्रयोगक्रम—।

**वरुणप्रघासोत्तरवेदिसंस्कार—** द्र० उत्तरवेदिसंस्कार—। वरुण-प्रघासप्रयोगक्रम—।

**वर्धमानस्तोम—** (औ०, सा०) सोमयज्ञेषु प्रकतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने (सामस्तुतौ) गीत्या- श्रयाणामावृत्तानां ऋचां समूहः (स्तुतिहेतुर्मन्त्रसमूहः), (तै० सं० सा० ४।१। १।४;४।२।२), स्तुतेर्मानं (स्तोत्रीयासमुदायः, स्तोत्रीयासंख्यावाचित्वावधारणम्) स्तोम उच्यते। स्तोमाश्च त्रिवृत् - पञ्चदश - सप्तदश - एकविंश- चतुर्विंश - त्रिणव - त्रय- स्त्रिंश - चतुश्चत्वारिंश- अष्टाचत्वारिंशाः इति सम विषमाः नव प्राकृता द्वादशरात्रिकाश्चाम्नाताः। तेभ्योऽन्ये त्रिवृतोऽधः एकद्विक त्रिक प्रभृतयः (तु०—आ०श्रौ० ९।१।१७ नारायणः) ऊर्ध्वं च दशद्वादशादयो ये स्तोमाः श्रूयन्ते ते वर्धमानाः स्तोमा उच्यन्ते। (तु०—ला०श्रौ० ६।५।१ अग्निस्वामी, द्रा०श्रौ० १।१७)। तत्र प्राकृतानां विष्टुतयः (पर्यायविष्टावाः) ताण्ड्यमहाब्राह्मणे द्वितीय तृतीयाध्यायोराम्नाताः। वर्धमानानां (स्तोमानां विष्टुतयः (पर्यायक्लृप्तयो) ब्रह्मणे न समाम्नाताः। सूत्रकारेण तु तेषां पर्यार्य क्लृप्तिप्रकारः प्रदर्शितः। इति विशेषोव-

गन्तव्यः (तु०—ला०श्रौ० ६।५। १ अग्निस्वामी)

**वर्धमानस्तोमपर्यायकृति—** (औ०) सोमयज्ञेषु प्रकृतिभूत...एकाहाहीनसत्रेषु यत्र वर्धमानस्तोमा उपदिष्टाः सन्ति तत्र सूत्रकारेण तेषां पर्यायकृतिः (विष्टुतिः विष्टावः) ब्राह्मणाम्नातानां समविषमाणां स्तोमानां पर्यायाणां जातिसंहारयुग्मायुग्मसंहार-पक्षद्वयेन न्यायेन संहरणेन प्रक्लृप्ता। (तु०—ला०श्रौ० (६।५-८) चतस्रः कण्डिकाः' आ०क० ३।७।७ वरदराजः)। **द्र०** १. स्तोमभेद-वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष-, वर्धमानस्तोमपर्यायाणां युग्मायुग्मसंहार-पक्षः, युग्मायुग्मपक्ष—।

**वर्धमानस्तोमपर्यायकृतिप्रकार—** (औ०) सोमयज्ञेषु प्रकृतिभूत... एकाहाहीनसत्रेषु सामगाने यत्र वर्धमानस्तोमा उपदिष्टास्तेषां स्तोम पर्यायविष्टुतिप्रकारश्च नोपदिष्टस्तत्र सूत्रकास्तेषांस्तोमपर्यायकृतिमेवं दर्शयति। वर्धमानस्तोमेषु स्तोमा द्विविधाः समाः विषमाश्च प्रयुज्यन्ते। ये तावत् समाः स्तोमास्तेषु स्तोत्रीयाणां समः प्रयोगः स्यात्—यावत्कृत्वः प्रथमा प्रयुज्यते तावत्कृत्वो द्वितीया तावत्कृत्व एव तृतीया। इति विन्यासन्याय उक्तः। अथापि च वर्धमानस्तोमा- स्त्रिवृदो दाशरात्रिकस्य स्तोमस्योधः स्थिता एकि-त्रिक-पञ्चि-सप्तिनः, त्रिवृदो दाशरात्रिकस्य एव चोर्ध्वं स्थिताः एकादशित्रयोदशि-पञ्चदशिप्रभृतयो विषमा अयुजोऽयुग्माः दाशरात्रिकस्य त्रिवृद एवाधस्था द्विक-चतुष्क-षट्काष्टकाः, ऊर्ध्वस्था दशि-द्वादशि-चतुर्दशि-षोडशि प्रभृतयः समा युजो युग्मा उच्यन्ते।

**वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष-** (औ०) १. वर्धमान-स्तोमानां युग्माः स्तोमाः— द्विक-चतुष्क-षट्क-अष्टक-प्रभृतयः, एकि-त्रिक-पञ्चक-सप्तकादयोऽयुग्माः स्तोमाश्चोक्ताः। तत्र वर्धमानानां (सदृशानां) एकविंशादीनां पर्यायैः वर्धन्ते। कथमिति चेत्-विषमस्य पञ्चविंशस्याधस्तादुपरिष्टाच्च अनन्तरौ (चतुर्विंशषड्विंशौ) समौ विषमस्वरूपसमभावेन वर्तमानौ (सदृशौ-स्तोमौ) स्तः। तयोः पर्यायान् संहरेत्। तत्रकारञ्चेत्थम्- एकाधिशयेषु विषमेषु स्तोमेषु पूर्वस्य स्तोमस्य एकं पर्यायमाहरेत्। इतरौ पर्यायौ उत्तरस्याहरेत्। द्व्यधिशयेषु विषमेषु पूर्वस्य द्वौ पर्यायौ उत्तरस्य एकं पर्यायमाहरेत्। इत्येवं उभयान् पूर्वापरसंबन्धिनः पर्यायान् यथाजाति संहरेत्। एतदुक्तं भवति। यज्जातयो विषमाः तज्जातीययोरेव समयोः पर्यायान् आहरे। यथा पञ्चविंशस्तोमस्य अयुग्मत्वात् तत्सजातीयात् आयुग्मादेकविंशत् त्रिणवाच्च पर्यायग्रहणम्। तत्रैकविंशादेकः पर्यायः, त्रिणवाद् द्वौ पर्यायौ ग्रहीतव्यौ पञ्चविंशस्यैकाधिशयत्वात्। तथा षड्विंशस्य युग्मत्वात् तत्सजातीययोः युग्मयोरेव पर्यायग्रहणम्। तत्र चतुर्विंशात् पर्यायद्वयम्, त्रिंशादेकः पर्यायः षड्विंशस्य द्व्यधिशयत्वात्। एकमतिक्रम्य सजातीयोऽनन्तरो ग्राह्यः। इत्येवं प्रकारो जातिसंहारपक्ष उच्यते। **द्र०** वर्धमानस्तोम-पर्यायकृति—। २. प्रथमे साहस्रे एकाहे प्रातःसवने चतुर्षु आज्यस्तोत्रेषु प्रथममाज्यं पञ्चदशं, द्वितीयं त्रिवृत्, तृतीयं पञ्चविंशं, चतुर्थं त्रिवृत् इत्येवं व्यत्यासेन पञ्चदश त्रिवृतोः प्रयोग उक्तः। (अत्र 'पञ्चविंशं ब्राह्मणाच्छंसिनः' (आ०क० ३।७।७) इति सूत्रपाठस्य विवृत्तौ 'तृतीयं पञ्चदशम्' इति मुद्रितोऽर्थोऽशुद्ध एव। तत्र 'पञ्चविंशम्' इत्येव साधुपाठः। ब्राह्मणे तु 'सप्तदशपञ्चविंशौ माध्यन्दिनं सवनम्' (तां० ब्रा०

१६।१०।५) इति माध्यन्दिनसवने पञ्चविंश आम्नातः। तदेवमनुसन्धाने 'पञ्चदशस्य विष्टुतिः...विष्टुतिराम्नाता' इति पाठस्य स्थाने क्रमेण पञ्चविंशस्य विष्टुतिः, विष्टुतिरनाम्नाता। इति शोधोऽपेक्ष्यते ब्राह्मणे पञ्चदशस्तोमस्य विष्टुतेराम्नानात्)। तत्र प्रथमसाहस्रे ब्राह्मणाच्छंसिनः विष्टुतिरुच्यते। ब्राह्मणे येषां स्तोमानां विष्टुतिरनाम्नाता तेषां सूत्रे (लाट्यायनश्रौतसूत्रे जातिसंहारो युग्मायुक्संहार इति द्वौ पक्षावुक्तौ। तस्य 'यावमितोऽनन्तरौ...' (ला०श्रौ० ६।५।२२-३०)। इत्यादिना। तत्र पञ्चविंशस्य जातिसंहारपक्षे एकविंशात्स्तोमात् आद्यः पर्याय आहर्तव्यः। त्रिणवात्स्तोमात् द्वौ समौ। तेषामेककनीयस्त्वात् एक विंशस्य पर्यायो मध्ये कार्यः। त्रिणवस्य पर्यायौ प्रथमोत्तमौ कार्यौ। तद्यथा—'नवभ्यो हिंकरोति—स तिसृभिः, स पञ्चभिः, स एकया। सप्तभ्यो हिंकरोति—स एकया, स तिसृभिः, स तिसृभिः। स नवभ्यो हिंकरोति—स पञ्चभिः, स एकया, स तिसृभिः' इति। 'त्रिपर्यायता स्तोमानां न्यायः' इति सर्वत्र स्तोमेषु पर्यायत्रयसत्त्वात् त्रयः पर्याया विष्टुतिः प्रदर्शिता। इति जातिसंहारपक्षः। (तु०—आ०क० ३।७।७ वरदराजः)।

**वर्धमानस्तोमपर्यायाणां युग्मायुक् संहारपक्ष—** (औ०) १. अभितः स्थितेभ्यो युग्मायुग्मेभ्यो युग्मेभ्यः समेभ्यः पर्यायान् आहरेत्। तत्रेयं व्यवस्था—युग्ममाना-मेकाधिशयानामयुजः युजः समस्य पूर्वौ पर्यायौ भवतः, युग्मस्य समस्य उत्तमः पर्यायः। तद्यथा—अष्टाविंशस्तोमस्य त्रिणवात् पर्यायद्वयम् त्रिंशादेकः। द्व्यधिशयानां युग्मानामुत्तरस्माद्युजः द्वौ पर्यायौ। पूर्वस्माद्युग्मादेकः पर्यायः। तद्यथा—षड्विंशस्तोमस्य त्रिणवादुत्तरस्मात्समात् (त्रिंशात्) पर्यायद्वयम्, चतुर्विंशस्तोमादेकः। इति पर्यायाणां युग्मायुग्मसंहारपक्षेण क्लृप्तिः। अयुग्मेषु विषमेषु पूर्वोक्तानामभितः स्थितानां युग्मायुजां (अयुग्मायुजां) विपर्ययः—अयुजामेकाधिशयानां युग्मात् पर्यायद्वयम्। यथा—पञ्चविंशस्य स्तोमस्य चतुर्विंशात् पर्यायद्वयम्, त्रिणवादेकः। एवमयुजां द्व्यधिशयानां युग्मादुत्तरौ पर्यायौ। यथा-त्रयोविंशस्य स्तोमस्य चतुर्विंशात् पर्याय द्वयमेकविंशादेकः। एवं हि जातिसंहारयुग्मायुक् संहारयोः ब्राह्मणे सप्तदशचत्वारिंशयोस्तथैवक्लृप्तिदर्शनात्। एवं विषमाणां पर्यायक्लृप्तिरुक्ता अथ समानामह—चतुर्विंशात् पर्यायद्वयमेकविंशादेकः इति। इत्येवं प्रकारो युग्मायुग्मसंहारपक्ष उच्यते। वर्धमानस्तोमपर्यायकृति—। २. युग्मायुक्संहारपक्षे तु तत्रैव (पञ्चविंशविष्टुतावेव) द्वौ पर्यायौ चतुर्विंशादाहर्तव्यौ त्रिणवादेकः, तेषामेकज्याया स्त्वात्। त्रिणवस्य मध्ये कार्यः। चतुर्विंशस्य पर्यायौ प्रथमोत्तमौ कार्यौ। इति स्तोमान्यायात् त्रयः पर्यायाः। तद्यथा—'अष्टाभ्यो हिंकरोति—स तिसृभिः, स चतसृभिः, स एकया। नवभ्यो हिंकरोति—स एकया, स तिसृभिः स पञ्चभिः। स अष्टाभ्यो हिंकरोति—स चतसृभिः, स एकया, स तिसृभिः' इति तदुक्तम्—'त्रयोदशत्रयोविंशयोः पञ्चविंशे च मध्यमः पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु। तथैकान्नत्रिंशैकत्रिंशयोः (ला०श्रौ० ६।७।५-६)। तु०—आ०क० ३।७।७ वरदराजः)।

**वर्धमानविषमस्तोमपर्यायक्लृप्ति—** (औ०) विषमाः स्तोमा एकाधिशया द्व्यधिशयाश्चेति द्विरूपा भवन्ति। सर्वत्र स्तोमानां त्रयः

पर्याया अभ्यस्यन्ते। तत्रैकाधिशयेषु विषमेषु स्तोमेषु पूर्वस्य स्तोमस्यैकैकं पर्यायमाहरेत्। इतरौ पर्यायौ उत्तरस्याहरेत् सर्वत्र स्तोमेषु पर्यायत्रयसत्वात्। द्व्यधिशयेषु विषमेषु स्तोमेषु पूर्वस्य स्तोमस्य द्वौ पर्यायौ समाहरेत् उत्तरस्यैकम्। उभयो: पूर्वोत्तरयो: स्तोमयो: पर्यायसंहारो यथाजाति (सजाति:) क्रियते। अर्थात् यज्जातयो विषमास्तज्जातीयथोरेव समयो: पर्यायानाहरेत्। यथा पञ्चविंशस्तोमस्यायुग्मत्वात् तत्सजातीयादयुग्मादेकविंशात् त्रिणवाच्च पर्यायग्रहणम्। तत्रैकविंशादेक: पर्याय: त्रिणवाद् द्वौ पर्यायौ पञ्चविंशस्यैकाधिरायत्वात्। द्र० वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष- वर्धमानस्तोमपर्यायाणां युग्मायुग्मसंहारपक्षे वर्धमानस्तोम—।

**वर्धमानस्तोमपर्यायक्लृप्ति—** (औ०) (क) त्रिणवस्तोमस्याद्याया विष्टुते: सदृशा: समा: त्रिंशादय: स्तोमा: कार्या:। अन्यूनातिरिक्ता: पर्याया: कार्या विष्टावाश्च त्रिर्वचनमावापश्च सकृद्वचनमित्येवं त्रिणवस्तोमवदेव सर्वे कार्या इत्युक्तम्। (ख) अथवा समस्तोमेषु परौ पर्यायौ यथाक्रममेकया द्वाभ्यां च स्तोत्रीयाभ्यां ज्यायांसौ प्रथमात् पर्यायात्। तद्यथा त्रिंशस्तोमे नवको दशक एकादशक इति। अथवा अन्यो वा पर्याय एकया द्वाभ्यां ज्यायान् तिसृभि: स्तोत्रीयाभि:। यथा तस्मिन्नेव त्रिंशस्तोमे नवकौ द्वौ पर्यायौ द्वादशस्तृतीय:। यदेतदुक्तं जातिसंहारयुग्मायुग्मसंहार पक्षद्वयपर्यायरूपं तदन्यत्र विषमस्तोत्रेष्वेव न्याय्यम्। न समेष्वस्मद्भ्य रोचते। एके पुनराचार्या: समेष्वपि विषमवत् संहारमिच्छन्ति। तद्यथा त्रिंशस्तोमे चतुर्विंशारेक: पर्याय:, त्रयस्त्रिंशात् पर्यायद्वयमिति। यथास्थानं पर्यायकरणम् पूर्वस्यैकम् एकाधिशयेष्विति पर्यायसंहार उक्त:। तत्र पूर्वस्मादाहृत: पूर्वमेव प्रयोक्तव्य:। उत्तरस्मादाहृत: पश्चादेव। इति नियमात् पूर्वस्मात् प्रथममेव पर्ययमाहरेत् न द्वितीयं तृतीयं व्याहृत्य प्रथमं प्रयुञ्ज्यात्। तथोत्तरस्याद् द्वितीयतृतीयावेव पर्यायौ आहरेत् न प्रथमाहृत्य प्रथमं प्रयुञ्ज्यात् वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष—, वर्धमानस्तोमपर्यायाणां युग्मायुक्तसंहारपक्ष—।

**वल्मीकवपा—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्राग्निचयनादिषु च प्रयोक्तव्या १. वल्मीकस्य, योऽवयव उन्नतत्वेनाभिवृद्ध: सेयं वपा वल्मीकवपोच्यते। (तु०—तै० सं० मा० ४।१।२) २. वल्मीकमृत्तिका वल्मीकवपोच्यते। द्र० श्रौ०प० नि० पृ० १९०, प्रवर्ग्यसम्भरण—

**वषट्करणकर्तृ—** (सा०, हौ०) १. वषट्करणं होत्रा क्रियते इति वषट्करणकर्मकर्ता वषट्कर्ता वा होता उच्यते। २. होता, मैत्रावरुण:, पोता, नेष्टा, आग्नीध्र: ब्राह्मणाच्छंसी, अच्छावाक इत्येते सप्तपुरुषा वषट् कर्तारो भवन्ति। अर्थात् ये याज्यां, प्रस्थितयाज्याश्च पठन्ति, याज्यान्ते वषट् कुर्वन्ति ते वषट्करणाद् वषट्कर्तारो ज्ञेया:।

**वषट्कार—** (सा०) इष्टिपशुसोमयज्ञादिषु १. याज्यान्ते वौ३षडिति य: शब्द आम्नातस्तस्य वषट्कार इति संज्ञा भवति। (तु०—आ०श्रौ० ५।५।१५ देवत्रात:)। २. वकारोत्तर- वर्त्यकारस्य स्थाने प्लुतमौकारं कृत्वा वषट् इति शब्द: पठ्यते स वषट्कार उच्यते। श्रौ०प०नि० पृ० २८८१ यथा- वौ३षट् इति। पित्र्यायामिष्टौ तु वषट्कारस्थाने स्वधापूर्वकं नम: इति पदं पठ्यते स

एव तत्र वषट्कारो भवति। श्रौ०प०नि० पृ० २८ । द्र० यथा—स्वधा नमः। इति ३. 'वौ३षट्' इति मन्त्रो वषट्कारः। स च शस्त्र-याज्यान्ते पठ्यते। (तु०— ऐ० ब्रा० सा० ३।५)। ४. याज्यया सह निरन्तरं वषट्कार उच्चारणीयः। ५. वषट् कुर्यात्= याज्यां पठेत् (तु०—ऐ० ब्रा० सा० भा० ४।११)। ६. वषट्कारः प्रदानार्थः। भक्षस्य कारणं वषट्कारः। वषट्कारेण हविः प्रदा-नार्थत्वात् इज्यते न केवलया याज्यया। द्र० मी०को० पृ० ३४३४।

**वषट्कारानुमन्त्रणमन्त्र—** (सा०, आध्व०) इष्टि-पशुसोमयज्ञादिषु होता अन्योऽपि वा वष-ट्कारानन्तरं नियमेन यं मन्त्रं जपति स मन्त्रः वषट्कारानुमन्त्रणमन्त्र उच्यते। द्र० श्रौ० प० नि० पृ० ३० द्र०। यथा—'वागोजः सह ओजो मयि प्राणापानौ। इति। (तु०— ऐ० ब्रा० ३।८)।

**वसतीवरी—** (सा०, आध्व०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु अभिषवकाले आसेचनार्थम्, अभिषुतस्य सोमरसस्याल्पत्वात् तेन सह मेलनार्थं च नद्यादितीर्थेभ्य आहृत्य कुम्भेषु या आपः संरक्ष्यन्ते वा वसतीवर्य उच्यन्ते।

**वसतीवरीग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु अध्वर्युः 'स्रस्रीष्व मेखलां प्रमु-ष्टीन् सारय यजमान इति त्वाचक्षतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयतु' इति सम्प्रे-ष्यति। ततः अग्नीषोमीयपशुवपा यागान्ते सुब्रह्मण्यः पिता पुत्रीयाऽऽ (सुब्रह्मण्या) ह्वानं करोति। आहूतायां पितापुत्रीयायां दृढं कुम्भमादायान्तरेण चात्वालोत्करावुदङ्नि-ष्क्रम्य स्रोतोऽभि मुखं स्थित्वा छायातपसोः सन्धौ वसतीवरीसंज्ञा अपो गृह्णाति— 'हविष्मतीरिमा आपो हविष्माँ अस्तु सूर्यः' इति। सूर्ये त्वस्तंगते हिरण्यमन्तर्धाय गृह्णाति आतपच्छायायां स्वदेहच्छायायां वृक्षच्छायायां वा गृह्णाति। तदिदं वसती-वरीग्रहणमित्युच्यते। द्र० वपायाग—, श्रौ०प०नि० पृ० २५२-५३।

**वसतीवरीसादन—** (आध्व०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु वसतीवरीग्रहणानन्तरं प्रदक्षिण-मावृत्य वसतीवरीकुम्भं सव्ये निधायान्तरेण चात्वालोत्करावुत्तरेणाग्नीध्रीयं सदश्च गत्या पूर्वया द्वारा शालां प्रपाद्य शालामुखी-यस्य पश्चात् संसृष्टाः सादयति—'अग्ने-र्वोपन्नगृहस्य सदसि सादयामि सुम्नाय सुम्निनीः सुम्ने मा धत्त' इति। तदेतद्वसती-वरीसादनमुच्यते। द्र० वसतीवरीग्रहण—, (मा० श० ब्रा० ३।९।२।१३-१७, श्रौ०-प०नि० पृ० २५३।

**वसतीवरीस्थापन—** (आध्व०) सोमयज्ञेषु प्रकृति-भूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु १. बहिर्वेदिभवनप्रैषानन्तरं सर्वे बहि-र्वेदि भवन्ति। वसतीवरीरादाय गार्हपत्यस्य पश्चान्मार्गेण नीत्वा दक्षिणया द्वारेपनि-ष्क्रम्य सव्येंऽसे निधाय दक्षिणेन मार्जालीयं सदश्च पर्याहृत्योदङ्मुखो दक्षिणतो यूपेन संसृष्टाः सादयति-'इन्द्राग्न्योर्भागधेयी स्थ' इति। पुनरादायोदङ्ङावृत्य दक्षिणेंऽसे निधाय यथेतमेत्य शालामुखीयस्य पश्चात् संसृष्टाः सादयति 'मित्रावरुणयोर्भागधेयी स्थ' इति। पुनरादायं दक्षिणेंऽसे निधाय पूर्वया द्वारोपनिष्क्रम्य... २. उत्तरेण सद

आग्नीध्रीयं च परीत्योत्तरतो यूपेन संसृष्टाः सादयति—'विश्वेषां देवानां भागधेयी स्थ' इति। पुनरादाय प्रदक्षिणमावृत्य सव्येंऽसे निधाय पुनस्तेनैव मार्गेणागत्याग्नीध्रीयस्य धिष्ण्यस्य पश्चात्संसृष्टाः सादयति—'यज्ञे जागृत इति। तदिदं वसतीवरीस्थापनमुच्यते। द्र० श्रौ०प०नि० पृ० २५३-५४, बहिर्वेदिभवनप्रैष—।

**वसतीवर्यादिहविर्धानप्रवेशन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु क्रतुकरणहोमानन्तरं होतृचमसं वसतीवरीः मैत्रावरुणचमसं च दक्षिणेन होतारं पर्याहृत्य पूर्वया द्वारा हविर्धानं प्रपादयति। तथैव दक्षिणेन होतारं पर्याहृत्यापरया द्वारा एकधनान् हविर्धानं प्रपादयति। तदिदं वसतीवर्यादिहविर्धानप्रवेशनमुच्यते। द्र० श्रौ०प० नि० पृ० २६५।

**वसा—** पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च प्रयुज्यमाना। १. मांसपाकरसः वसा उच्यते। (तु०—का०श्रौ० ६।८।११ विद्याधरः) २. मांसपाकभाण्डस्थितः स्नेहविशेषः वसोच्यते। का०श्रौ० १।८।२१, टि० विद्याधरः)। ३. आचामो मांसरसः वसोच्यते। ४. रसात्मको द्रव्यविशेषो वसा। द्र० मी०को० पृ० ३४३७।

**वसाहोम—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत् प्रकृतिकेषु सौमिकेषु पशुषु च १. प्रतिप्रस्थाता आहवनीयस्योत्तरतस्तिष्ठन् याज्याया अर्धर्चे होत्रा पठिते वसाहोमं 'घृतं घृतपावानः। पिबत' इत्यृचा। जुहोति। अन्तरिक्षायेदमिति यजमानस्य त्यागः। सोऽयं वसाहोम उच्यते। द्र० श्रौ० प० नि० पृ० १३७। २. वसा पशुरसः स एव होमः तत्साधनत्वात्। (तु०— आप०श्रौ० ७।२५।१ रुद्रदत्तः)।

**वसाहोमहवनी—** पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च हूयते इति होमः। वसा चासौ होमो वसाहोमः। स हूयते यया सा वसाहोमहवनी स्रुक् द्वितीया जुहूरुच्यते।

**वसिष्ठ—** (सा०) १. अतिशयेन निवासहेतुः। २. ऋषि विशेषः द्वौ वसिष्ठौ गोत्रभेदभिन्नौ तयोरेको ब्रह्मात्मजो वसिष्ठः। अपरो मैत्रावरुणिर्वसिष्ठः। अनयोर्गोत्रभेदात् परस्परं विवाहः। (तु०— संस्कारगणपतिः पृ० १७७)।

**वसिष्ठसंसर्पस्याहः क्लृप्ति—** (अध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे वसिष्ठसंसर्पसंज्ञकश्चतुरहोऽहीनः। तस्मिन् वसिष्ठसंसर्पे चतूरात्रे द्वादश उपसद्दिनानि अभिप्लवषडहस्याद्यानि चत्वारि सुत्यादिनानि चतुर्दश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते। अहीनद्वादशाहवर्जितानां सर्वेषामाहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि—, अहीन—, अहीनशस्योपाय— द्र०।

**वसिष्ठस्य निहवस्य योनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयने महाव्रतेऽहनि 'आसाविदेवम्' (साम० ३१२) इत्यस्यां वसिष्ठस्य निहवः सामोत्पद्यते। तेन साम्ना गवामयने महाव्रतेऽहनि चात्वालस्योपस्थानं क्रियते। 'आ इहो३ एहि या

उ २३४ वा हाइ असावि देवमोरुजीता ३ क्षां धाउ' इत्येतदादिकं तत्साम 'विश्वे देवा मम शृण्वन्तु' (साम^ ६१०) इत्यस्यामृचि विद्यते। परिमाद् इति चोच्यते। (तु०—तां० ब्रा० सा० ५ ।४ ।५)।

**वसु—** (सा०) धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः। द्र० मी०को० पृ० ३४३८।

**वसोर्धारा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे १. वसोर्धृतस्य धारा सांतत्य ययाऽऽहुत्या लभ्यते सेयमाहुतिर्वसोर्धारा। सा घृतपूर्णया औदुम्बर्या व्याममात्र्या मृदा प्रदिग्धया स्रुचा एकादशात्मके नु वाकात्मकेन मन्त्रेणैकेन हूयते। (तु०—तै० सं० सा० ४। ७ ।११)। २. औदुम्बर्यां स्रुचि पञ्चगृहीतमाज्यं गृहीत्वा अरण्येऽनूच्यस्य पुरोडाशस्योपरि 'वाजश्च मे' इष्टभिरनुवाकैरविच्छिन्नया आज्यधारया हूयमाना आहुतिर्वसोर्धारोच्यते। ३. 'वाजश्च मे' इत्यन्तैर्द्वादशभिः मन्त्रवाक्यैः हुताऽऽहुतिः द्वादशशब्देन विवक्षिता भवति। एतादृशाः द्वादश द्वादशाख्या हुतयो यस्यां वसोर्धारायां हूयन्ते सा वसोर्धारोच्यते। सा च सन्तता भवति। एतेषु द्वादशसंख्यकद्वादशेषु विलम्बाभाव एव सान्तत्यं वसोर्धाराया बोध्यम्। तदुक्तम्—सन्ततां वसोर्धारां जुहोति। द्वादश द्वादशानि जुहोति' इति। ४. पूर्वोत्तरक्रमेण भित्तौ 'वसोः- पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारं देवस्त्वा सविता पुनातु। वसोः पवित्रेण शतधारेण सुप्वा कामधुश्च' इति मन्त्रेण पञ्च वा सप्त वा कृता धारा वसोर्धरा उच्यन्ते। तासु पञ्चपूजाङ्गभूते स्मार्त्ते कर्मणि अष्टौ वसवः पूज्यन्ते। इति स्मार्तकर्मकाण्डे विशेषोऽवधेयः। ५. अग्निचयने वसोर्धारानां कर्म। बहून्येतानि कर्माणि। तेषां तु अनुपरमेण (सान्तत्येन) क्रियासन्तानो भवति। द्वादश द्वादशनानि जुहोति इत्युक्तम्। तत्रापि मन्त्रान्ते एव कर्मादिसन्निपातः। वसोर्धारायां मन्त्रान्ते कर्मादिसन्निपातः अग्निचयने। द्र० मी०को० पृ० ३४३८।

**वाक्य—** (सा०) १. नामाख्यातोपसर्गनिपातसमुदायो वाक्यमुच्यते। २. एकस्मिन् वाक्ये शेषशेषिणोः (अङ्गाङ्गिनोः अङ्गधानयोर्वा) सहोच्चारणं वाक्यं समभिव्याहार इत्युच्यते। पदसमभिव्याहारो वाक्यम्। द्र० मी०को० पृ० ३४३९। ३. एकतिङ्वाक्यम्। ४. वाक्यं स्याद्योग्यताकांक्षासत्तियुक्तं पदोच्चयम्। ५. अपरिपूर्णं यद् वाक्यं तदध्याहारेण वा पूर्येत, व्यवहितकल्पनया वा०। द्र० मी०को० पृ० ३४४४।

**वाक्यभेद—** (सा०) त्रिविधस्तावद् वाक्यभेदः—आवृत्तिलक्षणो विभाग-लक्षणो वैरूप्यलक्षणश्चेति। आवृत्तिलक्षणोऽपि त्रिविधः प्रकृत्यावृत्तिः प्रत्ययावृत्तिः उभयावृत्तिश्चेति। प्रकृत्यावृत्तिरपि द्विविधा प्रातिपदिकावृत्तिः, धात्वावृत्तिश्चेति। प्रतिपादिकावृत्तिरपि द्विविधा समासासमासभेदात्। प्रत्ययावृत्तिरपि चतुर्विधा सुप्-तिङ्-कृत्-तद्धितभेदात्। द्र० मी०को० पृ० ३४६९।०००

**वाक्यार्थ—** (सा०) १. निराकांक्षः प्रकरणाविरोधी पदार्थनियमने हेतुः वाक्यार्थ उच्यते (तु०—मा०सं० १ ।१ उवटः)। २. विध्यर्थवाद् याच्ञाशीः स्तुतिप्रैष प्रवल्हा। प्रश्नो व्याकरणं तर्कः पूर्ववृत्तानुवर्तनम्। अवधारणं चोपनिषद् वाक्यार्थाः स्युस्त्रयोदश। मन्त्रेषु ये प्रदृश्यन्ते व्याख्या च श्रुतिचोदिता। त इमे मन्त्रेषु त्रयोदश वाक्यार्था उच्यन्ते (तु०—

मा०सं० १।१ उवटः)। ३. वाक्यार्थश्च पदार्थपूर्वको भवति। ४. वाक्यार्थः पदार्थसामर्थ्यजनितो भवति। ५. पदेभ्य एव पदार्थप्रत्ययः पदार्थेभ्यः वाक्यार्थः। द्र० मी०को० पृ० ३४६३-६४।

**वाग्यम—, मननियमविधिः—** (सा०) इष्टिपशुसोमयज्ञादिषु कर्मकाले उपदिष्टं वाचः संयमनम् अनभिभाषणं वाग्यमनमुच्यते। तत्र १ दर्शपूर्णमासयोः होत्रे नमः प्रवक्त्रादि आज्यभागान्तं वाचो नियमनं भवति। २. 'अनुब्रूहि' इति प्रैषानन्तरं अध्वर्युः होता च 'ओ श्रावय' इत्याश्रावणात् पूर्वं किमपि नोच्चारयेत्। अध्वर्युणा 'ओ श्रावय' इत्युक्ते अग्नीत् 'अस्तु श्रौषट्' इति प्रत्याश्रावणात् पूर्वं किमपि न व्याहरेत्। 'अस्तु श्रौषट्' इति प्रत्याश्रावणानन्तरं अध्वर्युः होतारमुद्दिश्य क्रियमाणात् 'यज' इति प्रैषात् पूर्वं नापव्याहरेत्। 'यज' इति प्रैषानन्तरं होता वषट्कारात् पूर्वं न व्याहरेत्। सोमयागे अध्वर्युः ग्रहं गृहीत्वा स्तोत्रात् पूर्वं नापव्याहरेत्। उद्गातृभिः तैस्तैः स्तोत्रैः स्तुत्वा (स्तोत्रस्य) अन्तिमायाः स्तोत्रीयाया ऋचः प्रस्तावे कृते प्रस्तोता 'होतरेषोत्तमा' (ला०श्रौ० ३।२।११) इति होतारमुद्दिश्य प्रेष्यति तावत्पर्यन्तं उद्गातारो न व्याहरेयुः। सोमयागे होता ग्रहसंबद्धवषट्कारात् पूर्वं न व्याहरेत्। ३. सर्वत्र याज्यानुवाक्ययोर्मध्ये वाग्यमो भवति। तथा निगदानुवचनाभिष्टव शस्त्रजपानां चारभ्य आ समाप्तेः वाग्यमनं भवतीति च विशेषोऽवगन्तव्यः। इति वाग्यम—, ०यमननियमविधिरुच्यते। (तु०—का० श्रौ० ३।३।१३-१९ विद्याधरः)। ४. वाचंयमौ (अध्वर्युयजमानौ) सन्तौ अविक्षिप्यमाणचेतस्कौ पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्यते यथा न कश्चित् पदार्थः पदार्थावयवो वा हीयते। अध्वर्युः वाग्यमेन अनन्यचेतस्को (अन्यो वा) न पदार्थान् प्रमादयिष्यति। यजमानश्चैवं वाग्यमेन अनन्य-चेतस्कः प्रमादयिष्यन्तं तं (अध्वर्युं) बोधयिष्यतीति प्रयोजनविशेषश्चावगन्तव्यः। द्र० मी०को० पृ० ३४७८।

**वाग्विसर्ग—** (सा०) इष्टिपशुसोमेषु १. यथोपदेशं तत्र तत्र विहितो वाचो विसर्गः परित्यागः अनुच्चारणं वाग्विसर्ग इत्युच्यते। स इष्टि प्रणीताप्रणयनकाले नियमिताया वाचो विसर्गो हविष्कृदाह्वानकाले क्रियते। नानाबीजेष्टौ राजसूये च चरमे हविष्कृदाह्वानकाले एव वाग् विसर्गः कार्यः। तथा अग्नीषोमीयवशौ पौरोडाशिकहविष्कृदाह्वानकाले क्रियते। नाना बीजेष्टौ राजसूये च चरमे हविष्कृदाह्वानकाले एव वाग् विसर्गः कार्यः। तथा अग्नीषोमीयपशौ पौरोडाशिकहविष्कृदाह्वानकाले एव वाग्विसर्गः कार्यः। २. अग्नीषोमीये पशौ वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः। ३. वाग्विसर्गः राजसूये नानावीजेष्टौ अन्त्यबीजसंबन्धि हविष्कृदाह्वानकाले एव। द्र० मीको० पृ० ३४७८।

**वाचःकूट—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणाख्यस्य होत्रकस्य शिल्पशस्त्रे महावालभिदि विहारे आदितः षण्णां वालखिल्यसूक्तानां प्रगाथानां एकपदानां च सहप्रयोगरूपः समूहः वाचःकूट इत्युच्यते। अर्थात् वालखिल्यानां महर्षीणामष्टासु प्रगाथसूक्तेषु यान्याद्यानि षट् प्रगाथसूक्तानि तानि सर्वाणि प्रथमं पादशो विहरेत् इति प्रथमाऽऽवृत्तिः। ततो द्वितीयस्यामावृत्तौ सर्वाणि अर्धर्चशो विह-

रेत् इति द्वितीयाऽवृत्तिः। ततस्तृतांयस्यावृतौ सर्वाणि ऋक्शो विहरेत् इति तृतीयाऽऽवृत्तिरिति त्रिधाविहरणमुक्तम्। तत्र यदा पादशो विहरति तदानीमेकैकस्मिन् प्रगाथान्ते एकैकां द्विपदां दध्यात्। सोऽयमेवंरूपो वालखिल्यप्रगाथैकपदयोः सममूहः 'वाचः कूटः' इत्यनेन शब्देनाभिधीयते। तदुक्तम्—'पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरति अर्धर्चशो द्वितीयं, ऋक्शस्तृतीयम्। स पच्छो विहरन् प्रगाथे प्रगाथे एवैकपदां दध्यात् स वाचः कूटः' (ऐ० ब्रा० ६।२४)। तमिमं वाचःकूटविहारप्रकारमाश्वलायन आह—'षट् सूक्तानि व्यतिमर्शं पच्छो। विहरेत् व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः प्रगाथान्तेषु चानुपसंतानमृगावानमेकपदाः शंसेत्' (आ०श्रौ० ८।२।१९-२०)। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणस्य विकृतशिल्पशस्त्र—, वालखिल्यसप्तमाष्टमप्रगाथसूक्तविप- र्यास—।

**वाचः स्तोम—** (अव्यक्त) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे वाचः स्तोमसंज्ञकाः चत्वार एकाहाः सन्ति। ते चाग्निष्टोमसंस्थः। तत्र 'सर्वा ऋचः, सर्वाणि यजूंषि, सर्वाणि लाभानि वाऽत्र स्तोमे परिप्लवं शंसन्ति' इति वचनात् बह्वृचैः सामगैश्च सर्वासामृचां सर्वेषां साम्नां शंसनं स्तवनं च क्रियते। इति विशेषोऽवधेयः। वाचः-स्तोमे सर्वे मन्त्रा उपदिष्टाः। द्र० मी० को० पृ० ३४७८। द्र० परिप्लव—।

**वाचः स्थान—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मन्द्रमध्यमक्रुष्टानि इति त्रीणि स्वराणि वाचः स्थानानि उच्यन्ते। तत्र मन्द्रेण प्रातः सवने स्तुतिः कार्या, मध्यमेन माध्यन्दिनसवने, क्रुष्टेन तृतीयसवने। यद्वा माध्यन्दिनतृतीयसवनयोः उभयोरेकेन मध्यमेन क्रुष्टेन वा स्तुतिः कार्येति विशेषोऽवधेयः। (तु०—द्रा०श्रौ० ४।२ धन्वी)। द्र० १-२ मध्यमस्वरप्रयोगः, मन्दस्वर—, उत्तमस्वर—, पौर्णमासस्वर—, स्वर—, सौमिकस्वर—।

**वाचिकजपयज्ञ—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे इष्टिपशु सोमेषु प्रकृतिविकृतिभूतेषु च वाचिकः शस्य = उच्चैर्जप उच्यते यथाह हारीतः—'यदुच्चनीचस्वरितैः स्पष्टैः स्पष्टपदाक्षरैः। मन्त्रमुच्चारयेद् वाचा जपयज्ञः स वाचिकः' इति। एतल्लक्षणमनुसृत्यैवेदानीमपि श्रौतस्मार्तयज्ञसंस्कारकाले पण्डितैर्मन्त्रा उच्चैरुच्चार्यन्ते इति विशेषोऽनुसंधेयः।

**वाजदावर्यसामयोनि—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे विकृतौ द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि माध्यन्दिनपवमानस्तोत्रस्य 'इन्द्रायेन्दो मरुत्वते' (साम० १०७६-७८) इति तृचे गीयमानं साम। 'रेवतीर्नः सदमाद इन्द्रे' (साम० १५३) इत्यस्यां योनौ उत्पद्यते। सेयमृक् वाजदावर्यस्य साम्नो योनिरुच्यते (तु०—तां० ब्रा० सा० १३।९।१२)

**वाजन—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अध्वर्युः सामिधेन्यारम्भे एकां समिधमाहवनीयेऽभ्याधाय प्रणवे प्रणवे द्वितीयाद्येकादश समिधोऽभ्याधाय उपान्त्यायाः (सामिधेन्याः) प्रणवे तिस्रः समिधः सहैवाभ्याधाय आहवनीयस्योपरि प्रक्षिप्तानां समिधां प्रदीपनानुकूलवातोत्पादनार्थम् अन्तिमाया ऋचः (त्रिरुत्तमाम्)

अभ्यासकाले वेदं त्रिवारं प्राक् कम्पयतीति वेदस्य कम्पनं वाजनमुच्यन्ते। द्र० श्रौ०प०नि० पृ० २४।

**वाजपेय—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे तृतीयायाः चतुर्थ्याः वा सोमसंस्थायाः षोडशिनो गुणविकारः चतुर्थी पञ्चमी वा सोमसंस्था एकविंशतिदिनसाध्यः एकाहः वाजपेयः क्रतुः १. वाजोऽन्नं पेयद्रव्यात्मकं यस्मिन् स वाजपेयः सुराग्रहणस्याऽत्र सम्भवात्तदाप्ति- हेतुत्वाच्च वाजपेयः (तु०—तां० ब्रा० सा० १८।७।१)। तत्र सप्तदश दीक्षादिनानि त्रीण्युपसद्दिनानि एकं सुत्यादिनमित्येकविंशति दिनसाध्यत्वमवगन्तव्यं वाजपेयस्य इति प्राचीनसम्प्रदायसिद्धः पक्षः। आधुनिकैस्तु अष्टाभिर्दिवसैः संस्थीयते वाजपेयः। यथा पुण्यपत्तने ख्रीष्टीपञ्चपञ्चाशदधिके एकोनविंशतिशततमे (१९५५) वर्षे अक्टुबरमासस्य त्रिंशत्तारिकामारभ्य नवम्बरमासस्यैकादशतारिकापर्यन्तं वितते वाजपेयक्रतुमहोत्सवे अष्टावेवाहानि यागार्थं समादृतानि। तत्र प्रथमेऽहनि पुण्याहवाचनम्, यज्ञसंकल्पः, नान्दीश्राद्धम्। द्वितीयेऽहनि यज्ञशालाप्रवेशः, ऋत्विग्वरणम्, मधुपर्कः, यज्ञसमारम्भः प्रवर्ग्यसंभरणम्, यूपाहरणम्, दीक्षणीयेष्टिः, दीक्षाग्रहणम्, (यजमानव्रतग्रहणदिनम्)। तृतीयेऽहनि प्रायणीयेष्टिः, सोमक्रयः, अग्निमन्थनम्, आतिथ्येष्टिः, तानूनप्त्रम्, (क) पौर्वाणिकी प्रवर्ग्योपसद्, सुब्रह्मण्याह्वानम् आपराह्णिकी प्रवर्ग्योपसद्, सुब्रह्मण्याह्वनम्। (ख) चतुर्थेऽहनि पौर्वाह्णिकी प्रवर्ग्योपसद् सुब्रह्मण्याह्वानम्, महावेदिमानम्, उत्तरवेदिकरणम् आपराह्णिकी प्रवर्ग्योपसद् सुब्रह्मण्याह्वानम्, (ग) पञ्चमेऽहनि प्रातः पौर्वाह्णिकी प्रवर्ग्योपसद् सुब्रह्मण्याह्वानम्, आपराह्णिकप्रवर्ग्योद्वासनम् आपराह्णिकी उपसद्, अग्निप्रणयनम्, अग्नीषोमीयपशुयागः, वपायाः पुरोडाशस्य हविषः (अङ्गानां-यागः) सुब्रह्मण्याह्वानम्, वसतीवर्याहरणम्, अग्नीषोमीयपशुपुरोडाशयागः, सुत्यासंकल्पः, सुब्रह्मण्याह्वानम्। षष्ठेऽहनि प्रातःसवनम्—तत्र सुब्रह्मण्याह्वानम्, प्रातरनुवाकः, सोमाभिषवः, ग्रहग्रहणम्, द्वे बहिष्पवमानाज्यस्तोत्रे, द्वे आज्यप्रउगशस्त्रे, (क) सवनीय-प्राजापत्य पशुयागः (वपायागः), ग्रहप्रचारः, माध्यन्दिनसवनार्थं प्रसर्पणम्। माध्यन्दिनम्-तत्र सोमाभिषवः, ग्रावस्तुदभिष्टवनम्, ग्रहग्रहणम्, द्वे माध्यन्दिनपवमानपृष्ठस्तोत्रे, द्वे मरुत्वतीयनिष्केवल्यशस्त्रे, (ख) सवनीयप्राजापत्यपशुयागः (पुरोडाशयागः), ग्रहप्रचारः। सप्तमेऽहनि पूर्वप्रस्तृते एव माध्यन्दिनसवने दक्षिणहोमः, रथसज्जीकरणादि, दक्षिणादानम्, ग्रहप्रचारः, आजिधावनम्, यूपारोहणम्, यजमानाभिषेकः, ग्रहप्रचारः, तृतीयसवनार्थं प्रसर्पणम्। तृतीयसवनम्—तत्र सोमाभिषवः, ग्रहग्रहणम्, आर्भवपवमानस्तोत्रम्, अग्निष्टोमस्तोत्रम्, त्रीणि उक्थ्यस्तोत्राणि, षोडशिस्तोत्रम्, वाजपेयस्तोत्रमिति सप्त स्तोत्राणि, द्वे वैश्वदेवआग्निमारुतशस्त्रे, त्रीण्युक्थ्यशस्त्राणि एकं षोडशिशस्त्रम्, एकं वाजपेयशस्त्रमिति सप्त शस्त्राणि (ग) सवनीयप्राजापत्य पशुयागः (पश्वङ्गयागः), ग्रहप्रचारः, यज्ञपुच्छम्। अष्टमेऽहनि पूर्णाहुतिः अवभृथः, उदयग्नीयेष्टि आमिक्षायागः इत्यादयोऽन्येऽऽनुष्ठेयाः पदार्था अनुष्ठिताः। परं तत्र प्रधानाङ्गभूतेषु परिगणितेष्वेषु वाजपेयपदार्थेषु केचन एव तत्रानुष्ठिता न सकलाः। पशुयागे च पशोः वपाया अङ्गानां (प्रधानहविषां) च

यागे पशुविकारं पाकेन घनीभूतं पयः (खोआ इति भाषायाम्) प्रतिनिधित्वेन प्रकल्प्य हुतं कलौ पशुबधस्य निषेधादिति विशेषोऽवगन्तव्यः। अत्र सप्तदशदीक्षादिनस्थाने एकमेव दीक्षादिनमाहतम्। २. ज्योतिष्टोमस्य षोडशिनो विकारः वाजपेयः। ३. 'स वा एष ब्राह्मणस्य चैव राजान्यस्य च यज्ञः, तं वा एतं वाजपेयः इत्याहुः। द्र० मी०को० पृ० ३४८०। ४. यज्ञाश्च क्रतवश्च सर्वेऽपि वाजपेयेऽन्तर्भूता इत्यस्ति प्रसिद्धिः (तु०— तै० ब्रा० सा० १।३।४।१)।

**वाजपेयपशु**—(सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे तृतीयायांश्चतुर्थ्यां वा सोमसंस्थायाः षोडशिनो गुणविकारे पञ्चमे वाजपेये एकाहे अग्नीषोमीयः (दैक्षः) एकः पशुः सवनीयाः (क्रतुपशवः) आग्नेयैन्द्राग्नैन्द्रसारस्वताः चत्वारः, उज्जेषमरुद्देवत्या पृश्निः अनूबन्ध्या एका, प्राजापत्याः श्यामतूपराः बस्ताः सप्तदश, अथवा षोडश। षोडशपक्षे सप्तदशो वाग्देवत्यः इति त्रयोविंशतिर्वाजपेयपशवो भवन्ति। तत्र वाजपेये क्रतुपशूनां (सवनीयपशूनां) प्राजापत्यपशूनां च सहउपक्रमः। तत्र क्रतुपशवः प्रातःसवने आलभ्यन्ते। प्राजापत्यानां तु प्रातःसवने पर्यग्निकरणान्तमेव अनुष्ठानं आलम्भस्तु माध्यन्दिनसवने ब्रह्मसामकाले इति विशेषोऽवधेयः। द्र० मी०को० पृ० ३४८०१। तथा च क्रतुपशूनां 'वपया प्रातः-सवने चरन्ति, पुरोडाशेन माध्यन्दिनसवने, अङ्गैः (प्रधानहविर्भिः) तृतीयसवने' इति च विशेषोऽवगन्तव्यः। द्र० मी०को० पृ० ४२३६।

**वाजपेयतृतीयसवने स्तोत्रशस्त्रप्रयोगक्रम**—(आध्व०) सोमयज्ञेषु प्रकृतिभूत.......एकाहप्रकरणे.........वाजपेये तृतीयसवने प्रथममार्भवपवमानः। ततो वैश्वदेवग्रहपर्यन्ताः शस्त्रवन्तः सोमाः। ततः अशस्त्रिषु अवशिष्टेषु सोमग्रहेषु प्रचीर्णेषु अग्निष्टोमसाम्न ऊर्ध्वं उक्थ्यादयः सोमविकाराः इति वाजपेये तृतीयसवने स्तोत्रशस्त्रप्रयोगक्रमः। द्र० मी०को० ३४८२। द्र० वाजपेय—।

**वाजपेयभेद**— (सा०) सोमयज्ञेषु प्रकृतिभूत...एकाहप्रकरणे...वाजपेयस्यैकाहस्य १. राजसूयविधे वाजपेयः २, वृहस्पतिसवमध्यो वाजपेयः, ३. पूर्वोत्तरमासमात्रो वाजपेयः ४. प्रत्यवरोहणीयो ज्योतिष्टोमो वाजपेयः ५. आप्तवाजपेयः ६. कुरुवाजपेयश्चेति भेदा भवन्ति।

**वाजपेयविकल्प**— द्र० ला०श्रौ० ८।१२।५-१५।

**वाजपेयशस्त्र**— (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योति...वाजपेयक्रतौ द्वादश आग्निष्टोमिकानि शस्त्राणि तत ऊर्ध्वं त्रीण्युक्थ्यानि, तत एकं षोडशिशस्त्रं तत एकमतिरिक्तोक्थं (वाजपेयशस्त्रम्) शस्त्रमिति सप्तदश शस्त्राणि वाजपेयशस्त्राणि भवन्ति।

**वाजपेयस्तोत्र**— (औ०) सोमयज्ञेषु प्रकृतिभूत... वाजपेये क्रतौ उक्थ्यान्तानि पञ्चदश स्तोत्राणि, तत ऊर्ध्वं षोडशिमान उक्थ्यः अतिरिक्तस्तोत्रं द्वे वाजपेयस्तोत्रे, मिलित्वा सप्तदशस्तोत्राणि वाजपेयस्य स्तोत्राणि भवन्ति (तु०- तां०ब्रा०सा० १८।६।१)।

**वाजपेयस्य परियज्ञैः सहानुष्ठानकालः**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे चतुर्थ्याः पञ्चम्याः सोमसंस्थाया वाजपेयस्यानुष्ठानारम्भः शरद् ऋतौ क्रियते। तत्र वाजपेयानुष्ठानात्पूर्वं बृहस्पति- सवादयः परियज्ञाः,

ततो वाजपेयः, वाजपेयादूर्ध्वं पुनः परियज्ञाः इति वाजपेयस्योभयतः परियज्ञविधिर्विहितः । परियज्ञा नाम बृहस्पतिसवज्योतिष्टोमपार्ष्ठिकषडहराजसूया इति चत्वारो यज्ञा वाजपेयस्योभयतः । परितः सत्त्वात् परियज्ञा उच्यन्ते । तेन परियज्ञैः सहानुष्ठानाद् वाजपेयानुकालः चतुर्धा विकल्प्यते । तत्रोभयतः बृहस्पतिसवपक्षेभाद्रपद्यां बृहस्पतिसवः, आश्विन्यां वाजपेयः, कार्तिक्यां पुनः बृहस्पतिसवः । बृहस्पतिसवस्थाने अभितोऽग्निष्टोमसंस्थज्योतिष्टोमपक्षे भाद्रपदपूर्णिमायामग्निष्टोमः, आश्विनपूर्णिमायां वाजपेयः, कार्तिकपूर्णिमायां पुनरग्निष्टोमः । उभयतोऽयुग्मयुग्मासु द्वादशु द्वादशसु पौर्णमासीषु अग्निष्टोमसंस्थपृष्ठ्यषडहपक्षे वाजपेयादौ आश्विनपौर्णमास्यादिभाद्रपदपौर्णमास्यन्तानां द्वादशानां पौर्णमासीनां मध्ये अयुग्मासु (प्रथमतृतीयपञ्चमसप्तमनवमैकादशसु) पौर्णमासीषु अग्निष्टोमसंस्थो ज्योतिष्टोमः कर्तव्यः ।

युष्मासु (द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशसु) पौर्णमासीषु तु पृष्ठ्यषडहसंबन्धीन्यहानि विभक्तानि क्रमेण कार्याणि तत्रायुग्मयुग्मानां पौर्णमासीनां ज्योतिष्टोमपृष्ठ्यषडहानां चायं क्रमः-प्रथमायां आश्विन्यां ज्योतिष्टोमः, द्वितीयायां कार्तिक्यां रथन्तरपृष्ठं त्रिवृत्स्तोमकं अग्निष्टोमसंस्थं पार्ष्ठिकं (पृष्ठ्यषडहस्य) प्रथममहः । तृतीयायां मार्गशीर्ष्यां ज्योतिष्टोमः । चतुर्थ्यां पौष्यां पार्ष्ठिकं बृहत्पृष्ठं पञ्चदशस्तोमकं उक्थ्यसंस्थं द्वितीयमहः । पञ्चम्यां माघ्यां ज्योतिष्टोमः । षष्ठ्यां फाल्गुन्यां पार्ष्ठिकं वैरूपपृष्ठं सप्तदशस्तोमं उक्थ्यसंस्थं तृतीयमहः । सप्तम्यां चैत्र्यां ज्योतिष्टोमः । अष्टम्यां वैशाख्यां पार्ष्ठिकं वैराजपृष्ठं एकविंशस्तोमं षोडशिसंस्थं चतुर्थमहः । नवम्यां ज्यैष्ठ्यां ज्योतिष्टोमः । दशम्यामाषाढ्यां पार्ष्ठिकं शाक्वरपृष्ठं त्रिणवस्तोमं उक्थ्यसंस्थं पञ्चममहः । एकादश्यां श्रावण्यां ज्योतिष्टोमः । द्वादश्यां भाद्रपद्यां पार्ष्ठिकं रैवतपृष्ठं त्रयस्त्रिंशत्स्तोमं उक्थ्यसंस्थं षष्ठमहः । ततो आश्विन्यां वाजपेयः । वाजपेयानुष्ठानानन्तरमपि कार्तिक्यादिष्वयुग्मासु पौर्णमासीषु ज्योतिष्टोमः, युग्मतसु मार्गशीर्ष्यादिषु पार्ष्ठिकानि प्रतिलोमानि षडहानि कर्तव्यानि त्रयस्त्रिंशदारम्भणानि । प्रथमायां कार्तिक्यां पार्ष्ठिकं त्रयस्त्रिंशस्तोमं रैवतपृष्ठं षष्ठमहः । द्वितीयायां मार्गशीर्ष्यां ज्योतिष्टोमः । तृतीयायां पौष्यां पार्ष्ठिकं त्रिणवस्तोमं शाक्वरपृष्ठं पञ्चममहः । चतुर्थ्यां माघ्यां ज्योतिष्टोमः । पञ्चम्यां फाल्गुन्यां पार्ष्ठिकं एकविंशस्तोमं वैराजपृष्ठं चतुर्थमहः । षष्ठ्यां चैत्र्यां ज्योतिष्टोमः 'सप्तम्यां वैशाख्यां पार्ष्ठिकं सप्तदशस्तोमं वैरूपपृष्ठं तृतीयमहः । अष्टम्यां ज्यैष्ठ्यां ज्योतिष्टोमः । नवम्यां आषाढ्यां पञ्चदशस्तोमं बृहत्पृष्ठं द्वितीयमहः । दशम्यां श्रावण्यां ज्योतिष्टोमः । एकादश्यां भाद्रपद्यां त्रिवृत्स्तोमकं रथन्तरपृष्ठं प्रथममहः । द्वादश्यां आश्विन्यां ज्योतिष्टोमः । अपरे तु आदिवत् अनन्तरमपि अयुग्मा अग्निष्टोमसंस्था ज्योतिष्टोमाः, युग्मासु पार्ष्ठिकान्यहानि स्युरिति वदन्ति । उभयतो राजसूयपक्षेराजसूयसंबन्धिभिः नवभिः सप्तभिर्वा अग्निष्टोमसंस्थैः सोमयागैः वाजपेयस्य पुरस्तात् नवसु सप्तसु वा पौर्णमासीषु अनुलोमक्रमेण (पौष्यादिक्रमेण) यजेत । तद्यथा—पौष्यां पवित्रः । माघ्यां अभिषेचनीयः । फाल्गुन्यां दशपेयः । चैत्र्यां केशवपनीयोऽतिरात्रः । वैशाख्यां व्युष्टिद्विरात्रस्य प्रथममहः । ज्यैष्ठ्यां

व्युष्टिद्विरात्रस्य द्वितीयमहः। आषाढ्यां क्षत्रधृतिः। श्रावण्यां त्रिष्टोमः। भाद्रपद्यां ज्योतिष्टोमः। आश्विन्यां वाजपेयः। ततः वाजपेयकरणानन्तरं नवसु पौर्णमासीषु तैरेव राजसूयसोमैः अग्निष्टोमसंस्थै नवभिः, सप्तभिर्वा प्रतिलोमं यजेत। तद्यथा— कार्तिक्यां ज्योतिष्टोमः। मार्गशीर्ष्यां त्रिष्टोमः। पौष्यां क्षत्रधृतिः माघ्यां व्युष्टि द्विरात्रस्य द्वितीयमहः। फाल्गुन्यां व्युष्टिद्विरात्रस्य प्रथममहः। चैत्र्यां केशवपनीयोऽतिरात्रः (वैशाख्यां दशपेयः) ज्यैष्ठ्यां अभिषेचनीयः। आषाढ्यां पवित्रः। इत्येवं वाजपेयस्य परियज्ञैः सह चतुर्धा विभक्तोऽनुष्ठानकाल उच्यते। (तु०—का०श्रौ० भूमिका पृ० ५८, श्रौ० १४।१।१-८ टि० विद्याधरः)।

**वाजपेये दीक्षाद्यारम्भहोमः—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे—वाजपेये अप्सुदीक्षाया आरम्भे, दीक्षणीया-प्रायणीयाऽऽतिथ्यादिषु यजतिषु, सोमक्रयण-वेद्यारम्भण-प्रवर्ग्योत्सादन-अग्नि- प्रणयन- हविर्धान- आग्नीषोम-सद्-अग्नीध्र-धिष्ण्यनिव- पनवसतीवरीपरिग्रहण-परिहरणेषु चेत्येतेषु कर्मसु कर्मणः कर्मणः पुरस्तात् 'सकृद् गृहीतमाज्यं 'देव सवितः' (मा०सं० ९।१) इति मन्त्रेण जुहुयात्। इति दीक्षाद्यारम्भहोम उच्यते (तु०—का०श्रौ० १४।१।११-१३ विद्याधरः)।

**वाजपेये सुराक्रयण —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे...वाजपेये यस्मिन् काले सोमं क्रीणाति तस्मिन्नेव काले सोमस्य दक्षिणतः समीप एव दीर्घकोशात् पुरुषात् सुरायाः क्रयणं सीसेन तूष्णीं कुर्यात् प्रतिप्रस्थाता। अथवा यैर्द्रव्यैः सुरा निष्पद्यते तेषां क्रयणं कर्तव्यं न निष्पन्नायाः (परिस्रुतः)। सुराद्रव्याणि च सौत्रामण्या मुक्तानि। तद्यथा— 'सर्जत्वक्, त्रिफला चैव शुण्ठी चैव पुनर्नवा। चातुर्जाततक्रसंयुक्तं पिप्पली गजपिप्पली। वंशोऽवका वृहच्छत्रा चित्रकं चेन्द्रवारुणी। अश्वगन्धां, समुत्पाट्य मूलान्येतानि निर्दिशेत्। धन्याकं च यवानीं च जीरकं कृष्णजीरकम्। द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः'। इति वाजपेये सुराक्रयणमुच्यते (तु०—का० श्रौ० १४।१।१४-१५ विद्याधरः)।

**वाजप्रसवीयहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे.....षोडशिनो गुणविकारे वाजपेये, साग्निचित्येषु सोमेषु अग्निचयनप्रकरणे चेति द्विविधो वाजप्रसवीयो होमः प्रोक्तः। तत्र वाजपेये नैवारचरुप्रचारानन्तरं स्विष्टकृद्यागात्पूर्वं औदुम्बरे पात्रे अपः, पयः ब्रीह्यादिसप्तान्नानि प्रक्षिप्य एकीकृतात् उदकदुग्धव्रीह्याद्यन्नात् स्रुवेण आहवनीये 'वाजस्येमं प्रसवः' इत्यादि 'प्र नो यच्छतु' इत्यन्तैः सप्तमात्रैर्जुहोति। (तु०—का० श्रौ० १४।५।१९-२३; मा०सं० ९।२३-२९ महीधरः)। इति वाजपेयिको वाजप्रसवीयहोमः। अथाग्निको वाजप्रसवीयहोमः— अग्निचयने चित्यं (स्थण्डिलम्) आरुह्य स्वयमातृण्णायमिष्टकायामग्निं स्थापयित्वा दधिद्रप्सेन स्रुवाहुती हुत्वा पूर्णाहुतिं जुहुयात्। ततः समिध आधाय चित्यमग्निमभिमृश्य वैश्वानरीयेण पुरोडाशेन प्रचर्य हस्तेन सप्त सप्तकपालान् मारुतान् पुरोडाशान् जुहुयात्। ततः सप्तमस्य अरण्येऽनूच्यस्योपरि अविच्छिन्नया धारया वसोर्धारा संज्ञकामाहुती जुहुयात्। अथ षट्

पार्थानि (हवींषि) हुत्वा अग्निचयनक्षेत्रवपनवत् सर्वौषधमौदुम्बरे चमसे संभृत्य तस्मात्सर्वौषधात् चमसवत् स्रुवेण औदुम्बरेण चतुष्कोणेन 'वाजस्येमं इत्यादि सप्तमन्त्रैः सप्तवाजपेयसंबन्धीनि वाजप्रसवीयानि हुत्वा 'वाजस्य नु प्रसवे' (मा०सं० १८।३०-३६) इत्यादिमन्त्रैः प्रतिमन्त्रं आग्निकानि सप्त वाजप्रसवीयानि जुहुयात्। इत्याग्निको वाजप्रसवीयहोम उच्यते। (तु०—का०श्रौ० १८।४।१-२६;५।१-५ विद्याधरः, मा०सं० ९।२३। २९, १८।३०-३६ महीधरः)।

**वाजिन**— (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि वरुणप्रघासेषु च प्रयोक्तव्यः १. गव्यं पयः तप्तं कृत्वा तापविशिष्टे एव पयसि यदा दधि प्रक्षिप्यते तद् द्विधा भवति - एकः द्रवीभूतः (जलरूपः) अंशो भवति, अपरः घनीभूतः। तत्र यो द्रवीभूतः विकारः स वाजिन इत्युच्यते। २. प्रातर्दुग्धे तप्ते पयसि उदगग्रं शाखापवित्रं निधाय सायं दोहं दधि आनयति। तथा कृते सति तस्य द्रव्यस्य द्वौ भागौ भवतः। तत्र यो जलरूपो भागः स वाजिन उच्यते। ३. तप्ते दुग्धे दधिप्रक्षेपे दुग्धं विकृतं भवति। तस्य कश्चिदंशोजलरूपेणावतिष्ठते। तत्र जलरूपं द्रव्यं वाजिनम् उच्यते। ४. ज्ञान्नाय्यविकृतं वाजिनं भवति। तच्च चातुर्मास्येषु वैश्वदेवपर्वणि द्रष्टव्यम्। ५. आमिक्षायाः शेषो वाजिनं भवति आमिक्षा च वैश्वदेवी (तु०—आ०श्रौ० २।१६।१३ देवत्रातः)। ६. आमिक्षानुनिष्पादि नीरं वाजिनमुच्यते (तु०— ऐ० ब्रा० सा० १।२२)।

**वाजिनभक्षिन्** — (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्ण-मासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि वाजिनस्य भक्षिणः होता अध्वर्युः ब्रह्मा अग्नीत् यजमानश्चेति पञ्च वाजिनभक्षिणो भवन्ति (तु०—आ०श्रौ० २।१३।१७ षड्गुरुशिष्यः)।

**वाजिनयाग**— (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि प्रधानयागदक्षिणानन्तरं हविरुच्छिष्टोद्वासनादूर्ध्वं गार्हपत्यस्याग्रे वेद्यां दर्भेषु आज्येन अनालिप्तं चमसं, अग्निहोत्रहवणीं, स्फ्यं, परिभोजनीयदर्भांश्च द्वन्दमासाद्य मन्त्रेण पवित्रे कृत्वा 'यजमानवाचं यच्छ' इति यजमानं संप्रेष्य 'वेषाय त्वा' इति मन्त्रेण अग्निहोत्रहवणीमादाय 'प्रत्युष्ठम्' इत्यादिमन्त्रेण गार्हपत्ये प्रतितप्य मन्त्रेण प्रोक्षणीः संस्कृत्य 'शुन्धध्वम्' इत्यादिमन्त्रेण चमसादि प्रोक्ष्य पवित्रे परस्परं तूष्णीं विसृज्य मन्त्रेण 'देवस्य त्वा' इत्यादिना स्फ्यमादाय वेदितृतीयदेशे स्तब्धं कृत्वा संप्रेष्यति 'प्रोक्षणीरासादय, चमसं संमृड्ढि' इति। ततः मन्त्रेण स्फ्योद्वासनादि। आग्नीध्रः चमसं परिभोजनीयदर्भांश्चादाय युगद् गार्हपत्ये निष्टपति प्राकृतसुड्निष्टपनमन्त्रेण। 'वाचं प्राणं मा निर्मृक्षं वाजिनं त्वा सपत्नसाहं संमार्ज्मि' इति मन्त्रेण जुह्वादिवत्। 'दिवः शिल्पम्' इत्याद्यृचा संमार्गदर्भान् गार्हपत्येऽनुप्रहरति। अध्वर्युः वाजिनं गार्हपत्येऽधिश्रित्य अभिघार्य उदगुद्वास्य पुनरभिघार्य 'यस्त आत्मा' इत्याद्यृचा तृतीयाभिघारणेनाक्तं कृत्वा यजमानेन सह व्याहृतिमन्त्रं पठन् वेद्यामासादयति। 'यत्ते अग्ने' इत्याद्यृचा यजमानोऽनुमन्त्रयते। अथाध्वर्युः संप्रैष-

माह—'ब्रह्मन् प्रस्थास्यामः' इत्यादि। ततः इध्मसंनहनप्रहरणान्तं प्रकृतिवत्। पृषदाज्यं जुह्वामानीय अनुयाजार्थमत्याक्रामति। अथ प्रथमानुयाजयाज्यापठनार्थं होतारं 'देवान् यज' इति संप्रेष्य द्वितीयतृतीययोः प्रकृतिप्राप्तं 'यज' इति न संप्रेष्यति चतुर्थादिषु तु 'यज' इति संप्रेष्यति। प्रथमं क्षिप्तसमिधः पूर्वभागे हुत्वा द्वितीयादीन् अनुमन्त्रयते। ततः अध्वर्युः अनुवषट्कृतेऽवशिष्टं वाजिनं जुहोति। यजमानः 'अग्नये इदं न मम'। ततः 'अग्नेरहं देवयज्ययाऽऽयुष्मान् यज्ञेन प्रति तां गमेयम्' इत्यनुमन्त्रयते। अथाध्वर्युः उदङत्याक्रम्य चमसं वाजिनशेषसहितं होतुर्हस्ते ददाति। यजमानोऽध्वर्युराग्नीध्रो ब्रह्मा च चमसमन्वारभ्य उपहवं कुर्युः। तत्र प्रथमं होता अध्वर्यो उपह्वयस्व, ब्रह्मन्नुपह्वयस्व, अग्नीद् उपह्वयस्व, यजमानोपह्वयस्व इत्युपह्वयते। यं यं संबोध्य उपह्वयते तस्य तस्य 'उपहूतः' इति प्रतिवचनम्। ततोऽध्वर्युः ब्रह्महोत्राग्नीध्रयजमानान् क्रमेण होतृवद् उपह्वयते। ततो ब्रह्मा अध्वर्युहोत्राग्नीध्रयजमानान्। ततः आग्नीध्रः अध्वर्यु ब्रह्महोतृयजमानान्। ततो यजमानोऽध्वर्युब्रह्महोत्राग्नीध्रान्। ततो होत्रध्वर्यु ब्रह्माग्नीध्राः क्रमेण नासिकयाऽवघ्राय आसते न प्रत्यक्षं भक्षयन्ति। यजमानस्तु 'यन्मे रेतः' इत्यादिमन्त्रेण प्रत्यक्षं भक्षयति। पात्रं प्रक्षाल्य निदध्युः। एतत् कर्म वैश्वदेवपर्वणि वाजिनयाग इत्युच्यते। द्र० श्रौ०प० नि० पृ० ८१-८३, वैश्व-देवहोम—।

**वाजिनासादन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ........वैश्वदेवपर्वणि आमिक्षावाजिनसंपादनानन्तरं वाजिनयागार्थं आमिक्षा वाजिने शीतले कृत्वा निदधाति। ततो द्यावापृथिवीयं पुरोडाशमधिश्रित्य तिरः पवित्रमाज्यस्थाल्यामाज्यं निरूप्य तूष्णीमपूर्वमाज्यं निरूप्य तथैव दधिस्थाल्यां तूष्णीं तिरः पवित्रं दध्यानयति। 'स्रुवं च स्रुचश्च संमृड्ढि' इत्यस्यानन्तरं तूष्णीं पृषदाज्यग्रहणीम्। दध्नाऽऽन्येन चोदेहि' इति संप्रैषः। स्रुक् संमार्जने उपभृत्संमार्जनानन्तरं उपभृत्संमार्जनमन्त्रेण पृषदाज्यग्रहण्याः संमार्जनम्। आज्यग्रहणकाले प्रकृतिवद् उपभृति चतुर्गृहीतं पृषदाज्यग्रहण्या आज्यस्थाल्याज्येन स्रुवेणोपस्तृणीते 'महीनां पयोऽसि' इति मन्त्रेण। ततो द्वितीयं 'विश्वेषां देवानां तनूः' इति मन्त्रेण उपस्तृणीते। ततो द्वौ दर्भौ अन्तर्धाय 'ऋध्यासम्' इत्यादि मन्त्रेण दध्यानयति। ततो दर्भौ दूरीकृत्य द्विरभिघारयति 'विष्णोर्हृदयमसि' इति मन्त्रेण एकम्। 'एकमिषे विष्णुस्त्वाऽनुविचक्रमे' इति मन्त्रेण द्वितीयम्। यजमानः 'चरो स्त्वा' इत्यादिभिश्चतुर्भिर्मन्त्रैः उपभृति आज्यग्रहणान्यनुमन्त्र्य 'सुवीर्याय त्वा' इत्यादिभिश्चतुर्भिर्मन्त्रैः पृषदाज्यग्रहण्युप- स्तरणानि अनुमन्त्रयते। वेद्यास्तरणे अध्वर्युः मुष्टित्रयनिर्मितमेकैकं दर्भमुष्टिमे- कीकृत्य प्रकृतिवद् बर्हिरुपस्तृणाति। स्रुगादापने मारुतपुरोडाशोद्वासनानन्तरं चमसे तूष्णीमुपस्तीर्य आमिक्षां गार्हपत्येऽधिश्रित्य अभिघार्य उद्वास्य उपस्तरणयुक्ते चमसे आमिक्षां व्युद्धृत्य तदुपरि किंचित् वाजिनमानीय अभिघार्य 'यस्त आत्मा' इत्याद्यृचा आज्यस्थाल्याज्येन स्रुवेण द्वितीयाभिघारणेनालंकरोति। पात्रान्तरे पूर्ववदेककपालमुद्वास्य तस्मिन् बह्वाज्यमानीय अविःपृष्ठं कृत्वा सर्वाणि हवींषि अन्तर्वेदि आसादयति। प्रकृतिवत् स्रुवाज्यं ध्रुवायामार्न।य तूष्णीं गार्हपत्यस्य पुरस्ताद् वाजिनमासादयति।

एतावत् कर्म वाजिनासादनमुच्यते। द्र० श्रौ०प०नि० पृ० ७९-८०।

**वाण—** द्र० महाव्रतपृष्ठस्तोत्रोपाकरण—।

**वातहोम—** (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चयने १. यजमानाभिषेकानन्तरं औदुम्बरचमसमाहवनीये प्रक्षिप्य प्रार्थसंज्ञकान् होमान् हुत्वा राष्ट्रभृतसंज्ञकान् होमान् कुर्यात्। ततः पञ्चगृहीतं आज्यं गृहीत्वा रथेषाग्रयोरुपरि यत्र युगस्य बन्धनं क्रियते तस्मिन् रथशिरोनाम्नि प्रदेशे पञ्चकृत्वो हुत्वा अध्वर्युः रथशिरः संमुख उपविष्टः पञ्चाहुतीर्जुहुयात्। (तु०—का० श्रौ० १८।५।१५-२० विद्याधरः)। ततः रथशिरसि पञ्चगृहीतहोमानन्तरं अध्वर्यू रथमग्नेरवतार्य उत्तरतो वेदिमध्य एव प्राङ्मुखं युगयोक्त्रावदिसहितमवस्थाप्य तस्य रथस्य स्थानत्रये 'समुद्रोऽसि' इत्यादि 'मा पाहि-स्वाहा' (मा०सं० १८।४५) इत्यन्तेन मन्त्रत्रयेण दक्षिणयुग दक्षिणधुरोऽधः प्रथमं वातहोमं प्रथममन्त्रेण जुहुयात् उत्तरधुरोऽधो द्वितीयं द्वितीयेन मन्त्रेण, युगमध्याधः तृतीयं तृतीयमन्त्रेण त्रीन् वातहोमान् वहिर्वेदः अञ्जलिना वातमानीय जुहुयात्। इति वातहोमा उच्यते, तु०—मा०सं० १८।४५ महीधरः) २. रथशिरसि पञ्चगृहीतहोमानन्तरं 'समुद्रोऽसि' (मा०सं० १८४५) इति मन्त्रत्रयेण रथस्य त्रिषु स्थानेषु हुतास्त्रयो वायोर्होमा वातहोमा उच्यन्ते। तत्र रथयुगस्य दक्षिणस्यां धुरि अधस्तात् अश्वादियोजनस्थाने बर्हिवेदेः उत्तरस्या दिशः अञ्जलिना वातमानीय जुहुयात्। ततो दक्षिणस्या दिशो बहिर्वेदेरञ्जलिना वातमाहृत्य दक्षिणा पृष्टेः स्थाने युगस्य धुरि अधस्ताज्जुहुयात्। इति विशेषोऽवधेयः। (तु०—का० श्रौ० १८।६।१ विद्याधरः)।

**वामदेव्यसामगाननियम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिकृतिषु चैकाहाहीनसत्रेषु वामदेव्यसामनिश्चलः उपविष्टः वर्णानसंभिन्दन् शनैः प्रवदन् स्वस्वभावसिद्धनियतपद्धतियुक्तः। अनिरुक्तं (कवतीष्वेव) गायेन्। तदुक्तम्— 'ध्रुव आसीनो वामदेव्यमुद्गायेत्। यथाङ्गुली स्वपुत्रान् सन्दस्यासंभिन्दतो हरति, यथा वातोऽप्सु शनैर्वाति। स्वधूर्वामदेव्यं गेयम्। अनिरुक्तं गेयम्। इति। तत्र अङ्गुली मार्जारी। स्वैव अनन्यसाधारिणी धुर्यसृतिः स्वधूरित्युच्यते। अनिरुक्तकवती व्यतिरिक्तास्वेतन्नगातव्यम् इति। (तु० — तां० ब्रा० सा० ७।९।७-१२।१७)।

**वामदेव्यसामन्—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमा... चैकाहाहीनसत्रेषु 'वामं भर्या देवेष्वाजानि' इति तस्माद् वामदेव्यम्। तच्च 'कया नश्चित्र आ' (साम० ६८२-८४) इत्यादिषु गायत्रीषु गीयते। मैत्रावरुणो मैत्रावरुण देवत्यशस्त्रे वामदेव्यमनुशंसति, पृष्ठेषु (स्तोत्रेषु) च परिगण्यते। गवामयने महाव्रते अतिच्छःसु पञ्चनिधनं वामदेव्यं ब्रह्मसाम कार्यम्, (तां० ब्रा० ५।२।१०) इति विशेषोऽवधेयः।

**वामदेव्यसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योति...चैकाहाहीनसत्रेषु 'कयानश्चित्र आ (साम० १६९) इत्यस्यामृचि वामदेव्याख्यं सामोत्पद्यते। इतीयमृग् वामदेव्यसामयोनिरुच्यते (तु०—ता० ब्रा० सा० ५।२।११)।

**वामभृत्—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने उपधेया इष्टका वामभृदित्युच्यते।

**वायव्यपात्र—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिकानि दधिग्रह ऐन्द्रवायवमैत्रावरुणआश्विनादीनि ग्रहपात्राणि चमसाश्च वायव्यपात्राण्युच्यन्ते। तानि नैयग्रोधानि औदुम्बराणि वा भवन्ति। अथवा कानिचिदौन्दुम्बराणि कानिचित्तु नैयाग्रोधानि। चमसा नैयग्रोधाः (तु०—श्रौ० प०नि० पृ० २४८-४९)।

**वायव्यपात्र—** (सा० आध्व०) इष्टिपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अवभृथे शूलाकर्मानन्तरं उदकसमीपे दक्षिणापवर्गाणि वायव्यानि सादयति। तत्र षट् (पयः सुरा-) ग्रहपात्राणि, द्वौ द्रोणकलशौ, एकं कुम्भम्, दशापवित्रादि। एतानि वायव्यपात्राणीत्युच्यन्ते। द्र० श्रौ०प०नि० पृ० १६९, शूला कर्मन्—।

**वायव्यादिपात्रसादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति.... तद्विकृतौ चैकाहाहीनसत्रेषु सुत्यारम्भप्रैषानन्तरं हविर्धाने उन्नेता ग्रावणो वायव्यानि चमसान् परिप्लुपात्रं, प्रक्षालितोपरिस्थदशापवित्रं, द्रोणकलशं च दक्षिणस्य हविर्धानस्य पुरोक्षं सह संसादयति। एवद्धविर्धाने वायव्यादि सादनमुच्यते। द्र० श्रौ०प०नि० पृ० २५६-५७; १। वायव्यपात्र—।

**वायूपस्थान—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च उत्तरवेद्यग्न्युपस्थानानन्तरं 'स त्वं नोनुम' इत्यादि मन्त्रेण वायुमुपतिष्ठते। इदं वायूपस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० १४१ उत्तरवेद्यग्न्युपस्थान—।

**वारणवैकंकतपात्र—** (सा०) वारणवैकंकतपात्राणि सर्वयागेषु निविशन्ते। मी०को० पृ० ३४९८

**वारवन्तीयसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'अश्वं न त्वा वारवन्तम्' (साम० १७) इत्यस्यामुत्पन्नं साम वारवन्तीयमित्येषा तस्य योनिरुच्यते।

**वारुणीप्रचार—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु मारुतीप्रचारानन्तरं अध्वर्युः प्रतिप्रस्थातृकर्तृकमारुत्यामि-क्षावदानवत्
वारुणीमामिक्षामवद्यति। मेषीस्थाने मेषं चावद्यति। 'धर्मभाग् भूयासम्' इति यजमानस्यानुमन्त्रणम्। सोऽयं वारुणीप्रचारः वारुणीयाग इति चोच्यते। द्र० श्रौ०प०नि० पृ० ९३। वरुणप्रघासप्रयोगक्रम—।

**वारुणीयाग—** द्र० वारुणीप्रचार—।

**वार्त्रघ्नाज्यभाग—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. पूर्णमासे प्रयागानन्तरं पूर्वोत्तरौ यौ आग्नेयसौम्यावाज्यभागौ तौ पौर्णमास्यां वार्त्रघ्नौ भवतः। अतस्तयोः पूर्वस्याग्नेयस्य 'अग्निर्वृत्राणि जघ्नत्' (ऋ० ६।१६।३४) इति पुरोनुवाक्या, उत्तरस्य सौम्यस्य 'त्वं सोमासि सत्पतिः' ऋ० १।९१।५) इति पुरोनुवाक्या विहिता। तदुक्तम्—'अथ यौ पौर्णमास्यां वार्त्रघ्नावाज्यभागौ भवतः (द्र० श्रौ०को० १ भा० पृ० २०६-७) 'एतौ वार्त्रघ्नौ पौर्णमास्याम्।' (आ०श्रौ० १।५।२९; ३२)। इति वार्त्रघ्नावाज्यभागावुच्येते। २. पूर्णमासे वार्त्रघ्नी युगलं अमावास्यानां वृधन्वी

युगलं च आज्यभागाङ्गम्। वार्त्रघ्नी वृधन्वत्योरनुवाक्ययोः आज्यभागाङ्गत्वम्। वार्त्रघ्नी पौर्णमास्यामनूच्येते। वार्त्रघ्नी अमावास्यायाम्। द्र० मी०को० पृ० ३५०१।

**वालखिल्यविहार—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणः वालखिल्यसूक्तानामष्टसु सूक्तेषु (ऋ० ८।४९-५६)। सप्तमाष्टमे सूक्ते (५५-५६) परित्यज्य यान्यवशिष्टानि षट् सूक्तानि तानि विहृत्य शंसति। तेषु प्रथमयुग्मं (४९-५०) द्वितीययुग्मं (५१-५२) तृतीययुग्मं (५३-५४) इति त्रीणि युग्मानि कल्प्यन्ते। तत्र प्रथमयुग्मगते द्वे सूक्ते मैत्रावरुणः पच्छः (पादशः) विहरेत्। अर्थात् प्रथमसूक्तगतं पादं द्वितीयसूक्तगतेन पादेन संयोज्य शंसेत्। द्वितीययुग्मगते द्वे सूक्ते अर्धर्चशो विहरेत्। अर्थात् तस्मिन् युग्मे एकसूक्तगतमर्धर्चं द्वितीयसूक्तगतेनार्धर्चेन सह संयोज्य शंसेत्। तृतीययुग्मगते द्वे सूक्ते ऋक्शो विहरेत्। अर्थात् तस्मिन् युग्मे एकसूक्तगतां ऋचं द्वितीयसूक्तगतया ऋचा सह संयोज्य शंसेत्। तदुक्तमाश्वलायनेन—'अथ वालखिल्या विहरेत् तदुक्तं षोडशिना सूक्तानां प्रथम द्वितीये पच्छः तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चमषष्ठे' इति। (आ०श्रौ० ८।२।३-६)। तथा च ब्राह्मणे 'स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये' इति।(ऐ० ब्रा० सा० ६।२८)। इति वालखिल्यविहार उच्यते। द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणशिल्पशंस्त्र—।

**वालखिल्यमहावालभिद्विहार—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणः स्वविकृत- शिल्पशस्त्रे वालखिल्यसूक्तानां अष्टानां (ऋ० ८।४९-५६) आदौ यानि षट् सूक्तानि (४९-५४) तानि प्रथमं पच्छः (पादशः) विहरेत्। ततो द्वितीयस्यामावृत्तौ अर्धर्चशो विहरेत्। तृतीयस्यामावृत्तौ ऋक्शो विहरेत्। तत्र यदा पच्छो विहरति तदानीमेकैकस्मिन् प्रगाथे एकैकामेकपदां दध्यात्। स वाचःकूटः। इति महावालभिदाख्येन महर्षिणा दृष्टः षण्णामपि सूक्तानां तिसृभिरावृत्तिभिर्यः प्रगाथान्तेष्वेकस्य सहितवाचः कूटरूपः। पादविहारः, अर्धर्चविहार ऋग्विहारः स तृतीयो वालखिल्यमहावालभिद्विहार उच्यते। तदुक्तम् 'पच्छः प्रथमं षड् वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयम्, स पच्छो विहन् प्रगाथे प्रगाथे एवैकपदां दध्यात् स वाचःकूटः'। (तु०—ऐ०ब्रा०सा० ६। २४)। तमिमं विहारप्रकारम्। आश्वलायन आह-'एतान्येव षट्सूक्तानि व्यतिमर्शं पच्छो विहरेद् व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः, प्रगाथान्तेषु चानुपसन्तान ऋगावानमेकपदाः शंसेत्' (आ०श्रौ० ८।२।१९-२०)। इति। तत्र अन्यदीयस्य सूक्तस्य अन्यदीयेन पादादिना संधायाम्नानं विहार उच्यते (तु०—शां० श्रौ० १२। ११। ६ भाष्यम्)। व्यतिमृश्य व्यतिमृश्य विहरणं विहारः (तु०— आ०श्रौ० ८।२।६ नारायणः)। तेषु षट्सूक्तेषु प्रथमसूक्तादौ ऋग्द्वयमेवमाम्नातम्। 'अभि प्र वः सुराधसम्० सहस्रेणेव शिक्षितो३म्।(४९।१)। शतानीकेव प्रजिगति० दत्राणि पुरुभोजो३म्। (४९।२)। इति द्वितीयसूक्तेऽपि ऋग्द्वयमेवममाम्नातम्—'प्र सुश्रुत सुराधसम्' सहस्रेणेव मंहते३म्।

(५० ।१ ।१) ॥ शतानीका हेतयो अस्य० यदीं सुता अमन्दिषो३म् ।' (४० ।२) ॥ इति । व्यतिमर्शश्च यथाक्रमं परित्यज्य प्रकारान्तरेण योजने सति संपद्यते । तथा सति प्रथमसूक्तस्य प्रथमायामृचि प्रथमायापादमुक्त्वा द्वितीयसूक्तस्य द्वितीयायामृचि द्वितीयपादं तेन योजयेत् । तद्यथा—'अभि प्र वः सुराधसम् (४९ ।१०) इन्द्रस्य समिषो महीः (५० ।२ ।२) इति । द्वितीयसूक्तस्य द्वितीयस्यामृचि प्रथमपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि द्वितीयपादं तेन योजयेत् । तद्यथा—'शतानीका हेतयो अस्य दुष्टरा (५० ।२१) । इन्द्रमर्च यथा विदो३म् (४९ ।१ २ इत्येका । अथ प्रथमसूक्तस्य प्रथमायामृचि तृतीयपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृचि चतुर्थपादं तेन संयोजयेत् । तद्यथा—'यो जरितृभ्यो मधवा पुरुवसुः' (४९ ।१ ३) यदीं सुता अमन्दिसुः' (५०,२४) इति । द्वितीयसूक्तस्य द्वितीयस्यामृचि तृतीयपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि चतुर्थपादं तेन संयोजयेत् । तद्यथा—'गिरिर्निभुज्मा मघवत्सु पिन्वते' (५० ।२३) 'सहस्रेणेव शिक्षितो३म्' (४९ ।१४) इति । तदिदं पादयोर्विहृतमृग्द्वयं एकः प्रगाथः संपद्यते । तस्यैतस्य प्रगाथस्य अन्ते 'इन्द्रो विश्वस्य गोपतिः' इत्येकपदां संदध्यात् । सोऽयं विहार- समूहः वाचः कूटसंज्ञकः पच्छोविहारः । अनेनैव न्यायेन सर्वेषु सूक्तेषु सर्वास्वृक्षु बुद्धिमता पादशो व्यतिमर्शविहरणमुन्नेयम् । अथार्धर्चशो विहार उच्यते । तत्र प्रथमसूक्तस्य प्रथमायामृचि प्रथमार्धर्चमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्या मृचि उत्तरार्धं तेन संयोजयेत् । तद्यथा—'अभि प्र वः सुराधस० यथाविदे' (४९ ।११-२) इति । 'गिरिर्निभुज्मा महावत्सु० अमन्दिषोऽम्' (५० ।२३-४) इति । एवं सर्वमुन्नेयम् । ऋक्शो विहरेत् । तत्र प्रथमसूक्तस्य प्रथमामृचमुक्त्वा तया सह द्वितीयसूक्तस्य द्वितीयामृचं योजयेत् । एवं सर्वत्रोन्नीयम् । (तु०—ऐ० ब्रा० सा० ६ ।२४) । तदेवं पादशो विहारे प्रगाथस्य स्वरूपम्—'अभि प्र वः सुराधसमिन्द्रस्य समिषो महीः । शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्च यथा विदो३म् ॥ १ ॥ यो जरितृभ्यो मघवा पुरूवसुर्यदीं सुता अमन्दिषुः । गिरिर्निभुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षितो३मिन्द्रो विश्वस्य गोपतिः' इति अर्धर्चशो विहारे—अभि प्र वः सुराधसमिन्द्रमर्च यथाविदे । गिरिर्नि भुज्मा मघवत्सु पिन्वते यदीं सुता 'अमन्दिषो३म् ॥ १ ॥ऋक्शो विहारे-अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे । यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षितो३म् । शतानीका हेतयो अस्य दुष्टरा इन्द्रस्य महीः । गिरिर्नि भुज्मा मघवत्सु पिन्वते यदीं सुता अमन्दिषो३म् । इति । **द्र०** महावालभिद्विहार— ।

**वालखिल्यसप्तमाष्टमसूक्तयो विपर्यास—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्यो....षष्ठेऽहनि तृतीयसवने मैत्रावरुणो वालखिल्यसूक्तानां सप्तमाष्टमयोः सूक्तयोः 'प्रति ते दस्यवे' (ऋ० ८ ।५६) इत्यष्टममं सूक्तमादौ पठित्वा पश्चात् 'भूरीदिन्द्रस्य वीर्यम्' (ऋ० ८ ।५५) इति सप्तमं सूक्तं पठेत् । तयोर्द्वयोः सूक्तयोः एष विपर्यस्तपाठो विपर्यास उच्यते । अर्थादन्तिममष्टमसूक्तं विपर्यस्यति न तु पादार्धर्चव्यतिमर्शं (व्यतिषङ्गं) करोति । सोऽयं विपर्यास एव सप्तमाष्टमयोर्विहार उच्यते । तदुक्तं— द्वे एवोक्तमे

सूक्ते पर्यस्यति स एव तयोर्विहारः। (तु०—ऐ० ब्रा० सा० ६।२४ आ०श्रौ० ८।२।१२ नारायणः)

**वालखिल्यहौण्डिनविहार—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरणः प्रथमहौण्डिनविहारे वालखिलखिल्यसूक्तानामष्टसु सूक्तेषु (ऋ० ८।४९-५६) उत्तमे सप्तमाष्टमे परित्यज्य यान्यवशिष्टानि षट् सूक्तानि तानि विहृत्य शंसति। (उत्तमवचनमष्टावेव सूक्तानि वालखिल्यशब्दवाच्यानि इति नारायणः (आ०श्रौ० ८।२।१२)। तेषु शंसनार्थं प्रथमयुग्मं (४९-५०) द्वितीययुग्मं (५१-५२) तृतीययुग्मं (५३-५४) इति त्रीणि युग्मानि कल्पयति। तत्र प्रथमयुग्मगते द्वे सूक्ते स मैत्रावरुणः पच्छः (पादशः) विहरेत्। अर्थात् प्रथमसूक्तगतपादं द्वितीयसूक्तगतेन पादेन सह संयोज्य शंसेत्। द्वितीययुग्मगते द्वे सूक्ते अर्धर्चशो विहरेत्। अर्थात् तस्मिन् युग्मे एक सूक्तगतमर्धर्चं द्वितीयसूक्तगतेनार्धर्चेन सह संयोज्य शंसेत्। तृतीययुग्मगते द्वे सूक्ते ऋक्शो विहरेत्। अर्थात् तस्मिन् युग्मे एकसूक्तगतामृचं द्वितीयसूक्तगतया ऋचा सह संयोज्य शंसेत्। तदुक्तम्-'ता विहृताः शंसति। स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये' (ऐ० ब्रा० ६।२८)। आश्वलायनेन च 'अथ वालखिल्या विहरेत्। तदुक्तं षोडशिना। सूक्तानां प्रथमद्वितीये पच्छः। तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चषष्ठे (आ०श्रौ० ८।३-६)। इति द्र० पृष्ठ्यषडहस्य षष्ठेऽहनि मैत्रावरुणशिल्पशस्त्र—। इति प्रथमो वालखिल्यहौण्डिनविहारः।

द्वितीयो वालखिल्य- हौण्डिनविहारः— तत्रापि वालखिल्यानामष्टसूक्तेषु सप्तमाष्टमे सूक्ते परित्यज्य यान्यवशिष्टानि षट् सूक्तानि तेषां पच्छः, अर्धर्चशः, ऋक्शो व्यतिमृश्य व्यतिमृश्य वालखिल्य महावालभिद्वद् विहरणं कर्तव्यम्। तत्र पूर्वस्य सूक्तस्य प्रथमामृचं उत्तरस्य सूक्तस्य द्वितीयया ऋचा विहरेत्। उत्तरस्य प्रथमामृचं पूर्वस्य द्वितीयया मृचा विहरेत्। एवं प्रथमद्वितीययोः सूक्तयोर्द्वयो र्द्वयोर्ऋचोर्विहार उक्तः। इति ऋग्व्यतिमर्शविहारः। ततः पादव्यतिमर्शः—अर्धर्चशो व्यतिमर्शः—ऋक्शो व्यतिमर्शः— ये वालखिल्यानां सप्तमाष्टमे, सूक्ते तयोः विपर्यासं कृत्वा शंसेत्। अष्टमं पूर्वं शस्त्वा पश्चात् सप्तमं शंसेत्। विपरिहार एवात्र तयोः कर्तव्यो न विहारः। (तु०—आ०श्रौ० ८।२।१२ नारायणः) इति द्वितीयो वालखिल्यहौण्डिनविहारः।

**वालखिल्यहौण्डिनविहार-वालखिल्यमहावालाभिद् विहारयोर्विशेष—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...प्रकरणे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रावरुणशिल्पशस्त्रे 'स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये' (ऐ० ब्रा० ६।२८) इति ब्राह्मणेन 'अथ वालखिल्या विहरेत् तदुक्तं षोडशिना सूक्तानां प्रथमद्वितीये पच्छस्तृतीयचतुर्थे अर्धर्चशः ऋक्शः पञ्चमषष्ठे व्यतिमर्शंवा विहरेत्' (आ०श्रौ० ८।२।३-६) इत्याश्वलायनेन च वालखिल्यहौण्डिनोविहितः। एवमेव 'पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयम्' (स वाचः कूटः (ऐ० ब्रा० ६।२४) इति ब्राह्मणेन तथा 'अथ महावालभित्। एतान्येव षट् सूक्तानि

व्यतिमर्शं पच्छो विहरेद् व्यतिमर्शमर्धर्चशो व्यतिमर्शः' (आ०श्रौ० ८।२।१८-१९) इति सूत्रेण च वालखिल्यमहावालभिद् विहारोऽभि-हितः। उभयत्र वालखिल्यानां पच्छः अर्धर्चशः, ऋक्शः इति समान एव विहारोःऽभिहितः तत् किमर्थं पुनरुक्तिवचनं इति संशये यद्यपि सादृश्यं दृश्यते तथाप्यत्रास्ति प्रकारे विशेषः। तत्र वालखिल्यमहावालभिद्विहारे षण्णामपि सूक्तानां क्रमेण पादविहारोऽर्धर्चविहार ऋग्विहार इति त्रिः आवृत्तिरभिहिता। वालखिल्यहौण्डिनविहारे तु प्रथमयुग्मे पादविहारो द्वितीययुग्मेऽर्धर्चविहारः तृतीययुग्मे ऋग्विहार इति। तत्रापि सकृदेव पादविहारो न त्वावृत्तिः। तथा च वाचः कूटस्य भावाभावाभ्यामप्यस्ति प्रकारे विशेषः। अत, एवोभयत्र नामभेदोऽस्ति महावालभिद्विहार इति पूर्वस्य नामधेयम्। हौण्डिनो विहार इत्युत्तरस्य नामधेयम्। अत एव सूत्रकारो नामद्वयं दर्शयति—'इति नु हौण्डिनावथ महावालभित्' (आ०श्रौ० ८।२।१६-१७)। तत्र हुण्डिनाख्येन महर्षिणा दृष्टौ द्वौ विहारौ। महावालभिदाख्येन महर्षिणा दृष्ट एको विहारः। (तु०—ऐ० ब्रा० सा० ६।२८)। तदेवं ब्राह्मणेन महावालभिद् विहारो वालभिद्विहारश्चेति द्वौ विहारौ विहितौ सूत्रकारेण द्वौ वालभिदौ (हौण्डिनो) विहारौ एको महावालभिच्चेति त्रयो विहारा अभिहिताः। इति पञ्च विहारान् मैत्रावरुणः। पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने। शंसतीति विशेषोऽवधेयः। द्र० महावालभिद् विहार-वाचः कूट—, वालभिद्विहार—।

**वाशनवेपनादिनिमित्ताहुति—** द्र० पशुवाशनवेपनादिनिमित्ताहुति—।

**वास—** (सा०) अग्निहोत्रप्रायश्चित्तप्रकरणे। १. रात्रेः चतुर्थो भागो वास इत्युच्यते (तु०—आ०श्रौ० ३।१२।१० नारायणः)। २. वासः सायं कालः सायमिति तत्रैव देवस्वामिप्रभृतयो द्रष्टव्याः।

**वासस्—** (सा०) १. 'वासः परिधत्ते' एतद्वै सर्व देवत्यं वासरे यत्क्षौमम्। इति वासः क्षौममेव ग्राह्यं न कार्पासादिकम्। द्र० मी०को० पृ० ३५०३।

**विंशतिरात्रसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे विंशतिरात्रसत्रे १. प्रायणीयोऽतिरात्रः, २. ज्योतिः, ३. गौः, ४. आयुः, ५. गौः, ६. आयुः, ७. ज्योतिः, ८. अभिजित्, ९. विश्वजित्, १०-१५ पृष्ठ्यषडहः, १६-१९ चत्वारश्छन्दोमाः, २०. उदयनीयोऽतिरात्रः, इति विंशतिरहानि। तत्रेदं विंशतिरात्रसत्रं संभार्य (औपदेशिकं) सर्वम्, केवलं दशाहार्थे द्वादशिको दशरात्रः (पृष्ठ्यः षडहः, चत्वारश्छन्दोमाः) आवापिकः पूर्यते। द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि—, २. आवापस्थान—, सत्रप्रकृति—, संभार्य—।

**विंशतिरात्रसत्रस्याहः क्लृप्ति—** (अव्य०) १. अतिरात्रः २. ज्योतिः ३. गौः ४. आयुः ५. ज्योतिः ६. गौः ७. आयुः ८. ज्योतिः ९. गौः १०. आयुः ११-१६ पृष्ठ्य षडहः, १७. आयुः १८. गौः १९. ज्योतिः २०. अतिरात्रः, इति विंशतिरहानि विंशतिरात्रसत्रेऽनुष्ठेयानि (तु०— तै० सं० ७।३।९)। अहा मेदेनायं पूर्वस्मादिभद्यते।

**विंशस्तोम—** द्र० वर्धमानस्तोम—, स्तोमभेद-।

**विकर्णसामन्—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसत्र-

प्रकरणे गवामयने विषुवति अहनि माध्यन्दिनसवने पृष्ठस्तोत्रेषु ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रे 'इन्द्र क्रतुं न आभर' (साम० १४५६-५७) इति प्रगाथे गेयं विकर्णाख्यं साम ब्रह्मसाम (ब्राह्मणाच्छंसिसाम) उच्यते। (तु०—तां० ब्रा० सा० ४।६।१५)। भ्राजाऽभ्राजे महादिवाकीर्त्यं विकर्ण सामन् चेति विषुवत्सामानि भवन्ति।

**विकार—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे 'साद्यस्क्रेषु उर्वरा वेदिः' इत्यादयोऽनुक्रान्ता धर्मा आगन्तुका विकारा वेदितव्याः। अप्राकृता धर्मा आगन्तुका इत्युच्यन्ते। प्राकृतेष्वेव विशेष विधयो विकारा उच्यन्ते। तत्र 'सन्नद्धा लोहितोष्णीषाः' इत्येवं प्रकारा आगन्तुकाः। शरमयं बर्हिः उर्वरा वेदिः' इत्यादयो विकाराः इतिविशेषोऽनुसंधेयः तदुक्तम्-'आगन्तुका विकाराः' (तु०— आ०श्रौ० ९।७।१९ नारायणः)।

**विकार—** (सा०) सोमयज्ञेषु प्रकृतिभूत...विकृतौ सत्रप्रकरणे सात्रिकेष्वहःसु होत्रकाणां शस्त्राणां चतुर्विंशतेरादेरेवाह्नो माध्यन्दिनसवनेषु विकारो भवति। विकारवचनादनुक्तमन्यत् प्राकृतं भवति (तु०— शां० श्रौ० १३।३।१ भाष्यम्)। वचनलक्षणो (आम्नातलक्षणो) विकारः। तेन सत्रेषु, प्रायणीयोदयनीययोः विकारवचनाभावात् प्राकृतक्रिया (तु०— शां० श्रौ० १२।१।३ भाष्यम्)।

**विकार—** (सा०) इष्टिपशुसोमेषु य ऋत्विक् स्वीयमन्दीयं च कर्म करोति स विकार उच्यते। यथा अध्वर्युकर्म कुर्वन्नध्वर्यु विकार इत्युच्यते प्रतिप्रस्थाता। मैत्रावरुणश्च होत्रध्वर्युकर्म कुर्वन् उभयविकारः। होतारं पुरोनुवाक्यानुवचनेन विकरोति, प्रैषेण ाध्वर्युम्। तस्मात् प्रतिप्रस्थाता पश्विडाभक्षेषु अधिकारी भवति। मैत्रावरुणश्च भक्षेष्वधिकारी भवति। (तु०— का०श्रौ०५।५।२५-२६)।

**विकार—** विकारो नाम कार्यापत्ति प्रमाणम्। विकारेषु प्रकृति- वदुपचारः। **द्र०** मी०को० पृ० ३५२०-२१।

**विकृतशिल्प— द्र०** शिल्प—, शिल्पभेद—।

**विकृति—** (सा०) इष्टिपशुसोमेषु १. यत्र विशेषाङ्गमात्रमुपदिश्यते अङ्गान्तराणि तु प्रकृतेरादिश्यन्ते सा विकृतिरुच्यते। (तु०— मा०सं० १।१ महीधरः, का०श्रौ० १।५।४ टि० विद्याधरः)। २. यत्र विशेषरूपमेव कर्तव्यं श्रुत्या उपदिश्यते इतरत् सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। कर्मान्तरसापेक्षं कर्मस्वरूपमित्यर्थः। स प्रत्यक्षश्रुतिवचनाद् वा साम्याद् वा लिङ्गाद् वाऽवगन्तव्यः। (तु०— तां० ब्रा० सा० १।१)। ३. प्रकृत्युपदिष्टाद् विशेषस्यैव यत्र प्रत्यक्षेणोपदेशः सा विकृतिः। ४. प्रकृतेरेव धर्मा यस्यां सा प्रकृतिधर्मा विकृतिः। (स्त्रीविकृतौ अतिदेशेन प्रकृतेर्धर्मा एव भवन्ति (तु०—मी०को० पृ० ३५२१)। ५. विकृतिः प्राकृतान् धर्मान् त्रोदकेन गृह्णाति। यत्र न सर्वाङ्गोपदेशः सा विकृतिः (मी०को० ३५२२)। ६. विकृतौ प्रकृतिगताः कार्यकृद्धर्मा एव अतिदिश्यन्ते (मी०को० पृ० ३५३६)। ७. यत् प्राकृतमङ्गं विकृतौ श्रूयते तदेव विकृतिः निराकांक्षत्वात् स्वीकरोति। (मी०को० पृ० ३५३४)। **द्र०** प्रकृतिवत् विकृतिः कार्या इति न्यायः। **द्र०** प्रकृतियाग—, श्रौतयज्ञानां प्रकृतिविकृत्युभयात्मकत्व—, विकृतियाग—।

**विकृतियाग—** (सा०) इष्टिपशुसोमेषु यत्र यत्र अतिदेशः प्रवर्तते स यागो विकृतिपदेन व्यवह्रियते। **द्र०** श्रौ०प०नि० पृ० २९; श्रौतयज्ञानां प्रकृतिविकृत्युभयात्मकत्व-।

**विकृतिरूपक्रतुभेद—** (सा० औ०) सोमयज्ञेषु प्रकृतिरूपाः क्रतवो द्विविधाः सन्ति विवृद्ध-स्तोमका अविवृद्धस्तोमकाश्चेति। तत्र वि-वृद्धस्तोमकाः। क्रतवः प्रकृतौ यत्र स्तोत्रे यावन्तः स्तोमाः भवन्ति ततोऽधिकाः स्तोमा यत्र स्तोत्रे, यत्र क्रतौ भवन्ति ते विवृद्धस्तो-मकाः क्रतव उच्यन्ते। **द्र०** मी०को० पृ० ३६७०।

**विकृतिश्राद्ध—** (सा०, स्मार्त०) पिण्डपितृयज्ञवि-कृतिभूते श्राद्ध-प्रकरणे एकोद्दिष्ट-युगादि-मन्वादि-संक्रान्ति-मघा-भरणी-रविवार-प्रेत षोडशक-नवनित्य-तीर्थ-क्षयाह-आम-हेम -पि- ण्डक-संकल्प-श्राद्धानि विकृतिश्राद्धा-न्युच्यन्ते। (तु०— पा०गृ० श्राद्धसूत्रवृत्तिः काशिका ४)।

**विग्रहादिपंचक— द्र०** देवताविग्रह—।

**विग्राह—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्यो-तिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्था-यामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आज्यशस्त्रस्यादौ अन्यत्र च 'विग्राहम्' इति वचने (इत्युक्ते) विगृह्य शंसनं विग्राहमित्यु-च्यते (तु०—आ०श्रौ० ५।९।२० नारा-यणः)।

**विघन—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योति-ष्टोमातिरात्रविकृतौ एकाहप्रकरणे वि-घनसंज्ञकौ द्वौ द्वन्द्वसोमेष्वेकाहौ। तौ चाग्निष्टोमसंस्थौ अभिचरतो भवतः।

**विचक्षणवती वाच् —** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमा-यां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षितः सत्यं वदेत् विच-क्षण शब्दोपेता वाणी। सत्या विचक्षणवती वागित्युच्यते सत्यार्थं तां वदेत्। यथा देव-दत्त! विचक्षण! इदं कुरु, यजमान विचक्षण इदं कुर्विति। तदाहापस्तम्बः—'चनसित! विचक्षण! इति नामधेयान्तेषु दधाति चन-सितेति ब्राह्मणो विचक्षणेति राजन्यवैश्यौ' इति। तु०—ऐ० ब्रा० सा० १।६) दीक्षितः आत्मनः परेषां नामानि न गृह्णाति विचक्ष-णवतीं वाचं चनसवतीं भाषन्ते। (तु०— गो० ब्रा० श्रौ०को० २. भा० पृ० ४३)। यदु सोऽस्य नाम न गृह्णाति, अथ यमिच्छेद् विचक्षणवत्या वाचा तस्य नाम गृह्णीयात्। (तु०—शां० ब्रा० श्रौ०को० २ भा० पृ० ३७)।

**विच्छन्दस्— द्र०** अतिच्छन्दस्—।

**विच्छन्दस्—** (सा०) इष्टिपशुसोमयज्ञादिषु विल-क्षणं छन्दो यासां ता ऋचः विच्छन्दस उच्यन्ते।

**विच्छिन्नाग्न्याधान—** (अव्य०, आध्व०) इष्टियज्ञेषु प्रकृति- भूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे सर्वा-ग्निनाशे समारूढारणीनाशे च विच्छिन्न-संधानार्थमग्नीनाधास्ये इति संकल्प्य ऋत्विग्वरणादि गोपितृयज्ञवर्जम् अग्न्या-धानं करोति। तदिदं विच्छिन्नाग्न्या-धानमुच्यते। **द्र०** गोपितृयज्ञ-, श्रौ०प०नि० पृ० ७०।

**विज्ञात—** (सा०) इष्टिपशुसोमयज्ञादिषु मनसा विज्ञातं विशेषेण निश्चितं वस्तु विज्ञातमु-च्यते।

**विडायतवनीया—** (औ०, सा०) सोमयज्ञेषु स्तोमविष्टुति विधौ १. वर्धमानस्तोम-पर्यायकृतौ उत्तमायाः स्तोत्रीयायाः प्रयोगे

भूयिष्ठे विडायतनीया विष्टुतिरुच्यते। (आ०श्रौ० ६।६।८ अग्निस्वामी) २. उत्तमाया ऋचः प्रयोगं ऋगन्तरात् भूयिष्ठे वियतनीया विष्टुतिरुच्यते (द्रा०श्रौ० १७।२ धन्वी)। ३. समात् साम्ये प्रयोगे क्रियमाणे विडायतनीयां विष्टुतिं वर्जयेत्। इति विशेषः (ला० श्रौ० ६।६।७ अग्निस्वामी)।

**वितस्ति—** (सा०) वितस्तिः द्वादशाङ्गुला। **द्र०** मी०को० पृ० ३५३६।

**विदग्ध -, विदहन —** (सा०) अत्यन्तपक्वः विदग्धः। (पुरोडाशादेः) यादृभिः क्षणैः पक्वाख्यफलसिद्धिः तावद्भ्योऽधि-कसंख्यक्षणानुष्ठानं श्रपणस्य तद्विदहनम्। **द्र०** मी०को० पृ० ३५३७।

**विद्या—** (सा०) पुराण-न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ आयुर्वेदो धनुर्वेदो गन्धर्वश्चेति ते त्रयः। अर्थशास्त्रं चतुर्थं च विद्या ह्यष्टादशैव तु॥ आयुर्वेदधनुर्वेदगान्धर्ववेदाः त्रयः उपवेदाः इति। **द्र०** मी०को० पृ० ३५३८।

**विधि—** (सा०) इष्टिपशुसोमश्रौतयज्ञेषु स्मार्तयज्ञसंस्कारेषु च १. विधीयन्ते इति विधयः कर्माणि। ते सर्वे श्रौताः स्मार्ता अपि ब्राह्मणेष्वे उक्ताः (तु०—आप०ध० १।१२।१० भाष्यम्) २. अविदितवेदनं च विधिरित्युच्यते (तु०—मी० सू०शा० भा० १।४।४०। ३. कुर्यात्, क्रियेत, कर्तव्यं, भवेत् स्यात् इति पञ्चकम्। एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम्॥ मी० सू०-शा० भा० ४।३३।४. द्रव्यमन्त्रक्रियासमुच्चितं कर्म विधिरुच्यते (आ०श्रौ० ३।१०।१ देवत्रातः)।५. अज्ञातार्थज्ञापको वेदभागो विधिरुच्यते। यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति। स उत्पत्तिविधि-विनियोगविधि-अधिकारविधि-प्रयोगविधिभेदाच्चतुर्विधः। तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिः यथा 'अग्निहोत्रं जुहोति'। अङ्गप्रधानसंबन्धबोधको विधिः विनियोग विधिः यथा 'दध्ना जुहोति'। प्रयोग प्राशुभावबोधक विधिः प्रयोगविधिरुच्यते। स चाङ्गवाक्यैकतापन्नः प्रधानविधिरेव। अङ्गानां क्रमबोधको विधिर्वोच्यते। फल स्वाम्यबोधको विधिः अधिकारविधिः। (तु०— मी०को० पृ० ३५४२)।

**विधित्रैविध्य—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु अज्ञातज्ञापनात्मको विधिः त्रिविधः। तद्यथा-अपूर्वविधिः नियमविधिः परिसंख्याविधिश्च। विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥ तत्र अत्यन्ताप्राप्तविषयप्रापको विधिः अपूर्ववि-धिः। यथा— 'व्रीहीन् प्रोक्षति' अत्र प्रोक्षणं अत्यन्ताप्राप्तम्। पक्षे प्राप्तस्य अप्राप्तांश- पूरणफलको विधिः अपूर्वविधिः। यथा—'व्रीहीनवहन्ति' इति व्रीहीणां पुरोडाशद्वारा याग साधनतुषाविमोकसाधनीभूतावधातनखविदलनान्यतराक्षेपकतया अवघातस्य पक्षप्राप्तत्वात्। एकस्मिन् प्रधाने नियतप्राप्तस्य अङ्गद्वयस्य एकस्मिनङ्गे नियतप्राप्तस्य प्रधानद्वयसंबन्धस्य अन्यतरनिवृत्तिफलको विधिः परिसंख्याविधिः। यथा 'गृहमेधीयेष्टौ आज्यभागौ यजति' अत्र अतिदेशेन आज्यभाग तदितराङ्गयोः नियतप्राप्ततया तद्विधेः इतरनिवृत्तिफलकत्वात्। मी०को० पृ० ३५४२।

**विधुर—** (सा०) पत्नीरहितो यजमानः विधुर उच्यते। **द्र०** श्रौ०प०नि० पृ० ७२।

**विधृति—** इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. परि-

भोजनीयेभ्यो (दर्भेभ्यो) मध्यमबर्हिर्मुष्टेर्वा अन्यतो वा आहृतं सारं दर्भद्वयं विधृतिः भवति। विशेषेण धृतिः प्रस्तरादीनां धारणं यस्मिन् स विधृतिरुच्यते। द्वौ कुशौ च विधृती भवत इत्यर्थः। द्र० श्रौ०प०नि० पृ० २०।

**विधृति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे प्रथमैकान्नपञ्चाशद्रात्रसत्रं विधृतिसंज्ञकं भवति। तस्याहः क्लृप्तिः द्र० आ०श्रौ० ११।५।३।

**विध्यर्थ—** (सा०) अप्रवृत्तप्रवर्तनं विध्यर्थ उच्यते।

**विध्यादिविध्यन्त—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु कर्मसु १. भवति विध्यादिः विध्यन्तश्च। तत्र कर्मतत्संबन्धिफलादिकं च विध्यादिः। इतिकर्तव्यतादिधर्माश्च विध्यन्तः उच्यते। तत्र फलं नियमः कर्ता सङ्घश्चेति। फलादयोऽवगन्तव्याः। २. विधेरादिः विध्यादिः। यद् वाक्यमुपलभ्य पुरुषः कस्मिंश्चिदर्थे प्रवर्तते कुतश्चिद्वा निवर्तते स विधिः। तस्य 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः। विधेरन्तो विध्यन्तः। यद् वाक्य० स विधिः। विधीयतेऽनेनार्थः। विध्यन्तः प्रधानविधिवर्जितं पौरोडाशिकं ब्राह्मणं यथा 'दर्शपूर्णमासाभ्यां य यजेत' इत्यत्र। एष विध्यन्तः। मी०को० पृ० ३५६७; ७२।८२।

**विनाट—** (सा०) चर्ममयी भस्त्रा दृतिः विनाट उच्यते।

**विनियोगकारण—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु उक्तानि विनियोगकारणानि—१. श्रुतिः २ लिङ्गम् ३. वाक्यम् ४. प्रकरणम् ५. स्थानम् ६. समाख्यानम् इति षड् भवन्ति। तथा च—श्रुतिलिङ्ग-वाक्य-प्रकरण-स्थानम्-समाख्यानम् समवाये पारदौर्बल्यमर्थविप्रकर्षात् (मी०सू० ३।३।१४ मी०को० पृ० ३६४१ इति।) एषां पारदौर्बल्यमुक्तम्। (तु०—शाबरभाष्यम्) परस्मात् पूर्वः पूर्वः प्रबलः पूर्वः पूर्वः परं परं बाधते इत्यर्थः।

**विनियोजकप्रमाण—** द्र० विनियोगकारण—।

**विनियोगविधि—** (सा०) इष्टिपशुसोमयज्ञादिषु १. अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिरुच्यते। यथा दध्ना जुहोति (दध्ना होमं भावयेत्) इति। विनियोगविधेरङ्गत्वबोधकानि श्रुतिलिङ्ग-वाक्य-प्रकरण-स्थान-समाख्या इति षट् प्रमाणानि भवन्तीति विशेषोऽवधेयः। द्र० विधि—, विनियोगकारण—। २. विनियोगाभिधानात्मिका श्रुतिः विनियोगविधिः। द्र० मीको० पृ० ३६४१।

**विपरिहार—** (सा०) १. अन्योन्यस्य स्थानगमनं विपरिहार उच्यते। यथा (तु०—आ०श्रौ० ७।८।९।३ देवत्रातः)। २. विपरिहारो विपर्यासः (व्यत्ययः)। ३. विपरिहारोऽन्योन्यस्थानापत्तिः (ला०श्रौ० ७।६।११ अग्निस्वामी)।

**विपर्यास—** (सा०) इष्टिपशुसोमयज्ञादिषु १. प्रकृतेरन्यथाकरणं विपर्यासो विध्यपराधो भवति। (तु०—आ०श्रौ० १।१२।३३ देवत्रातः)। २. यदा द्वयोरन्योन्यविपर्ययः। व्युत्क्रमः, क्रमान्यत्वम्, आदिष्टस्य स्थाने यद्यन्यत् क्रियते तदा विपर्यासः (तु०—आ० श्रौ० १।१२।३२ देवत्रादिभाष्याणि)।

**विप्रुड्ढोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु

अभिषवणकाले ग्रहणकाले च स्कन्नानां सोमविन्दूनां स्कन्दनप्रत्यवायपरिहारार्थं 'यस्ते द्रप्सः' (मा० सं० ७ ।२६) इति मन्त्रेण अध्वर्युप्रतिप्रस्थात्रुद्गातृ-सुन्वन्तः (सुन्वन् यजमानः) समान्वारब्धाः यामाहुतिं सकृद्गृहीतेन आज्येन प्रचरण्या (जुह्वा) जुह्वति साऽऽहुतिः विप्रुड्ढोमसंज्ञा विप्रुड्ढोमो भवति । (तु०—का० श्रौ० ९ ।६ ।२५;२८ विद्याधरः)। अध्वर्युर्वा एको विप्रुड्ढोमं कुर्यात् नेतरे इति विशेषोऽवधेयः । (तु०—का० श्रौ० ९ ।६ ।२९ स एव)।

**विमित—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु देवयजनस्य पश्चिमभागे विमितं (यज्ञगृहं) कुर्वन्ति । तच्च प्राग्वंशं (यस्य वंशस्योपरि दक्षिणत उत्तरतश्च वंशाः प्रोता भवन्ति) तथा भूत पूर्वस्यां दिशि उच्चं सर्वादिग्द्वारोपेतं भवति । तदुक्तं परिशिष्टे—'विमितं चतुरस्रं स्याद् दशारत्नि प्रमाणतः । (तु०— का० श्रौ० ७ ।१ । १४-१८ विद्याधरः) । द्र० शाला— ।

**विराज्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विराट्संज्ञ एकाहः । स चाग्निष्टोमसंस्थो द्वन्द्वसोमेषु द्वितीयोऽन्नाद्यकामस्य भवति । द्वन्द्वो नाम सहभावः । तस्माद्राट्संज्ञकेनैकाहेन सह विराड् द्वितीयेऽहन्यवश्यमनुष्ठेयः । अतो राड्विराजौ द्वन्द्वसोमेषु प्रथमो द्वन्द्वः । आदावन्ते चात्र आग्नेयः पशुर्भवति इति विशेषोऽवधेयः ।

**विराज्—** (सा०) दशाक्षरः वादः विराट् विराट्संज्ञको भवति । द्वौ विराट्पादौ विंशत्यक्षरा द्विपदा विराड् भवति । त्रयो विराट् पादाः त्रिंशदक्षरात्रिपदाऽनुष्टुप् विराड् भवति । चत्वारो विराट्पादाः चत्वारिंशदक्षरा चतुष्टपदा पङ्क्तिः विराड् भवति । यथा (क) सोमयज्ञेषु प्रायणीयेष्टौ 'स्विष्टकृतः संयाज्ये त्रयस्त्रिंशदक्षरे विराजौ' (तु०— ऐ० ब्रा० १ ।१० आ०श्रौ० ५ ।१४ ।१० देवत्रातः) । (ख) इष्टियज्ञेषु हविर्यज्ञानां प्रथमे अग्न्याधेयकरणे, चतुर्थे आग्रयणप्रकरणे च स्विष्टकृतः 'प्रेद्धो अग्ने' (ऋ० ७ ।१ ।३), 'इमो अग्ने' (ऋ० ७ ।१ ।१८) इति याज्यानुवाक्ये विराट् छन्दस्कत्वाद् विराजौ उच्येते । द्र० श्रौ०प०नि० पृ० ७५ । उक्तं च 'प्रेद्धो अग्ने,' इमो अग्ने इति संयाज्ये विराजौ । विराजावित्युक्ते एते प्रतीयात्' इति (आ०श्रौ० २ ।१ ।३०) । अर्थादेते त्रिंशदक्षरे विराजावनुष्टुभौ ।

**विराज्—** (सा०) गायत्र्यादिषु सर्वच्छन्दःसु द्वाभ्यामक्षराभ्यां न्यूनानि छन्दांसि विराज उच्यन्ते ।

**विराज्—** (सा०) सोमयज्ञेषु साग्नचित्येषु अग्निचयनप्रकरणे उपधेया विराट् संज्ञका इष्टका विराज उच्यन्ते ।

**विरिफित—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य चतुर्थेऽहनि अन्यत्र च न्यूङ्खरूपेण विशेषक्लेशेन उच्चारितं विरिफितमुच्यते । द्र० न्यूङ्ख-न्यूङ्खदेश— ।

**विवध—** द्र० वीवध— ।

**विवास—** (सा०) रात्र्याः पश्चाद्भागो विवास इत्युच्यते (तु०— आ०श्रौ० २ ।१८९ नारायणः) द्र० वास— ।

**विवृत्ति—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १- द्वयोः स्वरयोः सन्ध्यभावः विवृत्तिरित्युच्यते । २. विवृत्तिः असन्धिः-'द्वयोस्तु स्वरयोर्मध्ये सन्धिर्यत्र न विद्यते । विवृत्ति-

स्तत्र विज्ञेया 'य ईशे' तत्र निदर्शनम् ॥ (तु०— शु० प्रा० ७ ।३) । **द्र०** अवग्रह— ।

**विवृद्धा विवृद्धस्तोमक्रतुषु माध्यन्दिनार्भवपवमानस्तोत्रयोरेव साम्नां आवापोद्वाप—** (सा०, औ०) सोमयज्ञेषु विवृद्धस्तोमका: अविवृद्धस्तोमक्रतव: सन्ति । तेषु माध्यन्दिनार्भवपवमानस्तोत्रयोरेव साम्नां आवाप उद्वापश्च भवति नान्यत्र । तत्र विवृद्धत्वे आवाप:, अविवृद्धत्वे उद्वाप: । अर्थात् विवृद्धस्तोमकेषु अनिवृत्ति: अविवृद्धस्तोमकेषु निवृत्तिरिति । पवमाने आवापोद्वापौ स्याताम् । कुत: ? अस्मिन्नेव तौ दृश्येते । त्रीणि ह वै यज्ञस्योदराणि, गायत्री बार्हत्यनुष्टुप् । अत्र ह्येवाऽऽवपन्ति, उत एवोद्वपन्ति । **द्र०** मी०को० पृ० ३६६८-६९) । तत्र विवृद्धस्तोमका अविवृद्धस्तोमकाश्च विकृतिरूपा: क्रतव: सन्ति । प्रकृतौ यत्र स्तोत्रे यावन्त: स्तोमा भवन्ति ततोऽधिका: स्तोमा: तत्र स्तोत्रे यत्र क्रतौ भवन्ति ते विवृद्धस्तोमका: क्रतव उच्यन्ते । **द्र०** मी०को० पृ० ३६७०; विकृतिरूपक्रतुभेद— ।

**विश्वजिच्छिल्प—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विश्वजिच्छिल्पसंज्ञक: चतुर्थ: साद्यस्क्र: एकाह: । स चाग्निष्टोमसंस्थ: । सद्य: दोक्षादिवसे एव क्रयप्रभृत्यमिषेवान्तं कर्म भवति यत्र स साद्यस्क्र इत्युच्यते । स द्विरात्रीय: त्र्यहीन: इति धानञ्जय: । दैक्षं प्रथममह: । क्रयप्रभृत्युपवसथान्तं द्वितीयमह: । सौत्यमुत्तमम् । (तु०— आ०क० ३ ।१४ वरदराज: तां० ब्रा० १६ ।१५) । तत्राग्नेय: सवनीय: पशुरेक: । साद्यस्क्राश्चत्वारो भवन्तीति विशेष: ।

**विश्वजित्—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे रात्रिकेष्वह:सु च विंशमहरतिरात्रसंस्थो विश्वजिदेकाह उच्यते । सोऽभिजिद्वत् सर्वपृष्ठसर्वस्तोमोऽसर्वपृष्ठा सर्वस्तोमश्चेति द्विविधो भवति । पृष्ठ्यषडहस्य षट्स्वह:सु विहितानि यानि रथन्तर-बृहद् वैरूपवैराजशाक्वरदैवतानि षट् सामानि, त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशा: विहिता: षट् स्तोमाश्चेति सर्वाणि सामानि स्तोमाश्च सर्वे माध्यन्दिनसवने यस्मिन् विश्वजित्क्रतौ स सर्वपृष्ठसर्वस्तोम: तदभावेऽसर्वपृष्ठासर्वस्तोमो भवति । एवं पृष्ठवन्तोऽपृष्ठवन्तश्चेति होत्रका: सन्तीति होत्रकद्वैविध्येन द्विविधो विश्वजित् सर्वपृष्ठोऽसर्वपृष्ठश्च (तु०—आ०श्रौ० ७ ।२ ।११; ८ ।७ ।६ नारायण:) अस्मिन् स्वतन्त्रे अतिरात्रसंस्थे एकाहे तृतीयसवने होतुर्होत्रकाणां च शिल्पशस्त्राणि सन्ति । तेषु होता नाभानेदिष्टं (इदमित्था, ये यज्ञेन ऋ० १० ।६१-६२ इति सूक्तद्वयं), मैत्रावरुणो वालखिल्या: (ऋ० ८ ।४९-५४), ब्राह्मणाच्छंसी सुकीर्तिं (ऋ० १० । १३१) वृषा कपि च (ऋ० १० ।८६), अच्छावाक: एवयामरुतम् (ऋ० ५ ।८७) इति होत्रादय: चत्वारि शिल्पानि शंसन्ति । तानि च पृष्ठ्यषडहस्य षष्ठात् उक्थ्यसंस्थादह्न: तृतीयसवनादतिदिश्यन्ते । अत्र सवनीय: पशुरेक एव । अस्य अभिजिता एकाहेन सह पाक्षिकमनुष्ठानम् । (तु०— ला०श्रौ० ८ ।११९) अस्य सर्ववेदस-(सर्वस्व)-दक्षिणा च सहस्रदक्षिणया सह विकल्प्यते चेति विशेषोऽनुसन्धेय: (तु०— तां० ब्रा० सा० १६ ।६ ।१) । असर्वपृष्ठस्तु होत्रकाणां (मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां) स्तोत्रेषु शाक्वरवैरूपरैवतानि त्रीणि पृष्ठानि सामानि यस्मिन् विश्वजिति सोऽसर्वपृष्ठो विश्वजिदुच्यते (तु०— आ०श्रौ० ८ ।७ ।५-६ नारायण:) ।

**विश्वजिति बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विश्वजिदतिरात्रे एकाहे प्रातःसवने बहिष्पवमानस्य स्तोत्रीया ऋचः—'उप त्वा जामयो गिरः' (साम० १५७०) इति प्रथमा स्तोत्रीया। 'जनीयन्तोन्यग्रवः' (साम० १४६०) इति द्वितीया। 'उत नः प्रिया' (साम० १४६१) इति तृतीया। 'तत्सतितुर्वरेण्यम्' (साम० १४६२) इति चतुर्थी। 'सोमानां स्वरणम्' (साम० १४६३) इति पञ्चमी। 'अग्न आयूंषि पवसे' (साम० १४६४) इति षष्ठी। 'पवमानस्य ते वयम्' (साम० ७८७-८९) इति तिस्र ऋचः सप्तम्यष्टमी नवमी च भवन्ति। इति बहिष्पवमानस्य नव स्तोत्रीयाः। सामानितासु षट्सु प्रथमायां रथन्तरं साम, द्वितीयायां बृहत्, तृतीयायां वैरूपं, चतुर्थ्यां वैराजं, पञ्चम्यां शाक्वरं, षष्ठ्यां रैवतमिति रथन्तरादीनि षट्सामानि योजयति (तां० ब्रा० सा० १६।५।१-१९)। स्तोम—। त्रिवृत्। विष्टुतिः—द्र० त्रिवृत्स्तोमविष्टुति—।

**विश्वजिति आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विश्वजिति प्रा० स० आज्यस्तोत्राणां स्तोत्रीयतृचाः—'सुषमिद्धो न आवह' (साम० १३४७-५०) इति होतुः, 'ता नः शक्तम्' (साम० १४६५-६७) इति मैत्रावरुणस्य, 'युञ्जन्ति ब्रध्नम्' (साम० १४६८-७०) इति ब्राह्मणाच्छंसिनः, 'तमीडिष्वयोऽर्चिषा' (साम० ११४९-५१) इत्यच्छावाकस्येति चत्वारः स्तोत्रीयतृचाश्चतुर्णामाज्यस्तोत्राणां भवन्ति। (तु०—तां० ब्रा० सा० १६५२१-२२) आ०क० २।७।२ वरदराजः)।

**विश्वजिति होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...प्रकरणे विश्वजिति प्रा० स० होतुराज्यशस्त्रस्य 'अग्निं नरो दीधितिभिः' (ऋ० ७।१।१-२५) इति सूक्तमाज्यं भवति। (तु०—आ०श्रौ० ८।७।१ नारायणः)। शिष्टमग्निष्टोमे होतुराज्यवद् द्र०।

**विश्वजिति होतुः प्रउगशस्त्र—** (हौ०) अग्निष्टोमे होतुः प्रउगशस्त्रवद् द्रष्टव्यम्।

**विश्वजिति सर्वस्तोमसर्वपृष्ठवति प्रातःसवने मैत्रावरुणशस्त्र—** द्र० चतुर्विंशे मैत्रावरुणशस्त्र—। (तु०—आ०श्रौ० ७।२।२-१५)।

**विश्वजितिसर्वस्तोम सर्वपृष्ठवति प्रातःसवने ब्राह्मणाच्छंसिशस्त्र—** द्र० चतुर्विंशे ब्राह्मणाच्छंसिशस्त्र—(तु०—आ०श्रौ०७।२। २-१५)।

**विश्वजिति सर्वस्तोमसर्वपृष्ठवति प्रातःसवने अच्छावाकशस्त्र—** द्र० चतुर्विंशे अच्छावाकशस्त्र— (तु०—आ०श्रौ० ७।२।२-१५)।

**विश्वजिति पृष्ठस्तोत्र —** (औ०) सोमयज्ञेषु प्रकृतिभूत...करणे विश्वजिदतिरात्रे एकाहे मा० स० चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयतृचाः—'पिबा सोम इन्द्र' (साम० ९२७-२९) इति होतुः प्रथमः वैराजपृष्ठस्तोत्रीयतृचः। होत्रकाणां पृष्ठेषु. 'विदा मघवन् विदा' (साम० ६४१-४९) इति महानाम्न्याः मैत्रावरुणस्य द्वितीयः शाक्वरपृष्ठस्तोत्रीयतृचः। 'प्रो० स्मै पुरोरथम्' (साम० १८०१-२) इति ब्राह्मणाच्छंसिनः तृतीयः वैरूपपृष्ठप्रगाथतृचः। 'रेवतीर्न सधमादे' (साम० १०८४-८६) इति अच्छावाकस्य चतुर्थः रैवतपृष्ठस्तोत्रीयतृचः। इति पृष्ठस्तोत्रसामानि बिधनवन्ति

भवन्ति। ततः 'त्वमग्ने यज्ञानाम्' (साम० १४७४-७६) इति तिसृषु बृहत् अग्निष्टोमसामत्वेन कुर्यात्। तदाह सायणः माध्यन्दिनपवमाने रथन्तरं साम (प्रथमं) बृहत् अग्निष्टोम (उत्तमम्)। इतराणि चत्वारि पृष्ठस्तोत्रेषु प्रयोज्यानि। अर्थात् माध्यन्दिनपवमाने 'परीतो षिञ्चता सुतम्' (साम० १३१३-१५) इति तिसृषु रथन्तरं कार्यम्। वैराजं च होतुः पृष्ठे, शाक्वरं मैत्रावरुणपृष्ठे, वैरूपं ब्रह्मपृष्ठे ( ब्राह्मणाच्छंसि पृष्ठे), रैवतमच्छावाकपृष्ठे, 'त्वमग्ने यज्ञानाम्' इति तिसृषु बृहदग्निष्टोमसामत्वेन कार्यम् (तु०— तां० ब्रा० १६।५।२४; आ०क० २।७।४; ३।५५-६; आ०श्रौ० ८।७। ३५।

**विश्वजिति माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...प्रकरणे विश्वजिदतिरात्रे एकाहे माध्यन्दिनपवमानस्तोत्रस्य स्तोत्रीयतृचाः—'अस्य प्रत्नामनुद्युतम्' (साम० ७५५-५७) इति प्रथमस्तृचः। 'परीतो षिञ्चता सुतम्' (साम० १३१३-१५) इति द्वितीयस्तृचः। 'अयं सोम इन्द्र' (साम० १४७१-७३) इति तृतीयस्तृचः। सामानि—गायत्रं, आमहीयं इति द्वे सामनी प्रथमे तृचे। द्वितीयतृचे कालेयमेकस्याम् रथन्तरं तिसृषु, दैर्घतमसं तिसृषु, यौधाजयमेकस्याम् इति चत्वारि सामानि। तृतीये तृचे पार्थमेकं साम इति सामानि। स्तोमाः—चतुरावृत्ताः त्रिश्रयणाः द्र० २ विश्वजित्। विष्टुतिः। (तु०—आ०क० २।७।३; ३।५।७ वरदराजः)।

**विश्वजिति होतुर्मरुत्वतीयशस्त्र—** (हौ०) द्र० चतुर्विंशे होतुर्मरुत्वतीयशस्त्र—। तदुक्तम् 'चतुर्विंशेन माध्यन्दिनः' (आ०श्रौ० ८।७।२)।

**विश्वजिति होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...प्रकरणे विश्वजिदतिरात्रे एकाहे माध्यन्दिनसवनेहोतुर्निष्केवल्यशस्त्रं द्र० चतुर्विंशे होतुर्निष्केवल्यशस्त्र—। एतावांस्तु विशेषः योनिशंसने 'यद्याव इन्द्र ते शतम्' (साम० २७८) इति वैरूपयोन्याः प्राक् बृहत्पृष्ठयोनिशंसनादूर्ध्वं होतुः पृष्ठस्थाने वैराजं साम सन्यूङ्खपृष्ठं भवति। तस्य स्तोत्रियस्तृचः—'पिबा सोममिन्द्र मन्दतु' (ऋ० ७।२२।१३)। 'श्रुधी हवं विपिपानस्य (ऋ० ७।२२।४६)। तासां षण्णामृचां मध्यमेषु 'पादेषु न्यूङ्खः कर्तव्यः। न्यूङ्खो नाम षोडश ओकाराणां निनतरां अत्यन्तविषमप्रकारेणोच्चारणम् तदुच्चारणप्रकारो यथा— उक्तानां षण्णां त्रिपदानां विराजां (त्रिंशदक्षरानुष्टुभां) मध्यमेषु पादेषु ये आप्ये द्वे अक्षरे तयोराद्यं वर्जयित्वा द्वितीयस्याचः स्थाने ओकारं त्रिमात्रं (प्लुतं) उदात्तस्वरविशिष्टं कृत्वा त्रिवारमुच्चारयेत्। तत्र प्रथमवारं संहितास्थमचं त्रिमात्रं कृत्वा ततः परं अपरिमितान् पञ्च वा अधिकान् अर्धौकारान् पठेत्। ततो द्वितीयवारं तमेव ओकारं त्रिमात्रं पठित्वा पुनः पञ्च अर्धौकारान् पठेत्। ततस्तृतीयवारं पुनरपि तमेवौकारं त्रिमात्रं पठित्वा पुनस्त्रीनर्धौकारान् पठेत्। एवं च षोडशसु त्रयः त्रिमात्राः उदात्ता दीर्घा ओकाराः, त्रयोदश अनुदात्ता ह्रस्वा अर्धौकाराः उच्चार्यन्ते। ततः प्रतिगरः। तद्यथा 'पिबा सोममिन्द्र मन्दतु त्वा' इति प्रथमपादमुच्चार्य द्वितीयपादस्य 'यं ते' इत्यस्य स्थाने यं तो३ ऊँ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ ऊँ ओ ३ ऊँ ऊँ ऊँ सुषाव हर्यश्वाद्रो३मोथामो दैवो३म्। (इति द्वितीयपादाः)। सोतुर्बाहुभ्यां सुयतो नार्वो३म्। इति तृतीय-पादः। एवमुत्तरत्र पञ्चानां त्रिपदानां विराजां द्वितीयेषु पादेषु न्यूङ्ख उन्नेयः।

(तु०—आ०श्रौ० ७।११।३०-३१; ८।७।२।४ नारायणः)। द्र० न्युङ्खन्युङ्खस्थान—, प्रतिगर—।

**विश्वजिति मा० सवने मैत्रावरुणशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत.....प्रकरणे विश्वजिदतिरात्रे एकाहे माध्यन्दिनसवने मैत्रावरुण- शस्त्रस्य शाक्वरपृष्ठस्थाने स्तोत्रियः— 'कयानश्चित्र आ' (साम० १६९, ऋ० ४।३१।१) इति वामदेव्य- योनिः। अनुरूपः 'अभी न आ' (ऋ० ४।३।४६) इति (तु०—आ०श्रौ० ८।७।५९ नारायणः)। शिष्टं चतुर्विंशे मा० स० मैत्रावरुणशस्त्रवद् द्रष्टव्यम्—।

**विश्वजिति मा० सवने ब्राह्मणाच्छंसिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...सवने ब्राह्मणाच्छंसिशस्त्रस्य वैरूपपृष्ठस्थाने स्तोत्रियः 'तं वो दस्म' (साम० ३३६; ऋ० ८।८८।१), 'अभि प्र वः' (साम० २३५; ऋ० ८।४।९।१) इति श्येतनौधसयोनी। अनुरूपाः—'योद्धासि क्रत्वा (ऋ० ८।८८।४६), 'आ त्वा सुतासः' (ऋ० ८।४९।३-४) इति। शिष्टं चतुर्विंशे मा० स० ब्राह्मणाच्छंसिशस्त्रवद्द्रष्टव्यम्। ( तु०—आ०श्रौ० ८।७।५९ नारायणः)।

**विश्वजिति मा० स० अच्छावाकशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...सवने अच्छावाकशस्त्रस्य रैवतपृष्ठस्थाने स्तोत्रियः- 'तरोभिर्वो विदद्वसुम्' (साम० २३७; ऋ० ८।६६।१) इति कालेययोनिः। अनुरूपः—'यः शक्रोः मृक्षः' (ऋ० २।८।६६।३४) इति प्रगाथः। शिष्टं चतुर्विंशे मा० स० अच्छावाकशस्त्रवद् द्रष्टव्यम्। (तु०—आ०श्रौ० ८।७। ५९) नारायणः। अत्र होत्रकाः पृष्ठस्थाने योनीः शंसन्तीति विशेषोऽवधेयः।

**विश्वजिति आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृति- भूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विश्वजिदतिरात्रे एकाहे आर्भवपवमानस्तोत्रस्य स्तोत्रीयतृचाः— 'परि स्वानो गिरिष्ठाः' (साम० १०९३-९५) इति प्रथमस्तृचः। 'पवस्व मधुमत्तमः' (साम० ६९२-९३) इति द्वितीयप्रगाथतृच। 'इन्द्रमच्छ सुता इमे' (साम० ६९४-९६) इति तृतीयतृचः। 'पर्यूषु प्र धन्व' (साम० १३६४-६६)। चतुर्थतृचः। 'पुरोगिती वो अन्धसः' (साम० ६९७-९९) इति पञ्चमतृचः। 'परि प्र धन्व' (साम० १३६७-६९) इति तिस्रो द्विपदाः। 'सूर्यस्येव' (साम० १३७०-७) इति सूर्यवत्यः। सामानि— प्रथमे तृचे गायत्रसंहिते द्वे सामनी। द्वितीये तृतीये च सत्रासाहीय श्रुध्ये द्वे सामनी। चतुर्थे वामदेव्यमेकम्। पञ्चमे तृचे आन्धीगवमेकस्याम्, गौरीवितमेकस्याम्, यद्वाहिष्ठीयमेकस्याम्, यज्ञायज्ञायज्ञीयं तिसृषु। द्विपदासु वारवन्तीयम्। सूर्यवतीषु कावमिति एकादशसामानि स्तोमः—त्रिणवः स्तोमः। द्र० आ०क० २।७।७;३।५।५ वरदराजः। इति।

**विश्वजिति अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने 'त्वमग्ने यज्ञानां होता' (सा० १४७४-७६) इति तृचे बृहदग्निष्टोमसाम (स्तोत्रं) कर्तव्यम्। द्र० तां० ब्रा० सा० १६।५।२४; आ०क० ३।५।५ वरदराजः। इत्यग्निष्टोमस्तोत्रम्। एवञ्च वैश्वदेवशस्त्रादूर्ध्वमनुष्ठेयम्।

**विश्वजिति होतुर्वैश्वदेवशस्त्र —** (हौ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने होतुर्वैश्वदेवशस्त्रं पृष्ठ्यषडहस्य षष्ठेऽहनि होतुर्वैश्वदेवशस्त्रवद् द्रष्ट-

व्यम् । तत्र प्रतिपदनुचरौ 'तत्सवितुर्वृणीमहे' (ऋ० ५ ।८२ ।१३) इति प्रतिपत्तृचः, 'अद्या नो देव सवितः' (ऋ० ५ ।८२ ।४-६) इत्यनुचरतृचः इत्यैकाहिकौ (आ०श्रौ० ५ ।१८ ।५) न तु पार्ष्टिकौ 'अभि त्यम्' (आ०श्रौ० ८ ।७ ।११) इत्येतौ । इति विशेषोऽवगन्तव्यः ।

**विश्वजिति तृतीयसवने होतुराग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने होतुराग्निमारुतशस्त्रं पृष्ठ्यषडहस्य षष्ठेऽहनि होतुराग्निमारुतशस्त्रवद् द्रष्टव्यम् ।

**विश्वजिति उक्थस्तोत्र —** (औ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने त्रयाणामुक्थानां स्तोत्रीयास्तृचाः 'एह्यू षु ब्रवाणि ते' (साम० ७०५-७) इति मैत्रावरुणस्य प्रथमस्तृचः । 'वयमु त्वामपूर्व्य' (साम० ७०८-९) इति ब्राह्मणाच्छंसिनो द्वितीयः प्रगाथतृचः । 'अद्या हीन्द्र' (साम० ७१०-१२) इत्यच्छावाकस्य तृतीयस्तृचः । सामानि प्रथमे तृचे साकमश्वं साम । द्वितीये तृचे सौभरं साम । तृतीयं नार्मेधं साम । इति त्रीणि सामान्युक्थस्तोत्राणि कुर्युः । स्तोमः—एकविंशः स्तोमः । द्र० आ०क० उपोद्धातः (पृ० ५३; ३ ।५ ।५ वरदराजः) ।

**विश्वजिति उक्थ्यशस्त्र —** (हौ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृ० सवने उक्थ्यशस्त्राणि उक्थ्ये मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शस्त्रवद् द्रष्टव्यानि ।

**विश्वजिति षोडशिस्तोत्र—**(औ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने षोडशिस्तोत्रस्य स्तोत्रीयस्तृचः 'इन्द्र जुषस्व प्र' (साम० ९५२-५४) । सामतत्र गौरीवितं साम । स्तोमः—एकविंशः स्तोमः । द्र० आ०क० उपो० पृ० ५५ वरदराजः ।

**विश्वजिति षोडशिशस्त्र—** द्र० षोडशिशस्त्र— ।

**विश्वजिति अतिरात्रस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने अतिरात्रस्य (रात्रेः) अषोडशि पक्षे पर्यायस्तोत्रीयास्तृचाः—'पान्तमा' (साम० ७१३-१५) प्रथमस्तृचः । 'प्र व इन्द्राय (साम० ७१६-१८) द्वितीयतृचः । 'वयमु त्वा' (साम० ७१९-२१) इति तृतीयतृचः । 'इन्द्राय मद्वने' (साम० ७२२-२४) इति चतुर्थस्तृचः । इति चत्वारः प्रथमपर्यायतृचाः । 'अयं त इन्द्र' (साम० ७२५-२७) इति प्रथमस्तृचः । 'आ तू न इन्द्र' (साम० ७२८-३०) द्वितीयतृचः । 'अभि त्वा वृषभा' (साम० ७३१-३३) तृतीयतृचः । 'इदं वसो सुतम्' (साम० ७३४-३६) चतुर्थतृचः । इति चत्वारो द्वितीयपर्यायतृचाः । 'इदं ह्यन्वोजसा' (साम० ७३७-३९) इति प्रथमस्तृचः । 'आ त्वेता' (साम० ७४०-४२) इति द्वितीयतृचः । 'योगे योगे' (साम० ७४-४५) तृतीयतृचः । 'इन्द्र सुतेषु' (सा० ७४६-४८) इति चतुर्थतृचः । इति चत्वारस्तृतीयपर्यायतृचाः । तदेवं त्रिषु पर्यायेषु द्वादश स्तोत्रीयास्तृचाः संपन्नाः । सामानिप्रथमपर्यास्य प्रथमे तृचे वैतहव्यं साम । द्वितीये शाक्त्यं साम । तृतीये काण्वं साम । चतुर्थे तृचे श्रौतकक्षं साम । इति चत्वारि सामानि । मध्यमपर्यायस्य प्रथमे तृचे दैवोदासं साम । और्ध्वसद्मनं वा साम । द्वितीये अकूपारं साम । तृतीये आर्षभं साम । चनुर्थे गारं साम । इति चत्वारि सामानि । उत्तमपर्यायस्य प्रथमे तृचे माधुच्छन्दसं साम । द्वितीये दैवातिथं साम । तृतीये सौमेधं साम । चतुर्थे कौत्सं साम (इति त्रिषु पर्यायेषु द्वादश

सामानि भवन्ति । द्र० आ०क० उपो० पृ० ५५-५६ । स्तोमः—पञ्चदशस्तोमः । विष्टुतिः—पञ्चपञ्चिनी ।

**विश्वजिति सन्धिस्तोत्र —** (औ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने सन्धिस्तोत्रस्य (सन्धेः) स्तोत्रीयास्तृचाः—'एना वो अग्निम्' (साम० ७४९-५०) इति प्रथमः प्रगाथतृचः । 'प्रत्यु अदर्शि' (साम० ७५१-५२) इति द्वितीयः प्रगाथतृचः । 'इमा उ वाम्' (साम० ७५३-५४) इति तृतीयः प्रगाथतृचः । इति त्रयः प्रगाथतृचाः । साम-त्रिषु रथन्तरं साम । स्तोमः—त्रिवृत्स्तोमः । तदाह—वरदराजः—'एनाप्रत्यु-इमा उ वाम्' इति प्रत्यृचं हिं कृत्य त्रिवृता रथन्तरेण सन्धिस्तोत्रं कुर्युः (तु०—आ०क० उपो० पृ० ५७) ।

**विश्वजिति अतिरात्रशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...विश्वजिदतिरात्रे एकाहे तृतीयसवने विश्वजिति अतिरात्रशस्त्रं अतिरात्रशस्त्रवद् द्रष्टव्यम् ।

**विश्वजित्—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहविकृतौ अयनसत्रप्रकरणे गवामयने उत्तरपक्षसि प्रतिलोमः (आवृत्त) स्वरसामोत्तरवर्तिसात्रिकेष्वहःसु विंशं बृहदग्निष्टोमसंस्थमहः विश्वजिदित्युच्यते । स च गवामयने विषुवतोऽह्न ऊर्ध्वमुत्तरपक्षसि सप्तमे मासे आवृत्तानां त्रयाणां स्वरसाम्नामुपरिष्टात् चतुर्थमहर्भवति । (तु०— ऐ० ब्रा० सा० ६ ।३१) । तस्य बृहदग्निष्टोमान्तः सर्वो विध्यन्तः १. विश्वजिद्वज्ज्ञेयः । एतावांस्तु विशेषोऽवधेयः । १. विश्वजिदतिरात्रवदस्यापि शिल्पशंसनेप्राप्ते अग्निष्टोम संस्थत्वात् तृतीयसवने होत्रकाणां शस्त्राभावात् मैत्रावरुणब्राह्मणाच्छंस्यच्छावाका होत्रकाः १ विश्वजिदुक्तान्येव स्वानि स्वानि त्रीणि शिल्पानि माध्यन्दिनसवने शंसन्ति । होता च तृतीयसवने आग्निमारुतशस्त्रमध्ये स्वं शिल्पं शंसति । एवमेव अस्मिन् विश्वजिति स्तोत्रस्तोमानां पुनरावृत्तौ त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः सर्वे स्तोमाः चतुरावृत्ताः त्रिप्रणया त्रिषु सवनेषु सर्वेषु स्तोत्रेषु प्रयुज्यन्ते । तद्यथा—त्रिवृद् बहिष्पवमानम् । पञ्चदशं होतुराज्यम् । सप्तदशं मैत्रावरुणस्य । एकविंशब्राह्मणाच्छंसिनः । इति प्रथमः प्रणयः । सप्तदशमच्छावाकस्य । सप्तदशो माध्यन्दिनः पवमानः । एकविंशं होतुः पृष्ठम् । त्रिणवं मैत्रावरुणस्य । इति द्वितीयः । सप्तदशं ब्राह्मणाच्छंसिनः । एकविंशमच्छावाकस्य त्रिणव आर्भवः । त्रयस्त्रिंशोऽग्निष्टोमः । इति तृतीयः प्रणयः । एवं चतुरावृत्ताः स्तोमाः त्रिप्रणयाः । तदुक्तम्—'सर्वस्तोमस्य सतः चतुरावृत्ताः स्तोमाः त्रिःप्रणयाः' (तु०— आ०क० २ ।७ ।७ वरदराजः) । ब्राह्मणे च 'चतुरस्त्रिवृद् विश्वजितः प्रणयति चतुरः पञ्चदशः चतुरः सप्तदशः ते द्वादश संपद्यन्ते ।' अर्थात् गवामयनाङ्गभूतस्यास्य सांवत्सरिकस्य विश्वजितः बहिष्पवमानादीनि चत्वारि स्तोत्राणि त्रिवृत्स्तोमः निवर्तयति । तथा पञ्चदशः तदनन्तरभावीनि चत्वारि स्तोत्राणि । सप्तदशोऽप्येवम् । तथा च द्वादश स्तोत्राणि सम्पद्यन्ते । (तु०— तां० ब्रा० सा० १६ ।४ ।१३) । इति प्रथमाद् विश्वजितः द्वितीये विश्वजिति विशेषोऽवगन्तव्यः ।

**विश्वजिदतिरात्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे द्व्यहोऽहीनः विश्वजिदतिरात्रः पशुकामस्य । तस्मिन् विश्वजिति अतिरात्रे

षोडशदीक्षादिनानि द्वादशोपसद: ज्योति:, गौ: इति द्वे सुत्यादिने मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते। अहीनद्वादशाहव-र्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। (तु०— का० श्रौ० २३। १।१८)। **द्र०** अहीनाहर्गणसत्राहर्गणा-नामङ्गप्रधानविधि—, अहीनप्रकृति—।

**विश्वज्योतिस्—**(अव्य०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे विश्वज्योति: संज्ञक: तृतीय: साहस्र एकाह:। स उक्थ्यसंस्थ:। आग्नेयैन्द्राग्नौ सवनीयौ द्वौ पशू। अस्यैकैकं सवनं द्वौ द्वौ स्तोमौ वहत:। त्रिवृद् बहिष्पवमानस्य स्तोम:, पञ्चदश आज्यानाम् इति द्वौ स्तोमौ प्रात: सवनं वहत:। सप्तदशपञ्चविंशौ माध्यन्दिनं माध्यन्दिनं सवनम्, । चतुर्विंशे-कविंशौ तृतीयसवनम्। शिष्टमौद्रात्रं आर्षे-यकल्पे (३।९) द्रष्टव्यम्।

**विश्वज्योतिस्—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसा-धने विश्वज्योति: संज्ञका: त्र्यालिखिता: इयं प्रथमा इयं द्वितीया इयं तृतीया इति पृथक् लक्षणेन लक्षितास्तिस्र इष्टका विश्वज्यो-तिष इत्युच्यन्ते। यजमानेन निष्पादितास्ता रेत: सिग्भ्यां पुरस्तादनूके अध्वर्युरुदङ्मुख उपदधाति। विश्वशब्दोपेतैर्मन्त्रैरुपधेय-त्वादिष्टका विश्वज्योतिष इति। (तु०— तै० सं० सा० ४।४।६)।

**विश्वरूपा—** (सा०, औ०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिष्वग्नि-ष्टोमसंस्थेषु चैकाहाहीनसत्रेषु १. सुत्येऽहनि प्रातरनुवाकात्पूर्वं यजमानो 'विश्वरूपा गाय' इत्युद्गातारं ब्रूयात्। 'युञ्जे वाचम्' (साम० १८२९) 'गायत्रं त्रैष्टुभम्' (साम० १८३०) इति द्वे ऋचौ एका पञ्चदा पङ्क्ति: सती विश्वरूपा: इत्युच्यन्ते। १. 'युञ्जे वाचम्' (साम० १८२९-३०) इति प्रगथ-नात् तिसृणां स्तोत्रीयाणां विश्वरूपा इत्य-भिधानम्। (तु०— द्रा०श्रौ० २।४ धन्वी)।

**विश्वरूपागान —** (औ०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे ज्योतिष्टोमे १. सुत्येऽहनि यदि प्रातरनुवाकात् पूर्वं यज-मानो 'विश्वरूपागाय' इत्युद्गातारं ब्रूयात्। विश्वरूपागानाप्रत्याख्यानानन्तरमुद्गाता यजमानेन पुन: प्रत्युक्त: प्रातरनुवाकायोप-विष्टं होतारं पूर्वेण गत्वा दक्षिणस्य हविर्धा-नस्योत्तरं चक्रमभ्यपश्रयमाण: उदङ्मुख उपविशेत्। यजमानश्च उद्गातु: पुरस्तात् प्रत्यङ्मुख:। तत उद्गाता 'युञ्जे वाचम्' (साम० १८२९-३०) इत्येकस्यां पङ्क्तौ गायत्रं (साम) ओङ्कारेण आर्चिकस्वरेण (ऋग्वेदीयस्वरेण) मध्यमया वाचा त्रि: गायेत्। तद्यथा—'युञ्जे वाचं शतपदीम्(१) गाये सहस्रवर्तनि (२) गायत्रं त्रैष्टुभं जगत् (३) विश्वारूपाणि संभृतां (४) देवा ओका ँसि चा १,२१२। हिम्। आ २। का इरो। आ २३४५। इति (**द्र०** आ०क० उपो० पृ० २०-२१ वरदराज:)। २. सुत्येऽहनि यदि प्रातरनुवाकात् पूर्वं यजमानो 'विश्वरूपा गाय' इत्युद्गातारं ब्रूयात्। यजमानेनैवमुक्त उद्गाता विश्वरूपाणां गानं प्रत्याचक्षीत। यजमान: 'गाय' इति यदा पुनर्ब्रूयात्तदा प्रात-रनुवाकायोपविष्टं होतारं पूर्वेण गत्वा हवि-र्धानशकटयोरन्तराले पूर्वेण चक्रयो: पूर्वे प्रदेशे उदङ्मुखस्तूष्णीमुपविशेत् उद्गाता। उद्गातु: पूर्वप्रदेशे यजमान: प्रत्यङ्मुख: उप-विशेत् तूष्णीम्। तत उद्गाता 'युञ्जे वाचं शतपदीम्, गाये सहस्रवर्तनि, गायत्रं त्रैष्टुभं

जगत्, विश्वारूपाणि सम्भृता, देवा ओकांसि चक्रिरे' (साम० १८२९-३०) इत्येकस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानंजय्य:। स्वाध्यायस्वरेण (मध्यमया वाचा) मनसैव यजमान उपस्वरेत्। युञ्जे वाचमित्येतस्या ऋचस्त्रिषु त्रिषु पादेषु गायत्रं गायेत् न पञ्चसु पादेष्विति गौतम:। अथवा प्रगाथं कृत्वा गायेत्। तद्यथा— पादत्रये गीत्वा पश्चात् तृतीयं पादं द्विरभ्यस्य चतुर्थेन पादेन सह गायत्रीं कृत्वा गायेत्। एवं चतुर्थं पादं द्विरभ्यस्य पञ्चमेन सह गायत्रीं कृत्वा गायेत्। इति विश्वरूपागानमुच्यते विश्वरूपा: ज्योतिष्टोमात् प्रकृतिभूतादग्निष्टोमसंस्थादन्यत्र न भवेयु:। (तु०— ला०श्रौ० १।८।५-११।१६ मुकुन्द शर्मा)। तत्र यदि विश्वरूपा: गायेत् तत: ज्योतींष्यपि गायेत्। द्वयो: सहचरत्वात्। द्र० ज्योतिर्गान—।

**विश्वामित्रचतूरात्रस्याह: क्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे विश्वामित्रं संज्ञकश्चतुरहोऽहीन:। तस्मिन् विश्वामित्रे चतूरात्रे द्वादश उपसद्दिनानि, अभिप्लवषडहस्याद्यानि चत्वारि सुत्यादिनानि (तु०— आ०श्रौ० १०।१।१६), चतुर्दश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते। अहीनद्वादशाहवर्जितानामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात्। द्र० अहीनार्हगणे सत्राहर्गणानामङ्गप्रधानविधि—, अहीन—, अहीनसत्रशस्योपाय—।

**विवध—** द्र० वीवध—।

**विषुवत्—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने १. गवामयनस्य पूर्वोत्तरपक्षयो: मध्यवर्ती सात्रिकेष्वह:सु एकोनविंश संख्याकोऽग्निष्टोमसंस्थ एकाहो विषुवदुच्यते। २. गवामयनसंवत्सरसत्रस्य ये पूर्वे षण्मासा ये चोत्तरे षण्मासा: तयोर्मासषट्कयोरुभयतो वर्तमानयोर्मध्ये विषुवन्नामकमेतदहरनुष्ठेयम्। एतच्च मासषट्कयोरन्तर्भवदपि षष्ट्यधिकशतत्रयाणामह्नां मध्ये न गण्यते किन्त्वतिरिक्तमेवैतदह:। तथा चाह आश्वालायन: 'अथ विषुवानेकविंशो न पूर्वस्य पक्षसो नोत्तरस्य' (आ०श्रौ० ११।७।७-८) छन्दोगब्राह्मणे 'सप्तम्यो हिंकरोति' (तां० ब्रां० २।१४) इत्यादि विष्टुतिभिर्विहितो योऽयमेकविंशस्तोमस्तेनैव स्तोमेनास्य विषुवत: सर्वस्तोमताप्रवृत्तेरेकविंशत्वम्। अस्मिन्नहनि सर्वेषु स्तोत्रेषु एकविंश एव स्तोमो भवति। तदुक्तम्—'एकविंशो भवति' (तां० ब्रा० सा० ४।६।३)। ३. दिवैव कीर्तनीयं मन्त्रजातं यस्मिन्नहनि तदेतदहर्दिवाकीर्त्यमित्युच्यते। ४. दिवाकीर्त्यानि भ्राजाभ्राजमहादिवाकीर्त्यविकर्णभासाख्यानि पञ्च सामानि यस्मिन् प्रयुज्जन्ते स 'दिवाकीर्त्य'सामा च भवति' (तां० सा० ४।६।१३) इति दिवाकीर्त्यसामा च भवति। ४. अस्य विषुवत: पूर्वभागे (पूर्वपक्षस्यान्तिमे षष्ठे मासि) आरोहक्रमेण त्रीणि स्वरसामाख्यानि अहानि, तेभ्य: पूर्वमभिजिदाख्यमेकमह:, तत: पूर्वं पृष्ठ्य: षडह: इति दशाहानि। उत्तरभागे उत्तरपक्षस्य प्रथमे (सप्तमे) मासि प्रत्यवरोहक्रमेण प्रथमं आवृत्ता: त्रय: स्वरसामान: त्रीण्यहानि, ततो विश्वजिदेकमह:, तत ऊर्ध्वं आवृत्तस्य पृष्ठ्यषडहस्य षडहानि इति दशाहानि। अर्थात् गवामयन पूर्वपक्षस्यान्तिमे षष्ठे मासि आरोहक्रमेण त्रिभ्योऽभिप्लवेभ्य: (१८) ऊर्ध्वं एक: पृष्ठ्यषडह: (६) एकोऽभिजित् १. ज्योति: २. गौ: ३. आयु: इति त्रय: स्वरसामान: (३) इति

दशाहान्यनुष्ठाय ततो विषुवानेकाहोऽनुष्ठीयते। ततो विषुवत ऊर्ध्वमुत्तरपक्षस्य प्रथमे सप्तमे मासे प्रत्यवरोहक्रमेण आवृत्ताः ३ आयुः, २ गौः, ३ ज्योतिः (तृतीयद्वितीय-प्रथमाः) त्रयः स्वरसामानः (३) विश्वजिदेकः (१) आवृत्तः (षष्ठपञ्चमचतुर्थतृतीयद्वितीय-प्रथमक्रमोपेताः) पृष्ठ्यषडहः (६) इत्यावृत्तानि दशाहान्यनुष्ठाय ततो सप्तममास-पूर्त्यर्थम् आवृत्तास्त्रयोऽभिप्लवाः अनुष्ठीयन्ते। तदेवं द्वयोर्दशाहयोर्मध्ये वर्तमानो विषुवानेकविंशो भवति। तदुक्तम् 'तस्य दशावस्तादहानि दिवाकीर्त्यस्य भवन्ति दशपरस्तान्मध्य एष एकविंश उभयतो विराजि (दश संख्यायाम्) प्रतिष्ठितः' अर्थात् आस्याह्नोऽधो भागे दशाहानि भवन्ति। पुरस्ताद्भागेऽपि दशाहानि भवन्ति। तयोर्दशकयोर्मध्ये एव एकविंशोविषुवान् भवतीति एक विंशता संपद्यते। (तु०—ऐ० ब्रा० सा० ४।१८)। 'अभिप्लवत्रयहः पूर्वः स्वरसामानः (आ०श्रौ० ८।६।१०), 'आवृत्ताः स्वर सामानः' (आ०श्रौ० ८।९।६) आवृत्ताः प्रतिलोमा इत्यर्थः। इति नारायणः। ६. गवामयनं आदित्यानामयनं अङ्गिरसायनं चेत्यादयो यो संवत्सरसत्र-विशेषाः। तेषु सर्वत्र पूर्वोत्तरपक्षयोर्मासषट्कयोर्मध्यवर्ति प्रधानमेकविंशस्तोम-कमहर्विषुवानुच्यते।

**विषुवति प्रातरनुवाककाल—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने प्रातःसवने विषुवतः प्रातरनुवाककालः पठ्यते। तदुक्तम्—विषुवताऽह्नस्तु सर्वस्य दिवाकीर्त्यत्वात् 'उदित आदित्ये प्रातरनुवाकमनुब्रूयात् सर्वं ह्येतदहर्दिवा-कीर्त्यं भवति' (तु०—ऐ० ब्रा० सा० ४।१९)। 'उदिते प्रातरनुवाकः' (आ०श्रौ० ८।६।३)। इति।

**विषुवति प्रातःसवनीयपशु—** (हौ०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अयनसत्रप्रकरणे गवामयने विषुवति अहनि अग्नीषोमीयपशु विकृतिभूतस्य प्राकृतस्य अग्निष्टोमसंस्थ-त्वादाग्नेयस्य सवनीयपशोरनन्तरं सूर्यदेवताको वर्णान्तरेण मिश्रितः द्वितीयः पशुरालभ्यः (तु०— ऐ० ब्रा० सा० ४।१९ आ०श्रौ० ८।६।५ नारायणः)।

**विषुवति प्रा०सवने सामिधेनी—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवति अग्नीषोमीयविकृतौ सवनीयपशौ पशुप्रोक्षणादूर्ध्वमध्वयुर्णा प्रेषितो होता सामिधेनीरनुब्रूयात्। 'उपरिष्टात् अधस्तात् सर्वतश्च प्रोक्ष्य वेदं निधाय सामिधेनीभ्यः प्रपद्यते' इत्यापस्तम्बवचनात् (ऐ० आ० सा० ५।१।१) इत्येकविंशतिं सामिधेनीरनुब्रूयात्। एकविंशस्तोमयुक्तत्वात् एक-विंशतिः सामिधेन्यो भवन्ति। तत्र चोदक प्राप्ताः प्राकृत्यः पञ्चदश सामिधेन्यः। तासां पञ्चदशानां मध्ये 'समिध्यमानो अध्वरे' (ऋ० ३।२७।४), 'समिद्धो अग्न आहुतः' (ऋ० ५।२८।२) इत्यनयोर्ऋचो ऽन्तराले 'पृथुपाजा अमर्त्यः' (ऋ० ३।२७।५-१०) इत्याद्याः प्रक्षिप्ताः षड् धाय्याः ऋचो मिलित्वा एकविंशतिर्विषुवति सामिधेन्यो भवन्ति। तदुक्तम्—'एकविंशतिं सामिधेनीरनुब्रूयात् प्रत्यक्षात् प्रत्यक्षाद्ध्येतदहरेकविंशम्' (ऐ० ब्रा० ४।१९, 'पृथुपाजा अमर्त्य' इति षड् धाय्याः सामिधेनीनाम्' (आ०श्रौ० ८।६।३)। द्र० धाय्या—, सामिधेनी—।

**विषुवति प्रातःसवने बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवत्य-

हनि प्रात:सवने बहिष्पवमानस्तोत्रस्य स्तोत्रीयतृचाः—'उपास्मै गायता' (साम० ६५१-५३) इति प्रथमः प्रतिपत् तृचः। 'वायो शुक्रो अयामिते' (साम० १६२८-३०) इति प्रतिपत्तृचः प्रथमस्तृचः इति तां० ब्रा० सा० ४।६।५। इति विशेषोऽवधेयः। 'बभ्रवे नु सुतवसे' (साम० १४४४-४९) इति षड् ऋचः (द्वौ तृचौ)। 'प्र स्वानसः' (साम० १११९-२७) इति नव ऋचः (त्रयस्तृचाः)। 'पवमानस्य ते कवे' (साम० ६५७-५९) इत्यन्तिमस्तृचः। एकविंशस्तोमः। इति बहिष्पवमानस्तोत्रम्। (तु०—आ०क० २।५।१ वरदराजः)।

**विषुवति प्रा० स० आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अयनसत्रप्रकरणे गवामयने प्रातःसवने चतुर्णां आज्यस्तोत्राणां स्तोत्रीयतृचाः—'अग्निर्वृत्राणि जघ्नत्' (साम० १३५१-५३)। इति मैत्रावरुणस्य द्वितीयतृचः। 'उद्घेदभि' (साम० १४५०-५२) इति ब्राह्मणाच्छंसिनस्तृतीयस्तृचः। 'इयं वामस्य मन्मनः' (साम० ९१६-१८) इत्यच्छावाकस्य चतुर्थस्तृचः। सोमः—एकविंशः इत्याज्यस्तोत्रम् (द्र० आ० क० २।५।२ वरदराजः)।

**विषुवति प्रा० सा० होतुराज्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने विषुवति प्रातः सवने होतुराज्यशस्त्रस्य 'समुद्रादूर्मिः' (ऋ० ४।४८) इत्याज्यसूक्तम्। इतरज्जपप्रभृति निवित्पदान्तं ऐकाहिकम् (तु०—आ०श्रौ० ५।९।१-१४ श्रौ०को० २ भा० पृ० २२३-२५)। शस्त्वा जपः, शस्त्रयाज्या चैकाहिके (तु०—आ०श्रौ० ५।९।२६)।

**विषुवति प्रा० स० होतुः प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवति प्रातः सवने होतुः प्रउगशस्त्रस्य प्रत्यक्षमनाम्नानादैकाहिकं 'वायावायाहि दर्शत' इत्यादि सप्ततृचात्मकम् (ऋ० १।२।१-९; ३।१-१२ प्रउगशस्त्रं द्रष्टव्यम्। (तु०—आ०श्रौ० ५।१०।४-१०; ७।४।१५ नारायणः)। तत्र सप्तानां तृचानां पुरस्तात् यथासंख्यं सप्तपुरोरुचोऽनूच्याः। द्र० चतुर्विंशे होतुः प्रउगशस्त्र—।

**विषुवति प्रा० स० मैत्रावरुणशस्त्र — द्र०** चतुर्विंशे प्रातःसवने मैत्रावरुणशस्त्र—।

**विषुवति प्रा० स० ब्राह्मणाच्छंसि शस्त्र— द्र०** चतुर्विंशे प्रातःसवने ब्राह्मणाच्छंसिशस्त्र—।

**विषुवति प्रा० स० अच्छावाकशस्त्र — द्र०** चतुर्विंशे प्रातःसवने अच्छावाकशस्त्र—।

**माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवत्यहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रस्य स्तोत्रीयतृचाः-'अस्य प्रत्नामनुद्युतम्' (साम० ७५५-५७) इति प्रथमतृचः। 'तवाहं सोम रारण' (साम० ९२२-२४) इति द्वितीयतृचः। 'शिशुं जज्ञानम्' (साम० ११७५-७७) इति तृतीयतृचः। सामानि—प्रथमतृचे गायत्रं भ्राजं च सत्रासाहीयमिति त्रीणि सामानि। द्वितीयतृचे उत्सेधं तिसृषु। आभीशवमेकस्याम्, अभीवर्त एकस्याम्, पृश्नि एकस्याम्। रथन्तरं तिसृषु इति पञ्च सामानि। तृतीयतृचे पार्थमेकमिति नव सामानि। स्तोमः—एकविंशस्तोमः। विष्टुतिः—द्र० एकविंशस्तोमविष्टुतिः। द्र० तु० आ०क० २।५।३ वरदराजः)।

**विषुवति पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवत्यहनि माध्य-

न्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयतृचाः—'विभ्राड्बृहत् पिबतु' (साम० १४५३-५५) इति होतुः प्रथमः स्तोत्रीयृचः। अत्र 'वण्माहाँ असि सूर्य' (साम० १७८८-८९) इति प्रगाथतृचः। 'इन्द्रमिद् देवताये' (साम० १५८७-८८) इति प्रगाथतृचः। 'आयन्त इव सूर्यम्' (साम० १३१९-२०) इति प्रगाथतृचः। इत्येते त्रयः प्रगाथतृचा महादिवाकीर्त्यस्य साम्नो विकल्प्यन्ते। 'पुरो जितीवः' (साम० ६९७-९९) इ विकर्णस्य, च विकल्प्यते। इति विशेषोऽवधेयः (तु०—आ०क० २।५।७ वरदराजः)। 'कयानश्चित्त आ' (साम० ६८२-८४) इति मैत्रावरुणस्य द्वितीयतृचः। 'इन्द्र क्रतुं न आभर' (साम० १४५६-५७) इति ब्राह्मणाच्छंसिनस्तृतीयः प्रगाथतृचः। 'तरोभिर्वः (साम० ६८७-८८) इत्यच्छावाकस्य चतुर्थस्तृचः। सामानि— प्रथमतृचे महादिवाकीर्त्यं साम। द्वितीयतृचे वामदेव्यं साम। तृतीयतृचे कर्णं साम। चतुर्थतृचे कालेयं साम। इति चत्वारि सामानि। स्तोमः—एकविंशस्तोमः। विष्टुतिः— द्र० एकविंशस्तोमविष्टुति—(तु०— आ०क० २।५।५ वरदराजः)।

**विषुवति होतुर्मरुत्वतीयशस्त्र**—(हौ०) सोमयज्ञेषु प्रकृतिभूत...। गवामयने विषुवति अहनि होतुर्मरुत्वतीयशस्त्रं चतुर्विंशे होतुर्मरुत्वतीयशस्त्रवद् द्रष्टव्यम्। निवद्धानीयसूक्तयोः स्थाने 'त्यं सुमेषम्' (ऋ० १।५२। १-१५), 'कया शुभा' (ऋ० १।१६५-१-५) इति द्वे सूक्ते भवतः। इयांस्तु विशेषः। (तु०—आ०श्रौ० ८।६।६)।

**विषुवति होतुर्निष्केवल्यशस्त्र**—(हौ०) सोमयज्ञेषु प्रकृतिभूत... गवामयने विषुवत्यहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य महादिवाकीर्त्यास्य पृष्ठस्य स्तोत्रियस्तृचः—'विभ्राड्बृहत्पिबतु' (ऋ०१०।१७०।१-३)। अनुरूपतृचः— नमो मित्रस्य वरुणस्य' (ऋ० १०।३७।१-३)। धाय्या—'यद्वावावान' (ऋ० १०।७४।६)। रथन्तरपृष्ठस्य योनिः—'अभि त्वा शूर' (ऋ० ७।३२।२२)। बृहत्पृष्ठस्य योनिः-'त्वामिद्धि हवामहे' (ऋ० ६।४६।१)। उत्तमसामप्रगाथः—'इन्द्रमिद् देवतातये' (ऋ० ८।३।५-६) इति। (क) ततः पूर्वोत्तराणि निविद्धानसूक्तानि शंसति। पूर्वाणि निविद्धानसूक्तानि चत्वारि—'नृणामुत्वा (ऋ० ३।५१-४-६ तृचसूक्तम्)। 'मस्तिग्म शृङ्ग' (ऋ० ७।१९(१-११)। 'अभि त्यं मेषम्' (ऋ० १।५१।४-६)। 'इन्द्रस्य नु वीर्याणि' (ऋ० १।३२।१-१५)। निवित्पदानि—'इन्द्रो देवः' (ऋ०खि० ५।५।३)। अथो उत्तराणि निवद्धानसूक्तानि षट्—'दिवश्चिदस्य' (ऋ० १।५२।१-८)। 'सुत इत्त्वम्' (ऋ० ६।२३।१-१०)। 'एष प्र पूर्वीः' (ऋ० १।५६।१-६)। 'वृषा मद इन्द्रे' (ऋ० ६।२४। १-०)। 'प्र मंहिष्ठाय' (ऋ० १।५७।१-६)। 'त्यमूषु' (ऋ० १०।१७८।१-३)। अस्मिन्नहनि निष्केवल्यसूक्तेष्वेव अन्ततः तार्क्ष्यं ('त्यमूषु' सूक्तं शंसेत्। (तु०—आ०श्रौ० ८।६।७-१४ नारायणः)। 'त्यमूषु' (ऋ० १०।१७८।१-३)। अस्मिन्नहनि निष्केवल्यसूक्तेष्वेव अन्ततः तार्क्ष्यं ('त्यमूषु' सूक्तं शंसेत्। (तु०—आ०श्रौ० ८।६।७-१४) नारायणः)। शिष्टं शस्त्रं चतुर्विंशे होतुर्निष्केवल्यशस्त्रवद् द्रष्टव्यम्)। (ख) निविद्धानसूक्तशंसने ऋक्संख्या—अस्मिन्शस्त्रे (दिवाकीर्त्य पृष्ठस्य) स्तोत्रियानुरूपतृचयोः षड् ऋचः, यद्वावानेत्येका

धाय्या, बृहद्रथन्तरयोर्योनी द्वे, उत्तमसामप्रगाथस्य प्रगाथनेन तिस्रः, 'नृणामु त्वा नृतम्' इति तिस्रः, 'यस्तिग्मशृङ्गः' इत्येकादशर्चः, 'अभि त्यम्' इति पञ्च दशर्चः, इत्येवमेकचत्वारिंशत् (४१)। ऋचः। तत्र प्रथमया त्रिरभ्यस्तया सह त्रिचत्वारिंशत् (४३)। 'इन्द्रस्य नु वीर्याणि' इत्यस्मिन् पञ्चदशर्चे सूक्तेऽष्टौ नव वा शंसनीयाः। तत्राष्टत्वपक्षे एकपञ्चाशद् भवन्ति। नवत्वपक्षे द्विपञ्चात्। तच्छंसनादूर्ध्वम् 'इन्द्रस्य नु वीर्याणि' इत्यस्य सूक्तस्य मध्ये ऐन्द्रीं निविदं दध्यात्। तत ऊर्ध्वं पुनरपि तावतीः (५१, वा ५२)। ऋचः शंसेत्। तथा सति शतसंख्या संपत्त्या पुरुषायुः साम्यं भवति। तदुक्तं ब्राह्मणे— 'एकपञ्चाशतं द्विपञ्चाशतं वा शस्त्वा मध्ये निविदं दधाति। तावतीरुत्तराः शंसति शतायुर्वै पुरुषः' इति (तु०—ऐ० ब्रा० सा० ४।१९)। इति मिलित्वा द्व्यधिकशतं चतुरधिकशतं वा ऋचो भवन्तीत्यर्थः।

**विषुवति दुरोहणशंसन—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवत्यहनि माध्यन्दिनसवने १. निष्केवल्यनिवद्धानसूक्तेष्वान्ततो होताऽनाहूय तार्क्ष्यसूक्तस्य ('त्यमूषु' इत्यस्य एकमृचं शस्त्वाऽऽहूय दूरोहणं शंसेत्। (तु०—आ०श्रौ० ८।६ १४-१५ नारायणः)। २. शोंसावामिति अध्वर्योराह्वानं कृत्वाऽनन्तरं 'त्यमूषु' इत्यादिकं दूरोहणसूक्तमारोहणक्रमेण पठेत्। ऐ० ब्रा० सा० ४।२१)। शिष्टं दूरोहणे द्रष्टव्यम्। द्र० दूरोहण—।

**विषुवति मा० स० मैत्रावरुणशस्त्र—** द्र० चतुर्विंशे मा० स० मैत्रावरुणशस्त्र—।

**विषुवति मा० स० ब्राह्मणाच्छंसिशस्त्र—** द्र० चतुर्विंशे मा० स० ब्राह्मणाच्छंसिशस्त्र—।

इयांस्तु विशेषः—यदि ब्राह्मणाच्छंसिनः पृष्ठस्तोत्रे सामगाः 'पृक्षस्य वृष्णो अरुषस्य' (ऋ० ६।८।१ ऐ० ब्रा० सा० ४।१९) इत्यस्यामुत्पन्नं विकर्णं ब्रह्म साम कुर्युः। तदा ब्राह्मणाच्छंसी अनुरूपादूर्ध्वं 'तं वो दस्ममृतीषहम्' (ऋ० ८।८८।१)। इति नौधसयोनिं, 'अभि प्र वः सुराधसम्' (ऋ० ८।४९।१) इति श्येत योनिं शंसेत् (तु०— आ०श्रौ० ८।६।१६ नारायणः)। आर्षेयकल्पे ताण्ड्यब्राह्मणे च 'इन्द्र क्रतुं न आभर' इत्येषा विकर्णयोनिराम्नाता। द्र० विषुवति पृष्ठस्तोत्र—।

**विषुवति मा० स० अच्छावाकशस्त्र—** द्र० चतुर्विंशे मा० स० अच्छावाकशस्त्र—।

**विषुवति तृ० स० आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने विषुवत्यहनि तृतीय-सवने आर्भवपवमानस्तोत्रस्य स्तोत्रीयतृचाः—'परिस्वानो गिरिष्ठाः' (साम० १०९३-९५) इति प्रथमतृचः। 'अभिद्युम्नं बृहद्यशः' (साम० १०११-१२) इति द्वितीयः प्रगाथतृचः। 'प्राणा शिशुः' (साम० १०३३-१५)। इति तृतीयतृचः। 'पर्यूषु प्र' (साम० १३६४ - ६६) इति चतुर्थतृचः। 'पुरोजिती वो अन्धसः' (साम० ६९७-९९) इति पञ्चमतृचः। 'धर्ता दिवः पवते' (साम० १२२८-३०) इति षष्ठस्तृचः। सामानि-प्रथमतृचे गायत्रं आभ्राजमिति द्वे सामनी। द्वितीयतृतीयतृचयोः एकर्चयोः शफश्रुध्ये द्वे सामनी। चतुर्थतृचे श्यावाश्वमेकस्यामित्येकं साम। पञ्चमतृचे बृहत् तिसृषु, गौरीवितमेकस्याम्, आन्धीगवमेकस्याम्,निषेधमेकस्याम्, यज्ञायज्ञीयं तिसृषु' इति पञ्च सामानि। षष्ठे तृचे

कावमेकं साम। इत्येकादश सामानि। स्तोमः—एकविंशः। विष्टुतिः—द्र० एकविंशस्तोम- विष्टुति—। (तु०—आ०क० २।५।५ वरदराजः)।

**विषुवति तृ० स० अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञे प्रकृतिभूत...गवामयने विषुवत्यहनि तृतीयसवने भासस्याग्निष्टोमस्तोत्रस्य स्तोत्रीयतृचः—'मूर्धानं दिवो अरतिम्' (साम० ११४०-४२)। साम—दशस्तोमं भासमग्निष्टोम। स्तोमः—एकविंशः। विष्टुतिः—द्र० एकविंशस्तोम- विष्टुति—। (तु०—आ०क० २।५।६ वरदराजः, तां० ब्रा० सा० ४।६।१६)। स्तोत्रमिदं वैश्वदेवशस्त्रानन्तरं गातव्यम्।

**विषुवति तृ० स० होतुर्वैश्वदेवशस्त्र—** (हौ०) द्र० अभिप्लवषडहस्य तृतीयस्य षष्ठस्य चाह्नो होतुर्वैश्वदेवशस्त्र— (तु०— आ०श्रौ० ७।७।३; ८)। इयांस्तु विशेषः—'तत्सवितुर्वृणीमहे' (ऋ० ५।८२।१-३)।, 'अद्या नो देव' (ऋ० ५।८२।४-६)। इति प्रतिपदनुचरौ तृचौ ऐकाहिकौ भवतः, नानाऽऽभिप्लविकौ 'विश्वो देवस्य नेतुः' इत्याद्यौ (तु०— आ०श्रौ० ५।६।६; ८।६।२० नारायणः)।

**विषुवति तृ० स० होतुराग्निमारुतशस्त्र—** (हौ०) द्र० आभिप्लविकस्य तृतीयस्य षष्ठस्य चाह्नः होतुराग्निमारुतशस्त्र—(तु०— आ०श्रौ० ८।६।१९)।

**विषुवति तृ० स० होत्रकशस्त्राभाव—**विषुवतः अग्निष्टोमसामसंस्थत्वात् तत्र मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकानां होत्रकाणां शस्त्राणि न भवन्तीति।

**विषुवत्स्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूत... गवामयने पूर्वोत्तरपक्षयोर्मध्येऽनुष्ठेयं प्रधानभूतमहर्विषुवान् भवति। तस्मिन् सर्वेषु स्तोत्रेषु एकविंशस्तोमः (तु०—आ०क० २।५।७ वरदराज तां० ब्रा० सा० ४।६।३)।

**विषुवद्दिवाकीर्त्यसामन्—** (हौ० आ०) द्र० दिवाकीर्त्यसामन्—।

**विषुवद्दिवाकीर्त्यसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत...गवामयने विषुवत्यहनि माध्यन्दिनतृतीयसवनयोः माध्यन्दिनपवमानार्भवपवमानयोरादौ होतृब्राह्मणाच्छंसिपृष्ठस्तोत्रयोः अग्निष्टोमस्तोत्रे च यथाक्रमेण भ्राजं आभ्राजं महादिवाकीर्त्यं विकर्णं भासं चेति पञ्च सामानि दिवैव कीर्तनीयत्वाद् दिवाकीर्त्यान्युच्यन्ते। तत्र 'अस्य प्रत्नामनुद्यतम्' (साम० ७५५७-५८) इति तृचे गातव्यं साम भ्राजं तन्माध्यन्दिनपवमाने गायत्र्यान्ते। 'परि स्वानो गिरिष्ठाः' (साम० १०९३-९५) इत्येतस्मिन् यत्साम आभ्राजं तदार्भवपवमाने गायत्र्यान्ते। 'विभ्राड्बृहत् पिबतु' (साम० १४५३-५५) इति तृचे गेयं साम महादिवाकीर्त्यम्। 'इन्द्रं क्रतुं न आभार' (साम० १४५३-५५)। इति तृचे गेयं साम महादिवाकीर्त्यम्। 'इन्द्रं क्रतुं न आभर' (साम० १४५६-५१)। इति प्रगाथे गेयं विकर्णम्। 'पृक्षस्य वृष्णो अरुषस्य' (ऋ० ६।८।१) इत्यस्यामृच्युत्पन्नं दशस्तोमं सामभासं तत् 'मूर्धानं दिवो अरतिम्' (साम० ११४०-४२)। इति तृचे गातव्यम्। इति दिवाकीर्त्यानि पञ्च सामानि ज्ञातव्यानि। (तु०—तां० ब्रा० सा० ४।६।१४-१८)।

**विषुवद् द्विरात्रस्याहःक्लृप्तिः—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे विषुवत्संज्ञको द्व्यहोऽहीनः। स चातिरात्रसंस्थः। परं तत्र षोडशिव-

र्जितोऽतिरात्रो भवति। तस्मिन् विषुवत्यतिरात्रे द्वादशोपसद्दिनानि आभिप्लविके ज्योतिः, गौः' इत्याद्ये द्वे सुत्यादिने षोडश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानामहीनानां सर्वेषां त्रिंशद्दिनेषु समाप्तिविधानात्।

**विशेषण**—(सा०) १. विशेषणं अनभिधाय तद्विशिष्टविशेष्यानभिधानासंभवात् विशेषणस्य च विशेष्येण अत्यन्ताऽसंबन्धः। २. विशेषणमनुतिष्ठन्नेव विशिष्टमनुतिष्ठति नान्यथा। ३. विशेषणं तावत् सर्वत्र पूर्वतरमभिधीयते। द्र० मी०को० पृ० ३६८०-८१।

**विष्टर**— (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्र इष्टिपशुसोमेषु च ऋत्विजां प्रथमे अग्न्याधानप्रकरणे अन्यत्र इष्टिपशुसोमेषु च ऋत्विजां मधुपर्कार्हणे सङ्घीभूता अष्टाचत्वारिंशद्दर्भा मूलप्रदेशमारभ्य अग्रपर्यन्तं द्विगणितसूत्रवेष्टिता दर्भा विष्टर इत्युच्यते। तत्र ऋत्विग्वरणानन्तरं मधुपर्कः क्रियते। शुद्धस्थले आसनेषु प्राङ्मुखान् ऋत्विज उपवेश्य वृतांस्तान् मधुपर्केणार्हयिष्ये इति संकल्प्य प्रथमत ऋत्विजां पादान् प्रक्षालयेत्। ततः कृताचमनेभ्य ऋत्विग्भ्यः 'विष्टरो विष्टरो विष्टरः प्रतिगृह्यताम्' इति विष्टरं दद्यात्। ऋत्विजस्तु प्रत्येकं 'प्रतिगृह्णामि' इति विष्टरं हस्ते गृहीत्वा 'अहं वर्ष्मा' इति मन्त्रान्ते उदगग्रे विष्टरे उपविशन्ति। इत्युपवेशनविधिरवगन्तव्य इति विशेषोऽवधेयः। द्र० ऋत्विग्वरण-मधुपर्क—, श्रौ०प०नि० पृ० ५०।

**विष्टाव**—(औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामाग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने स्तोमविधौ १. गीत्याश्रयाणामावृत्तानामृचां समूहः स्तुतेर्मानं स्तोम उच्यते (तै० सं० सा० ४।१।१।४; ४।२।२) २. 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति तिसृषु ऋक्षु एकं साम गातव्यं भवति। तत्र ये संख्याविशेषा उक्तास्ते स्तोमपदवाच्याः (चिह्नस्वामी)। स्तोमाश्च त्रिवृत्-पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशाः (अयुग्माः), चतुर्विंश-चतुश्चत्वारिंशाष्टाचत्वारिंशाः (युग्माः) इति नव ताण्ड्यब्राह्मणे द्वितीयतृतीयाध्याययोः स्वस्वविष्टुतिभिः सह पर्यायविभागेषु विष्टावाख्येषु विहिताः ते दाशरात्रिकाः प्राकृताश्चोच्यन्ते। तेभ्योऽन्ये ये तत्र विहिताः प्रकरणान्तरेषु (स्तोत्रान्तरेषु) तु 'एक एकत्रिकः, सप्तिसप्तदशौ स्तोमौ भवतः, सर्वो दशी भवति, द्वादशो विषुवान्, यच्चतसृभिः बहिष्पवमानं भवति, यदष्टाभिराज्यानि, यद् द्वादशो माध्यन्दिनः पवमानः, यत् षोडशिभिः पृष्ठानि, यद् विंश आर्भवः, इत्येकमादयोऽनेके स्तोमाः पूर्वोक्तेभ्यः प्राकृतेभ्यः अधश्च ऊर्ध्वं चाम्नाताः श्रूयन्ते। ते च वर्धमाननामानः स्तोमा अभिधीयन्ते। न तेषां पर्यायविभागो ब्राह्मणे क्लृप्तः। सूत्रकारेण हि तेषां पर्यायकृतिप्रकारः 'वर्धमानेषु स्तोमेषु प्रथमस्य पर्यायस्य प्रथमा तृचभागा' इत्यादिना प्रदर्शितः (तु०—ला०श्रौ० ६।५।१ अग्निस्वामी)। प्राकृताः स्तोमा यथा पर्यायत्रयोपेताः (त्रिपर्यायाः) भवन्ति तथा वर्धमानस्तोमेष्वपि त्रयस्त्रयः पर्यायाः कल्प्याः। एकैकस्मिंश्च पर्यये तिस्रस्तिस्र ऋचः कर्तव्याः। तत्र प्रथमपर्यायस्तोत्रीयतृचस्य प्रथमाया ऋचः 'तृचभागा', मध्यमाया 'आवापत्थानम्', उत्तमायाः 'परिचरा' इति पृथक् संज्ञात्रयं संव्यवहारार्थं कर्तव्यम्।

एवमेव मध्यमपर्यायस्तोत्रीयतृचस्य प्रथमा ऋक् परिचरा, मध्यमा ऋक् तृचभागा, उत्तमाऽऽवापस्थानम्। उत्तमपर्यायस्तोत्रीयतृचस्य प्रथमा ऋग् आवापस्थानं, मध्यमा ऋक् परिचरा, उत्तमा तृचभागा' इति क्रमभेदेन स्तोत्रीयाः ऋचः तत्तत्संज्ञका भवन्ति। (तु०— ला०श्रौ० ६ ।५ ।१-५)। तदेवं प्रतिपर्यायं स्तोत्रीयतृचस्तोत्रीयाणां ये त्रयो विभागा उक्तास्ते वर्धमानस्तोमेषु विष्टावा इत्युच्यन्ते। तदुक्तम् 'ऐते विष्टावाः' (ला०श्रौ० ६ ।५ ।६)। इति। अर्थात् १-वर्धमानस्तोमेषु पर्यायकृतौ तृचे स्तोत्रीयाणां विहितो विभागो विष्टावशब्देनोच्यते। २. विष्टावो नाम पर्यायस्य त्रेधा विभक्तस्य एकैको भागः स्तोत्रीयाभ्यासरूपः ३. प्राकृतेषु दाशरात्रिकेषु स्तोमेषु पर्यायेष्वेव ये स्तोत्रीयाणामभ्यासरूपाः संख्याविशेषा विभागा आम्नायन्ते त एव विष्टावा उच्यन्ते न तृचभागादयः संज्ञा इति विशेषोऽवधेयः। द्र० वर्धमानस्तोम—।

**विष्टावगणना—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योति...चैकाहाहीनसत्रे, स्तोमानां विष्टावो नाम पर्यायस्य त्रेधाविभक्तस्य एकैको भागः स्तोत्रीयाभ्यासरूपः। तत्र प्रथमं विष्टावमुदगग्रं प्रागपवर्गं प्रत्यगपवर्गं वा कुर्यात्। तस्य प्रथमविष्टावस्य मध्यदेशतः पश्चादुदगपवर्गं प्रागग्राभिः (कुशाभिः) प्रत्यगग्राभिर्वा द्वितीयं विष्टावं गणयेत्। तस्य द्वितीयस्य विष्टावस्य पश्चादुदगग्रं प्रत्यक्संस्थं तृतीयं विष्टावं गणयेत्। इति विष्टावगणनोच्यते (तु०— द्रा० श्रौ० ५ ।२ धन्वी)। द्र० विष्टाव—, कुशा—, कुशाविधान—।

**विष्टुति—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योति...चैकाहाहीनसत्रेषु १. स्तोमानां स्तुतिप्रकारविशेषो विष्टुतिः। तत्रापि ऋचामावृत्ति विशेषेण रचना (प्रकार) विशेषो भवति। मी०को० पृ० ३७०१)। २. औदुम्बराः प्रादेश मात्राः विष्टुतवो भवन्ति (तु०— जै०श्रौ० १५ ।१९ ।२०)। ३. स्तोत्रीयापरिगणनार्थाः औदुम्बर्यः प्रादेशमात्राः कुशाः (काष्ठविशेषाः)। विष्टुतिरित्युच्यते। (द्र० मी०को० पृ० ३७०१।

**विष्टुतिप्रयोग—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु उद्गातृकर्मणि सामवेदीयप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानानि नाम स्तोत्राणि गीयन्ते। तत्र 'ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' तै०सं० ३। १ ।२) इति विधिना तत्तद्ग्रहचमसपात्रेषु तत्तद्देवताभ्यः सोमरसे गृहीत्वा स्थापिते (आसादिते) अनन्तरं सदोनामकमण्डपे औदुम्बर्याख्यस्थूणासमीपे उपविष्टैरुद्गातृप्रस्तोतृ-प्रतिहर्त्राख्यैस्त्रिभिर्ऋत्विग्भिः सामविशिष्टाभिर्ऋग्भिः क्रियमाणा स्तुतिः स्तोत्रमभिधीयते। तेषां स्तोत्राणां 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति विधिबलात् तिसृषु ऋक्षु एकं साम गातव्यं भवति। तत्र ये संख्याविशिष्टाः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंशः, चतुर्विंशः, चतुश्चत्वारिंशः, अष्टाचत्वारिंशश्चेति नवप्रकाराः संख्याविशेषवाचकाः शब्दास्ते स्तोमपदवाच्या भवन्ति। तेषां संख्याश्च वारत्रय- (पर्यायत्रय)- मावृत्ताभिः तिसृभिर्ऋग्भिः संपाद्यन्ते। अर्थात् त्रिषु पर्यायेषु तिसृणामृचां पर्यायक्रमेण यथा विहिताः संख्या आवृत्त्या प्रपूर्य स्तोमसंख्यासंपत्तिः संभवति। तदेवं पर्यायशः संख्यागणनाप्रकार एव विष्टुतिः विष्टुतिप्रयोगः इत्युच्यते। एषां नवप्रकाराणां स्तो-

मानां मिलित्वा (३०) त्रिंशत्संख्याका विष्टुतो भवन्ति। ताश्च ताण्ड्यब्राह्मणे द्वितीयतृतीयाध्याययोरामाम्नाताः। तासां च यथागानं गणनार्थं गानकाले कुशानिक्षेपो गायद्भिरेव ऋत्विग्भिः कर्तव्यतया सूत्रकारैः विहिताः। अत्र तीक्ष्णाग्रः प्रादेशमात्रः उदुम्बरवृक्षीयः एकत्र तष्टः काष्ठविशेषो लघुकायः कुशाशब्दवाच्यः। तासु तासु विष्टुतिषु विभिन्ना प्रकारतया कुशाः निक्षेपणीयाः। निक्षेपणप्रकारस्तु चिह्नस्वाम्युपस्थापिते महाब्राह्मणस्य पुरस्तान्निवेदनस्थचित्रे द्रष्टव्यः। स्तोमक्रमेणोदाहृतासु विष्टुतिसंख्यासु त्रिवृत्स्तोमस्य उद्यती, परिवर्तिनी, कुलायिनी चेति तिस्रो विष्टुतयः।

पञ्चदशस्तोमस्य पञ्च पञ्चिनी, अपरा, अपरा (उद्यती) चेति तिस्रो विष्टुतयः। सप्तदशस्तोमस्य दशसप्ता, अस्या अन्यः प्रकारः, सप्तास्थिता, अस्या अन्यः प्रकारः, अस्या अन्यः प्रकारः, अस्या अन्यः प्रकारः, भस्त्रा चेति सप्तविष्टुतयः। एकविंशस्य सप्तसप्तिनी, उद्यती, प्रतिष्ठुतिः, सूर्म्या चेति चतस्रो विष्टुतयः। त्रिणवस्तोमस्य प्रतिष्ठिता, उद्यती चेति द्वे विष्टुती। त्रयस्त्रिंशस्तोमस्य समत्र्यंशा, नेदीयः, संक्रमा, उद्यती, प्रत्यवरोहिणी, अन्या विष्टुतिश्चेति पञ्च विष्टुतयः। चतुर्विंशस्य एका विष्टुतिः। चतुश्चत्वारिंशस्तोमस्य प्रतिष्ठिता, निर्मथ्या, तृतीया, चेति तिस्रो विष्टुतयः। अष्टाचत्वारिंशस्तोमस्य प्रथमा, नेदीयः संक्रमा चेति द्वे विष्टुती। इत्थं संकलनेन त्रिंशद् विष्टुतयो भवन्ति। त्रिवृदादि त्रयस्त्रिंशान्ताः पृष्ठ्यषडहस्य षट् स्तोमाः, चतुर्विंशादि-अष्टाचत्वारिंशान्तास्त्रयः स्तोमास्त्रयाणां छन्दोमानां भवन्तीति विज्ञेयम्। द्र० तां० ब्रा० २ भा० पृ० २-६ पुरस्तान्निवेदनम् चिह्नस्वामी) १. इह त्रिवृदादिषु स्तोमेषु एकैकस्मिन् बह्व्यो विष्टुतयः पठिताः (आदिष्टाः)। यत्र तु आदेशो नास्ति तत्र तत्प्रयोगे तासां विष्टुतीनां विकल्पो भवतु नियमो वा इत्येतस्मिन् संशये लाट्यायन आचार्यः 'प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे' इत्याद्याभिर्विष्टुतिभिः स्तोमविधानं स्तोमक्लृप्तिं विधत्ते। अर्थात् ताण्ड्यब्राह्मणोक्ताभिः त्रिवृदादिस्तोमानाम् उद्यत्यादिभिराद्याभिर्विष्टुतिभिः स्तोमक्लृप्तिं विदधाति। यास्ताः प्रथमा विष्टुतयः ताः पथ्यासंज्ञका भवन्ति सर्वाभिप्रायसंपादिकाश्च। अतोऽनादेशे ताः प्रयुञ्जीत। अथवा यथाकामः क्रतुः स्यात् तज्जातीयां विष्टुतिं प्रयुञ्जीत (तु०—ला०श्रौ० ६।२। १-३ अग्निस्वामी)। २. तथा चेह सत्रेषु दशरात्रे त्रिवृदादयः स्तोमाश्चतुर्विंशान्ताः सर्वे पठिताः। 'प्रथमाभिर्विष्टुतिभिः स्तोमविधानमनादेशे' इति चोक्तम्। एवं सति सर्वप्रयोगे विष्टुतीनां स्तोत्रविन्यासः क्रियते सर्वस्मिन् दशरात्रे सर्वेषां स्तोमानां याः पथ्याः विष्टुतयः ताभिः होतृषामाणि विदध्यात्। अपथ्याभिरितराणि सर्वाणि स्तोत्राणि कुर्यात् होतृषामभ्यो यान्यन्यानि। समाप्तासु सर्वासु विष्टुतिषु प्रत्यहं एता एवादितः आरभ्य पुनः प्रयुञ्जीत (तु०—ला०श्रौ० ६।२।१४-१५ अग्निस्वामी)। ३. चतुश्चत्वारिंशस्तोमस्य प्रतिष्ठिता, निर्मथ्या, तृतीया चेति तिस्रो विष्टुतय आम्नाताः। तासां चतुश्चत्वारिंशस्तोमे पूर्वः सवनसमीषन्ती (एकैकः सन् सवनमुपगच्छतीति) प्रयोगः, उत्तरः स्तोत्रसमीषन्ती प्रयोग इति द्विप्रकारः प्रयोगस्ताण्ड्यब्राह्मणे उक्तः। तत्र पूर्वप्रयोगे प्रातःसवननिकानामाज्यस्तोत्राणां प्रथमया प्रतिष्ठितया विष्टुत्या चतुश्चात्वारिंशस्तोमक्लृप्तिः,

माध्यन्दिनसवनगतानां चतुर्णां पृष्ठस्तोत्राणां चतुश्चत्वारिंशस्तोमस्य द्वितीया निर्मथ्या विष्टुतिः, तार्तीयसवनिकानामुक्थानां साग्निष्टोमानां चतुर्णामुक्थस्तोत्राणां चतुश्चत्वारिंशस्य तृतीया विष्टुतिः कार्या। इति प्रथमप्रयोगप्रकारः। इत्येवमिह प्रथमप्रयोगप्रकारे आज्यस्तोत्रेषु चतुश्चत्वारिंशस्य प्रथमा विष्टुतिः, पृष्ठस्तोत्रेषु चतुश्चत्वारिंशस्य द्वितीया विष्टुतिः, साग्निष्टोमोक्थस्तोत्रेषु चतुश्चत्वारिंशस्य तृतीया विष्टुतिः प्रयुक्ताः इत्यवधेयम्। द्वितीये प्रकारे तु पूर्वमाज्यानामुक्ता या प्रथमा विष्टुतिः सा होतुराज्यस्य कार्या। एवं पृष्ठानां या द्वितीया विष्टुतिः सा मैत्रावरुणस्याज्यस्य कार्या। या उक्थानां तृतीया विष्टुतिः सा ब्राह्मणाच्छंसिन आज्यस्य कार्या यैव होतुराज्यस्य प्रथमा विष्टुतिः साऽच्छावाकस्याज्यस्य कार्या। एवं सर्वा अपि विष्टुतयः प्रातःसवने उपयुक्ताः। तथा माध्यन्दिनसवनेऽपि पृष्ठानां या द्वितीया विष्टुतिः सा होतुः पृष्ठस्य कार्या। या उक्थानां तृतीया विष्टुतिः सा मैत्रावरुणस्य पृष्ठे कार्या। आज्यानां विहिता या प्रथमा सा ब्राह्मणाच्छंसिनः पृष्ठे कार्या। यैव होतुः पृष्ठे द्वितीया साच्छावाकस्य पृष्ठे कार्या। एवं माध्यन्दिनसवनेऽपि सर्वा विष्टुतयः प्रविष्टाः। योक्थानां विहिता तृतीया विष्टुतिः सा होतुरग्निष्टोमसाम्नः कार्या। आज्यानानां विहिता या प्रथमा विष्टुतिः सा मैत्रावरुणस्योक्थे कार्या। या पृष्ठानां विहिता द्वितीया विष्टुतिः सा ब्राह्मणाच्छंसिन उक्थे कार्या। यैव होतुरुक्थस्य विहिता तृतीया विष्टुतिः साच्छावाकस्योक्थे कार्या। एवं तृतीये सवने सर्वाः प्रविष्टाः। एवं मिथो व्यतिषङ्गे सति सर्वा विष्टुतय आज्येषु सर्वाः पृष्ठेषु सर्वा उक्थेषु विनियुक्ता भवन्तीति प्रथमप्रकारतो भेदविशेषो द्रष्टव्यः (तु०—तां० ब्रा० सा० ३।११।२-३)। इत्ययं विष्टुतिप्रयोगो दाशरात्रिकाणां प्राकृतानां स्तोमानामवलोक्यः। वर्धमानस्तोमानां विष्टुतिप्रयोगस्तु तत्र तत्र वर्णानुक्रमेण द्रष्टव्यः।

**विष्णुक्रम**— (सा०) विष्णुपादबुद्ध्या स्वपादस्य भूमौ विक्षेपाः विष्णुक्रमा उच्यन्ते। (तु०—मा०सं० २।२५ महीधरः।

**विष्णुक्रमण**— (याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च ब्रह्मकर्तृकनित्यप्रायश्चित्तहोमानन्तरं यजमान उत्थाय प्राङ्मुखो भूत्वा स्थानादारभ्य त्रिभिर्यजुर्मन्त्रैः प्रत्येकं दक्षिणेन पदा द्वाभ्यां स्वपादाभ्यां उड्डीय वा प्राचीं दिशं गच्छति। तत्रैव स्थित्वा एकं यजुर्मन्त्रं पठति। एतत्कर्म विष्णुक्रमक्रमणम् उच्यते। **द्र०** ब्रह्मकर्तृकहोम-, श्रौ०प०नि० पृ० ४१।

**विष्णुक्रमपद** — (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च, यैः त्रिभिर्यजुर्मन्त्रैः प्रत्येकं दक्षिणेन पदा द्वाभ्यां वा पादाभ्यां उड्डीय वा प्राचीं दिशं गच्छति यजमानः ते मन्त्राः विष्णुक्रमपदा भवन्ति श्रौ०प०नि० पृ० ४१ **द्र०**। ते यथा—विष्णोः क्रमोऽस्यभिमातिहा गायत्रेण छन्दसा पृथिवीमनु विक्रमे निर्भक्तः स यं द्विष्मः। विष्णोः क्रमोऽस्यरूपभिमातिहा त्रैष्टुभेन छन्दसाऽन्तरिक्षमनु विक्रमे निर्भक्तः स यं द्विष्मः। विष्णोः क्रमोऽस्य रातीयतो हन्ता जागतेन छन्दसा दिवमनुविक्रमे निर्भक्तः स यं द्विष्मः...(तु०—श्रौ०प०नि० १ भा० पृ० २४४; २९५)।

**विसंस्थितसञ्चर—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु धिष्ण्यवतां (होतृपोतृनेष्टृप्रशास्तृब्राह्मणाच्छंस्यच्छावाकानाम्) स्वस्य धिष्ण्यस्योत्तरतो यो देशः स विसंस्थितसञ्चरो नाम वेदितव्यः। विसंस्थितेऽसमाप्ते सवने सञ्चर्यतेऽनेनेति विसंस्थितसञ्चर उच्यते। अधिष्ण्यवतां तु दक्षिणधिष्ण्यमुत्तरेण विसंस्थितसंचरो भवतीति विशेषोऽवधेयः। (तु०—आ०श्रौ० ५।३।२८; २९ नारायणः)। द्र० धिष्ण्यवद् ऋत्विज्—।

**विस्रम्भ—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे विस्रम्भो नामाधोगमनं गात्राणां वायुनिमित्तम्। तेन यो वर्णविशेष उच्चार्यते सोऽनुदात्तो भवतीति विशेषोऽवधेयः।

**विहरण—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अन्यत्र च १. अग्निहोत्रहोमादिकार्यकाले गार्हपत्याद् दक्षिणाग्निमुद्धृत्य गार्हपत्यादेव आहवनीयाऽऽयतने आहवनीयं प्रणीय उद्धृतं दक्षिणाग्निं दक्षिणाग्न्यायतने निदधाति। तदिदं कर्माग्नीनां विहरणमुच्यते। तत्र गार्हपत्यः अजस्र एव भवतीति विशेषः। (तु०—आ०श्रौ०... श्रौ०प०नि० पृ० ६३)।

**विहरण—** (सा०) विहरणं नाम पृथक् करणं मिश्रणं च। द्र० अजस्र—।

**विहरण—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयायां चतुर्थ्यां वा सोमसंस्थायां षोडशिनि विहृतपक्षे (क) त्रयाणामुक्थ्यशस्त्राणां परस्तात् षोडशिशस्त्रस्य स्तोत्रियानुरूपाभ्यामूर्ध्वं शस्त्रगतानामृचामध्ययनपाठात् (ब्राह्मणस्थक्रमपाठात्) विपर्यासो विहरणमुच्यते। अर्थात् ऋचां परस्परव्यतिषङ्गो विहरणं भवति। स (व्यतिषङ्गः) आश्वलायनेनैवं दर्शितः—'ऊर्ध्वं स्तोत्रियानुरूपाभ्यां तदेव शस्यं विहरेत्। पादान् व्यवधायार्धर्चशः शंस्येत्। पूर्वासां पूर्वाणि पदानि। गायत्र्याः पङ्क्तिभिः। पङ्क्तीनां तु द्वे द्वे शिष्येते ताभ्यां प्रणुयात्' इति (आ० श्रौ० ६।३।२-६)। यथा—'इमा धाना धृत्स्नुवो, हरी इहोपवक्षतः। इन्द्रं सुखतमे रथे' (ऋ० १।१६।२)। इत्येषा गायत्री। 'सुसंदृशं त्वा वयं, मघवन् वन्दिषीमहि। प्र नूनं पूर्णबन्धुरः, स्तुतो याहि वशाँ अनु, योजान्विन्द्र ते हरी' (ऋ०१।८२।३) इत्येषा पञ्चपदा पङ्क्तिः। इति योऽयमध्ययनपाठः सोऽविहृतः। विहृतपाठस्त्वेवं भवति—'इमा धाना घृतस्नुवः, सुसंदृशं त्वा वयम्। हरी इहोपवक्षतो, मघवन् मन्दिषीमहोम्। इन्द्रं सुखतमे रथे, प्र नूनं पूर्णबन्धुरः, स्तुतो याहि वशाँ अनु, योजान्विन्द्र ते हरोम्'॥ इत्येवं प्रकारेण उभयोर्ऋचोः पादान् व्यवधाय (विपर्यस्य) अर्धर्चशः शंसनमृग् विहरणमुच्यते (तु०—ऐ० ब्रा० सा० ४।१)। (ख) तदित्थमेवस्वस्वस्थानाद् विभज्यान्यत्र नयनं विहरणं असमानच्छन्दस्कानां परस्परविलक्षणानां छन्दसामत्र भवति। यथा गायत्री पङ्क्ती, उष्णिग्बृहत्यौ, द्विपदात्रिष्टुभौ, द्विपदाजगत्यौ इत्येतानि छन्दांसि परस्परं विह्रियन्ते। छन्दसां चेदं विहरणं छन्दविहरणमुच्यते। (तु०— ऐ० ब्रा० सा० ४।३।४)।

**विहरणपक्ष—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे अग्नीनां प्रणयनादूर्ध्वं अजस्रधारणपक्षादन्यो विहरणपक्ष उद्धरणपक्षो वेत्युच्यते। द्र० श्रौ०प०नि० पृ० ६३।

**विहव्य—** (सा०) तैत्तिरीयसंहितायाः ४ ।७ ।१४ इत्यनुवाकस्य दशमो मन्त्रो विहव्यसंज्ञो भवति ।

**विहव्यसूक्त—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तृतीयसवने वैश्वदेवशस्त्रे स्पर्धमानेषु संसवनिमित्तदोषनिवृत्त्यर्थं वैश्वदेवनिविद्धानीयसूक्तस्य (तु०—आ० श्रौ० ५ ।१८ ।५) पुरस्तात् विहव्येन आङ्गिरसेन दृष्टस्य 'ममाग्ने वर्चः। (ऋ० १० ।१२८) इति विहव्यसूक्तस्य शंसनं कार्यम् । तदिदं विहव्यसूक्तमुच्यते (तु०—आ०श्रौ० ५ ।६ ।१६ नारायणः) ।

**विहार—** (सा०, हौ०) सोमयज्ञेषु होतुर्होत्रकाणां शस्त्रशंसनविधौ विहरणे विहारो नाम अन्यदीयस्य सूक्तस्य अन्य दीयेन पादादिना संधायाम्नानम् । (तु०—शां० श्रौ० १२ । ११ ।६ भाष्यम्) । द्र० २. विहरण-, महावालभिद्विहार-,वालखिल्यविहार- ।

**विहार—** (सा०, आध्व०) इष्टिपशुसोमयज्ञादिषु १. विहारः इति गार्हपत्यादिः अग्निः त्रेता उच्यते विहरणात् । २. त्रेताग्निः विहारो नाम वैदिकानामेव कर्मणां स्यात् न लौकिकानाम् । द्र० मी० को० पृ० ३७०२ । ३. विहारः हविः श्रपण-अन्वाहार्यपचनहोमरूप वैदिककर्माथ एव, न तु लौकिकपचनार्थः । द्र० मी०को० ३७०३ ।

**विहारद्वयानुष्ठान—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे वरुणप्रघासेषु अस्तिदाक्षिणोत्तररूपं विहारद्वयम् । तत्र दक्षिणे विहारे प्रतिप्रस्थाता मारुतीमामिक्षां अनुतिष्ठति, उत्तरे विहारे अध्वर्युः अष्टौ हवींषि अनुतिष्ठति । तत्रोभयत्राङ्गानां भेदेनानुष्ठानम् । विहारद्वये कर्तृभेदात् पत्नीसंयाजानां तन्त्रं न वरुणप्रघासेषु । विहारद्वये चातुर्मास्यगतवरुण प्रघासेषु होतुः आग्नीध्रस्य ब्रह्मणश्च तन्त्रम् । इति वरुणप्रघासेषु विहारद्वये अध्वर्युप्रतिप्रस्थात्रोः भेदेन होत्राग्नीध्रब्रह्मणां तन्त्रेणानुष्ठानमवगन्तव्यम् । द्र० मी०को० पृ० ३७०६ ।

**विहाराव्यावृत्ति—** (सा०) इष्टिपशुसोमयज्ञादिषु विहारस्य (यज्ञायतनस्य) संमुखं स्वपृष्ठभागो यथा न भवेत् तथा कर्मकाले इतस्ततो गमनं विहाराव्यावृत्तिरित्युच्यते । द्र० श्रौ०-प०नि० पृ० २२ ।

**वि हृ मिश्रीकरणे** । विहरति = मिश्रीकरोति । द्र० २ विहरण— ।

**विहृत—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीया चतुर्थी वा सोमसंस्था षोडशी । षोडशी अविहृतः विहृतश्चेति द्विविधः । तत्र होतुः शस्त्रे ब्राह्मणाध्ययनक्रमेण पठितानामृचां पादान् व्यवधाय अर्धर्चशः शंसने ऋचां परस्परव्यतिषङ्गो विहृत इत्युच्यते । स विहृतषोडशिनि द्रष्टव्यः । द्र० आ०श्रौ० ६ ।३ ।२-६, ऐ० ब्रा० सा० ४ ।१; २ विहरण ।— ।

**विहृतषोडशिशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयायां चतुर्थ्यां वा सोमसंस्थायां षोडशिनि अग्निष्टोमस्य द्वादशशस्त्राणि, अत्यग्निष्टोमस्य षोडशिनि अग्निष्टोमस्य द्वादश शस्त्राणि, अत्यग्निष्टोमस्य षोडशिनो विकारात्तत ऊर्ध्वं होत्रकाणमुक्थ्यस्य त्रीणि शस्त्राणीति पञ्चदश शस्त्राणि संपद्यन्ते । तत ऊर्ध्वं एकं षोडशसंख्यापूरकं षोडशिनः षोडशं शस्त्रं होत्रा शस्यते । तदिदं षोडशिशस्त्रं विहृतत्वेनाविहृतत्वेन च द्विधा शस्यते । तत्र विहृतपक्षे प्रथममाहावः । ततः स्तोत्रियतृचः— 'इन्द्र जुषस्व प्रवहाऽऽयाहि शूर हरी इह ।

पिबा सुतस्य मध्वश्चकानश्चारुमदाय' ॥ १ ॥ 'इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न । अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः' ॥ २ ॥ 'इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न । बिभेद बलं भृगुर्न ससाहे शत्रून् मदे सोमस्य' ॥ ३ ॥ (आ०श्रौ० ६ ।३ ।१) इति तिस्रः । अनुरूपतृचः—'श्रुधी हवं न इन्द्रो न गिरो जुषस्व वज्री न । इन्द्र सयुग्मिर्दिद्यून्न मत्स्वा मदायमहोरणाय ॥ १ ॥ 'आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न । पृणस्व कुक्षी सोमो नाविड्ढि धिया हि यानः ॥ २ ॥ साधुर्न गृध्नुर्ऋभुर्नस्तव शूरश्चमसो न । यतेव भीमो विष्णुर्नत्वेषः समत्सुक्रतुर्न' ॥ ३ ॥ इति तिस्रः । (इह पाठो यथामुद्रितः पुनर्विवेच्यः) । अनुरूपे आहावो न भवति । आभ्यां स्तोत्रियानुरूपाभ्यामूर्ध्वं यदिदं 'आत्वा वहन्तु (ऋ० १ ।१६ ।१-३) इति तिस्रो गायत्र्यः । ततः 'उपोषु शृणु ही गिरः' (ऋ० १ ।८२ ।१); 'सु संदृशं त्वा वयं मघवन्' (ऋ० १ ।८२ ।३-४) इति तिस्रः पङ्क्तयः । ततो 'यदिन्द्र पृतनाज्ये' (ऋ० ८ ।१२ ।२५-२७) इत्यौष्णिहस्तृचः । ततः 'अयं ते अस्तु हर्यतः' (ऋ० ३ ।४४ ।१-३) । इति बार्हतस्तृचः । ततः 'आधूर्ष्वस्मै' (ऋ० ७ ।३४ ।४) इति द्विपदा । ततो 'ब्रह्मन् वीर ब्रह्मकृतिम्' (ऋ० ७ ।२९ ।२) इति त्रिष्टुप् । ततः 'एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुता गृणे' ॥ १ ॥ विस्रुतयो यथोपश इन्द्र त्वद्यन्ति रातयः ॥ २ ॥ त्वामिच्छवसस्पते यान्ति गिरो न संयत ॥ ३ ॥ इति तिस्रो द्विपदाः । आ०श्रौ० ६ ।२ ।६) । ततः 'प्र ते महे विदथे शंसिषं हरी' (ऋ० १ ।९६ ।२-५) इति तिस्रो जगत्यः । ततः 'त्रिकद्रुकेषु महिषो यवा शिरम्' (प्रथमा अष्टिः), 'अध-स्त्विषीमाँ अभ्योजसा' (द्वितीया), साकं जात क्रतुना' (तृतीया) इति द्वे अति शक्वर्यौ । इत्यतिच्छन्दस्कः प्रगाथतृचः (ऋ० २ ।२२ । १-३) । 'प्रोष्वस्मै पुरोरथम्' (ऋ० १० । १३३ ।१-३) इति शाक्वरः अतिच्छन्दस्को द्वितीयतृचः । ततः 'प्रत्तेन प्रचेतया याहि पिब मत्स्व । केतुश्छन्द ऋतं बृहत् सुम्न आधेहि नो वसो' इत्येषा अनुष्टुप् (आ०श्रौ० ६ ।२ ।९) । ततः 'प्रप्रवस्त्रिष्टुभमिषम्' (ऋ० ८ ।६९ ।१-३) । 'अर्चत प्रार्चत' (ऋ० ८ ।६९ ।८) । 'यो व्यतीरफाणयत् (ऋ० ८ ।६९ ।१३) इति त्रयं आनुष्टुभास्तृचाः । इत्यन्तमविहृतषोडशिशस्त्रमुक्तम् । तदेव पूर्वासां ऋचां पूर्वान् अर्धर्चशः अर्धर्चान्ते ऋगन्ते च प्रणवं कृत्वा विहरेत् शंसेत् । अर्थात् ऋचां पादव्यवधानेन विहरणं कुर्यात् । आ०श्रौ० ६ ।३ ।३०४ नारायणः) । द्र० २. विहरण— । अस्मिन् विहृतषोडशिशस्त्रे यथा ऋचां विहरणमुक्तं तथैव स्वस्थस्थानाद् विभज्यान्यत्र यनरूपं विहरणं असमानच्छन्दस्कानां परस्परविलक्षणानां छन्दसामपि भवति । तद्यथा गायत्री पङ्क्ती, उष्णिग्बृहत्यौ, द्विपदात्रिष्टुभौ, द्विपदाजगत्यौ, इत्यादीनि छन्दांसि परस्परं विह्रियन्ते । इदं छन्दो विहरणं च विहृतषोडशिशस्त्रे तत्तच्छन्दसां वर्णानुक्रमेण तत्र तत्र द्रष्टव्यम् । तदुक्तम्—'गायत्र्यः पङ्क्तिभिः । पङ्क्तीनां तु द्वे द्वे पदे शिष्येते ताभ्यां प्रणुयात्' (आ०श्रौ० ६ ।३ ।५-६) ।

**विहृतषोडशिशस्त्रे उपसर्गयोजनेनानुष्टुप्कारम्—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे तृतीयायां चतुर्थ्यां वा सोमसंस्थायां षोडशिनि विहृते तृतीयसवने प्रचेतनेत्यादीन् पञ्चाप्युपसर्गान् विभज्य 'त्रिकद्रकेषु' इत्यादिष्वतिच्छन्दःसु योजयेत् अनुष्टुप्त्वाय । त्रिकद्रुकेषु (ऋ० २ ।२२ । १-३) इति अतिच्छन्दो युक्ते तृचे येयं

प्रथमाऽतिच्छन्दास्तस्याश्चतुःषष्ट्यक्षरत्वात् न सा पराण्यक्षराण्यपेक्षते । तस्यामनुष्टुब्द्वयसंपत्तिः शक्याऽवगमयितुम् । ततो या तृचद्वितीया ऋक् 'अधत्विषीमान्' इति, तस्यामनुष्टुब्द्वयं पूरयितुं प्रचेतन इत्यक्षरचतुष्टयं योजनीयम् । ततस्तृतीयस्याम् 'साकं जातः' इत्यृचि प्रचेतय इत्यक्षर चतुष्टयं योजनीयम् । ततः 'प्रोष्वस्मै (ऋ० १० ।१३३ ।१-३) इत्यतिच्छन्दोयुक्ते तृचे तिसृषु ऋक्षु क्रमेण आयाहि पिब मत्स्व' इति प्रथमायाम्, क्रतुश्छन्द ऋतं बृहत्' इति द्वितीयायाम्, सुम्न आधेहि नो वसो' इति तृतीयायाम् । एवं त्रय उपसर्गाः क्रमेण योजनीयाः भवन्ति । तदिदमुपसर्गयोजनातिच्छन्दसामनुष्टुप्कारमुच्यते (आ०श्रौ० ६ ।२ । ८-९ ऐ० ब्रा० सा० ४ ।४) । **द्र०** उपसर्ग— ।

**विहृतषोडशिशस्त्रे उष्णिग्बृहत्योर्विहरण—**(हौ०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि विहृते तृतीयसवने 'यदिन्द्र पृतनाज्ये' (ऋ० ८ ।१२ ।२५-२७) इत्याद्याः तिस्र उष्णिहः, 'अयं ते अस्तु हर्यत' (ऋ० ३ ।४४ ।१-३) इत्यादिकाः तिस्रो बृहत्यः । ता उभयीः परस्परं व्यतिषजं मिश्रयेत् । तद्यथा—उष्णिहः प्रथमं पादमुक्त्वा तेन सह बृहत्याः प्रथमं पादमुच्चारयेत् । एवं द्वितीयं द्वितीयेन, तृतीयं तृतीयचतुर्थाभ्यां पादाभ्यामुच्चारयेत् । (ऐ०ब्रा० ४ ।३, आ०श्रौ० ६ ।३ ।७-८) ।**द्र०** २ विहरण— ।

**विहृतषोडशिशस्त्रे गायत्रीपङ्क्त्योर्विहरण—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि विहृते तृतीयसवने 'आ० त्वा वहन्तु' (ऋ० १ ।१६ ।१-३) इति तिस्र ऋचो गायत्रीच्छन्दस्का, 'उपो षु' (ऋ० १ ।८२ ।१), 'सुसंदृशम्' (ऋ० १ ।८२ ।३-४) इति द्वे, तास्तिस्रः पङ्क्तयः । ता उभयः गायत्री पङ्क्तीः परस्परं व्यतिषज्य मिश्रयेत् । तद्यथा गायत्र्याः प्रथमपादमुक्त्वा तेन सह पङ्क्त्याः प्रथमं पादमुच्चारयेत् । एवं द्वितीयेन द्वितीयम् । तृतीयेन पङ्क्त्याः तृतीयचतुर्थपञ्चमान् पादानुच्चारयेत् (तु०—ऐ० ब्रा० सा० ४ ।३; आ०श्रौ० ६ ।३ ।५-६) । **द्र०** २- विहरण— ।

**विहृतषोडशिशस्त्रे छन्दसामक्षरसंख्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि विहृते तृतीयसने तिस्रो गायत्र्यः, द्वे पङ्क्ती, तिस्र उष्णिहः, तिस्रो बृहत्यः, एका द्विपदा (विराट्) इति विहृतानां द्वादशानां छन्दसां मध्ये चतुर्विंशत्यक्षरा गायत्री, तिसृणामक्षरसंख्या द्वासप्ततिः (७२) । चत्वारिंशदक्षरा पङ्क्तिः, द्वयोरक्षरसंख्या अशीतिः (८०) अष्टाविंशत्यक्षरोष्णिक्, तिसृणामक्षरसंख्या चतुरशीतिः (८४) । षट्त्रिंशदक्षरा बृहती, तिसृणामक्षरसंख्या अष्टोत्तरशतम् । 'दशाक्षरा विराट्, द्विर्द्विपदा, इति द्विपदाक्षरसंख्या विंशतिः २० । चतुश्चत्वारिंशदक्षरा त्रिष्टुप्, इति त्रिष्टुबक्षरसंख्या चतुश्चत्वारिंशत् (४४) । अष्टाचत्वारिंशदक्षरा जगती, तिसृणामक्षरसंख्या चतुर्विंशत्युत्तरशतम् (१२४) इति पृथक् पृथक् छन्दसामक्षरसंख्या भवति ।

**विहृतषोडशिशस्त्रे द्विपदाजगत्योर्विहरण—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योति...षोडशिनि विहृते तृतीयसवने एष ब्रह्मा... (आ०श्रौ० ६ ।२ ।६) इत्यादिकाः षोडशाक्षराः तिस्रो द्विपदाः, 'प्र ते महे विदथे शंसिषं...' (ऋ० १० ।९६ ।१-३) इति अष्टाचत्वारिंशदक्षरास्तिस्रो जगत्यः । ता उभयीः परस्परं व्यतिषजं मिश्रयेत् । तत्र षोडशाक्षरा द्विपदा, अष्टाचत्वारिंशदक्षरां च जगती ततो मिलि-

त्वा चतु:षष्ट्यक्षरत्वादनुष्टुब्द्वयं सम्पद्यते। 'यदु द्विपदा च षोडशाक्षरा जगती च ते द्वे अनुष्टुभौ' इति ब्राह्मणम् (तु०—ऐ० ब्रा० सा० ४।३)। एष ब्राह्मणोक्त: प्रकार:। आश्वलायनस्तु 'द्विपदाश्चतुर्धा कृत्वा प्रथमां त्रिष्टुभा उत्तरा: जगतीभि:। उत्तमाया-श्चतुर्थमक्षरमन्त्यं पूर्वस्याद्यमुत्तरस्य' (आ०श्रौ० ६।३।९-१०)। अर्थादत्र द्विप-दाश्चतस्र:, ता: सर्वाश्चतुर्धा (सर्वासां चत्वारो भागा:) कर्तव्या:। प्रथमायां सर्वे भागा व्यूहेनाव्यूहेन च पञ्चाक्षरा:। उत्तरास्तु चतुरक्षरभागा:। तत्र च प्रथमां त्रिष्टुभा विह-रेत्। उत्तरास्तिस्रो जगतीभि:। उत्तमाया द्विपदाया: यच्चतुर्थमक्षरं तत्प्रथमस्य भागस्य अन्त्यं भवति। तदेवं द्वितीयस्य चाद्यं भवति। (तु०—नारायण:)।

**विहृतषोडशिशस्त्रे द्विपदात्रिष्टुभोर्विहरण—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योति...षोड-शिनि विहृते तृतीयसवने १. 'आधूर्ष्वस्मै दधात' (ऋ० ७।३४।७) इत्येषा पादद्वयो-पेता द्विपदा, 'ब्रह्मन् वीर ब्रह्मकृतिम्' (ऋ० ७।२९।२) इत्येषा त्रिष्टुप्। ते उभय्यो: पर-स्परं व्यतिषजं मिश्रयेत्। विंशत्यक्षराया अस्या द्विपदाया अष्टाक्षरं प्रथमं पादं व्यूहेन दशाक्षरं कृत्वा तस्याद्येन पञ्चाक्षरेण सह त्रिष्टुभ: प्रथमं पादमुच्चारयेत्। द्वितीयेन पञ्चाक्षरेण द्वितीयं, तृतीयेन तृतीयं चतुर्थमुच्चारयेत्। २. 'आधूर्ष्वस्मै' इत्येषा पादद्वयोपेता। 'ब्रह्मन् वीर' इत्येषा त्रिष्टुप्छ-न्दस्का। द्विपदा चेयं विंशत्यक्षरा। तस्या अष्टाक्षरे प्रथमे पादे संयुक्ताक्षरयोर्विभागेन (व्यूहेन) पञ्चाक्षरत्वे दशसंख्यापूर्ति:। एवं पञ्चाक्षरैस्त्रिष्टुभश्चतुर्णां पादानां सन्धानम्। त्रिष्टुप् चत्वारिंशदक्षरा मिलि-त्वा चतु:षष्टि-संपत्त्याऽनुष्टुब्द्वयं भवति। तदुक्तम्—यदु द्विपदा च विंशत्यक्षरा त्रिष्टुप् च द्वे अनु-ष्टुभौ। तु०—ऐ० ब्रा० सा० ४।३)।

**विहृताविहृतषोडशिशस्त्रे याज्यापादेषु महाना-म्न्युपसर्गयोजन —** (हौ०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि विहृते तृतीयसवने 'अपा: पूर्वेषां हरिव: (ऋ० १०।९६।१३) इत्यस्या: षोडशिशस्त्र याज्याया: त्रिष्टुप्छन्द-स्त्वाद् एकादशाक्षरेषु चतुर्षु पादपादेषु क्रमेण महानाम्नीनां 'एवाह्येवा' इत्यादीन् पञ्चाक्षरान् उपसर्गान् योजयन्ति। तत्रोप-सर्गा:—(१) ए वा ह्येवा (२) एवाहीन्द्र: (३) एवा हि शक्र: (४) वशी हि शक्र: (आ०श्रौ० ६।२।१२ ऐ० ब्रा० ४।४)। पूर्वयोर्व्यूहेन पञ्चाक्षरत्वम्। योजनप्रकार:— एवाह्ये-वापा: पूर्वेषां हरिव: सुतानाम्, एवाहीन्द्रो अथो इदं सवनं केवलं ते। एवा हि शक्रो: ममद्धि सोमं मधुमन्तमिन्द्र, वशी हि शक्र: सत्रा वृषञ्जठर आ वृषस्व॥ इति **द्र०** षोड-शिशस्त्रयाज्या—।

**विहृताविहृते षोडशिशस्त्रे निविद्—** (हौ०) सोम-यज्ञेषु प्रकृतिभूत...षोडशिनि विहृतेऽविहृते च तृतीयसवने 'अस्य भदे जरितर् (ऋ०खि० ५।४।१०) इत्यादिका षोडश-पदोपेता विहृताविहृतषोडशिशस्त्रस्य मध्ये प्रक्षिप्ता निवित् विहृताविहृत षोडशिशस्त्र-निविदुच्यते (तु०—आ०श्रौ० ६।२।१०-११)। इति साधारणो धर्म:। तत्र विहृते एक आहाव:। अविहृतस्य पञ्चावाहत्वमिति नारायण:। इति विशेषो धर्मोऽवधेय:।

**विहृताविहृतषोडशिशस्त्रेऽनुष्टुप्कारशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति-रात्रप्रकरणे तृतीयायां चतुर्थ्यां वा सोम- सं-स्थायां षोडशिनि विहृतेऽविहृते चोर्ध्वं स्तोत्रियानुरूपाभ्यां सर्वत्रानुष्टुप्कारं शंसेत् (तु०—आ०श्रौ० ६।३।१२-१३) इति

साधारणो धर्मः। तदर्थं कृत्रिमाः अकृत्रिमाश्चेति द्विविधा अनुष्टुभः शस्यन्ते। तत्र कृत्रिमाः विहृते षोडशिनि अतिच्छन्दःसुत्रिकद्रुकेषु (ऋ० २।२२।१-३), प्रोष्वस्मै (ऋ० १०।१३३।१-३) इत्येतासु षट्स्वृक्षु उपसर्गयोजनेन (आ०श्रौ० ६।३।१०-११ ऐ० ब्रा० सा० ४।४) अनुष्कारतया शस्यन्ते। अकृत्रिमाः अविहृते षोडशिनि प्रचेतनेत्युपसर्गरूपाया अनुष्टुभः, 'प्र प्र वः (ऋ० ८।६९।१-३) अर्चत प्रार्चत (ऋ० ८।६९।८-६) यो व्यतीरफायायत् (ऋ० ८।६९।१३-१५)। इत्यानुष्टुभानां तृचानां च यथाधीतपाठेन पठ्यन्ते। इतीदं कृत्रिमाकृत्रिमानुष्टुप्शंसनमनुष्टुप्कारशंसनमुच्यते। (तु०—नारायणः)।

**वीणा—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवामयने महाव्रतेऽहनि गानार्थं अपघाटिला पिच्छोला काण्डमयी वाणः इत्यभिधानाश्चतुर्विधा वीणा (वादनयन्त्राणि) भवन्ति। तत्र उपमुखं स्थापयित्वा मुखमारुतेन वाद्यमाना वीणा अपघाटिला। वादनदण्डेन वाद्यमाना पिच्छोला। काण्डानां वीणा काण्डमयी। महावीणा वाणाः शततन्त्रीक इति वीणाः अभिधीयन्ते (तु०—तां० ब्रा० सा० ५।६।८)।

**वीतवत्पदान्त—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अनुगरूपाः वीधातूत्तरलोडन्तपदान्तकत्वाद् वीतवत्पदान्ताः प्रयाजाः अनुयाजा भवन्ति। **द्र०** अनुयाज—, श्रौ० प० नि० पृ० ३०।

**वीर्य—** (सा०) शारीरबलं वीर्यमुच्यते।

**वीवध—** (सा०) उभयतः शिक्याद्वयेन जलकुम्भद्वयं वोढुं यः काष्ठविशेषः पुरुषाणामंसे स्थीयते स वीवध (विहङ्गिका) उच्यते। (तु०—ऐ० ब्रा० सा० ८।१)।

**वृत्ति—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे मात्रोच्चारणे १. तिस्रो वृत्तयो भवन्ति द्रुता मध्यमा विलम्बिता चेति। तत्र द्रुतायां वृत्तौ त्रिकला मात्रा भवति, चतुष्कला मध्यमायाम्, पञ्चकला विलम्बितायाम्। एतास्तिस्रो वृत्तयः क्रमशो यथावसरे प्रयोक्तव्याः। तथा च पाणिनिनारदशिक्षयोः अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम्। शिष्याणामुपदेशार्थे कुर्याद् वृत्तिं विलम्बिताम्॥ **द्र०** संहितोपनिषद् ब्राह्मण १।२१, द्विजराजः। २. वाचस्तिस्रो वृत्तयः विलम्बिता मध्यमायां द्विमात्रः, एवं द्रुतायां त्रिमात्रः इत्यासु विशेषोऽवधेयः (तु०—आ०श्रौ० ५।२०।२ नारायणः)।

**वृद्धिवाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने अभिषवार्थफलकाभिमर्शनानन्तरं यजमानं वाचयति— 'अवीवृधं वो मनसा सुजाता ऋत प्रजाता भग इद्वः स्याम। इन्द्रेण देवीर्वीरुधः संविदानाः अनुमन्यता ँ सवनाय सोमम्' इति। तदिदं वृद्धिवाचनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २६९; अभिषवार्थफलकाभिमर्शन—।

**वृद्धिश्राद्ध— द्र०** नान्दीश्राद्ध—।

**वृधन्वदाज्यभाग—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च दर्शे प्रयाजानन्तरं पूर्वोत्तरौ यौ आग्नेयसौम्यौ आज्यभागौ तौ दर्शे अमावास्यायां वृधन्वन्तौ भवतः। अतस्तयोः पूर्वस्याग्नेयस्य 'अग्निः प्रत्नेन मन्मना' (ऋ०

८।४४।१२) इति पुरोनुवाक्या। उत्तरस्य सौम्यस्य 'सोम गीर्भिष्ट्वा वयम्' (ऋ० १।९१।११) इति पुरोनुवाक्योक्ता। तदुक्तम् 'अथ यदमावास्यायां वृधन्वन्तौ' (द्र० श्रौ०को० १ भा० पृ० २०६-७)। इति वृधन्वन्तावाज्यभागावुच्येते।

**वृषण—** (सा०) इष्टिपशुसोमयज्ञेषु अग्निमन्थने प्रयोक्तव्ये १. द्वे दर्भतृणे वृषणावुच्येते। तदुक्तम् 'वृषणाविति कुशतरुणे तस्मिन्' (का० श्रौ० ५।२।२३) २. 'वृषणविति प्राञ्चौ दर्भौ' (आप०श्रौ० ७।१२।१२)। तत्र मन्थने पालाशी समित्। तं वृषणं चोदग्रं वेद्यां निदध्यात्। तस्मिन् शकले द्वे दर्भतृणे प्रागग्रे निदध्यात्। 'आयुरसि' इति मन्त्रेण उत्तरया अरण्या मन्थनमूलेन आज्यस्थालीस्थमन्थं स्पृष्ट्वा 'पुरूरवाः' इति मन्त्रेण उत्तमया अरण्या अभिनिधानं कुर्यात्। इति मन्थनेति कर्तव्यता भवति। इति विशेषः (तु०—का० श्रौ० ५।२।२२-२५ विद्याधरः)।

**वृष्टिसनि—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने वृष्टिसनिशब्दयुक्तैर्मन्त्रैरुपधेया इष्टका वृष्टिसनयः। (तु०—तै० सं० सा० ४।४।६)।

**वृसी—** द्र० महाव्रतस्तोत्रकाले ऋत्विजामुपवेशनविधि—।

**वेद—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च प्रयोक्तव्यः। १. एक- पञ्चाशत्कुशपात्राणां मुष्टिर्वेद उच्यते। तत्र कुशमुष्टिं गृहीत्वा वामपाणौ कृत्वा दक्षिणपाणिना प्रदक्षिणा वृत्तं कृत्वा मध्यभागे मोटनद्वयकरेणेन उपविष्टवत्सजानुसदृशं संपाद्य बध्नीयादित्येकः पक्षः। अथवा तं कुशमुष्टिं वेण्याकारेण बध्नीयादिति द्वितीयः पक्षः। अथवा तं कुशमुष्टिं मूताकारवत् कुर्यायादिति तृतीयः पक्षः। मूताश्च तृणवर्त्यादिनिर्मितं धान्यावापपात्रमुच्यते। तदुक्तम्—'कुशमुष्टिं सव्यावृत्तं वत्सजानुं, त्रिवृत्तं, मूतकार्यं वा (का० श्रौ० १।३।२३) इति। स च दर्शपूर्णमासादौ आज्यनिर्वापानन्तरं क्रियते। तदुक्तम्-निरूप्याज्यं 'वेदोऽसि' इति यजमानो वेदं करोति (का० श्रौ० १।३।२२ विद्याधरः) इति विशेषोऽवगन्तव्यः। २. वेदः नाम दर्भमयं संमार्जनसाधनम्। द्र० मी०को० पृ० ३७१५। ३. दर्भमुष्टिः प्रदक्षिणमावेष्ट्य द्विगुणः कृतः प्रादेशमात्र उपविष्टवत्सजानु सदृशसंपन्नः समन्त्रकवेदिसंमार्जनादिकर्मोपयोगी प्रच्छिन्नाग्रो वेद उच्यते। द्र० श्रौ०प०नि० पृ० १०।

**वेद—** (सा०) (१) वेदः आम्नायः निगमः श्रुतिः ब्रह्म ऋषिः छन्दः त्रयीत्यनर्थान्तरम् इत्येतैः पर्यायैर्वेद उच्यते। (२) मन्त्रो ब्राह्मणं वेद इत्याचक्षते। (तु०—बौ० श्रौ० प्र० ५४:१६:। (३) अपौरुषेयं वाक्यं वेदः। स च विधिमन्त्रनामधेयनिषेधार्थभेदात् पञ्चविध उच्यते। द्र० मी० को० पृ० ३७१५। (४) विध्यर्थवादमन्त्रनामधेयात्मको वेदः उच्यते। (५) विधिर्विधेयस्तर्कश्च वेदः। तत्र विधिर्ब्राह्मणम्। विधेयो मन्त्रः। तर्को मीमांसा। वेद एव हि सर्वेषामादर्शः सर्वदा स्थितः। शब्दानां तत् उद्धृत्य प्रयोगः संभविष्वेति॥ द्र० मी०को० पृ० ३७१५। (६) वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः। यो ज्योतिषं वेद स वेद यज्ञान्॥ (तु० वेदाङ्गज्यौतिषम्।) (७) अधियज्ञं ब्रह्म जपेदाधिदैविकमेव च। आध्यात्मिकं च सततं वेदान्ताभिहितं च

यत् । (मनु० ६ ।८३) इदं शरणमज्ञानमिदमेव विजानताम् ॥ इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥मनु० ६ ।८४ । सर्वेषां वेद एव शरणं नान्य: पन्था अस्तीत्यर्थ: । इति मेधातिथि: । (८) निष्कामो वा सकामो वा वेदोक्तं य: समाचरेत् । निष्कामस्य तु मुक्ति: स्यात् सकाम: फलमश्नुते ॥ निष्कामस्य तु यत् किञ्चित् कर्तव्यमिति वैदिकम् । तत्सर्वं मुक्तिदं ज्ञेयं परापरपरं सुखम् ॥ (तु०—अथ० परिशिष्ट— २३ । १४ ।४-५) । (९) वेदस्य समस्तस्येष्टिपश्वेकाहाहीनसत्रविषयत्वम् । द्र० मी० को० पृ० ३७१८ । (१०) शब्दब्रह्मेति यच्चेदं शास्त्रं वेदाख्यमुच्यते । तदप्यधिष्ठितं सर्वमेकेन परमात्मना । द्र० मी०को० पृ० ३७२५ । (११) वेद शब्दो हि मन्त्रब्राह्मण समुदायात्मकस्य काठकादिग्रन्थ विशेषस्य वाचक: । वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । द्र० मी०को० पृ० ३७२८ । (१२) वेद: अपौरुषेय: कर्त्रस्मरणात् । द्र० मी०को० ३७१५ (१३) वेदा अपौरुषेया एव । काठकादिसमाख्यास्तु प्रवचनेन स्यु: कठेन काचित् शाखा शिष्येभ्यो विशेषत आदिष्टा इति तस्य वेदभागस्य काठकमिति समाख्यारूढा । एवं तित्तिरिणा प्रोक्तं तैत्तिरीयकं इत्यादि । एवं च ता आख्या: प्रवचननिमित्ता: न कर्तृत्वनिमित्ता: । द्र० मी०को० पृ० ३७१६ ।

**वेदपरिवासन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च परिवास्यन्ते छिद्यन्ते इति परिवासनानि वेदस्य परिवासनानि वेदस्य यान्यग्राणि पूर्वं छिन्नानि तानि वेदस्य परिवासनानि वेदपरिवासनान्युच्यन्ते । द्र० श्रौ०प०नि० पृ०१०.१ वेद— ।

**वेदबन्धनकाल—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूत...दर्श-पूर्णमासप्रकरणे तद्विकृतिषु च दर्शपूर्णमासादौ आज्यनिर्वापानन्तरं वेदबन्धनं क्रियते तत आज्य निर्वापानन्तरभावी वेदबन्धनकाल उच्यते । तदुक्तम्—'निरूप्याज्यं वेदोऽसीति यजमानो वेदं करोति' इति (का०श्रौ० १ ।३ ।२२ विद्याधर:) । द्र० १. वेद— ।

**वेदवाचन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च फलीकरणहोमानन्तरमपरेण गार्हपत्यम्, उत्तरतो गत्वा यजमानाय वेदं दत्त्वा मन्त्रं वाचयति । ततो यजमानाद्वेदमादाय होत्रे प्रददाति । एतत्कर्मवेदवाचनमुच्यते । द्र० फलीकरणहोम—, श्रौ०प०नि० पृ० ३८-३९, वेद— ।

**वेद शिर:करणकनाभ्यालम्भन—** (याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पत्नीवेदवाचनानन्तरं पत्नी वेदशिरसा मन्त्रेण स्वनाभिं स्पृशति । एतद् वेदशिर:करणकनाभ्यालम्भनमुच्यते । द्र० श्रौ०प०नि० पृ० ३९. वेद, पत्नीवेदवाचन— ।

**वेदस्तरण—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च होता वेदतृणानि अग्रभागे दक्षिणहस्तेन धृत्वा तन्तुशब्दवता मन्त्रेण गार्हपत्यादारभ्याहवनीयपर्यन्तमविच्छिन्नस्तृणाति । तदेतत्स्तरणं वेदस्तरणमुच्यते । द्र० श्रौ०-प०नि० पृ० ४० ।

**वेदपारग—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे एकशाखाऽध्ययनक्षमो वेदपारग: उच्यते । द्र० (तु० याज्ञ० स्मृ० मिता० आचा० १११ श्लोक:) ।

**वेदपारायण—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे वेदानां चत्वारि पारायणानि भवन्ति—क्रमपार: क्रमपद: क्रमजट: क्रमदण्डश्चेति । पुन: तत्पारायणं प्रकृतिविकृतिभेदेन द्विधा भिद्यते । प्रकृतिपदेन क्रमपदेन च पारायणविधौ संहिता उच्यते । सापि द्विवधा रूढा योगा च । तत्र रूढा 'अग्निमीले पुरोहितम्' इति यथापाठ: आर्षी संहिता कथ्यते । योगा तु 'अग्निमीले । ईळे पुरोहितम्' इति पदद्वयरूपा उभयसंहिता क्रमसंहिता वा प्रोच्यते । विकृतिपारायणमपि द्विधा क्रमजट: क्रमदण्डश्चेति । ते इमे उभे संहिते प्रकृतिपारायणे उच्येते । विकृतिपारायणमपि द्विधा क्रमजट: क्रमदण्डश्चेति । तत्र क्रमसंहिता क्रमपारायणं वा पदानि उपजीवति, पदानामेव द्वन्द्वं तत्राभ्यस्यते पुनश्च तद् विकृतिपारायणमष्टधा भिद्यते । तदुक्तं व्याडिना—'जटा माला शिखा रेखा ध्वजो दण्डो रथो घन: । अष्टौ विकृतय: प्रोक्ता: क्रमपूर्वा महर्षिभि: अन्यत्र चोक्तम्—संहितासारबहुल: पदसंज्ञासमाकुल: । क्रमसन्धिसमाकीर्णो दुस्तरो मन्त्रसागर: ॥ हस्तहीनं तु योऽधीते स्वरवर्णविवर्जितम् । ऋग्यजु: सामभिर्दग्धो वियोनिमधिगच्छति ॥ (या० शि० १ ।३०) हस्तभ्रष्टो स्वरभ्रष्टो न वेद फलमश्नुते (या० शि० १ ।२६) स्वरवर्णान् प्रयुञ्जानो हस्तेनाधीतमाचरन् । ऋग्यजु: सामभि: पूतो ब्रह्म लोकमवाप्नुयात् । (या० शि० १ ।४५-४६) । द्र० अष्टविकृति—'

**वेदब्रह्मचर्य—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे वेदाध्यनाधिकारप्रयोजने उपनयने संस्कारे १. 'आचार्याधीनो वेदमधीस्वेति द्वादश वर्षाणि' वेद ब्रह्मचर्यम् 'ग्रहणान्तं वा (तु०—आ० गृ०) आचार्याधीनो भव, वेदमधीष्व । (तु०—बौ० गृ०) २ 'अष्टाचत्वारिंशद् वर्षाणि वेदब्रह्मचर्यं चरेत् । द्वादश द्वादश वा प्रतिवेदम् यावद् ग्रहणं वा । (तु०— पारस्कर गृ०) ।

**वेदयज्ञतत्त्वविद्—** (सा०) 'योगेन दाक्ष्येण दमेन बुद्ध्या बाहुश्रुत्येन तपसा नियोगै: । उपास्यास्ता: कृत्स्नशो देवताया, ऋचो ह यो वेद स वेद देवान् । यजूंषि यो वेद स वेद यज्ञान् सामानि यो वेद स वेद तत्त्वम् ॥ ८ ॥ (तु०—बृ० दे० ८ ।१३०) । इति वेदयज्ञतत्त्वविदुच्यते ।

**वेदविनियोग—** (सा०) १. परेतु....सर्वपुरुषार्थ... क्रियारूपस्य धर्मस्य यज्ञत्वसिद्धे: सर्वेश्वरस्य तस्य परमपुरुषस्य यज्ञेनैव यजनीयत्वाच्च अधियज्ञपरतयैव सर्ववेदार्थमुपवर्णयन्तो यज्ञार्थमेव सर्ववेदप्रवृत्तिं स्वीकुर्वन्तो ब्राह्मणादिकल्पमुखेन सर्वान् वेदमन्त्रान् यज्ञिये कर्मणि विनियोजयन्ति । (तु०— तै० सं० सात० भूमिका पृ० ५२) । २. एवं तत्त्वप्रयुक्तानां मन्त्राणामग्न्यादिदेवतालिङ्गात् तत्र-तत्र आग्नेयादिषु यज्ञीये कर्मणि विनियोगो विहित: । न चैते मन्त्रास्तद् विनियोगोद्देशेन दृष्टा:, अपि तु तत्त्वदृशैव दृष्टा: लिङ्गात्तु तेषां विनियोग: कल्पितो ब्राह्मणकल्पसूत्रादिभि: । तद्यथा—'अपश्यं गोपाम्' (ऋ० १ ।१६४ ।३१; मा० ३७ ।१७) अत्र अपश्यम्-इति दर्शनक्रियापददर्शनेन सोमयागे महावीरदर्शने विनियोग: कल्पित: । (तु०—तै० सं० सात० भूमिका पृष्ठ ५६) । ३. अनारभ्योक्तितस्तेषां लिङ्गवाक्यानुसारत: योजनीयास्तत्र तत्र न्यायाद् वा सम्प्रदायत: (तै० ब्रा० सा० १ ।५ ।१ ।१) श्रुतिलिङ्गवाक्यप्रकरणस्थान समाख्यानां (वेदवाक्यानां) विनियोजकत्व-

मिति । द्र० विनियोगकारण—, लिङ्गविनियोज्य—, लैङ्गिकविनियोग— ।

**वेदवृक्ष—** (सा०) रहस्यमूल ऋक्पर्णो यजष्पुष्पप्रवालवान् । यज्ञकर्मफलः श्रीमान् विप्रभ्रमरसेवितः । छन्दःस्कन्दः शाखाशाखो ब्राह्मो वक्षः साक्षादेष । यस्तं विद्यात् स ऋषिर्विप्रस्वर्गच्छेदाप्त्याकीर्तिः (तु० — काण्डानुक्रमणी) ।

**वेदव्याख्योपाय—** (सा०) १. प्रधानमर्थः शब्दो हि तद्गुणायत्त इष्यते । तस्मान्नानाऽन्वयोपायैः शब्दानर्थवशं नयेत् । अतिरिक्तं पदं त्याज्यं हीनं वाक्ये निवेशयेत् । विप्रकृष्टं च संदध्यात् आनुपूर्वीं च कल्पयेत् । लिङ्गं धातुं विभक्तिं च सन्नमेत्तत्र तत्र च । यद्यत्तस्याच्छान्दसं मन्त्रे तत्तत्कुर्यात् तु लौकिकम् । (तु०— बृ० दे० २ ।९४-१०१, मा० सं०

उवटः १ ।१ ।चिन्ताव्यूढो व्यूढः । अपि श्रुतितोऽपि तर्कतः । न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्याः (तु०— निरु० १३ ।१४) इत्ययं मन्त्रार्थः ।

**वेदाधिगम—** (सा०) अनेन क्रमयोगेन संस्कृतात्मा द्विजः शनैः । गुरौ वसन् संचिनुयात् ब्रह्माधिगमिकं तपः ॥ मनु० २ ।१६४ । तपो विशेषैर्विविधैर्व्रतैश्च विधि चोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना (तु०—मनु० २ ।१६५) ।

**वेदाध्ययन—** द्र० वेदपारायण—, संहिता— । २. 'सर्वे क्रतवः कथं ज्ञायेरन् पृथक् पृथक्' इति कृत्स्नस्य वेदस्य अध्ययनं श्रूयते । द्र० मी०को० पृ० ३७१९ ।

**वेदाभ्यास—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. वेदाभ्यास, स्वाध्याय उच्यते । स पञ्चधा भिद्यते । तत्र दक्षः—वेदस्वीकरणपूर्वं विचारोऽभ्यसनं जपः । प्रदानं चैव शिष्येभ्यो वेदाभ्यासोऽपि पञ्चधा इति (तु०—दक्षसंहिता, २ ।२७, गो० गृ० ३ ।५ ।२९) । २. वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्रमः । नाशयत्याशु पापानि महापातकजान्यपि ॥ ७ ॥ वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन् यथा—शक्त्या प्राप्नोति परमां गतिम् (तु०—वा०ध० २७ ।७-८) ।

**वेदि—** (सा०, आध्व०) इष्टिपशुसोमयज्ञे यज्ञभूमिभागे देवयजने 'यज्ञं देवा वेद्यामविन्दन्' इति वेदनस्य लाभस्य स्थानत्वाद् वेदिः इति नाम (तु०—ऐ० ब्रा० सा० ३ ।९) । सा द्विधा भिद्यते ऐष्टिकी सौमिकी चेति । तत्रैष्टिकी प्राकृती, दक्षिणा, दार्शपौर्णमासिकी चेति त्रिभिः पर्यायैरभिधीयते । सौमिकी महावेदिः उत्तरवेदिश्चोच्यते । तत्र या दार्शपौर्णमासिकी दक्षिणा प्राकृती वेदिस्तस्यामग्न्याधेयाग्निहोत्राग्रयणचातुर्मास्यपाशुककमैष्टिकसौमिककर्माण्यनुष्ठीयन्ते । या चोत्तरवेदिस्तस्तस्यां चातुर्मास्यगतवरुणप्रघासपर्वपाशुकसौमिक कर्माणि तन्यन्ते । दक्षिणवेद्यविनाभावेनोत्तरवेदिः सम्पाद्यते सापेक्षत्वात् । अत उत्तरवेदिसंबद्धेषु कर्मसु पूर्वं दक्षिणा पश्चादुत्तरा वेदिः विमीयते । इति विशेषोऽनुसंधेयः दार्शपौर्णमासिकी हविषां सादनार्था सौमिकी प्रचारार्था द्र० उत्तरवेदिदक्षिणवेदि—, यज्ञायतनविहार— ।

**वेदिकरण—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च दक्षिणवेदिप्रान्तभागस्य यागार्थं स्फ्येन स्पर्शकरणरूपस्य पूर्वपरिग्राहस्यानन्तरं यं मन्त्रं जपति स मन्त्रो वेदिः क्रियतेऽनेनेति करणव्युत्पत्त्या वेदिकरणः इत्युच्यते । द्र० श्रौ०प०नि० पृ० १९ । द्र० पूर्वपरिग्राह— ।

**वेदिकरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते...तद्विकृतिषु च दक्षिणवेदिसाधने स्फ्येन अन्यैस्त्रिभिर्मन्त्रैर्वेदिदक्षिणपश्चिमोत्तरप्रांतभागस्पर्शन - रूपस्योत्तरपरिग्राहस्यानन्तरं उत्करे न्युप्तां मृदं वेद्यामानीय स्फ्येन मन्त्रेण समीकरोति। वेदिसंमार्जनप्रभृति समीकरणपर्यन्तं वेदेः करणमिति व्युत्पत्त्या वेदिकरणमित्युच्यते। द्र० श्रौ०प०नि० पृ० १९, उत्तरपरिग्राह—।

**वेदिकारप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिक्या महावेदेः विमाने सौमिकवेद्युत्करानन्तरं अध्वर्युरग्रेण शास्त्रां तिष्ठन् संप्रैषमाह—'वेदिकारा वेदिं कल्पयत, प्रस्थलानि भिन्दत, प्रति निम्नान् पूरयत, किं शारूणि निरस्यत, प्राचीमुदीचीं प्रवणां निस्तिष्ठत' इत्ययं वेदिकारप्रैष उच्यते। तत्र प्रैषात् पूर्वमुत्करान्तां महावेदिं परिस्तीर्य उपरवाणां काले स्तम्बयजुर्हरति। पाणी संमृश्य स्फ्यादानादि पशुबन्धवत् करोति। ततो महावेद्याः पूर्वं परिग्राहं परिगृह्णाति—'इमां नराः कृणुत...आदित्यवतीं विश्वेदेव्यावतीं वर्ष्मन्...प्येत्'। महावेद्याः सकाशात् आग्नीध्रः त्रिर्मृदं हरति। अध्वर्युपुरुषाश्च स्फ्य परश्वम्रादिभिः प्रैषोक्तानि कर्माणि कुर्वन्तीति विशेषोऽवधेयः।द्र० महावेदि, श्रौ०प०नि० पृ० २३३।

**वेदिखनन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते...दर्शपूर्णमासप्रकरणे तद्विकृतिषु च वेदिकरणजपानन्तरं स्फ्येन मन्त्रेण प्राक्सस्थं वेदिं त्रिः खनतीति खननमुच्यते। द्र० दक्षिणवेदि—, उद्धनन—, श्रौ०प०नि० पृ० १९।

**वेदिदक्षिणपार्श्वसाधन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च दक्षिणवेदिनिर्माणे दक्षिणवेद्युत्तरांससाधनानन्तरं षण्णवत्यङ्गुलपरिमितां रज्जुं तावदागन्तुकभागां उभयतः पाशां कृत्वा मध्ये लक्षणं कृत्वा दक्षिणश्रोण्यं सशङ्क्वोः पाशौ प्रतिमुच्य लक्षणे रज्जुं गृहीत्वा दक्षिणत आकृष्य शङ्कुं तत्र निहन्यात्। तत उभौ पाशौ समस्य लक्षणशङ्कौ पाशद्वयं प्रतिमुच्य रज्जुमध्येन दक्षिणश्रोणिशङ्कोरारभ्य दक्षिणांसशङ्कुपर्यन्तं लिखेत। एवं कृते या रेखा उत्पद्यते सा वेद्याः दक्षिणं पार्श्वं भवति। द्र० दक्षिणवेदि० श्रौ० प० नि० पृ० ६।

**वेदोदितकर्म व्यतिक्रमप्रायश्चित्त—** (सा०, प्राय०) वेदविहितानां दर्शपूर्णमासादीनां श्रौतानां स्मार्तानां च सन्ध्योपासनादीनां कर्मणां व्यतिक्रमे प्रायश्चित्तं भवति। तदुक्तं मनुना—'वेदोदितानां नित्यानां कर्मणां व्यतिक्रमे। स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम्।' (तु०—मनु० ११।२ मेधातिथिः।

**वेदोदितकर्मानुष्ठानफल—** (सा०) 'वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रिता। तद्धि कुर्वन् यथाशक्ति प्राप्नोति परमां गतिम्॥ परमां गतिं ब्रह्मत्वप्राप्तिरूपामित्यर्थः। (तु०— मनु० ४।१४ मेधातिथिः)। २. 'कर्मभिर्निःश्रेयसम्। तानि शब्दलक्षणानि धार्यन्ते। वैदिकानां शब्दानां स्मृतिग्रहणानि लौकिकानि। कर्मणाऽभ्युदयोऽकर्मण्यप्रत्यवायोऽनियतानाम्' (तु०—हि० श्रौ० २।१।२-३)। निःश्रेयसबुद्धिः प्रजननसंबन्धापेक्षा (हि० श्रौ० ३।१।५)।

**वेद्यां पदार्थक्रम—** (सा०, आध्व०) इष्टिपशुसोमयज्ञादिषु वेद्यां सर्वेभ्यः (पदार्थेभ्यः) अन्तरा अग्नयः, ततो मुख्यक्रमेण हवींषि, ततो यज्ञायुधानि, ततो यजमानः, ततः पत्नी, ततो

मुख्यक्रमेण कर्तारः (ऋत्विज एव)। होत्रध्वर्व्योस्तु विसंवादः। होताऽभ्यन्तरो भवति अध्वर्युर्वा। अयं पदार्थक्रमोऽभ्यन्तरन्यायः इति चोच्यते (तु०—आ०श्रौ० ३।१।९ सिद्धान्ती)। इत्ययं वेदिस्थ पदार्थक्रम उच्यते। द्र० व्यवाय—।

**वेद्यां पन्नेजनीसादन—**द्र० पन्नेजनीसादन—।

**वेद्युत्तरपार्श्वसाधन —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च दक्षिणवेदि पार्श्वसाधनानन्तरं षण्णवत्यङ्गुलपरिमितायारज्ज्वास्तावदागन्तुकभागाया उभयतः पाशाया मध्ये लक्षणं कृत्वा उत्तर श्रोण्यंसशंक्वोः पाशौ प्रतिमुच्य रज्जुमध्येन चिह्नितेन रज्जुमुत्तरत आकृष्य चिह्नपातस्थाने शंकुं निहन्यात्। तत उभौ समस्य अस्मिन्निहत शङ्कौ प्रतिमुच्य मध्यभागस्य चिह्नेन सूत्रं धृत्वा उत्तरश्रोणिशंकोरारभ्य उत्तरांसशंकुपर्यन्तं लेखां लिखेत्। सा लेखा वेद्युत्तरपार्श्वमित्युच्यते। द्र० दक्षिणवेदि—, श्रौ०प०नि० पृ० ६। द्र० वेदिददक्षिणपार्श्वसाधन—।

**वेला—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे इष्टकोपधाने स्वयमातृण्णादीष्टकास्थानं वेलोच्यते।

**वेष्क—** (सा०, आध्वं०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीयप्रकृतिकेषु सौमिकेषु पशुषु च पशोः मारणार्थं गलावेष्टकः रज्ज्वादिः वेष्क उच्यते।

**वैकङ्कतपरिधिपरिधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च महावीराङ्गारपरिश्रयणानन्तरं महावीरस्य दक्षिणतः प्रागग्रमेकं वैकङ्कतं परिधिं परिदधाति—'मा असि' इति मन्त्रेण। तथैव अनेनैव मन्त्रेणोत्तरतो द्वितीयम्। प्रतिप्रस्थाता पश्चादुदगग्रं तृतीयम्—'प्र मा असि' इति मन्त्रेण। अनेनैव मन्त्रेण पुरस्ताच्चतुर्थम् 'प्रति मा असि'। एतस्य मन्त्रस्यावृत्त्याऽध्वर्युर्द्वौ परिधी प्रथमद्वितीयवत् क्रमेण परिदधाति। 'सं मा असि' एतन्मन्त्रावृत्त्या प्रतिप्रस्थाता तृतीयचतुर्थवत् परिदधाति। वि मा असि' इयस्यावृत्त्या द्वौ पूर्ववदध्वर्युः। 'उन्मा असि' एतदावृत्त्या द्वौ पूर्ववत् प्रतिप्रस्थाता। अध्वर्युस्त्रयोदशं परिधिं महावीरस्य दक्षिणत ऊर्ध्वाग्रमुच्छ्रयति 'अन्तरिक्षस्यान्तर्धिरसि' इति। तदिदं वैङ्कतपरिधिपरिधानमुच्यते। द्र० महावीराङ्गारपरिश्रयण— श्रौ०प०नि० पृ० २१७।

**वैकर्त, ०र्तन—** (सा०) पार्श्वस्थः प्रौढो मांसखण्डो वैकर्तः वैकर्तनं चोच्यते। द्र० मी०को० पृ० ३७३६।

**वैखानससामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रविकृतौ एकाहप्रकरणे राजसूये व्युष्टिद्विरात्रस्य द्वितीयेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रेषु अच्छावाकमुद्दिश्य गीयमानं 'नकिष्टं कर्मणा नशत्' (साम० २४३) इत्यस्यामुत्पन्नं साम वैखानसं सामोच्यते (तु०—तां० ब्रा० सा० १८।११।१०)।

**वैखानससामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे अङ्गिरसां द्विरात्रे पूर्वेद्युर्वैखानसं साम भवति। द्र० मी०को० पृ० ३७३७।

**वैतानिक—** (सा०) इष्टिपशुसोमयज्ञादिषु वितानार्हा आधानसंस्कृता गार्हपत्या हवनीय दक्षिणास्त्रयोऽग्नयः (त्रैताग्न्यः) वैतानिका उच्यन्ते। तेषु श्रौतान्येव कर्माणि अनुष्ठेयानि न स्मार्तानि। तानि तु आवसत्थे

(औपासने) अग्नौ कर्तव्यानीति विशेषोऽवधेयः ।

**वैदत्रिरात्रस्याहः क्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे वैदत्रिरात्रसंज्ञकस्त्र्यहोऽहीनः । स षोडशिमदतिरात्रसंस्थः (तां० ब्रा० २१ ।५ ।१-२) । तस्मिन् वैदत्रिरात्रे त्र्यहे त्रयोदशोपसद्दिनानि, अभिप्लवषडहस्य ज्योतिः, गौः, आयुरिति (आ०श्रौ० १० ।१ ।१६) । त्रीणि सुत्यादिनानि, पञ्चदश दीक्षादिनानि, मिलित्वा त्रिंशद्दिनेषु मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात् । अयमुक्थ्यसंस्थ इति का०श्रौ० भूमिकायां विद्याधरः) । द्र० अहीनार्गणसत्राहर्गणानामङ्गप्रधानविधि—, अहीन—, अहीनसत्राहः शस्योपाय— ।

**वैमदी—**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिन- सवने त्रयाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां होत्रकाणां शस्त्रेषु अहरहः सूक्तसंपातसूक्तयोरन्तराले पक्षान्तरे विराड्भिः सह तृचत्वेन क्रमेण । आवपनीया विमदाख्येन महर्षिणा दृष्टाः 'यजामह इन्द्रम्' (ऋ० १० ।२३ ।१-७) इति सप्त ऋच स्त्रयस्तृचाः कृताः वैमद्यः उच्यन्ते । तत्र सप्तानामृचातृचक्लृप्तिः यथा— सूक्तस्य प्रथमामृचमारभ्यैकस्तृचो (१-३) मैत्रावरुणस्य । तृतीयामारभ्यैकस्तृचः (३-५) ब्राह्मणाच्छंसिनः पञ्चमीमारभ्यैकस्तृचः (५-७) अच्छावाकस्येति तृचक्लृप्तिरवगन्तव्या (तु० — ऐ० ब्रा० सा० ६ ।१९ आ०श्रौ० ७ ।११ ।३८ नारायणः) ।

**वैराजतन्त्र—** (हौ०, सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतिभूतासु इष्टिषु यत्र धाय्ये च विराजौ च संयाज्ये च वार्त्रघ्नावाज्यभागौ च यदा एतत्त्रयं भवति तदा एतान् विकारान् दृष्ट्वा तत्र वैराजतन्त्रत्वं प्रत्यवगन्तव्यम् । (तु०— आ०श्रौ० २ ।१ ।३४ देवस्वामी) । द्र० २. विराज्— ।

**वैराजतन्त्रेष्टि—**(सा०, हौ०) इष्टियज्ञेषु १. प्रकृतिभूतपौर्णमासविकृतिभूतायां यस्यां कस्यांचिदिष्टौ पौर्णमासोक्तोऽखिलो विध्यन्तोऽनुष्ठीयते केवलं सामिधेनीषु विराड् धाय्यामात्रो विशेषः (विकारः), स्विष्टकृति याज्यानुवाक्ययोर्विराजमात्रो विकारो भवति, सेष्टिर्वैराजतन्त्रेष्टिरुच्यते । २. पौर्णमासतन्त्रायामिष्टौ धाय्या विराज्मात्रे विकारे सति सेष्टिर्वैराजतन्त्रेति वेदितव्या (तु०— आ०श्रौ० २ ।१ ।३४ नारायणः) ।

**वैराजसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे पृष्ठ्यषडहस्य चतुर्थेऽहनि मा० स० होतुः पृष्ठस्तोत्रे 'पिबा सोममिन्द्र' (साम० ९२७-२९) इति स्तोत्रीयतृचे गीयमानं साम वैराजाख्यं पृष्ठं साम भवति । (तु०—तां० ब्रा० सा० १२ ।१० ।२ आ०श्रौ० ७ ।११२७ । च सामगैः पृष्ठं साम न क्रियते तदा होता सामयोनिं शंसेत् (तु०—आ०श्रौ० ७ ।३ ।११ - १३) । इति विशेषोऽनुसंधेयः ।

**वैराजसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूत...पृष्ठ्यषडहस्य चतुर्थेऽहनि मा० सवने होत्रा निष्केवल्य शस्त्रे शंसनीया 'पिबा सोम मिन्द्र' (साम० ३९८) इतीयमृक् वैराजसाम्नो योनिरुच्यते (तु०—आ०श्रौ० ७ ।११ । २७) । सा च रथन्तरपृष्ठे द्वितीया शस्यते ।

तु०—आ०श्रौ० ७।३।१२-१३; ५।४-४)।

**वैराजी—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...पृष्ठ्यषडहस्य चतुर्थेऽहनि मा० सवने मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां होत्रकाणां शस्त्रेषु अहरहः शस्यसूक्त-संपातसूक्तयोरन्तराले पक्षान्तरे तृचत्वेनावपनीयाः 'न ते गिरो अपि' (ऋ० ७।२२।५-८) इति चतस्रः 'प्र वो महे' (ऋ० ७।३१।१०-१२) इति तिस्रः। एताः सप्त ऋचो विराट्छन्दस्त्वाद् वैराज्य उच्यन्ते। तृच क्लृप्तिस्तु वैमदीतृचवद् द्रष्टव्या। (तु०— ऐ० ब्रा० सा० ६।१९ आ० श्रौ० ७।११।३४ - ३७) । द्र० वैमदी—। २. विराज—।

**वैरूपसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत... पृष्ठ्यषडहस्य तृतीयेऽहनि मा० सवने होतुः पृष्ठस्तोत्रे 'यद्याव इन्द्र ते' (साम० ८६२-६३) इति स्तोत्रीयप्रगाथतृचे गीयमानं साम वैरूपाख्यं पृष्ठं साम भवति। (तु० तां० ब्रा० सा० १२।४।१ आ०श्रौ० ७।१०।१०)। यदा च सामगैः पृष्ठं साम न क्रियते तदा होता सामयोनिं शंसेत् (तु०—आ० श्रौ० ७।२०।३।११-१३) इति विशेषोऽनुसंधेयः।

**वैरूपसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य तृतीयेऽहनि माध्यन्दिनसवने होत्रां निष्केवल्यशस्त्रे शंसनीया 'यद्याव इन्द्र ते' (साम० २७८) इतीयमृक् वैरूपसाम्नो योनिरुच्यते (तु०—आ०श्रौ० ७।१०।१०)। सा च बृहत्पृष्ठे द्वितीया शस्यते। (तु०—आ०श्रौ० ७।३।१२-१३; ५।४-५ नारायणः) द्र० योनि—, योनिशंसन—, योनिस्थान—।

**वैश्यगुण—** (सा०) करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः।

**वैश्यदेवता —** (सा०) 'यान्येतानि देवजातानि गणशः आख्यायन्ते वसवो रुद्रा विश्वेदेवा मरुतः' इति वैश्यदेवता उच्यन्ते।

**वैश्यप्रवर—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च वैश्यो यत्राधिकृतः स्यात् तत्र पुरोहितस्य प्रवरो वैश्यस्य यजमानस्य प्रवरो भवतीति।

**वैश्यराजन्यसोम—** (सा०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमेऽधिकृताभ्यां वैश्य राजन्ययजमानाभ्यामनुष्ठातव्ये अग्निष्टोमे वरफलस्तवकान् उपनहनेन वाससा बध्वा सोमस्यैव (अग्निष्टोमस्यैव) इति कर्तव्यतया न्यग्रोधस्य क्रयणादारभ्य अभिषवणादर्वाक् संस्कारजातं कुर्यात्। तत्र भक्षकाले अध्वर्युः यजमानं भक्षं कारयितुमिच्छन् भक्षणाय वटफलचमसं दद्यात्। अथवा चमसोन्नयनकाले न्यग्रोधफलान्यङ्कुरांश्चाहृत्य चूर्णयित्वा दध्ना मिश्रणं कृत्वा इतरान् सोमचमसाननु फलचमसं उन्नयेत्। इतरेषु चमसेषु एकं फलचमसं अध्वर्युः दर्भत्रयेण चमसाद् गृहीत्वा 'अहं त्वदस्मि' इति मन्त्रेण जुहुयात् इति विशेषोऽनुसंधेयः। शिष्टः क्रियाकलापः अग्निष्टोमवदेव भवतीति। सोऽयं वैश्यराजन्ययोः सोम उच्यते (तु०—काश्रौ० १०।९।२९-३१ विद्याधरः)। तथा च ज्योतिष्टोमे श्रूयते 'स (अध्वर्युः) यदि राजन्यं वैश्यं वा याजयेत्, स (राजन्यो वैश्यो वा) यदि सोम बिभक्षयिषेत् न्यग्रोधस्तिमीराहृत्य ताः संपिष्य दध्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोमम्' इति। द्र० मी०को० पृ०

२८९० । राजसूये फलचमस—, राजसूये फलचमसभक्षण— ।

**वैश्यस्तोम—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे सप्तदशसंज्ञकः वैश्यस्तोम एकाहः । स चाग्निष्टोमसंस्थः सप्तदशस्तोमकश्च भवति । तत्र प्रातः सवने धारोष्णेन पयसा सोमानां मिश्रणं कर्तव्यम् । माध्यन्दिनसवने शृतेन पयसा सोमान् मिश्रयेत् । तृतीयसवने दध्ना श्रयणं भवतीति । विशेषोऽवधेयः । 'वैश्यो वैश्यस्तोमेन यजेत' । मी०को० पृ० ।

**वैश्यस्तोम—** वैश्यस्तोमः ज्योतिष्टोमपूर्वकः । मी०को० पृ० ३७४६ । इति च विशेषोऽवगन्तव्यः ।

**वैश्वदेवग्रहप्रचार—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने प्रस्तोत्रा 'एषोत्तमा' इत्युक्ते अध्वर्युः प्राङ्मुख उपविश्य इडाजपं कृत्वा शस्त्रं प्रतिगीर्य प्रायश्चित्तं हुत्वा वैश्वदेवमादाय आह—'उक्थ्य स्थ' इति पूर्ववज्जुहोति चमसाननुकम्पयन्ति । सोऽयं वैश्वदेव ग्रहप्रचार उच्यते । **द्र०** श्रौ०-प०नि० पृ० २ ।९१ । वैश्वदेवः प्रातः सवने हूयते । **द्र०** शस्त्रप्रायश्चित्त— ।

**वैश्वदेव ग्रहप्रचार —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने सौमिकपुरोडाशशकलदानानन्तरं यजमानो हविःशेषं, पत्नी हविष्यं चाश्नाति । अध्वर्युः हविर्धानात् प्राङायन्नाह—'देवाय सवित्रेऽनुब्रू३हि' प्रतिप्रस्थातरन्तर्यामपात्रेण सावित्रं आग्रयणाद् ग्रहं गृहीत्वोपास्व मा सीषदः' इति । प्रतिप्रस्थाता तथा गृह्णाति । 'वाम० स्याम, उप०सि देवाय त्वा सवित्रे' इति । हुत्वा सशेषे वैश्वदेवं पूतभूतः परिप्लुना गृह्णाति—'सु श० मिं' इति । सदो गत्वा होत्रा समीक्ष्य शस्त्रं प्रतिगृह्णाति । प्रतिप्रस्थाता हेतुः 'एकया दशभिश्च' इति श्रुत्वा द्विदेवत्यपात्राणि मार्जालीये प्रक्षाल्य निदधाति । अध्वर्युः 'प्रद्यावा यज्ञैः' इत्यादि यावदाहावं अवसाने 'ओथामो दैव' इति, प्रणवे च 'मदामो दैव' इति 'तद्राधो अद्य' इत्यादि यावदाहावं, अवसाने प्रणवे च 'मदामो दैव' इति । 'शस्त्रान्ते तृतीयसवने 'उक्थं वाचि इन्द्राय' इत्याह । शस्त्रप्रायश्चित्तान्ते वैश्वदेवादवदाय आह 'उक्थशा यज सोमस्य' इति । वषट्कृतेऽनुवषट्कृते च जुहोतीति । सोऽयं वैश्वदेव ग्रहप्रचार उच्यते । **द्र०** शस्त्रप्रायश्चित्त—, श्रौ०प०नि० पृ० ३०८-९ ।

**वैश्वदेवग्रहे सोमग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे प्रातःसवने आज्यशस्त्रोत्तरभक्षणानन्तरं सदसि पात्रं निधाय शुक्रपात्रमाददान आह—'उन्नेतः यदेमं वैश्वदेवं ग्रहं गृह्णामि अधोदञ्च राजानं पूतभृतमभिसंप्रवर्त्तताद् दशाभिः द्रोण कलशमृष्ट्वा न्युब्जतात्' इति । द्रोणकलशात् परिप्लुपात्रेण वैश्वदेवं गृह्णाति । 'उपविश्वे० मि' इति परिमृज्य सादयति—'एभ्यः' इति । तदिदं वैश्वदेवग्रहे सोमग्रहणमुच्यते । **द्र०** आज्यशस्त्रोत्तरभक्ष-, श्रौ०प०नि० पृ० २९१ ।

**वैश्वदेवपर्वन्—**(अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे विश्वे देवा यत् पर्व अपश्यन् तत् चातुर्मास्यानां प्रथमं पर्व वैश्वदेवपर्वोच्यते । **द्र०** श्रौ०प०नि० पृ० ७८ ।

**वैश्वदेवपर्वप्रधानहविर्होम**— (आध्व०) इष्टियज्ञेषु प्रकृतिभूत- दर्शपूर्णमासविकृतौ...वैश्वदेवपर्वणि अग्निमन्थनानन्तरं सप्तदश सामिधेन्योऽनुब्रूयात्। अथ नवसु प्रयाजेषु इध्मात् समिधमाददानः' इत्यादि प्रकृतिवत् चतुरः प्रयाजान् इष्ट्वा पञ्चमादीन् मध्ये जुहोति। तत्र अष्टमे प्रयाजे सर्वमौपभृतमाज्यं जुह्वामानयति। यजमानः पञ्चमप्रयाजानुमन्त्रणेन पञ्चमादीन् प्रयाजाननुमन्त्रयते। उदङ्ङत्याक्रम्य सर्वाणि हवींष्यभिघारयतिं नोपभृदाज्यं (ज्येन) पृषदाज्यग्रहण्या एव अनुयाजानां प्रचारात्। अभिघारणस्य तदर्थत्वात्। आज्यभागानन्तरं प्रधानहविर्होमः। तत्र आग्नेयपुरोडाशैकदेशं प्राकृताग्नेयवदवदाय जुहोति। सौम्यचर्वादीनां तु अपरार्धादवदाय पूर्वार्धादवदानम्। आमिक्षैककपालयोरुपस्थानाभिमर्शनि न भवतः। यजमानस्य सौम्यानुमन्त्रणं 'सोमस्याहं देवयज्यया प्रजया च पशुभिश्च जनिषीय' इति। सवितुस्तु देवयज्ययेत्यस्यानन्तरं 'स्वस्तिमान् पशुमान् भूयासम्' इति। तथा सरस्वत्या वाचमन्नद्यं प्रषेयं' इति। तथा पूष्णः पुष्टिमान् पशुमान् भूयासम् इति। मरुतां तथैव 'प्राणैर्ऋध्यासम्' इति। विश्वेषां देवानां तु प्राणैः सायुज्यम्' इति। तथा द्यावापृथिव्योस्तु 'उभयोर्लोकयोर्ऋध्यासम्' इति। भूमानं प्रतिष्ठां गमेयम्' इति वा। प्रधानहविर्होमः। प्रधान होमानन्तरं 'मधुश्च स्वाहा' इत्यादिभिः चतुर्भिर्मासनामभिः आज्यस्थाल्याज्येन स्रुवेण एककपालस्याभितो जुहोति। स्विष्टकृदर्थं उपस्तीर्य वैश्वदेवान्तानां हविषामुत्तरार्धात् सकृत् सकृदवदाय एककपालसंबन्ध्याशयात् सकृदवदाय द्विरभिघार्य चर्वामिक्षामेक्षणान्यादाय अत्याक्रम्य हुत्वा मेक्षणान्यनुप्रहृत्य संस्रावैवेणाभिजुहोति। अन्वाहार्यमासाद्य प्रथमजं वत्सं दक्षिणां ददाति। प्रतिग्रहमन्त्रे 'ब्रह्मण ओदनं रुद्राय गां ताभ्याम्' इति विशेषः। सोऽयं वैश्वदेवपर्वप्रधानहविर्होम उच्यते। **द्र०** श्रौ०प० नि० पृ० ८१। **द्र०** वैश्वदेवपर्वाग्निमन्थन—।

**वैश्वदेवपर्वसंकल्प**—(याज०) इष्टियज्ञेषु प्रकृतिभूत...चातुर्मास्यप्रकरणे वैश्वदेवपर्वणि वैश्वानरपार्जन्येष्ट्यनन्तरं परेऽहनि चातुर्मास्यारम्भः। तत्र प्रथमं वैश्वदेवसंज्ञकं पर्व। वैश्वदेवपर्वहविर्भिः यक्ष्ये इति यजमानः संकल्पयति। हवींषि च १. आग्नेयोऽष्टाकपालः पुरोडाशः, २. सौम्यश्चरुः, ३. सावित्रो द्वादशकपालः, पुरोडाशः, ४. सारस्वतश्चरुः, ५. पौष्णश्चरुः, ६. मारुतः सप्तकपालः पुरोडाशः, ७. वैश्वदेव्यामिक्षा, ८. द्यावापृथिवीय एककपालः। इत्यष्टौ प्रधानहवींषि द्वौ आधारौ, द्वौ आज्यभागौ, नव प्रयाजाः, नवानुयाजाः इत्यङ्गयागाः तैर्यक्ष्ये इति वैश्वदेवपर्वसंकल्प उच्यते। तत्र संकल्पकाले आग्नेयादयः सर्वा देवता उच्चैः सवितृद्यावापृथिव्यौ उपांशु। एकपालस्य चातुर्मास्यान्तर्गत सावित्रस्य चाश्वलायनसूत्रे उपांशुत्व विधानात् (आ०श्रौ०) **द्र०** श्रौ० प० नि० पृ० ७८। **द्र०** वैश्वानरपार्जन्येष्टि—।

**वैश्वदेवपर्वस्मार्तवदाज्यसंस्कार**— **द्र०** स्मार्तवदाज्यसंस्कार—।

**वैश्वदेवपर्वाग्निमन्थन**— (आध्व०) इष्टियज्ञेषु प्रकृतिभूत...वैश्वदेवपर्वणि वाजिनासादनानन्तरं आहवनीयसमीपे एकमधि-मन्थनशकलं लौकिकं प्रागायतं निदधाति— 'अग्नेर्जनित्र- मसि' इति मन्त्रेण। वृषणसंज्ञकौ द्वौ शकलौ लौकिकौ अधिमन्थनस्य

पार्श्वयोः प्रागायतौ हस्ताभ्यां युगपन्निदधाति—'वृषणौ स्थः' इति मन्त्रेण । दक्षिणेनोत्तरारणिं सव्येनाधरारणिमादत्ते—'उर्वश्यायुरसि' इत्यादिमन्त्रेण । 'घृतेनाक्ते' इत्यादिमन्त्रेण अरणी अपूर्वाज्यस्थाल्यां समनक्ति । अधिमन्थनशकले अरणी निधाय 'गायत्रं छन्दोऽनुप्रजायस्व' इत्यादि मन्त्रं वाचयति । मन्थनं कुर्वन् होतारं प्रेष्यति—'अग्नये मथ्यमानायानुब्रू३हि' इति । उत्पन्ने अग्नौ 'जातायानुब्रूहि' इति प्रेष्यति । जातमग्निमाहवनीये प्रहरन् प्रेष्यति—'प्रह्रियमाणायानुब्रूहि' इति । यजमानेनान्वारब्धः 'भवतं नः' इत्यादृचा प्रहरति । 'अग्नावग्निश्चरति प्रविष्टः' इत्यादृचा अपूर्वाज्यं स्रुवेण जुहोति । इत्येतत्कर्म वैश्वदेवपर्वाग्निमन्थनमुच्यते । द्र० श्रौ०प०नि० पृ० ८० ।

**वैश्वदेवपर्वारम्भकाल—** द्र० चातुर्मास्यारम्भकाल— ।

**वैश्वदेवपर्वाहुतिसम्पत् —** (सा०) इष्टियज्ञेषु प्रकृतिभूत...वैश्वदेवपर्वणि 'नव प्रयाजाः, नव अनुयाजाः, द्वावाज्यभागौ, अष्टौ हवींषि, अग्नये (स्विष्टकृते) समवद्यति, वाजिनो यजति, आहुतीनां सम्पत्तये त्रिंशत्त्वायां इति वैश्वदेवे त्रिंशत्संपत्तिराहुतीनाम् । द्र० मी०को० पृ० ३७४७ । एकेषां द्वावाधारौ न स्विष्टकृद् वाजिनया ।

**वैश्वदेवपर्वोद्वासन —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूत दर्शपूर्णमासविकृतौ...वैश्वदेवपर्वणि वाजिन यागानन्तरं अध्वर्युः होत्रे वेदं प्रदायेत्यादि प्राङेत्थं ध्रुवामाप्याय्य प्रकृतिवत् प्रायश्चित्तानि हुत्वा वेद्यास्तृतबर्हिभ्यः प्रत्येकं किञ्चिद् गृहीत्वा ध्रुवां समज्य प्रहृत्य दक्षिणेन पदा वेदिमाक्रम्य तिष्ठन् ध्रुवाज्यात् स्रुवेण गृहीत्वा प्रथमं समिष्टयजुः जुहोति—'यज्ञ यज्ञं गच्छ' इति मन्त्रेण । पुनरादाय द्वितीयं जुहोति—'एष ते यज्ञो यजते' इत्यादि मन्त्रेण । स्रुवं निधाय ध्रुवामादाय सर्वं जुहोति—'देवा गातुविदः' इत्यादिप्राकृतमन्त्रेण । यज्ञविमोकान्ते यजमान उत्करे उपवेषस्य स्थूलप्रदेशमुपगूहति—'यं देवा मनुष्येषु' इति द्वाभ्यामृग्भ्याम् । पौर्णमासतन्त्रं ब्राह्मणातर्पणान्तं प्रकृतिवत् । अथाध्वर्युः प्रत्यङ्मुखः स्वायतने प्राङ्मुखस्योपविष्टस्य यजमानस्य शिरसि केशान् प्रागादिदिक्चतुष्टये मध्ये चेति त्र्येण्या शलल्या पञ्चधा विभजति 'ऋतमेव परमेष्ठि' इत्यादिबहुभिर्वाक्यमन्त्रैः । प्रतिविभागं तेषां वाक्यानामावृत्तिः । विभागक्रमेण लोहितायसक्षुरेण तैरेव मन्त्रैः वपनम् । प्रतिवपनं मन्त्रावृत्तिः । यजमानः स्नात्वा स्वायतने उपविशति । ततः 'संवत्सरीणाँ स्वस्तिमाशासे' इति पठति इदमेतावत् कर्म वैश्वदेवपर्वोद्वासनमुच्यते । द्र० श्रौ०प०नि० पृ० ८३ ।

**वैश्वदेवाग्निमारुतशस्त्रयोर्निविद्धानसूक्तेषु निवित्पदनिधान —** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन सत्रेषु विशेषवर्जं तृतीयसवने होतुर्वैश्वदेवाग्निमारुतयोः शस्त्रयोः सप्तनिविद्धानसूक्तानि भवन्ति । तेषु सप्तसु सप्तैव सावित्रादयो निविदो निधीयन्ते । यथासंख्यं पूर्वाश्चतस्रः वैश्वदेवशस्त्रे, उत्तरास्तिस्र आग्निमारुतशस्त्रे । यत्र विकृतिषु सप्ताधिकानि सूक्तानि भवन्ति तत्रापि सप्तैव निविदो निवेश्याः । सूक्तानां यथासंख्यं तु दैवते दैवतेन विज्ञेयम् । यावतां सूक्तानामेकं दैवतं भवेत् तावतामेकं सूक्तान्तं मन्येतेत्यर्थः । इति विशेषोऽवगन्तव्यः । (तु०— आ०श्रौ० ५ ।१८ ।६-१० नारायणः ।

**वैश्वदेवी—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ...वैश्वदेवपर्वणि वैश्वदेवी आमिक्षा भवति। वैश्वदेव्यामामिक्षायां (सवनीयपुरोडाशे) अतिदेशः। द्र० मी० को० पृ० ३७५४। आमिक्षा च 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा। द्र० मी०को० पृ० ३७४७।

**वैश्वदेवी—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने चयने वैश्वदेवीसंज्ञका इष्टक्य वैश्वदेव्य उच्यन्ते।

**वैश्वानर—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ अहीनप्रकरणे अहीनस्य नियतसंख्यानामह्नां संख्याहानौ येन संख्या पूर्यते स वैश्वानरो भवति। वैश्वानरशब्देन प्रकृतोऽतिरात्रः (ज्योतिष्टोमातिरात्रः) गृह्यते (तु०—आ०श्रौ० १०। १।१८ नारायणः)। यथा — 'दशरात्रेषु दशमो वैश्वानरो भवति' इति

**वैश्वानरपार्जन्येष्टि—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ चातुर्मास्यप्रकरणे चातुर्मास्यानि प्रयोक्ष्यमाणेन आदौ प्रथमप्रयोगात् पूर्वेद्युरियं इष्टिः क्रियते। तस्यां वैश्वानरो द्वादश कपालः पुरोडाशः पार्जन्यश्चरुः, प्रधानमुपांशु। अन्वाहार्यमासाद्य वैश्वानराय हिरण्यं धेनुं दक्षिणां ददाति। यजमान आह—'भो ऋत्विजः अयं वः ओदनः, इदं वो हिरण्यं इयं वो धेनुः अहिंसन्तो यथाभागं प्रतिगृह्णीध्वम्' इति। प्रतिग्रहणमन्त्रे ब्रह्मणे ओदनं, अग्नये हिरण्यं, रुद्राय गां इति विशेषः। अन्यत् सर्वं पौर्णमासतन्त्रम्। ब्राह्मणतर्पणान्तेयं वैश्वानरपार्जन्येष्टिरुच्यते। तत्रेयमिष्टिः बाह्वृचानां 'पूर्वेद्युर्वैश्वानर पार्जन्याम्। (आ०श्रौ० ३।१५।१) इत्याश्वलायनोक्तत्वात् प्रथम प्रयागे एव। कातीयानां च अन्वारम्भणीयया सह अस्या विकल्पः इति विशेषोऽवगन्तव्यः (तु०—का० श्रौ० ५।१।२ टि० विद्याधरः)। द्र० श्रौ०प०नि० पृ० ७७-७८।

**वैश्वानरपार्जन्येष्टिकाल—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ चातुर्मास्यप्रकरणे वैश्वदेवपर्वणः आरम्भे फाल्गुन्याः (पौर्णमास्याः पूर्वस्मिन्नहनि चतुर्दश्यां वैश्वानरपार्जन्येष्टिः प्रारभ्यते (तु०—आ०श्रौ० २।१६।१ षड्गुरुशिष्यः)।

**वैष्टुत—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने स्तोत्रीयापरिगणनार्थानां औदुम्बरीणां प्रादेशमात्राणां कुशानां विष्टुतिशब्दवाच्यानां (विष्टुतीनां) स्थापनार्थं वासः वैष्टुतमित्युच्यते। द्र० मी०को० पृ० ३७५८।

**वैसर्जनहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशौ शालाद्वार्ये निहितस्य प्रदीप्तस्य इध्मस्योपरि सकृद्गृहीतमाज्यं प्रचरण्याः स्रुचा हूयते इति प्रचरण्याः हुतो होमो वैसर्जनहोम इत्युच्यते। द्र० प्रचरणी—का०श्रौ० ८।७।१ विद्याधरः)।

**वौषट्—** (हौ०, सा०) इष्टिपशुसोमयज्ञेषु याज्यापाठान्ते 'वौषट्' इति यदुच्चार्यते स वषट्कारः वौषडित्युच्यते। द्र० वषट्कार—।

**व्यक्त—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे पाठकाले (वेद पारायणे) पद-पदार्थ-प्रकृति-विकाराऽऽगम-लोप - कृत् - तद्धित - समास - धातु-निपातोपसर्ग - स्वर- लिङ्ग-

वृत्ति - वार्तिक - विभक्त्यर्थ- वचनानां सम्यक् उपपादने व्यक्तमित्युच्यते। (तु०—ना०शि० १।३।१२)।

**व्यक्तचोदना—** (सा०) इष्टिपशुसोमयज्ञेषु १. यत्र प्रकृतिप्राप्तस्य (औपदेशिकस्य) मन्त्रस्य प्रकृतौ प्रयोगः आदेशः। तस्यैवातिव्यपदेशप्राप्तस्य विकृतौ प्रयोगोऽन्वादेशः। व्यक्तचोदना प्रकतिप्राप्तस्य मन्त्रस्य विकृतौ संस्कृत्य पुनः पाठः। यथा 'प्रजापतयेऽश्वस्य तूपरस्य गोमृगस्य' इत्यादि। अर्थात् आतिदेशिकमन्त्र प्रयोगे यस्माद् विकृत्युपदेशमनुसृत्यैव मन्त्रः प्रयोक्तुं युज्यते तस्माद् विकृत्युपदेशे सति स एव भवति (तु०—आ०श्रौ० ३।४।१० नारायणः) २. व्यक्तचोदनत्वं द्रव्य देवतावत्त्वम्। व्यक्तचोदनासामान्यात् प्रयाजानुयाजाधारसामान्याच्च अग्नीषोमीये पशौ दार्शपौर्णमासिको विध्यन्तः। **द्र०** मी०को० पृ० ३७६१।

**व्यक्ति—** (सा०) १. असाधारणविशेषा व्यक्तिरित्युच्यते। २. सर्वसामान्यविशेषविनिर्मुक्ता हि व्यक्तिरित्युच्यते। यो ह्यर्थः सामान्यस्य विशेषाणां चाश्रयः, सा व्यक्तिः। **द्र०** मी०को० पृ० ३७६१।

**व्यक्तदैवतहविस्—** (सा०) इष्टिपशुसोमयज्ञेषु देवतास्तुतिः यत्र प्रत्यक्षतः श्रूयते नामादिभिः तद् व्यक्तदैवतं हविरुच्यते। (तु०—आ०श्रौ० २।१४।२४ देवस्वामी)।

**व्यञ्जन—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे कादयो मान्ताः यादयो हान्ताश्च वर्गा व्यञ्जनानि उच्यन्ते। **द्र०** श्रौ०प०नि० पृ० २८।

**व्यतिमर्शविहार—** **द्र०** वालखिल्यमहावालभिद्विहार—।

**व्यतिषङ्गप्रकार—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयने पञ्चविंशे सात्रिके महाव्रताख्येऽहनि माध्यन्दिनसवने होतुः पक्षिरूपस्य निष्केवल्यशस्य ऊरुभागशंसने 'तार्क्ष्यसूक्तशंसनानन्तरं 'इन्द्रो विश्वं विराजति' इत्येकपदां शस्त्वा 'इन्द्रं विश्वा अवीवृधन्' (ऋ० १।११।१-८) इत्यादिकमष्टर्चं सूक्तं पादानां परस्परं व्यतिषङ्गेण शंसेत्। तत्र प्रथमायाः पूर्वमर्धर्चं यथापाठं शस्त्वा उत्तरेणार्धर्चेन सह द्वितीयस्या ऋचः पूर्वमर्धर्चं व्यतिषजेत्। एवमुत्तरायाः। तत्र पादैः पादा अनुसञ्जनीयाः। तदेवं प्राचीनासु सप्तष्वपि ऋक्षु परस्परं व्यतिषंङ्गं कृत्वा तेनैव व्यतिषङ्गेण अनुष्टुभं कृत्वा शंसेत्। एवं च सति प्रथमायामपि ऋचि अध्ययनक्रमेणैव पादत्रयं पठित्वा द्वितीयस्या ऋचः प्रथमपादमाकृष्य चतुर्थपादत्वेन योजयेत्। सेयमेका अनुष्टुप् ततः प्रथमायामृचि चतुर्थपादं द्वितीयस्यां द्वितीयपादं च योजयित्वा द्वितीयमर्धर्चं कुर्यात्। ततो द्वितीयस्यां तृतीयपादं तृतीयस्यां प्रथमपादं च संयोज्य द्वितीयमर्धर्चं कुर्यात्। सेयं द्वितीया अनुष्टुप्। एवमुत्तरत्रापि एकपादान्तरितत्वेन द्वौ द्वौ पादौ संयोज्य अर्धर्चान् कृत्वा द्वाभ्यामर्धर्चाभ्यामेकैका अनुष्टुप्संपादनीया। उत्तमायाः (१।११।८) प्रागेव संपादितात् पूर्वस्मात् पूर्वस्माद् अर्धर्चात् ऊर्ध्वं संपादितमुत्तरमुत्तरं अर्धर्चं संयोजयेत्। ता एताः परस्परं व्यतिषक्ताः सप्त अनुष्टुभः पठित्वा तत ऊर्ध्वं यथाम्नात पाठेनैव शस्त्रस्यान्तिमो भागः एकार्धर्चः पठिनीयः। एवं सति सूक्तस्य आद्यन्तयोः अर्धर्चयोः यथाम्नातपाठः, मध्यगतानां चतुर्दशानामर्धर्चानां व्यतिषङ्गपाठ इत्युक्तं भवति। अष्टाम्यास्तु यथाम्नातः पाठः। तद्यथा—'इन्द्रं विश्वा

अवीवृधन् (द्यन्त) समुद्व्यचसं गिरः। (रथीतमं रथीनां (प्रथमायास्त्रयः पादाः) सख्ये त इन्द्र वाजिनो३म् (द्वितीया प्रथमः पादः) इत्येकाऽनुष्टुप् ॥ १ ॥ वाजानां सत्पतिं पतिं (प्रथमायाश्चतुर्थः पादः) मा भेम शवसस्यते। त्वामभि प्र णोनुमः (द्वितीयाया द्वितीयतृतीयौ पादौ) पूर्वीरिन्द्रस्य रातयो३म् (तृतीयायाः प्रथमः पादः) इति द्वितीयाऽनुष्टुप् ॥ २ ॥ एवं प्रकारेण सप्तानुष्टुभः पादैः व्यतिसञ्जनीयाः। अष्टमी तु 'इन्द्रमीशानमोजसाभि स्तोमा अनूषत। सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ ८ ॥ इति यथासमाम्नाता पठनीया। इति ॥ (तु०—ऐ० आ० सा० १।५।२; ५।३।१)।

**व्यपक्रमण—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे साकमेधपर्वान्तर्गतपित्र्येष्टौ अन्यत्र चेष्टिपशुसोमेषु ऋत्विजामितस्ततो गमनं व्यपक्रमणमुच्यते। द्र० श्रौ०प०नि० पृ० १०७।

**व्यवस्था—** (सा०) अव्यवस्थितानां सामर्थ्येन व्यवस्था भवति। बृहद्रथन्तरोभयात्मके क्रतौ रथन्तरादिधर्माणां प्रकृतिवद् व्यवस्था। द्र० मी०को० पृ० ३७६३।

**व्यवाय —** (सा०) इष्टिपशुसोमयज्ञेषु विहारे (वेद्यां) स्थितानां परस्परं सङ्करो निषिध्यते अभ्यन्तरन्यायेन। अभ्यन्तरन्यायः— सर्वेभ्योऽभ्यन्तरा अग्नयः, ततो मुख्यक्रमेण हवींषि, ततो यज्ञायुधानि, ततो यजमानः, ततः पत्नी, ततो मुख्यक्रमेण कर्तार इति। होत्रध्वर्योस्तु विसंवादः। होताऽभ्यन्तरो भवति अध्वर्युर्वेति। तेषामिदमसांकर्यं व्यवाय उच्यते। तत्प्रयोजनं च परस्पर मितरेतरस्य स्पर्शाभावोऽवगन्तव्यः। (तु०— आ०श्रौ० ३।१।१९ सिद्धान्ती)। द्र० वेदिस्थित पदार्थानु- क्रम—।

**व्यस्तव्याहृतिहोम—** (सा०) इष्टिपशुसोमयज्ञेषु यत्र यत्र व्याहृतिहोम उपदिष्टस्तत्र व्यस्ताभिर्व्याहृतिभिः इत्युक्ते तिस्र आहुतीर्जुहोति। तद्यथा—भूः स्वाहा। भुवः स्वाहा। स्वः स्वाहा। अयं व्यस्तव्याहृति होम उच्यते। तत्र यथालिङ्गंत्यागो यजमानस्येति। विशेषः। द्र० श्रौ०प०नि० पृ० १६६।

**व्यस्तसमस्तप्रैषानुवचन—** (आध्व०, हौ०) इष्टिपशुसोमेषु व्यस्ताः प्रैषाः आध्वर्यवाः। व्यस्तानि अनुवचनानि हौत्राणि। समस्तानि प्रैषानुवचनानि मैत्रावरुणानि। मी०को० पृ० ३७६६

**व्याख्यान—** (सा०) इष्टिपशुसोमेषु उच्चैरुच्चारणं व्याख्यान- मुच्यते। व्याचक्षीत इत्युक्ते उच्चैरुच्चारणं कर्त्तव्यम्। यथा ब्रह्माणमुपवेश्य चतुर्होतॄन् व्याचक्षति' (ऐ० ब्रा० ५।२३) इति चतुर्होत्रादिमन्त्राणां व्याख्यानमुच्चारणमुच्चैः क्रियते।

**व्याख्यास्वर—** (सा०) इष्टिपशुसोमयज्ञेषु १. वक्तुर्वचनं श्रोता यथाश्रृणोति स व्याख्यास्वर इत्युच्यते (तु०—आ०श्रौ० ८।१३।६)। २. व्याख्यास्वरो मध्यम उच्यते। (तु०—तत्रैव देवस्वामी)। व्याख्यास्वरो नाम मध्यमः स्वरः (तत्रैव नारायणः)।

**व्याधि—** (सा०) व्याधयो द्विविधाः आहारनिमित्ता अन्यजन्मपापनिमित्ताश्च। आहारनिमित्तेषु चरकवाहटसुश्रुतेषु...व्याध्युपशमनं भवति। अशुभनिमित्तेषु अथर्ववेदविहितेषु शान्तिकेषु...शमनं भवति (तु०—कौ० सू० २५।१) इति विशेषः।

**व्यान—** (सा०) यः प्राणापानयोः सन्धिः स व्यानः (तु०—ऐ० ब्रा० सा० ६।२८)।

**व्यापन्न—** (सा०) इष्टिपशुसोमयज्ञेषु प्रायश्चित्त-प्रकरणे १. केश- कीटादिभिः दूषितं यद् द्रव्यं यदार्यैर्भोक्तुमशक्यं तद् द्रव्यं व्यापन्नमुच्यते। २. व्यापन्नं नाम आर्याणामभोज्यतां प्राप्तम्। **द्र०** मी०को० पृ० ३७८८।

**व्याम—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने अन्यत्र शुल्बे प्रक्षेपवेद्यादिसाधने च बाह्वोः प्रसारणं (परिमाणं) व्याम उच्यते। (तु०—तै० सं० सा० ४।२।५)

**व्याहति—** (औ०, सा०) व्याहतिर्नाम स्तोम सन्निवेशस्य क्रत्वन्तराद् अविसदृशत्वम् (तु०—द्रा०श्रौ० धन्वी० ला०श्रौ० १०।३)

**व्याहाव—**(सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. तत्र तत्र विहितः ऋग्भ्यः पूर्वं पठितव्यः 'शोंसावोम्' इति मन्त्रः व्याहाव उच्यते। २. तृतीयसवने आग्निमारुते शस्त्रे पित्र्यासु तिसृषु ऋक्षु पृथक् पृथक् 'शोंसावोम्' इति प्राकृत आहावो व्याहाव उच्यते **द्र०** आहाव—, ऐ० ब्रा० सा० ३।३७)।

**व्याहृति—** (सा०) इष्टिपशुसोमयज्ञेषु यागप्रसङ्गे ऋत्विग्भिः प्रयोक्तव्याः १. ओ श्रावय, अस्तु श्रौषट्, यज, ये यजामहे, वौषट्, इति एताः पञ्च व्याहृतयो भवन्ति (तु०—श० ब्रा० १।५।२)। **द्र०** आहुतिप्रदान—। २. 'भूर्भुवः स्वः' इति तिस्रः। ३. 'भूर्भुवः स्वर्महोजनस्तपः सत्यम्' इति च सप्त व्याहृतयो भवन्ति।

**व्युत्पत्ति—** (सा०) वृद्धव्यवहारे हि अनेन शब्देन अयमर्थः प्रतिपाद्यते इति शब्दार्थयोः वाच्यवाचकसंबन्धाध्यवसानमेव व्युत्पत्तिरित्युच्यते। **द्र०** मी०को० पृ० ३७९९।

**व्युत्पत्तिकरण—** (सा०) सिद्धे हि शब्दार्थसंबन्धे पश्चाद् अभिधेयभावं क्रियाद्वारकं प्रकाशयितुं व्युत्पत्तिकरणमुच्यते। (तु०—मा०सं० १।१, उवटः)। तदुक्तम्—क्रियाद्वारकसंबन्धमभिधानाभिधेययोः। ज्ञात्वा फलमाप्नोति श्रुतिर्वक्ति पुनः पुनः॥ इति।

**व्युष्टि—**(सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्नि चयनप्रकरणे चितिसाधने विशेषेण तम उच्छति विनाशयतीति व्युष्टिः उषः कालः, तद्वाचकशब्देनोपेतैः मन्त्रैरुपधेयाः इष्टका व्युष्टय उच्यन्ते (तु०—तै० सं० सा० ४।३।११)।

**व्युष्टिद्विरात्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये व्युष्टिद्विरात्रसंज्ञको द्व्यहोऽहीनः मासापवर्गः। अस्य ज्येष्ठकृष्णद्वितीयायां प्रारम्भः आषाढ्यां प्रथमं सौत्यमहः। प्रतिपदि द्वितीयं सौत्यमहः। प्रथममग्निष्टोमसंस्थं द्वितीयमतिरात्रसंस्थम्। तत्र षोडश दीक्षाः, द्वादश उपसदः, अग्निष्टोमः अतिरात्र इति द्वे सुत्ये, मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात् (तु०—का०श्रौ० १५।९।१७-१८ विद्याधरः)। **द्र०** राजसूयकाल—।

**व्यूढ—** (सा०, आध्व०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे प्रातः सवने प्रावरनुवाके छन्दसाम्, व्यूढद्वादशाहे च प्रातर्माध्यन्दिनतृतीयसवने सवनानां छन्दसां च स्वभावसिद्धस्य क्रमस्य विपर्येणोहनाद् व्यूढ इच्युच्यते (तु०— ऐ० ब्रा० सा० २।१८४।२५)।

**व्यूढद्वादशाह—** (अव्य०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे १. गायत्री त्रिष्टुप्, जगतीत्येतेषां त्रयाणां छन्दसां क्रमेण प्रात:सवन-माध्यन्दिन-तृतीयसवनानि स्वानि स्थानानि सन्ति। स्वस्वस्थान-विपरीतत्वेनोढानि स्थानान्तरे प्रक्षिप्तानि तानि छन्दांसि यस्मिन् द्वादशाहे सोऽयं व्यूढच्छन्दा द्वादशाहो व्यूढद्वादशाह इच्युच्यते। तदुक्तम् 'छन्दांसि वा अन्योऽन्यस्यायतनमभ्याध्यायन् गायत्री त्रिष्टुभश्च जगत्यै चायतनमभ्याध्यायन्, त्रिष्टुप् गायत्र्यै च जगत्यै च, जगती गायत्र्यै च त्रिष्टुभश्च। ततो वा एतं प्रजापतिर्व्यूढच्छन्दसं द्वादशाहमपश्यत्' इति। तथा च व्यूढे द्वादशाहे छन्दो व्यतिक्रम: पठ्यते 'छन्दांसि वा अन्योऽन्यस्य लोकमभिध्यायन्—गायत्री त्रिष्टुभ:, त्रिष्टुप् जगत्या:, जगती गायत्र्या:' इति (मी०को० पृ० ३७९९)। अर्थात् द्वादशाहिकनवरात्रस्य त्रिषु त्र्यहेषु प्रथमे त्र्यहे गायत्री त्रिष्टुप् जगतीति त्रिषु छन्द:सु प्रथमेऽहनि गायत्री, द्वितीये त्रिष्टुप्, तृतीये जगती छन्दांसि क्रमेण भवन्ति। द्वितीये त्र्यहे प्रथमेऽहनि जगती, द्वितीये त्रिष्टुप्, तृतीये गायत्री। तृतीये त्र्यहे प्रथमेऽहनि त्रिष्टुप्, द्वितीये जगती, तृतीये गायत्री इति अन्योऽन्यस्थानभेदेन (व्यतिक्रमेण) छन्दांसि प्रयुज्यन्ते। इति छन्दसां व्यूहनप्रकारेण द्वादशाहस्य व्यूढत्वं सिद्ध्यति (तु०— ऐ० ब्रा० सा० ४।२७, तां० ब्रा० सा० १०।५।१३ वौ० श्रौ० १६।१०।२६।१४) द्र०। २. व्यूढो दशरात्र: सत्राहीनोभयलिङ्गसद्भावात् सत्राहीनात्मको दशरात्र: प्रायणोदयनीयातिरात्रसंयुक्तो (व्यूढो) द्वादशाहाख्य: क्रतुर्भवति। स च द्वादशाहो द्विरात्रप्रभृतीना महीनानां त्रयोदशरात्रादीनां सत्राणां च प्रकृतिरिति सर्वप्रकृतेरग्निष्टोमादनन्तरं ताण्ड्यमहाब्राह्मणे विहित इति विशेषोऽवगन्तव्य: (तु०—तां० ब्रा० सा० १६।१।१)। ३. (क) योऽयं व्यूढद्वादशाहोऽस्ति तत्राऽऽद्यन्तौ यौ द्वावतिरात्रौ प्रथम द्वादशौ (द्वे अहनी) यच्च दशम मह: तत्परित्यज्य अवशिष्टेष्वह:सु नवसंख्याकेषु त्रय: त्र्यहा: कर्तव्या:। त्रिरात्र: कश्चित् कर्मविशेष:। सोऽयं त्रिवारमावर्तनीय:। (ख) यद्वा आद्यन्तावतिरात्रौ दशममहश्च मर्यादां कृत्वा अविशिष्टो नवरात्र: त्रिरावृत्तत्र्यहात्मक: व्यूढद्वादशाह उच्यते (तु०— ऐ० ब्रा० सा० ४।२४)। ४. अस्ति द्विविध: द्वादशाह:, व्यूढ: समूढश्च। त्रयनीकाभेदाच्च तयोर्भेद:। १. समूढस्तावत् ऐन्द्रवायवाग्रौ प्रायणीदयनीयौ, दशमं चाह:, अथेतरेषां नवानामह्नां ऐन्द्रवायवाग्रं प्रथममह: अथ शुक्राग्रम्, अथाग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्। अथैन्द्रवायवाग्रम्, अथशुक्राग्रम्, अथाग्रयणाग्रमिति। २. अथ व्यूढ:, ऐन्द्रवायवाग्रौ प्रायणीयोदनीयौ, अथेतरेषां दशानां ऐन्द्रवायवाग्रं प्रथममह:, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे। अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति। एवं सति अत्र व्यूढे इति षट् ऐन्द्रवायवाग्राणि। त्रीणि शुक्राग्राणि, त्रीणि आग्रयणाग्राणि। यत्र वचनं लिङ्गं च तत्र व्यूढ: प्रवर्तते। अन्यत्र अविशेषेण समूढ इति। व्यूढो द्वादशाह: समूढस्य विकार:। **द्र०** मी०को० पृ० ३७९९। **द्र०** ग्रहाग्रता—, त्र्यनीका—।

**व्यूढद्वादशाहवर्ग—** (सा०) सोमयज्ञे, प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतिभूतसमूढविकृतौ व्यूढद्वादशाहेऽपि द्वादशु दिनेषु चत्वारो वर्गा विकल्प्यन्ते। यथा प्रायणीयोदयनीयौ

प्रथमोत्तमे (आद्यन्ते) द्वे दिने एको वर्गः। शिष्टानां दशानां दिनानां मध्ये पृष्ठ्यषडहस्य प्रथमद्वितीयतृतीयदिनानां द्वितीयो वर्गः। पृष्ठ्यषडहस्य चतुर्थ-पञ्चम-षष्ठानां तृतीयो वर्गः। चतुर्णां सप्तमाष्टमनवमदशमानां छन्दोमानां चतुर्थो वर्गः। द्र० द्वादशाहसंज्ञा— ।

**व्यूढद्वादशाहिकदशरात्रे नवरात्र—** (सा०) सोमयज्ञेषु प्रकृतिभूत...विकृतौ व्यूढद्वादशाहे प्रथमं दशमं द्वादशमिति त्रीण्यहानि परित्यज्य अवशिष्टानि पृष्ठ्यषडहस्य षड्दिनानि छन्दोमानां त्रयाणां त्रीण्याहानीति नव दिनानि व्यूढद्वादशाहस्य दशरात्रे नवरात्र उच्यते। तत्र व्यूढसमूढोभयात्मकस्य द्वादशाहिकदशरात्रस्य नवरात्रे छन्दोमाः समूढा व्यूढाश्चेति द्विविधाः। पृष्ठ्यषडहस्य पूर्वाणि त्रीण्यहानि समूढाः छन्दोमाः, उत्तराणि त्रीण्यहानि व्यूढाश्च्छन्दोमाः भवन्तीति अनुसंधेयम्। (तु०—आ०श्रौ० ८।७। १५; ८।१।९।१)। अतो व्यूढद्वादशाहिकदशरात्रगतोनवरात्रोऽपि समूढो व्यूढश्चेति। द्विविधोऽवगन्तव्यः।

**व्यूढद्वादशाहिकदशरात्रे नवरात्रत्रिर्त्र्यह—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहे प्रथम-दशम-द्वादशदिन-व्यतिरिक्तो यो नवरात्रः (पृष्ठ्यषडहस्य षड् दिनानि छन्दोमानां त्रीण्यहानि)। तत्र ये त्रयः त्र्यहाः तेषां योऽयं प्रथमस्त्र्यहः स ऊर्ध्वः आरोहप्रकार एव। तद्यथा— त्रिष्वहःसु गायत्रं प्रातःसवनं त्रैष्टुभं माध्यन्दिनसवनं जागतं तृतीयसवनमित्ययं स्वभावसिद्धस्य क्रमस्य व्यत्यासाभावाद् ऊर्ध्व आरोहण इत्युच्यते। यस्तु मध्यमस्त्र्यहः स तिर्यङ् वर्तते (तिर्यङ्क्रमः)। तद्यथा— त्रिष्वहःसु जागतं प्रातः सवनं गायत्रं माध्यन्दिनसवनं त्रैष्टुभं तृतीयसवनमिति। अत्र नात्यन्तमनुक्रमो नाप्यत्यन्तं व्युत्क्रमः। तस्मादयं तिर्यङ्। य उत्तमः त्र्यहः सोऽर्वाङ् अधोमुखक्रमः। तद्यथा— त्रिष्वहःसु त्रैष्टुभं प्रातः सवनं जागतं माध्यन्दिनसवनं गायत्रं तृतीयसवनमित्यधोमुखत्वम्। तदेवं प्रथमः (त्र्यहः) जागतान्तः, द्वितीयः (त्र्यहः)। त्रैष्टुभान्तः, तृतीयः (त्र्यहः) गायत्रान्तः इत्येवमूर्ध्वतिर्यक्त्वार्वाक्त्वानि त्रिष्वपि त्र्यहेषु द्रष्टव्यानि। प्रयोजनं तु 'गायत्रं प्रातः सवनम्' इत्युक्ते प्रातः सवनप्रयोगे सर्वे मन्त्रा गायत्रीच्छन्दस्काः प्रयोक्तव्याः। एवं त्रैष्टुभं जागतमित्युक्ते च माध्यन्दिनसवनतृतीयसवनप्रयोगे सर्वे मन्त्राः त्रिष्टुप्छन्दस्का जगतीच्छन्दस्काश्च प्रयोक्तव्याः। विपर्यासे (व्यूढे) तु तत्तत्सवने उक्ते तत्तदुक्तच्छन्दस्का मन्त्राः प्रयोक्तव्या इति। (तु०—ऐ० ब्रा० सा० ४।२५)।

**व्यूहन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. प्रादेशकरणपर्याप्तवेद्यन्तर्गतभूमेः सकाशात् वेद्यास्तृतबर्हिष उदग्देशे वेद्यामेव नयनं व्यूहनमुच्यते। द्र० श्रौ०-प०नि० पृ० २५। २. जुह्वाः प्राच्यां, उपभृतः प्रतीच्यां उपस्तरणं व्यूहनमुच्यते। ३. पदार्थानां स्वस्वायतनविपर्यासेनाव्यवस्थापनं व्यूहनमुच्यते।

**व्रजत्कर्मन्—** (सा०) इष्टिपशुसोमयज्ञेषु व्रजद्भिर्यानि क्रियन्ते अग्निप्रणयनादीनि (कर्माणि) तानि व्रजद्वन्त भवन्ति। (तु०—आ०श्रौ० १।१२।३ देवत्रातः)।

**व्रत—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. दीक्षायां

यूपाहरणकरणानन्तरं पत्नीयजमानौ व्रतश्रपणागारे पर्युषितत्वादिदोषरहितं सर्पिमिश्रं पयोमिश्रं वा भक्षयत:। इदं भक्षणीयद्रव्यं व्रतमुच्यते। द्र० श्रौ०प०नि० पृ० १९५। २. अन्नमपि व्रतमुच्यते (निरुक्तम्)। ३. व्रतं (पय: पानं यवागूभक्षणं इत्यादि) पुरुषाणां क्रियार्थानां शरीरधारणार्थो बलकरणार्थश्चायं संस्कारो व्रतं नाम। ४. व्रतं पयो ब्राह्मणस्य, यवागू। राज्यस्य, आमिक्षा वैश्यस्य ज्योतिष्टोमे। ५. व्रतस्य श्रपणं पत्न्या दक्षिणाग्नौ आम्नातम्। द्र० मी०को० ३८००।

**व्रत—** (सा०) इष्टिपशुसोमेषु १. नियमस्वीकारो व्रतमुच्यते। २. व्रतं नाम सत्यवदनं ब्रह्मचर्यादिसंकल्पम्। स्त्र्युपगमनमांसप्रतिषेधोऽपि। द्र० मी०को० पृ० ३८००। तान्येतानि व्रतानि तत्र तत्र यज्ञेषूपदिष्टानि द्रष्टव्यानि।

**व्रत—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे सावित्रीव्रतं (उपनयनं), गोदानिकव्रतं (केशान्तं), सांवत्सरिकं व्रातिकव्रतं सांवत्सरिकमारण्यकस्य शुक्रियवर्जितस्य, आदित्यव्रतं सांवत्सरिकं शुक्रियाणाम्, औपनिषद् व्रतं सांवत्सरिकम् उपनिषद्ब्राह्मणस्य, ज्येष्ठसामव्रतं सांवत्सरिकम् आज्यदोहानामध्ययनार्थम्, माहानाम्निकव्रतं द्वादशवार्षिकं वा नववार्षिकं वा षड्वार्षिकं वा त्रिवार्षिकं महानाम्नीनामध्ययनार्थम्, वेदव्रतं द्वादशवार्षिकं चेति व्रतानि भवन्ति। तानि सर्वाणि गोभिलपारस्करादिगृह्येषु द्रष्टव्यानि।

**व्रत—** (सा०) सात्रिकं पञ्चविंश गवामयनिकमन्तिममहर्महाव्रतं व्रतशब्देनाप्यभिधीयते।

**व्रतग्रहण—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. यजमानो गार्हपत्यदक्षिणाग्न्योरन्तराले गत्वा आहवनीयस्य पश्चात् प्रत्यङ्मुख: तिष्ठन् अग्निं पश्यन् उदकं स्पृष्ट्वा 'अग्ने व्रतपते' (मा० सं० १।५) इति मन्त्रेण, 'इदमहमनृतात् सत्यमुपैमि' (मा० सं० १।१५) इति मन्त्रेण वा आ कर्मसमाप्ते: स सत्यवदनादिनियमरूपस्य व्रतस्य ग्रहणं स्वीकारो व्रतग्रहणमुच्यते। तदुक्तम्—'अन्तरेणापराग्नी गत्या परेण आहवनीयं प्राङ्मुखस्तिष्ठन् अग्निमीक्षमाणोऽप: उपस्पृश्य कर्माङ्गमुत्तरे सत्यवदम्' (तु०—का०श्रौ० २।१।११-१३ विद्याधर:)। अत्र 'अप उपस्पृश्य' इत्यपां स्पर्शमात्रं न त्वाचमनमित्यवधेयम्। द्र० २. व्रत—, व्रतोपायन—। २. व्रतग्रहणं पूर्णमासे बर्हि:संपादनकाले, दर्शे च वत्सापाकरणकाले। मी०को० पृ० ३८०१।

**व्रतदुहो दोहन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे, सप्रवर्ग्येऽप्रवर्ग्ये च तद्विकृतिषु चैकाहाहीनसत्रेषु आतिथ्येष्ट्यनन्तरमुपसदिष्टौ तिसृषु अय: शया: रज: शयाहरिशयाख्यासु उपसत्सु प्रथमायामुपसदि व्रतदुहो गो: त्रिभ्य एव स्तनेभ्य: व्रतं पयो दुहुयात्। द्वितीयायामुपसदि द्वाभ्यां स्तनाभ्यां तृतीयायामुपसदि एकस्मात्स्तनाद् व्रतं दुहुयात्। तदिदं त्रिस्तनद्विस्तनैकस्तनव्रतस्य दोहनं त्र्युपसत्पक्षे व्रतदोहनमुच्यते। तत्र त्र्युपसत्पक्षात् प्रवृद्धौ षडुपसत्पक्षे प्रथमयोर्द्वयोरुपसदोरेकं स्तनं, द्वितीययोर्हौ, तृतीययोस्त्रय: इति समं स्तनं विभज्य दोहयेत्। तदुक्तम्— 'एवं प्रवृद्धौ समं विभजेत्'। इति विशेषोऽवगन्तव्य:। (तु०—का०श्रौ० ८।३।१-२; ४ विद्याधर:)। द्र० उपसद्व्रतदोहन—। दीक्षितकरणे 'व्रतदुधे धुक्ष्व' इति प्रैषेण व्रतदुधे गावौ

दोहयत्यध्वर्यु— (तु०—का० श्रौ० ७।४।१९ विद्याधरः)।

**व्रतपक्षसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमविकृतिभूतस्य द्वादशाहस्य विकृतौ गवामयने साग्निचित्ये महाव्रतेऽहनि माध्यन्दिनसवने पृष्ठस्तोत्रोपाकरणानन्तरं गातव्ये 'इन्द्रं नरो नेमधिताः' (साम० ३१८) इत्यस्यां योनावुत्पन्ने द्वे सामनी व्रतपक्षौ उच्येते। ताभ्यां चित्याग्नेः पूर्वं दक्षिणं पक्षं पूर्वेण व्रतपक्षेण, उत्तरं पक्षमुत्तरेण व्रतपक्षेण उपतिष्ठेरन्। 'हा उ३हेँ ३ इन्द्रं नरो' इति गीयमानं साम पूर्वो व्रतपक्षः। हाउ३इइहा३ इन्द्रं नरो' इति गीयमानं सामोत्तरो व्रतपक्षः। इति विशेषोऽवधेयः। एते सामनी 'परिमादौ' इति परिमात्संज्ञे चोच्यते। (तु०—तां०ब्रा०सा० ५।४।३)। **द्र०** परिमाद्—।

**व्रतप्रदान—** (आध्व०, सा०) सोमयज्ञेषु दीक्षायां येन पात्रेण यजमानाय व्रतं प्रदीयते तत्पात्रं व्रतप्रदानमित्युच्यते।

**व्रतप्रदानकाल—** (आध्व०, सा०) सोमयज्ञेषु दीक्षिताय यजमानाय व्रतं व्रतार्थं पयः भोजनार्थं समर्पयेदध्वर्युः। तत्र सायंदोहं अपरात्रे दद्यात्। प्रातर्दोहं अपराह्णे दद्यात्। इति व्रतप्रदानस्य काल उच्यते (तु०—का०श्रौ० ७।४।२६ विद्याधरः)। **द्र०** २. उपसद्धोम—।

**व्रतभक्षणात् प्राक्कर्मन्—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं यज्ञभूमिनिश्चयरूपदेवयजनाध्यवसायादूर्ध्वं अध्वर्युः वेद्युत्करयोर्मध्येन राजानं प्रपाद्य मध्यमे वंशे राजानं बध्वा पुनरग्नीन् विहृत्य परिस्तीर्य दक्षिणतो ब्रह्म यजमानौ उपवेश्य स्रुचि चतुर्गृहीतं गृहीत्वा मनसा हुत्वा 'महाहविर्होता। सत्य हविरध्वर्युः। अच्युतपाजा अग्नीत्। अच्युतमना उपवक्ता। अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ। अयास्य उद्गाता। वाचस्पते हृद्विधे नामन्। विधेय ते नाम। विधेयस्त्वमस्माकं नाम। वाचस्पतिः सोमप्रपात्। मा देव्यः तन्तुश्छेदि मा मनुष्यः। नमो दिवे। नमः पृथिव्यै स्वाहा। इति मन्त्रेण यजमानेऽन्वारब्धे सत्याहवनीये जुहोति। यजमानो 'वाचस्पतये ब्रह्मणे इदं न मम' इति त्यागं पठति। पुनर्विहृत्य कूष्माण्डैः हुत्वा उपस्थानं वरदानं च कृत्वा पुनर्विहृत्य चतुर्गृहीतं गृहीत्वा पशुबन्धवद् यूपाहुतिं जुहोति। अपरं चतुर्गृहीतं गृहीत्वा आज्यस्थालीं सस्रुवां बर्हिर्हिरण्यं उदपात्रमादाय' इत्यादिप्रकारेण समन्त्रकेण पशुबन्धवद् अवतक्षणान्तं यूपाहरणं करोत्येतावत्कर्म पत्नीयजमानयोः दीक्षायां व्रतभक्षणात् प्राग् भवतीति व्रतभक्षात् प्राक्कर्मोच्यते। **द्र०** श्रौ०प०नि० पृ० १९५।

**व्रतवत्पञ्चशारदीय —** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रविकृतौ अहीनप्रकरणे पञ्चरात्रेषु तृतीयो व्रतवान्, मध्यव्रतः अन्तर्महाव्रतः इति पर्यायैरुक्तः पञ्चशारदीयः पञ्चाहोऽहीनः। तस्मिन् व्रतवति पञ्चरात्रे द्वादश उपसद्दिनानि। ज्योतिरग्निष्टोमसंस्थम्, गौरुक्थ्यसंस्थः, महाव्रतमग्निष्टोमसंस्थम्, गौरुक्थ्यसंस्थः, आयुरतिरात्रसंस्थम्, इति पञ्चसुत्यादिनानि। अस्याहीनस्य महाव्रतवत्त्वात् 'अहीना व्रतवन्तः सर्वजिद्दीक्षाः' इति वचनात् सर्वजिति एकाहेयानि दीक्षादिनानि तान्यत्रापि भवन्ति। सर्वजिति चतुर्भिर्दिनैरधिकं संवत्सरं दीक्षाः, एकदिनाधिकं संवत्सरं वा, षाण्मासस्यं वा, संवत्सरं वा दीक्षा भवन्ति

तथाऽत्रापि ज्ञेयाः। दीक्षाभ्य ऊर्ध्वं सुत्या भवन्तीति विशेषोऽवधेयः। मासापवर्गता चात्र न संपद्यते। (तु०—का० श्रौ० २२।१।४४; २३।४।२९ विद्याधरः)। द्र० अहीनसत्राहर्गणानामङ्गप्रधानाविधि-, अहीनः—, अहीनसत्रशस्योपाय—।

**व्रतसंज्ञकपयोभक्षण** — (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति...तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षितस्य यजमानस्य शयनमन्त्रेण स्वापानन्तरं अध्वर्युः मध्यरात्रे यजमानं प्रबोध्य 'त्वमग्ने व्रतया असि देव आ मर्त्येष्वा। त्वं मर्त्येष्वीड्यः' इति यजमानः पयो व्रतयिष्यन् अप आचामति। 'दैवीं। धियं मनामहे सुमृडीकामभिष्टये। वचोधां यज्ञवाहसँ् सुपारा नो असद् वशे' इति। ततोऽध्वर्युणा दत्तं व्रतं पयः स्वायतने उपविश्य कंसेन परिश्रित्य व्रतयति 'ये देवा मनोजाता मनोयुजः सुदक्षा दक्षापितारस्ते नः पान्तु ते नोऽवन्तु तेभ्यो नमस्तेभ्यः स्वाहा' इति प्राश्याचम्य 'शिवाः पीता भवथ यूयमापोऽस्माकमुदरे सुशेवाः। इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवसे' इति जपति। प्रतिप्रस्थातृदत्तं व्रतं पयः परिश्रित्य पत्नी तूष्णीं वतयति। उभावपि स्वं स्वं पात्रं निर्णिज्य प्रयच्छतः। इदं व्रतसंज्ञकपयोभक्षणमुच्यते। द्र० दीक्षितस्य यजमानस्य शयनमन्त्र—। श्रौ०प०नि० पृ० २०२।

**व्रतोपायन**—(याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अग्न्यलंकरणनन्तरं यजमानस्तीर्थेन निर्गत्य अग्रेणाहवनीयं परीत्य स्वायतने उपविश्य पाणौ साग्रं प्रादेशमात्रमुदग्रं दर्भद्वयं धृत्वा तेनैव दक्षिणेन पाणिना पयस्वती मन्त्रेण त्रिरप आचामति। तत आहवनीयं तूष्णीं पर्युक्षणविधिना पर्युक्ष्यं चतुभिर्मन्त्रैः चतस्रः समिध आहवनीये आधाय परिषेचनविधिना परिषिञ्चति। तदेतत् यजमानकर्म व्रतोपायनं व्रतग्रहणं चोच्यते। द्र० अग्न्यलङ्करण—, व्रतग्रहण—द्र०, श्रौ०प०नि० पृ० ११।

**व्रतोपायनीयाऽशन**—(याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च येन माषाद्यहविष्यवर्जितेन अन्नेन व्रतं भोजनं क्रियते तद् व्रतोपायनमुच्यते। तच्च अह्नो द्वितीयभागे घृतेनोपसिक्तं प्रातर्होत्यमाणद्रव्यातिरिक्तं पत्नीयजमानौ अतृप्तौ सन्तौ भुञ्जीयाताम्। इति विशेषोऽवधेयः। तदुक्तम्—'अपराह्णे व्रतोपायनीयमश्नीतः सर्पिषाऽसुहितौ' (का० श्रौ० २।१।१० विद्याधरः) इति। तथा च 'न तस्य सायमश्नीयाद् येन प्रातर्भक्ष्यमाणः स्यात्' इत्यापस्तम्बः (आप०श्रौ० ४।७।१०) इति। यद्वा यजमानः पत्नी च सायंकाले आरण्यादिवृक्षीयाणि फलानि आम्रकदल्यादीनि श्यामाकादिका आरण्यौषधीरश्नीयातां (फलाहारिणौ पत्नीयजमानौ स्याताम्)। न वा अश्नीयाताम् इति विशेषोऽवधेयः। तदुक्तम्—'वृक्षारण्यौषधीनामश्नीयाद्वा' (का० श्रौ० २।१।१४ विद्याधरः) इति। द्र० १ व्रत—।

**व्रात्य**— (सा०) आचारहीना जना विहिताकरणप्रतिषिद्धनिषेवणाद् व्रात्या उच्यन्ते। ते चतुर्विधाः—निन्दिताः कनीयांसः ज्यायांसो हीनाचाराश्चेति। न खल्वेते ब्रह्मचर्यं ब्राह्मणोचितं कर्माचरन्ति। न च कृषिं, वणिजः क्रियां क्रयविक्रयरूपाञ्च कुर्वन्ति। तस्माद् हीना उच्यन्ते। तां० ब्रा० १७।१।(१-२)। द्र० व्रात्यस्तोम—।

**व्रात्यस्तोम**—(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे व्रात्यस्तोमसंज्ञका गणयज्ञाश्चत्वार एकाहाः। येषां त्रयः पूर्वपुरुषा अकृतोपनयनसंस्कारास्ते पतितसावित्रीका व्रात्या उच्यन्ते। व्रात्यानां स्तोमा व्रात्यस्तोमाः। ते चतुर्विधाः। तत्र प्रथमतृतीयचतुर्थाः अग्निष्टोमसंस्थाः, द्वितीय उक्थ्यसंस्थः। व्रात्या अपि चतुर्विधाः हीनाः, निन्दिताः कनिष्ठा ज्येष्ठाश्च। तेषु हीनाः प्रथमे व्रात्यस्तोमेऽधिक्रियन्ते, निन्दिता द्वितीये, कनिष्ठास्तृतीये ज्येष्ठाश्चतुर्थे। व्रात्यस्तोमैरिष्ट्वा शुद्धेः कारणात् तेषां पुनरुपनयनेऽधिकारः सिद्ध्यति। विहिताकरणनिषिद्धाचरणादिना ये पतितास्ते हीनाः। अभिशंसनेन पापारोपणेन च जनैः ये गर्ह्यन्ते ते निन्दिताः। ज्ञातिभिर्दोषैर्दूषिता बहिष्कृताः कनिष्ठाः। निवृत्तपुत्रोत्पादनसामर्थ्याः स्थविरा ज्येष्ठा उच्यन्ते इति विशेषोऽवधेयः। कनीयसां द्विषोडशी स्तोमः। ज्यायसाम् ऊर्ध्वस्तोमः। (तु०—तां० ब्रा० १७।१-४, का०श्रौ० २२।४। १-६; आप०श्रौ० २२।४।५)। द्र० निकायिन्—, व्रात्य—।

**व्रीहि**—(सा०) इष्टिपशुसोमयज्ञेषु १. पौरोडाशिके विधौ प्रवोक्तव्या व्रीह्यः तण्डुलनिर्वृत्तिं कुर्वन्ति। ततः पिष्टानि, तेभ्यः पुरोडाशः, तेन यागः। २. व्रीह्यः केचित् कृष्णाः, केचित् आशवो नाम ये अल्पकालेन फलन्ति, केचित् महाव्रीह्यो नाम, केचित् आम्बा नाम। राजसूये नानाबीजेष्टौ एते प्रयुज्यन्ते। द्र० मी०को० पृ० ३८०१।

**व्रीह्याग्रयणकाल**—इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयणप्रकरणे शरदि व्रीहिभिर्यजेतेति शरत् व्रीह्याग्रयणकालो भवति।

**व्रीह्याग्रयणेष्टि**—(अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रायणप्रकरणे व्रीह्याग्रयणे इन्द्राग्नी देवता। तस्या द्वादशकपालः पुरोडाशो द्रव्यम्। वैश्यदेवः पयसि चरुः। द्यावापृथिवीय एककपालः पुरोडाशो भवति। धाय्यायुक्ताः सप्तदशसामिधेन्यः। 'प्रेद्धा अग्न' इति स्विष्टकृतः पुरोनुवाक्या। 'इमो अग्न' इति याज्या। एते च याज्यानुवाक्ये (संयाज्ये) विराट् छन्दस्कत्वाद् विराजौ इत्युच्येते इति विशेषोऽवगन्तव्यः। द्र० वैराजतन्त्रेष्टि—, २- विराज्—। अन्यत्सर्वं श्यामाकाग्रयणेष्टिवद् भवति। सेयं व्रीह्याग्रयणेष्टिरुच्यते। द्र० श्यामाकाग्रयणेष्टिआग्रयण—, श्रौ०प०नि० पृ० ७५।

## श

**शंयुवाक**—(हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च 'तच्छंयोरावृणीमहे' (तै० सं० २।६।९) इत्येषा ऋक् शंयुनाम बृहस्पतिपुत्रस्तुतिरूपत्वात् शंयुपदघटितत्वाच्च शंयुवाकः इत्युच्यते। तामेतामृचं अध्वर्युप्रेषितो होता अर्धर्चे अवसाय एकश्रुत्या अन्ते ओमिति प्रणवरहितां पठति। तद्यथा—'तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः (अवसानम्)। ऊर्ध्वं जिगातु भेषज ँ शं नो अस्तु द्विपदे शं चतुष्पदे॥ (तु०—का०श्रौ० १।७।२ टि० विद्याधरः; श्रौ०प०नि० पृ० ३७, श्रौ०को० १ भा० पृ० २३१)। तत्र दर्शपूर्णमासयोः पत्नीसंयाजानां पुरस्तादेकः पश्चादपरः इति द्वौ शंयुवाकौ भवतः। इति

विशेषोऽवधेयः। द्र० मी०को० पृ० ३८०५।

**शंयुवाकप्रैष—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते...तद्विकृतिषु च १. तृणप्रहरणानन्तरं अग्नीदध्वर्यू होतारं प्रेष्यतः—'संवदस्वागानग्नीदगञ्छ्रावय श्रौषट् स्वगा दैव्या होतृभ्यः स्वस्तिर्मानुषेभ्यः, शंयोर्ब्रूहि' इति प्रैषेण। सोऽयं शंयुवाकप्रैष इत्युच्यते। तत्र प्रैषघटितानि 'संवदस्व, अगान्नाग्नीत् अगन्, श्रावय, श्रौषट्, दैव्याः' इति पदानि निरन्तरं ब्रूतः किन्तु व्यत्यासं ब्रूतः। पूर्वं 'संवदस्व' इत्यग्नीत्। ततोऽध्वर्युः 'अगानग्नीत्' इति। ततोऽग्नीत् 'अगन्' इति, ततोऽध्वर्युः श्रावय' इति एवं क्रमेण ब्रूत इति विशेषोऽवगन्तव्यः (तु०— का०श्रौ० ३। ६।१५ विद्याधरः)। २. तृणप्रहरणानन्तरं अध्वर्युर्होतारमनेन प्रैषेण प्रेष्यतीति प्रैषः शंयुवाकप्रैष उच्यते। द्र० श्रौ०प०नि० पृ० ३७, तृण— द्र० तृण- प्रहरण—।

**शंसन—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु शंसनं नाम स्तोतव्यस्य स्तावकैर्गुणैः संबन्धकीर्तनं गानरहितम्। तदेव शस्त्रम्। शंसनं होता करोति। द्र० मी०को० पृ० ३८०६

**शंसनभेद—** (हौ०) सोमयज्ञेषु शस्त्रादिशंसनविधौ त्रिविधं हि शंसनम्—पादेऽवसाय अर्धर्चे प्रणवः इत्येकम्। अर्धर्चेऽवसाय कृत्स्नायामृचि प्रणवः इति द्वितीयम्। विनैवावसानं ऋगन्ते प्रणव इति तृतीयम् (तु०— ऐ० आ० सा० ५।२।७)। द्र० ऋक्शंसन—। तत्र महाव्रते निष्केवल्यशस्त्रे ग्रीवाशिरोविजयभागेषुअर्धर्चेऽवसानमिति पक्षोऽनुष्ठेयः।

**शंसनार्थाध्वर्युप्रश्न —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने अध्वर्युः होतारं पृच्छति प्रणवमुपांशुशंसं शंसिष्यसी ३ विग्राहा३म् इति। अयं शंसनार्थाध्वर्युप्रश्नः। द्र० श्रौ०प०नि० पृ० २९०।

**शकटपरिवहन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति...तद्विकृतिषु चैकाहाहीनसत्रेषु शकटे सोमस्थापनानन्तरं 'उस्रावेतं धूर्षाहावनश्रू अवीरहणौ ब्रह्मचोदनौ' इति मन्त्रेण नीयमानौ सोमवाहनावनुड्वाहौ प्रतिमन्त्रयते। 'वरुणस्कम्भनमसि' इति दक्षिणमनुड्वाहं योजयति। 'वरुणस्य स्कम्भसर्जनमसि' इति शम्यामवगूहति। 'व्रत्यस्तो वरुणस्य वाशः' इति योक्त्रमवगूहति। एवमेवोत्तरस्यां धुरि उत्तरमनुड्वाहं योजयति। ततो दक्षिणामीषामन्वारभ्य होत्रे प्रेष्यति- 'सोमाय क्रीताय प्रोह्यमाणायानुब्रूहि, सुब्रह्मण्य सुब्रह्मण्यामाह्वय, मा तु त्वमाह्वार्यजमान आह्वास्यति'। यजमानः ईषयोर्मध्ये तिष्ठन् पलाशशाखां धारयन् 'सुब्रह्मण्यो३म्' इति त्रिरुपांशु सुब्रह्मण्यामाह्वयति। ततः सुब्रह्मण्येन सुब्रह्मण्यामाहूतायां होत्रा च अनुवचनस्य प्रथमायामृचि त्रिरुक्तायां सत्यां शकटं प्रच्याव्य दक्षिणामुखं परिवर्त्य वहन्ति। 'प्रच्यवस्व' भुवस्पते विश्वान्यभिधामानि मा त्वा परि परीविदन्मा त्वा परिपन्थिनो विदन् मा त्वा वृका अधापवो मा गन्धर्वो विश्वावसुरादधच्छ्येनो भूत्वा परापत यजमानस्य नो गृहे देवैः संस्कृतम्' इत्यनेन मन्त्रेण। अध्वर्युरिव इमं मन्त्रं पठति, ततोऽध्वर्युयजमानौ यजमानस्य स्वस्त्यन्यस्यपि पन्थान- गस्महि स्वस्ति गामनेहसं येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु।' इमं मन्त्रं पठन्तौ अञ्जसा प्रतीचीं दिशं प्रति शकटं नयतः। एतत्कर्म

शकटपरिवहनमुच्यते। द्र० श्रौ०प०नि० पृ० २०८-९।

**शकटस्थापन**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धाननामकं शकटद्वयं महावेद्यां मन्त्रपूर्वकं प्रवर्त्त्य हविर्धानमण्डपे स्थाप्यते। इदं हविर्धानमण्डपे शकटस्थापनमुच्यते। द्र० मी०को० पृ० ३८०६।

**शकटे सोमस्थापन**— द्र० सोमस्थापन—।

**शकटे हविर्निर्वाप** — (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु। हविर्धाननामकाभ्यां द्वाभ्यां शकटाभ्यां ि-भन्ने शकटे पशुपुरोडाशादीनां हविर्निर्वापो भवति। द्र० मी०को० पृ० ३८।६।

**शकलक्षारण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च महावीरसादनानन्तरं औदुम्बरशकलेनोपयमनादुपहत्य आहवनीयस्य पूर्वार्धे क्षारयति— 'पूष्णे शरसे स्वाहा'। पूष्णे शरसे इदं न मम' इति यजमानः। तच्छकलं घर्मसिक्तभागो यथान्तः स्यात्तथा मध्यमे परिधौ सादयित्वा द्वितीयेन शकलेनोपयमनादुपहत्य पूर्वार्धे क्षारयति—'ग्रावभ्यः स्वाहा'। ग्रावभ्य इदं न ममेति यजमानः। अध्वर्युर्द्वितीयमपि शकलं प्रथमवत् सादयित्वा तृतीयेनोपहत्य मध्ये प्रश्च्योतयति। ('प्रतिरेभ्यः स्वाहा') प्रतिरेभ्य इदं न ममेति याजमानम्। तथै सादयित्वा चतुर्थेनोपहत्य अपरार्धे 'द्यावापृथिवीभ्यां स्वाहा'। द्यावापृथिवीभ्यामिदं न ममेति यजमानः। तच्चतुर्थं शकलं उपरि सिक्तदेशं भस्मान्ते, उपगूह्य पञ्चमेनोपहत्य प्राचीनावीती भूत्वा आहवनीयस्य दक्षिणार्धे क्षारयति। (पितृभ्यो घर्मपेभ्यः स्वाहा)। पितृभ्यो घर्मपेभ्य इदं न ममेति याजमानम्। अध्वर्युयजमानौ अप उपस्पृशतः। इदं पञ्चमं शकलं बहिः सिक्तदेशं दक्षिणपरिधौ सादयित्वा षष्ठेन शकलेन महावीरपिन्वनकं सोपयमनलेपेषु संमृज्योत्तरार्धे क्षारयति 'रुद्राय रुद्रहोत्रे स्वाहा'। रुद्राय रुद्रहोत्रे इदं न ममेति याजमानम्। इदं शकलक्षारणमुच्यते। द्र० श्रौ०प०नि० पृ० २२४, महावीर—।

**शकलानुप्रहरण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च शकलक्षारणानन्तरं अध्वर्युयजमानौ अप उपस्पृशतः। शकलक्षारणे षष्ठं शकलं उत्तरेणातीकाशान् अनन्वीक्षमाणो (ऽध्वर्युः) निरस्यति—'पाप्मना सह निरयं गच्छ, योऽस्मान् द्वेष्टि यं च वयं द्विष्मः' इति मन्त्रे। अप उपस्पृश्य ततः पञ्च शकलान् सिक्तदेशान् अद्भिः संस्पृश्याहवनीयेऽनुप्रहरति। इदं शकलानुप्रहरणमुच्यते। द्र० शकलक्षारण—, श्रौ०प०नि० पृ० २२४।

**शक्वरी**— (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूते द्वादशाहप्रकरणे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने शक्वरीषु होतुः पृष्ठस्तोत्रे शाक्वरं साम विधीयते। तत्र 'विदा मघवन् विदा' (साम० ६४१-६४९) इत्याद्यास्त्रयः तृचा नवर्चः सिमा मह्वया महानाम्न्यः शाक्वर्यः इति पर्यायैरभिधीयन्ते। तदुक्तम् 'एतेन शक्नुहीति तच्छक्वरीणाँ शक्वरीत्वम्, सीमानमभिनत्तत्सिमाः, मह्व्यमकरोत्तन्मह्व्याः, महान् घोष आसीत्, तन्महानाम्न्यः' इति। अर्थात् शक्त्युत्पादकत्वात् शाक्वर्य इति नाम संपन्नम्। सिम्नो भेदकत्वात् सिमा इति शक्वर्य उच्यन्ते। महान् घोषः शब्द

आसीत् तस्मान्महानाम्न्य इति संज्ञा आसां जाता । एवं भूतं शाक्वरं साम होतुः पृष्ठ्य-पञ्चमेऽहनि पृष्ठतया कार्यमिति विशेषोऽवधेयः । (तु०—तां० ब्रा० सा० १३ ।४ ।१) । आ०श्रौ० ७ ।१२ ।१० ।

**शक्वरीपाद—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूते द्वादशाहप्रकरणे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने शक्वरीषु होतुः पृष्ठस्तोत्रे शाक्वरं साम कर्तव्यम् । 'विदा मघवन् विदा' (साम० ६४१-४९) इति नवर्चस्त्रयस्तृचाः । शक्वर्यः । तासां शक्वरीणां (महानाम्नीनां) ऋचां प्रत्येकं त्रयोदशपादा अधीयन्ते । ते चाऽशक्वराः शाक्वराश्च भवन्ति । तत्र त्रिषु तृचेषु प्रथमद्वितीयौ षष्ठसप्तमौ धातुवत्ससंज्ञकौ भवतः । नवमः पुरुषसंज्ञकः । त्रयोदशः ऊधसंज्ञकश्चेति षड् अशाक्वराः पादाः । एवं तृतीयचतुर्थपञ्चमा अष्टमः ऊधसंज्ञकः, दशमैकादशद्वादशा इति सप्तपादाः शाक्वराः पादाः एवं मिलित्वा त्रयोदशशक्वरीपादा संपद्यन्ते (तु०—तां० ब्रा० सा० १३ ।४ ।२; आ०श्रौ० ७ ।१२ ।१०) । द्र० महानाम्नीपाद— ।

**शणकुलाय—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे उखाया अन्तः प्रक्षेपार्थं शणतृणनिर्मितं पक्षिनीडं शणकुलाय इत्युच्यते ।

**शतरात्रस्याहः क्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे शतरात्रे १. प्रायणीयोऽतिरात्रः २-४ त्रिकद्रुकाः, (ज्योतिः गौः आयु०), ५-८८ अभिप्लवषडहाश्चतुर्दश, ८९-९८ द्वादशाहिको दशरात्रः (पृष्ठ्यषडहश्चत्वारश्छन्दोमाः) ९९ महाव्रतम्, १०० उदयनीयोऽतिरात्र इति योगेन शतम् (१००) अहानि । इदं शतरात्रं प्रकृतिविहितशत्रम् । तस्य त्र्यहार्थे त्रिकद्रुकाः, षडहार्थे अभिप्लवषडहः, दशाहार्थे द्वादशिको दशरात्रः, एकाहार्थे दशरात्रात् परं महाव्रतम् इति आवापप्रकारेण प्रायणीयोदयनीययोर्मध्येऽहानि पूर्यन्ते इति प्रकृतिविहितसत्रत्वमुच्यते । द्र० अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधि—, २. आवापस्थान—, सत्रप्रकृति—, प्रकृतिविहितसत्र— ।

**शतरुद्रीय—** (आध्व०, सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे शतरुद्रीयहोमे शतशब्देनापरिमितत्वं लक्ष्यते । अपरिमिता रुद्रा यस्मिन्नध्याये प्रतिपाद्यन्ते होमश्चापि सोऽध्यायः शतरुद्रीय उच्यते । (तु०—तै० सं० सा० ४ ।५ ।११) । रुद्रश्चाग्निरुच्यते—'रुद्रो वा एव यदग्निः' (तै० सं० ५ ।४ ।३) ।

**शतरुद्रीयहोम—** (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चित्याग्नेः (स्थण्डिलस्य) उत्तरपक्षस्य वायव्यकोणे पूर्वं निखातासु जङ्घामात्राद्यासु परिश्रित्सु इष्टकासु जर्तिलमिश्रितान् गवेद्युकासक्तून् दक्षिणहस्तस्थितेन अर्कपत्रेण सव्यहस्तधृतेन अर्ककाष्ठेन पातयन् तिष्ठन् अध्वर्युरुदङ्मुखः संततधारया जुहोति—'नमस्ते रुद्र' (मा०स० १६ ।१-६६) इत्यध्यायेन कार्यः शतरुद्रीयसंज्ञको होम उच्यते । तत्र नमस्ते' इति षोडशर्चस्य प्रथमानुवाक्यस्यान्ते जानुमात्रे, एकादशर्चस्यानुवाकस्यान्ते नाभिमात्रे, प्रत्यवरोहमन्त्रस्यान्ते मुखमात्रे स्वाहाकारः कार्यः । अर्थात् षोडशस्याध्यायस्य प्रथमद्वितीयतृतीयानुवाकानां षड्विंशतिमन्त्राणां (१-२६) अन्ते जानुमात्रे परिश्रिति स्वाहाका-

रो विधेयः। ततश्चतुर्थपञ्चमयोरन्ते 'सुधन्वने'(१६।३७) इत्यत्र नाभिमात्रे परिश्रिति स्वाहाकारः कर्तव्यः। ततो 'नमोऽस्तु रुद्रेभ्यः' (१६।६३-६६)। इति त्रिभ्यः प्रत्यवहरोहमन्त्रेभ्यः प्राक् मुखमात्रे परिश्रिति स्वाहाकारः कर्तव्यः। ततो 'नमोऽस्तु रुद्रेभ्यः' (१६।६३-६६) इति कण्डिकात्रयेण पुनः प्रतिलोमो होमो विधातव्यः। प्रतिलोमहोमे 'ये दिवि' (६४) इति मुखमात्रे, 'येऽन्तरिक्षे' (६५) इति नाभिमात्रे, 'ये पृथिव्याम्'(६६) जानुमात्रे स्वाहाकारः कर्तव्यः। (तु०—का०श्रौ० १८।१।१-६ विद्याधरः)। श० ब्रा० ९।१।१।१ च। अस्मिन् शतरुद्रीयहोमे तैत्तिरीयसंहितायां सायणः—प्रश्ने पञ्चमे प्रोक्तः शतरुद्रीयहोमकः। 'सभापतिभ्य इत्यन्त एको मन्त्रः प्रकीर्तितः॥ आ वायाय इत्यन्त एकस्तन्मसीत्यन्त उत्तरः। नमो रुद्रेभ्य इत्येष पृथिव्यादिविभेदतः॥ त्रेधा भिन्नास्ततो मन्त्रा हीमे षणमन्त्रा इह कीर्तिताः। इति मन्त्रविभागं ब्रवीति। (तै० सं० सा० ४।५।१-११; ५।४।३)।

**शफ—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च १. यज्ञियकाष्ठनिर्मिते महावीरधारणार्थं मध्यभागे वर्तुले द्वे पात्रे सफे उच्येते। द्र० श्रौ०प०नि० पृ० २२८। २. तप्तस्य महावीरस्य ग्रहणार्थं उदुम्बरकाष्ठनिर्मितौ शफौ शफनामानौ पात्रविशेषौ।

**शब्द—**(सा०) शब्दः पदवाक्यात्मकः स्फोटः। द्र० मी०को० पृ० १८१३।

**शब्दभेद—**(सा०) शब्दो द्विविधः लौकिको वैदिकश्चेति। वैदिकोऽपि द्विविधः उपदेशातिदेशभेदात्। द्र० मी०को० पृ० १८१४। शब्दाः नाम आख्यात-उपसर्गनिपाता इति चतुर्विधाः। तत्र निपातोपसर्गाणां स्वतन्त्रार्थाभिधायकत्वाभावः। पुनश्च जातिगुणक्रियायदृच्छासर्वनामानि इति। पञ्चविधाः। शब्दा ये लौकिकाः ते एव वैदिकाः। शब्दो द्विविधः वर्णो ध्वनिश्च। पुनः शब्दाः रूढा यौगिका योगरूढाश्च। वर्हिरादिशब्दा रूढाः, प्रोक्षण्यादिशब्दा यौगिकाः, निर्मथ्यादिशब्दा योगरूढाः। द्र० मी०को० पृ० ३८१७-१८। शब्दाः पुनः निर्वचनभेदात् प्रत्यक्षवृत्तयः परोक्षवृत्तयः अतिपरोक्षवृत्तय इति त्रिविधाः। प्रत्यक्षवृत्तयः उक्तक्रियाः (साक्षात् दृष्टक्रियाः), परोक्षवृत्तयः अन्तर्लीनक्रियाः, अतिपरोक्षवृत्तयः अनुमेयाः इति। निरुक्तोक्तनिर्वचनप्रक्रिया तु परोक्षातिपरोक्षवृत्तिषु प्रवर्तते न प्रत्यक्षवृत्तिषु इति विशेषोऽवधेयः।

**शब्दाभिव्यक्ति—** (सा०) १. शब्दः वायुजन्यः। शिक्षाकारा आहुः—'वायुरापद्यते शब्दताम्' इति। द्र० मी०को० पृ० ३८१६। २. महता प्रयत्नेन शब्दमुच्चारयन्तिवायुर्नाभेः उत्थितः, उरसि विस्तीर्णः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दान् अभिव्यनक्ति। द्र० मी०को० ३८१८।

**शब्दार्थ—** (सा०) शब्दानां निगमनिरुक्तव्याकरणवशेन धातुतः कल्पितोऽर्थः शब्दार्थ उच्यते।

**शमितृ—**(सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्यादिषु ऋत्विक्षु यः कश्चित् ऋत्विक् पशुशमनरूपं कार्यं (पशुहिंसनं) करोति तत्कर्मसंयोगात् शमिता भवति। न तु अध्वर्य्वादिभ्यः स्वतन्त्रः ऋत्विक् शमिता भवति। तदुक्तम्—'शमिता ऋत्विग्भ्यो न भिन्नः पशौ'

इति। यज्ञे पशुघातिनः सर्वे ऋत्विजः शमितुरेकत्वेऽपि अन्येषामपि पशूनां सहगमनात् शमितार उच्यन्ते। शमितारश्च दैव्या मानुषाश्चेति द्विविधाः भवन्ति। शमिता द्वेधा, संज्ञपयिता विशसिता चेति। तत्र संज्ञपयिता ऋत्विग्भ्योन्यः। विशसिता तु अध्वर्युगणान्तर्गतः कश्चित्। **द्र०** मी०को० पृ० ३८८४ २. शमितारो नापूर्वाः प्रस्थात्रादयः एव। मी०को० पृ० ३८८४।

**शमितृप्रश्नोत्तर—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च पाशुकहविरासादनानन्तरं आग्नीध्रः स्रुचां दक्षिणतो बर्हिरास्तीर्य तदुपरि यूपाऽऽहवनीययोरन्तरेण इडसूनुमाहृत्य कृष्णशाखायामुपगूहति। प्रतिप्रस्थाता आज्यस्थालीं स्रुवं चादाय कृष्णशाखायामुपगूहति। प्रतिप्रस्थाता आज्यस्थालीं स्रुवं चादाय पूर्वगृहीतात् पृषदाज्याज्जुह्वां गृहीत्वा अन्तरेण चात्वालोत्करौ उदङ्निष्क्रम्य शमितारं पृच्छति—'शृतं हविः ३ शमितः' इति। शमिता हृदयशूलं पुरतो धारयन् 'शृतम्' इति प्रत्याह। प्रतिप्रस्थाता पुनः किञ्चित् गत्वा पूर्ववत् पृच्छति। शमिता तथैव प्रत्याह। पुनः किञ्चित् गत्वा तथैव तृतीयप्रश्नोत्तरे। इमे प्रश्नोत्तरे शमितृप्रश्नोत्तरे इत्युच्येते। **द्र०** श्रौ०प०नि० पृ० १३५। पाशुकहविरा- सदन—।

**शमितृप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्युः शमितारमाह—'अकृण्वन्तमायुं संज्ञपय' इति। सोऽयं शमितृप्रैष उच्यते। **द्र०** श्रौ०प०नि० पृ० १२९।

**शम्या—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च प्रयोक्तव्या खादिरकाष्ठनिर्मिता षट्‌त्रिंशदङ्गुलपरिमितायामा अग्रभागे अष्टास्वङ्गुलिषु कुम्बाष्टकयुता तण्डुलादिपेषणकाले दृषदोऽधस्तात् स्थापनायोपयुज्यमाना अग्नीध्रकर्तृकदृषदुपलादिसमाहननादौ करणभूता शम्या पात्रं भवति। **द्र०** श्रौ०प०नि० पृ० ७-८।

**शम्याप्रास—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे चतुर्थ्यां पञ्चम्यां वा सोमसंस्थायां वाजपेये आजौ (धावन् मर्यादायां शम्या शक्तृलिङ्गं (शङ्कुः)। सा शम्या प्रक्षिप्ता यस्मिन् देशे पतति स देशः शम्याप्रास उच्यते। **द्र०** आजि—। सारस्वतसत्रेषु च शम्याप्रासे शम्याप्रासेऽहरहर्यजमानाः अनुव्रजेयुः (तु०— आ०श्रौ० १२।६।३)।

**शरद्—** (सा०) प्रोष्ठपदीमारभ्य कार्तिकीं यावत् शरत् प्रसिद्धा। अथवा कन्यासंक्रान्तिमारभ्य वृश्चिकसंक्रान्तिं यावत्। अथवा तुलामारभ्य धनुः संक्रान्तिं यावत् शरत्काल उच्यते। तु०—शां०श्रौ० १५।१।१ भाष्यम्)। सा च वाजपेयारम्भकालः परिभाष्यते। शरदि वैश्यः अग्निमादधीत। शरदि वैश्यमुपनयीत। **द्र०** मीको० पृ० ३८८५; वाजपेय—।

**शराव—**(सा०) १. त्रिप्रस्थः शराव उच्यते (तु०— तै० सं० सा० ३।३।८।४)। २. शरावं पुरुषान्नं भवति। (तु०—आ०श्रौ० ३।१४।१ देवत्रातः)।

**शरीर—** (सा०) पितृमेधप्रकरणे अस्थिसंचयने अस्थीनि शरीराण्युच्यन्ते।

**शर्करा**—(सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चूर्णीकृताः पाषाणाः, शर्करोच्यते। सा उरवार्थं मृदि संसृज्यते (तु०—तै० सं० सा० ४।१।५)।

**शवाग्नि**— (सा०) पितृमेधप्रकरणे प्रेतदहनार्थं प्रवृत्तः क्रव्यादाग्निः शवाग्निरुच्यते।

**शस्त्र**—(हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र- प्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रे, होत्रा होत्रकैश्च प्रयुज्यमानं १. अप्रगीतमन्त्रसाध्यं गुणेन गुणिनः संबन्धाभिधानं शंसनं शस्त्रं (मन्त्र-समूहः) उच्यते। (तु०—शास्त्रदीपिका)। **द्र०** शंसन—। २. ऋग्वेदमन्त्रैः होतृभिः क्रियमाणं देवतानिष्ठगुणाभिधानं शंसनं शस्त्रमुच्यते। ३. शस्त्रं (शंसनं) स्तुतिरेव अप्रगीतमन्त्र साध्या। तत्र गुणगुणिसंबन्धाभिधानं स्तुतिरुच्यते। **द्र०** मी०को० पृ० ३८८७। ४. होतृभिः पठनीय ऋङ्मन्त्रसाध्यः स्तोत्रविशेषः शस्त्रमभिधीयते। ५. (पूर्व) छन्दोगैः (सामभिः) स्तुतमेव (स्तोत्रमेव) तत्सामगतेन येन ऋक्समाम्नायेन अनु शस्यते तच्छस्त्रमुच्यते। अर्थात् स्तोत्रमग्रे भवति अनन्तरं शस्त्रं भवतीति स्तोत्रशस्त्राणामनुक्रमो विधीयते। अतः स्तोत्रे स्तुते सति आहावादि याज्यान्तं सर्वं मन्त्रजातं शस्त्रमभिधीयते। तच्च स्तोत्रस्यान्त्यायां स्तोत्रीयायां 'एषोत्तमा' इति प्रस्तोत्रा उक्ते अनन्तरमुद्गातुर्हिंकारे कृते प्रातःसवने होतुरभिहिंकारे कृते सति आहावेन प्रारभ्यते। माध्यन्दिनसवने तृतीयसवने च 'एषोत्तमा' इति प्रोक्ते अनन्तरं प्रतिहारः क्रियते। तस्मिन् प्रतिहारे उक्ते सति आहावेनारभ्यते इति विशेषोऽनुसंधेयः (तु०—आ०श्रौ० ५।१०।१-२ देवत्रातः)। शस्त्राणि च अग्निष्टोमसंस्थेषु सोमेषु सर्वत्र होतुः होत्रकाणां च द्वादश भवन्ति। तत्र होतुः प्रातःसवने आज्य प्रउगे द्वे, माध्यन्दिनसवने मरुत्वतीयनिष्केवल्ये द्वे, तृतीयसवने वैश्वदेवाग्निमारुते द्वे इति त्रिषु सवनेषु षट्शस्त्राणि। मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां त्रयाणां होत्रकाणां प्रातःसवनमाध्यन्दिनसवनयोरुभयोः त्रीणि त्रीणि कृत्वा षट् शस्त्राणि मिलित्वा द्वादश संपद्यन्ते। अग्निष्टोमसंस्थेषु तृतीयसवने होत्रकाणां शस्त्राणि न सन्ति तेन द्वादशैव। तृतीयसवने उक्थ्यषोडशि-अतिरात्रसंस्थेषु तु सोमेषु पूर्वसंयुक्तानि पूर्वोक्तैर्द्वादशभिः सह पञ्चदश उक्थ्ये, षोडश षोडशिनि, पञ्चविंशतिः अतिरात्रे। एवं वाजपेये सप्तदश, अप्तोर्यामे त्रयस्त्रिंशत् इति यथासंख्यं शस्त्राणि भवन्ति। अत्यग्निष्टोमस्य उक्थ्यातिक्रमणात् षोडशिसंस्थत्वाच्च षोडशिशस्त्रेण सह त्रयोदश शस्त्राणि ज्ञेयानि। (तु०—का० श्रौ० १०।९।२७ टि० विद्याधरः)। ५. सोमयागेषु 'ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' (तै० सं० ३।१।४) इति विधिना तत्तद्देवताकेषु ग्रहेषु गृहीतेषु चमसेषु वोन्नीतेषु बहिष्पवमानादीनां स्तोत्राणां प्रारम्भः (उपाकरणं) विहितः। स्तोत्रं च उद्गातृपुरुषैस्त्रिभिः क्रियमाणः सामगानविशेषः। स्तोत्रसमाप्त्यनन्तरं 'स्तुतमनुशंसति' इति विधिना शंसनं (शस्त्रं) विहितम्। शस्त्रं शंसनमिति पर्यायौ। शस्त्रं च साम्ना स्तुताया देवताया एव पुनः ऋङ्मन्त्रेण सामरहितेन ऋङ्मन्त्रेण स्तवनं होतृभिः क्रियमाणं भवतीति (तु०—का०श्रौ० ९।१३।२९ टि० विद्याधरः।

**शस्त्रपाठ**—(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु शस्त्रपाठे शस्त्रादौ होत्रा

'शोंसावोम्' इति प्रातःसवने, 'अध्वर्योशोंसावोम्' इति माध्यन्दिनसवने 'अध्वर्यो शोशोंसावोम्' इति तृतीयसवने आहावः क्रियते। तत्समकालमेव अध्वर्युणा च त्रिषु सवनेषु 'शोंसामो देव' इति प्रतिगरः क्रियते। शस्त्रे काश्चन ऋचोऽर्धचशः काश्चन पच्छः (पादशः) पठ्यन्ते। तत्र अर्धर्चे पादे च होत्रा अवसिते (अध्वर्योः) 'ओथामो दैव' इति प्रतिगरः। एवं शस्त्रे सर्वा ऋचः प्रणावान्ताः पठ्यन्ते। तत्र सर्वत्र 'ओ३थोमो दैव' इति प्रतिगरः। एवं शस्त्रसमाप्तौ ऋक् प्रणवान्ता पठ्यते। तत्र (शस्त्रान्ते) तु टिस्थाने 'ओ३म्' इत त्रिमात्रः। निवित्स्वपि 'ओथामो दैव' इति प्रतिगरः। तदेव रूपं शस्त्रपठनं शस्त्रपाठ इत्युच्यते (तु०—का०श्रौ० ९।१३।२९ टि० विद्याधरः)। द्र० ऋक्शंसन—, शंसनभेद—।

**शस्त्रप्रतिगर—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यत्र यत्र होत्रा 'शोंसावोम्' इति आहावः क्रियते तत्र तत्र सर्वत्र शस्त्रेषु तत्समकालमेव अध्वर्युणा 'शोंसामो दैव' इति प्रति गरः कार्यः। एवम् 'अध्वर्यो शोंसावोम्, अध्वर्यो शोशोंसावोम्' इत्यत्रापि 'शोंसामो दैव' इत्येव प्रतिगरः। शस्त्रे काश्चन ऋचोऽर्धर्चशः काश्चन पच्छः पठ्यन्ते। एवं सति अर्धर्चे पादे च होत्रा अवसिते 'ओथामो दैव' इति प्रतिगरो भवति। एवं शस्त्रे सर्वा ऋचः प्रणवान्ताः पठ्यन्ते। तत्रापि 'ओ३मोथो दैव' इति प्रतिगरः। एवं शस्त्रसमाप्तौ ऋक् प्रणवान्ता पठ्यते। तत्र (शस्त्रान्ते) तु 'ओ३म्' इति त्रिमात्रः प्रणवः प्रतिगरः। निवित्स्वपि 'ओथामो दैव' इत्येव प्रतिगरः। यथा 'अग्निर्देवेद्धः' (निवि० १।१) 'ओथामो दैव' 'मन्विद्धः' (निवि० १।२) 'ओथामो दैव' इति तृ. सवने आग्निमारुते शस्त्रे 'प्र द्यावा यज्ञैः' (ऋ० ७।५३।१-३), स्वादुष्किलायम्' (ऋ० ६।४७।१-४) इत्येतासु स्वादुष्किलीयासु ऋक्षु च 'मदामो दैव' (का० श्रौ० १०।६।५-६)। इति प्रतिगरो भवति। प्रति गीर्यते प्रत्युच्चार्यते इति प्रतिगरः। शस्त्रस्वरः प्रतिगरः 'ओथामो दैव' (आ०श्रौ० ५।९।४)। अर्थात् येन स्वरेण होता शंसति तेनैव स्वरेण अध्वर्युरपि प्रतिगृह्णाति। (तु०—का०श्रौ० ९।१३।२९ टि० विद्याधरः)। द्र० प्रतिगर—।

**शस्त्रप्रायश्चित्त—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने शस्त्रान्ते वाचनानन्तरं सदसि पात्रं निधाय प्राङेत्य अपूर्वाज्यात् स्रुवेण प्रचरण्या वा 'यन्म आत्मनः' इति द्वाभ्यां व्याहृतिभ्याञ्च जुहोति। इदं शस्त्रप्रायश्चित्तमुच्यते। द्र० श्रौ०प०नि० पृ० २९०।

**शस्त्रयाज्याधर्म—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमा...तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयानां शस्त्राणां या याज्या भवन्ति तासां नानुवाक्याः न प्रैषः। अतोऽनुवाक्या प्रैषधर्मरहिताः शस्त्राणां याज्या भवन्ति। द्र० याज्याधर्म—।

**शस्त्रयाज्यान्तमन्त्र—** (हौ०) सोमयज्ञेषु, प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु शस्त्राणां याज्यानामन्तेषु 'वौ३षट्' इति वषट्कारः, 'सोमस्याग्ने वीहि' इत्यनुवषट्कारः इत्येतौ द्वौ वषट्कारानुवषट्कारसंज्ञौ मन्त्रौ पठनीयौ। तौ शस्त्रयाज्यान्तमन्त्रावुच्येते। याज्यापाठान्ते गृहीता ग्रहा हूयन्ते इति विशेषोऽवधेयः।

**शस्त्रयाज्यादेवतासादृश्य—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमा....तद्विकृतिषु चैकाहाहीनसत्रेषु शस्त्रशंसने या शस्त्रस्य देवता सैव याज्याया अपि देवताऽपेक्ष्यते। इति शस्त्राणां याज्यानां च देवता सदृशी भवति। तदुक्तम्—'यथा वाव शस्त्रमेवं याज्या' (तु०—ऐ० ब्रा० सा० ६।२६)। इति शस्त्राणां याज्यानां च देवतासादृश्यमुच्यते।

**शस्त्रशंसनदेश—द्र०** धिष्ण्य—।

**शस्त्रातान—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतेषु चतुर्विंशदि सात्रिकेष्वहःसु तद्विकृतिषु चैकाहाहीनसत्रेषु १. शस्त्राणां प्रतिपदनुचराः स्तोत्रियानुरूपाः प्रगाथाः धाय्याः निविद्धानसूक्तानि निवित्पदानि परिधानीयाः याज्याः इत्येतावान् ऋक्समूहो यथाक्रमक्लृप्तः शस्त्रातान इत्युच्यते। अस्यातानस्य प्रकृतौ (ज्योतिष्टोमे) शस्त्रस्य संज्ञा चोच्यते (तु०—आ०श्रौ० ७।१।७ देवत्रातः)। आ०श्रौ० ८।१३।३५; ९।१।१ २. आतन्यन्ते यैरित्याताना:। यैरवयवरूपैः शस्त्राण्युच्यन्ते तूष्णींशंसननिवित्सूक्तादिभिस्ते आताना इत्युच्यन्ते। ते च ध्रुवाः (नित्याः) भवन्ति तदुक्तम्—'ध्रुवाः शस्त्राणामातानाः'(तु०—आ०श्रौ० ७।१।७ नारायणः)।

**शस्त्राद्यान्त्याहावप्रतिगर—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आज्य प्रउगशस्त्रादौ होता 'शोंसावोम्' इत्याहावं पठति। अध्वर्युः 'शंसाऽऽमो दैवोम्' इति प्रतिगरं पठति। शस्त्रान्ते होता 'उक्थं वाचि' इत्याहावं पठति। 'ओमुक्थशा' इत्यध्वर्युः प्रतिगरं पठेत्। होत्रकाः अप्येवमेवाहावं पठेयुः। अध्वर्युश्च प्रतिगरं पठेत्। माध्यन्दिनसवने मरुत्वतीयनिष्केवल्यशस्त्रादौ होता 'अध्वर्यो शोंसावोम्' इत्याहावं पठति। 'शंसाऽऽमो दैवोम्' इत्यध्वर्युः प्रतिगरं पठति। शस्त्रान्ते 'उक्थं वाचीन्द्राय' इति होताऽऽहावं पठति, 'ओमुक्थशा' इत्यध्वर्युः प्रतिगरं पठति। होत्रका अप्येवमेवाहावं पठेयुः। अध्वर्युश्च प्रतिगरं पठेत्। तृतीयसवने वैश्वदेवाग्निमारुतशस्त्रादौ होता 'अध्वर्यो शोशोंसावोम्' इत्याहावं पठति। अध्वर्युः 'शंसाऽऽमोदैवोम्' इति प्रतिगरं पठति। शस्त्रान्ते होता 'उक्थं वाचीन्द्राय देवेभ्यः' इत्याहावं पठति। अध्वर्युः 'ओम्' इति प्रतिगरं पठति। (तु०—ऐ० ब्रा० ३।१२) तृतीयसवने होत्रकाणां शस्त्रान्ते उक्थ्ये षोडशिनि च 'उक्थं वाचीन्द्राय देवेभ्यः' इति होत्रकाणां शस्त्वाजपः (तु०—आ० श्रौ० ५।१०।२४)। षोडशिन ऊर्ध्वं च (अतिरात्रे) होतुः होत्रकाणां च सर्वेषाम् शस्त्रान्ते 'उक्थं वाचि' इत्ययमेव शस्त्वाजपः (तु०—आ० श्रौ० ५।१०।२३)। तत्र तृतीयसवनीये (आहावे) ब्राह्मणे आहाव प्रतिगरमन्त्रान्तेषु 'आह्वयते, आह' इत्येकवचनं होतृविवक्षया, होत्रकाणामन्यतम त्वविवक्षया चान्वेतव्यम्। शस्त्राणाम् आद्यान्त्या एते शस्त्राहावप्रतिगराः शस्त्राद्यान्त्याः जपमन्त्राश्चोच्यन्ते। द्र० शस्त्रप्रतिगर—।

**शस्त्राहाव—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायाग्निष्टोमे तद्विकृतिषु चैकाहीनसत्रेषु तत्रच्छस्त्रप्रारम्भे अर्थात् शस्त्रस्याद्याया ऋचः प्रारम्भे, शस्त्रमध्ये च अर्थात् शस्त्रान्तर्गततृचप्रगाथनिविदाद्यारम्भे च प्रातःसवने होता 'शोंसवोम्' इत्यध्वर्यु-

माह्वयेत्। माध्यन्दिनतृतीयसवनयोरपि शस्त्रमध्ये 'शोंसावोम्' इति त्र्यक्षर एवाहावः। तयोः शस्त्रारम्भे तु 'अध्वर्यो शोंसवोम्, अध्वर्यो शोशोंसावोम्' इति क्रमेण षडक्षर सप्ताक्षारा वाहावौ। स एव प्रणवान्तः 'शोंसावोम्' इति। तदुक्तमाश्वलायनेन— 'अनभिहिंकृत्य शोंसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेदुपांशु सप्रणवमसन्तन्वन्। एष आहावः प्रातःसवने शस्त्रादिषु' (आ०श्रौ० ५।९।१-२) प्लुतादिः प्रणवेऽप्लुतादिरवसाने (आ०श्रौ० ५।९।६) इति। 'अध्वर्यो शोंसावोम्' इति माध्यन्दिने शस्त्रादिष्वाहावः' (आ०श्रौ० ५।१४।३) 'अध्वर्यो शोंशोंवोम् इति तृतीयसवने शस्त्रादिष्वाहावः (आ०श्रौ० ५।१८।४)। इति (तु०—का०श्रौ० ९।१३।२९, टि० विद्याधरः, (ऐ० ब्रा० ३।१२; आहाव—, आहावप्रदेश—, शस्त्राद्यान्त्याहावप्रतिगर—।

**शस्त्रिहोत्रक—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु प्रशास्ता (मैत्रावरुणः) ब्राह्मणाच्छंसी (ब्रह्मा) अच्छावाकः इति त्रयः (आ०श्रौ० ५।१०।१०)। शस्त्रमेषामस्तीति शस्त्रिणो होत्रका उच्यन्ते। द्र० होत्रक—, होत्रकक्रिया—, होत्रा—।

**शस्त्रोपाकरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'एषोत्तमा' इति अपवृत्ते (समाप्ते) स्तोत्रे शस्त्रमुपाकरोति (तु०—हि०श्रौ० ८।८।३२।३९)।

**शाक्वरसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहे पृष्ठ्यषडहस्य पञ्चमेऽहनि माध्यन्दिनसवने होतुः पृष्ठस्तोत्रे प्रयुज्यमानं १. 'विदा मघवन्' (साम० ६४१-६४९) इत्यादिषु महानाम्नीषु शक्वरीषु गातव्यं साम शाक्वरं साम भवति। 'विदा मघवन्' इत्यादयो नवर्चः महानाम्नीसंज्ञकाः। तासूद्गातारः शाक्वराख्येन साम्ना स्तुवते। २. शाक्वरं अच्छावाकस्य साम पृष्ठ विश्वजिति। शाक्वरं मैत्रावरुणसाम विश्वजिति सर्वपृष्ठे। द्र० मी०को० पृ० ३८९१।

**शाखा—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीयदर्शपूर्णमासप्रकरणे दर्शे सान्नाय्यकरणाय वत्सापाकरणार्था विहिताऽस्ति। सा पलाशवृक्षस्य, शमी वृक्षस्य, यज्ञियवृक्षस्य वा प्राची उदीची वा भवति। निरूढपशुबन्धे सौत्रामण्यां अग्नीषोमीयपशौ च प्लक्षवृक्षस्य कार्या। द्र० १-२ शाखाहरण—।

**शाखा—** (सा०) १. वेदवृक्षस्य वृक्षस्य शाखा इव हीमाः काठकं कालापकं पैप्पलादकं तैत्तिरीयकं ताण्डकं (मैत्रावणीयकं वाजसनेयकं शाकलकं वाष्कलकं) इति शाखान्तराणीति शाखाः भवन्ति। २. शाखाः काठकाद्याः शाखाव्यपेदश्याः प्रसिद्ध्यन्ति। विधि स्कन्धरूपस्य वेदाख्यवृक्षस्य कतिपयाङ्गाख्यपुष्पफलान्वयात्। यथा एकस्य वृक्षस्य एकमूलः सर्वशाखाधारभूतः, स्कन्धः, तथा एकस्येव कर्माख्यमूलोत्पत्तिविध्याख्यस्कन्धरूपत्वात् वृक्षत्वोपचारः। यथा वृक्षस्य पुष्पफलानि न एकैकस्यां शाखायां समस्तानि सन्ति तथा वेदशाखायामपि एकैकस्यां ऋग्वेदादिप्रतिपाद्यहौत्रादि समस्ताङ्गाख्यपुष्पफलासत्वात् शाखात्वोपचारः। द्र० मी० को० पृ० ३८९१-९२। शाखान्तरेऽपि हि एकं कर्म इच्छन्ति मीमांसकाः। शाखाभेदेऽपि न कर्मभेदः (तु०— तत्रैव)।

**शाखान्तराध्ययनप्रतिपत्ति—** (सा०) एकेन पुरुषेणापि शाखान्तराध्ययनं प्रतिपत्तुं शक्यते

'अनया त्रय्या विद्यया' इति वचनात् 'वेदानधीत्य वेदौ वा' इति मनुवचनाच्च। तथा च साकांक्षत्वात् वेदान्तराणामतुल्यकार्यत्वकारितः समुच्चयः अवगम्यते। द्र० मी०को० पृ० ३९०२। अतएव इदानीमपि द्विवेदी, त्रिवेदी चतुर्वेदीति व्यवहारः संगच्छते।

**शाखापवित्र—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च त्रिभिर्दर्भैः वेण्याकारेण निबद्धः सायंदोहादावुपयोगी शाखाया अग्रभागः शाखापवित्रमुच्यते। तस्य सायं दोहादावुपयोगः। द्र० श्रौ०प०नि० पृ० १२।

**शाखरण्ड—** (सा०) यः स्वशाखां परित्यज्य परशाखां समाश्रयेत्। स शूद्रवद् बहिष्कार्यः सर्वकर्मसु साधुभिः॥ न जातु परशाखोबुधः कर्म समाचरेत्। द्र० संस्काररत्नमालायां वसिष्ठः पृ० ३०५।

**शाखाहरण—** (आध्व०) इष्टि यज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे दर्शे तद्विकृतिषु च व्रतोपायनान्ते सन्नयति यजमाने अध्वर्युः प्रतीचीमुदीचीमैशानीं वा दिशं गत्वा पलाशवृक्षस्य शमीवृक्षस्य वा प्राचीमुदीचीं ऐशानीं वा शाखां असिदेन (दात्रेण) समन्त्रकं छिनत्ति। ततस्तां शात्वां मन्त्रेण विहारदेशे प्रत्याहरतीति कर्म शाखाहरणमुच्यते। द्र० श्रौ०प०नि० पृ० ११।

**शाखाहरण—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढशुबन्धप्रकरणे यजमानस्य भोजनवपननवनीताभ्यञ्जनदेवतासंकल्पानन्तरम् अध्वर्युः इडाजपं कृत्वा अग्नीन् विहृत्यान्वाधाय व्रतग्रहणान्ते शाखाहरणपक्षे 'इषे त्वा' इत्यादि यजुषा शाखामाच्छनत्ति। तूष्णीं प्लक्षशाखामाच्छिद्य उभे शाखे तूष्णीमाहृत्य यजमानमवेक्षयित्वा उपगूहति 'यजमानस्य' इत्यादिप्राकृतमन्त्रेणेति। द्र० श्रौ० प० नि० पृ० १२१, पाशुकपूर्वेद्युकर्मन्—, सौमणीवेदि—, महावेदिकरण—।

**शान्ति—** (सा०) इष्टिपशुसोमयज्ञेषु अन्यत्र च कर्मादौ प्रत्युत्पन्नारिष्ट शान्त्युत्पत्त्यै क्रियमाणं कर्म शान्तिरुच्यते (तु०—विद्या० स० टि० ३।६८)

**शान्तिवाचन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये 'शिवेन मा चक्षुषा.....' (ऐ० ब्रा० ८।६) इत्यनेन मन्त्रेणाभिषेककर्ता क्षत्रियं राजानं शान्तिं वाचयति। इदं राजसूये शान्तिवाचनमुच्यते।

**शान्तिसूक्त—** (सा०) 'आ नो भद्रा' इत्यादीनि सूक्तानि शान्तिसूक्तान्युच्यन्ते।

**शान्तिस्वस्तिवाचनयोर्विवेक—** (सा०) इष्टिपशुसोमयज्ञे, अन्यत्र चादौ कर्मादौ प्रत्युत्पन्नादिष्टशान्त्युत्पत्त्यै क्रियमाणं कर्मशान्तिः। अनुत्पन्नारिष्टशान्त्युत्पत्त्यै क्रियमाणं कर्म स्वस्तिवाचनमिति प्रत्युत्पन्नानुत्पन्नो भयारिष्टनिवारणं शान्तिस्वस्तिवाचनयोर्भेदोऽवगन्तव्यः (तु०—वि०ध० सं० टि० ३।६८)। द्र० पूर्वशान्ति—, उत्तरशान्ति—।

**शामित्र—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च आग्नीध्रः आहवनीयसमीपे उल्मुकं निधाय यथागतः त्रिः पुनः पर्येति। तदनन्तरं प्रतिप्रस्थाता उपवेषेण पुराणागार्हपत्याद् उदीचोऽङ्गारान् निरूहति—'मातरिश्वो धर्मोऽसि' इति मन्त्रेण। तानादाय दक्षिणया द्वारा दक्षिणेन विहारं ब्रह्मयजमानयूपानामन्तरतः आहरन् स्वयं बहिर्गच्छन् अन्तरेण चात्वालोत्करावु-

दग् गत्वा शामित्रशालायां निदधाति । इति निहितः पशुश्रपणोऽग्निः शामित्र इत्युच्यते । **द्र०** श्रौ० प०नि० पृ० १२९ । का० श्रौ० १ ।१ ।१९ विद्याधरः ।

**शामित्र—** (आध्व०, सा०) ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च पशुश्रपणस्थानं शामित्रमुच्यते । शामित्रेऽग्नौ पशुः श्रप्यते । शामित्रे मांसपाकः नाहवनीयादौ इति विशेषः । **द्र०** मी०को० पृ० ३९१० ।

**शाला—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. यजमानस्य शालाप्रवेशात् पूर्वमेव कुशलैः भृत्यैः कारिता प्राचीनवंशा चतुर्दिक्षु अतीकाशा दक्षिणतो वर्षीयसी चतुर्दिक्षु अरत्निमात्रमध्यद्वारवती षोडशप्रक्रमव्यासा द्वादशप्रक्रमविस्तीर्णा दीर्घचतुरस्रा शाला भवति । सेयं सोमेषु शालाप्राग्वंशश्चोच्यते । तस्याः शालाया दक्षिणतो व्रतश्रपयणागारो भवति, पश्चात् पत्नीशाला च भवतीति विशेषोऽवगन्तव्यः । **द्र०** शालाप्रवेश—, विमित—, श्रौ०प०नि० पृ० १८८ मी०को० पृ० २८४४ । २. 'विंशत्यरत्निः शाला तदर्धेन तु विस्तृता' । इति परिशिष्टम् । सा विमितेन सह विकल्पिता भवति, विकल्पो भवति । (तु०—का० श्रौ० ७ ।१ ।१६ विद्याधरः) ।

**शालाकहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च १. शलाकानां समूहाः शालाका उच्यन्ते । तत्र तिसृभिः शलाकाभिः एकः शालाको भवति । शालाकाश्च त्रयो भवन्ति । ते च आहवनीये प्रदीप्यन्ते । २. घर्महोमानन्तरं प्रवर्ग्योत्सादनार्थम् उपसत्समासान्ते अन्तःपात्य-(शङ्कुदेश-) समीपे उत्तरवेदिमध्ये घर्मपात्रजातं (परिघर्म्य) निधाय उच्छिष्टखरमपि शालामध्यात् उत्थाप्य दक्षिणेन द्वारेण निष्काश्य तत्रैव संस्थाप्य तिसृणां शलाकानां सङ्घः एकः शालाक उच्यते इत्येवं भूतान् त्रीन् शालाकान् हस्ते गृहीत्वा तेषां मध्ये शालाद्वार्ये आहवनीये प्रदीप्य आग्नीध्रो मुखमात्रे (मुखप्रमाणे) आहवनीयस्योपरि स्थापयेत् । ततः सकृदेव चतुर्गृहीतमाज्यं (त्रैधा) विभज्य तृतीयांशमग्नीधा धृतस्य प्रथमसंघस्य तिसृणां शलाकानां प्रदीप्तानामुपरि अध्वर्युः तिष्ठन् 'या ते घर्म दिव्या शुक्' (मा०सं० ३७ ।१८) इति मन्त्रेण आहवनीये जुहुयात् शालाकं च प्रक्षिपेत् । ततो होमान्ते द्वितीयं शालाकं पूर्ववत् प्रदीप्य नाभिदघ्ने आहवनीयस्योपरि स्थापयेत् । ततः पूर्ववत् अध्वर्युस्तिष्ठन् 'या ते घर्मान्तरिक्षे शुक्' (मा०सं० ३७ ।१९) इति मन्त्रेण आहवनीये जुहुयात् शालाकं च प्रक्षिपेत् । ततो होमान्ते तृतीयं शालाकं पूर्ववत् प्रक्षिप्य जानुमात्रे आहवनीयस्योपरि स्थापयेत् । ततः पूर्ववदेव अध्वर्युस्तिष्ठन् 'या ते घर्मपृथिव्यां शुक्' (मा०सं० ३७ ।२०) । इति मन्त्रेण आहवनीये जुहुयात् शालाकं च प्रक्षिपेत् । इति प्रवर्ग्योद्वासने शालाकहोम उच्यते । तत्राध्वर्युस्तृतीयं शालाकहोमाहवनीये प्रक्षिप्योपविश्य सर्वं चतुर्गृहीतं जुहुयादिति विशेषः । (तु०—का० श्रौ० २६ ।७ ।१-४ विद्याधरः) ।

**शालाद्वार्य—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु शालाद्वारे भवः अग्निः शालाद्वार्य

उच्यते। स च ज्योतिष्टोमे तद्विकारेषु च सोमेषु गार्हपत्याख्यया व्यवह्रियते। तदुक्तम्—'स गार्हपत्योऽतः' (का०श्रौ० ८।३।२६) इति। तेन उक्तेषु सोमे, गार्हपत्यकार्यं शालाद्वार्ये अग्नौ भवतीति विशेषोऽवधेयः।

**शालाप्रवेश—** (याज०)-सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'अध्वर्युस्तीर्थेन प्रविश्येडादिशान्तिं जपित्वा पशुबन्धवद् यजमानेन सह 'अयं ते योनि ऋत्वियः' इत्यृचाऽग्निं समारोपयति। यजमान उदकुम्भं पुरस्कृत्य पत्न्यन्वारब्धः सोमारणीसहितः सर्वैः सम्भारैश्च सहितः सर्त्विक् 'आ नो भद्राः' इत्यादि शान्तिसूक्तानि पठन् यज्ञशालां स्वस्य दक्षिणतः पश्चाद् वा चेदुत्तरेण शालां परीत्य पूर्वाह्णे पूर्वद्वारेण प्रविशतीति सोऽयं यजमानस्य सोमे शालाप्रवेश उच्यते। **द्र०** श्रौ०प०नि० पृ० १८८।

**शालामुखीय—** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्न प्रकृतिके निरूढपशुबन्धे प्राकृतः आहवनीयः शालामुखीय उच्यते। तत्र पशुपुरोडाशप्रैषानन्तरमाग्नीध्रः पाणी संमृश्य शालामुखीयस्य (प्राकृतस्याहवनीयस्य) पुरस्ताद् दर्भेषु स्फ्यम्, एकादशकपालानि, शूर्पम्, कृष्णाजिनम्, उलूखलम्, मुसलम्, दृषदम्, उपलाम्, मोक्षणम्, पिष्टोद्वयनीम्, प्रणीताप्रणयनम्, दारुपात्रीम् मदन्तीं चेति पात्राणि सादयतीति विशेषोऽवगन्तव्यः **द्र०** पशुपुरोडाशनिर्वापप्रैष—। श्रौ० प०नि० पृ० १३३।

**शालामुखीय —** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रकृतौ प्रयुक्तः गार्हपत्योऽग्निरेव सोमेषु प्रयुक्तः शालामुखीयनाम्नाभिधीयते। अग्नीषोमीयः पशुपुरोडाशः शालामुखीये पच्यते इत्यवधेयम्। ३. प्राचीनवंशशालायां पूर्वभागे वर्तमान आहवनीयः शालामुखीयो नाम। **द्र०** मी०को० पृ० २८४४। ४. शालामुखीयः अग्निः प्राचीनवंशे यः पूर्वमाहवनीयः स एव अग्निप्रणयनोत्तरं गार्हपत्यः संपद्यते। स एव शालायाः मुखे भव शालामुखीयो नाम शालामुखीयः अग्निः प्राचीनवंशशालायाः पूर्वभागे वर्तमानः आहवनीय एव। अयं च महावेदिनिष्पत्त्यनन्तरं गार्हपत्यः संजायते। शालामुखीयः पशौ वरुणप्रघासेषु चास्ति। **द्र०** मी०को० पृ० ३९११।

**शालामुखीयेऽग्नीषोमप्रणयनहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशौ महावेदिस्तरणानन्तरं उन्नेता ग्रावादि स्थाल्यन्तं सर्वमुपयुक्तं प्राग्वंशे सादयति। ततः अध्वर्युः अग्नीषोमीयपशुशाखायाः पशुवत् पवित्रं करोति ततः पशुकुम्भी, शाखापवित्रं, वपाश्रपण्यौ, रशने, शूलं, मैत्रावरुणदण्डं, शालामुखीयस्योत्तरतो दर्भेषु सादयति। 'शुन्धध्वम्' इति प्राकृतमन्त्रेण प्रोक्षति। आग्नीध्रः पाणी संमृश्याग्नीन् प्रज्वाल्य परिस्तीर्य शालामुखीयस्याग्रे दर्भान् संस्तीर्य तेषु स्फ्यमग्निहोत्रहवणीं जुहूमित्यादि पशुवत्पात्राणि आसाद्य गार्हपत्ये आज्यं विलापयति। प्रतिप्रस्थाता पाणिसंमर्शनं कृत्वा ब्रह्माणं दक्षिणे उपवेश्य शालामुखीयादारभ्योत्तरवेदिपर्यन्तं पृष्ठ्यां स्तीर्त्वा पवित्रे कृत्वा यजमान वाचं यच्छेति यजमानं सम्प्रेष्याग्निहोत्रहवणीं प्राकृतमन्त्रे-

णादाय तथैव प्रतितप्य प्रोक्षणीसंस्कारं कृत्वा पात्राणि प्राकृतमन्त्रेण प्रोक्ष्य आज्यं दधि च तथैव निरूप्य अधिश्रित्योभयं पर्यग्नि करोति। ततोऽध्वर्युः पाणी संमृश्य प्राकृतेन मन्त्रेण स्फ्यादानादि कृत्वा खरदेरो स्फ्यं स्तब्ध्वा सम्प्रैषमाह—'प्रोक्षणीरासादय' इत्यादि पशुवत्। आग्नीध्रः प्रोक्षणीः सादयति। अध्वर्युः स्वयं प्रकृतिवद् ददाति। प्रतिप्रस्थातोत्तरवेदिसमीपे इध्माबर्हिषी उपसादयति। आग्नीध्रः दक्षिणेन स्रुवं स्वधितिं सव्येन हस्तेन वेदाग्राणि आदाय शालामुखीये 'अग्नेर्वाम्' इति मन्त्रेण प्रतितप्य स्रुवमन्त्रेणैवोभयं सम्मृज्य प्रतिप्रस्थात्रे प्रयच्छति। प्रतिप्रस्थाता जुह्वादीन् पशुवत् प्रतितप्य संमृज्य वेदाग्राणि शालामुखीये प्रक्षिप्य पात्राणि अग्रेणोत्करं तृणेषु सादयित्वा पुनरादाय शालामुखीयसकाशे निदधाति। पत्नीं शालामुखीयमाज्यं चावेक्षयित्वा यजमानमाज्यमवेक्षयति। अध्वर्युः प्रोक्षणीनामुत्तरत आनीयाज्यं स्वयमवेक्ष्योत्पूय प्रोक्षणीश्चोत्पूयाज्यं दधि चादाय ब्रह्मयजमानाभ्यां सह प्राग्वंशं गत्वा वेद्यां स्रुक्षु पशुवदाज्यानि गृहीत्वा परिकर्मिभ्यः प्रदाय अपः उपस्पृश्य ब्रह्मणे सोमं राजानं ददाति ब्रह्मा राजानमादाय शालामुखीयमग्रेण परिश्रित्योत्तरतोऽवस्थायान्वग्निं नयति। अध्वर्युः शालामुखीये प्रणयनीयमिध्मं आधाय चात्वालादुपयमनीः कल्पयित्वा पुराणगार्हपत्ये आज्यं विलाप्योत्पूय अध्वर्यु यजमानः, तं पत्नी, तां पुत्राः, तान् पौत्राः, तान् ज्ञातयश्चेति ज्येष्ठानुक्रमेण समन्वारब्धेषु सत्सु प्रचरण्यां चतुर्गृहीतं गृहीत्वा शालामुखीये जुहोति 'त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्य उरु यन्तासि वरुथं स्वाहा' इति। सोमायेदमिति यजमानः। ततः स्रुवेण जुहोति 'जुषाण आज्यस्या वेतु स्वाहा' इति। अग्नय इदमिति यजमानः। अयं सौमिके शालामुखीये होम उच्यते। द्र० श्रौ०प०नि० पृ० २४९-२५१।

**शालामुखीयोपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयपशौ उत्तरवेद्यां ब्रह्मसदनोपस्थानानन्तरं सदसः पश्चिमद्वारे एव तिष्ठन् अध्वर्युः शालामुखीयमुपतिष्ठते—'अजोऽस्येकपादरौ- द्रेण० सीः' इति। द्र० श्रौ०प०नि० पृ०२४८, ब्रह्मसदनोपस्थान—।

**शालामुखीयोपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्तवर्ग्ये प्रवर्ग्यवत्सु च गोष्प्रादेशप्रैषानन्तरं यथेतमेत्य गार्हपत्ये 'उदु त्यम्' इति 'चित्रम्' इति च द्वाभ्यामृग्भ्यां स्रुवाहुतीर्हुत्वा सर्वे शालामुखीयमुपतिष्ठन्ते। 'इमं नूषु त्यमस्मभ्यं सम्। अग्ने देवेषु प्रवोचः' इति। ततः आग्नीध्रीयदेशे उत्तरां शान्तिं पठन्ति। इदमन्तिमं प्रवर्ग्यसंबन्धिशालामुखीयोपस्थानमुच्यते। द्र० उत्तरशान्ति— गोष्प्रादेशप्रैष—, श्रौ०प०नि० पृ० २३८।

**शास्त्र—** (सा०) १. शास्त्रं विचारहेतुसूत्रसमुदायात्मकम्। (सूत्रा-णि)। २. शास्त्रशब्देन योगरूढ्या धर्माधर्मोपदेशीनि चतुर्दश अष्टादश वा विद्यास्थानानि उच्यन्ते। ३. श्रेयोऽभिधायकः पदसमूहः शास्त्रम्। द्र० मी०को० पृ० ३९१२। ४. शब्दविज्ञानादसंनिकृष्टेऽर्थे विज्ञानं शास्त्रमुच्यते।

**शिक्षा—** (सा०) १. स्वाध्याये ब्रह्मयज्ञप्रकरणे पुनः पुनरभ्यासः शिक्षा (तु०—ऐ० ब्रा० सा० १।१३)। २. वेदाङ्गं शिक्षा।

**शिक्षाभेद—** (सा०) शिक्षा साधारणी विशेषविषया चेति द्विविधा। पाणिनीया साधारणी कात्यायनादिप्रणीता विशेषविषया द्र० मी०को० पृ० ३९१८। अत्र आदिपदेन याज्ञवल्क्य-नारदादिशिक्षा अवगन्तव्याः।

**शिक्षोपनिषद्—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. वर्णः २. स्वरः ३. बलं (प्रयतनं) ४. मात्रा ५. साम ६. संतानम्। इति शिक्षोपनिषदुच्यते।

**शिल्प—** (सा०) १. नानारूपवस्तुजातं शिल्पम्। (तु०—तां० ब्रा० सा० १६।४।९)। २. शिल्पं नानाविधं कौशलम्। ३. शिल्पं कर्मकलादिकम्। ४. यत् श्रैष्ठ्यकारणं तच्छिल्प-माश्चर्यसुरूपम् (तु०—तां० ब्रा० सा० १६।४।३)। ५. शिल्पशब्दः आश्चर्यकरं कर्म ब्रूते। तच्च शिल्पं द्विविधं देवशिल्पं मानुषशिल्पं चेति। तत्र नामानेदिष्ठादीनि शिल्पानि देवशिल्पानि। लोके शिल्पि- िभर्मृद्दार्वादिभिर्निर्मितं हस्तिरथसुवर्णकटकादिमानुषं शिल्पमुच्यते। द्र० देवशिल्प—।

**शिल्प—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे १. होत्रकैः प्रयुज्यमानानि शिल्पाख्यानि शस्त्राणि शिल्पान्युच्यन्ते। २. अथापि द्वादशाहिकस्य दशरात्रस्य मध्यमे त्र्यहे (पृष्ठ्य षडहस्य) चतुर्थपञ्चमषष्ठेष्वहःसु होत्रकाणां यानि तृचानि तानि शिल्पानि इत्याचक्षते याज्ञिकः। (तु०—शां० श्रौ० १२।३।१४ भाष्यम्)। ३. 'एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्याः वृषाकापिः एवयामरुत्' इति नाभानेदिष्ठादीनि चत्वारि शिल्पानि यानि सन्ति, एतान्येव अत्र पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने होत्रकाणां उक्थानि प्रधानशस्त्राणि भवन्तीति (तु०—ऐ० ब्रा० सा० ३।३६; आ०श्रौ० ८।४।४ नारायणः)।

**शिल्पभेद—** (हौ०) होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां वालखिल्यादीनि शिल्पानि द्विविधानि विकृतान्यविकृतानि च। तत्र विकृतानि विहारन्यूङ्खादिरहितानि उच्यन्ते (आ०श्रौ० ९।१०।११ नारायणः)। विकृतानि तु विहरणन्यूङ्ख निनदादि सहितानि भवन्ति। तत्र यदा पृष्ठयषडहस्य षष्ठे अहनि तृतीयेसवने होत्रकाणां उक्थ्यसंज्ञकेषु शस्त्रेषु द्विपदासु ऋक्षु छन्दोगाः स्तुवते तदा होत्रकाः अनुरूपेभ्य ऊर्ध्वं वालखिल्यादीनि शिल्पसंज्ञकानि विहरणन्यूङ्ख-निनर्दादिभिः विकृतानि शस्त्राणि शंसेयुः (तु०—आ०श्रौ० ८।२।१-२ नारायणः)। तथा च पृष्ठ्यस्य षष्ठस्याह्नः विश्वजितश्चाह्नः 'नित्यशिल्पं त्विदमहः। विश्वजिच्चेति। (आ०श्रौ० ८।४।५-६) इति तयोः नित्यशिल्पवविधानाद् विकृतानि शंसेयुः। अविकृतानि शिल्पानि तु तदा शंसेयुः यदि चेत् षष्ठविश्वजितौ अग्निष्टोमसंस्थौ स्यातां यदि वोक्थ्येषु अद्विपदासु छन्दोगाः स्तुवीरन् तदा षष्ठविश्वजितांरग्निष्टोमसंस्थत्वात् तृतीयसवने होत्रकशस्त्राभावाच्च माध्यन्दिनसवने आरम्भणीयाभ्य ऊर्ध्वं अविकृतानि शिल्पानि होत्रकाः शंसेयुः (तु०—आ० श्रौ० ८।४।७ नारायणः)।

**शिल्पशंसननिमित्त—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने (क) विकृताविकृतशिल्पानां प्रवृत्तौ होत्रकाणां सर्वेषां द्विपदास्तवनं निमित्तं भवति। (तु०—आ०श्रौ० ८।४।५-६ नारायणः) (ख) यदा तु पृष्ठ्यषडहस्य षष्ठस्याह्नः विश्वजितश्च

अग्निष्टोमसंस्थत्वात् तृतीयसवने होत्रकाणां शस्त्राभावः। (ग) यदा वा उक्थो तृतीय सवने होत्रकाणां सर्वेषां द्विपदासु स्तवनं न भवति इति निमित्तत्रयं वर्तेत तदानीं षष्ठ-विश्वजितोर्माध्यन्दिनसवने द्विपदासु स्तवननिमित्तं भवति तयोर्नित्यशिल्पत्वात्। द्र० नित्यशिल्प—।

**शिल्पसूक्तसाहचर्य—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य उक्थ्यसंस्थे षष्ठेऽहनि १. विश्वजिदतिरात्रे च होतुर्वैश्वदेवशस्त्रे तृतीय- सवने 'इदमित्था' (ऋ० १० ।६१; ऐ० ब्रा० ६ ।२७ आ०श्रौ० ८ ।१ ।२१) इति नाभानेदिष्ठसूक्तम्। २. पृष्ठषष्ठे उक्थ्यं संस्थेऽहनि विश्वजिदतिरात्रे च तृतीयसवने होत्रकाणां मध्ये मैत्रावरुणस्य 'अभि प्र वः सुराधसम्' (ऋ० ८ ।४९-५४) इति वालखिल्यसूक्तानि। ३. ब्राह्मणाच्छंसिनः 'विहि सोतोरसृक्षत' (ऋ० १० ।८६ इति वृषाकपिसूक्तम्। ४. अच्छावाकस्य 'प्रवो महे मतयः' (ऋ० ५ ।८७) इति एवयामरुत्सूक्तम्। इति नाभानेदिष्ठादीनि चत्वारि शिल्पानि एकस्मिन्नहनि भवन्ति इति सहचराण्याख्यायन्तु। तेषां चतुर्णामेकस्मिन्नहनि प्रयोगसद्- भावात् साहचर्यमुच्यते। तदुक्तम्—'तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वालखिल्याः वृषाकपिमेवयामरुतं, तानि सह वा शंसेत् सह वा० शंसेत्' इति (तु०—ऐ० ब्रा० सा० ६ ।३०)। अत एव च अग्निष्टोमसंस्थे पृष्ठ्यषडहस्य षष्ठेऽहनि अग्निष्टोमसंस्थे विश्वजिति च वैश्वदेवशस्त्रे माध्यन्दिनसवने होता मैत्रावरुणब्राह्मणाच्छंस्यच्छा- वाकाः सर्वे नाभानेदिष्ठादीनि चत्वारि सहचराणि शंसन्तीति विशेषोऽवधेयः। (तु०—आ०श्रौ० ८ ।४ ।७ नारायणः)।

**शिल्पस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे अभिजिद्विश्वजितोः प्रयुज्यमानौ शिल्पाख्यौ विचित्रसंस्थानौ इन्द्रस्तोमौ शिल्पस्तोमावुच्येते। (तु०—तां० ब्रा० सा० १६ ।४ । ८)।

**शिल्पस्थानविधान—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...द्वादशाहे पृष्ठ्यषडहस्य षष्ठे उक्थ्यसंस्थेऽहनि विश्वजिदतिरात्रे च तृतीयसवने होत्रकाणां शस्त्रेषु अनुरूपेभ्य ऊर्ध्वं विकृतानि शिल्पानि शंसेयुरिति ऊर्ध्वमनुरूपेभ्यः विकृतानां शिल्पानां स्थानं भवति। शिल्पानि विकृतान्यविकृतानीति द्विविधानि भवन्ति। तत्र अग्निष्टोमसंस्थे पृष्ठ्यषष्ठेऽहनि अग्निष्टोमसंस्थे विश्वजिति च होता वैश्वदेवशस्त्रे माध्यन्दिनसवने आरंभणीयाभ्य ऊर्ध्वं नाभानेदिष्टं स्वशिल्पमविकृतं शंसति (तु०—आ०श्रौ० ८ ।४ ।७ नारायणः)।

**शिष्ट—** (सा०) वेदविहितधर्मानुष्ठानकत्वं शिष्टत्वम्। प्रत्यक्षवेदविहितधर्मक्रियया हि लब्धशिष्टव्यपदेशाः शिष्टाः उच्यन्ते। द्र० मी०को० पृ०.३९१८।

**शिष्टाचार—** (सा०) शिष्टं यावच्छ्रुतिस्मृत्योस्तेन यन्न विरुद्ध्यते। तच्छिष्टाचरणं धर्मे प्रमाणत्वेन गृह्यते। द्र० मी०को० पृ० ३९३५।

**शुक्र—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु च एकाहाहीनसत्रेषु १. प्रयुज्यमानो ग्रहविशेषः शुक्र उच्यते। स च प्रातःसवनमाध्यन्दिनसवनयोर्गृह्यते। द्र० ग्रहग्रहण- । २.

द्रोणकलशस्थः सोमश्चापि शुक्रोऽभिधीयते। यतः अध्वर्युणा ग्रहेषु गृह्यमाणेषु अन्तरा अन्तरा यो रसो द्रोणकलशे पतति सोऽपि शुक्रसंज्ञको भवति। (तु०— का०श्रौ० ९।५।१७; ६।११ विद्याधरः)।

**शुक्रग्रहपात्र—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु बैल्वं पात्रं शुक्रग्रहपात्रमुच्यते। **द्र०** शुक्र— श्रौ०प०नि० पृ० २४९।

**शुक्रज्योतिस्—** (सा०) अत्यन्तभास्वरः प्रकाशः शुक्रं ज्योतिरुच्यते।

**शुक्रपात्रे रसग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः स० मा० सवनयोः शुक्रपात्रेण गृह्णाति—'अंय वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने। इदमपां सङ्गमे सूर्यस्य शिशुं न विप्रा मतिभीरिहन्ति। उपयामगृहीतोऽसि शण्डाय त्वा जुष्टं गृह्णामि।' परिमृज्य सादयति—'एष ते योनिर्वीर तां पाहि' इति। तदिदं शुक्रपात्रे रसग्रहणमुच्यते। **द्र०** श्रौ०प०नि० पृ० २७४।

**शुक्राग्रत्व—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रविकृतौ व्यूढद्वादशाहे, समूढद्वादशाहे च धाराग्रहेषु व्यूढे द्वादशाहे तृतीये सप्तमाष्टमयोश्चेति अहस्त्रये समूढे च तृतीये षष्ठे नवमे च इत्यहस्त्रये। इति शुक्रग्रहाग्रता भवति। **द्र०** मी०को० पृ० ३९३५-३६। व्यूढद्वादशाह—।

**शुक्रामन्थिग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवनमाध्यन्दिनसवनयोः प्रतिप्रस्थाता द्वौ प्रोक्षितौ द्वावप्रोक्षितौ समिच्छकलावादाय प्रोक्षिताऽप्रोक्षितौ द्वौ शकलावध्वर्यवे प्रयच्छति। ततः अध्वर्युः शुक्रमादत्ते। प्रतिप्रस्थाता मन्थिनम्। दक्षिणेन प्रोक्षिताभ्यामपिधाया प्रोक्षिताभ्यामधस्तात् सव्येनोपयच्छतः। तदिदं शुक्रामन्थिग्रहणमुच्यते। **द्र०** श्रौ०प०नि० पृ० २८४।

**शुक्रामन्थिप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टो... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवनमाध्यन्दिनसवनयोः अध्वर्यु प्रतिप्रस्थतारौ उभौ वषट्कारे जुहुत० स प्र० जुहोमि स्वाहा। चमसाध्वर्यवश्चमसान् सकृज् जुह्वति। अनुवषट्कारे पुनरुभौ चमसाध्वर्यवश्च। अध्वर्युराह— 'प्रैतु होतुश्चमसः प्रब्रहणः प्रोद्गातुः प्र यजमानस्य होत्रकाणां चमसाध्वर्यवः सकृत् द्रोणकलशादभ्युन्नीयोपावर्तध्वम्, होतुश्चमसाध्वर्यवुपरम्, एहि प्रतिप्रस्थातः, उत्तरार्ध आहवनीयस्य मन्थिनः संस्रावं जुहुधि' इति, प्रदक्षिणमावृत्य होतुश्चमसे ग्रहस्य संस्रावमवनयति—'हुतं० मनुष्येभ्यः' इति। प्रतिप्रस्थाता आहवनीयस्योत्तरार्धे उपविश्योत्तरार्धे मन्थिनः संस्रावं जुहोति—'एष ते रु...हा' इति। यजमानप्रतिप्रस्थातारौ अप उपस्पृशतः। प्रतिप्रस्थाताऽध्वर्योः शुक्रपात्रमादाय स्वीयं मन्थिपात्रं च खरे सादयति। सोऽयं शुक्रमन्थिप्रचार उच्यते। **द्र०** श्रौ०प०नि० पृ० २८५।

**शुक्रियकाण्ड—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च प्रयोक्तव्या या माध्यन्दिनसंहितायाः चत्वारो (३६-३९) अध्यायाः

शुक्रियकाण्डमुच्यते । 'आथर्वण एतं शुक्रमेतं यज्ञं (प्रवर्ग्यं) विदां चकार' (श० ब्रा० १४ ।१ ।१ । २०) इति श्रुतेः (मा०सं० महीधरः ३६ ।१) । द्र० प्रवर्ग्य— ।

**शुक्रिययजुस्—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु च प्रयोक्तव्यानि 'प्रजापतिं वै देवाः शुक्रं पयोऽदुह्रन् । तदेभ्यो न व्यभवत् । तदग्निर्व्यकरोत् । तानि शुक्रियाणि सामान्यभवन् । तेषां यो रसोऽत्यक्षरत् । तानि शुक्रयजूंष्यभवन् । शुक्रियाणां वा एतानि (यजूंषि) शुक्रियाणि' ।

**शुक्रियसामन्—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ अयनसत्रप्रकरणे गवामयने मध्यमे विषुवत्यहनि प्रयोक्तव्यानि सादित्यव्रतानि शुक्रियाणि (सामानि) (नि० सू० ५ ।१ ।२) । सादित्यव्रतानि शुक्रियाणि विषुवति (नि० सू० ५ ।१ ।२२) ।

**शुनासीरीय—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे १. शुनो वायुः सीरः आदित्यः तौ देवते अस्येति चातुर्मास्यानां चतुर्थं पर्व शुनासीरीयमित्युच्यते । २. शुनासीरीयं नाम चातुर्मास्येषु चतुर्थं पर्व । तत्र वैश्वदेवपर्वणि यानि आदितः पञ्च हवींषि तान्येव शुनासीरीयेऽपि आदितः पञ्च हवींषि भवन्ति । तत्र १. आग्नेयमष्टाकपालं निर्वपति २. सौम्यं चरुम् ३. सावित्रं द्वादशकपालम्, ४. सारस्वतं चरुम्, ५. पौष्णं चरुम्, ६- ऐन्द्राग्रं द्वादशकपालम्, ७. वैश्वदेवं चरुम्, ८. इन्द्राय शुनासीरायपुरोडाशं द्वादशकपालम्, ९. वायव्यं पयः, १०. सौर्यमेककपालमिति एकः कल्पः । द्वादशगवं सीरं दक्षिणा । द्र० मी०को० पृ० ३९३७, चातुर्मास्यपर्वहविस्— ।

**शुनासीरीयसंकल्प —** (याज०) इष्टियज्ञेषु प्रकृतिम्...शुनासीरीये पर्वणि यजमानः आग्नेयोऽष्टाकपालः पुरोडाशः सौम्यश्चरुः, सावित्रो द्वादशकपालः पुरोडाशः, सारस्वतश्चरुः, पौष्णश्चरुः, ऐन्द्राग्नो द्वादशकपालः पुरोडाशः, वैश्वदेवश्चरुः, इन्द्राय शुनासीराय द्वादशकपालः पुरोडाशः, वायव्यं पयः, सौर्य एककपालः पुरोडाशः, इति शुनासीरीयहविर्भिः यक्ष्ये इति संकल्पयति (तत्र सवित्रा सूर्यश्चोपांशु इति विशेषोऽवगन्तव्यः । द्र० श्रौ०प०नि० पृ० १०७ ।

**शुल्व —** द्र० बर्हिःसंनहन — २. शुल्व द्र० इध्मसंनहन— ।

**शूद्र—** (सा०) शूद्रश्चतुर्थो वर्णः । शूद्रसमीपे नाध्येतव्यम्, यदु वा एतत् श्मशानं यच्छूद्र— । द्र० मी०को० पृ० ३९३८ ।

**शूद्रदेवता—** (सा०) 'तमथ शौद्रं वर्णमसृत पूषणम्' इति पूषा शूद्रदेवता ।

**शूर्प—**(सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पौरोडाशिके कर्मणि प्रयुज्यमानं वंशनिर्मितं पुरोडाशादिसंबन्धिनां व्रीह्यादीनां निरतुषकरणोपयोगिपात्रं शूर्पमुच्यते । द्र० श्रौ०प०नि० पृ० ७ ।

**शूलकर्मन्—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे १. चयनपक्षे मृत्युग्रहहोमानन्तरम् अध्वर्युः 'स्फ्यमुदपात्रं हृदयशूलमित्यादि शूलोद्वासनान्तं (हृदयशूलोपगूहनप्रोक्षणोक्तं प्रसिद्धं) कर्म करोति । (श्रौ०प०नि० पृ० १६८) । २. सौत्रामण्यवभृथेऽपां समीपे अधिष्ठानानन्तरं प्रसिद्धं हृदयशूलैश्चरित्वा प्स्येनोद्धृत्यावोक्ष्य 'शुष्कस्य चार्द्रस्य च

सन्धौ' इत्यादि॰ वरुण नो मुञ्च' इत्यन्तं शूलानां कर्म करोति। इति च शूलकर्मोच्यते। द्र॰ श्रौ॰प॰नि॰ पृ॰ १६९)। हृदयशूलोपमूहनन—।

**शृत—** (सा॰, आध्व॰) इष्टिपशुसोमेषु १.शृतं क्षीरमुच्यते (तु॰— द्रा॰श्रौ॰ धन्वी॰ ला॰श्रौ॰ ८।१०।५)। २. शृतं पक्वं चरुदुग्धादिहविरुच्यते। ३. धर्माधिकं पयः शृतमित्युच्यते। श्रपणेन च सहचरिता धर्मा यस्मिन् वत्सापाकरणादयः विद्यन्ते तदिदं शृतसहचरितधर्मकं पयः। **द्र॰** मी॰को॰ पृ॰ ३९४३।

**शृतातङ्क्य—** **द्र॰** दधि—।

**शृतावदान—** (सा॰, आध्व॰) इष्टिपशुसोमेषु येन पात्रेण देवताभ्यः शृतं (पक्वं) हविः अवदीयते (खण्ड्यते) तत्पात्रं शृतावदानमुच्यते।

**शेष—** (सा॰) १. यो यदर्थः स तच्छेषः। २. अङ्गं गुणः शेषः इत्यनर्थान्तरम् ३. यस्तु यदर्थः श्रूयते स तस्य शेषः। शेषः परार्थत्वात्। (तु॰ शास्त्रदीपिका ४।१।२)। ४. जयाः राष्ट्रभृतः अभ्यातानाश्च नाम होमाः वैदिककर्मणामेव शेषः आध्वर्यवं इति समानाख्यानात्। आध्वर्यवं इति समाख्याते वेदे जयादयः समाम्नाताः सन्तःअध्वर्युणा करिष्यन्ते। तस्मात् जयादयो होमाः वैदिककर्मणां शेषः ५. यो यस्योपकरोति स तस्य शेषः। ६. शेषे ब्राह्मणशब्दः। शेषे यजुः शब्दः। **द्र॰** मी॰को॰ पृ॰ ३९४४-४६)।

**शेषकार्य—** (सा॰, आध्व॰) इष्टिपशुसोमयज्ञेषु १. यत्र उच्छिनष्टिन सर्वं करोति इति शेषयितव्यं तत् शेषकार्यमुच्यते। २. शेषकार्याणि स्विष्टकृद्—इडाप्राशित्रशंयुवाककालभक्षचतुर्धाकरणानि। **द्र॰** मी॰को॰ पृ॰ ३९४६। स्विष्टकृदादीनि वर्णानुक्रमेण तत्र तत्र द्रष्टव्यानि।

**शेषभक्ष—** (सा॰, आध्व॰) दर्शपूर्णमासयोः (तद्विकृतिषु च) इडाप्राशित्रचतुर्धाकरणशंयुवाककालाः शेषभक्षाः सन्ति। ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु च वषट्कारनिमित्ताः होमाभिषवनिमित्ताश्च सोमशेषभक्षा इत्युभयत्र शेषभक्षा उच्यन्ते। **द्र॰** मी॰को॰ पृ॰ ३९५१।

**शोण—** (सा॰) शोणः इति वर्णवचनः अश्वजातिगतं वर्णं (अश्वमेधाश्ववर्णं) वदति। शोणत्वं नाम रक्तावान्तरजातिः। **द्र॰** मी॰को॰ पृ॰ ३९५७।

**शोध्यमानसोमधारानुमन्त्रणमन्त्र—** (औ॰) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'प्र शुक्रैतु देवी...सुतष्टो न वाजी' इति मन्त्रेणोद्गाता शोध्यमानस्य सोमस्य धारामनुमन्त्रयते। अथवा 'आयुषे मे पवस्व...सोमे होद्राय' इति वैकल्पिकेन मन्त्रेणानुमन्त्रयते। (तु॰—तां॰ ब्रा॰ सा॰ ६।६, १६-१७)।

**शौनःशेपाख्यान—** **द्र॰** राजसूये शौनः शेपाख्यानकथन—।

**शौनःशेपदक्षिणा—** (आध्व॰) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये अभिषेचनीये क्रतौ सहस्रं (गवाम्) आख्यात्रे (होत्रे) दद्यात्। शतं प्रतिगरित्रे (अध्वर्यवे) एते चैव आसने (हिरण्यकशिपुरूपे), श्वेताश्वतरीरथो होतुः। (तु॰—ऐ॰ ब्रा॰ सा॰ ७।१८; आ॰श्रौ॰ ९।३।१४-१६)। इत्येषा राजसूयक्रतुदक्षिणातो भिन्ना दक्षिणा शौनःशेपे भवतीति विशेषोऽवधेयः।

**शौनःशेपप्रतिगर—** (हौ॰, आध्व॰) सोमयज्ञेषु प्रकृतिभूत...राजसूये अभिषेचनीये क्रतौ

शौनःशेपाख्याने होत्रा प्रयुज्यमानाया एकैकस्या ऋचोऽन्ते होता 'ओम्' इति प्रतिगृणाति । एवं होत्रा प्रयुज्यमानाया एकैकस्या गाथाया अन्ते अध्वर्युः 'तथा' इति प्रतिगृणाति । तदुक्तम्—'ओमित्यृचः प्रतिगर एवं तथेति गाथायाः' (ऐ० ब्रा० ७ ।१८, आ०श्रौ० ९ ।३ ।१३) । तत्र यथा होता हिरण्यकश्यपावासीनः प्रतिगरं करोति तथैव अध्वर्युरपि हिरण्यकश्यपौ आसीनः प्रतिगरं करोतीति विशेषोऽवधेयः ।

**श्यामाकाग्रयण—** द्र० आग्रयण— ।

**श्यामाकाग्रयणकाल—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयणप्रकरणे 'वर्षासु श्यामाकैर्यजेत' इति वर्षाः श्यामाग्रयणकाल उच्यते । द्र० श्रौ०प०नि० पृ० ७४ ।

**श्यामाकाग्रयणेष्टि—** (आध्व०, अव्य०) इष्टियज्ञेषु प्रकृतिभूतपूर्णमासविकृतौ हविर्यज्ञानां चतुर्थे आग्रयणप्रकरणे वर्षर्तौ क्रियमाणश्यामाकेष्ट्यां श्यामाकमयः पयसि चरुः । सोमो देवता । प्रधानस्योपांशुत्वम् । सोमस्य 'सोमयास्ते मयोभुवः (ऋ० १ ।९१ ।९) इति पुरोनुवाक्या । 'या ते धामानि' (ऋ० १ ।९१ ।४) इति याज्या । ततः 'इलेभागं जुषस्व नः' इत्यादिकमवान्तरे लाया नित्यं जपमुक्त्वा तां सव्ये पाणौ निधाय दक्षिणेन पाणिना 'प्रजापतये त्वा ग्रहं गृह्णामि' इत्यादि मन्त्रेण अभिमृशति । 'भद्रान्नः श्रेयः समनैष्ट देवाः' इत्यृचा प्राश्नाति (होता) । तत आचम्य 'अमोऽसि प्राणवद् ऋतं ब्रवीमि' इत्यृचा नाभिमालेत । अनेनैव प्रकारेण अन्येऽपि ऋत्विजो भक्षयन्ति । 'मधुश्च स्वाहा, माधवश्च स्वाहा, नभश्च स्वाहा नभस्यश्च स्वाहा' इति चतस्र आहुतीः आज्यस्थाल्याज्येन स्रुवेण प्रधानयागानन्तरं स्विष्टकृतः प्राक् हुत्वा 'शतायुधाय' इत्यादिभिः पञ्चभिः स्वाहाकारान्ताभिश्चतुर्गृहीते न जुह्वा जुहोति । तत्रैतादृशोऽयं होमः उपहोम उच्यते । अस्यामिष्टौ पुरोडाशाभावात् कपालानि न सन्तीति । पात्रासादने कपालानां स्थाने इडाभक्षणं स्थाल्यामासादयति । तन्मेक्षणं स्विष्टकृद्धोमार्थं प्रत्याक्रमणकाले गृहीतं भवतीति विशेषोऽवधेयः । ततः स्विष्टकृद्धोमानन्तरं भेक्षणमनुप्रहरति ततः अन्वाहार्यमासाद्य प्रथमजं वत्सं वासश्च रक्षिणां ददाति । भो ऋत्विजः अयं वः ओदनः, अयं वः प्रथमजो वत्सः, एतद्वो वासः अहिंसन्तो यथाभागं प्रतिगृह्णीध्वम् । ऋत्विजः प्रतिग्रहमन्त्रे ब्रह्मण ओदनं, रुद्राय गां, सोमाय वासः तैरमृतत्वमश्यामिति विशेषं कुर्वन्ति । 'प्रजापतेर्भागोऽसि' इति मन्त्रे असीत्येकवचनान्तानां स्थाने स्थेत्यादिबहुवचनान्तेनोहः क्रियते । प्रथमजवत्सवासोनिष्क्रियपक्षे एतद्वः प्रथमजवत्सनिष्क्रियद्रव्यम्, एतद्वो वासो निष्क्रयद्रव्यं चेति विशेषः । तथा असीत्यादिपदस्थाने स्थ इत्यादीनां द्विवचनान्तानामूहः । यजमानभागप्राशने प्राकृतमन्त्रस्थाने 'भद्रान्नः श्रेयः समनैर्ष्ट' इत्यृङ्मन्त्रः पठ्यते । पयसि श्यामाकचरोः श्रपणात् अत्र पयः प्रणीताऽपि भवति । तथा चात्र प्रणीताप्रणयनकाले पयः प्रणीताऽपि प्रणीयते । 'ब्रह्मन्नपः पयश्च प्रणेष्यामीति प्रैषे विशेषः । अप्प्रणीतानिनयनानन्तरं पयःप्रणीतानिनयनम् । तन्मन्त्रे 'समुद्रं वः' इत्यादिबहुवचनान्तपदस्थाने त्वा इति वा एकवचनान्तपदप्रयोगः । पौर्णमासतन्त्रम् । ब्राह्मणतर्पणान्तम् । सेयं श्यामा-

काग्रायणेष्टि- रुच्यते । द्र० श्रौ०प०नि० पृ० ७४-७५ ।

**श्यावाश्वसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहस्य विकृतौ अयनसत्रप्रकरणे गवमयने तृ० सवने आर्भवपवमाने अन्वहं श्यावाश्वं साम गौरीवितसामवद् भवति । (तु०—तां० ब्रा० सा० ५ ।८ ।१-२)

**श्येन—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टो-मातिरात्रविकृतौ एकाहप्रकरणे १. श्येन-संज्ञक: साद्यस्क्र एकाह: । स चाग्निष्टोम-संस्थ: । सद्यो दीक्षादिवसे एव क्रयप्रभृत्य-भिषवान्तं कर्म भवति यत्र स साद्यस्क्र उच्यते । तत्र ऊषरभूमि: देवयन जनम् । चषालं (कटक) वर्जितो यूपो तिल्वलवृक्ष-निर्मित: । विभीतकवृक्षकाष्ठानीन्धन-स्थानीयानि । कुशस्थाने शरा: । शववहना-र्थमुपयुक्ते काष्ठे सोमाभिषवणार्थे अधिष-वणफलके । आज्यं भस्त्राग्निनिष्पादितं नवनीतम् । हविर्धानशकटयो: स्थाने रथौ । लोहित: सवनीयो रुद्रवदग्निदेवत्य: पशु: । लोहितवाससो लोहितोष्णीषा: निवीता उज्ज्यधन्वान: = उद्गतज्यानि ज्यारूढानि धनूंषि येषां ते ऋत्विज: । काणा:, पादेन खञ्जा:, भग्नशृङ्गा:, छिन्नपुच्छा नव नव गा: दक्षिणा: भवन्ति । (तु०—का०श्रौ० २२ ।३ १-२४; भूमिका० पृ० ६८-६९ विद्याधर: ।द्र० साद्यस्क्रधर्म— । २. 'श्येनाभिचरन् यजेत' इति श्येनशब्द: गुणविधि: कर्मनामधेयम् । द्र० मी०को० पृ० ३९६० ।

**श्रद्धा—** (सा०) इष्टिपशुसोमयज्ञादिषु यो वै श्रद्धा-मनारभ्य यज्ञेन यजते नास्येष्टाय श्रद्दधते । अप: प्रणयति श्रद्धा आप: श्रद्धामेवारभ्य यज्ञेन यजते उभयेऽस्य देवमनुष्या इष्टाय श्रद्दधते (तु०—तै० सं० १ ।६ ।२ ।१) । अश्रद्धा परम: पाप्मा श्रद्धा हि परमं तप: । तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवता: ॥ (बौ०ध० १ ।५ ।१० ।६) । अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ (तु०—गीता) बीभत्सव:शुचिकामा हि देवा ना श्रद्दधा-नाय हविर्जुषन्त इति । शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचे: । मीमांसित्वोभयं देवा: सममन्नमकल्पयन् । प्रजापतिस्तु तानाह न समं विषमं हि तत् । हतमश्रद्धा-नस्य श्रद्दधापूतं विशिष्यते इति (तु०—बौ०ध० १ ।५ ।१० ।४, इष्ट्वा दत्त्वापि वा मूर्ख: स्वर्गं न हि स गच्छति । (तु०—बौ०ध० १ ।५ ।१० ।७) नाश्रद्दधानस्य (यजेत) । अथाप्युदाहरन्ति अश्रद्धा परम: पाप्मा पाप्मा ह्यज्ञानमुच्यते । अज्ञानाल्लु-प्यते धर्मो लुप्तधर्मोऽधम: स्मृत: ॥ श्रद्धया शुद्ध्यते बुद्धि: श्रद्धया शुध्यते मति: । श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रणाशिनी तस्माच्छ्रद्दधानेन प्रसंगेन...यजेत । (तु०—बौ० श्रौ० २९ ।८) । तस्माच्छ्रद्धानस्या-प्रासंगिकस्य च...स्वशास्त्रे विद्यमाने य: परशास्त्रेण वर्तते । भ्रूणहत्या समंतस्य स्वशास्त्रमवमन्यत: । बौ० श्रौ० २९ ।८) । अज्ञश्चाश्रद्धानश्च संशयात्मा विनश्यति (गीता) । यद्विद्वांसो यदविद्वांसो मुग्धाकुर्व-न्त्यृत्विज: । अग्निर्मा तस्मादे नस: श्रद्धा देवी च मुञ्चताम् ॥ (तु०—आप०श्रौ० ३ ।१२ ।१) श्रद्धामाहात्म्यम् (तै० ब्रा० २ ।८ ।८) द्रष्यव्यम् ।

**श्राद्ध—** (सा०, स्मार्त०) पाकयज्ञेषु पिण्डपितृयज्ञ-विकृतौ श्राद्धप्रकरणे १. पिण्डदानस्यैव श्राद्धम् इति नामधेयम् । (तु०—पा० गृ० परिशिष्टे श्राद्धसूत्रे १ कर्क:) । श्रद्धया दीयते

यस्माच्छ्राद्धं तेन निगद्यते। त्रींस्त्रीन् पिण्डानवनेज्य दद्यात् इति विशेषोऽवगन्तव्यः (तु०—पा०गृ० श्राद्धसूत्र० काशिका १)। २. पिण्डदानब्राह्मणभोजनाग्नौकरणानां कर्मणां समुदायस्य श्राद्धम् इति। अन्यत्र तूक्तं देशे काले च पात्रे च श्रद्धया विधिना च यत्। पितृनुद्दिश्य विप्रेभ्यो दानं श्राद्धमुदाहृतम्। (तु०—पा० गृ० परिशिष्टे श्राद्धसूत्रे १ गदाधरः)। श्राद्धं चेदं प्रकृतिश्राद्धं पार्वणश्राद्धं पक्षश्राद्धं चोच्यते। कन्यां गते सवितरि दिनानि दश पञ्च च। पार्वणेनैव विधिना तत्र श्राद्धं विधीयते॥ पक्षश्राद्धे नभस्यापरपक्षे च श्राद्धं कार्यं दिने दिने। नैव नन्दादिवार्ज्यं स्यान्नैव वर्ज्या चतुर्दशी॥ प्रशस्ताः पूर्णिमामुख्यास्तिथयः षोडशैव ताः। यथा तिलानां तैलं च तुल्यं वै श्वेतकृष्णयोः॥ पौर्णमास्याममायां च समं पुण्यफलं द्वयोः। पूर्णपक्षे नमस्यस्य पूर्णिमैषा पितृप्रिया॥ (तु०—पा० गृ० सूत्रकाशिका १)। ३. अष्टकाविकाराणि हि सर्व श्राद्धानि। (तु०—का० गृ० टी० ६६।१) द्र० विकृतिश्राद्ध—।

**श्राद्धकरण—** होमो ब्राह्मणभोजनं पिण्डदानं चेति श्राद्ध करणानि भवन्ति। (तु०— आप०ध० टी० २।१६।३)।

**श्राद्धाङ्गतर्पण—** (स्मार्त०) पाकयज्ञप्रकरणे श्राद्धाङ्गतर्पणं पक्षश्राद्धे प्रतिदनं श्राद्धोत्तरम्। सकृन्महालयेषु परेऽह्नि कार्यम् (तु०— नि० सि०)। श्राद्ध—द्र०।

**श्रायन्तीयसामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकणे राजसूये दशपेये प्रयोक्तव्यं ब्रह्मसाम 'श्रायन्त इव सूर्यम्' (सा० २६७) इत्यस्यामृच्युत्पन्नं साम श्रायन्तीयम् (तु०—तां० ब्रा० सा० १८।९।१२) भवति। इत्येषा ऋक् श्रायन्तीयसामयोनिः।

**श्री—** (सा०) १. नाश्रान्ताय श्रीरस्तीति रोहित शुश्रुमः। (तु०— ऐ० ब्रा० ७।१५)। २. धनधान्यादिसम्पत्तिः श्रीरुच्यते।

**श्रुत—** (सा०) अधिदैवमथाध्यात्ममधियज्ञमिति त्रयम्। मन्त्रेषु ब्राह्मणे चैव श्रुतमित्यभिधीयते।

**श्रुति—** द्र० वेद—।

**श्रुति—** (सा०) स्वरगताः पञ्च श्रुतयः सन्ति तासां नामानि च मृदुः, मध्या, आयता, दीप्ता, करुणा चेति। तत्र मृदुमध्ययोः चिह्नं न कुत्रापि लिखितग्रन्थेषु कृतम्। केवलं सम्प्रदायसिद्धमेव तस्योच्चारणम्। आयता = द्वितीये आयता भवति। तृतीये परतः (ना० शि० १।१२।१५ इयं च ह्रस्वे दीर्घे।

**श्रोणि—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे अन्यत्र च १ वेदिनिर्माणे आहवनीयादीनां नैर्ऋत्यवायव्यकोणौ श्रोणी उच्येते। का० श्रौ० १।८।४२ टि० विद्याधरः। २. वेदेरपराश्र्योः श्रोणिरिति संज्ञा। (तु०— आ०श्रौ० १।११।२३ नारायणः) द्र० उत्तरवेदि—, दक्षिणवेदि—, वेदि—।

**श्रोत्रिय—** (सा०) १. संस्काराऽध्ययनानुष्ठानत्रितययुक्तः श्रोत्रियः उच्यते। २. यद्यप्यध्ययनमात्रेण श्रोत्रियस्तथापि श्रुताध्ययनसम्पन्नोऽत्र श्रोत्रियोऽभिधीयते। (याज्ञ० स्मृ०, मिता०, आचाराध्याय-१११ श्लो०)। ३. श्रोत्रियं छन्दोऽधीते। (तु०— पा० ५।२।८६)।

**श्रौतदेवपूजा—** (सा०) देवयजनभूमौ हि यष्टव्याः श्रौतदेवता। दक्षिणोत्तरवेद्योश्च महावेद्या तथैव च॥ १॥ नामाऽऽदेशेन देवानामाह्वानं क्रमपूर्वकम्। त्रेताग्निषु च देवेभ्यः प्रदानं श्रौतपूजनम्॥ २॥ ध्यानमावाहनं

चैव सादनं स्तुतशंसने निह्नवश्चाथ सन्ध्यानं देवपूजा प्रकीर्तिता ॥ ३ ॥ २. यस्यै देवतायै हविः (चरुपुरोडाशवपासोमाज्यादिकं गृहीतं सात्तां मनसा ध्यायेद् वषट्करिष्यन् होष्यंश्च। ग्रहं गृहीत्वा चमसं वोन्नयन् स्तोत्रमुपा करोति। अथ शस्त्रम्।

**श्रौतयज्ञानां प्रकृतिविकृत्युभयानुभयात्मकत्व—** (सा०) श्रौतयज्ञास्तावद्धविर्यज्ञसोमयज्ञभेदेन द्विधा विभक्ताः सन्तः प्रकृतियज्ञा विकृतियज्ञाः प्रकृतिविकृत्युभययज्ञाः प्रकृतिविकृत्यनुभययज्ञाश्चेति चतुर्विधास्तन्यन्ते। (क) १. हविर्यज्ञेषु प्रकृतियज्ञा तत्र अग्निहोत्रं दर्शपूर्णमासौ च प्रकृतियज्ञाः। यत्र साङ्गोपदेशः सा प्रकृतिरुच्यते। श्रुतिसूत्रेषु अग्निहोत्रे दर्शपूर्णमासयोश्च अपूर्वाः साङ्गाः धर्मा उपदिष्टाः। ततोऽग्निहोत्रं दर्शपूर्णमासौ च प्रकृतियज्ञा भवन्ति। अत एव याज्ञिकाः दर्शपूर्णमासौ प्रकृतिरित्युदाहरन्ति। दाक्षायणयज्ञस्तु गुणविकृतौ दर्शपूर्णमासावेव। अत एव दाक्षायणेन दर्शपूर्णमासयोरनुष्ठानं विकल्प्यते। दर्शपूर्णमासानुष्ठानपक्षे दाक्षायणयज्ञस्याक्रिया, दाक्षायणयज्ञानुष्ठानपक्षे दर्शपूर्णमासयोरक्रिया (तु०—का०श्रौ० ४। ४।३ विद्याधरः)। प्रकृत्युपदिष्टधर्मावबोधे सति विकृतावतिदिष्टाः प्रकृतिधर्माः सुखेन प्रयोक्तुं शक्यन्ते इति पूर्वं प्रकृतिर्ज्ञेया। अथ हविर्यज्ञेषु विकृतियज्ञाः—कुण्डपायिनामयने प्रोक्तं मासाग्निहोत्रमग्निहोत्रस्य विकृतियज्ञः। अग्न्याधेयम्, पुनराधेयम्, पिण्डपितृयज्ञः, आग्रयणेष्टिः (श्यामाकव्रीहियवरूपा), सर्वा इष्टयः ('सर्वा अपीष्टयो विकृतिरूपाः' ऐ० ब्रा० सा० ३ ।४०), नामफलगुणयोगाद् भिन्नाः काम्येष्टयः, चातुर्मास्यानि (वैश्वदेव वरुणप्रघाससाकमेधशुनासीरीयात्कानि), ऐन्द्राग्ननिरूढपशुबन्धः, कौकिलसौत्रामणीति नामधेयाः क्रतवः दर्शपूर्णमासयोर्विकृतियज्ञा उच्यन्ते। तत्र दर्शपूर्णमासनाम्ना आग्नेयः, उपांशुयाजः, (अग्नीषोमीयः) अग्नीषोमीय इति पूर्णमास-संज्ञकास्त्रयो यागाः। आग्नेयः, उपांशुयाजः (वैष्णवः) ऐन्द्राग्न इत्यसंनयतोऽमावास्यायां संनयत ऐन्द्राग्नस्य स्थाने ऐन्द्रे माहेन्द्रे वा दधिपयसी इति त्रयो यागा गृह्यन्ते। तयोः समुदाययोरपि पौर्णमास्यमावास्यानामनी भवतः। अनयोस्तन्त्रं साधारणम्। एतावानेव भेदः प्रधानदेवता आज्यभागयोरनुवाक्ये च भिद्यन्ते। तौ दर्शपूर्णमासौ प्रकृतिः (प्रकृतियागौ) यतः तत्र साङ्गोपदेशः। यत्र न साङ्गोपदेशः सा विकृतिः। या प्रकृतितः अङ्गानि गृह्णाति सा विकृतिः (मी०को० पृ० २६८४)। विकृतिः प्राकृतान् धर्मान् चोदकेन गृह्णाति (मी०को० पृ० ३५२२)। इति विकृति- लक्षणान्विता प्राकृतान् धर्मान् चोदकेन गृह्णाति (मी०को० पृ० ३५२२)। इति विकृतिलक्षणान्विता इष्टयः पशवः, सोमेषु च याज्या धर्मा निरसनादयश्च प्रकृतिभूतस्य दर्शपूर्णमासयोः धर्मान् गृह्णन्ति। तदुक्तम्—'पौर्णमासेनेष्टिपशुसोमा उपदिष्टाः' इति। तस्मात् इष्टिषु पशुषु सोमेषु च दर्शपूर्णमासस्य धर्माः प्रवर्तन्ते (अतिदिश्यन्ते) इष्टीनां पशूनां च तत्र शेषीभवितुं सामर्थ्यात्। (तु०—काश्रौ० ४ ।४ ।३ विद्याधरः)। तत्र यत्र प्रधानदेवता विकृतिषु प्रत्यक्षाः (नामग्राहं गृहीताः) तत्रातिदेशव्यापारो नास्ति तत्र पारिशेष्यादाज्यभागानुवाक्ययोरेवातिदेशः। इति विशेषोऽवधेयः (तु०— आ०श्रौ० २ ।१ ।१ नारायणः)। ३. अथ प्रकृतिविकृत्युभययज्ञाः १. पुनराधेये स्वप्रत्यक्षधर्मेषु दर्शपूर्णमासवि-

कृतिभूतस्याग्न्याधेयस्य धर्मा अङ्गत्वेन प्रवर्तन्ते इति पुनराधेयः स्वप्रत्यक्षधर्माग्नेयधर्मयोः योगात् प्रकृतिविकृत्युभयज्ञो भवति । २. व्रीहियवाग्रयणेष्ट्योः स्वप्रत्यक्षधर्मेषु दर्शपूर्णमासविकृतिभूतासु आग्रयणेष्टिषु प्रथमायाः श्यामाकेष्ट्या धर्मा अङ्गत्वेन प्रवर्तन्ते इति व्रीहियवाग्रयणेष्टी स्वप्रत्यक्षधर्मश्यामाकधर्मयोः योगात् प्रकृतिविकृत्युमय्यौ भवतः । ३. वरुण-प्रघास-साकमेधशुनासीरीयेषु पर्वसु स्वस्वप्रत्यक्षधर्मयुक्तेषु दर्शपूर्णमासविकृतिभूतेषु चातुर्मास्येषु प्रथमस्य वैश्वदेवपर्वणो धर्मा अङ्गत्वेन प्रवर्तन्ते इति वरुणप्रघास-साक

मेध-शुनासीरीयपर्वाणि प्रकृतिविकृत्युभयानि भवन्ति । अर्थात् प्रथमे वैश्वदेवपर्वणि दर्शपूर्णमासधर्माः प्रवर्तन्ते उत्तरेषु त्रिषु पर्वसु वैश्वदेवस्य धर्मा अन्योऽन्यस्य च स्वधर्माः (तु०—का०श्रौ० ४ ।३ ।४ विद्याधरः) । ४. अग्निचयनाङ्गग्नि प्रणयनेष्टकापशुप्राजापत्यादिपशुषु, सौत्रामण्यां, कल्पकारपक्षे अग्नीषोमीयपशौ च स्वस्वप्रत्यक्षधर्मेषु दर्शपूर्णमासविकृतिभूतस्य ऐन्द्राग्नप्रकृतिकस्य निरूढपशुबन्धस्य धर्माः अङ्गत्वेन प्रवर्तन्ते (इति अग्निचयनादि प्राजापत्याद्यन्ताः पशवः प्रकृतिविकृत्युभयाः सन्ति । अर्थात् निरूढपशुबन्धे दर्शपूर्णमासधर्माः प्रवर्तन्ते चयनाङ्गादिपशुषु निरूढपशुबन्धधर्माः (तु०—का० श्रौ० ४ ।३ । २ विद्याधरः) ।

५. सौत्रामण्यां, सवनीयानूबन्ध्याऽऽश्वमेधिकराजसूयिक-वाजपेयिक-द्वादशाहिक-प्राजापत्यपशुषु स्वस्वप्रत्यक्षधर्मेषु दर्शपूर्णमासविकृतिभूतस्य अग्नीषोमीयस्य पशोः धर्मा अङ्गत्वेन प्रवर्तन्ते इति सवनीयादिपशवः प्रकृतिविकृत्युभयात्मका आख्यायन्ते । अर्थात् सवनीयादि सौमिकेषु पशुषु, श्रुतिपक्षे निरूढपशुबन्धे च अग्नीषोमीयपशोः दर्शपूर्णमागतसान्नायाधर्माः कार्याः (तु०—का० श्रौ० ४ ।३ ।२;१४ विद्याधरः) । तत्र इष्टिपश्वादौ स्ववाक्ये एव द्रव्यदेवतयोर्विधानात् तद्भिन्नानामेवाङ्गानां विकृतावतिदेशः । सोमेषु न तथेति वैषम्य विशेषोऽवधेयः । (तु०—का० श्रौ० १२ ।१ । १ विद्याधरः) । ख १. अथ सोमयज्ञेषु प्रकृतियज्ञः—सोमयज्ञेषु ज्योतिष्टोमः, ज्योतिष्टोमातिरात्रः, अग्निष्टोमः इति त्रिभिर्नामधेयैः प्रयुज्यमान अग्निष्टोमउक्थ्यषोडशिअतिरात्रैः चतुर्भिः स्तोमैः (स्तोत्रैः) संस्थः चतुष्टोमसंस्थ एक एव ज्योतिष्टोमातिरात्रोऽग्निष्टोमः सोमयज्ञानां मूलप्रकृतिः प्रकृतियज्ञः । तदाह सोमादित्या—'अयं चतुःसंस्थो ज्योतिष्टोमः सर्वेषामेकहाहीनसत्रसोमानां प्रकृतिर्भवति' (वैता० श्रौ० २६ ।१०) । २. अथ सोमयज्ञेषु विकृतियज्ञाः—१. ज्योतिष्टोमातिरात्रदेकाहात् अन्यानि सर्वाणि एकाहाहीनसत्राणि चतुष्टोमस्य ज्योतिष्टोमातिरात्रस्याग्निष्टोमस्य विकृतयो भवन्तीति सोमयज्ञेषु विकृतियज्ञा आख्यायन्ते । तत्र सोमद्रव्यसंबन्धिनो ये धर्मास्ते उत्पत्तिविध्यनुप्रवेशिनस्ते चतुष्टोमस्य ज्योतिष्टोमातिरात्रस्य साधारणाः, ये पुनरधिकारविध्यनुप्रवेशिनो दीक्षादयः स्तुतशस्त्रादयश्च उपदेशतः अग्निष्टोमस्यैव । अतिदेशत एवोक्थ्यादीनामपि संस्थानां भवन्ति । **द्र०** ज्योतिष्टोमसाधारणधर्म— । एवं च उक्थ्यषोडश्यतिरात्रैकाहाहीनसत्ररूपाः सर्वे क्रतवः अग्निष्टोमस्य विकृतयः । यतो हि अग्निष्टोमः सर्वेषामेकाहाहीनसत्राणां मूलप्रकृतिरभिधीयते । एवं स्थिते उक्थ्यः षोडशी अति-

रात्रः अप्तोर्यामश्चेति। चतस्रः संस्था अग्निष्टोमस्य गुणविकारः, षोडशिगुणविकारभूता वाजपेयसंस्था, अग्निष्टोमचमसभक्षणानन्तरं यदा विधाय षोडशिशस्त्रं ज्योतिष्टोमः समाप्यते सोऽत्यग्निष्टोमः। (द्र० अग्निष्टोमविकृति-) इति सोमसंस्थारूपा विकृतियज्ञाः। एभ्योऽन्ये सोमविकृतिर्यज्ञाः २ द्वादशाहः [पृष्ठ्यषडहः चत्वारश्छन्दोमा इति दशरात्रोऽहर्गणः (पृष्ठ्यषडहस्य पूर्वाणि त्रीण्यहानि अविवाक्यं दशममह इति चत्वारश्छन्दोमाः) आद्यन्तौ प्रायणीयोदयनीयौ इति द्वादशयज्ञनामधेयं संघातो द्वादशाहः] ३. गवामयनम् [प्रायणीयः (ज्योतिष्टोमातिरात्रः), चतुर्विंशं, अभिप्लवषडहः, पृष्ठ्य षडहः, अभिजित्, त्रयः स्वरसामानः (ज्योतिः गौः आयुः इत्यभिप्लवपूर्वत्र्यहः), विषुवान्, विश्वजित्, चत्वारश्छन्दोमाः (पृष्ठ्य पूर्वत्र्यहः), विषुवान्, विश्वजित्, चत्वारश्छन्दोमाः (पृष्ठ्य पूर्वत्र्यहः चतुर्थमविवाक्यम्), उत्तमं महाव्रतमिति पञ्चविंशतेः सात्रिकयज्ञनामधेयानां समुदायो गवामयनम्] तदुक्तम्— 'तदेषाऽभियज्ञगाथा गीयते—अतिरात्रश्चतुर्विंशं षडहानभिजित्स्वराः। विषुवान् विश्वजिच्चैव छन्दोमा दशमव्रतम्॥ (तु०— आ० श्रौ० ८ ।१३ ।३१)।

४. चयनम्, ५. एकाहा- सौमिक—चातुर्मास्यादस्त्रयोदशातिरात्रान्ताः (आ०श्रौ० ९। १-११ खण्डः, १० ।१ ।१-१०)। २. भूरादयस्त्रयोदशातिरात्रान्ताः (का० श्रौ० २२। १ ।१-२३;१ ।१-२२)। ३. ज्योतिरादयस्त्रयोदशातिरात्रान्ताः (तां० ब्रा० १६ ।१। १-२; १ ।१-२० ।१० ।१) इत्यत्रोक्ताः द्रष्टव्याः ६. अहीनाः द्विरात्रादय एकादशरात्रान्ता द्वादशरात्रान्ता वा नाम-फल-गुण-योगाद् विभिन्ननामधेयैर्निर्दिष्टाः सन्ति (द्र० आ०श्रौ० दशमोऽध्यायः, का० श्रौ० त्रयोविंशोऽध्यायः, तां० ब्रा० २० ।११; १-२२, १८ ।१-८)। ७. सत्राणि द्वादशत्रयोदशरात्रादीनि शतरात्रपर्यन्तानि रात्रिसत्राणि, गवामयनादीनि विश्वसृजामयनपर्यन्तानि अयनसंवत्सरसत्राणि नामफलगुणयोगाद् भिन्नैर्नामधेयैर्विनिर्दिष्टानि विद्यन्ते ८. चरक सौत्रामणी ९. राजसूयः। १०. अश्वमेधः, ११. पुरुषमेधः, १२. सर्वमेधः, इति नामधेयैरभिहिता एते यज्ञाः, सोमयज्ञेषु विकृतियज्ञा उच्यन्ते सर्वत्र प्रकृतिभूतज्योतिष्टोमातिरात्रस्याङ्गानामतिदेशात्। ३. अथ सोमयज्ञेषु द्वादशाहस्य प्रकृतिविकृत्युभययज्ञाः द्वादशाहस्य प्रकृतिविकृत्युभयात्मकत्वम्। तत्र १. 'द्वादशाहः सत्राणां प्रकृतिः' (आ०श्रौ० ११ ।१ ।७)। २. द्वादशाहः सत्ररूपः सत्राणां प्रकृतिः (मी०को० २१९०)। द्वादशाहोऽहीनरूपो द्विरात्रादीनां प्रकृतिः (तु०—मी०को० २१९०) इति सत्राहीनरूपो द्विविधोऽपि द्वादशाहः द्विरात्रादीनामहीनानां त्रयोदशरात्रादीनां सहस्रसंवत्सरपर्यन्तानामहर्गणां च व्यवस्थया प्रकृतिरुच्यते। तदुक्तम्—'द्वादशोऽहर्गणानां पूर्वततिः (प्रकृतिः) सर्वेऽहर्गणा उत्तराततिः (विकृतिः)' (वौ० श्रौ० २४ ।५) (अहर्गणशब्देन पृष्ठ्याभिप्लवषडहादीनां तत्प्रकृतिकच्छोमस्वरसादिगणानां चापि ग्रहणम्)। सत्रेषु त्रयोदशरात्रादिषु सहस्रं संवत्सरपर्यन्तेषु द्वादशाहधर्मः प्रवर्तन्ते (तु०—का० श्रौ० १३ ।१ ।१ विद्याधरः)। त्रयोदशरात्रादीनां आसंवत्सरात् यानि सत्राणि तेषां प्रकृतिर्द्वादशाहः (मी०को० पृ० २१९०) तत्र १. आसनोपायिचोदनेन द्वादशाहस्य सत्रत्वम्। अर्थात् आस उपवेशने

इति धातुना, उप-उपसर्गपूर्वकेण इण् गतौ इति धातुना च यस्य चोदनं तत् सत्रम्। यजमानबहुत्वेन च नियतेन सत्रत्वम्। एवं च द्वादशाहस्य द्विरात्रादीनां च यजति चोदनात् यज्धातुना विधानात् अहीनत्वमिति विशेषोऽवधेय: (द्र० मी०को० पृ० २१९१) २. 'आसत उपयन्तीति सत्र लिङ्गं यजत इत्यहीनस्य'। इति सत्राहीनयोर्लक्षणम्। (तु०—का०श्रौ० १२ । १ ।५) ३. यद्वा उभयत आदावन्ते च अतिरात्रसंस्थाक: सोमयागो यस्य समुदायस्य तत् सत्रम्। अहीनस्य तु अन्ते अतिरात्रसंस्थाक: सोमयागो भवति नोभयत:। तदुक्तम्-'उभयतोऽतिरात्रं सत्रमुपरिष्टादहीनस्य' (तु०— १२ ।१ ।६ विद्याधर:)। तथा चाश्वलायन:—'द्व्यप्रभृतयो द्वादशरात्रपरार्ध्या अग्निष्टोमादयोऽतिरात्रान्ता मासपवर्गा अपरिमितदीक्षा:' (आ०श्रौ० १० ।१ ।१२) इत्यहीनलक्षणमाह। गवामयनस्य सत्रात्मको द्वादशाह: प्रकृति: (मी०को० पृ० २६८४)। गवामयने द्वादशाहिको विध्यन्त: मी०को० पृ० १५४९। इति द्वादशाहस्य प्रकृतित्वं वर्तते। द्वादशाहे अग्निष्टोमसंस्थाकज्योतिष्टोमधर्मा: प्रवर्तन्ते (तु०—का० श्रौ० १२ ।१ ।१ विद्याधर:) इति द्वादशाहस्य विकृतित्वमस्ति। इत्थं द्वादशाहस्य प्रकृतिविकृतिभावात् द्वादशाह: प्रकृतिविकृत्युभयज्ञ:। २. गवामयनप्रकृतीनि गवामयनस्य प्रकृविकृत्युभयात्मकत्वम्— संवत्सरप्रभृतिसुत्यानि सत्राणि भवन्ति। तेषु गवामयनिकानां गणानां दर्शनात्। (तु०— का० श्रौ० २४, ४, २ विद्याधर:)।गवामयनस्य धर्मा: सत्रेषु (अयनसत्रेषु) अतिदेष्टव्या:, संवत्सरसाध्यत्व-षट्युत्तरशतत्रयदिनसाध्यत्व - पत्न्युपगान-

लिङ्गेभ्य: (गुणेभ्य:) द्र० मी०को० पृ० १५४७ गवामयनेनादित्यानामयनं व्याख्यात। (आ०श्रौ० १२ ।१ ।१) इति गवामयनस्य आदित्यामयनाद्ययनसत्राणां प्रकृतित्वम्। गवामयने सत्रे ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां मूलप्रकृतिरिति ज्योतिष्टोमधर्मा: प्रवर्तन्ते। प्रतिदिनं सवनत्रयादिकग्रहचमसादिकं स्तोत्रशस्त्रादिकं च यथा-प्रकृति (ज्योतिष्टोमवत्) भवन्ति। द्वादशाह: सत्ररूप: सत्राणां प्रकृति:। द्वादशाहस्य समूढस्य विकृतिर्गवामयनसत्रम् (मी०को० पृ० २१९०-९) इति गवामयने द्वादशधर्माश्च प्रवर्तन्ते। ततो द्वादशाहविकृतित्वात् द्वादश दीक्षा: द्वादशोपसदो भवन्ति (तु०—का० श्रौ० १३ ।१ ।१ विद्याधर:)। द्वादशाहं दीक्षा: द्वादशाहमुपसदश्च। द्वादशाहे उत्पन्न: प्रकृतिरूप: पृष्ठ्यषडहश्च कर्तव्य: (तु०—मी०को० पृ० २२०० ।२२०१)। इति गवामयनस्य ज्योतिष्टोमसमूढद्वादशाहयोरङ्ग (धर्म) ग्रहणाद्विकृतित्वम्। इति गवामयनं प्रकृतिविकृत्युभययज्ञ उच्यते। एकाहानां प्रकृतिविकृत्युभयात्मकत्वम्— ३. एकाहा: एकाहकाण्डपठितज्योतिरादिधर्माणां गवामयनगतज्योतिरादिषु अतिदेश: द्र० मी०को० पृ० १३०१। इति गवामयनगतज्योतिरादीना प्रकृतय:। २. अथ विकृतय: १. एकाहेषु अग्निष्टोमसंस्थाकज्योतिष्टोमधर्मा: प्रवर्तन्ते (तु०—का० श्रौ० १२ ।१ ।१ विद्याधर:)। २. चतुर्विंशते: सात्रिकाणामह्नां धर्माश्च प्रवर्तन्ते। तदुक्तम्—'एतेभ्य एवाहोभ्योऽहीनैकाहान् पश्चात्तरान् व्याख्यास्याम:' (आ०श्रौ० ८ ।१३ ।३५)। अर्थात् चतुर्विंशते: सात्रिकेभ्योऽहोभ्योऽहीनैकाहा व्याख्यायन्ते। ते च ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां

प्रकृतिरिति ज्योतिष्टोमसरूपाः (ज्योतिष्टोमविकृतयः, ज्योतिष्टोमातिदिष्टानि (ज्योतिष्टोमविकृतीनि) चतुर्विंशतिरहानि अहीनैकाहानानां प्रकृतित्वेनेष्यन्ते इति सात्रिकाहः सरूपाः (सात्रिकाहः विकृतयः)। चेत्युभयविकृतयो भवन्ति। तदुक्तम्—'उक्तप्रकृतयोऽहीनैकाहाः' (तु०— आ०श्रौ० ९। १।१ नारायणः)। एवमेकाहाः प्रकृतिविकृत्युभययज्ञा उच्यन्ते। तत्रैकाहाहीनेषु येषामह्नां चतुर्विंशत्यासात्रिकैरहोभिरतिदेसोऽस्ति तानि सात्रिकाहः प्रकृतीनि भवन्तीति। उक्तं च 'सिद्धैरहोभिरह्नामतिदेशः' (तु०—आ०श्रौ० ९।१।२ नारायणः)। एकाहाः सोमविकारा यागाः अग्निष्टोमात् प्राक्नानुष्ठेयाः। द्र० मी०को० पृ० १३०१। इति च विशेषोऽनुसन्धेयः। एकाहेषूक्तः अतिदेशश्चायं १. (क) उत्पत्तिवाक्ये देवतानभिधानत्वम् इत्यव्यक्तचोदनालक्षणः। (ख) उच्यतेऽनेनेति वचनं नामधेयमिति नामसादृश्यकल्पितवचनात् धर्माणामतिदेशः नामसादृश्यतिदेशश्चेति द्विविधः) (तु०—का०श्रौ० १२।१।१ विद्याधरः)। २. सोऽतिदेशो द्विविधः वचनातिदेशः नामातिदेशश्चेति द्विविधः। आद्योऽपि द्विविधः प्रत्यक्षवचनादिदेशः अनुमितवचनातिदेशश्चेति। अनुमितानुवचनातिदेशोऽपि त्रिविधः सादृश्यकल्पितवचनातिदेशः, स्थाना पत्तिकल्पितवचनातिदेशः, आश्रयोपस्थितिकल्पितवचनातिदेशश्चेति। द्र० मी०को० पृ० १९२; २४४। इति नानाविधो भवति। तेष्वाद्यस्य एकाहानां मध्ये उद्भिदादिषु विकृतियागेषु अव्यक्तचोदनाचोदिनेषु अव्यक्तचोदनाचोदितज्योतिष्टोमधर्माणां अव्यक्तचोदनालक्षणसद्भावात्प्रवृत्तिरुदाहरणम्। तत्र द्रव्यदेवतयोरश्रवणेऽपि यागविधिवलादेव तयोरप्यतिदेशः। इति केषुचिदेकादेकाहेषु सादृश्यकल्पितवचनातिदेशरूपोऽव्यक्तचोदनालक्षणोऽतिदेशः (विकृतिभावः)। प्रवर्तते। तत्र एकाहानां मध्ये ये सात्रिकैरहोभिर्नातिदिश्यन्ते तेष्वेकाहेषु चतुःसंस्थेन द्वादशशतदक्षिणेन ज्योतिष्टोमेनातिदेशो विधीयते। अर्थात् यत्र सात्रिकसरूपेष्वेकाहेषु एषोऽव्यक्तचोदनालक्षणरूपः प्रत्यक्षवचनातिदेशो न निर्दिश्यते तत्र अनुमितवचनातिदेशेन ज्योतिष्टोमधर्मातिदेशोऽनुमातव्यः। अतिदेशोऽयं सुत्यानामेव न दीक्षोपसदाम्। तेनैषु सात्रिकसरूपेषु एकाहेषु दीक्षोपसदः स्वकीया एव नियमेन भवन्ति न ज्यौतिष्टोमिकाः (तु०—आ०श्रौ० ९।१।३ नारायणः)। येषां च द्व्यहादीनामहीनानामतिदेशो नास्ति तेषां 'गो आयुषी विपरीते' प्रकृतिः वेदितव्या। अनतिदिष्टानां त्र्यहाणामहीनानां च पूर्वः पृष्ठ्यत्र्यहः पूर्वं अभिप्लवत्र्यहो वा प्रकृतिः। इति विशेषोऽवगन्तव्यः (तु०— आ०श्रौ० ९। १।३-५ नारायणः)। इति प्रकृतिविकृत्युभयात्मका एकाहाः। तत्रैकाहेष्वपि केचनैकाहा नामातिदेशेन इतरेतरं प्रकृतिविकृत्युभया भवन्ति। तद्यथा—सन्ति व्रात्यस्तोमाः (व्रात्ययज्ञाः) चत्वारः (का०श्रौ० २२।४।१ तां० ब्रा० १७।१-४ खं०), षट् साद्यस्क्राः। (का०श्रौ० २२।२।९ आ०श्रौ० ९।७। ४।२१ तां० ब्रा० १६।१२-१६ खं०), चत्वारः षड् वा अग्निष्टुतः (आ०श्रौ० ९।७।२२ तां० ब्रा० १७।५-९ खं० का०श्रौ० २२।४।३२-३३) समाननामान एकाहाः तत्र प्रथमस्य व्रात्यस्तोमस्य धर्मा नामातिदेशेन द्वितीयादिषु त्रिषु व्रात्यस्तोमेषु प्रवर्तन्ते। एवमेव षट्सु साद्यस्क्रेषु प्रथमस्य धर्मा नामातिदेशेन द्वितीयादिषु पञ्चसु प्रव-

र्तन्ते। तथा च चतुर्षु षट्सु वा अग्निष्टुत्सु प्रथमस्य धर्मा नामातिदेशेन द्वितीयादिषु प्रवर्तन्ते। भूरादीनां गौतमस्तोमपर्यन्तानां सप्तानामेकाहानां बृहस्पतिसवेन (आ०श्रौ० ९।५।३)। शस्यं व्याख्यातम् (आ०श्रौ० ९।५।१५ नारायणः)। इति। अहीनानां प्रकृतिविकृत्यु-भयात्मकत्वम्— ४. अहीनाः—द्विरात्रोऽहीनानां प्रकृतिः। तदुक्तम्—'द्विरात्रोऽहीनानां पूर्वाततिः (प्रकृतिः) सर्वेऽहीना उत्तरा नतिः' (बौ० श्रौ० २४।५)। इत्यहीनेषु प्रथमो द्विरात्रः (अङ्गिरसाख्यः पूर्वोत्तररूपो द्व्यहः) अहीनानां प्रकृतिरुच्यते। अहीनेषु १. अग्निष्टोमसंस्थाकज्योतिष्टोमस्य धर्माः प्रवर्तन्ते।

अहीनेषुः २. सत्राहीनोभयात्मकस्य द्वादशाहस्य धर्माः सत्रेषु अहीनेषु च व्यवस्थया प्रवर्तन्ते। द्वादशाहधर्माणां अहर्गणेषु द्विरात्रादिषु प्रवृत्तिः (तु०—मी०को० पृ० ९४)। ३. चतुर्विंशतेःसात्रिकाणामह्नां धर्माश्च प्रवर्तन्ते। (तु०—आ०श्रौ० ८।१३।३५; ९।१।२)। ४. द्विरात्रोऽ-हीनानां पूर्वाततिः (प्रकृतिः) सर्वेऽहीना उत्तराततिः (विकृतिः) (तु०—बौ० श्रौ० २४।५) द्र० पूर्वोत्तरततिज्ञान—। इत्यहीनाः प्रकृतिविकृत्युभययज्ञा भवन्ति। सत्राणां प्रकृतिविकृत्युभयात्मकत्वम्— ५. सत्राणि द्वादशाहः गवामयनं, त्रयोदशरात्रादीनि सहस्रसंवत्सरपर्यन्तान्यहर्गणानि। 'सत्राणि सोमविकारः' इति विकृतिरेव न प्रकृतिः। अतः चतुःसंस्थस्य ज्योतिष्टोमस्य एकाहाहीनसत्राणां प्रकृतिभूतस्य धर्माः सत्रेषु प्रवर्तन्ते (तु०—आ०श्रौ० ७।१।३।९। १।१ नारायणः)। तथा च सत्रेषु त्रयोदशरात्रादिषु सहस्रसंवत्सरपर्यन्तेषु द्वादशाहधर्माः प्रवर्तन्ते (तु०—का० श्रौ० १३।१।१ विद्याधरः। द्वादशाहः सत्राणां प्रकृतिर्भवति (आ०श्रौ० ११।१।७ नारायणः)। 'द्वादशाहोऽहर्गणानां त्रयोदशरात्राणां पूर्वाततिः (प्रकृतिः)( सर्वेऽहर्गणा उत्तराततिः (विकृतिः) (बौ० श्रौ० २४।५)। गवामयनस्य धर्माः। सत्रेष्वतिदेष्टव्याः द्र० मी०को० पृ० १५४७। इति सत्राणि अग्निष्टोमविकृतीनि गवामयनद्वादशाहविकृतिरूपाणि च भवन्ति इति सत्राणां प्रकृतिविकृत्युभयात्मकयज्ञाः। तत्र सर्वेषां सोमयागानामग्निष्टोमो मूलप्रकृतिरित्यतः अहीनैकाहसत्ररूपाः सोमविकृतिरूपाः सर्वेयागाः अग्निष्टोमात्प्राक् नानुष्ठेयाः (मी०को० पृ० ७७५)। सोमे तु अपूर्वत्वमेव। स न कुतश्चिद् धर्मान् गृह्णाति कृत्स्नविधानात्, अपूर्वः सोमः। द्र० मी०को० पृ० २५३। तस्मान्न कस्याप्यतिदेशः सोमे। द्र० मीको० पृ० २५५)। सोमः प्रकृतिरूप एवेति विशेषोऽवगन्तव्यः। चतुर्विंशस्य प्रकृतिविकृत्युभयात्मकत्वम्— ६. चतुर्विंशं सत्रेषु गवामयने द्वितीयमहर्भवति। १. पृष्ठ्याभिप्लवानां प्रातःसवने होत्रकाणां परिशिष्टा नामावापानुद्धृत्य तत्स्थाने 'मित्रं वयं हवामहे' इत्यादिका ऋचः शस्त्वा चातुर्विंशिकान्येव शस्त्राणि भवन्ति। 'एतेनाह्ना सुत्यानि' (आ०श्रौ० ७।१।३) इति सर्वत्रैकाहिके (आग्निष्टोमिके) शस्ये प्राप्तेतन्निवृत्त्या चातुर्विंशिकप्रापणार्थं 'परिशिष्टावापानुद्धृत्य' इत्युक्तमिति नारायणवचनात् पृष्ठ्याभिप्लवेषु चतुर्विंशस्य धर्माः प्रवर्तन्ते (तु०— आ० श्रौ० ७।५।८ नारायणः)। २. शस्त्रिणां होत्रकाणां प्रातःसवने चतुर्विंशे उत्पन्नानां षडहस्तोत्रियाणां सत्राधिकारात् सत्रसंबन्धिहोत्रकोद्देशेन विधानात् (सत्राणां) सर्वाहःसु प्राप्तिः साधिता भवति

(तु०— आ०श्रौ० ७।२।५ नारायणः)। इति सत्र सर्वाहः सु चतुर्विंशधर्माः प्रवर्तन्ते। ३. चतुर्विंशधर्माः अभिप्लवपृष्ठ्यषडहेषु तत्प्रकृतिकेषु छन्दोमस्वरसामसु च प्रवर्तन्ते। ४. यथा चतुर्विंशे माध्यन्दिनसवने मरुत्वतीये शस्त्रे एते प्रगाथाः (आ०श्रौ० ५।१।४।१८; ७।३।२-३) स्थिताः, एवमेव स्थितानेतान् (षट्) प्रगाथान् पृष्ठ्याभिप्लवयोः षडहयोरहन्यहनि आवर्तयेयुः इति (आ०श्रौ० ७।३।४ नारायणः)। किञ्च चतुर्विंश एव होत्रकाणां प्रातःसवने उक्ताः परिशिष्टावापा महाव्रताभिजिद्विश्वजिद्विषुवत्सु (अहःसु) प्रवर्तन्ते। तेनायमावापः महाव्रणतादिषु सर्वस्तोमसर्वपृष्ठेषु चाहःसु कर्तव्यः तत्र यस्मिन् क्रतौ त्रिवृदादयस्त्रयस्त्रिंशपर्यन्ताः षडहस्तोमाः स सर्वस्तोमः। रथन्तरादीनि रैवतपर्यन्तानि षट् सामानि यस्मिन् भवन्ति स सर्वपृष्ठ इत्युच्यते। तेषु अभिजित सर्वस्तोमः, विश्वजित् सर्वपृष्ठः। तौ द्वावपि द्विविधौ अभिजित्सर्वस्तोमोऽसर्वस्तोमश्च, विश्वजिदपि सर्वपृष्ठोऽसर्वपृष्ठश्चेति विशेषोऽवगन्तव्यः (तु०—आ०श्रौ० ७।२।१०-११ नारायणः। अपि च चतुर्विंशे प्रातःसवने होत्रकाणां शस्त्रेषूर्ध्वं परिशिष्टावापात् शस्याः पर्यासास्तृचाः पृष्ठ्याभिप्लवयोः प्रातःसवने तेषां शस्त्रेषु प्रवर्तन्ते। इति चतुर्विंशस्य प्रकृतित्वम्। चतुः संस्थो ज्योतिष्टोमाख्य एकाहाहीनसत्राणां प्रकृतिभूतः सोमायागः सत्रेषु प्रथममहः प्रायणीयः। अत्र सर्वेष्वहःसु 'एतेनाह्ना सुत्यानि' इति दीक्षणीयादिरुदवसानीयान्तोनिर्दिष्टः। इत्येवमादिभूतस्य ज्योतिष्टोमातिरात्रस्य धर्मा चतुर्विंशेऽहनि प्रवर्तन्ते। (तु०—आ० श्रौ० ७।१।३; २।१ नारायणः)। इति चतुर्विंशस्य विकृतित्वं ज्ञेयम्। तदेवं प्रकृतिविकृत्युभयरूपं चतुर्विंशं प्रकृतिविकृत्युभयज्ञ उच्यते। ७. अभिप्लवषडहस्य प्रकृतिविकृत्युभयात्मकम् पृष्ठ्यषडहे सात्रिकस्य अभिप्लवषडहस्य धर्माणां प्रवृत्तिः। तदुक्तम्— 'अभिप्लवस्य ये आद्ये अहनी ताभ्यां पृष्ठ्यस्याद्ये अहनी व्याख्याते। न केवलमाद्ये एवाहनी अभिप्लवातिदिष्टे स्याताम्, उत्तरेष्वहःसु यानि तृतीयसवनानि तान्यभिप्लवस्योत्तरेषामह्नां अन्वहं तृतीयसवनानि यानि, तैरेवातिदिष्टानि। तदुक्तम्—'पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्याम्। तृतीयसवनानि चान्वहम्' (तु०—आ०श्रौ० ७।१०।१-२ नारायणः)। इत्यभिप्लवस्य प्रकृतित्वम्। अभिप्लवषडहे ज्योतिष्टोमातिरात्रधर्माः चतुर्विंशधर्माश्च प्रवर्तन्ते इति तस्य विकृतित्वम्। इति प्रकृतिविकृत्युभयात्मकोऽभिप्लवषडहः प्रकृतिविकृत्युभययज्ञः इति श्रौतयज्ञानां त्रिविधं प्रकृतिविकृत्युभयात्मकं रूपं निरूपितम्। अत्र सोमयज्ञेषु संक्षिप्यैतदुक्तं भवति। सोमयज्ञेषु अव्यक्तचोदनाचोदितस्य ज्योतिष्टोमस्याग्निष्टोमस्य (तत्र अव्यक्तत्वमुत्पत्तिवाक्ये देवतानविधानत्वम् (का० श्रौ०) १२।१।१ विद्याधरः) अत्यग्निष्टोमः उक्थ्यः षोडशी वाजवाजपेयः अतिरात्रः अप्तोर्यामः (आ०श्रौ० ६।११।१; का० श्रौ० १०।९। २७) इति षट् सोमसंस्थाः एकाहाहीनसत्राणि च विकृतयो भवन्ति। तत्र सोमद्रव्यसंबन्धिनो ये धर्मा उत्पत्तिविध्यनु प्रवेशिनस्ते चतुःसंस्थस्य ज्योतिष्टोमस्य साधारणाः, ये पुनरधिकारविध्यनुप्रवेशिनो दीक्षणीयादयः स्तुतशस्त्रादयश्च त उपदेशतोऽग्निष्टोमस्यैव अतिदेशत एवोक्थ्यादीनामपि संस्थानाम् (आ०श्रौ०

५ ।१५ ।१५) इति नारायण: । एवं चोक्थ्य: षोडशी अतिरात्र: अप्तोर्यामश्चेति चतस्र: संस्था: अग्निष्टोमस्य गुणविकारा: । षोडशिगुणाविकारभूता वाजपेयसंस्था । अग्निष्टोमचमसभक्षणानन्तरं यदा विधाय षोडशिशस्त्रं ज्योतिष्टोम: समाप्यते सोऽत्यग्निष्टोम: (तु०— आ०क० उपो० वरदराज:) । यतोऽत्यग्निष्टोम उक्थ-षोडशि-वाजपेय-अतिरात्र-अप्तोर्यामा सप्तसोमसंस्था:, एकाहाहीनसत्ररूपाश्च सर्वे सोमक्रतव: अग्निष्टोमस्य विकृतयस्तत एवाग्निष्टोम: सर्वेषामेकाहाहीनसत्राणां सोमानां मूलप्रकृतिरिति सिद्ध्यति । एवं सोमयागश्चतु: संस्थो ज्योतिष्टोमाख्य: प्रकृतिभूत: एकाहाहीनसत्राणाम्' (तु०— आ०श्रौ० ७ ।१ ।१; ९ ।१ ।१ नारायण:) । अथापि यथैकाहाहीनसत्राणां चतुष्टोमस्य ज्योतिष्टोमस्य विकृतित्वं तथैव चतुर्विंशते: सात्रिकाणामह्नामपि एकाहाहीनानां विकृतित्वमस्तीति प्रकृतिविकृत्युभयत्वं सिध्यति । अमुमेव विषयं नारायण इत्थं संक्षिपति ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां प्रकृति: । तदतिदिष्टानि सात्रिकाणि चतुर्विंशतिरहानि एकाहाहीनानां प्रकृतित्वेन इष्यन्ते । एकाहाहीनाज्योतिष्टोमप्रकृतय: सात्रिकाह: प्रकृतयश्च भवन्ति । तेष्वेकाहाहीनेषु येषामह्नां प्राक्सिद्धै: (सात्रिकैश्चतुर्विंशत्या) अहोभिरतिदेशोऽस्ति तानि सात्रिकाह:प्रकृतीनि भवन्ति । इत्युभयप्रकृतित्वमिति (तु०—आ०श्रौ० ९ ।१ । १-२ नारायण:) । अयं प्रकृतिविकृतिभाव: पूर्वोत्तरतति विज्ञानेनापि ज्ञायते । (द्र० पूर्वोत्तरततिविज्ञान-यज्ञक्रम-, यज्ञायतन—, यज्ञविहार—, वेदि—) । प्रकृतिविकृत्युभयात्मकयज्ञा:— (ग) १. स्थालीपाक:, अष्टका:, अग्निहोत्रम्, नारिष्टहोमा:, जया: अभ्याताना:, राष्ट्रभृत: (चतुर्होतार:, कूष्माण्डा:) दर्विहोमा: (मी०को० पृ० २०१८) । २. 'दर्विहोमा: पौर्णमासधर्मा जुहोत्यविशेषात्' त्रैयम्बकादयश्च दर्विहोमशब्देन गृह्यन्ते ।(का० श्रौ० ६ ।१० ।१७ विद्याधर:) ३. दर्विहोमा नारिष्टादय: गृहमेधादि च (मी०को० पृ० २६९६) इत्येवमादयो ये दर्विहोमसंज्ञका यज्ञा अभिधीयन्ते । ते अपूर्वत्वेन सोमस्य अवान्तरप्रकृतीनां च धर्मान् न गृह्णन्ति । अर्थात् तस्मात् न सोमप्रकृतयोदर्विहोमा: । एवं दर्विहोमाणां नारिष्ट होमा: न प्रकृति: । दर्विहोमाणां पत्नीसंयाजप्रकृतित्वं निरस्तम् । न कुतश्चिदपि दर्विहोमाणां धर्म, प्राप्तिरुच्यते । द्र० मी०को० पृ० २०१३ । अत: सिद्धं दर्विहोमा अपूर्वा: मी०को० पृ० २०१४) । इति । तदेवं न प्रकृतियज्ञा न विकृतियज्ञा नापि प्रकृतिविकृत्युभययज्ञा दर्विहोमा: इति प्रकृतिविकृत्यनुभययज्ञा उच्यन्ते । तत्र १. दर्विहोमशब्द: कर्मनामधेयम् । तदुक्तम्—'दर्विहोमो यज्ञाभिधानं होमसंयोगात्' न दर्व्या दर्व्या: वा होम: । (द्र० मी०को० २०१०) । २. दर्विहोमशब्द: स्मार्तानां श्रौतानां च कर्मणां नामधेयं सर्वेषां लौकिनां वैदिकानां च नामधेयम् । (मी०को० पृ० २०१८) । ३. स्वाहाकारेण संयुक्ता दर्विहोमा न वषट्कारेण । जुहोतिचोदना दर्विहोमा न यजतिचोदना: (मी०को० पृ० २०११) । ४. दर्विहोमा अपूर्वा एव न सोमस्य नारिष्टहोमानां वा पत्नीसंयाजानां पिष्टफलीकरणहोमयोर्वा विकृति: (मी०को० पृ० २०१०) । ५. दर्विहोमाणां सर्वेषामपूर्वत्वेन प्राकृतधर्माग्राहित्वम् (मीको० पृ० २०१४) । एतै: स्वरूप हेतुभिरन्यै: पृथक्त्वमापन्ना:... स्थालीपाकादयो दर्विहोमा: प्रकृतिविकृत्यनुभययज्ञा

भवन्तीति विशेषः। कात्यायनस्तु जुहोतिशब्दविहिता जुहोतयो दर्विहोमाः। ते दर्शपूर्णमासधर्मा भवन्तीत्याह (तु०— का०श्रौ० ६।१०।१७ विद्याधरः)। द्र० दर्विहोम—, यज्ञक्रम—।

**श्रौतसूत्र—** (सा०) १. वेद-ब्राह्मणभागेषु समुपदिष्टान् उत्पत्तिअधिकारविनियोगप्रयोगविधीन् यथाप्रकरणं एकत्र समुच्चित्य सरलया रीत्या यज्ञानुष्ठानसौकर्यार्थमाचार्यैः प्रणीतानि प्रयोगशास्त्राणि कल्पापरपर्यायाणि श्रौतसूत्राण्युच्यन्ते। २. ब्राह्मणश्रुतिप्रोक्तोक्तानि उत्पत्त्यधिकारविनियोगप्रयोगविधिवाक्यानि समाहृत्य मुनिभिः तत्तत्प्रकरणेषु यज्ञानुष्ठानप्रकाशनाय समाम्नातानि सूत्रपदानि श्रौतसूत्राणि प्रयोगशस्त्राणि भवन्ति। सूत्रलक्षणम्— 'अल्पाक्षरमसंदिग्धं सारवद् विश्वतो मुखम्। अस्तोभनमनवद्यं च सूत्रं सूत्रविदो विदुः' इति। द्र० कल्पसूत्र—।

**श्रौतसूत्रक्लृप्तस्तोमविधि—** (औ०) द्र० वर्धमानस्तोम—।

**श्रौतसूत्रपरिभाषासूत्र—** (सा०) आश्वलायनादिश्रौतसूत्रेषु अधिकारविधिसूत्रेभ्योऽन्यानि यानि अधिकारविधीनामारादुपकारकाणि ग्रन्थलाघवार्थं प्रकरणादावुक्तानि सामान्यप्रासङ्गिकानि सूत्राणि तानि श्रौतसूत्रपरिभाषासूत्राण्युच्यन्ते।

**श्रौतसूत्रव्याख्याभेद—** (सा०) आश्वलायनादिश्रौतसूत्राणां व्याख्या षड्धा भवति—'उपोद्घातः पदं चैव पदार्थः पदविग्रहः। आक्षेपः प्रत्यवस्था च व्याख्यासूत्रस्य षड्विधा। (तु०—आ०श्रौ० १।१।१ देवत्रातः)।

**श्रौतसूत्रसूत्रभेद—** (सा०) अश्वलायनादिश्रौतसूत्राणां पञ्चविधाः भेदाः भवन्ति—१. अधिकारसूत्रम् २. परिभाषासूत्रम् ३. उत्सर्गसूत्रम् ४. अपवादसूत्रम्, ५. उदाहरणसूत्रमिति (तु०— आ०श्रौ० १।१।१ देवत्रातः। इति पञ्चविधानि सूत्राणि सूत्रकारैः प्रणीयन्ते।

**श्लक्ष्ण—** (सा०) मार्जनेन चिक्कणीकरणं श्लक्ष्णमुच्यते।

**श्लक्ष्णता—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च श्लक्ष्णता पुरोडाशे जलेन क्रियते। 'सं ते तन्वा तनूः सृज्यताम्' इति त्रिः परिमार्ष्टि। द्र० मी०को० पृ० ३९९८।

**श्लोकसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-विकृतौ अयनसत्रप्रकरणे गवामयने महाव्रतेऽहनि 'हा ऊ स्वरता ब्रह्मणा' इति गीयमानं साम श्लोक इत्युच्यते। तेन साम्ना महाव्रतेऽहनि हविर्धानयोः पुरस्तात् प्रत्यङ्मुखैः (उभे) हविर्धाने उपस्थीयेते। परिमात्संज्ञा चास्य भवति (तु०—तां० ब्रा० सा० ५।४।१०)। द्र० परिमात्—।

**श्वपरशु—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च शाखादिच्छेदनोपयोगी श्वसदृशः कुठारः श्वपरशुरुच्यते। द्र० असिद—।

**श्वः स्तोत्रियानुरूप—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहगवामयनादिसत्राहीनप्रकरणे अहर्गणेषु (चतुर्विंशादिसात्रिकेष्वहःसु) गवामयने प्रायणीयाख्ये प्रथमे, सात्रिकेषु, द्वितीये च चतुर्विंशाख्येऽहनि षडहस्तोत्रियेषु अन्यत्र च सर्वाहर्गणेषु होत्रकाणां मैत्रावरुणादीनां शस्त्रेषु प्रातःसवने द्वितीयस्याह्नो यः स्तोत्रियः

तृचः स तृचः प्रथमेऽहनि स्तोत्रियस्य तृचस्य अनुरूपः श्वः स्तोत्रियानुरूपो भवति। अर्थात् सामगा यस्मिंस्तृचे स्तोत्रं कुर्वन्ति स तृचः स्तोत्रियः। तस्य स्तोत्रियस्य छन्दो देवतादिना सदृशोऽन्यो यस्तृचः सोऽनुरूपः। तथा सति सर्वेष्वहःसु एकैकस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति। ते सर्वे तृचाः स्तोत्रियाः। तत्र सर्वत्रोत्तरदिनगतं स्तोत्रियं पूर्वदिने स्तोत्रियस्यानन्तरभाविनमनुरूपं कुर्यात्। अयं च नियमो होत्रकाणां शस्त्रेषु प्रातःसवने एव द्रष्टव्यः। तदुक्तम् 'स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवनेऽहरेव तदह्नोऽनुरूपं कुर्वन्त्यपरेणैव तदह्ना परमहरभ्यारभन्ते' (तु०—ऐ० ब्रा० सा० ६ ।५)। २. अहर्गणेषु होत्रकाणां शस्त्रेषु प्रातःसवने श्वः परेद्युः यस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति तं स्तोत्रियं पूर्वेद्युर्होतारः शस्त्रेषु अनुरूपं कुर्वन्ति। एतच्च प्रातःसवन एव।

तच्चानुरूपकरणं अहीनस्य सन्तत्यै संपद्यते। अह्नां समूहरूपः (अनेकदिनसाध्यः) क्रतुरहीनः। स च एकैकस्मिन्नहनि विच्छिन्नो मा भूदिति अहर्द्वयसन्धानार्थं भवति। तदुक्तम् 'यः श्वः स्तोत्रियः तमनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसंतत्यै' (ऐ० ब्रा० सा० ६ ।१७)। द्र० अहीनसन्तति—। ३. चतुर्विंशे उत्पन्नानां षडहस्तोत्रियाणां मध्ये यस्मिंस्तृचे स्तुवीरंश्छन्दोगा अन्यस्मिन् वा कस्मिंश्चित् स तेषां होत्राणां स्तोत्रियो भवति। यस्मिंस्तृचेः श्वः 'स्तुयुः सोऽनुरूपः सत्राणां सर्वेष्वहःसु कर्तव्यः। तेन सत्रसंबन्धिषु सर्वेष्वहःसु प्रायणीयेऽपि (चतुर्विंशेऽपि) श्वः स्तोत्रिय एवानुरूपो भवति नान्यः प्राकृतो लाक्षणिको (स्वाकीयापूर्वो) वा। तदुक्तम् 'तेषां यस्मिन् स्तुवीरन् स स्तोत्रियः। यस्मिञ्छ्वः सोऽनुरूपः' इति। तु०—आ०श्रौ० ७ ।२५-६)। नारायणः।

## ष

**षट्त्रिंशद्रात्रसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य वि-कृतौ रात्रिसत्र प्रकरणे षट्त्रिंशद्रात्रसत्रे प्रायणीयोऽतिरात्रः १, चत्वारोऽभिप्लवषडहाः २,२५, पृष्ठ्यषडहः २६-३१, चत्वारश्छन्दोमाः ३२-३५; उदयनीयोऽतिरात्रः ३६ इति षट्त्रिंशदहानि। इदं षट्त्रिंशद्रात्रसत्रं प्रकृतिविहितम्। तेनात्र षडहार्थे अभिप्लवः षडहः, दशाहार्थे द्वादशिको दशरात्रः, प्रथमोत्तमौ अतिरात्रौ, इत्यहानि पूर्यन्ते। इति प्रकृतिविहितत्वमुच्यते आवापप्रकारेण। **द्र०** अहीनाहर्गण- सत्राहर्गणामानामङ्गप्रधानविधि—, २. आवापस्थान—, सत्रप्रकृति—। अत्र षडहधर्माः प्रवर्तन्ते इति विशेषोऽवधेयः।

**षट्त्रिंशस्तोम— द्र०** वर्धमानस्तोम—, स्तोमभेद—।

**षट्त्रिंशस्तोमविष्टुति —** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे गोसवाख्ये एकाहे अहीनप्रकरणे पौण्डरीकैकादशरात्रस्य षष्ठेऽहनि च 'द्वादशभ्यो हिंकरोति १. स तिसृभिः सोऽष्टाभिः, स एकया। २. द्वादशभ्यो हिंकरोति स एकया, स तिसृभिः सोऽष्टाभिः। ३. द्वाद्वभ्यो हिं करोतिसोऽष्टाभिः स एकया सतिसृभिः' इति षट्त्रिंशस्तोमस्य विष्टुतिः। त्रिणवस्य याऽऽद्या विष्टुतिः तद्वत् समाः स्तोमाः कर्तव्याः (तु०—आ०क० ५ ।१४ ।३; ८ ।३४ ।२ वरदराजः)।

**षडवत्त—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च इडोपह्वानानन्तरं उपहूतायामिडायामध्वर्युः आग्नीध्रस्य हस्ते उपस्तीर्य प्रथमं इडायाः कञ्चिदशं दत्त्वा अभिधार्य पुनरुपस्तीर्य द्वितीयं दत्त्वा अभिधारयति। तदेतत् षडवत्तमुच्यते। द्र० श्रौ०प०नि० पृ० ३३।

**षड्गवलाङ्गल—** सोमयज्ञेषु साग्निचित्येषु अग्निचयने चितिसाधने कक्ष्यात्रये कक्षात्रयेणवास्थितेषु त्रिषु योगेषु बध्यमानाः षट्संख्याका गावो वलीवर्दा यस्य लाङ्गलस्य तत्षड्गवलाङ्गलमुच्यते। (तै० सं० सा० ४।२।५)।

**षड्ढोतृमन्त्र—** (सा०, आध्व०) (क) 'सूर्यं ते चक्षुः १, वातं ते प्राणः २, द्यां पृष्ठम् ३, अन्तरिक्षमात्मा ४, अङ्गैर्यज्ञम् ५, पृथिवीं शरीरैः ६, इति षड् होतारो यस्मिन् स षड्ढोता मन्त्रविशेष उच्यते। द्र० (ख) 'वाग्घोता' दीक्षा पत्नी २, वातोऽध्वर्युः ३, आपोऽभिगरः ४, मनो हविः ५, तपसि जुहोमि ६, इति द्वितीयः षड्ढोतृमन्त्रः। द्र० श्रौ०को० १ भा० पृ० १२५। तस्य क्रत्वर्थं प्रयोगः—पशुबन्धेन यक्ष्यमाणः षड्ढोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहुयात्। ग्रहो भवति। द्र० श्रौ०को० १ भा० पृ० १२७-२८)। (ग) 'सूर्यं ते चक्षुः' इत्यादीनि नव वाक्यानि षड्ढोतेत्युच्यते। प्रयोगः—ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्निमन्थनाकरणे अग्न्युद्धरणपक्षे पुनर्विहृत्य षड्ढोतारं मनसाऽऽद्रुत्याऽन्वारब्धे यजमाने चतुर्गृहीतेन आहवनीये जुहोतीति। द्र० श्रौ०प०नि० पृ० ११९-२०।

**षड्विंशतिरात्रसत्रस्याहः क्लृप्ति—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे षड्विंशतिरात्रसत्रे प्रायणीयोऽतिरात्रः १, गौः २, आयुः ३, द्वौ अभिप्लविकौ ४-१५, पृष्ठ्यः षडहः १६-२१, चत्वारश्छन्दोमाः २२-२५, उदयनीयोऽतिरात्रः २६ इति षड्विंशतिरहानि। इदं षड्विंशतिरात्रसत्रं प्रकृतिविहितम्। तेनात्र द्व्यहार्थे गौः आयुः इति द्वे अहनी। षडहार्थे अभिप्लवषडहः। दशाहार्थे द्वादशाहिको दशरात्रः। प्रथमोत्तमौ प्रायणीयोदयनीयौ। इति प्रकृतिविकृतत्वमुच्यते।

**षडविंशस्तोम—** द्र० वर्धमानस्तोम—, स्तोमभेद—।

**षोडशपञ्चविंशप्रभृतिषु स्तोमेषु पर्यायकृति—** (औ०) दाशरात्रिकेभ्यः त्रिवृदादिभ्यः स्तोमेभ्य एकया स्तोत्रीयया अधिकेषु षोडशपञ्चविंशप्रभृतिषु स्तोमेषु तेभ्यः पूर्वस्योत्तमे पर्याये एकामावपेत्। तेषु ब्राह्मणायतनीया विष्टुतिः कार्या, क्षत्रायतनीया वा विष्टुतिः स्यात्। उत्तमपर्याये मध्यमायामधिकामेकां स्तोत्रीयामावपेत्। तदानीं समात्सामसिद्धिः (तु०— द्रा०श्रौ० १७।३ धन्वी। अयं च स्तोमन्याय इत्युच्यते।

**षोडशरात्रसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे षोडशरात्रसत्रे प्रायणीयोऽतिरात्रः, १. ज्योतिः २. गौः ३, आयुः ४, पृष्ठ्यः षडहः ५-१०, चत्वारश्छन्दोमाः ११-१४, महाव्रतं १५, उदयनीयोऽतिरात्रः १६, इति षोडश अहानि। इदं षोडशरात्रसत्रं प्रकृतिविहितम्। तेनात्र त्र्यहार्थे त्रिकद्रुकाः। दशाहार्थे द्वादशाहिको दशरात्रः। एकाहार्थे महाव्रतम्। प्रथमोत्तमौ प्रायणीयोदयनीयौ। द्र० अहीनाहर्गण सत्राहर्गणप्रधानाङ्गविधि—, २ आवापस्थान—, सत्रप्रकृति—, प्रकृतिविहितसत्र—।

**षोडशर्त्विज्—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योति.... चैकाहाहीनसत्रेषु १ अध्वर्युः अध्वर्युवेदोक्तं करोति २. प्रतिप्रस्था, ३. नेष्टा, ४. उन्नेता चेति तस्य त्रयः पुरुषाः । ५. ब्रह्मा वेदत्रयोक्तस्य प्रत्यवेक्षणं करोति । ६. ब्राह्मणाच्छंसी, ७. अग्नीत् (आग्नीध्रः), ८. पोता चेति तस्य त्रयः पुरुषाः । ९. उद्गाता सामवेदोक्तमुद्गानं करोति । १०. प्रस्तोता, ११. प्रतिहर्ता, १२. सुब्रह्मण्यश्चेति तस्य त्रयः पुरुषाः । १३. होता ऋग्वेदोक्तं शंसनं करोति । १४. मैत्रावरुणः, १५. अच्छावाकः, १६. ग्रावस्तुत् चेति तस्य त्रयः पुरुषाः इत्येते षोडश ऋत्विजः सम्भूय सोमयागाननुतिष्ठन्ति । तत्र केषांचित् शाखिनां सप्तदशो सदस्यो भवतीति विशेषोऽवधेयः । **द्र०** ऋत्विग्वरण— ।

**षोडश श्राद्ध—** (सा०, स्मार्त०) प्रकृतिभूतपिण्डपितृयज्ञस्य विकृतौ श्राद्धप्रकरणे प्रेतस्य 'द्वादशाहे त्रिपक्षे च षण्मासे मासि चाब्दिके । श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः' ॥ श्राद्धानि षोडशादत्त्वा न कुर्यात् सपिण्डनम् । इति विशेषोऽवधेयः । तु०—पा० गृ० श्राद्धसूत्रे ५ गदाधरः) ।

**षोडशस्तोम—** **द्र०** वर्धमानस्तोम—, स्तोमभेद— ।

**षोडशस्तोमविष्टुति—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे प्रथमे चतुष्टोमाख्ये एकाहे षोडशस्य (स्तोमस्य) चतृभ्यो हिंकरोति १. स द्वाभ्यां, स एकया, स एकया । चतसृभ्यो हिंकरोतिस एकया, स द्वाभ्यां, स एकया । ३. चतसृभ्यो हिं करोति-स एकया, स एकया, स द्वाभ्याम् इति षोडशे चत्वारो द्वादश पर्यायाः । तेषां मध्यमौ सदृशौ' इति (तु०—आ०क० ५ ।५ ।१ वरदराजः) ।

**षोडशस्तोमविष्टुति— (पर्यायकृति—)** (औ०) चतुष्टोमादेकाहादन्यत्र द्वादशस्तोमस्य ये पर्यायाः चतुष्काः ते चत्वारः षोडशे स्युः । द्वादशस्तोमपर्यायवदेवात्रापि विष्टावसिद्धिः । यथोक्तम्—'द्वादशे तृचभागास्थानेषु द्विकाः (द्विपरिमाणाः) विष्टावाः' (ला०श्रौ० ६ ।७ ।४) इति । तेषां पर्यायाणां चतुर्णां मध्यमौ पर्यायौ समानविष्टावौ स्याताम् । स एकया, स द्वाभ्यां स एकया' इति द्वयोरपि तुल्यो विष्टावः इत्यर्थः । (तु०—द्रा०श्रौ० १७ ।४ धन्वी) । अयं स्तोमन्याय इति चोच्यते ।

**षोडशिग्रह—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ तृतीयायां चतुर्थ्यां वा सोमसंस्थायां षोडशिनि पूर्वं अग्निष्टोमस्य द्वादशग्रहास्तत ऊर्ध्वं तृतीयसवने त्रय उक्थ्यग्रहास्ते पञ्चदश सम्पद्यन्ते । तत ऊर्ध्वमेकः षोडशसंख्यापूरको यः षोडशो ग्रहो गृह्यते स एव षोडशिग्रह उच्यते । तत्र अग्निष्टोममनुष्ठायोक्थ्योऽनुष्ठीयते उक्थ्यं चानुष्ठाय षोडशी अनुष्ठीयत इति संस्थानुष्ठानक्रमोऽवगन्तव्यः ।

**षोडशिग्रहग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति...षोडशिनि 'प्रातःसवने वा प्रतिसवनं वा धाराग्रहाणामन्ते षोडशिनं ग्रहं गह्णीयात्' (तु०—आ०क० उपो० पृ० ५५ वरदराजः) । **द्र०** ग्रहभेद— ।

**षोडशिग्रहग्रहण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि षोडशिनो ग्रहस्य प्रकृतिभूते अग्निष्टोमे एव संनिवेशः । स आग्रयणाद् गृह्यते । तदुक्तम्—'तं पराञ्चमुक्थ्यानि गृह्णाति' **द्र०** मी०को० पृ० ४०२७ । उक्थ्यपात्रादुत्तरकाले षोडशी तृतीयसवने आग्रयणाद् गृह्यते न तु उक्थ्यपात्रादित्यर्थः । अथ च तृतीयसवने स्तोत्रशस्त्रसहितो गृह्यते ।

**षोडशिग्रहग्रहणोपाकरणकाल—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि चतुःसंग्रहे अग्निष्टोमाख्ये सोमयागे सोमरसग्रहणार्थं ये बहवो ग्रहाः सन्ति। तेषां मध्ये य एकः षोडशिग्रहः स उक्थ्येभ्यः परस्तात् सूर्यास्तकालात्पूर्वं प्रारभ्यते। तदुक्तम्—'तं (षोडशिनं) वै पुरास्तमयादुपाकरोति। तं पराञ्चमुक्थ्येभ्यो विगृह्णाति षोडशिनम्' (श० ब्रा० ४ ।५ ।३ ।११)। समयाध्युषिते सूर्ये षोडशिनं स्तोत्रं प्रारभते (वौ० श्रौ० १७ ।३)।

**षोडशिन्—** (अव्य०) १. सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूता तृतीया चतुर्थी वा सोमसंस्था षोडशिंशस्त्रवाची षोडशिशस्त्रेण षोडशिसाम्ना च संतिष्ठमानाः क्रतुः षोडशीत्युच्यते। स षोडशी यथा सोमसंस्थासु अग्निष्टोमः उक्थ्यः वाजपेयः अतिरात्रः अप्तोर्यामः इत्येते क्रतवः स्वतन्त्रा न तथा षोडशी स्वतन्त्रः पृथक्संस्थारूपेणानुष्ठातुं योग्यः। तथा सति न स स्वतन्त्रः क्रतुः। तथा च शाखान्तरे पठन्ति 'न वै षोडशी नाम यज्ञोऽस्ति। यद् वा षोडशं स्तोत्रं षोडशं शस्त्रं तेन षोडशी। तथा सत्ययं संस्थाविशेषः पृष्ठ्यषडहस्य चतुर्थेऽहनि प्रयुज्यते। तदुक्तम्—'देवा वै प्रथमेनाह्ना (पृष्ठ्यप्रथमदिनेन) इन्द्राय वज्रं समभरंस्तं द्वितीयेनाह्नाऽसिञ्चंस्तं तृतीयेनाह्ना प्रायच्छंस्तं चतुर्थेऽहन् प्राहरंस्तस्माच्चतुर्थेऽहन् षोडशिनं शंसति (तु०—ऐ० ब्रा० सा० ४ ।१)। २. अयं षोडशी नाम यज्ञक्रतुः, षोडशस्तोत्राणि षोडशशस्त्राणि च यस्यासौ षोडशी षोडश्याख्योः सोमयागो भवति। अस्य षोडशिन उत्पत्तिः विहितानां पञ्चदशानां स्तोत्राणां यत् षोडशसंख्यापूरकं स्तोत्रं तदात्मना जाता (तु०—तां० ब्रा० सा० १२ ।१३ ।१-३३)। ३. यदि षोडशी क्रतुः (स्वतन्त्रः) स्यात् तदा तृतीयसवने होत्रकशस्त्रानन्तरं (उक्थ्यशस्त्रानन्तरं) षोडशी नाम शस्त्रं भवतीति (तु०—आ०श्रौ० ६ ।२ ।१ नारायणः)। ४. पृष्ठ्य षडहस्य चतुर्थाहः प्रयोगे षोडशिनं शस्त्रं शंसेत्। 'असावि सोम इन्द्रते' (ऋ० १ ।८४-१-६) इत्यादिकं षोडशिशस्त्रम् (तु०—ऐ० ब्रा० सा० ४ ।१, आ०श्रौ० ६ ।२ ।२)। तच्चेदं षोडशिशस्त्रं द्विविधं विहृतमविहृतं च। तत्राविहृतं नाम अध्ययनक्रमेणैव (यथावस्थितमन्त्रानुपूर्व्या पठनेव) शंसनम्। विहृतं तु ऋचां परस्परव्यतिषङ्गः (ऋचां पादानां चान्योऽन्यमेलनेन शंसनम्। (तु०— ऐ० ब्रा० सा० ४ ।१)। ५. षोडशस्तोत्रयुक्ता अहर्विशेषा षोडशिन उच्यन्ते (तु०—तै० सं० सा० ७ ।४ ।३)। ६. षोडशी सर्वेष्वेव द्विरात्रेषु उत्तरेऽहनि भवति। मी०को० पृ० ४०२१ षोडशी चतुरात्रादिषु अहीनेषु आदितः चतुर्थेऽहनि गृह्यते। तदुक्तम्— 'षोडशिमच्चतुर्थम्' इति सर्वेष्वहीनेषु यच्चतुर्थमहः तत्षोडशिमत् कर्तव्यम् (तु०—आ०श्रौ० १० । २ ।१९ नारायणः)।

**षोडशिशस्त्र—** द्र० षोडशिशस्त्रभेद—, षोडशिशस्त्रभेदक्लृप्ति—।

**षोडशिशस्त्रकाल—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ तृतीयायां वा चतुर्थ्यां सोमसंस्थायां षोडशिनि विहृते चाविहृते होत्रकाणां तृतीयसवने उक्थ्यशस्त्रानन्तरं होता षोडशिशस्त्रं प्रारभते। यथा अग्निष्टोमप्रयुक्तानां द्वादशशस्त्राणामुपरि त्रीण्युक्थ्यशस्त्राणि प्रयुज्यन्ते तथैव त्रयाणामुक्थ्यशस्त्राणामुपरि परस्तादुपरि पर्यस्य षोडशिनं होता शंसतीत्यर्थः। (तु०—आ०श्रौ० ६ ।२ ।१ नारायणः)

**षोडशिशस्त्रपरिधानीया —** (हौ०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि विकृतेऽविकृते च 'उद्यद्ब्रध्नस्य विष्टपम्' (ऋ० ८।६९।७ आ०श्रौ० ६।२।१२) इति परिधानीया तया हि विकृतमविकृतं वापि षोडशिशस्त्रं परिसमाप्यते।

**षोडशिशस्त्रभेद—** (सा०) सोमयज्ञेषु प्रकृतिभूत...षोडशिनि यत् षोडशिशस्त्रं तद्द्विविधं भवति विहितमविहितं चेति। तत्र ब्राह्मणाध्ययनक्रमे ऋचां परस्परं व्यतिषङ्गेण शंसनं विहृतं षोडशिशस्त्रं भवति, अविहृतं नाम अध्ययनक्रमेणैव शंसनमुच्यते। (तु०—ऐ० ब्रा० सा० ४।१)।

**षोडशिशस्त्रभेदक्लृप्ति—** (हौ०) सोमयज्ञेषु भेदक्लृप्ति सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूता तृतीया चतुर्थी वा सोमसंस्था षोडशस्तोत्रषोडशशस्त्रस्वरूपः पृष्ठ्यषडहस्य चतुर्थस्याङ्गभूतः स्वतन्त्रो वा तृतीय सवनेऽनुष्ठेयः क्रतुः षोडशी नाम। स विहृतशस्त्रोऽविहृतशस्त्रश्चेति द्विविधः। तत्र (क) विहृतो नानाविधच्छन्दसामृचां संमेलनेन परस्परव्यतिषङ्गेण निष्पादितः, अर्थात् परस्परविलक्षणानां विभिन्नानां गायत्र्यादीनां छन्दसामन्योन्यमेलनरूपः पाठो यत्र स विहृतः षोडशी होतुः विहृतषोडशिशस्त्रमुच्यते। तस्य तृतीयसवने स्तोत्रियस्तृचः—'शोंसावोम्। इन्द्रजुषस्व प्रवहाऽऽयादि शूर हरी इह। पिबा सुतस्य मतिर्न मध्वश्च कानश्चारुर्मदाय॥ १॥ इन्द्र जठरं नव्यं न पृणस्व मघोर्दिवो न। अस्य सुतस्य स्वर्णोप त्वा मदाः सुवाचो अस्थुः॥ २॥ इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न। बिभेद वलं भृगुर्न ससाहे शत्रून् भदे सोमस्य'॥ ३॥ अनुरूपस्तृचः—श्रुधी हवं न इन्द्रो न गिरो जुषस्व वज्री न। इन्द्र सयुग्भिर्दिद्युं न मत्स्वा मदाय महेरणाय॥ १॥ आ त्वा विशन्तु कविर्न सुतास इन्द्र त्वष्टा न। पृणस्व कुक्षी सोमो नाविड्ढि शूर धिया हि या नः॥ २॥ साधुर्न गृध्नुर्ऋर्भुर्नास्तेव शूरश्चमसो न। यातेव भीमो विष्णुर्नत्वेषः समत्सु क्रतुर्न॥ ३॥ इति। अनुरूपस्यादौ आहावो न भवति (तु०—आ०श्रौ० ६।३।१)। आभ्यां स्तोत्रानुरूपाभ्यामूर्ध्व 'आ त्वा वहन्तु' इत्यादिः 'प्रोष्वस्मै' इति तृचान्तो योऽविहृतषोडशिशस्त्रावयवः स गायत्र्यादिच्छन्दसां विहारेण अनुष्टुप्प्रकारेण च विहृतः शंस्तव्यः। विहरणं एकस्य छन्दसः पादानपरस्यच्छन्दसः पादैर्व्यवधाय मिश्रणेन अर्धर्चशः शंसनं भवति। तदुक्तम् 'पादान् व्यवधायार्धर्चशः शंसेत्' (आ०श्रौ० ६।३।३)। पङ्क्तिपादेषु तु 'पूर्वासां पूर्वाणि पदानि व्यवधाय शंसेत् (तु०— आ०श्रौ० ६।३।४)। तत्र गौरीवितसामपक्षे (१) गायत्रीपङ्क्त्योर्विहरणम्—'आ त्वा वहन्तु' (ऋ० १।१६।१-३) इत्यादिकास्तिस्रो गायत्र्यः 'उपोषु (ऋ० १७८२।१) इत्येका, 'सु संदृशम्' (ऋ० १।८२।३-४) इति द्वे, मिलित्वा तिस्रः पङ्क्तिच्छन्दस्काः। ता गायत्री पङ्क्तीरुभयीः पादैः परस्परं व्यतिषजनं मिश्रयेत्' तद्यथा—गायत्र्याः प्रथमपादमुक्त्वा तेन पङ्क्ते प्रथमपादमुच्चारयेत्। गायत्री च पङ्क्तिश्च मिलिते सत्यौ ते द्वे अनुष्टुभौ संपद्यते। गायत्र्यास्त्रिपदत्वात् पङ्क्तेश्च पञ्चपदत्वात् मिलित्वाऽष्टानां पादानां मेलनं गायत्रीपङ्क्त्योर्विहरणम्। अष्टपाद संपत्तौ चानुष्टुब्द्वयं भवति। अर्थात् गायत्र्या प्रथमपादमुच्चार्य तेन सह पङ्क्तोः प्रथमं पादमुच्चारयेत्। एवं द्वितीयेन द्वितीयं तृतीये तृतीयं चतुर्थपञ्चमौ चोच्चारयेत् इति विह-

रणं भवति। (तु०—ऐ० ब्रा० सा० ४।३ आ०श्रौ० ६।३।२-६ नारायणः)। (२) उष्णिग्बृहत्योर्विहरणम्—'अयं ते अस्तु हर्यतः' (ऋ० ३।४४।१-३) इत्यादिकास्तिस्रो बृहत्यः। ता उभयीः परस्परं व्यतिषजन् मिश्रयेत्। गायत्रीपादौ तत्र उष्णिहां द्वावष्टाक्षरौ पादौ उत्तमस्य द्वादशाक्षरस्य आद्यं चतुरक्षरं ततोऽष्टाक्षरमिति चतुरो भागान् कृत्वा चतुर्भिर्बृहतीपादैः सह विहर्तव्यम्। एवं प्रथमेन प्रथमं द्वितीयेन द्वितीयं तृतीयेन तृतीयं चतुर्थेन चतुर्थमिति विहरणं भवति। बृहती षट्त्रिंशदक्षरा तस्या अष्टाविंशत्यक्षरोष्णिग्योगे सति चतुःषष्ट्यक्षरसंपत्तेरनुष्टुब्द्वयं सिध्यति। (तु०— ऐ० ब्रा० सा० ४।३ आ०श्रौ० ६।३।७-८ नारायणः), (३) द्विपदात्रिष्टुभोर्विहरणम्— 'आधूर्ष्वस्मै' (ऋ० ७।३४।४) इति द्विपदा। ब्रह्मन् वीर ब्रह्मकृतिम् (ऋ० ७।२९।२) इति त्रिष्टुप्छन्दस्का। ते उभे परस्परं व्यतिषजन् मिश्रयेत्। तत्र द्विपदाविंशत्यक्षरा भवति विंशत्यक्षराया अस्या द्विपदाया विंशतिरक्षराणि चतुर्धा विभज्य चत्वारः पादाः पञ्चाक्षराः क्रियन्ते। प्रथमेऽष्टाक्षरे पादे संयुक्ताक्षरयोर्विभागेन पञ्चाक्षरत्वे सति दशाक्षरत्वं ज्ञेयम्। एवं पञ्चाक्षरैश्चतुर्भिः पादैः सह त्रिष्टुभः पादानां चतुर्णां संधानं द्विपदात्रिष्टुभोर्विहरणं संपाद्यते। अर्थात् प्रथमेन द्वितीयेन द्वितीयं तृतीयेन तृतीयं चतुर्थेन चतुर्थं संधाय पठेत्। एवं च विंशत्यक्षराद्विपदा चतुश्चत्वारिंशदक्षरा त्रिष्टुप् च मिलित्वा चतुःषष्टिसंपत्त्याऽनुष्टुब्द्वयं संभवति, (तु०—ऐ० ब्रा० सा० ४।३, आ०श्रौ० ६।३।८ नारायणः)। (४) द्विपदाजगतीनां विहरणम्—'एष ब्रह्मा' इत्यादिकाः 'संयते' इत्यन्ताः तिस्रो द्विपदाः, (आ०श्रौ० ६।२।६) 'प्रते महे विदथे' (ऋ० १०।९६।१-३) इति तिस्रो जगत्यः। ता द्विपदाः जगतीश्च परस्परं व्यतिषजन् मिश्रयेत्। तत्र द्विपदाः षोडशाक्षराः। आसां द्विपदानां षोडशाक्षराणि चतुर्धा विभज्य चतुरक्षराः चत्वारः पादाः संपाद्यन्ते। उत्तमाया द्विपदायास्तु यच्चतुर्थमक्षरं 'ते' तत् प्रथमस्य भागस्य अन्त्यं 'त्वामिच्छते' इति भवति। तदेव द्वितीयस्य भागस्याद्यं 'ते' संस्पते' इति भवति। एवं द्विपदानां चतुरक्षरैश्चतुर्भिः पादैः सह जगतीनां चतुर्णां पादानां संधानं द्विपदा जगतीनां विहरणं भवति। अर्थात् तिसृणां द्विपदानां तिसृणां जगतीनां च प्रथमेन प्रथमं द्वितीयेन द्वितीयमित्यादिक्रमेण पादान् योजयेत्। द्विपदा षोडशाक्षरा जगती चाष्टाचत्वारिंशदक्षरा ततो मिलित्वा चतुःषष्ट्यक्षरात्वात् अनुष्टुब्द्वयं संपद्यते। (तु०—ऐ० ब्रा० सा० ४।३ आ०श्रौ० ६।३।९-१०)। ततः अतिच्छन्दः—स्वनुष्टुप्कारशंसनम्—'त्रिकद्रुकेषु महिषः' (ऋ० २।२२।१-३), प्रोष्वस्मै पुरोरथम्' (ऋ० १०।१३३।१-३) इति द्वावतिच्छन्दःस्कौ तृचौ। 'प्रचेतन प्रचेतयाऽऽयाहि पिब मत्स्व। क्रतुश्छन्द ऋतं बृहत् सुम्न आधेहि नो वसो' इति महानाम्न्युपसर्गस्वरूपाऽनुष्टुप् (आ०श्रौ० ६।२९; ऐ० ब्रा० सा० ४।४)। एतामनुष्टुभमतिच्छन्दस्कासु षट्सु ऋक्ष्वधाय शंसेत्। तद्यथा—'त्रिकद्रुकेषु' इति येयं प्रथमाऽतिच्छन्दस्तस्याश्चतुःषष्ट्यक्षरत्वा दनुष्टुप्त्वसंपादनाय सा पराण्यक्षराणि नापेक्षते चतुः षष्ट्याक्षरेषु अनुष्टुप्द्वयसद्भावात्। द्वितीयस्यां 'अध त्विषी माँ अभ्योजसा' इत्यृचि अनुष्टुब्द्वयं पूरयितुं तृतीयपादावसाने 'प्रचेतन' इत्यक्षर चतुष्टयमुपधाय अवसानं कुर्यात्। तृतीयस्यां

साकं जातः क्रतुना' इत्यृचि अनुष्टुब्द्वयं पूरयितुं तृतीयपादावसाने 'प्रचेतय' इत्युपधाय अवस्येत्। 'प्रोष्व स्मै' इंत्यस्याः षष्ठे पादे तथैवानुष्टुब्द्वयंपूरयितुं आयाहि पिब मत्स्व' इति द्वितीयं पादं योजयेत्। 'त्वं सिधूँ रवासृजः' इति द्वितीयायाः षष्ठे पादेऽनुष्टुब्द्वयसंपादनाय 'क्रतुश्छन्द ऋतं बृहत्' इति तृतीयपादमुपदध्यात्। 'विषु विश्वा अरातयः' इति तृतीयाया षष्ठे पादेऽनुष्टुब्द्वयकरणाय 'सुम्न आधेहि नो वसो' इति चतुर्थं पादमुपदध्यात्। तदाह—आश्वलायनः 'अनुष्टुभमतिच्छः स्ववदध्यात्। द्वितीयतृतीययोस्तृतीययोः पादयोरवसानत उपदध्यात् प्रचेतनेति पूर्वस्यां प्रचेतयेत्युत्तरस्याम्। उत्तरांस्वितरान् पादान् षष्ठान् कृत्वाऽनुष्टुप्कारं शंसेत्। (तु०—ऐ० ब्रा० सा० ४।४ आ०श्रौ० ६।३।११-१३)। इत्येताः कृत्रिमाः अनुष्टुभः शस्त्वा पश्चात् स्वतः सिद्धानां 'प्र प्रवस्त्रिष्टुभमिषाम् (ऋ० ८।६९।१-३) 'अर्चत प्रार्चत' (ऋ० ८।६९।८-१०), 'यो व्यतीँ रफाणयत्' (ऋ० ८।६९।१३-१५) इत्यनुष्टुभां शंसनं भवति। निविद्धानीयानि तृचसूक्तानि च भवन्ति। ततः निवित्पदानि—'मत्सदहिं वृत्रमपां जिन्वदुदार्यमुद्यां दिवि समुद्रं पर्वताँ इह' (आ०श्रौ० ६।२।९) एतां निविदं तृतीयतृचसूक्तस्य अन्त्यामेकामृचं शिष्ट्वा दध्यादिति नारायणः। प्रतिगरौ अत्र विहृते षोडशिशस्त्रे 'ओथामो दैव मदे, मदामो दैवो मथ' इति प्रतिगरौ। ततः उद्यद् ब्रध्नस्य' इति परिधानीयानन्तरं याज्याङ्गजपः—एताह्येवैपाहीन्द्रम्। एवा हि श० ब्रो वशी हि शक्रः इति। ततः महानाम्न्युपसर्गोपसृष्टाशस्त्रयाज्या-'एवा ह्येवाऽपाः पूर्वेषां हरिवः सुताना' मेवाहीन्दम्। अथो इदं सवनं केवलं ते। एवा हि शक्रो ममद्धि सोमं मधुमन्तमिन्द्र बशी हि शक्रः सत्रावृषं जठर आवृषस्व' इति (तु०— ऐ० ब्रा० सा० ४।१-४ आ०श्रौ० ६।३।१-१८ नारायणः)। इति विहृतषोडशिशस्त्रम्। अत्र स्तोत्रियतृचाय निविदे, परिधानायायै च आहावो भवति। तेनानुरूपतृच तदनन्तरमावीइतरः शस्त्रावियव आहावरहितोऽनुसंधेयः (तु०—आ०श्रौ० ६।३। १९ नारायणः)। **द्र०** विहृतषोडशिशस्त्र—।

(ख) अथ विहृतषोडशिशस्त्रम्—यत्र यथाधीताध्ययनक्रमेण यथावस्थितानामृचां आनुपूर्व्या पठनं तदविहृतं षोडशिशस्त्रमुच्यते (तु०— ऐ० ब्रा० सा० ४।१)। तंस्य स्तोत्रियस्तृचः—'असावि सोम इन्द्र' (ऋ० १।८४।१-३ आ०श्रौ० ६।२।२)। अनुरूपस्तृचः—'इममिन्द्र सुतम्' (ऋ० १।८४।४-६, आ०श्रौ० ६।२।३) इति तिस्रो गायत्र्यः। 'अपो षु शृणुही गिरः' ऋ० १।८२।१), 'सु संदृशं त्वा वयम्' (ऋ० १।८२।३-४ आ०श्रौ० ६।२।४) इति तिस्रः पङ्क्त्यः। 'यदिन्द्र पृतनाज्ये' (ऋ० ८।२।२५-२७) इति औष्णिहस्तृचः। 'अयं ते अस्तु हर्यतः' (ऋ० ३।४४।१-३ आ०श्रौ० ६।२।४) इति बार्हतस्तृचः। 'आ धूर्ष्वस्मै' (ऋ० ७।३।४) इति द्विपदा। 'ब्रह्मन् वीर ब्रह्मकृतिम्' इति अनुष्टुप्। 'एष ब्रह्मा स ऋत्विय इन्द्रो नाम श्रुतो गणे ॥ १ ॥ विस्रुतयो यथोपय इन्द्र त्वद्यन्ति रातयः ॥ २ ॥ त्वमिच्छ्रवसस्पते यन्ति संयते ॥ ३ ॥ इति तिस्रो द्विपदाः। (आ०श्रौ० ६।२।६)। 'प्र ते महे विदथे' (ऋ० १०।८६।१-३) इति तिस्रो जगत्यः। 'त्रिकद्रुकेषु, महिषो यवाशिरम्' (ऋ० २।२२।१-३), 'प्रोष्वस्मै पुरोरथम् (ऋ० १०।१३३।१-३) इति द्वौ अतिच्छन्दसौ

तृचौ (प्रथमे तृचे त्रिकद्रुकेषु' इति प्रथमा अष्टि:। इतरे अतिशक्वरप्रोष्वस्मै' द्वितीयस्तृचस्तु शाक्वर एवेत्यतिच्छन्दसौ)। तयो: प्रथमं पच्छ: द्वेधाकारं (द्वेधा कृत्वा) शंसेत्। अर्थात् एकैकमृचं द्वे द्वे कुर्यात्। तेनैता: तिस्र: षट् भवन्ति। शंसनं तु पच्छ एव न तु अर्धर्चश: (तु०—आ०श्रौ० ६।२।७ नारायण:) द्वितीयं तृचं अनुष्टुब्गायत्रीकारं शंसेत्। अर्थात् अस्य तृचस्य सप्तपदत्वात् एकैकामृचम् एकैकामनुष्टुभं कुर्यात्, एकैकां गायत्रीं संपादयेत्। आद्यैश्चतुर्भि: पादै: अनुष्टुभ: त्रिभि: गायत्र्य:। अनेन प्रकारेण एता अपि च षड् भवन्ति। (तु०—आ०श्रौ० ६।२।८ नारायण:) 'प्रचेतन प्रचेयताऽऽयाहि पिब भत्स्व। क्रतुश्छन्द ऋतं बृहत् सुम्न आधे हि नो वसो' (आ०श्रौ० ६।२।९ सा० ६४२; ४३; ४६।४८) इत्यनुष्टुबेका। इत्येताश्छन्दोनाम्न्य ऋच:। 'प्र प्रवस्त्रिष्टुभमिषम्' (ऋ० ८।६९।१-३) इति प्रथम:, 'अर्चत प्रार्चत (ऋ० ८।६९।८-१०) इति द्वितीय:, 'यो व्यतींरफाणयत्' (ऋ० ८।६९।१३-१५) इति तृतीय:। एते त्रय आनुभास्तृचा: निविद्धानतृचा:। निवित्पदानि—'मत्सदहिं वृत्रमपां जिन्वदुदार्यमुद्यां दिवि समुद्रं पर्वताँ इह'। एतां निविदं तृतीयस्य तृचस्य अन्त्यामेकामृचं शिष्ट्वा दध्यात् (तु०—आ०श्रौ० ६।२।९-११ नारायण:)। शस्त्रपरिधानीया—'उद्यद् ब्रध्नस्य विष्टपम्' (ऋ० ८।६९।७ आ०श्रौ० ६।२।१२)। याज्याङ्गजप:—'एवाह्येवाहीन्द्रम्। एवा हि शक्रो वशी हि शक्र:' इति। शस्त्वा जप:- 'उक्थं वाचीन्द्राय देवेभ्य:' इति (तु०—आ०श्रौ० ६।२।१२)। शस्त्रयाज्या— 'अपा: पूर्वेषां हरिव: सुतानाम्' (ऋ० १०।९६।१२ आ०श्रौ० ६।२।१२)। इति तदिदं यथाधीतक्रमं होतुरविहृतं षोडशिशस्त्रमुच्यते। अस्म अविहृतस्य पञ्चाहावत्वं भवतीति विशेष:। तु०—आ०श्रौ० ६।२।१-१२ नारायण:) तत्र विहृते चाविहृते च षोडशिनि षोडशिपात्रं प्रथमं वषट्कर्तृहोमकर्तार: घर्मे च ये भक्षिणस्ते परस्परं समुपहावं भक्षयन्ति। तत: मैत्रावरुण: सुब्रह्मण्यवर्जिता उद्गातृ-प्रतिप्रस्थातृ-प्रतिहर्तारो भक्षयन्ति। भक्षजपश्च 'इन्द्र षोडशिन्नोजस्विन्' इत्यादि: उपहूततयोपहूतो भक्षयामि' इत्यन्तो मन्त्र:। इति च विशेषोऽवगन्तव्य: (तु०— आ०श्रौ० ६।३।२०-२३ नारायण:)

**षोडशिशस्त्रसंख्या—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ तृतीयायां चतुर्थ्यां वा सोमसंस्थायां षोडशिनि द्वादश अग्निष्टोमिकानि शस्त्राणि तत ऊर्ध्वं त्रीण्युक्थ्यशस्त्राणि तत: परं विहृतमविहृतं चैकं षोडशं षोडशिशस्त्रमिति मिलित्वा षोडश षोडशिशस्त्राणि भवन्ति। तत्र विहृताविहृतशस्त्रोपचारेण षोडशियागो विहृतोऽविहृतश्चेति द्विविध: समाख्यायते। यदि नानदं साम सामगैर्गीयते तदाऽविहृत:। यदि गौरीवितं साम क्रियते तदा विहृत:। तदेवं नानदपक्षे परस्परव्यतिषङ्गरहितो यथाधीतशस्त्रपाठोऽविहृत: षोडशी कर्तव्य:. गौरवितपक्षे यथाधीतशस्त्रपाठ: परस्परव्यतिषङ्गेण पठनीय:। इति विशेषोऽनुसंधेय: (तु०—ऐ० ब्रा० सा० ४।२)। द्र० षोडशिन्—।

**षोडशिसमाप्ति—** (सा०) चतुर्थ्या: सोमसंस्थाया: षोडशिन: रात्रौ समाप्ति:। द्र० मी०को० पृ० ४०२३)।

**षोडशिसमाप्ति—** (सा०) सोमयज्ञेषु प्रकृति......... विकृते: तृतीयाया: चतुर्थ्यां वा सोम-

संस्थायाः षोडशिनः रात्रौ समाप्तिः द्र० मी०को० पृ० ४०२३।

**षोडशि सामयोनि—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमविकृतेस्तृतीयामाश्चतुर्थ्याः वः संस्थायाः षोडशिनो गौरीवितं वा नानदं वेदि विकल्पेन द्वे सामनी विहिते। तत्र १. अभि प्र गोपतिम्' (साम० १६८; ऋ० ८।६९।४) इत्येषा (गौरीरि) वि (वी) तस्य षोडशिसाम्नो योनिः (तां० ब्रा० सा० १२।१३।९ ऐ० ब्रा० सा० ४।२)। २. 'प्रत्यस्मै पिपीषते' (साम० ३५२ ऋ० ६।४२।१) इत्येषा नानदस्य षोडशिसाम्नायोनिः (तु०—ऐ० ब्रा० सा० ४।२) इति।

**षोडशिस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ तृतीयायां चतुर्थ्यां सोमसंस्थायां षोडशिनि, पृष्ठ्यषडहस्य चतुर्थेऽहनि, अन्यत्र षोडशिसंस्थेषु क्रतुषु च तृतीयसवने उक्थस्तोत्रानन्तरं विहृतपक्षे गौरिवीतस्य षोडशिस्तोत्रस्य स्तोत्रीयाः—'इन्द्र जुषस्व प्रवहा' (साम० ९५२-५४) इति तिस्रः। साम—गौरीवीतम्। अपहत अविहृतपक्षे नानदस्य षोडशिस्तोत्रस्य स्तोत्रीया— 'असावि सोम इन्द्र ते' (साम० १०२८-३०) इति तिस्रोऽनुष्टुभः। साम—नानदम्। एतदुक्त भवति—द्विप्रकारोऽयं षोडशी विहृतोऽविहृतश्च। तत्र विहृतस्य 'इन्द्र जुषस्व' इत्याद्याः स्तोत्रीयाः विहिताः। अविहृतस्य तु 'असावि सोम इन्द्रते' इत्याद्यास्तिस्रोऽनुष्टुभः स्तोत्रीयाः (तां० ब्रा० सा० १२।१३।२६)। आर्षेयकल्पे वरदराजश्च 'इन्द्र जुषस्व' इति गौरीवितं षोडशिसामैकविंशम्। एकविंशे हि दाशरात्रस्य चतुर्थेऽहनि उत्पन्नं षोडशिसाम (आ०क० पृ० २५;११४)। स्तोमः—एकविंशः। विष्टुतिः—द्र० एकविंशस्तोमविष्टुति—।

**षोडशिस्तोत्रगानकालविधि—**सोमयज्ञेषु प्रकृतिभूत...संस्थायां षोडशिनि १. षोडशिस्तोत्रस्य गानसमये उद्गातारः अन्योन्यस्मै हिरण्यं प्रदाय प्रदाय षोडशिसाम्ना स्तुवते। अर्थात् साम्नः यां यां भक्ति यो यो ब्रूते स स हिरण्यं धृत्वा तया भक्त्या स्तुवीत। तत्र एकमेव हिरण्यं एकैकस्मै गानसमये दातव्यमिति विशेषोऽवधेयः। २. एतस्मिन् षोडशिस्तोत्रस्तुतिकाले कृष्णवर्णोऽश्वः सदसः पूर्वस्मिन् परस्मिन् वा द्वारे प्रत्यङ्मुखः प्राङ्मुखो वा उपस्थितः कर्तव्यः। इति (तु०—तां० ब्रा० सा० १२।१३।२५-२६)। ३. षोडशिसाम्ना स्तोष्यमाण उद्गाता गानकाले त्वस्मिन्नासने उपविश्य हविर्धानं गत्वा 'यस्मादन्यो न परः' इति मन्त्रेण खरे आसादितं षोडशिग्रहमवेक्षते। (तु०—तां० ब्रा० सा० १२।१३।३२ ला०श्रौ० ३।१।१ अग्निस्वामी)

**षोडशोपचारदेवपूजा—** (सा०, स्मार्त०) आवाहनम् १. स्थापनं, सुप्रतिष्ठानम् (चिरस्थापनम्), २. आसनम्, ३, पाद्यम् ४, अर्घ्यम् ५, पञ्चामृतम् ६, स्नानम् ७, गन्धः ८, अक्षताः ९, पुष्पाणि १०, धूपः ११, दीपः १२, नैवेद्यम् १३, जलम् १४, उपायनं (दक्षिणा) १५, नमनम् (मन्त्रपुष्पाञ्जलिः, १६, इति क्रमेणोक्तैः, मन्त्रवद्भिः षोडशैरुपचारैर्देवानां सपर्या षोडशोपचारदेवपूजोच्यते।

## स

**संयवन—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. मेक्षणेन जलपिष्टयोर्मिश्रणं संयवनमुच्यते। द्र० श्रौ०प०नि० पृ०१७। २.

संयवनं पिष्टस्योदकेन मिश्रणम्। द्र० मी०को० पृ० ४०२८।

**संयाज्या—** (हौ०) द्र० स्विष्टकृत्संयाज्या—।

**संयानी—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने संयानीशब्दोपेतैर्मन्त्रैरुपधेया इष्टकाःसंयान्य उच्यन्ते (तु०—तै० सं० सा० ४।४।६)।

**संवत्सरभृतिन्—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे साग्नित्ये क्रतौ येनैकवारं संवत्सरं उख्योऽग्निर्भृतः स संवत्सरभृतीत्युच्यते (तु०—का०श्रौ० १६।६।९ विद्याधरः)।

**संवत्सरशब्द—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमद्वादशाहविकृतिषु संवत्सरसत्रेषु संवत्सरशब्दो दिनपरः, सहस्रसंवत्सरं सहस्रदिनम्। संवत्सरशब्दस्य दिवसपरत्वात् विश्वसृजामयने सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः। द्र० मी०को० पृ० ४०३१।

**संवत्सरसत्रपूर्वसंस्था—** (सा०) सोमयज्ञेषु अयनसंवत्सर सत्रेषु गवामनयनस्य चतुर्विंशमारम्भणीयमहः संवत्सरसत्रपूर्वसंस्थोच्यते (बौ०श्रौ०)। आसादितं षोडशिग्रहमवेक्षते। (तु०—तां० ब्रा० सा० १२।१३।३२ ला०श्रौ० ३।१।१ अग्निस्वामी)

**षोडशोपचारदेवपूजा—** (सा०, स्मार्त०) आवाहनम् १. स्थापनं, सुप्रतिष्ठानम् (चिरस्थापनम्), २. आसनम्, ३, पाद्यम् ४, अर्घ्यम् ५, पञ्चामृतम् ६, स्नानम् ७, गन्धः ८, अक्षताः ९, पुष्पाणि १०, धूपः ११, दीपः १२, नैवेद्यम् १३, जलम् १४, उपायनं (दक्षिणा) १५, नमनम् (मन्त्रपुष्पाञ्जलिः, १६, इति क्रमेणोक्तैः, मन्त्रवद्भिः षोडशैरुपचारैर्देवानां सपर्या षोडशोपचारदेवपूजोच्यते।

## स

**संयवन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. मेक्षणेन जलपिष्टयोर्मिश्रणं संयवनमुच्यते। द्र० श्रौ०प०नि० पृ०१७। २. संयवनं पिष्टस्योदकेन मिश्रणम्। द्र० मी०को० पृ० ४०२८।

**संयाज्या—** (हौ०) द्र० स्विष्टकृत्संयाज्या—।

**संयानी—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने संयानीशब्दोपेतैर्मन्त्रैरुपधेया इष्टकाःसंयान्य उच्यन्ते (तु०—तै० सं० सा० ४।४।६)।

**संवत्सरभृतिन्—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे साग्नित्ये क्रतौ येनैकवारं संवत्सरं उख्योऽग्निर्भृतः स संवत्सरभृतीत्युच्यते (तु०—का०श्रौ० १६।६।९ विद्याधरः)।

**संवत्सरशब्द—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमद्वादशाहविकृतिषु संवत्सरसत्रेषु संवत्सरशब्दो दिनपरः, सहस्रसंवत्सरं सहस्रदिनम्। संवत्सरशब्दस्य दिवसपरत्वात् विश्वसृजामयने सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः। द्र० मी०को० पृ० ४०३१।

**संवत्सरसत्रपूर्वसंस्था—** (सा०) सोमयज्ञेषु अयनसंवत्सर सत्रेषु गवामनयनस्य चतुर्विंशमारम्भणीयमहः संवत्सरसत्रपूर्वसंस्थोच्यते (बौ०श्रौ०)।

**संवत्सरसत्रप्रकृतिकसत्र —** (सा०) सोमयज्ञेषु १. प्रकृतिभूतज्योतिष्टोमविकृतिभूतानि आदित्यानामयनाद्ययनसत्राणि संवत्सरसाध्यानि गवामयनप्रकृतीनि भवन्ति। २.

संवत्सरसत्रेषु गवामयनधर्माणामतिदेशः। **द्र०** मीको० पृ० ४०३१।

**संवत्सरसंमित—** **द्र०** चतुर्थमेकान्नपञ्चाशद्रात्रसत्र—।

**संवाप—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च गार्हपत्ये भर्जनपात्रीमधिश्रित्य तस्यां तप्तायां सत्यां अध्वर्युः सव्यहस्तेन उदग्रं पवित्रं धृत्वा दक्षिणहस्तेन कृष्णाजिनात् पिष्टानि निवपति तत् क्षेपणं संवाप इत्युच्यते। **द्र०** श्रौ०प०नि० पृ० ९।

**संशर—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु संशरः साम्ना हिंसा, यदि अधिकच्छन्दस्कायामृचि उत्पन्नं साम न्यूनच्छन्दस्कायामृचि गीयेत, तदा केनचिदेव सामभागेन ऋक्पूर्तेः अवशिष्टसामभागः आश्रयाभावात् हिंस्येत इति संशरः साम्नो हिंसोच्यते। **द्र०** मी०को० पृ० ४०३५।

**संसद—** **द्र०** द्वितीयं चतुर्विंशतिरात्रसत्र—।

**संसव—** (सा०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. संसवो नाम परस्परमात्सर्येण प्रवृत्तयोर्यजमानयोः कश्चिन्नैमित्तिकः प्रयोगः। मात्सर्येण सोमयागं कुर्वतोर्द्वयोर्यजमानयोः नैमित्तिकः प्रयोगः (**द्र०** मी०को० पृ० ४०३५) २. पृथक् प्रयोजनानां यजमानानां युगपद् एकस्मिन् देशे सुत्या (सोमयागः) संसव इत्युच्यते (तु०— द्रा०श्रौ० ३।३ धन्वी)। ३. द्वयोर्बहूनां वा यजमानानां संभूय सोमाभिषवः संसवः। स च मत्सरग्रस्तैर्यजमानैः तस्मिन्नेव देशे तस्मिन्नेव काले प्रवर्तितत्वाद् दोषः संपद्यते। १. यतः नद्या वा पर्वतेन वा व्यवधानरहितयोः समीपवर्तिनोः परस्परमन्त्रध्वनिसवनमिश्रितयोर्देशयोः स्पर्धमानाभ्यां यजमानाभ्यां प्रवर्तितौ द्वौ सोमयागौ संसृष्टौ भवतस्ततोऽयं स्पर्धाद्वेष समुद्भवत्वाद् दोषः संजायते। २. नद्या पर्वतेन वा अव्यवहितदेशे विमतानामेकस्मिन्नहनि सुत्यासन्निपाते सति संसवो नाम नैमित्तिको दोषो भवति। तान्निवृत्त्यर्थम् आसवनदेवतानामावाहनात् सन्त्वरा कर्तव्या। तत्राश्विन पुरोडाशान्तं कायिकं वाचिकं च कर्म द्रुतया वृत्त्या (शीघ्रं) कर्तव्यमित्यर्थः। तदुक्तमाश्वलायनेन 'विमतानां सवनसन्निपाते संसवोऽनन्तर्हितेषु नद्या वा पर्वतेन वा तथा सति संत्वराऽऽदेवतावाहनात्' (तु०— आ०श्रौ० ६।६।११; १३ नारायणः)। तथा च तस्मिन्निमित्ते माध्यन्दिनसवने मरुत्वतीयशस्त्रे यस्मिन् सूक्ते निविद्धीयते तस्य सूक्तस्य पुरस्तात् 'कया शुभा' (ऋ० १।१६५।१-१५) इति आगन्तुकं निविद्धानीयसूक्तं शंसेत्। मरुत्वतीयस्य पूर्वावस्थायामेकसूक्तत्वे 'अनेकं चेत् प्रथमेष्वाहावः'(आ०श्रौ० ५।१०।१६) इति विहित आहावोऽस्य कयाशुभीयस्यादौ भवति। निष्केवल्यशस्त्रे निविद्धानीयसूक्तस्य पुरस्तात् 'यो जात एव'(ऋ० २।१२।१-१५) इति निविद्धानीयसूक्तं शंसेत्। एवं च तृतीयसवने वैश्वदेवशस्त्रे सूक्तस्य पुरस्तात् 'ममाग्ने वर्चः' ऋ० १०।१२८।१-९) इति सूक्तं शंसेत्। द्वयोरपि सूक्तयोरादौ आहावः स्यात्। अपि वा एतेषु (त्रिष्वागन्तुषु) निविदो दध्यात्। येभ्यः पुरस्ताद् यानि सूक्तानि विहितानि तान्युद्धरेत् (तु०— आ०श्रौ० ६।६।१४-१७ नारायणः)। अथ चेत् निविदः स्थानमतिहरेत् तदा

यस्मिन् सूक्ते निविदतिपन्ना (स्वस्थाने निधातुं विस्मृता) तत्पूर्वापरभूतं समाप्य आगन्तुकात् तद्देवतात् पुरस्तात् 'मा प्रगाम' (ऋ० १० ।५७ ।१-६) इति सूक्तमखण्डितं शस्त्वाऽन्यस्मिनागन्तुके तद्दैवते तां निविदं दध्यात्। तदुक्तम्—'अन्यत्तद्दैवतं तच्छन्दसं सूक्तमाहृत्य तस्मिन्निविदं दध्यात्। 'मा प्र गाम पथो वयम्' इति पुरस्तात्सूक्तस्य (ऐ० ब्रा० ३ ।११)। 'स्थानं चेन्निविदोऽतिहरेत् 'मा प्रगाम' इति पुरस्तात् सूक्तं शस्त्वा अन्यस्मिंस्तद्दैषते दध्यात् (आ०श्रौ० ६ ।६ ।१८) इति। तत्र निविदः स्थानातिहारो नामैवं रूपः—सूक्तस्य यस्मिन्नन्तराले निविद्धीयते तस्माद् या पूर्वा ऋक् तदन्तर्गतेन प्रणवेन आहावम कृत्वैव अनन्तरामेव ऋचं संधाय तस्यामृचि चोदितेऽवसानेऽवसानपर्यन्तम् उक्त्वा यदाऽवस्येत्, इति एवंप्रकार एव निविदतिहारो नान्यप्रकारः (तु०—तत्रैव नारायणः)। द्र० आहाव-आहावप्रदेश—।

**संसवे पृष्ठस्तोत्रसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु संसवे माध्यन्दिनसवने पृष्ठस्तोत्रे उभे बृहद्रथन्तरे समस्ते एव सामनी भवतः। न विभक्ते तयोर्हि ऋक्संस्कारत्वेन विनियोगः (उक्तः)। ते च शक्नुतः संहिते पृष्ठं संस्कर्तुं न पृथक्शः। अत एकस्मिन्नेव पृष्ठस्तोत्रे द्वयोः (बृहद्रथन्तरयोः) साम्नोस्तदाधारर्चोश्च समुच्चयः। तत्रापि प्रथमतो रथन्तरं पश्चात् बहृत्। तेनैव संसवो द्विसामा (उभयसामा) उच्यते। इति शेषोऽवधेयः (तु०—मी०को० पृ० ४०३६-३७)।

**संसृप्—** (अव्य०) संसृपो नाम दश इष्टयो राजसूये। द्र० मी०को० पृ० ४०३७। संसृपेष्टि—द्र०।

**संसृपेष्टि—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये १. सावित्र–सारस्वत–त्वाष्ट्र–पौष्णैन्द्रबार्हस्पत्यवारुणाऽऽग्नेयसौम्यवैष्णवानि वैष्णवानि दश हवींषि संसृपेष्टय उच्यन्ते (तु०—का०श्रौ० १५ ।८ ।४-९)। २ आग्नेयी, सारस्वती, सावित्री, पौष्णी, बार्हस्पत्यैन्द्री, वारुणीति सप्त संसृपेष्टयो भवन्ति (तु०— आ०श्रौ० ९ ।३ ।१७; ४ ।६)। ताश्च राजसूयेषु दशपेयात् प्राक् प्रचर्यन्ते। तदुक्तम्—'संसृपेष्टिभिश्चरित्वा दशपेयेन यजेत् (तु०—आ०श्रौ० ९ ।३ ।१७)। तासां संसृपेष्टीनां दक्षिणाविधिः—'संसृपेष्टीनां हिरण्यमाग्नेय्यां, वत्सतरी सारस्वत्याम्, अवध्वस्तः सावित्र्यां, श्यामः पौष्ण्यां, शितिपृष्ठो बार्हस्पत्याम्, ऋषभः ऐन्द्र्यां, महानिरष्टो वरुण्याम्,' (आ०श्रौ० ९ ।४ ।६)। तत्र हिरण्यमनियतसंख्यं सुवर्णम्, वत्सतरी नाम गो जातौ स्त्रीवाला विसृष्टमातृस्तना। अवध्वस्तापांसुवर्णः। श्यामो धूम्रवर्णः। शितिपृष्ठः कृष्णपिष्टः। वृषभः सेचनसमर्थः। महानिरष्टोऽवृद्धवया वलीवर्दः। सर्वे गोजातय एव भवन्ति। इति नारायणः।

**संस्कार—** (सा०) १. शास्त्राभ्यासजन्यव्युत्पत्तिः (संस्कारः) इति मम्मटः। २. व्याकरणशास्त्रोक्तदिशा शब्दानां शासनप्रकारः (शब्दानुशासनं) इति वैय्याकरणाः। ३. वर्णागम-वर्णलोप-वर्णविकार-वर्णविपर्ययप्रकृति-विकृतिभावाः संस्काराः इति नैरुक्ताः। ४. संस्कारा गुणान्तरमुपजनयन्ति। केचित् प्रथममेव प्रधाने कर्मभ्यः क्रियन्ते, केचिदूर्ध्वम्, केचिद्युगपत्। संस्काराः संस्कुर्वन्तीति यागस्य स्वार्थं साधयतः (पुरुषस्य) साहाय्ये वर्तन्ते। द्र० मी०को० पृ०

४०४०। संस्कारा द्रव्यस्य अङ्गप्रधानार्थाः। द्रव्यगुणसंस्काराः फलवन्तं यागं प्रतिनियोगतः शेषभूताः। योग्यतां आदधानाः क्रियाः संस्कारा इत्युच्यन्ते। द्र० मी०को० पृ० ४०४३। इति मीमांसकाः। ५. संस्कारा नाम चिरन्तनाः परम्पराभ्यस्ता भावनात्मका गुणाधायकाः केचन विशेषाः। ते च मलापकर्णकाः सन्तोऽशुचिं वस्तुजातं शोधयन्ति। ६. भावनाख्यः संस्कार आत्मनः अतीन्द्रियत्वगुण उच्यते। ७. संस्कारः शुद्धिः। यथा स्मार्ताग्निस्थापने पञ्च भूसंस्काराः। (भूमिं) 'परिसमूह्योपलिप्योत्ल्लिख्योद्धृत्याभ्युक्ष्य' इति पञ्च भूमिशुद्धि संस्काराः (तु०—वा० गृ०) ८. (पञ्चमहायज्ञेषु) वलीनां तस्य तस्य देशे संस्कारो हस्तेन परिमृज्यावेक्ष्यन्यूप्य पश्चात् परिषेचनम्। ९. शरीरशुद्धिरूपः दीक्षासंस्कारः नियमरूपेण तपसा शरीरशुद्धौ सत्यां पश्चात् देवयजनस्वीकारादियोग्यता (तु०—तै० सं० सा० १।२।१।१)। १०. विप्रादीनां (त्रैवर्णिकानां) श्रौतस्मार्तवैदिककर्महित्वप्रयोजको गर्भाधानादिक्रियाकलापः संस्कारः। संस्कारास्तावद् दश, षोडश, पञ्चविंशतिः, चत्वारिंशद्, अष्टाचत्वारिंशच्चेति पञ्चधा संख्यायन्तो तत्र सुमन्तुः—गर्भाधान—सीमन्तोन्नयन—जातकर्मनामकरणान्नप्राशन— चूडोपनयन—व्रतचर्याऽध्ययनसमावर्तनविवाहाख्यान् दश संस्कारान् गणयांचकार। जातूकर्ण्यः— आधान-पुंसवन-सीमन्त-जात-नामान्नचौडकाः। मौञ्जीव्रतानि गोदान-समावर्तनविवाहकाः॥ १॥ अन्त्यं चैतानि कर्माणि प्रोच्यन्ते षोडशैव तु॥ ३॥ इति षोडशोवाच। अङ्गिराः—गर्भाधानं पुंसवनं सीमन्तोन्नतिरेव च जातकृत्यं नामकर्म निष्क्रमोन्नप्राशनं परम्॥ १॥ चौलकर्मोपनयनं तद् व्रतानां चतुष्टयम्। स्नानोद्वाहौ चाग्रयणमष्टका च यथा तथा॥ २॥ श्रावण्यामाश्वयुज्यां च मार्गशीर्ष्यां च पार्वणम्। उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः॥ ३॥ इति पञ्चविंशति संस्कारानाह। गौतमस्तुगर्भाधान-पुंसवन-सीमन्तोनयन-जातकर्म-नामकरणान्न- प्राशन-चौलोपनयनं, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानामनुष्ठानम्। अष्टका-पार्वणश्राद्ध - श्रावण्यग्रहायणीचैत्र्याश्वयुजीतिसप्तपाकयज्ञसंस्थाः। अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ, चातुर्मास्यानि, आग्रयणेष्टिः,-निरूढपशुबन्धः, सौत्रामणीति सप्त हविर्यागसंस्थाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयागसंस्था इति चत्वारिंशत्संख्याकान् संस्कारान् संगृहीतवान्। एतैश्च त्वारिंशता सह 'दया क्षान्तिरनसूया शौचमनायासो मङ्गलम्, अकार्पण्यम्, अस्पृहेति अष्टानामात्मगुणानां योगेन अष्टाचत्वारिंशत्संख्यकाश्चाह (गौ० ध० ८।५) तत्र गढवालमण्डलस्थैः पर्वतीयैः चूडोपनयन-वेदारम्भ (वेदव्रत-) समावर्तन-(स्नान-) संस्कारेषु पूर्वाङ्गतया तदुपकारकोऽयुतो नवग्रहमखः (नवग्रहयागः) संस्कारत्वेनाधिकोऽनुष्ठीयते इति विशेषोऽवगन्तव्यः। ११. मन्त्रादिसिद्धिसाधनाय दशविधाः संस्कारा मन्त्रमहार्णवादितन्त्रेषु प्रसिद्धाः। १२. सतो (वस्तुनो) गुणान्तराधानात्मकः प्रतियत्नः। यथा अलङ्कारादेरुद्दीपनम्, अन्नादेर्निशातनम्, वस्त्रादेर्मार्जनम्, दर्पणादेर्विमली- करणम्, व्रीह्यादेश्च यज्ञाङ्गसम्पादनाय वैदिकमार्गेण प्रोक्षणादिः संस्कार इत्याहुः। १३. संस्कारः शुद्धिः अदृष्टविशे-

षजनकं कर्म। तेन गर्भोपघातात् पूतो भवति। स्वमेनः शमं याति बीजगर्भसमुद्भवम्। (तु०—याज्ञ० स्मृति०)। १४. संस्कारैः संस्कृताः (सुताः)-श्रोत्रियः, अनूचानः, ऋषिकल्पः, भ्रूणः, ऋषिः, दैवः इत्येतैरभिधेयैरभिधीयन्ते। (तु०—बौ० गृ० १।७, वै० गृ० १।१)। चत्वारिंशता संस्कारैः संस्कृतः (तु०—गौ० ध० ८।८)। १५. शुचिना कर्म कर्तव्यमिति श्रुतिः। पूतः कर्मण्यो भवति इति श्रुतिः। १६. प्रधानस्यैव संस्कारः प्रधानस्य संस्कार्यत्वमविरुद्धम्। १७. आध्यवसायिकीषु आनन्दमयीषु उपयोगिकलासु ललितकलासु कौशलं संस्कारः प्राकृतोऽप्राकृतदशां लम्भितः संस्कृत इत्यभिधीयते। द्र० शिल्प—। १८. संस्काराः अनुभूते एव वस्तुनि स्मरणं मी०को० ४०३८। १९. दृढज्ञानगृहीतेऽर्थे संस्कारोऽ-स्ति। मी०को० संस्कारो हि नाम स भवति यः स्वकार्ये शक्तिमुपजनयति। मी०को० पृ० ४०४०।

**संस्कारैर्ब्रह्मत्वप्राप्ति—** (सा०) यथा खलु सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतिनिर्दिष्टं ब्रह्मरूप लक्ष्यमधिगन्तुं प्रजाभ्यः 'आत्मा वाऽरे द्रष्टव्यः। श्रोतव्यो मन्तव्यः' इत्यादिनानाश्रुतिचोदिताः श्रौता उपायाः वर्णाश्रमेतरणां स्मार्ता धर्माः साधनान्युपदिष्टानि ऋषिमुन्याचार्यैस्तथैव संस्कारा अपि ब्रह्म प्राप्तिसाधनानि तैरुक्तानीति संस्कारब्रह्मप्राप्तिरधिगन्तव्या तदुक्तम्-'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते। तनूः। द्र० यज्ञ—।

**संस्था—** (सा०) संस्थाशब्देन सर्वा यज्ञसंस्था व्यवह्रियन्ते। द्र० यज्ञ—।

**संस्था—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. क्रतुसमाप्तिकरं स्तोत्रं साम च संस्थोच्यते। २. संस्था नाम क्रतूपरमः। तस्मात् तृतीयसवने यस्मिन् स्तोत्रसाम्नि कृते प्रधानयागः समाप्तो भवति, अर्थात् तत्स्तोत्रसामानन्तरं तत्क्रत्वर्थमन्यत् साम नानुष्ठीयते इति क्रतूपरमत्वात् तत्स्तोत्रं साम च संस्थोच्यते। यथा प्रथमायां अग्निष्टोमसंस्थायामग्निष्टोमाख्ये स्तोत्रे कृते क्रतुः समाप्यते तदर्थं स्तोत्रान्तरं न भवति। तेन या क्रतुसमाप्तिः सा संस्था अग्निष्टोमः अग्निष्टोमस्तोत्रसंस्थावेत्युच्यते। अर्थात् येन स्तोत्रेण साम्नावायः क्रतुः सन्तिष्ठते तत्साम तस्य संस्थेत्यर्थः फलतीति। सोमसंस्थाश्च—अग्निष्टोमोऽत्यग्निष्टोम उक्थ्य षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त (तु०—आ० श्रौ० ६।११।१)। अतः चतुःसामसंस्थे ज्योतिष्टोमातिरात्रे तृतीयसवने अग्निष्टोमसामानन्तरमुक्थ्यसंस्था, उक्थ्यानन्तरं षोडशिसामसंस्था षोडशिसामसंस्थानन्तरमतिरात्रसंस्थेति चतसृभिः सामसंस्थाभिः ज्योतिष्टोमक्रतुः संस्थीयते। एवं सर्वत्र सोमयज्ञेषु एकाहाहीनसत्रेषु येन येन संस्थासाम्ना यो यः क्रतुः संतिष्ठते तत्साम तस्य संस्थेति अवगन्तव्यम्। (तु०—का०श्रौ० १०।९।२७ विद्याधरः)। द्र० सर्वसोमसामसंस्था—।

**संस्थाजप—**(हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च होतृंकर्तृकनित्यप्रायश्चित्तहोमानन्तरं आहवनीयस्य वायव्यदेशे तिष्ठन् होता एकया ऋचा आहवनीयमुपतिष्ठते। ततस्तीर्थेन निष्क्रामति। सा ऋक् होतृकर्मणां मध्ये चरमकर्मकरणात्वात् संस्थाजप उच्यते। द्र० होतृकर्तृकनित्यप्रायश्चित्त—। द्र० श्रौ० प० नि० पृ० ४१। तत्र संस्थाजपेन

वैदिककर्मसमाप्तिः । द्र० मी०को० पृ० ४०६१ । इति विशेषोऽनुसंधेयः ।

**संस्थान्तजपमन्त्र—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पुनरालम्भजपानन्तरं संस्थान्ते प्राङुत्क्रम्य जपति-'गोमाँ अग्नेऽविमा ँ अश्वी यज्ञो नृवत्सखा सदमिद प्रमृष्यः । इडावा ँ एषो असु प्रज्ञावान् दीर्घो रयिः पृथुबुध्नः समावान्' इति । सोऽयं संस्थान्तजपमन्त्र इत्युच्यते । (तु०—श्रौ०को० १. मा० पृ० २९६) ।

**संस्थासमाख्याप्रवृत्ति—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यस्य यस्य कर्मणः ((यज्ञस्य) समाप्तिर्येन येन स्तोत्रेण (साम्ना) क्रियते तस्मिन् कर्मणि अग्निष्टोमोक्थ्यादिशब्दः प्रवर्तते । अर्थात् तेन समाख्यायते यथा अग्निष्टोमस्तोत्रेण यस्य कर्मणः समाप्तिः तस्याग्निष्टोमः अग्निष्टोमसंस्था वेति नाम प्रवर्तते । एवमुक्थ्यस्तोत्रेण यस्य कर्मणः समाप्तिः सा उक्थ्यसंस्था, षोडशिना यस्य समाप्तिः सा षोडशिसंस्था, अतिरात्रेण (रात्रिपर्यायसन्धिना) यस्य समाप्ति सातिरात्र- संस्थोच्यते इत्यवधेयम् । १-२ संस्था—, सर्वसामस्तोत्रसंस्था— ।

**संस्थासमाख्याप्रवृत्ति—** (सा०) सोमयज्ञेषु ज्योतिष्टोमे चतस्रः संस्थाः, अग्निष्टोमोक्थषोडश्यतिरात्रसंज्ञकाः । संस्था नाम क्रतुप्रयोगवृत्तिस्तोत्रोपरमः । तत्र द्वादशस्तोत्राण्यग्निष्टोमे, तत्र अग्निष्टोमस्तोत्रमन्त्यम् । सा अग्निष्टोमसंस्था नित्या काम्या च, संयोगपृथक्त्वात् दध्यादिवत् । उक्थ्ये अग्निष्टोमोत्तरं त्रीण्यन्यानि उक्थ्यस्तोत्राणि, सा उक्थ्यसंस्था । षोडशिनि तदुत्तरं षोडशिस्तोत्रम्, सा षोडशि संस्था । अतिरात्रे तदुत्तरं द्वादशस्तोत्रात्मकाः त्रयः रात्रिपर्यायाः आश्विनस्तोत्रं च, सा अतिरात्र संस्था । यास्तु अत्यग्निष्टोमवाजपेयाप्तोर्यामाख्याः अन्याः तिस्रः स्मृतौ गण्यन्ते, ताः एतास्वेवान्तर्भूताः । यत्र अग्निष्टोमस्तोत्रोत्तरं उक्थ्यानि अकृत्वा षोडशिस्तोत्रं क्रियते सा अग्निष्टोमसंस्था एव अत्यग्निष्टोमपदवाच्या । यथाऽवस्थितषोडश्युत्तरं यत्र वाजपेयस्तोत्रं क्रियते, सा षोडशिसंस्थैव वाजपेयपदवाच्या । यत्र अतिरात्रे चतुर्थो रात्रिपर्यायः स्तोत्रत्रयात्मको वर्तते, तत्र अतिरात्रसंस्थैव अप्तोर्यामपदवाच्या । तत्र अत्यग्निष्टोमो राजन्यस्य नित्यः 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचनात् । अन्यास्तु उक्थ्यादयः काम्याः 'पशुकामः उक्थ्यं गृह्णीयात्' 'षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेत्' इति वचनेभ्यः । अत्र अग्निष्टोमादिशब्दानां प्रचुरप्रयोगात् संस्थास्वेव शक्तिः, तद्वतिज्योतिष्टोमे रूढलक्षणा, तद्वतिक्रत्वन्तरे सांप्रतिकी ग्रहणे स्तोत्रे गौणी । द्र० मी०को० पृ० ४०५९ । इति संस्था समाख्या प्रवृत्तिर्ज्ञेया । द्र० १-२ संस्था—, सर्वसोमस्तोत्रसंस्था— ।

**संस्थितयजुस्—** द्र० समिष्टयजुस्— ।

**संस्थितहोम—** (सा०) निरमुं नुद इति संस्थितहोमाः (कौ० सू० ४७ ।१०) इति सूत्रोक्ताः 'निरमुं नुद' (अथ० ६ ।७५-७७) इति त्रिभिः सूक्तैश्च विहिता आभिचारिका होमा संस्थिता होमा उच्यन्ते ।

**संहिता—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. सम्यग् धीयते (सं धा + क्तः) । यद्वा सम्यग् हितं प्रतिपाद्यं यस्याः सा संहिता (तु० शक) । २. 'या पदान्तान् पदादिभिः सह

एकीकुर्वती एति ग्रन्थमनुसरति सा संहिता कालाव्यवायेन तु पदानाम्' (तु०—ऋ० प्रा० १ ।२ ।१) । ३. 'वर्णानामेकप्राणयोग: संहिता' (तु०—शु० ब्रा० १ ।१५८) । ४. 'अथ संहितायामेकप्राणभावे' (तु०—तै० ब्रा० ५ ।१) । ५. 'पर: सन्निकर्ष: संहिता' (तु०—पा० १ ।४ ।१०९) । ६. पदप्रकृति: संहिता (तु०—निरुक्तम्) । ७. पदानां संहिता विद्यात् (तु०—अ० प्रा० १ ।१) । ८. स्वारसिकार्धमात्राकालव्यवायेनैवोच्चारणम् । ९. अध्ययनसमये पदानामत्यन्तसंश्लेषेण उच्चारणं संहिता । १०. वर्णानामत्यन्तसन्निकर्ष: संहिता । ११. क्रुष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्रातिस्वार्याख्यानां सप्तानां स्वराणां मन्द्र-मध्य-ताराणां त्रयाणां वाच: स्थानानां य: सन्निकर्ष: सा संहिता । (तु०—संहितोपनिषद्ब्राह्मण १ ।२-४) । १२. यथाशास्त्रं प्रसन्नधानम् (संहिता) (तु०— शौच ४ ।१२२) । १३. संहितैकपदे नित्या नित्या धातूपसर्गयो: । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते । १४. पाठसंबन्धिन्या: संहिताया 'अग्निमीडे' इत्यत्र मकार: पूर्वरूपो वर्ण: ईकार: उत्तरो वर्ण: द्वयोर्वणयोर्नैरन्तरेणोच्चारणं संहिता पूर्वोत्तरयो: सन्धि: सन्धानम् । (तु०—ऐ० आ० ३ ।१ ।१) । १५. आर्षकृतय: संहिताभिधानेनाभिधीयन्ते । तद्यथावेदेषु ऋक्संहिता यजु: संहिता सामसंहिता अथर्वसंहिता:, धर्मशास्त्रेषु मन्वादिसंहिता: पुराणेषु वायुविष्णुब्रह्मवैवर्त्तादिसंहिता आयुर्वेदे चरकसुश्रुतादिसंहिता ज्योति: शास्त्रे वराहमिहिरादिसंहिता इतिहासे रामायणमहाभारतसंहिता इति ।

**संहिताप्रयोग—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे तिष्ठन्नासीन: शयानश्चङ्क्रम्यमाणो वा संहितां प्रयुञ्ज्यात् समृद्धिरेवास्य भवति । (तु०—जै० गृ० २ ।८ ।१५-१६) ।

**संहिताभेद—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. संहिता द्विविधा आर्षी क्रमसंहिता च (ऋ० प्रा० १ ।२ ।१) । पूर्वा नित्या उत्तरा अनित्या । एवमेव पूर्वा प्रकृति: उत्तरा विकृतिरिति च गुणभेदेन भिद्यते तत्र प्रकृते: क्रमपार: क्रमपदश्चेति द्वौ भेदौ । विकृतेरपि क्रमजट: क्रमदण्डश्चेति द्वौ भेदौ । (तु०—चव्यू० १ ।६) । यथा युक्ताद् विधि: सा प्रकृति: ।(तु०— तै० ब्रा० ५ ।२) । अनित्या चतुर्विधा १. पदसंहिता (प्रतृष्णा) २. अक्षरसंहिता ३. वर्णसंहिता ४. अङ्गसंहिता चेति । नानापदसंधानसंयोगो नानापदसंयोग: पदसंहिताभिधीयते (तु०—तै० प्रा० २४ ।३) । तत्र नानापदसंधानसंयोगे केवलयो: संयोग: अक्षरसंहिता । नानापदसंधानसंयोगे एकपदे स्वरव्यञ्जनयो: संयोग: वर्णसंहिता (तै० प्रा० २४ ।१) एकपदे केवलव्यञ्जनसंयोग: । (तु०—ऋ० प्रा० १ ।३ उवट:) । तत्र आर्षी संहिता 'अयं देवाय जन्मने' (ऋ० १ ।२० ।१) इत्यादि संहितापाठ: । क्रमसंहिता च 'पर्जन्याय प्र। प्र गायत। गायत...(ऋ० ७ ।१०२ ।१) इति । संहिता पुनस्त्रिधा: १. निर्भुज: (संहितापाठ:) २. प्रतृष्ण: (पदपाठ:) ३. उभय: (निर्भुज प्रतृष्णौ (क्रमपाठ:) । तत्र १. यत् सन्धि विवर्तयति तन्निर्भुजस्य रूपम् । २. यदुच्चारणं सन्धि पदयोरुभयोरत्यन्तसन्निकर्षं विवर्तयति विशेषेण सम्पादयति तदुच्चारणं निर्भुज शब्दार्थस्य निर्दिष्टौ भुजसदृशौ पूर्वोत्तरौ शब्दौ यस्मिन् संहितारूपे उच्चारणे तदुच्चारणम् । (तु०— ऐ० आ० ३ ।१ ।२; शां० आ० ७ ।१४४; श० ब्रा० ११ ।१ ।६ ।१६) । २. तिस्र: संहिता भवन्ति । देव-

हूरेका। वाक्शबहूरेका। अमित्रहूरेका, (संहितोपनिषद् ब्राह्मणः १ ।९)। तत्र सा मन्द्रस्वरवती सा देवहूः)। यत् क्लबितमिव निरुदितमिव सा वाक् शबहूः। यदा क्रन्दितमिव निक्रन्दितमिव साऽमित्रहूः।(संहितोपनिषद् ब्राह्मणः १ ।१०-१२)। ३. तिस्रः संहिता भवन्ति। १. शुद्धा २. अदुःस्पृष्टा ३. अनिर्भुजा चेति। (सं० उ० ब्राह्मणः १ ।१७)। तत्र या स्नानाचमनशुद्धप्रदेशासनपुरःसरमधीयते सा शुद्धा। या अस्थानोच्चारितस्वरव्यञ्जनाख्यैर्वर्णैः अधीयते सा अदुः-स्पृष्टा। या जानूपरिस्थापितेन हस्तद्वयेन अधीयते सा अनिर्भुजा। जानुबाह्यनिर्गतभुजद्वयेन या अधीयते साऽनिर्भुजा अग्राह्या (तु०—तत्रैव द्विजराजः)। ४. दैवतभेदेन तिस्रः संहिता भवन्ति—वायोरिन्द्रस्याग्नेः। सर्वाऽवृद्धा वायोः। सर्ववृद्धेन्द्रस्य। उत्सेधपरोक्षवृद्धाऽग्नेः। तत्र सर्वाणि अवृद्धानि एकमात्राणि यस्याः सा वायोः संहिता। सर्वाण्यक्षराणि वृद्धानि त्रिमात्रकाणि यस्याः सा सर्ववृद्धा इन्द्रस्य संहिता। उत्सेधः यो व्यञ्जनानां बहूनां संयोगस्तस्मिन् परतो यदक्षरं परोक्षवृद्धं स्वभावत एकमात्रमपि गुरुसंज्ञित्वाद् द्राघिष्टं भवति तादृशमक्षरं यस्याः सा उत्सेधपरोक्षवृद्धा अग्नेः संहिता भवति। (तु०—संहितोपनिषद् ब्राह्मण सायणः १ ।२१)। ५. संहितास्त्रिविधाः—सर्वपरोक्षा देवसंहिता। सर्वप्रत्यक्षा असुरसंहिता परोक्षप्रत्यक्षा ऋषिसंहितेति। तत्र सर्वपरोक्षा उपांशु प्रयुज्यमाना समीपस्थैर्दूरस्थैश्च सर्वैः श्रूयमाणा। सर्वप्रत्यक्षा समीपस्थैः दूरस्थैश्च। सर्वैरुच्चैः श्रूयमाणा। परोक्षप्रत्यक्षा उक्तोपांशूच्चैः स्वरूपद्वयेन मध्यमस्वरेण प्रयुज्य- माना वेदितव्या। (संहितोपनिषद् ब्राह्मणः १ ।१-२)।

**संहिताविधि—** स्वाध्याये ब्रह्मयज्ञप्रकरणे ऋषिदैवतच्छन्दोयुक्तः स्वाध्यायो यज्ञकर्मसु संहिताविधिरुच्यते। (तु०—ऋ० प्रा० ११ ।६६ उवटः)।

**सख्यविसर्जन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तानूनप्त्राभिमर्शनादियज्ञपुच्छपर्यन्तं कालं यत्सखित्वेन वर्तनं तस्य परस्परं हस्तसंस्पर्शनेन विसर्जनं सख्यविसर्जनमुच्यते। **द्र०** तानूनप्त्राभिमर्शनयज्ञपुच्छ—।

**सङ्कल्प—** (सा०) इष्टिपशुसोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. यक्ष्ये करिष्ये इत्यादिपदोच्चारणसमकालीनदक्षिणहस्तकरणकपात्राधिकरणकजलप्रक्षेपसहितकरिष्यमाणकर्मानुष्ठा-न प्रतिज्ञा संकल्प उच्यते। २. कर्मोपक्रमकाले 'इदमेवं करिष्यामि' इत्येवं अङ्गीकरणं संकल्पः। अङ्गीकृतसंकल्पस्यातिक्रमे प्रायश्चित्तविधिः (तु०—मी०को० पृ० ४०७४)।

**सङ्क्रमसंहिता —** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. आर्ष्यां संहितायां पुनरुक्तानि पदानि लुप्यन्ते। तेन अग्रिमेण पदेन सह सन्धिकार्यं भवति स संक्रमः कथ्यते। (शु०—प्रा० ४ ।८१)। **द्र०** संहिताभेद—। २. त्रिपदाद्यावर्तमाने संक्रमः। ३. संक्रमः = अतिक्रमः उल्लंघनम्।

**सङ्गति—** (सा०) पूर्वोत्तरप्रकरणगतविषयस्य प्रासङ्गिकसङ्गतिः सङ्गतिरुच्यते। (तु०—मी०को० पृ० ४०८८)।

**सङ्गव—** (सा०) अह्नो द्वितीयो यामः सङ्गवो भवति। संगच्छन्ते गावो वत्सैः सह यस्मिन् काले स कालः आ मध्याह्नात् सङ्गवो भवति (आ०श्रौ० ३ ।१२ ।२ देवत्रातः)।

**सङ्ग्रह—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च वेदिनिर्माणे यजतिस्थानं जुहोतिस्थानं च कर्तव्ये संग्रहौ तत्र द्वौ दक्षिणे उत्तरे च नैर्ऋत्यवायव्यकोणयो: दशाङ्गुलमितां भूमिं परित्यज्य एकोनविंशत्यङ्गुलकर्काटकभ्रामणेनार्धवृत्तेन संपादनीयौ। तौ चाखातौ भवत: (तु०—का० श्रौ० २।६।१ विद्याधर:)। द्र० दक्षिणवेदि—।

**सच्छन्दस्—** समानं छन्दो यासां ता ऋच: सच्छन्दस उच्यन्ते। यथा अनुरूपतृचादिषूह्या ऋच:।

**सजनीयसूक्त—** (हौ०) प्रायश्चित्त प्रकरणे 'सजनास इन्द्र' इति शब्दयुक्तं 'यो जात एव' (ऋ० २।१२) इति सूक्तं सजनीयसूक्तमुच्यते। तच्च संसवनिमित्ते सोम प्रायश्चित्ते (निष्केवल्ये निवद्धानीयसूक्तस्य पुरस्तात् प्रयुज्यते (तु०— आ०श्रौ० ६।६।१५)। द्र० संसव—।

**सजातित्व—** (औ०) स्तोमेषु यद् युग्मत्वमयुग्मत्वं तत्सजातित्वमुच्यते। तच्च द्व्युत्तरीभावेन वर्तते। तत्र एकिप्रभृतय: स्तोमा द्व्युत्तरीभावेन अयुज:। यथा एकी त्रिक: पञ्चक: सप्तक: इत्यादय: एकोनपञ्चाशत्पर्यन्ता विषमा: स्तोमा इति। द्विकप्रभृतय: स्तोमा द्व्युत्तरा युज: यथा द्विकश्चतुष्क: षट्क इयादय: अष्टाचत्वारिंशत्पर्यन्ता युग्मा: स्तोमा:। (द्रा०श्रौ० धन्वी १७।१)। द्र० वर्धमानस्तोमपर्यायाणां युग्मायुग्मसंहारपक्ष—, वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष—।

**संचर—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकणे तद्विकृतिषु पशुसोमयज्ञेषु च १. परिधीनां पश्चात् स्रुचां पूर्वेण होमं करिष्यत: अध्वर्यो: गमनागमनमार्ग: सञ्चर उच्यते। तदुक्तं 'परिधीन् परेण सञ्चरणे होष्यत:' (तु०—का० श्रौ० ३।१।१८ विद्याधर:) इति। तत्र च जुहोतिस्थानात् यजति स्थानं गच्छन्नध्वर्यु: सव्येन पादेन गच्छेत्। गच्छन्नध्वर्यु: यजति स्थानात् प्रत्यागच्छन् दक्षिणेन पादेन आगच्छेत्। विहारे उत्तरतो जुहोति-स्थानम्, दक्षिणतो यजतिस्थानं भवतीति विशेषोऽवधेय:। द्र० संग्रह—२. य: पुमान् होष्यन् भवति स गार्हपत्यावहवनीयावन्तरेण तन्मध्यगतेन मार्गेण संचरतीति गमनमार्ग: संचर उच्यते। ३. वरुणप्रघासमहाहवि:—पशु-सोम-यज्ञादिषु चात्वालोत्करयोरन्तरालेन वेदिस्थानां सर्वेषामृत्विजां विहितकार्यार्थं गमनागमनमार्ग: संचर उच्यते। तदुक्तम्— 'चात्वालोत्करावन्तरेण सञ्चर:' (तु०—का० श्रौ० १।३।४१ विद्याधर:)। दर्शपूर्णमासादिषु इष्टिषु तु संचरमार्ग: प्रणीतोत्करयोरन्तराले भवति। अर्थात् सर्वै: प्रणीतोत्करयोरन्तरालेन गन्तव्यम्। तदुक्तम्—'प्रणीतोत्कराविष्टिषु' (तु०—का० श्रौ० १।३।४१ विद्याधर:)। ४. सम्यक् चरन्त्यनेनेति सञ्चरो मार्ग:। स द्विविध:—संस्थितसंचरो विसंस्थितश्चेति। सोमयज्ञेषु सवने समाप्ते सदस: पश्चिमद्वारेण निर्गच्छन्ति सोऽयं संस्थितसंचर:। असमाप्ते तु प्राग्द्वारेण (निर्गच्छन्ति) सोऽयं विसंस्थित संचर उच्यते। तु०—ऐ० आ० सा० ५।१।१) तत्र गवामयने महाव्रतेऽहनि माध्यन्दिनसवने होता मरुत्वतीयशस्त्रसमाप्ते: ऊर्ध्वं विसंस्थितसंचरेण मार्गेण निष्क्रम्योदङ्मुखो गत्वा अग्नीध्रीये धिष्ण्ये औदुम्बरेण स्रुवेण तिस्र: आज्याहुतीर्जुहोतीति विशेषोऽवधेय: (तु०— ऐ० आ० सा० ५।१।१)।

**संचर—** (आध्व०, सा०) इष्टिपशुसोमेषु यत्र अन्यत्रादिष्टानि हवींषि समानरूपेण अन्यत्र

सन्तत्यै संचरन्तीति तानि संचराण्युच्यन्ते। यथैतच्चातुर्मास्येषु वैश्वदेवपर्वणि आदिष्टानि 'आग्नेयोऽष्टाकपालः। सौम्यश्चरुः। सावित्रोऽष्टाकपालः। सारस्वतश्चरुः' पौष्णश्चरुः। (द्र० का० श्रौ० ५।१।४ श्रौ०को० १. भा० पृ० ४९९। इति 'समानानि त्वेव पञ्च संचराणि हवींषि भवन्ति पौष्णान्तानि। द्र० श्रौ०को० १. भा० पृ० ५०३)। समानानि षट् संचराणि ऐन्द्राग्नान्तानि (द्र० श्रौ०को० १ भा० पृ० ५२१)। अन्यत्र वरुणप्रघास-साकमेध-शुनासीरीयपर्वसु सन्तत्यै समानानि सन्ति संचरपदवाच्यानि भवन्तीति विशेषः।

**संचिताग्नि—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे अग्निचयनं समाप्य यदा मण्डूकविकर्षणान्तं कर्म अध्वर्युणा कृतं तदा अग्निः संचितः संचितानिरित्युच्यते (तु०—द्रा०श्रौ० २।१ धन्वी)।

**संज्ञपन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च एकस्मिन् उपाकरणबर्हिषि प्रतीचीनशिरसं उदीचीनपादं पशुं शायित्वा शमितारः संज्ञापयन्ति। तदेवं रीत्या पशोर्मारणं संज्ञपनमुच्यते। द्र० श्रौ०प०नि० पृ० १२९।

**संज्ञप्तपश्वाप्यायन—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च शमितारः उगेत्यादि मन्त्रेण पशुमभिमुखं गच्छन्ति। अध्वर्युः 'अदितिः पाशम्' इत्यादि मन्त्रेण पाशात् प्रमुच्यमानं पशुमनुमन्त्रयते। अविशखया वपाश्रपण्या पाशमादाय 'अरातीयन्तम्' इत्यादिमन्त्रेण नैर्ऋत्यां दिशि निरस्यति। अथ प्रतिप्रस्थाता पत्नीमुत्थाप्य उदकमण्डलुं धारयित्वा 'नमस्त आतान' इत्यादिमन्त्रेण आदित्यमुदीक्षयति। अन्तरेण चात्वालोत्करौ पत्नीमुदङ्ङुपनिष्क्रमय्य प्राचीमुदानयन् 'अनर्वा प्रेहि' इत्यादि मन्त्रं वाचयति। अध्वर्युः पशुसमीपे अपो वीक्षमाणां पत्नीं 'आपो देवी' इत्यादि मन्त्रं वाचयति। स्वयमेव मन्त्रं ब्रुवाणा पत्नी जलं सिञ्चन्ती सती क्रमेण पशोरङ्गानि आप्यायति—'वाक् त आप्यायताम्' इति मन्त्रेण वाचम्, 'प्राणस्ते' इति नासिके। एवं 'चक्षुस्ते' इति चक्षुषी, 'श्रोत्रं ते' इति श्रोत्रे। चक्षुरादेः द्वित्वात् मन्त्रे एकवचनप्रयोगात् प्रतिस्थानं मन्त्रावृत्तिरिति केचित्। 'या ते प्राणाच्छुक्' इत्यादिमन्त्रं सकृदेव वदति। पूर्वमाप्यायितानि वागादीन्यङ्गानि संमृशति। ततः 'नाभिस्त आप्यायताम्' इति नाभिम्, 'पायुस्ते' इति गुदम्। ततः 'शुद्धाश्चरित्राः' इत्यादि मन्त्रेण पशोश्चतुरः पादान् एकीकृत्य प्रक्षालयति। अतिशिष्टा अपः पशोः पृष्ठमूलादारभ्याग्रपर्यन्तं निनयति 'शमहोभ्याम्' इति मन्त्रेण। एतावत्कर्म संज्ञप्तपश्वाप्यायनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १३०, श्रौ०को० १ भा० पृ० ५९६।

**संज्ञप्ताहुति—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पशुवाशननिमित्ताहुत्यनन्तरं अपूर्वाज्यात् सकृद् गृहीतेन 'यत् पशुर्मायुमकृत' इत्यादिमन्त्रेण जुहोति। अग्नये इदं न मम इति त्यागो यजमानस्य। इयं संज्ञप्ताहुतिरित्युच्यते। द्र० श्रौ०प०नि० पृ० १३० श्रौ०को० १. भा० पृ० ५९५।

**सत्यकथन—** (सा०) १. इष्टिपशुसोमयज्ञेषु दीक्षितेन सत्यमेव वदितव्यम्। 'कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्। सत्यसंहिता वै देवा

अनृतसंहिता मनुष्याः। एतद्ध वै मनुष्येषु सत्वं निहितं यच्चक्षुः। तस्मात् आचक्षाणमाहुरद्रागिति स यद्यदर्शमित्याह अथास्य श्रद्धति यद्य वै स्वयं पश्यति न बहूनां च न अन्येषां श्रद्धाति' इति ऋतं वाव दीक्षा सत्यं दीक्षा। ऋत सत्य लक्षणा वाग् दीक्षितेन वदितव्या नानृता। अर्थात् मनसा यथावस्तुचिन्तनं ऋतशब्दाभिधेयं वाचा यथावस्तुकथनं सत्यशब्दाभिधेयम् इत्युभयात्मिका वाग् वक्तव्या। (सा च विचक्षणवती (तु०—ऐ० ब्रा० सा० १ ।६)। २. उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥ (तु०—भर्तृहरिः)

**सत्यभेद—** (सा०) ऋत शब्दः सत्यवाची। सत्यं च द्विविधं व्यावहारिकं पारमार्थिकं च। तत्र व्यावहारिकं वाचा सत्यभाषणम्। पारमार्थिकं परंब्रह्म 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुतेः। तदुक्तम्—'ऋतमेष वै सत्यम्। (तु०—ऐ० ब्रा० सा० ४ ।२०)। पुनः सत्यं द्विविधं-शब्द सत्यं अर्थसत्यं च। तत्र साधुशब्दोच्चारणं शब्दसत्यम्, यथावस्थिताविप्लुतार्थवचनं अर्थसत्यम्। सत्यं ब्रुवाणस्य स्वर्गो भवति। 'सत्यं ब्रूयात्' इति स्मृतौ धर्माय सत्यनियमः श्रूयते। द्र० मी०को० पृ० ४०९५।

**सत्र—** (सा०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे १. 'आत्मदक्षिणं वै सत्रम्' (शां० ब्रा० १५ ।१)। २. आत्मदक्षिणं वा एतत् यत् सत्रम्' (तां० ब्रा० ४ ।९ ।१९)। ३. सत्र द्वादशाहप्रभृति विश्वसृजामयनपर्यन्तानि सत्राणि भवन्ति। ४. ब्राह्मणैकाधिकारिकाः चतुर्विंशति परमसप्तदशावरयजमानकर्तृका अदक्षिणाकाः 'आसीरन्' (आप०श्रौ० २३ ।१ ।१), 'उपेयुः' (आप०श्रौ० २३ ।१ ।१७) इत्यादि चोदनाचोदिताः त्रयोदशरात्रप्रभृतिसंवत्सरपर्यन्ताः सोमयागाः सत्राण्युच्यन्ते (तु०—का०श्रौ० १ ।६ ।११ टि० विद्याधरः)। तत्र सर्वे यजमाना भवन्तीति दक्षिणा न दीयन्ते। यजमाना एव तत्तत् ऋत्विक्कर्म कुर्वन्ति। तत्र प्रतिनिधिरपि श्रूयते। तदुक्तम्-'यदि (सत्रे) दीक्षितानां कश्चित् प्रमीयेत तस्य यो नेदिष्ठी स्यात् तमुपदीक्ष्य तेन सह यजेरन्' (तां० ब्रा० ९ ।८ ।१) प्रतिनिहितस्य नेदिष्ठिनो यजमानसंस्काराः वपनादयो भवन्त्येव। तदुक्तम्—'स (प्रतिनिधिः) तद्धर्मा कर्मयोगात् (का० श्रौ० १ ।६ ।१२)। बहवो ब्राह्मणा एव च यजमाना अधिक्रियन्ते। तदुक्तम्— 'सत्राणि ब्राह्मणानाम् ऋत्विक् श्रुतेः' (का० श्रौ० १ ।६ ।१३)। ब्राह्मणा अधिकारिणश्च सर्वे तनूनपात्प्रयाजकल्पा वा भवेयुः, अथवा सर्वे नराशंसप्रयाजकल्पा भवेयुः न तु तनूनपात्नराशंसकल्पा मिलिता भवेयुः। तदुक्तम्—'एककल्पा अवैगुण्यात्' (का० श्रौ० १ ।६ ।१४)। इति विशेषोऽनुसंधेयः। ५. ज्योतिष्टोमस्य विकृतयः सत्राणि भवन्ति। तानि च अदक्षिणानि ज्ञेयानि। उक्तञ्च अदक्षिणानि सत्राणीति। सत्रलक्षणं च 'सत्रमासीरन्, सत्रमुपेयुः इत्येवं आसते, उपयन्ति, इत्यादि चोदनारूपं यजमानबहुत्वमित्यवगन्तव्यम्। (द्र० सत्रद्वादशाह—, गवामयन-)। ६ येष्वहर्गणेषु दक्षिणा न दीयन्ते स्वामिन् एव आर्त्विज्यं कुर्वते तानि सत्राण्युच्यन्ते। तद्विपरीतान्यहर्गणानि अहीनानि भवन्ति। सत्रसमाप्तिः पृष्ठशमनीयेन भवति। द्र० मी०को० पृ० ४११३, पृष्ठशमनीय—। द्वादशाहश्च सत्रात्मकः अहीनात्मकश्चेति उभयात्मको

द्विविधोऽवगन्तव्यः इति च विशेषोऽवधेयः।

**सत्रजातिकल्प—** (सा०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे तेषां (सत्राणां) द्वादश दीक्षास्तथोपसदोऽनादेशे' (आ० श्रौ० १० ।१ ।९) इत्युक्तः कल्पः सत्रजातिकल्प इत्युच्यते (तु०—द्रा० श्रौ०)।

**सत्रदीक्षा—** द्र० सत्रजातिकल्प—।

**सत्रद्वादशाह—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूते द्वादशाहे १. आदौ द्वादशसु दिनेषु द्वादश दीक्षाः, ततो द्वादशसु दिवसेषु, द्वादशोपसदः (सप्रवर्ग्ये उपसद्दिनेषु यस्मिन् कस्मिंश्चिद् दिने प्रवर्ग्यः कार्यः), इति चतुर्विंशतिरहानि ततः पञ्चविंशे दिने प्रायणीयोऽतिरात्रः, ततः षड्विंशाद्येकत्रिंशेष्वहःसु पृष्ठ्यषडहः, ततः द्वात्रिंशादिचतुस्त्रिंशेष्वहःसु त्रयश्छन्दोमाः, ततः पञ्चत्रिंशेऽहनि अविवाक्यसंज्ञकमहः (अत्रैव सत्रोत्थानादि), ततः षट्त्रिंशेऽहनि प्रातरुदनीयोऽतिरात्रो द्वादशमहरनुष्ठीयते। सोऽयं षट्त्रिंशद्दिनसाध्यो द्वादशाहः, सत्रद्वादशाहः सत्रप्रकृतिको द्वादशाहो वोच्यते (तु०—आ०श्रौ० ११ ।१ ।१-७ । २. द्वादशाहो नाम अहर्गणः। प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, त्रयः छन्दोमाः, अविवाक्यमहः, उदयनीयोऽतिरात्रः इति तस्य अहः क्लृप्तिः। स च सत्रं अहीनश्च इति द्विविधः। स सत्राहीनभूतो व्यवस्थया प्रवर्तते। तस्य द्विरात्रादिष्वहर्गणेषु (अहीनेषु) प्रवृत्तिः। तस्य यजविश्रुतेः अहीनभूतप्रवृत्तिः स्यात्। अर्थात् यत्र यजति श्रुतिः तत्र विकृतौ अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः स्यात् परिशेषात् यत्र आसनोपायि श्रुतिः तत्र विकृतौ सत्रभूतस्य द्वादशाहस्य प्रवृत्तिः। एतदुक्तं भवति। द्विरात्रादयः आ एकादशरात्रात् एकादशरात्रमन्तर्भाव्य ये यागाः ते अहीनाः नाम। कुतः तेषु यज्धातुना विधानं भवति। तेषु अहीनेषु अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः। एतदुक्तं भवति। द्विरात्रादयः आ एकादशरात्रात् एकादशरात्रमन्तर्भाव्य ये यागाः ते अहीनाः नाम। कुतः तेषु यज्धातुना विधानं भवति। तेषु अहीनेषु अहीनभूतस्य द्वादशाहस्य प्रवृत्तिः। त्रयोदशरात्रादिषु संवत्सरपर्यन्तेषु यागेषु आसधातुना उप इण् धातुना वा यत्र चोदनं (विधानं) तत्र सत्रत्वम्। तादृशेषु च सत्रेषु सत्रभूतः द्वादशाहः प्रवर्तते। इति विशेषोऽवगन्तव्यः। द्र० मी०को० पृ० ४०९५-९६।

**सत्रद्वादशाहसंस्था—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रद्वादशाहस्य प्रथमं दिनमतिरात्रसंस्थम्, द्वितीयं पृष्ठ्यषडहस्य प्रथममहः अग्निष्टोमसंस्थम्, तृतीयचतुर्थे अहनी पृष्ठ्यषडहस्य द्वितीयतृतीये उक्थ्यसंस्थे, पञ्चममहः पृष्ठ्यस्य चतुर्थमहः षोडशिसंस्थम्, षष्ठसप्तमे अहनी पृष्ठ्यषडहस्य पञ्चमषष्ठे उक्थ्यसंस्थे भवतः। एवं द्वादशाहस्य अष्टनवमदशमेष्वहःसु त्रयाणां छन्दोमानां अष्टम त्रीण्यहानि उक्त्यसंस्थानि। एकादशमहः छन्दोमानां चतुर्थमविवाक्यं अग्निष्टोमसंस्थम्, द्वादशमहरति रात्रसंस्थं भवति। इति सत्रद्वादशाहस्य संस्था उच्यन्ते।

**सत्रद्वैविध्य—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्राणि तावद् द्विविधानि त्रयोदशरात्रप्रभृति शतरात्रान्तानि रात्रिसत्राणि भवन्ति। गवामयनप्रभृतिसारस्वतविश्वसृजामयनान्तानि अयनसत्राणि संवत्सरसत्राणि वाऽऽख्यायन्ते। रात्रिसत्राण्यपि द्विविधानि उपदिष्टा-

हानि अनुपदिष्टाहानि च। अनुपदिष्टाहानि सत्राणि आवापेन प्रकृतिविहितानि भवन्ति, उपदिष्टाहानि सत्राणि तु संभार्याण्युच्यन्ते। द्र० संभार्य—।

**सत्रप्रकृति—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रविकृतौ सत्रप्रकरणे आदौ यः प्रायणीयसंज्ञको ज्योतिष्टोमोऽतिरात्रसंस्थं एकाहः, अन्ते च य उदयनीयसंज्ञको ज्योतिष्टोमोऽतिरात्रसंस्थ एकाहः, एतावन्तरेण यो व्यूढो दशरात्रः (पृष्ठ्यषडहस्य षडहानि, त्रयश्छन्दोमा दशमं एकमविवाक्यमहः)। इति द्वादशानामह्नामेवं संघातरूपो द्वादशाहः सत्राणां प्रकृतिर्भवति। तदुक्तम्— 'अयमेवैकाहो- ऽतिरात्र आदौ प्रायणीयः। एषोऽन्त्य उदयनीयः। तावन्तरेण व्यूढदशरात्रः। एषा प्रकृतिः सत्राणाम्' (तु०— आ०श्रौ० ११।१-२ ३।६-७ नारायणः)।

**सत्रलिङ्ग—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्राणां १. आदावन्ते च अतिरात्रत्वं सत्रलिङ्गमुच्यते। २. उभयतोऽतिरात्रस्तेन सत्रम्। ३. सत्रेषु सर्वत्र उपयन्ति, यन्ति (अनुतिष्ठन्ति, आसते, इति शब्दा अनुष्ठानपराः एतैः शब्दैर्विधानमेव सत्रलिङ्गमुच्यते।

**सत्रस्यर्धिसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरसत्रप्रकरणे गवामयने 'आ हो वा३ अगन्मज्योतिः' इति सत्रस्य ऋद्धिः सामोच्यते। तत्र 'स्वर्ज्योतिः' इति चतुरक्षरं निधनं भवति। अनेन साम्ना गवागमयने महाव्रतेऽहनि आग्नीध्रमण्डप उपस्थीयते। अस्य साम्नः परिमात् संज्ञा च भवति (तु०—तां० ब्रा० सा० ५।४।७-८)। द्र० परिमाद्—।

**सत्राणामहः संख्याक्लृप्ति—** (सा०) सोमयज्ञेषु प्रकृतिभूते ज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे त्रयोदशरात्रादिसंवत्सरपर्यन्तानां सत्राणामहः संख्या उपदेशेन आवापेन चेति विधिद्वयेन क्लृप्यते। तत्र येषु सत्रेषु देशविधिनाऽह्नां संख्या विधीयते तानि सत्राणि संभार्याण्यभिधीयन्ते। येषां स्वनियत संख्या उपदेशाभावे आवापविधिना पूर्यन्ते तानि आवापिकानि सत्राण्युच्यन्ते। तदियं औपदेशिकेन आवापिकेन च नियमेन सत्रनिष्ठदिवसानां संख्यापूर्तिः सत्राणामहः संख्याक्लृप्तिरुच्यते। तत्र आवापविधिः आवाप- स्थानम्। द्र० २. आवापस्थानप्रकृतिहितसत्र-, सत्रप्रकृति-, संभार्य—।

**सत्रायण—**(सा०) सोमयज्ञेषु प्रकृतिभूत...सत्रप्रकरणे सत्रस्यानुष्ठानं सत्रायणमुच्यते (तु०— ऐ० ब्रा० सा० ५।२२)।

**सत्राहीनतन्त्रकार्यत्व—** (सा०) सोमयज्ञेषु प्रकृतौ ज्योतिष्टोमातिरात्रे तद्विकृतिषु चैकाहेषु (१) प्रधानात् प्राक् (२) प्रधानं, (३) प्रधानादूर्ध्वम् इति क्रमेण त्रिधा कर्मप्रयोगोऽनुष्ठीयते। तत्र ततः प्रधानयागः, ग्रहचमससोमयाग रूपात् प्रधानात् प्राक् दीक्षणीयादीन्यग्नीषोमीयान्तानि, प्रधानयागादूर्ध्वं अवभृथादीन्युदवसानीयान्तानि कर्माणि यथाक्रममनुष्ठेयानीत्येकाहिकः साधारणो विधिः। तस्य ज्योतिष्टोमातिरात्रविकृतिभूतेषु सत्राहीनाहर्गणेषु त्वित्थं व्यवस्था। तत्र यान्येतानि प्रधानयागात् प्राक् दीक्षणीयादीन्यग्नाषोमीयान्तानि, प्रधानादूर्ध्वमवभृथादीन्युदवसानीयान्तानि च सामान्येनोपदिष्टानि कर्माणि तथा यानि प्रधानेभ्यः प्राक् प्रातरनुवाकात् पूर्वाणि तानि सत्राहीनाहर्गणानां पूर्वेष्वहःसु सकृत् (तन्त्रेण) कर्तव्यानि। यानि पुनरवभृथादीनि प्रधानेभ्य उत्तराण्यङ्गानि, तेषु पत्नी संयाजेभ्य ऊर्ध्वमङ्गानि अन्त्येष्वाहःसु सकृत् (तन्त्रेण) कृतानि सर्वार्थानि

भवेयुरितितदाहाश्वलायनः—'प्रातरनुवाव ह्युदवसानीयान्तान्यन्तानि। पत्नीसंयाजान्ता-नी तराणि' (तु०—आ० श्रौ० ७।१।४-५ नारायणः)। अर्थात् अहर्गणेषु दीक्षणीयादीनि पूर्वाण्यङ्गानि प्रधानेभ्यः प्राक् पूर्वेष्वहःसु सकृत् कर्तव्यानि न प्रतिप्रधानम्। एवमेव प्रधानेभ्य ऊर्ध्वमवभृथादीन्युत्तराण्यङ्गानि अन्त्येष्वहःसु पत्नीसंयोजान्तानि सकृत्कर्तव्यानीत्यवगन्तव्यम्। इत्थमहीनसत्राहर्गणेषु अन्त्येष्वेवाहःसु पेयं पत्नीसंयाजान्तता विहिता सा द्वादशाहे अहर्गणे अन्त्यं उदयानीयातिरात्राख्यमहर्वर्जयित्वा एकादशे अविवाक्येऽहनि हारियोजनग्रहग्रहणानन्तरं संपद्यते। (तु०—मी० को० पृ० ७६१, २४२९-३०)। तथाचोक्तं कात्यायनेन 'पत्नी संयाजान्ता न्यहान्यन्त्ववर्जम्' (का० श्रौ० १२।३।२३)। अर्थात् द्वादशाहे अन्त्यं द्वादशमहर्वयित्वा अन्यान्येकादशाहानि पत्नीसंयाजान्तानि भवन्ति। एवं च सत्रे दीक्षणीयादीन्यग्नीषोमीयान्तानि प्राक् प्रधानेभ्यस्तन्त्रेण कार्याणि। एवं अवभृथादीन्युदवसानीयान्तानि ऊर्ध्वं प्रधानेभ्यस्तन्त्रेण भवन्ति। अतो न्यायादेव एकादशसु अहःसु समिष्टयजुरन्तेषु प्राप्तेषु वचनादेषां पत्नीसंयाजान्ततोच्यते (द्र० तत्रैव विद्याधरः टि०)। प्रकृतौ ज्योतिष्टोमे पत्नीसंयाजेभ्य ऊर्ध्वं नव समिष्ट यजूंषि हूयन्ते इति विशेषोऽनुसंधेयः। द्र० अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधिः— ।

**सत्राहीनविवेक—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिषु सत्राहीनेषु १. आसनोपायिचोदनया यजमानबहुत्वेन च सत्रत्वमवगम्यते। एते चोदने, आसते, उपयन्तीति हि नित्यं सत्रसंबद्धे दृष्टे। य एवं विद्वांसः सत्रमासते, य एवं विद्वांसः सत्रमुपयन्तीति। यजमानबहुत्वेन च चतुर्विंशतिपरमाः सप्तशावराः सत्रमासीरन्निति सत्राणि लक्ष्यन्ते। यत्र यजति चोदना अनियतं च कर्तृपरिमाणं तत्राहीन इति निश्चीयते। अहीनानां यजति चोदनया विधानम्। 'द्विरात्रेण यजेत' इत्येवमादि। कर्तृपरिमाणं चैषामनियतम्। सत्राणां तु नियतं परिमाणं बहवः इत्युभयोर्विवेक उच्यते। २. त्रयोदशरात्रादिषु आसनोपायिचोदनावत्त्वेन वैदिकैः रात्रशब्दप्रयोगात् द्वादशाहेऽपि तत्सत्त्वेन सत्रत्वम्। द्विरात्रादिष्वहर्गणेषु यजति चोदनावत्त्वे सति अनियतसंख्याकर्तृत्वेन वैदिकानां अहीनशब्दप्रयोगात् द्वादशाहेऽपि तत्सत्त्वेन अहीनत्वं दृष्टम्। द्र० मी०को० पृ० ४१।११।

**सत्राहीनायन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिविकृतौ सत्राहीनप्रकरणे अनेकदिनसाध्याः सोमयागाः सत्राहीनायनान्युच्यन्ते।

**सत्रिन्—** (सा०) सोमयज्ञेषु प्रकृतिभूत...विकृतौ सत्रप्रकरणे षोडशर्त्विजः गृहपतिसप्तदशाः आहिताग्नयः सत्राण्यासते इति ऋत्विक्पुरुषाः सत्रिण उच्यन्ते (तु०—आ० श्रौ० ४।१।८)।

**सत्रेषु माध्यन्दिनसवने होत्रकशस्त्रप्रतीकषट्क—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमविकृतिषु सत्रेषु माध्यन्दिनसवने होत्रकाणां शस्त्राणि षड्भिः प्रतीकैर्निर्दिश्यन्ते। तत्र चतुर्विंश-महाव्रताभिजिद्विश्वजिद्विषुवत्सु पञ्चसु सात्रिकेष्वहःसु मैत्रावरुणस्य स्तोत्रियानुरूपयोर्द्वे प्रतीके वर्जयित्वा १. कस्तमिन्द्र' (ऋ० ७।३२।१४) इति कद्वान् प्रगाथः। २. 'अपः प्राच इन्द्र' (ऋ० १०।१३१।१)। इत्यारम्भणीया ३. 'सद्यो

जातः' (ऋ० ३ ।४८ ।१) इत्यहरहः शस्यम्। ४. 'आ सत्योर्यातु' (ऋ० ४ ।१६ ।१)। इत्यहीनसूक्तम्। इति चत्वारि प्रतीकानि एवं ब्राह्मणाच्छंशिनः स्तोत्रियानुरूपौ वर्जयित्वा १. कन्नतव्यो अतसीनाम्' (ऋ० ८ ।३ ।१३) इति कद्वान् प्रगाथः। २. ब्रह्मणा ते ब्रह्मयुजा' (ऋ० ३ ।३५ ।४)। इत्यारम्भणीया। अस्मा इदु प्रतवसे' (ऋ० १ ।६१) इत्यहीनसूक्तम्। ४. उदु ब्रह्मणानि' (ऋ० ७ ।२३ ।१) इत्यहरहः शस्यम्। इति चत्वारि प्रतीकानि। अच्छवाकस्य स्तोत्रियरूपो वर्जयित्वा १. कदून्वस्याकृतम्' (ऋ० ८ ।६६ ।९) इति कद्वान् प्रगाथः २. 'उरुं नो लोकमनु' (ऋ० ६ ।४७ ।८) इत्यारम्भणीया। ३. 'शासद्वह्निः' (ऋ० ३ ।३१ ।१) इत्यहीनसूक्तम्। ४. 'अमि तष्टेव दीधया' (ऋ० ३ ।३८ ।१) इत्यहरहः शस्यम्। इति चत्वारि प्रतीकानि। एवमेतानि समान नामानि चत्वारि प्रतीकानि स्तोत्रियानुरूपाभ्यां सह षट् प्रतीकानि होत्रकशस्त्रेषु सामान्येन भवति। इतरेषु गुणभूतेषु सात्रिकेषु षडहेषु (पृष्ठ्याभिप्लवेषु) षडहप्रकृतिषु (छन्दोमस्वरसामसु) एकोनविंशसु चाय विशेषो भवति-यद् अहीनसूक्तस्थाने नव संपातसूक्तानि भवन्ति। (क) तत्र मैत्रावरुणस्य अहीनसूक्तस्थाने 'एवा त्वामिन्द्र' (ऋ० ४ ।१९) इति संपातसूक्तं पृष्ठयाभिप्लवयोः प्रथमचतुर्थयोरह्नोः 'यन्न इन्द्रो जुजुषे' (ऋ० ४ ।२२) इति संप्रातसूक्तं द्वितीयपञ्चमयोः। 'कथामहामवृधत्' (ऋ० ४ ।२३ ।१) इति संपातसूक्तं तृतीयषष्ठयोः (ख) ब्राह्मणाच्छंसिनः अहीनसूक्तस्थाने 'इन्द्रः पूर्भिदातिरत्' (ऋ० ३ ।३४) इति संपातसूक्तं प्रथमचतुर्थयोरह्नोः 'य एक इद्धव्यश्चर्षणीनाम् (ऋ० ६ ।२२) इति द्वितीयपञ्चयोरह्नोः। 'यस्तिग्मशृङ्गोवृषभः' (ऋ० ७ ।१९) इति तृतीयषष्ठयोः। (ग) एवमेव अच्छावाकस्याहीन- सूक्तस्थाने 'इमामू षु प्रभृतिम्' (ऋ० ३ ।३६) इति संपातसूक्तं प्रथमचतुर्थयोरह्नोः 'इच्छन्ति त्वा सोम्यासाः' (ऋ० ३ ।३०) इति संपातसूक्तं द्वितीयपञ्चमयोः। 'शासद्वह्निः (ऋ० ३ ।३१) इति तृतीयषष्ठयोरह्नोर्भवति। एवमेतान्येतेष्वहःसु सत्रविषये शस्त्राणि भवन्ति। सात्रिकाणामह्नां एकाहीभावे कद्वत्प्रगाथानामारम्भणीयानामहरहः शस्यानामभाव इति विशेषोऽनुसन्धेयः (तु०—आ०श्रौ० ७ ।५ ।१९; ८ ।४ ।१४ नारायणः)। द्र० संपातसूक्त—, समानशस्त्रक्लृप्ति—।

**सत्रोत्थान — द्र०** द्वादशाहसत्रोत्थानकर्मन्—, सारस्वतस- त्रोत्थान—।

**सत्रोपसद्— द्र०** सत्रजातिकल्प—।

**सदःशाला—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिकमहावेद्यां प्राग्वंशस्य पूर्वस्यां दिशि सदोऽभिधाना शाला सदःशालोच्यते। **द्र०** सदस्-, सौमिकवेदिमान—, प्राग्वंश—।

**सदस्—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु १. सुत्यादिनात् प्राक् चतुर्थेऽहनि आग्नीषोमीय- पशुकाले द्यावापृथिवीयहोमानन्तरं सौमिकवेदिमाने महावेद्यां प्राचीनकर्णाः स्थूणा उच्छ्रित्य तासूदञ्चौ वंशौ प्रोह्य 'इन्द्रस्य सदोऽसि' इति मध्यमं छदिरधिनिधाय अमितो द्वे द्वे निदधाति 'विश्वजनस्य छाया' इति। द्विर्मन्त्रः। दक्षिणोत्तरान् नवसन्धिषु तृणावर्तान् करोति- 'परित्वा गिर इमा भवन्तु विश्वतो

वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः।' परिश्रित्य प्राचीं प्रतीचीं च द्वारं कृत्वा दक्षिणो द्वार्वाहौ कुशमुपनिगृह्य दर्भेण स्पन्द्यमवनयति-'इन्द्रस्य स्यूरसि' इति। 'इन्द्रस्य ध्रुवमसि' इति ग्रन्थिं करोति विस्रस्य अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्नितिष्ठत। इति। एवमुत्तरे प्रतिप्रस्थाता। एवमुत्तरद्वार्वाह्वोः। इदं निर्मितं गृहं सदः पदवाच्यम्। **द्र०** श्रौ०प०नि० पृ० २४४। २. सदः ज्योतिष्टोमे शालाविशेषः। यत्र औदुम्बरी शाखा मध्ये निखन्यते। यस्मिंश्च ऋत्विजः स्थित्वा स्तोत्राणि गायन्ति शस्त्राणि शंसन्ति। सदसः पुरस्तात् श्लोकं नाम साम महाव्रते गीयते। अनुश्लोकं च पश्चाद्देशे गीयते। (**द्र०** परिमाद्-)। सदसि औदुम्बरी मध्यमा स्थूणा भवति, तां स्पृष्ट्वा उद्गाता गायति। **द्र०** मी०को० पृ० ४।११३-१४।

**सदसि प्रसर्पण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने यजमानस्य सदस्युपवेशनानन्तरमध्वर्युप्रतिप्रस्थातारौ आहवनीयोपस्थानादि एतदन्तं कुरुतः। अध्वर्युर्दक्षिणद्वार्बाहुमूले प्रत्यङ्मुख उपविशति। उत्तरे प्रतिप्रस्थातेति अध्वर्युप्रतिप्रस्थात्रोरिदं सदसि प्रसर्पणमुच्यते। **द्र०** श्रौ०प०नि० पृ० २८१।

**सदसि ब्रह्मादिचमसनयन—**(आध्व०) सोमयज्ञेषु प्रकृतिभूत... सत्रेषु प्रातःसवने शुक्रामन्थिप्रचारानन्तरं होतृब्रह्मोद्गातृयजमानानां चमसान् चमसाध्वर्यवः सदसि नयन्ति। प्रशास्त्रादीनां चमसाध्वर्यवः सशेषांश्चमसान् द्रोणकलशादभ्युन्नीयोपावर्तन्ते। तदिदं सदसि ब्रह्मादिचमसनयनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २८५।

**सदस्य—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र प्रकरणे... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सदस्यो नामषोडशर्त्विग्भ्योऽन्यः कर्मणामुपद्रष्टा (आप०श्रौ०) (द्रा० श्रौ० धन्वी ४।४)। सदस्यः सत्रेषु न वरणीय इति विशेषोऽवगन्तव्यः। २. सदसि अवस्थितः सदस्यः स च नर्त्विक्। तस्य यजनक्रियाभावात्। **द्र०** मी०को० पृ० ४११४।

**सदोऽभिमर्शन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु महावेद्याम् अध्वर्युः 'ऐन्द्रमसीन्द्राय त्वा' इति मन्त्रेण सिद्धं सदोऽभिमृशतीति। इदं सदोऽभिमर्शनमुच्यते। **द्र०** श्रौ० प०नि० पृ० २४४।

**सद्यस्कालत्व—** (सा०) इष्टिपशुसोमेषु विकृतीनां सर्वासां सद्यस्कालत्वम्। **द्र०** मी०को० पृ० ११६।

**सद्यस्कालपशुप्रकार—** (आध्व०, अव्य०) पशुयज्ञेषु ऐन्द्राग्नपशुप्रकृतिके निरूढपशुबन्धप्रकरणे पशुबन्धानुष्ठानस्य सद्यस्कालत्वपक्षे नान्दीश्राद्धादि वेदिमानं च पूर्वेद्युरेव क्रियते अपरेद्युः स्नानादिपञ्चकम्। ततः पशुसंकल्पानन्तरमन्वारम्भणीयेष्टिः क्रियते. अग्नीनरण्योः समारोप्य प्रत्यक्षान् वा देवयजनदेशं प्रति नयति। मन्थनपक्षेऽग्नीन् विहृत्य मनस्वत्या हुत्वा पुनर्विहृत्य षड्ढोतृकूष्माण्डसारस्वतहोमान्तं समानम्। तदनन्तरमग्निदेवत्याम् अग्न्यन्वाधानादि ब्राह्मणतर्पणान्तां पशुपूर्वेष्टिं करोति।

ततो यूपाहुत्यादिपाशुकवेदिपरिस्तरणान्तं करोति। ततः पशुदेवतासंकल्पं कृत्वाऽन्वाधानादि कुंभ्यादिप्रोक्षणान्तं करोतीति। सोऽयं सद्यस्कालपशु प्रकार

उच्यते। द्र० श्रौ०प०नि० पृ० १२२, षड्ढोतृ—, कूष्माण्ड—, सारस्वतहोम—।

**सद्यस्कालिकपौर्णमासेष्टि—** (आध्व०, अव्य०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे सद्यस्कालिकपौर्णमासविधौ कृष्णप्रतिपदि यमनियमपरिग्रहः, तस्यामेव यागविधिः इति सद्यस्कालिकपौर्णमासेष्टिरुच्यते। 'सद्यो वा प्रातः'(का० श्रौ० २।१।१६) इत्यनेन सद्यस्कालकर्तव्यताऽपि विहिता (तु०—का० श्रौ० २।१।१ विद्याधरः)। दर्शेष्टेस्तु सद्यस्कालता नास्ति इति विशेषोऽवधेयः। तदुक्तम्—'पौर्णमासवदन्यदसद्यः' (तु०—का० श्रौ० ४।२।४४ विद्याधरः)।

**सनि—** (सा०) 'सनिस्त्वध्येषणा याच्ञाऽभिषस्तिर्याचनार्थना' इति कोषात् याचनीयं द्रव्यं सनिरुच्यते। द्र० सनीहारप्रेषण-, श्रौ०प० नि० पृ० २००। -

**सनियाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सनीहारप्रेषणानन्तरं 'रास्वे यत्सोमाभूयो भरमापृष्ठ्य पूर्त्या विराधिमाह मायुषा' इति धनमाहरन्तं सनीहारं दृष्ट्वा जपति। 'चन्द्रमसि मम भोगाय भव' इत्यानीतं हिरण्यं रजतं वा प्रतिगृह्णाति। 'वस्त्रमसि मम भोगाय भव।' इति वस्त्रम्। 'उस्राऽसि मम भोगाय भव'। इति गाम्। 'हयोऽसि मम भोगाय भव।' इति अश्वम्। 'छागोऽसि मम भोगाय भव'। इति छागम्। 'मेषोऽसि मम भोगाय भव।' इति मेषम्। 'प्राजापत्यमसि मम भोगाय भव'। इति अनादिष्टं सर्वमन्यत्। तदेतत्कर्म सनियाचनमुच्यते। द्र० श्रौ०प०नि० पृ० २००, सनीहार—, प्रेषण—।

**सनीहारप्रेषण—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यजमानः यथोपदिष्टदीक्षितयजमानशासनानन्तरं 'विश्वे देवा अभि मा मा वृत्रन् पूषा सन्या सोमो राधसा देवः सविता वसोर्वसुदावा' इत्यप्रत्याख्यायिनं दातारं प्रति सनीहारान् प्रहिणोति। इति सनीहारप्रेषणमुच्यते। द्र० श्रौ०प०नि० पृ० २००।

**सन्ततपाठ—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीयदर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु १. सामिधेन्यादिषु अध्यर्धकारानुवचने ऋगारम्भे प्रथमार्धर्चेऽवसाय ततो द्वितीयार्धर्चप्रणवमकारेण उत्तरस्या ऋचः प्रथमार्धर्चं संधाय तदन्ते विरमेत्। एवं सर्वा ऋचः पठित्वा अवशिष्टं अन्तिमाया ऋचः द्वितीयार्धर्चं केवलं चतुर्मात्रप्रणवान्तम् उक्त्वा विरमेत्। एतादृशं पठनं संततं संततपाठ इत्युच्यते श्रौ०प० नि० पृ० २३ द्र० १-२ सामिधेनीष्वध्यर्धकार—। २. सामिधेनी शस्त्रादिष्वनुवचने स्वरादिभूते ऋगन्त्याक्षरस्थाने विहितः त्रिमात्रो मकारान्त ओंकार उत्तरस्या ऋचोऽर्धर्चेऽसाय समाप्तौ अवसानरूपः प्रणवः प्रतिगरे च य ओम् शब्दः (प्रणवः) तत् सन्ततमित्युच्यते। तदुक्तम्—'स्वरादिमृगन्तमोंकारं त्रिमात्रं मकारान्तं च कृत्वोत्तरस्या अर्धर्चेऽवस्येत् तत्संततम्। एतदवसानम्। समाप्तौ प्रणवेनावसानम्' (आ०श्रौ० १।२।१०-११, १३)। तत्र ओकारस्य द्विमात्रत्वात् त्रिमात्रमाह (तु०—देवत्रातः)। ओकारोऽर्धत्रिमात्रः मकारोऽर्ध मात्रः इति त्रिमात्रत्वं प्रणवस्य (तु०—नारायणः)। ओकारान्तः शुद्धो भवति (तु०—देवत्रातः)। अत्र गोपथब्राह्मणम्—शुद्ध

(ओम्) प्रणवः स्यात् प्रजाकामानाम्, मकारान्तः (ओम्) प्रतिष्ठाकामानाम्, इति त्वमकारान्तः प्रणवः स्यादिति हैक आहुः । शुद्धः इति त्वेव स्थितिः । मीमांसितः प्रणवोऽथातः इह शुद्ध इह पूर्ण इति । शुद्धः प्रणवः स्याच्छस्त्रानुवचनयोर्मध्य इत्याह कौषीतकिः (गो० ब्रा० २।३।१०-११)। द्र० श्रौ०को० २ भा० पृ० ३२६)। अवसाने (समाप्तौ) यः प्रणवः स चतुर्मात्रो भवति। (तु०—आ०श्रौ० १।२।१४)। प्रणवः संतानार्थो भवति। ततो यत्र संपूर्वः तनोतिरस्ति तत्र प्रणवः कर्तव्य इति विशेषोऽवगन्तव्यः। द्र० प्रणव—।

**सन्तति—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अहर्गणेषु १. सन्ततिः भविष्यतोऽह्नः पूर्वेऽहनि संश्लेष्य संबन्धकरणं सन्धानं सन्ततिरुच्यते। २. मध्ये विच्छेदराहित्यं च सन्ततिरुच्यते।

**सन्तनिसामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे १. छन्दोमानां प्रथमे द्वादशाहस्य सप्तमेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य प्रथमे वृषा पवस्य (साम० ८०३-५) इति तृचे सन्तनि साम गातव्यं भवति सप्तमस्याह्नः षष्ठेनाह्ना सह सन्तानार्थं भवति। तत्र सर्गाणि सामानि एकैकस्यां स्तोत्रीयां गीयन्ते। इदं (सन्तनि) तु तृचे व्यासज्य गीयते। तिसृषु स्तोत्रीयास्वस्य सन्तानदर्शनात् सन्तनीति संज्ञा भवति (तु०—तां० ब्रा० सा० १४।३।७)। २. अथापि सन्तानादेव सन्तति, यदुत्तरे स्तोत्रीये लुप्तविभक्तिके क्रियते ततः सन्तनित्वमुपद्यते। एवं च ब्राह्मणमाह-सन्ततं गायन्तीति यज्ञस्य सन्तत्या इति सन्तनि (तु०—ला० श्रौ० ६।१।८-९ अग्निस्वामी)। ३. सन्तानात्सन्तनीति व्यपदेशः (तु०—द्रा०श्रौ० ६।१।३ धन्वी)।

**सन्तनिसूक्त—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ व्यूढद्वादशाहप्रकरणे छन्दोमस्य त्र्यस्य प्रथमे द्वादशाहस्य सप्तमेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्र- स्य द्वितीयं 'कया शुभा सवयसः' (ऋ० १।१६५) इति निविद्धानीयं सूक्तं सन्तनिसूक्तमुच्यते। एतद्धि संज्ञानं परस्परैकमत्यसाधनम्। किञ्च संतनि सन्तानकरं प्राणनामविच्छेदेन दीर्घायुष्यकरणं भवतीति सन्तनिसूक्तमुच्यते (तु०— ऐ० ब्रा० सा० ५।१६)।

**सन्तर्दन—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिषु उक्थ्यादिसंस्थासु, द्विरात्राद्यहीनेषु, त्रयोदशरात्रादिसंवत्सरसत्रेषु चाहर्गणेषु दीर्घसोमेषु (दीर्घकालसाध्यसोमेषु) आभिषवे पुनः पुनर्ग्रावभिरमिहन्यमाने सति सोमाभिषवफलकयोर्दारणशङ्कायां (शैथिल्यशङ्कायाम्) सन्तर्दनं क्रियते। तत्र संतर्दनं नाम द्वयोः फलकयोः संश्लेषप्रदेशतनू करणेन एकोपरि अपरस्य दृढः संश्लेषः। अर्थात् संतर्दनं नाम अधिषवणार्थयोः काष्ठफलकयोः मध्ये एकस्य अन्तरा द्वितीयस्य दृढः संश्लेषः सम्यक् तर्दनं सन्तर्दनमुच्यते। तत् प्रकृतौ अग्निष्टोमे न भवति दीर्घसोमाभावे शैथिल्यशङ्कानुत्पत्तेः। द्र० मी०को० पृ० ४११७।

**सन्तान—**(हौ०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु सामिधेनीनां अनुवचने सान्तत्यविधौ पूर्वोत्तरयोरुच्चारणयोर्मध्ये मौनकृतकालव्यवधानाभावः सन्तान इत्युच्यते। द्र० मी०को० पृ०

४३०१, सामिधेनी सान्तत्यविधि—, सन्तत- पाठ— ।

**सन्तानानवानविवेक—** (सा०) सन्तानः पूर्वोत्तरोच्चारणयोर्मध्ये मौनकृतकालव्यवधानाभावः सन्तानः। पूर्वोत्तरोच्चारणयोर्मध्ये निःश्वासाभावो श्वासनिरोधोऽनवानमुच्यते। यथा 'अनवानं यजति' इत्यत्र याज्यानुवाक्ययोर्मध्ये श्वासनिरोधेन तयोरेककर्तृत्वमवगम्यते। सन्तानेन चोच्चारणाव्यवहितत्वमवगम्यते। द्र० मी०को० पृ० ३६८ ।४३०१ ।

**सन्दंश-वज्र—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे द्वन्द्वसोमेषु सन्दंश-वज्रसंज्ञकौ द्वावेकाहौ। तत्र सन्दंशोऽग्निष्टोमसंस्थः। वज्रः षोडशिसंस्थः। षोडशिसंस्थे वज्रे सोमक्रयणी गौः पीतमुखी पीतपुच्छी वा लोहितकर्णी च भवति। तत्र अहर्गणे षोडशिसंस्थे च, यज्ञे च सर्वत्र सोमक्रयणी पीतमुखी पीतपुच्छी वा लोहितकर्णी च विज्ञेयेति विशेषोऽनुसन्धेयः।

**सन्दिग्धप्रवर—** (हौ०, आध्व०) इष्टिपशुसोमयज्ञादिषु प्रवरसंशये 'मानवः' इत्येव प्रवरो वक्तव्यः इति मानवः प्रवरः भवति।

**सन्धि—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे सन्धिश्चतुर्विधो भवति—१. लोपागमविकाराः प्रकृतिभावश्च (या० शि० २।८)। २. संहिताः सन्धिः। द्र० वेदाध्ययन—, संहिता— ।

**सन्धिभेद—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. लोपागमविकाराः प्रकृतिभावश्चेति चतुर्विधः सन्धिर्भवति इति। २. १ द्वयोः स्वरयो, २ द्वयोर्व्यञ्जनयोः ३ व्यञ्जनस्वरयोः ४ स्वरव्यञ्जनयोः इति चतुर्विधाः सन्धयो भवन्ति।

**सन्धिषामन्—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे चतुर्थषष्ठ्यां वा सोमसंस्थायामतिरात्रे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्यं नवस्तोत्रीयात्मकं सन्धिषाम भवति। सन्धिस्तोत्रमिति चोच्यते। द्र० अतिरात्र— ।

**सन्धिस्तोत्र—** द्र० सन्धिषामन्— ।

**सन्ध्यक्षर—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे सन्धियुक्तानि अक्षराणीति एकारादयश्चत्वारो वर्णाः (तु० ऐ० ओ० औ०) सन्ध्यक्षराणि उच्यन्ते। द्र० श्रौ०प०नि० पृ० २९ द्र० ।

**सन्नयत्—** (आध्व०, सा०) इष्टियज्ञे, प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे यो यजमानः सोमे नेष्टवान् तस्य दर्शेष्टौ इन्द्राग्निदेवतास्थाने इन्द्रो वा महेन्द्रो वा देवतात्वेन विहितः। तत्र सत्यपि पुरोडाशद्रव्ये अधिकं द्रव्यद्वयं विहितम्। तत्रैकं पयः द्वितीयं दधि। तदेतद् द्वयं होमार्थं सम्यक् नयतीति संनयन् यजमानो भवति। द्र० श्रौ०प०नि० पृ० ११-१२ द्र० सान्नाध्य— ।

**सन्निपत्योपकारक—** (सा०) इष्टिपशुसोमयज्ञेषु सन्निपत्योपकारकं (कर्म) अङ्गाङ्गम्। कर्माङ्गव्रीह्याद्युद्देशेन विधानात्। सन्निपत्योपकारकमेव आश्रयिकर्म इत्युच्यते। तच्च क्रत्वर्थं प्रवृततिरूपं वैदिकं कर्म त्रिविधम्-दृष्टार्थं अदृष्टार्थं दृष्टादृष्टोभयार्थं चेति। तत्र दृष्टार्थं अवघातादि, अदृष्टार्थं प्रोक्षणादि, दृष्टादृष्टार्थं पशुपुरोडाशादि। द्र० मी०को० पृ० ४१३० ।

**सन्निपात—** (सा०) द्वयोर्बहूनां वा पदार्थानामेकत्र निपातः सन्निपातं इत्युच्यते।

**संन्यास—** (सा०) सन्तत्या ऊर्ध्वं संन्यासमुपदिशन्ति (तु०—बौधायनधर्मसूत्रम् २।१०।१७।६)।

**संन्यासिधर्म—** (सा०) १. सन्यसेत् सर्वकर्माणि वेदमेकं न सन्न्यसेत् (वेदसन्न्यसनाच्छूद्रस्तस्माद् वेदं न संन्यसेत् (तु०—वासिष्ठधर्म १०।४)। २. एष धर्मोऽनुशिष्टो यो यतीनां नियतात्मनाम्। वेदसंन्यासिकानां तु कर्मयोगं निबोधत (मनु० ६।८६) ३. वेदान्तं विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः। (मनु० ६।९४) संन्यस्य सर्वकर्माणि कर्मदोषानपानुदन्...एवं संन्यस्य कर्माणि स्वकार्य परमोऽस्पृहः। संन्यासेनापैत्येनः प्राप्नोति परमां गतिम्॥ (मनु० ६।९५-५६)॥ ४. अन्त्याश्रमिभ्यः परमं पवित्रम्। (श्वेताश्वर० ६।२२) इत्यादयः संन्यासिधर्मा उच्यन्ते।

**संन्यासिन्—** (सा०) यतिः परिव्राजको भिक्षुश्चतुर्थाश्रमी अत्याश्रमी संन्यासीत्यनर्थान्तरम्। (पर्यायाः)।

**सपरिश्रयण—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे हविर्धानशकटयोः छदिर्भिः सम्यगाच्छादनं सपरिश्रयणमुच्यते।

**सपिण्डीकरणश्राद्ध—** (स्मार्त०) पिण्डपितृयज्ञविकृतिभूतश्राद्धविकृतौ एकोद्दिष्टे श्राद्धप्रकरणे १. संवत्सरे पूर्णे त्रिपक्षे द्वादशाहे वा यदहर्वा वृद्धिरापद्येत चत्वारि पात्राणि सतिलगन्धोदकानि पूरयित्वा त्रीणि पितृणामेकं प्रेतस्य। प्रेतपात्रं पितृपात्रेष्वासिञ्चति 'ये समानाः' इति द्वाभ्याम्। एतेनैव पिण्डो व्याख्यातः। इति प्रेतस्य सपिण्डीकरणमुच्यते। तत्र द्वादशाहे पितुः सपिण्डीकरणमहिताग्निः कुर्यात्। त्रिपक्षे वृद्धि प्राप्तौ संवत्सरेवाऽनाहिताग्निः कुर्यादिति व्यवस्था। (पा० गृ० श्राद्धसूत्र० ५ गदाधरः)। २. सपिण्डीकरणं प्रेतत्वनिवृत्त्या पितृत्वप्राप्त्यर्थम्। सपिण्डीकरणात् प्राक् पार्वणं नास्ति। द्र० मी०को० पृ० ४१३८।

**सप्तग्राम्यपशु—** (सा०) १. अजा अश्वो गौर्महिषी वराहो हस्त्यश्वतरी च सप्त ग्राम्याः पशवः (बौधायनः) २. अजाविकं गवाश्वं च गर्दभोष्ट्रनरस्तथा सप्त वै ग्राम्य पशवो गीयन्ते कविसत्तमैः॥ ३. सप्त ग्राम्याः पशवो गो अश्वमजाविकं पुरुषश्च गर्दभश्चोष्ट्रश्च सप्तमे। अश्ववरमुहैके ब्रुवते। द्र० बौ० श्रौ० २४।५ श्रौ०को० १ भा० पृ० ७६१।

**सप्तग्राम्यौषधि—** (सा०) तिलमाषव्रीहियवाः प्रियङ्ग्वोऽणवो गोधूमाः सप्तमे। कुलथानुहैकके ब्रुवते।

**सप्तच्छन्दस्—** द्र० छन्दःपरिशिष्ट—।

**सप्तजिह्वा—** सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे कालीकराली च मनोजवा च सुलोहिता च सुधुम्रवर्णा। स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्तजिह्वाः। (तु०—तै० सं० सा० ४।६।५)।

**सप्तत्रिंशद्रात्रसत्रस्याहःक्लृप्ति —** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे सप्तत्रिंशद्रात्रसत्रे प्रायणीयोऽतिरात्रः १, चत्वारोऽभिप्लवाः षडहाः २।२५, पृष्ठ्यः षडहः २६-३१, चत्वारश्छन्दोमाः ३२-३५, महाव्रतम् ३६, उदयनीयोऽतिरात्रः ३७ इति सप्तत्रिंशद्दिनानि। इदं सप्तत्रिंशद्रात्रसत्रं प्रकृतिविहितम्। तस्य षडहार्थे दशरात्रात्परं महाव्रतम्, प्रथमोत्तमौ प्रायणीयोदयनीयावतिरात्रौ इत्यहानि पूर्यन्ते आवापप्रकारेण। द्र० अहीनाहर्गण अहीन सत्राहर्गणानामङ्गप्रधानविधि—, २ आवाप-

स्थानसत्राहीनतन्त्रकार्यत्व-सत्र प्रकृति-प्रकृतिविहितसत्र— द्र० ।

**सप्तदश—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे सप्तदशसंज्ञकोऽतिरात्रो द्व्यहोऽहीनः । स चातिरात्रसंस्थः अन्नाद्यकामस्य । तस्मिन् सप्तदशोऽतिरात्रे द्वादश उपसद् दिनानि ज्योतिर्गौः द्वे सुत्यादिने षोडश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता सम्पद्यते । अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां त्रिंशद्दिनेषु समाप्तिविधानात् । द्र० अहीनाहर्गण सत्राहर्गणानामङ्गप्रधानविधि—, अहीनअहीनसत्रस्योपाय—, अहीनप्रकृति-, सत्राहीनतन्त्रकार्यत्व— ।

**सप्तदशरात्रसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे सप्तदश रात्रसत्रे प्रायणीयोऽतिरात्रः १, ज्योति, २, गौः ३, आयुः ४, गौः ५, आयुः ६, पृष्ठ्यः षडहः ७-१२, चत्वारश्छन्दोमाः १३-१६, उदनीयोऽतिरात्रः १७ इति सप्तदशाहनि इदं सप्तदशरात्रं प्रकृतिविहितम् तस्मात् पञ्चाहार्थे अभिप्लवषडहस्य आदिमानि पञ्चाहानि, दशाहार्थे द्वादशिको दशरात्रः (पृष्ठ्यः षडहश्चत्वारश्छन्दोमाः) प्रथमोत्तमौ प्रायणोदयनीयौ इति आवापप्रकारेण सप्तदशाहानि पूर्यन्ते इति प्रकृतिविहितमुच्यते । अहीनसत्राहर्गणानामङ्गप्रधानविधि—, सत्राहीनतन्त्रकार्यत्व—, २. आवापस्थान—, सत्रप्रकृति—, प्रकृतिविहितसत्र— द्र० ।

**सप्तदशस्तोमविष्टुति—** (औ०) सोमयज्ञेषु एकाहाहीनसत्रेषु सप्तदशस्तोमस्य तिस्र एव ऋचः पर्यायत्रयेण आवृत्त्या गीयमानाः सप्तदशसंख्याका भवन्ति । तत्र प्रथमे पर्यायेप्रथमा ऋक् त्रिवारं द्वितीया तृतीया च एकैकवारं मिलित्वा प्रथमे पर्यायि पञ्च जाताः । द्वितीये पर्यायि प्रथमा तृतीया च ऋक् एकैकवारं द्वितीया ऋक् तु त्रिवारं ज्ञेया इति द्वितीये पर्यायि पञ्च जाताः । तृतीये पर्यायि प्रथमा ऋक् एकवारं, द्वितीया त्रिवारं, तृतीया च त्रिवारं इति तृतीये पर्यायि सप्त सप्तजाताः इति सप्तदशत्वं सिद्धं भवति । द्र० मी०को० पृ० ४१३९ ।

**सप्तरात्र—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे सप्तसु सप्तरात्रेष्वन्तिमे सप्तरात्रे द्वादशोपसद्दिनानि पृष्ठ्यस्तोमस्य (पृष्ठ्य एव षडहः केवलं बृहद्रथन्तरपृष्ठः पृष्ठस्तोमस्तस्य) षडहानि विश्वजिच्च सप्तममहरिति सप्त सुत्याः, एकादश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीनद्वादशाहवर्जितानां सर्वेषामहीनानां समाप्तिदर्शनात् । (तु०—आ० श्रौ० १० । ३ ।२५ नारायणः) । द्र० विष्टुति— ।

**सप्तविंशतिरात्रसत्रस्याहःक्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ रात्रिसत्रप्रकरणे सप्तविंशतिरात्रसत्रे प्रायणीयोऽतिरात्रः १, ज्योतिः २, गौः ३, आयुः ४, द्वौ अभिप्लवौ ५-१६, पृष्ठ्यः षडहः १७-२२, चत्वारश्छन्दोमाः २३-२६, उदयनीयोऽतिरात्रः २७.इति । सप्तविंशतिरहानि । इदं सप्ततिरात्रं प्रकृतिविहितम् । तस्य त्र्यहार्थे त्रिकद्रुकाः, षडहार्थेः अभिप्लवः, दशाहार्थे द्वादशिको दशरात्रः, प्रथमोत्तमौ प्रायणीयोदयनीयावति रात्रौ इत्यहानि पूर्यन्ते इति प्रकृतिविहितत्वमुच्यते । द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधान विधि-सत्रप्रकृति—, २ आवाप— ।

**सप्तसमिध—** (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे अश्वत्थोदुम्बरपलाशशमी विकङ्कताशनिहतपुष्करपर्णरूपाः सप्त सप्त समिधः प्रयुज्यन्ते। (तु०—तै० सं० सा० ४।६।५)

**सप्तहोतृ—** (सा०, आध्व०) महाहविर्होता १, सत्यहविरध्वर्युः २, अच्युतपाजा अग्नीत् ३, अच्युतमना उपवक्ता ४, अनाधृष्यश्चाऽप्रतिधृष्यश्च यज्ञस्याभिगरौ ५-६, अयास्य उद्गाता ७, इति सप्तहोतारो यस्मिन् स सप्तहोता सप्तहोतृमन्त्रविशेष उच्यते। द्र० श्रौ०को० १. भा० पृ० १२५। तस्य होमव्याख्याननिमित्तः क्रत्वर्थप्रयोगविधिस्तु—दीक्षिष्यमाणः सप्तहोतारं मनसानुद्रुत्याऽऽहवनीये जुहुयात्। तस्य ग्रहो भवति। ग्रहान् गृहीत्वा सप्तहोतारं जुहोति। यज्ञायज्ञीयस्य स्तोत्रे सप्तहोतारं (व्याचक्षीत) (तु०—तत्रैव पृ० १२८)। सप्तहोत्रा सौम्यमध्वरमभिमृशेत्, सप्तहोतारं वदेत् पुरस्ताद् आर्भवस्य पवमानस्य, यो यज्ञस्य संस्थामनुपावीयान् मन्येत तं सप्तहोत्रा याजयेत् (तु०—तत्रैव पृ० १३०-३१)। पूतिदशहोतृ-चतुर्होतृ-पञ्चहोतृ-षड्ढोतृ-सप्तहोतृसमाख्येषु पञ्चसु चतुर्होतृसंज्ञकेषु मन्त्रेषु पञ्चमः सप्त होतृमन्त्र उच्यते।

**सप्तहोतृ—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होतृ-मैत्रा-वरुण-ब्राह्मणाच्छंसि-पोतृ-नेष्ट्-अग्नीध्र-अच्छावाकाः सप्तर्त्विजः सप्त होतारः होत्रा वोच्यन्ते (तु०—आ०श्रौ० ५।५।१५-१७)।

**सप्तहोतृचमसप्रस्थितयाज्या—** द्र० होतृचमसप्रस्थितयाज्या—।

**सप्तापवर्गोद्भिद्बलभिद्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमारतिरात्रविकृतौ एकाहप्रकरणे तिस्रो दीक्षाः तिस्र उपसदः सप्तममहः सुत्या इत्येवं सप्तापवर्गौ उद्भिद्बलभिदौ एकाहौ सप्तापवर्गौ भवतः (तु०—द्रा० श्रौ० ९।४।१ धन्वी।)

**सप्तारण्यौषधि—**(सा०) श्यामाकाश्च नीवाराश्च जर्तिलाश्च गवीधुकाश्च गार्मुताश्च वास्त्वानि च वेणुयवाश्च सप्तमे। कुरुविन्दानु हैके ब्रुवते। द्र० बौ० श्रौ० २४।५, श्रौ०को० १ भा० पृ० ७६१; ग्राम्यौषधि-।

**सप्तिस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे द्वन्द्वसोमेषु उद्भिद्बलभिदाख्ये द्वन्द्वसोमे 'एकस्यै हिंकरोति—स प्रथमया। तिसृभ्यो हिंकरोति—स पराचीभिः। तिसृभ्यो हिंकरोति—स पराचीभिः' इति वर्धमानस्य सप्तिस्तोमस्य जातिसंहारपक्षे विष्टुतिः। युग्मायुक् संहारपक्षे तु 'द्वाभ्यां हिंकरोति—स प्रथमया। द्वाभ्यां हिंकरोति—स प्रथमया। द्वाभ्यां हिंकरोति—स प्रथमया। तिसृभ्यो हिंकरोति—स पराचीभिः' इति। (तु०—आ०क० ५।७।४ वरदराजः)।

**सभ्य—** (सा०) सभायां गृहे मध्ये भवः अग्निः सभ्य उच्यते। द्र० मी०को० पृ० ४१५१।

**समन्त्रककर्मन्—** (सा०) इष्टिपशुसोमयज्ञादिषु मन्त्रेण सह क्रियमाणं कर्म समन्त्रकं कर्मोच्यते। मन्त्रास्तावच्छ्रुत्यादिना क्वचित् क्रियाया आदौ, क्वचित् क्रियाया अन्ते, क्वचिच्चोपस्थानाभिमन्त्रणादिक्रियायाः समकालमेव करणत्वेन विनियुक्ता दृश्यन्ते इति विशेषोऽवगन्तव्यः। द्र० मन्त्र—।

**समभिव्याहार—** द्र० वाक्य। समभिव्याहारशब्दः संनिध्युच्चारणवाची—, मी०को० पृ० ४१५३।

**समयाविषित—** (सा०) हविर्यज्ञानां द्वितीये अग्निहोत्रप्रकरणे अन्यत्र च कालविधाने १. अस्तमयसमयं प्राप्तोऽर्धास्तमितः सूर्यः समयाविषितः काल उच्यते। (तु०—ऐ० ब्रा० सा० ५।२५। २. समयाध्युषितः समयाविषितः समयः अस्तमयः, तमध्युषितः प्राप्तः सूर्यः। समयाध्युषितः सूर्यः। **द्र०** मी०को० पृ० ४१५३।

**समर्थ—** (सा०) यथार्थाभिधायी शब्दः समर्थ इत्युच्यते। (तु०— आ० श्रौ० ३।२।१७ टी०)।

**समस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रवि-कृतिषु एकाहाहीनसत्रेषु अहर्गणेषु स्तोमविधौ त्रिकप्रभृतयस्त्र्युत्तराः ये व्यत्यासं युजोऽयुजश्च ते सर्वे समाः स्तोमा उच्यन्ते। यथा त्रिकः षट्को नवक इत्यादयः। (तु०—द्रा० श्रौ० १७।१ धन्वी)। **द्र०** वर्धमानसमस्तोमपर्यायक्लृप्ति—, स्तोमभेद—।

**समानगोत्रत्व—** (सा०) इष्टिपशुसोमयज्ञादिषु गोत्रप्रवरप्रकरणे एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते तावत् समानगोत्रत्वं भृगुमङ्गिरसं बिना॥(तु०—संस्कारगणपतिः १।४)।

**समाख्या—** (सा०) समाख्या यौगिकः शब्दः। सा सति संबन्धे भवति, यथा 'पाचको लावकः' इति। तत्र पाचकशब्दमुपलभ्य पचतिनाऽस्य संबन्ध इति गम्यते। एवं वेदेऽपीति। सा च द्विविधा वैदिकी लौकिकी चेति। याजुर्वेदिकपदार्थेषु 'आध्वर्यवं' इति, आर्ग्वेदिकेषु 'हौत्रं' इति, सामवेदिकेषु 'औद्गात्रं' इति, तथा 'होतृचमसः' इति पात्रविशेषे, 'पौरोडाशिकं' दार्शपूर्णमासिकपदार्थेषु या समाख्या सा 'आध्वर्यवमधीते' इत्यादि वेदप्रयुक्तत्वात् वैदिकी। 'सोमचमसः' इत्याद्या याज्ञिक प्रयुक्ता लौकिकीति।

**समानच्छन्दस्कासुगान —** (औ०) सोमज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रविकृतिषु एकाहाहीनसत्रेषु समानच्छन्दस्कास्वेव तिसृषु ऋक्षु साम गातव्यम्, न विषमच्छन्दस्कासु। अन्यथा हि संशर-विलेशप्रसङ्गः स्यात्। तत्र संशरः हिंसा, विलेशः अल्पत्वम्। **द्र०** मी०को० पृ० ४१६२; संशर—।

**समानजन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ गवामयने सात्रिके विंशे विश्वजित्येकाहे यजमानः सर्वस्वदक्षिणां दत्त्वा समानजनस्य गृहे तिस्रो रात्रीर्वसेत्। तत्र समानगोत्रो जनः समानजनः। यद्वा ब्राह्मणमात्रम् (तु०— तां० ब्रा० सा० १६।६।९)। ब्राह्मणः समानजनः, सगोत्रः अविवाह्यः समानजनः, यत्र वसेत् स समानजनः इति (तु०— ला०श्रौ० ८।२। १०।१२ अग्निस्वामी) जनपदो मनुष्यसंघो यत्र वसति (स) समानजनः इति (तु०— ला०श्रौ० ८।२।१०-१२ अग्निस्वामी) जनपदो मनुष्यसंघो यत्र वसति (स) समानजनः (तु०—द्रा०श्रौ० धन्वी)।

**समानयन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे द्वितीये वरुणप्रघासपर्वणि १. अध्वर्युः 'समिधो यज' इति प्रेष्यति। वषट्कृते उभौ (अध्वर्युप्रतिप्रस्थातारौ) सह स्वाऽग्नौ जुहुतः। ततः उभयोरपि चतुर्थाष्टमयोः (प्रयाजयोः) समानयनम्। तत्र उपभृदाज्यस्य जुह्वां ग्रहणं समानयनमित्युच्यते। तत्र अध्वर्युरष्टमे (प्रयाजे) सर्वं समानयते। प्रतिप्रस्थाता उपभृति अनुयाजार्थं आज्यं परिशेषयति इति विशेषोऽवगन्तव्यः। **द्र०** श्रौ०प०नि० पृ० ९३। २. औपभृताज्यस्य

जुह्वां समानयनं प्रयाजार्थं ग्रहणं समानयनमुच्यते। तत्र दर्शपूर्णमासयोः श्रूयते 'अतिहायेडो बर्हिः प्रतिसमानयति जुह्वामौपभृतम्' इति समानेयनम् अर्थात् इट्संज्ञक (चतुर्थ) प्रयाजोत्तरं बर्हिःसंज्ञक (अष्टम) प्रयाजात् पूर्वं औपभृताज्यस्य जुह्वां समानयनमुच्यते। तच्च प्रधानप्रयोजकं न संस्कार कर्म। द्र० मी०को० पृ० ४१६३।

**समापत्ति—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे 'प्रकृतिदर्शनं समापत्तिः।' (शौच० ४।१०७)।

**समारोपण—** द्र० अग्निसमारोपण—।

**समावत्ता—** (सा०, आध्व०) इष्टिपशुसोमयज्ञेषु यावत्यो दातव्या दक्षिणाः प्राप्ताः ताः समं विभज्य दक्षिणानां नयन- (दान) विभागः समावत्तेत्युच्यते (तु०—आ०श्रौ० ९।१। १० नारायणः)। द्र० दक्षिणाविभाजन—।

**समाहनन—**(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च समाहननं नाम यज्ञपात्राणां तूष्णीं शम्यया ताडनं समाहननमुच्यते। तत्र दृषदुपलयोः समन्त्रकं त्रिःताडनं भवतीति विशेषोऽवधेयः। द्र० श्रौ०प०नि०। पृ० १५;१७।

**समित्प्रयाजप्रैष —** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च दण्डप्रदानानन्तरं अध्वर्युणा समिद्भ्यः प्रेषितः सन् मैत्रावरुणः आह—'होता यक्षदग्निं समिधा सुषमिधा समिद्धं नानाभावा पृथिव्याः सङ्गथे वामस्य वर्ष्मन् दिव इडस्पदे वेत्वाज्यस्य होतर्यज' इति प्रथमः समित्प्रयाजप्रैष उच्यते। तत्र प्रैषांश्च अनुवाक्यां च सप्रैषे पूर्वां प्रैषात् पर्यग्नि-स्तोकमनोता- उन्नीयमानसूक्तानि च सोमे, होतृवदनात् दक्षिणतः प्रह्वोऽवस्थाय वेद्यां दण्डमवष्टम्य ब्रूयात्। अन्यदुपविश्य पठेत् इति विशेषोऽवधेयः। द्र० दण्डप्रदान—, श्रौ०प०नि० पृ० १४३।

**समिदाधान—** (आध्व०) हविर्यज्ञानां द्वितीये अग्निहोत्रप्रकरणे उदकाहुतिहोमानन्तरं प्रादेशमात्रं समित्त्रयं गृहीत्वा आहवनीयपूर्वदेशेन गत्वा दक्षिणत उदङ्मुखः तिष्ठन् 'दीदिहि स्वाहा' इति मन्त्रेण एकां समिधमाहवनीये आधाय प्रजापतिमुद्दिश्य द्वे समिधौ आदधाति। ततो यथैतं प्रत्येत्य गार्हपत्यस्य दक्षिणतः उदङ्मुखः तिष्ठन् स्वाहान्तेन 'दीदाय' इति मन्त्रेण गार्हपत्ये एकां समिधमाधाय समिद्द्वयं पूर्ववदादधाति। ततः प्रदक्षिणमावृत्य दक्षिणाग्नेर्दक्षिणत उदङ्मुखस्तिष्ठन् स्वाहान्तेन 'दीदाय' इति मन्त्रेण एकां समिधमाधाय पूर्ववत् समिद्द्वयमादधाति। तदिदं उदकहोमानन्तरं समिधामाधानं समिदाधानमुच्यते। द्र० श्रौ०प०नि० पृ० ६६। उदकाहुतिहोम—।

**समिदाधान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमविकृतौ एकाहप्रकरणे राजसूये नमस्कारमन्त्रान्ते 'यद्भद्रं ददामि' इत्यादिमन्त्रेण विसृज्य वाचं वाङ्नियमं परित्यज्य अभिषेकासनादुत्थितः क्षत्रियो यजमानः 'समिदसि सम्वेङ्क्षस्वेन्द्रियेण वीर्येण स्वाहा' इति मन्त्रेण आहवनीये समिधमभ्यादधाति। (प्रक्षिपति) इति राजसूये समिदाधानमुच्यते (तु०— ऐ० ब्रा० सा० ८।९)।

**समिद्धोम—** द्र० पञ्चसमिद्धोम—।

**समिद्वद्धोम—** (सा०, आध्व०) इष्टिपशुसोमादिषु सर्वेषु यज्ञेषु अनादिष्टा समित्। आ (विशेषाभावात्) आदेशादेव समिधं जानीयात्।

विज्ञायते न असमित्के जुहुयात्, यदसमित्के जुहुयात् यथाऽजिह्वेऽन्नं दद्यात् तादृक् तत्। तस्मात् समिद्वत्येव होतव्यम्। अनादिष्टे उपसमाधायैव होतव्यम्। द्र० श्रौ०को० १ भा० पृ० ७६२।

**समिध्**— (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे १. बर्हिः संभरणानन्तरं अध्वर्युः इध्मदेशं गत्वा असिदेन श्वपरशुना वाः इध्मं छिनत्ति तूष्णीम्॥ तस्मिन् एकविंशतिसंख्याकानि काष्ठानि भवन्ति। तत्र त्रितयं काष्ठानामाहवनीयस्य पश्चात् दक्षिणत उत्तरतश्च प्रथमेमखलाया उपरि स्थापनार्थं मेखलापरिमितायां परितः आहवनीयविधानात् पुरस्तात् सूर्यस्य मनसा परिधित्वकल्पनात् परिधिसंज्ञकं भवति। अन्यानि (अष्टादशानि) काष्ठानि प्रादेशमात्राणि भवन्ति। तत्र पञ्चदश सामिधेन्यर्थं, एकम्, अनुयाजार्थं, द्वे आहवनीयाऽऽयतनस्यान्तर् ऊर्ध्वाग्रे दक्षिणोत्तरयोर्भागयो रोपणार्थे भवतः। तान्येतान्यष्टादश काष्ठानि समित्पदवाच्यानि समिध उच्यन्ते। द्र० श्रौ०प०नि० पृ० १३.। २. पलाशस्य अन्यस्य वा यज्ञियकाष्ठस्य प्रादेशपरिमाणं काष्ठं समित् इत्युच्यते। द्र० श्रौ०प०नि० पृ० १९; इध्म—, परिधि—।

**समिष्टयजुर्होममन्त्र** — (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु प्रधानयागेषु १, इम्यक् इष्टाः देवता इज्यन्ते अनेन स होमः समिष्टयजुः, मन्त्रश्च समिष्टयजुरुच्यते (तु०—का०श्रौ० १ ।७ ।२ टि० विद्याधरः। तत्र बर्हिरेकदेशानुप्रहरणानन्तरमुत्थाय दक्षिणं पादं वेदिमध्ये निधाय ध्रुवया मन्त्रेण जुहोतीति, अयं होमः समिष्टयजुर्होम उच्यते। येन मन्त्रेण जुहोति स मन्त्रः समिष्टयजुरित्युच्यते। द्र० श्रौ०प०नि० पृ० ४०। मन्त्रश्च 'देवा गातुविदः (मा०स० २ ।११ तै०)। २. यस्तु समस्तकार्यनिर्वृत्त्युत्तरकालं साधारणः शेषो भविष्यति तस्य तस्य समिष्टयजुराख्यं प्रतिपत्त्यन्तरं आम्नातम्। यदा तु इदमपि उपस्तरणादिवदेव अर्थकर्म अवधार्यते तदा सुतरां शेषाभावः। समिष्टयजूंषि दर्शपूर्णमासयोः 'देवा गातुविदः' इति अन्तर्वेदि ऊर्ध्वस्तिष्ठन् ध्रुवया आहवनीये त्रीणि समिष्टयजूंषि जुहोति। मध्ये स्वाहाकारे बर्हिरनुप्रहरति। हुते वा अनुप्रहरतीति। समिष्टयजूंषि अग्निष्टोमे तृतीयसवनान्ते स्तीर्णे वेदे नवगृहीतमाज्यम् अध्वर्युः गृहीत्वा 'धातारातिः इत्यन्तर्वेदि ऊर्ध्वस्तिष्ठन् जुह्वा आहवनीये नव समिष्ट यजूंषि जुहोति। द्र० मी०को० पृ० ४१७३ श्रौ०को० २. भा० पृ० ४७३। सत्राहीनेषु तु तृतीयसवनान्ते पत्नीसंयाजानान्तत्वात् समिष्टयजूंषि न भवन्ति। समिष्टयजुषां स्थानं हि पत्नीसंयाजेभ्यः परं भवतीति विशेषोऽवगन्तव्यः। द्र० सत्राहीनतन्त्रकार्यत्व—।

**समुह्यपुरीषचित्**— (अव्य०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनविकृतिः स्थण्डिलस्य समन्तात् सर्वाभ्यो दिग्यः समुह्यः समूहीकृतः पूञ्जीकृतः पुरीषो मृत्तिका तदिव चितिः स्थण्डिलं समुह्य पुरीषचिदुच्यते। अस्यां चितौ इष्टकास्थाने पुरीष एव भवतीति विशेषोऽवधेयः। (तु०—का०श्रौ० १६ । ५ ।९ विद्याधरः)।

**समूढद्वादशाह**— (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे यत्र ऐन्द्रवायवाग्रत्व-शुक्राग्रत्व-आग्रयणाग्रत्वानां त्रिः परिवर्तमानानां समूहनं

अस्तिक्रमभङ्गो नास्ति स समूढः द्वादशाह उच्यते। यत्र तु उक्ताग्रतत्वानां व्युत्क्रमेण आवृत्तिः स व्यूढः। तत्र अग्रत्वक्रमः-द्वादशस्वहःसु ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः। अथेतरेषां नवानामह्नां ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम द्वितीयमहः अथाऽऽग्रयणाग्रम्। (तृतीयमहः)। अथैन्द्रवायवाग्रम् (चतुर्थमहः) अथ शुक्राग्रम् (पञ्चममहः), अथाग्रयणाग्रम् (षष्ठमहः)। अथैन्द्रवायवाग्रम् (सप्तममहः) अथ शुक्राग्रम् (अष्टममहः), अथाग्रयणाग्रम् (नवममहः) इति त्र्यनीकाक्रमेण समूढः द्वादशाह उच्यते। द्र० मी०को० पृ० ४१८९।

**सम्पद्**— (सा०) सम्पत्, सम्पत्तिः, हेतुः, निमित्तम्, प्रमाणम्, कारणमित्यनर्थान्तरम् (तु०—ला०श्रौ० १०।३।९ अग्नि- स्वामी)।

**सम्पातसंज्ञकनिविद्धानसूक्त**— (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहप्रकरणे पृष्ठ्यषडहस्य प्रथमेऽहनि माध्यन्दिनसवने होतुः 'आयात्विन्द्रो वस उप' (ऋ० ४।२१।१-११) इति मरुत्वतीयशस्त्रस्य निविद्धानं सूक्तम्। 'आ न इन्द्रो दूरात्' ऋ० ४।२०।१-११) इति निष्केवल्यस्य निविद्धानं सूक्तम्। एतयोः सम्पातः इति संज्ञा प्रतिपाद्यते। संपत्तिं प्राप्नुवन्त्याभ्यां यजमानाः सर्वाँ-ल्लोकानितिसंपातौ। अतः निष्केवल्यमरुत्वतीयनिविद्धानसूक्तयोः वैकृतयोः संपातः संपतति सम्यक् प्राप्नोति लोकानिति संपातत्वं नाम संपन्नम्। (तु०—ऐ० ब्रा० सा० ४।३०)।

**सम्पातसूक्तवदहन्**— (हौ०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतानि सात्रिकाणि चतुर्विंशतिरहानि चतुर्विंशमहाव्रताभिजिद् विश्वजिद् विषुवत्संज्ञकानि चतुर्विंशादिमहाव्रतम् पञ्च अविवाक्यं चाहर्वर्जयित्वा पृष्ठ्याभिप्लवगतान्यहानि तत्प्रकृतिकच्छन्दोमस्वरसामगतान्यहानि च सम्पातसूक्तसहितानि अष्टदशाहानि सम्पातवन्ति अहान्युच्यन्ते। द्र० सम्पातसूक्तशंसन—।

**सम्पातसूक्तवतां सर्वपृष्ठयुक्तानामह्नां मा० सवने होत्रकशस्त्रक्रम**— (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्रेषु होत्रकैः सम्पाताहःसु शाक्वरवैरूपरैवतानां पृष्ठसाम्नां स्तोत्रियानुरूपाः १, सामप्रगाथाः २, कद्वन्तः प्रगाथाः ३, आरम्भणीयाः ४, सामसूक्तानि ५. अहीनसूक्तानि ६, एतावत् (शस्त्रं) सर्वेषां समानम्। ततोऽहरहःशस्यसम्पातौ (क्रमेण) मैत्रावरुणस्य इतरयोः (ब्राह्मणाच्छंस्यच्छावाकयोः) सम्पाताहरहः शस्ये (विपर्यासेन) (तु०—आ०श्रौ० ८।४।१८ नारायणः)। द्र० सम्पात-सूक्तशंसन—, सर्वपृष्ठाहर्निमित्त—, होत्रकपृष्ठ—, होत्रकसामसूक्त—।

**सम्पातसूक्तवतां सर्वपृष्ठयुक्तानामेकाहीभवतामह्नां मा०सवने होत्रकशस्त्रक्रम**— (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सम्पातसूक्तवत्स्वहः होत्रकाणां मा० सवने होत्रकाणां शस्त्रेषु सर्वेषां कद्वत्प्रगाथानां स्थाने नित्याः प्रगाथाः ततः सामसूक्तानि, अहीनसूक्तानि, सम्पाता अन्त्यान्यैकाहिकानि, इति क्रमः (शस्यविधिः) भवति (तु०—आ०श्रौ० ८।४।१८ नारायणः)। द्र० सर्वपृष्ठाहर्निमित्त-होत्रकपृष्ठ—। होत्रकसामसूक्त—।

**संम्पातसूक्तशंसनप्रकार**— (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्र-

प्रकरणे सात्रिकपृष्ठ्याभिप्लवषडहेषु तत्र-कृतिकेषु छन्दोमस्वरसामसु चाहर्गणेषु चतुर्विंशमहाव्रताभिजिद् विश्वजिद्विषु-वत: पञ्च अविवाक्यं चाहर्वर्जयित्वा होत्रका: अहाह: (प्रतिदिनं) अहीन सूक्तस्थाने 'एवा त्वामिन्द्र वज्रिन्' (ऋ० ४।१९), 'यन्न इन्द्रो जुजुषे यच्च वष्टि' (ऋ० ४।२२), कथा महामवृधत् कस्य होतु:' (ऋ० ४।२३), इन्द्र: पुरभिद्रतिरत् (ऋ० ३।३४), 'य एक इद्धव्य चर्षणीनाम्' (ऋ० ६।२२), 'यस्तिग्म शृङ्गो वृषभ:'(ऋ० ७।१९), 'इमा-मूषु प्रभृतिं' (ऋ० ३।६६), 'इच्छन्ति त्वा सोम्यास:'(ऋ० ३।३०), 'शासद्वह्निर्दुहितु:' (ऋ० ३।३१) इत्येतानि संपातसंज्ञकानि नव सूक्तानि शंसन्ति। अर्थात् संपाता: माध्यन्दिन सवने होत्रकाणां शस्त्रेषु यान्यही-नसूक्तस्थानानितेषु, स्थानेषु भवन्तीति (तु०—आ०श्रौ० ७।५।२० नारायण:) ऐ० ब्रा० सा० ६।१९)। तै: सह 'सद्यो ह जात:' (ऋ० ३।४९), 'उदु ब्रह्माण्यैरत' (ऋ० ७।२४), 'अभि तष्टेव दीधया' (ऋ० ३।३८) इति त्रीण्यन्यानि अहरह: शस्यानि सूक्तानि च प्रतिदिनं शस्यन्ते। एतानि नव च त्रीणि च मिलित्वा द्वादश संपद्यन्ते। तदु-क्तम् 'तानि वा एतानि नव। त्रीणि चाह रह: शस्यानि' इति (ऐ० ब्रा० सा० ६।१९)। तत्रानुष्ठाने शंसनप्रकार:—तत्र अहरह: शस्यसूक्तानि प्रतिदिनं संपातानां पुरस्तात् उपरिष्टाच्च संयोज्य ऊर्ध्वमारम्भणीयाभ्य: संपातान् होत्रका: षडहेषु (पृष्ठ्याभिप्लवेषु) माध्यन्दिनसवने अहीनसूक्तस्थाने शं-सन्ति। तद्यथा—अभिप्लवषडहस्य पूर्वत्र्यहे (प्रथमद्वितीयतृतीयेष्वह:सु) प्रथमेऽहनि मैत्रावरुण: स्वकीयस्य संपातसूक्तस्य पुर-स्तात् 'सद्यो ह जात:' इति स्वकीयमहरह: सूक्तं शस्त्वा 'ए वा त्वामिन्द्र' इति स्वकीयं संपातसूक्तं शंसति। द्वितीयेऽहनि तदेव सद्योहजातीयं स्वकीयमहरह: शस्यसूक्तं पुरस्तात् शस्त्वा 'यन्न इन्द्रो जुजुषे' इति स्वसंपातसूक्तं शंसति। तृतीयेऽहनि तदेव सद्योहजातीयं स्वकीयमहरह: शस्यसूक्तं पुरस्तात् शस्त्वा 'कथामहामवृधत्' इति स्वकीयं संपात सूक्तं शंसति। इति प्रथ-मानि त्रीणि संपातसूक्तानि संपन्नानि। एवं ब्राह्मणाच्छंसी प्रथमेऽहनि 'इन्द्र: पूर्भिदाति-रत्' इति स्वकीयसंपातसूक्तस्य उपरिष्टात् 'उदु ब्राह्मण्यै इत' इति स्वीयं अहरह: शस्यसूक्तं शंसति। द्वितीयेऽहनि 'य एक इद्धव्यश्चर्षणीनाम्' इति स्वीयसंपातसूक्त-स्योपरिष्टात् तदेव 'उदुब्रह्माण्यै रत' इति स्वीयमहरह: शस्यसूक्तं शंसति। तृतीयेऽहनि 'यस्तिग्मशृङ्ग:' इति स्वीय संपातसूक्तस्योपरिष्टात् तदेव 'उदु ब्रह्माण्यै रत' इति स्वीयमहरह: शस्यसूक्तं शंसति। इति द्वितीयानि त्रीणि संपातसूक्तानि विप-र्यासेन शंसितानि भवन्ति। अच्छावाक: प्रथमेऽहनि 'इमामू षु प्रभृतिम्' इति स्वकी-यसंपातसूक्तस्योपरिष्टात् 'अभि तातष्टेव दीधया:' इति स्वकीयमहरह: शस्यसूक्तं शंसति। द्वितीयेऽहनि 'इच्छन्ति त्वा सोम्यास:' इति स्वीयसंपातसूक्तस्योपरि-ष्टात् अभितष्टेवेति स्वकीयमहरह: शस्य-सूक्तं शंसति तृतीयेऽहनि 'शासद् वह्निर्दुहितु:' इति स्वीयसंपातसूक्तस्योपरि-ष्टात् अमितष्टेवेति स्वकीयमहरह: शस्य-सूक्तं शंसति। इति तृतीयानि त्रीणि संपातसूक्तानि विपर्यासेन शंस्तव्यानि भवन्ति। तदित्थं होत्रकाणां अभिप्लवषड-हस्य पूर्वत्र्यहे माध्यन्दिनसवने नवानां संपा-तसूक्तानां त्रयाणामहरह: शस्यसूक्तानां च मिलित्वा द्वादशानां सूक्तानां चतुर्णामहीन-

सूक्तानां स्थानेषु शंसनप्रकार उच्यते। अस्यैव प्रकारस्याऽऽवृत्त्या अभिप्लवषडहस्योत्तरत्र्यहे (चतुर्थपञ्चमषष्ठेष्वहःसु) तथा एवमेव पृष्ठ्यषडहस्य पूर्वत्रयहेऽपि तेषां होत्रकाणां संपातसूक्तशंसनप्रकारोऽवगन्तव्यः। (तु०—ऐ० ब्रा० सा० ६।१८-१९ आ०श्रौ० ७।५।२०-२१) पृष्ठ्यषडहस्योत्तरस्मिंस्त्र्यहे (चतुर्थपञ्चमषष्ठेष्वहःसु तु होत्रका यानि विपर्यासेन शंसनीयानि नवसंख्याकानि यानि च प्रतिदिनं शंसनीयानि त्रीण्यहरहः शस्यान्युक्तानि तेषामुभयविधानामन्तराले स्थाने किञ्चिदावपनीयमृक्समूहं आवन्ते। तत्र मैत्रावरुणः प्रथमे (चतुर्थे)ऽहनि 'अपः प्राचः' (ऋ० १०।१३१)। इत्यारम्भणोयाम्, ततः 'सद्यो ह जातः' (ऋ० ३।४९) इत्यहरहः शस्यं च पुरस्तात् शस्त्वा 'न ते गिरो अपि' (ऋ० ७।२२।५-७) इति न्यूङ्खरहितं प्रथमं विराट् तृचं, ततः 'यजामह इन्द्रम्' (ऋ० १०।२३।१-३) द्वितीयं वैमृदं तृचं चान्तराले वपति। ततः 'आ सत्यो यातु' (ऋ० ४।१६) इत्यहीनसूक्तस्थाने 'एवा त्वामिन्द्र (ऋ० ४।१९) इति स्वीयं संपातसूक्तं शंसति। अथ ब्राह्मणाच्छंसी प्रथमे (चतुर्थ) ऽहनि 'ब्रह्मणा ते' (ऋ० ३।३५।४) इत्यारम्भणीयां शस्त्वा 'तुभ्येदिमा सवना' (ऋ० ७।२२।७-८) इति द्वे, प्र वो महे (ऋ० ७।३१।१० इति प्रथमं विराट् तृचं, 'यदा वज्रं हिरण्यमिदथा रथम्' (ऋ० १०।२३।३-५) इति द्वितीयं वैमृदतृचं चावति। ततः अहीनसूक्तस्थाने 'इन्द्रः पूर्मिदातिरत्' (ऋ० ३।३४) इति स्वीयसंपातसूक्तस्योपरिष्टात् 'उदु ब्रह्माण्यैरत' (ऋ० ७।२४) इति स्वकीयं अहरहः शस्यसूक्तं शंसति। अथ अच्छावाकः (प्रथमे (चतुर्थे)ऽहनि 'उरुं नः' (ऋ० ६।४७।८) इत्यारम्भणीयां शस्त्वा 'प्र वो महे' (ऋ० ७।३१।१०-१२) इति प्रथमं विराट्तृचं 'यो वाचा विवाचो मधुवाचः (ऋ० १०।२३।५-७) इति द्वितीयं वैमृदतृचं चावपति। ततोऽहीनसूक्तस्थाने 'इमामूषु प्रभृतिं' (ऋ० ३।३६) इति स्वीयसंपातसूक्तस्योपरिष्टात् 'अभि तष्टेव' इति स्वकीयं अहरहः शस्यसूक्तं शंसति। अथ द्वितीये (पञ्चमे)ऽहनि मैत्रावरुणः-'अप प्राचः' इत्यारम्भणीयां शस्त्वा 'सद्यो ह जातः' इति स्वीया हरहः शस्यसूक्तं पुरस्तात् शस्त्वा 'यच्चिद्धि सत्यपाः' (ऋ० १।२९) इति प्रथमं पङ्क्तिच्छन्द्रस्कं तृचमोप्य 'आसत्यो यातु' (ऋ० ४।१६) इत्यहीनसूक्तस्थाने 'यन्न इन्द्रो जुजुषे' (ऋ० ४।२२) इति स्वकीयं संपातसूक्तं शंसति ततः द्वितीये (पञ्चमे)ऽहनि ब्राह्मणाच्छंसी 'ब्राह्मणा ते' (ऋ० ३।३५।४) इत्यारम्भणीयां शस्त्वा 'निष्पावया मिथू दृशा (ऋ० १।२९।३-५) इति द्वितीयं पङ्क्तिच्छन्दस्कं तृचमोप्य 'अस्मा इदु प्रतवसे (ऋ० १।६१), 'इत्यहीनसूक्तस्थाने 'एक इद्धव्यश्चर्षणीनाम्' (ऋ० ६।२२) इति स्वीयसंपातसूक्तस्योपरिष्टात् उदुब्रह्माण्यैरत (ऋ० ७।२४) इति स्वकीयमहरहः शस्यसूक्तं शंसति। ततः द्वितीये (पञ्चमे) हनि अच्छावाकः 'उरुं नः' (ऋ० ६।४७।८) इत्यारम्भणीयां शस्त्वा 'समिन्द्र गर्दभं मृण' (ऋ० १।२९।५-७) इति तृतीयं पङ्क्तिच्छन्दस्कं तृचमोप्य 'शासद् वह्निः' (ऋ० ३।२१) इत्यहीनसूक्तस्थाने 'इच्छन्ति त्वा सोम्यासः (ऋ० ३।३०) इति स्वीयसंपातसूक्तस्योपरिष्टात् 'अभितष्टेव दीधया' (ऋ० ३।३८) इति स्वीकीयमहरहः शसूक्तं शंसति। अथ तृतीये (षष्ठे)ऽहनि मैत्रावरुणः 'अप प्राचः'

इत्यारम्भणीयां शस्त्वा 'सद्यो ह जातः' इति स्वीयमहरहः शस्यसूक्तं पुरस्तात् (पूर्वं) शस्त्वा 'इन्द्राय हि द्यौरसुरः' (ऋ० १।१३१।१-३) इति प्रथमं पारुच्छेयं तृचमोप्य 'आ सत्यो यातु' इत्यहीनसूक्तस्थाने 'कथा महामवृधत्' (ऋ० ४।२३) इति स्वकीयं संपातसूक्तं शंसति। ततः तृतीये (षष्ठे)ऽहनि ब्राह्मणाच्छंसी 'ब्राह्मणा ते' इत्यारम्भणीयां शस्त्वा 'वि त्वा ततस्रे (ऋ० १।१३१।३-५) इति द्वितीयं पारुच्छेयं तृचमोप्य 'अस्मा इदु प्रतवसे' इत्यहीनसूक्तस्थाने 'यस्तिग्मशृङ्गो वृषभः' इति स्वीयसंपातस्योपरिष्टात् 'उदु ब्राह्मण्यैरत्' इति स्वकीयमहरहः सूक्तं शंसति। ततः तृतीये (षष्ठे)ऽहनि अच्छावाकः 'उरुं नः' इति आरम्भणीयां शस्वा 'आदित् ते अस्य वीर्यस्य' (ऋ० १।१३१।५-७) इति तृतीयं पारुच्छेयं तृचमोप्य 'शासद्वह्निर्जनयन्त' (ऐ० ब्रा० ६।१८) इत्यहीनसूक्तस्थाने 'शासद्वह्निर्दुहितुः' (ऋ० ३।३१) इति स्वीयसंपातसूक्तस्योपरिष्टात् 'अभि तष्टेव' इति स्वकीयमहरहः शस्यसूक्तं शंसति। ऐ० ब्रा० सा० ६।१८-१९ आ०श्रौ० ७।५।२० २१;११।३४-४०)। तत्र आश्वलायनः आरम्भणीयाभ्य ऊर्ध्वं तृचावापस्थानं विधत्तेतदुक्तम्-तासामूर्ध्वमारम्भणीयाभ्यस्तृचानावपेरन् (आ०श्रौ० ७। ११। ३५)। सायणस्तु यानि विपर्यासेन शंसनीयानि नव संख्याकानि सूक्तानि (संपातसूक्तानि) उक्तानि यानि च प्रतिदिनं शंसनीयानि त्रीणि (अहरहः शस्यानि) उक्तानि तेषामुभयविधानामन्तरालस्थाने आवापस्थानमिति। तदुक्तम्— तान्यन्तरेणावापमावपेरन् (तु०—ऐ० ब्रा० सा० ६।१९। इति विशेषोऽवधेयः।

**सम्पातसोम—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थामग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु ग्रहाणां ग्रहणसमये एकस्य ग्रहस्य ग्रहणानन्तमन्यस्य ग्रहणात् पूर्वं मध्ये यो दशापवित्रस्थः सोमरसः पतति स संपातसोम इत्युच्यते। (तु०—का०श्रौ० ९।६।२४ विद्याधरः)।

**संप्रदाय—** (सा०) संप्रदायः वेदाध्ययनम्। संप्रदायात् वेदं व्याचक्षते यात्रिकाः। द्र० मी०को० पृ० ४१९०।

**संप्रैष—** (आध्व०, सा०) इष्टिपशुसोमयज्ञेषु १. होतारमुद्दिश्य अध्वर्योः प्रैषः संप्रैष उच्यते। २. अध्वर्युप्रैषः संप्रैष उच्यते न मैत्रावरुणप्रैषः। अतः मैत्रावरुणप्रैषचोदनेनैव क्वचिदपि संप्रैष चोदना इति सिद्धान्ती। संप्रैष शब्दश्चायं उभयत्र वर्तते मैत्रावरुणप्रैषे चाध्वर्युप्रैषे च इति देवस्वामी। (आ०श्रौ० २।१६।१५)। एष संप्रैषः, अनुवचनादिषु नित्यः आकांक्षणीयः। तदुक्तम्—'अनुवचनप्रैष याज्यासु नित्योऽध्वर्युतः संप्रैषः' (आ०श्रौ० ५।५।१६)। ३. 'अनुब्रूहि' 'यज' इति संप्रैषौ उच्येते। प्रैषस्य संप्रैषो न विद्यते (तु०—आ०श्रौ० ३।४।१० देवत्रातः)। ४. दीर्घः पठितव्यः (प्रैषः) संप्रैष उच्यते (तु०—आ०श्रौ० २।१९।१८ नारायणः)।

**संभरणी—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु संभ्रियतेऽभिषुतः सरसः सोमः अस्यां सा संभरणी पात्रमुच्यते। तत्पात्रं वारणं महत् पूर्णपात्रं भवतीत्यवधेयः।

**संभार—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां प्रथमे

अग्न्याधानप्रकरणे १. सिकता, ऊषरमृत्तिका, मूषकबिलमृत्तिका, वल्मीकवपा, महाह्रदमृत्तिका, अरण्यवराहविहितमृत्तिका, पद्मनीपत्रं, शर्कराः, षट् हिरण्यशकलानि, अश्वत्थः, उदुम्बरः, पलाशः, शमी, विकंकतः, अशनिहतं, अरण्यौ, मुञ्जकुलायः प्रसिद्धाश्वत्थस्य आर्द्राः सपत्राः सप्ररोहाः प्रादेशमात्राः, अशुष्काग्राः तिस्रः समिधः, त्रीणि सुवर्णशकलानि, त्रीणि रजतशकलानि, एते विंशतिः पदार्थाः संभ्रियन्ते संपाद्यन्ते इति कर्मव्युत्पत्त्या संभारा इत्युच्यन्ते। द्र० श्रौ०प०नि० पृ० ५२। २. संभ्रियन्ते इति संभाराः। संभारशब्दो यौगिकत्वात् द्रव्यवाची। आधाने अग्न्यातनेषु प्रथमतः स्थापनीयाः वानस्पत्याः पार्थिवाश्च सप्त सप्त पदार्थाः। अन्यत्र पशुसोमेषु तत्प्रयोगादौ तत्र तत्र संभारद्रव्याणि द्रष्टव्यानि। द्र० मी०को० पृ० ४१९२।

**संभारनिधान–** (आध्व०) इष्टियज्ञेषु प्रकृतिभूत...अग्न्याधानप्रकरणे आयतनोपलेपनानन्तरं अध्वर्युः यजमानेनान्वारब्धः संभारणां तृतीयं भागं आदाय गार्हपत्यायतने 'यत् पृथिव्याः' इति ऋचा निदधाति। ततः सपत्नीको यजमानोऽध्वर्युमन्वारब्धोऽभिमन्त्रयते। 'यददश्चन्द्रम्' इति मन्त्रेण। यजमानः 'दिवस्त्वा वीर्येण' इति मन्त्रेण संभारान् अग्नित्वेन निश्चिनोति, 'सं वः सृजामि' इत्यृग्भ्यां संभारान् मिश्रयति। ततः 'कल्पतां द्यावापृथिवी' इति यजुषां संभारान् समान् करोति। अध्वर्युः यजमानान्वारब्धः अवशिष्टानां संभाराणां अर्धमादाय दक्षिणद्वारेणापनिर्हृत्य अन्वाहार्यपचने 'यदन्तरिक्षस्य' इत्यृचा निदधाति। अभिमन्त्रणादि गार्हपत्यवद् भवति। अध्वर्युः यजमानान्वारब्धः अवशिष्टान् संभारान् पूर्वद्वारेण निर्हृत्य आहवनीयायतने 'यदिवो न' इत्यृचा निदधाति। अभिमन्त्रणादि गार्हपत्यवत्। अध्वर्युः गोप्तारमाह—एतत् सर्वं रक्षणीयमिति। गोप्ता आहविहृता अग्नयः, मा कश्चनान्तरेण संचारीदिति। इदं कर्म आयतनेषु संभारनिधानमित्युच्यते। द्र० श्रौ०प०नि० पृ० ५८।

**संभारमन्त्र–** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आतिथ्येष्टौ 'अग्निर्यजुभिः सविता स्तोमैः, इन्द्र उक्था मदैः, इन्द्रावरुणाशिषा, अङ्गिरसो धिष्ण्यैरग्निभिः, मरुतः सदो हविर्धानाभ्याम्, आयुः प्रोक्षणीभिः, ओषधयो बर्हिषा, अदितिर्वेद्या, सोमो दीक्षया, त्वष्टा इध्मेन, विष्णुर्यज्ञेन, वसव आज्येन, आदित्या दक्षिणाभिः, विश्वेदेवा ऊर्जा, पूषा स्वगाकारेण बृहस्पतिः पुरोधया, प्रजापतिरुद्गीथेन अन्तरिक्षं पवित्रेण, वायुः पात्रैः, अहँ श्रद्धया' इत्येते मन्त्राः संभारमन्त्रपदवाच्याः। तांश्च सोम मधुपर्कानन्तरं अध्वर्युः ब्रवीति। तत्राध्वर्युः पूर्वं कृष्णाजिनावहननादि प्रकृतिवत् करोति। उत्तरेषु अधिवपनादिषु विष्णुमेव निगमयति। पुरोडाशमधिश्रित्य गार्हपत्ये मदन्तीरधिश्रित्याज्यनिर्वापादि प्रकृतिवत्। सर्वाण्याज्यानि चतुर्गृहीतानि भवन्ति। 'पृथिवी होता, द्यौरध्वर्युः सदोऽग्नीत्, बृहस्पतिरुपवक्ता इति चतुर्होत्राऽऽतिथ्यमासादयति। आसन्नाभिमन्त्रणानन्तरं संभारान् व्याचष्टे इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २११। द्र० सोममधुपर्क—।

**संभारसंभरण–** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासकृतौ हविर्यज्ञानां प्रथमे अग्न्याधानप्रकरणे सिकतादीन् विंशतिपदार्थान्

(संभारान्) वेद्यां प्रागग्रान् अध्वर्युः स्थापयति। तन्मध्ये प्रथमतः 'वैश्वानरस्य रूपम्' इत्यृचा सिकतां स्थापयति। ततः 'यदिदं दिवः' इत्यृचा ऊषरमृत्तिकाम्, 'ऊतिः कुर्वाणः' इत्यृचा मूषकबिलमृत्तिकां, 'ऊर्जं पृथिव्याः' इत्यृचा वल्मीकवपां, 'प्रजापतिसृष्टानाम्' इत्यृचां महाह्रदमृत्तिकां, 'यस्य रूपम्' इत्यृचा अरण्यवराहविहितमृत्तिकां, यत्पर्यपश्यत् इत्यृचा पद्मिनीपत्रं, 'याभिरहंहत्' इत्यृचा षट् हिरण्याशकलान्, 'अश्वो रूपम्' इत्यृचा अश्वत्थं, ऊर्जैः पृथिव्याः इत्यृचा उदुम्बरं, 'गायत्र्या ह्रियमाणस्य' इत्यृग्भ्यां पलाशं, 'या ते सृष्टस्य' इत्यृचा शमीं, 'यत्ते सृष्टस्य' इत्यृचा विकंकतं, यत्ते तां तस्य' इत्यृचा अशनिहतं, 'चित्रियादश्वत्थात्' इत्यृचा प्रसिद्धाश्वत्थस्य त्रिस्रः समिधः, 'या ते अग्ने' इति यजुषा मुञ्जकुलायं, अश्वत्थाद्धव्या' इति, 'या अश्वः' इति च द्वाभ्यामृग्भ्यां अरण्यौ, तृतीयं त्वा समभरन्' इत्यृचा संभृतान् संभारान् पुनः संभरति। ततः अरणीमुञ्जकुलाय-

प्रसिद्धाश्वत्थसमिद्भिः अरण्यशकलव्यतिरिक्तानां संभाराणां त्रेधा विभज्य स्थापनं क्रियते। एतत् सर्वं कर्म संभारसंभरणमित्युच्यते। द्र० श्रौ०प०नि० पृ० ५२, संभार—, संभारनिधान—।

**संभारोपकल्पन—द्र०** द्रव्योपकल्पन—।

**संभार्य—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतानां येषां अहीनसत्राणां समग्राहःक्लृप्तिः १. प्रत्यक्षोपदेशेनोपदिष्टा तान्यहीनसत्राणि सूत्रकारैः साक्षात् संभ्रियन्ते इति संभार्याणि (औपदेशिकानि) उच्यन्ते। यानि तु अतिदेशेन आवापविधिना पूर्यन्ते तान्यातिदेशिकान्यावापिकानि वोच्यन्ते इति विशेषोऽवधेयः। २. यदौपदेशिकैः संभरणीयं न त्वावापिकैः पूरणीयं तत्संमार्यमुच्यते (तु०—का० श्रौ० २४।१।१६ विद्याधरः)।

**संभार्या—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये अभिषेचनीये प्रातःसवने बहिष्पवमानस्तोत्रस्य नवसु स्तोत्रीयासु 'वायो शुक्रो अपामिते' (साम० १६२८-३०) इति तृचादूर्ध्वं 'उप त्वाजामयो गिरः' (साम० १५७०) इत्येका, 'जनीयन्तो न्वग्रदः,' (साम० १४६०) इत्येका, 'उत नः प्रिया प्रियत्सु' (साम० १४६१) इत्येका, 'तत्सवितुर्वरेण्यम्' (साम० १४६२) इत्येका, 'सोमानां स्वरणम्' (साम० १४६३' इत्येका, 'अग्न आयूंषि पवसे' (साम० १४६४) इत्येका। इति विश्वजिदुक्ताः षड् ऋचः संभ्रियन्ते स्वयमेकैकाः सत्यः तृचस्थाने सम्यक् प्रयुज्यन्ते इति ताः संभार्या उच्यन्ते (तु०—तां० ब्रा० सा० १८।८।८) (आ०क० ४।१४।१) २. द्वाशतयेभ्यो नाम देशेभ्य आहृत्यात्र संभ्रियन्ते इति संभार्याः (तु०—आ०क० ४।१४।१ वरदराजः)।

**संभार्याहन्— द्र०** सत्रार्याहः संख्याक्लृप्तिः—, एकपातिनी—।

**संमार्ग-, संमार्जन—** (सा० आध्व०) इष्टिपशुसोमयज्ञेषु 'स्रुचः संमार्ष्टि, 'अग्निं संमार्ष्टि' परिधिं संमार्ष्टि' 'ग्रहान् संमार्ष्टि' इति स्रुचादीनां संमार्जनक्रिया संस्कारः, संस्करणं वा संमार्गः संमार्जनं वोच्यते। संमार्गः, ग्रहधर्मः सवनत्रयेऽपि संबद्ध्यते। स दशापवित्रेण ग्रहणामेव न चमसादीनामिति विशेषः। द्र० मी०को० पृ० ४१९२, ९४।

**सारस्वतीयाज्याप्रैष प्रैष—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे 'सरस्वत्यै मेषस्य वपां

भेदः प्रस्थितं प्रेष्य' इत्ययं सरस्वतीयाज्याप्रैष प्रैष उच्यते। यजमानः सरस्वत्या इदं न मम। 'सरस्वत्या अहं देवयाज्ययेन्द्रियावी भूयासम्, 'जेमानं महिमानं गमेयम्' इति वा अनुमन्त्रयते इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १५८।

**सरस्वतीविनशन—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायनसत्रप्रकरणे १. मित्रावरुणयोः प्रथमे सारस्वतसत्रे चैत्रशुक्लसप्तम्यां तिथौ सरस्वतीविनशने सारस्वतसत्रार्थं दीक्षा क्रियते। तत्र सरस्वती संगमः प्रभासः सरस्वतीविनशनमिति याज्ञिकाः। यत्र सरस्वती अन्तर्भवति तद्धिद्वनशनम्। (ला०श्रौ० १० ।१५ ।१ अग्निस्वामी) (तु०—का०श्रौ० २४ ।५ ।३०) विद्याधरः)। २. सारस्वती नाम नदी प्रत्यक्स्रोताः प्रवहति। तस्याः प्रागपरभागौ सर्वलोकप्रत्यक्षौ। मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रवहति। नासौ केनचिद् दृश्यते। तद्विनशनमित्युच्यते। तस्योपक्रमे दक्षिणे तीरे दीक्षान्ते (तु०—तां० ब्रा० सा० २५। १० ।१)।

**सरस्वत्यनुवाक्याप्रैष—** (आध्व०, हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे 'सरस्वत्यै मेषस्य वपाया मेदसोऽनुब्रूहि' इति प्रैषः सरस्वत्यनुवाक्या प्रैष उच्यते। द्र० श्रौ०प०नि० पृ० १५८।

**सर्पणकर्मन्—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु द्विविधं प्रसर्पणकर्म सवनादिगतं सवनान्तगतं चेति। (क) तत्र सवनादिगतं प्रातः सवने आग्नेयस्य सवनीयस्य पशोः उत्तमप्रयाजादि वपामार्जनान्तं (तु०—का० श्रौ० ६ ।६ ।१९-२७) कृत्वा सयजमानाः षोडश ऋत्विजः 'विभूरसि' (मा०स० ५ ।३१) इत्यादिमन्त्रैः प्रतिमन्त्रं उत्पत्तिक्रमेण आग्नीध्रीयादीन् अष्टौ धिष्ण्यान् अग्नीषोमीयवत् उपतिष्ठेयुः। ततः 'सम्राडसि' इत्यादिभिः 'समूढ्योऽसि' इत्यन्तैर्मन्त्रैः (मा०सं० ८ ।२३ ।२४। आहवनीयादीनामनुदेशं उत्करान्तं अग्नीषोमीयदिनवत् कृत्वा 'वागसि' (मा०सं० ५ ।३३) इति सदः, 'ऋतस्य द्वारौ' (मा०सं० २ ।३३) इति सदसो द्वारभवे स्थूणे चाभिमृशेत्। ततः 'अध्वनामध्वपते' (मा०सं० ५ ।३३) इति सूर्यम्, 'मित्रस्य मा' (मा०सं० ५ ।३४)। इति सर्वान् ऋत्विजः, ततः 'अग्नयः सगराः' (मा०सं० ५ ।३४) इति आग्नीध्रीयादीनष्टौ धिष्ण्यानभिमन्त्रयेत्। एतत् धिष्ण्योपस्थानादि कर्म सवनादिभूतं प्रथमं सर्पणकर्म उच्यते (तु०—का०श्रौ० ९ ।८ ।१७ ।२४ विद्याधरः)। एतदेव कर्म माध्यन्दिनतृतीयसवनयोः सदोऽभिमर्शनादि वा धिष्ण्योपस्थानादि वा इति विकल्पेन भवति। (तु०—का०श्रौ० ९ ।९१-२; १० ।४ ।१३ विद्याधरः)। (ख) सवनान्तर्गतं सवनान्तभूतं कर्म तु प्रातःसवनान्ते सर्वैः उक्थ्यविग्रहैः चरिते सति 'प्रशास्तः प्रसुहि' इति मैत्रावरुणं ब्रूयात्। ततः 'सर्पत' इति मैत्रावरुणे नानुज्ञातानां सर्वर्त्विजां सदसो बहिर्निष्क्रमणं भवति। माध्यन्दिनसवनान्ते च उक्थ्यविग्रहान्ते अध्वर्युः 'प्रशास्तः प्रसुहि' इति प्रेष्यति। ततः सर्वे ऋत्विजः सदसो बहिर्निष्क्रम्य शौचादिकं कृत्वा पुनरागत्योपविशेयुः। तृतीयसवनान्ते उदवसानीयान्ते वैष्णव्याहुत्यन्ते वा सायंकालीनोऽग्निहोत्रहोमोऽनुष्ठेयः। तदन्ते ऋत्विजो बर्हिरादीप्य

गृहं गच्छेयुः। इति द्वितीयं सवनान्तभूतं सर्पणकर्म उच्यते (तु०—का०श्रौ० ९। १४।१९; २०।१०।३।२४; १३।२६ विद्याधरः)।

**सर्पराज्ञी—** (सा०) १. भूमेरवतार स्वरूपाकाचिद् देवता ऋषिका वा सर्पराज्ञ्यभिधीयते। २. 'आयं गौः पृश्नीरक्रमीत् (ऋ० १०।१।८९।१-३) इत्यादिकाः तिस्रः सर्पराज्ञीदृष्टाः ऋचः सार्पराज्ञ्य उच्यन्ते। ता एताः व्यूढद्वादशाहस्य दशमेऽहनि छन्दोगैः मानसस्तोत्रेण मनसा स्तुते सति होता 'अध्वर्यो' इत्यध्वर्युमाह्वयति। ततोऽध्वर्युः 'हो होतर्' इति प्रत्याह्वानं करोति। ततः होता मानसग्रहे शंसेदिति विशेषोऽवधेयः (तु०—आ०श्रौ० ८।१३।३-६ नारायणः)। द्र० सर्पराज्ञी—।

**सर्पाणामयनसत्रस्याहःक्लृप्ति—**(अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायनसत्रप्रकरणे सर्पाणामयनं नाम संवत्सरसत्रं सर्पाणामयनसत्रमुच्यते। तस्य गौः १, आयुः २, इति द्वे अहनी दशिस्तोमे अभ्यस्याभ्यस्य कृत्स्नं संवत्सरस्याऽऽप्लुतः। षण्मासान् अनुस्तोमे, षण्मासान् प्रतिस्तोमे भवतः। विषुवत्स्थाने ज्योतिरेकाहो भवति। प्रायणीयोदयनीयौ भिन्नाऽभिन्नौ भवतः। विद्यया धनेन च प्रकाशकामाः सर्पाणामयनमुपयन्ति (तु०—आ० श्रौ० १२।५।१-५ नारायणः)।

**सर्वकर्तृकघर्मोपस्थान—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च महावीरप्रेक्षणमन्त्र समूहवचनानन्तरं होत्रा 'अप्नस्वतीमश्विना' इत्यृचि उक्तायां सर्वे धवित्राण्यूद्धे धारयन्ति। होत्रा 'अरूरु दुषसः पृश्निरग्रियः' इत्यृचि उक्तायां 'रुचितो घर्मः' इत्युक्त्वा यथेतं त्रिरपसव्यं परीत्य धवित्राणि निधाय 'रुचितो धर्मः' इत्युक्त्वा यथेतं त्रिरपसव्यं परीत्य धवित्राणि निधाय सर्वे घर्ममुपतिष्ठन्ते-'अपश्यं गोपामनिपद्यमानम्, 'आ च परा च पथिभिश्चरन्तम्, 'ससध्रीचीः सविषूचीर्वसानः, 'आ वरीवर्ति भुवनेष्वन्तः, 'अत्र प्राचीः, 'मधुमाध्वीभ्यां मधुमाध्वीभ्यां, 'अनु वां देववीतये, 'समग्निनाऽऽगत, 'सं देवेन सवित्रा सं सूर्येण रोचते, 'स्वाहा समग्निस्तपसाऽऽगत, 'सं देवेन सवित्रा, 'सं सूर्येणारोचिष्ट, 'धर्ता दिवो विभासि रजसः, पृथिव्या धर्ता, 'अन्तरिक्षस्य धर्ता, 'धर्ता दिवो विभासि रजसः, पृथिव्या धर्ता, 'अन्तरिक्षस्य धर्ता, 'धर्ता दिवो देवानाम्, 'अमर्त्यस्तपोजाः, 'हृदे त्वा मनसे त्वा सूर्याय त्वा, 'ऊर्ध्वमिममध्वरं कृधि, 'दिवि देवेषु होत्रा यच्छ, विश्वासां भुवां पते, 'विश्वस्य भुवनस्पते, 'विश्वस्य मनसस्पते, 'विश्वस्य वचसस्पते, 'विश्वस्य तपसस्पते, 'विश्वस्य ब्रह्मणस्पते, 'देवश्रूस्त्वं देव घर्म देवान् पाहि', 'तपोजां वाचं अस्मै नियच्छ देवा युवम्', 'भर्गो देवानाम्', 'पिता मतीनाम्', 'पतिः प्रजानाम्', 'मतिः कवीनाम्', 'सं देवो देवेन सवित्रा यतिष्ठ', 'सं सूर्येणाऽरुष्ठ', 'आयुर्दास्त्वमस्मभ्यं घर्म वर्चोदा असि', 'पिता नोऽसि पिता नो बोधः', 'आयुर्धास्तनूपाः पयोधाः', 'वर्चोदा वरिवोदा द्रविणोदाः', 'अन्तरिक्ष प्र उरोर्वरीयान्', 'अशीमहि त्वा मा मा हिंसीः' इति एतत्सर्वकर्तृकघर्मोपस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० २१९-२०।

**सर्वकल्पे सर्वाभिप्रायिकर्मन्—** (सा०) इष्टिपशुसोमयज्ञेषु षट् इमानि सर्वकल्पे (सर्वयज्ञप्रयोगे) सर्वाभिप्रायिकाणि (सर्वकामसाधकानि) भवन्ति। 'यथैतद् अग्न्याधेयं,

अग्निहोत्रं, दर्शपूर्णमासौ, चातुर्मास्यानि, पशु:, सोम: इति। तदपि विज्ञायते-अथ यदस्य अग्निमुद्धरति सहस्रं तेन कामदुधा अवरुन्धे। अथ यदग्निहोत्रं जुहोति सहस्रं तेन। एषा वै वैश्वदेवस्य मात्रा। एतद् वा एतेषां अवमम्। अतोऽतो वा उत्तराणि श्रेयांसि भवन्ति। सर्वान् कामान् पशुबन्धयाजी अभिजयते। एकस्मै वै कामायाऽन्ये यज्ञक्रतव: आलभन्ते। सर्वस्मै कामाय पशु: सोम:' इति **द्र०** बौ० श्रौ० २४।११; श्रौ०को० १ भा० पृ० ७६२-७६३)

**सर्वजित्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे सर्वजित्संज्ञक एकाह:। स चाग्निष्टोमसंस्थ: संवत्सरदीक्ष: सप्तसुत्याक: त्र्युपसत्को भवति। तत्राग्नेय: सवनीय: पशुरेक:।

**सर्वज्योतिस्—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे सर्वज्योति: संज्ञक: एकाह:। स चोक्थ्यसंस्थ:। तत्र आग्नेयैन्द्राग्नौ सवनीयौ द्वौ पशू भवत:।

**सर्वदेवता—** (सा०) इष्टिपशुसोमयज्ञेषु 'अग्निर्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वति, अग्निर्वै यज्ञस्यावराध्र्यो विष्णु: पराध्र्यस्तत् सर्वाश्चैवैतद्देवता: परिगृह्य सर्वं च यज्ञं परिगृह्य दीक्षा (तु०—श० ब्रा० ३।१।२।१)।

**सर्वपात्रस्थसोमानां प्रत्येकमुपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने अप उपस्पृश्य 'एहि यजमान' इत्यामन्त्र्य आहवनीय समीपं गत्वा प्रचरण्यां स्रुचि चतुर्गृहीतं गृहीत्वा यजमानेऽन्वारब्धे सप्तहोतारं मनसाऽऽद्रुत्य आहवनीये जुहोति। यजमानोऽध्वर्युश्च सर्वपात्रस्थं सोममुपतिष्ठते— 'परिभूरग्नि- मुन्मृजे'। (१) उपांशु पात्रं 'प्राणाय मे० पवस्व' (२) अन्तर्यामं 'अपानाय मे० पवस्व'। (३) 'उपांशुसवनं' 'व्यानाय मे० पवस्व'। (४) ऐन्द्रवायवं 'वाचे मे० पवस्व'। (५) मैत्रावरुणं 'दक्षक्रतुभ्यां मे० पवस्व'। (६) आश्विनं 'श्रौत्राय मे० पवस्य' (७) युगपच्छुक्रामन्थिनौ 'चक्षुर्भ्यां मे० पवस्व'। (८) आग्रयणं 'आत्मने मे० पवस्व' (९) अतिग्राह्यान् क्रमेण 'वीर्याय मे० पवस्व' (मन्त्रावृत्ति:)। (१०) उक्थ्यं 'अङ्गेभ्यो मे० पवस्व'। (११) ध्रुवं 'आयुषे मे० पवस्व'। (१२) द्रोणकलशं 'विष्णोर्जठरमसि वर्चो मे० पवस्व'। (१३) आद्यवनीयं 'इन्द्रस्य जठरमसिवर्चो मे० पवस्य' (१४) पूतभूतं 'विश्वेषां देवानां जठरमसि वर्चो मे० पवस्व'। (१५) सर्वपात्रस्थं 'कोऽसि को नाममुन्मृजे'। इदं सर्वपात्रस्थसोमानां प्रत्येकमुपस्थानमुच्यते। **द्र०** श्रौ०प०नि० पृ० २७८-२९।

**सर्वपात्रस्थसोमोपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात: सवने अप उपस्पृश्य 'एहि यजमान' इत्यामन्त्र्य यजमानेन सह पूर्वया द्वारा हविर्धानं प्रविश्य 'विष्णो त्वं नो० असि'। इतीदं सर्वपात्रस्थसोमोपस्थानमुच्यते। **द्र०** श्रौ० को० प०नि० पृ० २७८।

**सर्वपृष्ठ—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायनसत्रप्रकरणे गवामयने सात्रिकेष्वह:सु विंशे सात्रिके विश्वजिदाख्येऽहनि माध्यन्दिनसवने प्रयोक्तानि सर्वाणि रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवताख्यानि षट पृष्ठस्तोत्राणि (पृष्ठसामानि) सर्वपृष्ठान्यु-

च्यन्ते। तानि गवामयने पूर्वपक्षे त्रयाणां स्वरसाम्नामुपरिष्टात् विश्वजिति माध्यन्दिने प्रवर्तन्ते इत्यत: एव 'सर्वाणि पृष्ठस्तोत्राणि यस्मिन् क्रतौ' इति व्युत्पत्त्या विश्वजिदपि सर्वपृष्ठ उच्यन्ते (तु०—ऐ० ब्रा० सा० ४।१९ आ०श्रौ० ७।२।११; ८।७।१-४ नारायण:)। तत्र सर्वपृष्ठे (विश्वजिति)

**सर्वपृष्ठविश्वजित्—** द्र० विश्वजित्—।

**सर्वपृष्ठस्तोत्र—** द्र० सर्वपृष्ठ—।

**सर्वपृष्ठाहर्निमित्त—** (हौ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे होत्र-काणां शस्त्रेषु माध्यन्दिनसवने यदा पुन: संपाताहीनसूक्तै ऐकाहिकानि त्रिप्रकाराणि अहानि सर्वपृष्ठान्यहानि भवन्ति तदा साम-सूक्तानि भवन्ति। तेष्वेव शस्त्रेषु शाक्व-रवैरूपरैवतानि सामानि च पृष्ठकार्ये भवन्ति, तेषां सामप्रगाथाश्च भवन्ति। तदेतत् साम-सूक्तानि, पृष्ठानि, तानि सप्रगाथानि च इत्ये-तत् त्रयं सर्वपृष्ठनिमित्तं विधीयते (तु०—आ०श्रौ० ८।४।१८ नारायण:)। तथा च एकाहीभवतातामन्येषां साधारणो विधिक्रम: एवं भवति। संपाताह:सु शाक्व-रादीनां (शाक्वरवैरूपरैवतानां) स्तोत्रियानु-रूपा:, सामप्रगाथा:, कद्वन्त:, आरम्भणीया:, सामसूक्तानि, अहीनसूक्तानि एतावत् सर्वेषां समानम्। ततोऽहरह:श संपातौ मैत्रावरुणस्य, इतरयो: (ब्राह्मणाच्छंस्याच्छा-वाक्ययो:) विपर्यासे संपातारहरह: शस्ये इति। अहीनाह: स्वेवं भवति साम-सूक्तेभ्योऽनन्तरं अहरह: शस्यं अहीनसूक्तं मैत्रावरुस्य, इतरयो: विपर्यासे अहीन सूक्ते अहरह: शस्ये इति। एवं त्रिप्रकारेष्वह:सु सर्वपृष्ठेषु माध्यन्दिने सवने होत्रकाणां शस्त्राणि भवन्ति। एषामेवं त्रिप्रकाराणामह्नां एकाहीभावे सर्वपृष्ठत्वे सति एवं शस्यं भ-वति। कद्वतां स्थाने नित्या: प्रगाथा: तत: सामसूक्तानि अहीनसूक्तानि संपाता अन्त्यान्यैकाहिकानीति संपाताह:सु। अहीनाह:सु तान्येव संपातवर्जितानि त्रीण्येव सूक्तानि। ज्यौतिष्टोमिके तु सामसूक्तानि अहीनसूक्तानि द्वे द्वे चैकाहिके इति सर्वेषां विशेष: (तु०—तत्रैव नारायण:)। अत्र देव-त्रादीनां भाष्याण्यपि द्रष्टव्यानि)

**सर्वपृष्ठेष्टि—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्श-पूर्णमासविकृतौ सर्वपृष्ठेष्ट्यां 'इन्द्राय राथ-न्तराय, इन्द्राय बार्हताय, इन्द्राय वैरूपाय, इन्द्राय वैराजाय, इन्द्राय शाक्वराय, इन्द्राय रैवताय' इति भिन्ना: षड् इन्द्रा: षड् देवता:। एक: दशकपाल: पुरोडाश:। तत्र स्विष्टकृ-दिडं सकृदवदेयं न प्रति प्रधानकर्म इति विशेष:। **द्र०** मी०को० पृ० ४२२९-३१।

**सर्वयज्ञ—** (सा०) अग्न्याधेयमग्निहोत्रं दर्शपूर्ण-मासौ चातुर्मास्यानि पशु: सोम: इति। **द्र०** बौ० श्रौ० २४।११ श्रौ०को० १ भा० पृ० ७६३। **द्र०** श्रौतयज्ञानां प्रकृतिविकृत्युभ-यानुभयात्मकत्व—।

**सर्ववेदपवित्र—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे 'सर्ववेदपवित्राणि वक्ष्यम्यत: परम्। येषां जपैश्च होमैश्च पूयन्ते नात्र शंसय:॥ (तानि)-अघमर्शणं देवकृतं शुद्धवत्य: तर-त्समा:। कूष्माण्ड्य: पावमान्यश्च दुर्गा सावित्र्यथैव च। अभीषङ्गा: पदस्तोमा: सामानि व्याहृतीस्तथा। मारुण्डानि च सामानि गायत्रं रैवतं तथा। पुरुषव्रतं भासं च तथा देवव्रतानि च। अब् लिङ्गा बार्हस्पत्यं च वाक् सू० (तु० शं०ध० १।५)।

**सर्वश्रौतकर्मन्—** (सा०) 'यान्येतानि सर्वाणि श्रौतकर्माणि तानि ऐष्टिकानि पाशुकानि सौमिकानि दार्विहौमिकानि चेति चतुर्वि-धानि भवन्ति। नैतेभ्योऽन्यानि कानिचिद्

व्यतिरिच्यन्ते। काम्यानि त्वेष्वेवान्तर्भवन्ति। एतदर्थमग्न्याधानं सकृदेव क्रियते न प्रतिकर्म पृथक् पृथक् आधानं क्रियते। इति विशेषोऽवधेय:।

**सर्वसात्रिकसोमक्रतुप्राकृतदिन—** (सा०) (१) ज्योतिष्टोम: (ज्योतिष्टोमातिरात्र:), (२) चतुर्विंशं (३-८) अभिप्लवषडह: (९-१४) पृष्ठ्यषडह:, (१५) अभिजित् (१६-१८) स्वरसामान:, (पूर्व: अभिप्लवत्र्यह:) (१९) विषुवान्, (२०) विश्वजित्, (२१-२३) छन्दोमा:, (पृष्ठ्यपूर्वत्र्यह-, व्यूढसमू- ढदशरात्रस्य ७-९ दिनानि) (२४) अविवाक्यं (व्यूढसमूढदशरात्रस्य दशममह:) (२५) महाव्रतम् इत्येतानि पञ्चविंशतिरहानि सर्वसात्रिक सोमक्रतूनां प्राकृतसंज्ञकानि दिनान्युच्यन्ते। तानि सर्वसोमक्रतूनां प्रकृतयश्चाभिधीयन्ते। तै: सिद्धैरतिदिष्टा अन्ये एकाहाहीनसत्रक्रतवोऽनुष्ठीयन्ते। तदुक्तम् 'सिद्धैरहोभिरह्नामतिदेश:' (आ०श्रौ० ९।१।२)। अत: ज्योतष्टोमादीन्यहानि प्राकृतानि। तानि हि सर्वाणि प्रत्यक्षं कल्प्यन्ते (तु०—आ०श्रौ० ७।३।१ देवत्रात:। तथा च 'तदेषाऽभियज्ञगाथा गीयते—प्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च। अभिजित् स्वरसामानो विषुवान्, विश्वजित् तथा। छन्दोमा उत्तमं तु महाव्रतम्। अहीनैकाहसत्राणां प्रकृति: समुदाह्रियते॥ (तु०—आ०श्रौ० ८।१२।३१)। द्र० सात्रिकाहन—।

**सर्वसोमयज्ञा:—** (सा०) अग्निष्टोमादि: विश्वसृजामयनान्त: सर्वो यज्ञ: सर्वसोमयज्ञ उच्यते (तु०—तां० ब्रा० सा० १३।१२।३)।

**सर्वसोमसंस्थास्तोत्र—** (सा०, औ०) अग्निष्टोमोक्थ्य षोडश्यतिरात्रसंज्ञकानि चत्वारि स्तोत्राणि (सामानि) सर्वेषां सोमक्रतूनां संस्थास्तोत्राणि भवन्ति। यस्मिन् सोमक्रतौ यस्मात् स्तोत्रात् परं अन्यत्स्तोत्रं न गीयते तत्तस्यान्तिकं संस्थास्तोत्रमभिधीयते। तथा सति अग्निष्टोमस्य क्रतो: अग्निष्टोमस्तोत्रं, उक्थ्यस्योक्थ्यस्तोत्रं, षोडशिन: षोडशिस्तोत्रं, अतिरात्रस्य रात्रिपर्याय-सन्धिस्तोत्राणि अतिरात्रस्तोत्रमिति सर्वसोमेषु संस्थास्तोत्राणि चत्वार्येव भवन्ति। तत्र य: कोऽपि सोमक्रतु: यदा अग्निष्टोमसंस्थ: (अग्निष्टोमस्तोत्रसंस्थ:) इत्युच्यते तदा तृतीयसवने एकमेव अग्निष्टोमसंज्ञकं स्तोत्रमन्ते गीयते। तेन स क्रतु: सन्तिष्ठते। न तत: परं स्तोत्रान्तरं गीयते। एवमेव यदा उक्थ्यसंस्थस्तदा अग्निष्टोमोक्थ्यसंज्ञके द्वे स्तोत्रे गीयेते अग्निष्टोमात्परं तृतीयसवने उक्थ्यसद्भावात्। यदा षोडशिसंस्थ: तदा अग्निष्टोमोक्थ्याभ्यां स्तोत्राभ्यां परं षोडशिस्तोत्रस्य सत्वात् तृतीयसवने त्रीणि स्तोत्राणि गीयन्ते। यदा च अतिरात्रसंस्थ: क्रतु: स्यात् तदाऽग्निष्टोमोक्थ्यषोडशिस्तोत्रेभ्य: परं तृतीयसवने रात्रिपर्यायसन्धिषामस्तोत्राणि चतुर्थं अतिरात्रस्तोत्रं गीयते। ततो ज्योतिष्टोमातिरात्रस्तोत्रसंस्थत्वात् तत्र यथाक्रमं तानि चत्वारि स्तोत्राणि गीयन्ते। इत्थं सप्तसु सोमसंस्थासु चतसृणां संस्था: निरूपिता:। या च द्वितीया संस्था अत्यग्निष्टोम: स षोडशिस्तोत्रसंस्थ:। अग्निष्टोमस्तोत्रानन्तरं उक्थ्यस्तोत्रमुल्लङ्घ्य षोडशिस्तोत्रं गीयते, तेन तत्र अग्निष्टोमषोडशिसंज्ञके द्वे संस्थास्तोत्रे भवत:। पञ्चमी संस्था वाजपेय: षोडशिसंस्थ:। तत्र अग्निष्टोमोक्थ्यषोडशिन: त्रीणि संस्थास्तोत्राणि भवन्ति। (तु०—'षोडशी त्विह' इति आ०श्रौ० ९।९।९)। यदा तु षोडशिस्तोत्रादूर्ध्वं अतिरिक्तोक्थ संज्ञकमपरं चतुर्थं उक्थस्तोत्रं विधीयते तदा अग्निष्टोमोक्थ्यषोड-

श्यतिरिक्थानि चत्वारि संस्थास्तोत्राणि भवन्ति। अनेन प्रकारेण वाजपेयः अषोडशिकः सषोडशिकश्चेति द्विविधोऽस्तीति विशेषोऽवगन्तव्यः (तु०—आ० श्रौ० ९।९।१० नारायणः)। सप्तमी संस्था अप्तोर्यामः अतिरात्रस्तोत्रसंस्थः। तेन तत्र अग्निष्टोमादीनि चत्वारि संस्थास्तोत्राणि भवन्ति। यदा तु 'उक्तं तृतीयसवनमुत्तमेन पृष्ठ्याह्ना' (आ०श्रौ० ८।७।११) इति विश्वजिदतिदेशादुत्तमेन पृष्ठ्याह्ना तृतीयसवनं उक्थ्यसंस्थं प्राप्तं तदा तदपवादतया अद्वैपदोक्थ्यसंस्थोऽप्तोर्यामोऽवगन्तव्यः। (तु०—'अद्वैपदोक्थ्यश्चेद् वैषुवतं तृतीयसवनम्' (आ० श्रौ० ९।११।१२ नारायणः)। इति सोमसंस्थासंस्थास्तोत्राणि। द्वादशाहे यत्र क्व च प्रयुज्यमानस्य पृष्ठ्यषडहस्य प्रथममहः अग्निष्टोमस्तोत्रसंस्थम्, द्वितीयतृतीयपञ्चषष्ठान्यहानि उक्थ्यस्तोत्रसंस्थानि, चतुर्थं त्वहः षोडशिस्तोत्रसंस्थमस्ति। तत्र त्रीण्यग्निष्टोमोक्थ्यषोडशिस्तोत्राणि भवन्ति। त्रयश्छन्दोमाः उक्थ्य संस्थाः। चतुर्थश्छन्दोमः अविवाक्यं दशममहः 'अग्निष्टोम इदमहः' (आ०श्रौ० ८।१२।२६) इत्यग्निष्टोमस्तोत्रसंस्थं भवति। कात्यायनस्तु 'अत्यग्निष्टोमो दशमम्' (का०श्रौ० १२।३।२२) इत्यात्यग्निष्टोमसंस्थं मन्यते। अर्थाद् विवाक्ये 'अग्निष्टोमषोडशिनी द्वे संस्थास्तोत्रे भवतः। आद्यन्ते प्रायणी योदनीये द्वे अहनी अतिरात्रे संस्थे भवतः। इति द्वादशाहसंस्थास्तोत्राणि। गवामयने प्रायणीयं चतुर्विंशमहः अग्निष्टोमसंस्थमुक्थ्यसंस्थं वा संतिष्ठते। यदा तु अग्निष्टोमसंस्थं तदा एकमग्निष्टोमसंस्थास्तोत्रं, यदा तूक्थ्यसंस्थं तदाऽग्निष्टोमोक्थ्ये संज्ञके द्वे संस्थास्तोत्रे भवतः। गवामयने अन्यत्र यत्र क्व च प्रयुज्यमानस्य अभिप्लवषडहस्य प्रथमं षष्ठं च द्वे अहनी अग्निष्टोमसंस्थे। तत्रैकैकमग्निष्टोमसंस्थम्। मध्ये द्वितीयतृतीयचतुर्थपञ्चमान्यहानि उक्थ्यसंस्थानि। तत्र प्रत्येकमग्निष्टोमोक्थ्याख्ये द्वे द्वे संस्था संस्थास्तोत्रे स्तः। अभिजिदेकाहः अग्निष्टोमस्तोत्रसंस्थः। त्रयः स्वरसामानः अग्निष्टोमस्तोत्रसंस्था उक्थ्यस्तोत्रसंस्था वा। तदुक्तम्- 'सर्वेऽग्निष्टोमाः, उक्थ्यानेके स्वरसाम्नः' (आ०श्रौ० ८।७।१२-१३) इत्येकः पक्षः। 'यज्ञायज्ञा (साम० ३५) इत्यस्यां योनावुत्पन्नानि चत्वारि स्वरसंज्ञकानि सामानि येषु भवन्ति ते स्वरसामानः इत्यपरः पक्षा।

विश्वजिद्—विषुवतौ द्वावेकाहौ अग्निष्टोमसंस्थौ। गोष्टोमायुःष्टोमौ एकाहौ उक्थ्यस्तोत्रसंस्थौ। महाव्रतमन्त्यमहरपि अग्निष्टोमसंस्थम्। आद्यान्त्यौ प्रायणीयोदयनीयौ द्वे अहनी अतिरात्र संस्थे भवतः। इति वागमयनसंवत्सरसंस्थास्तोत्राणि। अथ राजसूयसंस्थास्तोत्राणि—सप्तसोमयागसमूहात्मके राजसूये पवित्राख्य एकाहः अग्निष्टोमसंस्थः। सदशपेयोऽभिषेचनीय उक्थ्यस्तोत्रसंस्थः। केशवपनीयः अतिरात्रस्तोत्रसंस्थः। व्युष्टिद्व्यहस्य (व्युष्टिरात्रस्य) प्रथममहरग्निष्टोमस्तोत्रसंस्थम्, द्वितीयमहरतिरात्रस्तोत्र संस्थम्। क्षत्रस्य धृतिः अग्निष्टोमस्तोत्रसंस्था इति राजसूयसंस्थास्तोत्राणि। (आ०श्रौ० ८।३) त्रिसुत्यात्मके अश्वत्रिरात्रे (अश्वमेधे) प्रथममहर् अग्निष्टोमस्तोत्रसंस्थम्, द्वितीयमहर् उक्थ्यस्तोत्रसंस्थम्, तृतीयमहर् अतिरात्रस्तोत्रसंस्थम्। दशसुत्यात्मके सर्वमेधे प्रथमः अग्निष्टुन्नामेकाहः अग्निष्टोमस्तोत्रसंस्थः, द्वितीय-

तृतीयचतुर्थदिवसाः इन्द्रस्तुत्-सूर्यस्तुद्-वैश्वदेवस्तुन्नामका उक्थ्यस्तोत्रसंस्थाः, पञ्चमो महाव्रतसंज्ञको एकाहोऽग्निष्टोम-स्तोत्रसंस्थः, षष्ठो वाजपेयसंस्थः अर्थात् अग्निष्टोमोक्थ्य षोडशिस्तोत्रसंस्थम्। सप्तमः अप्तोर्यामसंस्थः अर्थात् अग्निष्टो-मोक्थ्यषोडश्यतिरात्रसंस्थः। अष्टमनवमौ उक्थ्यस्तोत्रसंस्थौ, दशममहर् विश्वजित्स-र्वपृष्ठोऽतिरात्रस्तोत्रसंस्थो भवति। पञ्च-सुत्ये पुरुषमेधे आद्यन्ते अहनी अग्निष्टोमसंस्थे, तृतीयमहर् अतिरात्र-स्तोत्रसंस्थं, द्वितीयचतुर्थे अहनी उक्थ्यस्तो-त्रसंस्थेज्ञेये। अत्रानिर्दिष्टेषु शेषेषु एकाहाहीनसत्रक्रतुष्वपि पूर्वोक्तानि चत्वारि अग्निष्टोमोक्थ्यषोडश्यतिरात्रस्तोत्राण्येव संस्थास्तोत्राणि विहितानि वेदितव्यानि। तत्र संस्थास्तोत्राणामन्ते सर्वत्र यज्ञपुच्छं नाम कर्म कर्तव्यमिति विशेषोऽवगन्तव्यः। द्र० यज्ञपुच्छ—।

**सर्वसोमसंस्थानां संस्थास्तोत्रशस्त्रानुक्रम—** (सा०) तत्र प्रथमा सोमसंस्था अग्निष्टोमः द्वितीया अत्यग्निष्टोमः तृतीया उक्थ्यः चतुर्थी षोडशी पञ्चमी वाजपेयः षष्ठी अति-रात्रः सप्तमी अप्तोर्यामः इत्यनुक्रमेण सप्त सर्वाः सोमसंस्थाः (आ०श्रौ० ६।११।१ का०श्रौ० १०।९।२४-२५। भवन्ति। तासां संस्थानां मध्ये यां संस्थां कुर्वन्ति तस्या अन्ते यज्ञपुच्छं नाम कर्म कर्तव्यम्। (तु०—आ०श्रौ० ६।१२।२ नारायणः)। तत्र अग्निष्टोमः उक्थ्यः षोडशी अतिरात्र-श्चेति चतस्रो मुख्याः। येन येन स्तोत्रेण क्रतुः समाप्तो भवति स तत्संस्थाको व्यप-दिश्यते। यथा—अग्निष्टोमेन समापनीयः क्रतुः अग्निष्टोमसंस्थाकः, इति। तत्र १. अत्यग्निष्टोमः षोडशिस्तोत्रसंस्थत्वात् षोड-शिविकारः। २. अत्यग्निष्टोमः ज्योतिष्टो-मस्य केवलः विकार एव, न गुणविकारः ज्योतिष्टोमप्रकरणे तद्विध्यभावात्। द्र० मी०को० पृ० २६४। वाजपेयोऽपि षोड-शिविकारः। अप्तोर्यामोऽतिरात्रसंस्थात्वा-दतिरात्रसंस्थविकारः। इति विशेषोऽनु-संधेयः। तत्र स्तोत्रशस्त्रानुक्रमस्तुअग्निष्टोमं द्वादश द्वादश स्तोत्रशस्त्राणि निर्वहन्ति, अत्यग्निष्टोमं सषोडशिकं त्रयोदश स्तोत्रशस्त्राणि निर्वहन्ति द्वादशाग्निष्टोमस्य स्तोत्रशस्त्राणि एकैकं षोडशिनः स्तोत्रं शस्त्रं चेति त्रयोदश। तदुक्तं 'स्तुत शस्त्रे अधिके षोडशी चेत्' (का०श्रौ० १०।७।१) इति। उक्थ्यं पञ्चदश पञ्चदश स्तोत्रशस्त्राणिः नि-र्वहन्ति षोडशिनं पञ्चदशभिः उक्थ्यस्तोत्र-शस्त्रैः सह षोडशं स्तोत्रं शस्त्रं च निर्वहतीति षोडशिनि षोडश स्तोत्रशस्त्राणि। वाजपेयं षोडशिविकारत्वात् षोडश षोडशिन एकम-तिरिक्तोक्थमिति सप्तदश स्तोत्रशस्त्राणि निर्वहन्ति। अतिरात्रं द्वादश अग्निष्टोमि-कानि द्वादशपर्यायाः एकं सन्धिस्तोत्रं आश्विनशस्त्रं चेति पञ्चविंशतिः स्तोत्र-शस्त्राणि निर्वहन्ति। अप्तोर्यामं अग्निष्टो-मिक - पर्याय - उक्थ्य - वाल - खिल्य-षोडशि - सन्ध्याश्विन - उक्थ्यानि स्तोत्रश-स्त्राणि मिलित्वा त्रयस्त्रिंशत् स्तोत्रशस्त्राणि निर्वहन्ति। अत्र विद्याधरः—अव्यग्निष्टोमे त्रयोदश शस्त्राणि। द्वादश अग्निष्टोमिकानि, एकं षोडशिशस्त्रम्। तच्च आग्निमारुता-दूर्ध्वं कर्तव्यम्। उक्थ्ये पञ्चदश। तत्र त्रीण्युक्थ्यानि, शेषाणि अग्निष्टोमिकानि। षोडशियोगे षोडश। तत्र त्रीण्युक्थानि, एकं षोडशिशस्त्रं च। वाजपेये सप्तदश शस्त्राणि। तत्र अतिरिक्तोक्थं शस्त्रमेकं शेषं षोडशिवत्। अतिरात्रे पञ्चविंशतिः। तत्र द्वादश आग्निष्टोमिकानि। ततो द्वादश

पर्यायसंज्ञकानि। तत्र आद्यानि चत्वारि शस्त्राणि प्रथम: पर्याय:। मध्यमानि चत्वारि मध्यम: पर्याय:। अन्त्यानि चत्वारि उत्तम: पर्याय:। त्रिष्वपि पर्यायेषु होतुराद्यं शस्त्रम्। उत्तराणि त्रीणि मैत्रावरुणब्राह्मणाच्छंस्य-च्छावाकानाम्। तत: पञ्चविंशमाश्विनम्। आश्विनशस्त्रं त्रयोदशशत ऋगात्मकं षड-धिक त्रिशतात्म-ऋगात्मकं चेति पक्षद्वयम्। अप्तोर्यामि त्रयस्त्रिंशच्छस्त्राणि। तत्र द्वादश आग्निष्टोमिकानि, द्वादश रात्रिपर्यायसंज्ञ-कानि, त्रीण्युकथ्यशस्त्राणि, वालखिल्यश-स्त्रम्, षोडशिशस्त्रम्, आश्विनशस्त्रम्, उक्थ्यशस्त्राणि त्रीणीति त्रयस्त्रिंशच्छस्त्राणि (तु०—का०श्रौ० १० ।९ ।२७ टि०) सोऽयं सर्वासां सोमसंस्थानां तद्गतस्तोत्रशस्त्राणां चोत्तरोत्तरमनुक्रम उच्यते। अतिरात्रशब्देन सर्वत्र रात्रिपर्यायसन्धिसामस्तोत्राणि अव-गन्तव्यानीति विशेषोऽवगन्तव्य:।

**सर्वस्तोमस्याह: क्लृप्ति—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीन-प्रकरणे सर्वस्तोमसंज्ञको द्व्यहोऽहीन:। स चातिरात्रसंस्थ: भूतिमिच्छतो भवति। तस्मिन् अतिरात्रसंस्थे द्व्यहे सर्वस्तोमे द्वाद-शोपसद्दिनानि, 'ज्योति: गौ:' इति द्वे सुत्या-दिने, षोडश दीक्षादिनानि मिलित्वा त्रिंशद्दिनानि मासापवर्गता संपद्यते अहीन द्वादशाहवर्जितानां सर्वेषामहीनां त्रिंशद्दिनेषु समाप्तिविधानात्। सर्वे त्रिवृत् पञ्चदश-सप्तदशैकविंश-त्रिणव-त्रयस्त्रिंशा: षट् स्तोमा यस्मिन् स सर्वस्तोम इत्युच्यते।

**सर्वस्तोमाभिजित्—** (अव्य०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायन-सत्रप्रकरणे सात्रिकेष्वह:सु पञ्चदशं सात्रिकमभिजित्संज्ञकमहरस्ति। अङ्गिरसा-मयने त्रयाणां स्वरसाम्नामधस्ताद्वर्तमानं तत् त्रिवृत्—पञ्चदश—सप्त—दशैकविंश-त्रिण वत्रयस्त्रिंशाख्यै: सर्वै: स्तोमै: सर्व- स्तोमवद् भवति। तेन सर्वे स्तोमा यस्मिन्नभिजिति स सर्वस्तोमोऽभिजिदुच्यते। तस्मिन् होत्र-काणां शस्त्रेषु प्रात:सवने परिशिष्टा आवापा ओप्यन्ते इति विशेषोऽवधेय: (तु०—आ०श्रौ० ७ ।२ ।११ ऐ० ब्रा० सा० ४ ।१९)।

**सर्वस्वदान—** (सा०) 'विश्वजिति सर्वस्वं ददाति' इत्यत्र विद्यमानस्यैव सर्वस्वस्य दानं सर्व-स्वदानमित्युच्यते। तत्र यस्य प्रभुत्वयोगेन स्वत्त्वं तदेव देयं दानं नेतरत् इति वि-शेषोऽवगन्तव्य:। **द्र०** मी०को० पृ० ४२३१। **द्र०** अभिजित्—।

**सर्वस्वार—** (अव्य०) सोमयज्ञेषु, प्रकृतिभूत-ज्योतिष्टोमविकृतौ एकाहप्रकरणे १. सर्व-स्वारसंज्ञक: एकाह:। स च त्रिवृत्स्तोम-कोऽग्निष्टोमसंस्थो मरणकामस्य भवति। तत्र तृतीय सवने आर्भवपवमाने प्रस्तूयमाने दक्षिणेनौदुम्बरीं दक्षिणशिरा: प्रस्वृतो यज-मानो मरणमुद्दिश्य शयीत। शयनानन्तरं मृतो भवेत्। २. सर्वस्वारो नाम कश्चिद् (एकाह:)। यज्ञविशेष उच्यते। स च मरण-कामेनानुष्ठीयते। तदुक्तम्—मरणकाम: सर्वस्वारेण यजेत (आप०श्रौ० २२। ७ ।२४)। तत्रौदुम्बर्यां वेष्टितायां 'ब्राह्मणा: समापयत मे यज्ञम्' इति प्रैषं कृत्वा (यज-मान:) अग्निं प्रविशति। इत्यवगन्तव्यम् ३. एकाहविशेष: (सर्वस्वार:), स्वरनिधानान्येव सर्वाणि सामानि यस्य स सर्वस्वार उच्यते। स च मरणकामेनानुष्ठीयते (तु०—तां० ब्रा० सा० १७ ।१२। १)। ४. सर्वस्वार: क्रतुर्मरणकामस्य। 'मरणकामो त्वेतेन यजेत, य: कामयेतानामय: स्वर्गं लोकमि-याम्। इति। स च यजमानमरणोत्तरमव-

शिष्ट: ऋत्विग्भि: समापनीय:। द्र० मी०को० पृ० ४२३२।

**सव—** (सा०) १. येषु सोमयज्ञेषु यजमानोऽभिषिक्तोऽस्ति तेषां (सोमयागानां) सव इत्याख्य (तु०—तां० ब्रा० सा० १७।११।८)। २. सूयतेऽभिषिच्यते यजमानो यस्मिन् महाक्रतौ सोऽयमभिषेकयुक्तो महाक्रतु: सव इत्युच्यते। (तु०—तां० ब्रा० सा० १८।८।१)।

**सवनकल्पन—** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिंष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनकल्पनं मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकानां त्रयाणां होत्रकाणां सवनगतानां मैत्रावरुणऐन्द्रऐन्द्राग्नशस्त्रसंपादनमेव सवनकल्पनमुच्यते।

**सवनच्छन्दस्—** द्र० छन्दोव्यूहन—।

**सवनच्छिद्र—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु बहिष्पवमान-माध्यन्दिनपवमानार्भवपवमाना: इति त्रय: पवमाना:, आवृत्तिस्तोत्राणि, हवींषि चेति त्रीणि सवनच्छिद्राण्युच्यन्ते। तत्र आवृत्तिस्तोत्राणि, हवींषि चेति त्रीणि सवनच्छिद्राण्युच्यन्ते। तत्र आवृत्तिस्तोत्राणि निरन्तराणि भवन्ति पवमानेभ्य: परम्, पुरस्तादावृत्तिस्तोत्रेभ्यो हविर्भि: प्रचरन्ति। हवींषि च यथा सवनीयै: पुरोडाशै: द्विदेवत्यैर्ग्रहै: सवनीयमुखीयैर्ऋतुयाजै: प्रात: सवने चरन्ति। दधिघर्मोपांशु पुरोडाशेन पुरोडाशै: सवनमुखीयैर्मरुत्वद्-ग्रहेणेति माध्यन्दिने। पश्वङ्गै: सवनमुखीयै: पुरोडाशै: सवनमुखीयै: सावित्रग्रहेण सौम्यचरुणा पत्नीवद्ग्रहेणेति। तदेवं त्रिषु सवनेषु हविषां प्रचारक्रमोऽप्यनुसन्धेय:।

**सवनत्रय—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवनं माध्यन्दिनसवनं तृतीयसवनमिति त्रीणि सवनानि सवनत्रयमुच्यते।

**सवनभाक्-पितृगण—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु पितृभ्यो भक्षणार्थं सोम: प्रदीयते। तत्र पितरस्तावद् द्विविधा मृता अमृताश्चेति। इदानीं मृता: सन्तो मरणादूर्ध्वं पितृलोकं प्राप्ता: मृता:। सृष्टिमारभ्य पितृ-लोकेऽस्थिता ऊमा ऊर्वा: काव्या इति त्रिविधा: पितरोऽमृता:। अमृतेषु तेषु ऊमा: प्रात: सवनं, ऊर्वा माध्यन्दिनं, काव्यास्तृतीयसवनं भजन्तीति सवनत्रयगता: पितृविशेषा: सवनभाक्पितृगणा उच्यन्ते। (तु०—ऐ० ब्रा० सा० ७।३४)। त एते ऊमा और्वा: काव्या: त्रय: पितृगणा अनुसवनं यथासंख्येन आप्यायितानां चमसानां देवता अभिधीयन्ते इति विशेषोऽवधेय: (तु०—आ०श्रौ० ५।६।३० नारायण:॥

**सवनमास—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ संवत्सरायनसत्रप्रकरणे गवामयनादिषु प्रयोक्तव्य: पृष्ठ्याभिप्लवाहोभिर्निर्वृत्तो मास: सवनमास इत्युच्यते। तत्रैक: पृष्ठ्यषडह: (१-६) चत्वारोऽभिप्लवषडहा: (६-३०) इति मिलितानि त्रिंशद्दिनानि एक: प्रथम: सवनमास भवतीत्यर्थ:। ते पूर्वपक्षे षट् क्रियन्ते। विश्वजित ऊर्ध्वं सप्तमपि मासं पृष्ठ्यप्रमुखैश्चतुर्भि: अभिप्लवै: कुर्वन्ति। एवमुत्तरपक्षेऽपि षट् सवनमासान् कुर्वन्तीति विशेषोऽवगन्तव्य: (तु०—आ०श्रौ० ११।७।१९ नारायण:)।

**सवनमुखसोमभक्षण—** (हौ०, आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र-प्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. होता प्रातःसवने द्विदेवत्यग्रहप्रचारे कृते द्विदेवत्य-ग्रहशेषभक्षणात् पूर्वं 'अवान्तरेडां' (सवनी-येडां) प्राश्य पश्चात् स्वचमसं भक्षयेदध्वर्यु उपह्वयस्व' इत्युक्त्वा। दीक्षितश्चेत् (होता) 'दीक्षिता उपह्वयध्वम् इत्युक्त्वा स्वचमसं भक्षयेत् (तु०— आ०श्रौ० ५।६।१४-१५ नारायणः) २. उद्गाता प्रातः सवने सवनमुखी-येष्वाहृतेषूपहवमिच्छते— 'अग्निर्मे होता स मोपह्वयताम्। होतरूप मा ह्वयस्व इत्युच्चैः। आदित्योमेऽध्वर्युः स मो-पह्वयताम्। अध्वर्यु उपमा ह्वयस्व इत्युच्चै' इत्यादिं 'रश्मयो मे चमसाध्वर्यवस्ते मोपह्व-यन्ताम्। चमसाध्वर्यव उपमाह्वयध्वम् इत्युच्चैः' इयन्तमुह्वमुक्त्वा उपहूतो भक्षयेति (तु०—श्रौ०को० २. भा० पृ० ३१६)। अर्थात् एवमुपहूत 'भक्षेहि माविश दीर्घायु-त्वाय संतनुत्वाय' इत्यादिकेन 'वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्र-च्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योप-हूतो भक्षयामि' इत्यन्तेन मन्त्रेण स्वचमसं भक्षयति। होत्रुद्गातृव्यतिरिक्ता अन्येऽपि ऋत्विजो होत्रकाः वषट्कारहोमाभिषव-समाख्यानिमित्तत्वात् स्वस्वचमसान् भक्ष-यन्ति। भक्षयित्वा 'अपाम सोमम्' (ऋ० ८।४८।३-४) इति द्वाभ्यामृग्भ्यां अद्भिः मुखहृदये अभिमृशेरन्। प्रथमया मुखं द्वितीययाहृदयम्। ततः 'आप्यायस्व समेतु' (ऋ० १।९१।१६), 'सं ते पयांसि' (ऋ० १।९१।१८) इति द्वाभ्यां स्वं स्वं चमसं आप्याययन्ति। आद्यानद्भिरभिमृशेरन् प्रातः सवने। (तु०—आ०श्रौ० ५।६।२६-२७ नारायणः, श्रौ०को० २ भा० पृ० ३१५-१६)। माध्यन्दिनसवने होता प्रातः सवनवत् भक्षाभिमर्शनाप्यायनानि करोति (तु०— आ०श्रौ० ५।६।२३।२६-२७) भक्षमन्त्रे तु 'रुद्रवद्गणस्य सोमदेवते मतिविदो माध्य-न्दिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति विशेषः। स (उद्गाता) 'माध्यन्दिने सवने स-वन मुखीयेष्वाहृतेषु उपहवमिच्छतेवाङ्मे होता स मोपह्वयताम्। होतरूप मा ह्वयस्व इत्युच्चैः' 'चक्षुर्मेऽध्वर्युः समोपह्वयताम्। अध्वर्य उप मा ह्वयस्व इत्युच्चैः' इत्यादिकं 'अङ्गानि मे चमसाध्वर्यस्ते मोपह्वयन्ताम्। चमसाध्वर्यव उप मा ह्वयधमवम् इत्युच्चैः' इत्यन्तमुपहवमन्त्रमुक्त्वा भक्षयति। शिष्टं भक्षामिमर्शनादिवत्। (तु०—श्रौ०को० २ भा० पृ० ३७२-७३)। तृतीयसवने होता प्रातः सवनवदेव भक्षाभिमर्शनाप्यायनानि करोति (तु०—आ०श्रौ० ५।६।२३।२६-२७)। भक्षमन्त्रे तु 'आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगती-च्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योप-हूतो भक्षयामि' इति विशेषः। स (उद्गाता) तृतीयसवने सवनमुखीयेष्वाहृतेषु उपहव-मिच्छते—'प्राणो मे होता समोपह्वयताम्। होतरूप मा ह्वयस्व इत्युच्चैः। अपानो मेऽध्वर्युः मोपह्वयताम्। अध्वर्य उपमा ह्वयस्व इत्युच्चैः' इत्यादिकं 'लोमानि मे चमसाध्वर्यवस्ते मोपह्वयन्ताम्। चमसाध्व-र्यव उप मा ह्वयध्वम् इत्युच्चैः' इत्यन्तमुपह-वमन्त्रमुक्त्वा उपहूतो भक्षयति। शिष्टं भक्षाभिमर्शनाप्यायनानि प्रातःसवनवत् करोति। उद्गातृचमसं नान्यो भक्षयेत् इति विशेषोऽवधेयः। (तु०—आ०श्रौ० ५। ६।२८; श्रौ०को० २ भा० पृ० ४३५-३६)। इदं सवनमुखसोमभक्षणं होतृ-चमसे भक्षणं वोच्यते।

**सवनमुखीयचमस—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सन्ति दश चमसाः। तत्र मध्यतः कारिसमाख्यानां होतृब्रह्मोद्गातृयजमानां चत्वारश्चमसाः। मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां षट्। तत्र प्रातःसवने शुक्रामन्थिप्रचारे अच्छावाकचमसवर्जं नव चमसा, सवनमुखीयचमसा उच्यन्ते। प्रथममिन्द्राय हूयन्ते। (तु०—मी०को० पृ० ४२३६)। **द्र०** चमस-, दशचमस—।

**सवनसन्तनिहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत ज्योतिरात्रविकृतौ सत्रप्रकरणे शतातिरात्रे क्रतौ सवनसन्तनिर्नाम होमः सवनसन्तनिहोम उच्यते। स च 'अग्निः प्रातः सवने पातु' इति मन्त्रेण हूयते।

**सवनस्तोम—** (औ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु द्वौ स्तोमौ (त्रिवृत्पञ्चदशौ) प्रातःसवनं वहतः। द्वौ स्तोमौ (सप्तदशैकविंशौ) माध्यन्दिनसवनम्, द्वौ स्तोमौ (त्रिणवत्रयस्त्रिंशौ) तृतीयसवनम्' (तै०—सं०सा० ७।१।१।१)। इति सवनस्तोमा उच्यन्ते।

**सवनीयधानाश्रपण —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयाऽऽमिक्षावाजिनकरणानन्तरं 'त्वचं गृह्णीष्व' इत्यादि। शालामुखीयस्य पश्चात् पुरोवाऽन्येभ्यो निनयति। ततो भ्रष्टान् यवानवतार्य द्विधा कृत्वा एकं भागं 'इन्द्राय वः' इति मन्त्रेणाभिमृश्य नवे पात्रे तिरापवित्रं लौकिकमाज्यमानीय तस्मिन् तं भागमोप्य पुरोडाशादुत्तरतो भस्ममिश्रेषु अङ्गारेष्वधिश्रयति। इदं सवनीयधानाश्रपणमुच्यते। **द्र०** श्रौ०प०नि० पृ० २६१।

**सवनीयपञ्चहोतृहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु 'उपावहृतः सोमः' इत्युद्गातृनिवेदनानन्तरं अप उपस्पृश्य 'एहि यजमान' इति यजमानमामन्त्र्य आग्नीध्रीयं गत्वा प्रचरण्यां चतुर्गृहीतं गृहीत्वा पञ्चहोतारं मनसाऽऽद्रुत्य यजमाने अन्वारब्धे जुहोति। 'वाचस्पतये ब्रह्मणे' इदमिति यजमानः। अयं सवनीयपञ्चहोतृहोम उच्यते। **द्र०** श्रौ०प०नि० पृ० २५९। **द्र०** पञ्चहोतृमन्त्र—।

**सवनीयपशु—** (अव्य०, सा०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रप्रकरणे १. सवनीयाः पशवः (क्रतुपशवः) अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थेषु क्रतुषु प्रकृतिविकृतिभूतेषु बहिष्पवमानाद्यनन्तरं माध्यन्दिने आलभ्यन्ते। तत्र आग्नेयः पशुः अग्निष्टोमे आलभ्यः। ऐन्द्राग्नः पशुरुक्थ्ये आलभ्यः ऐन्द्रो वृष्णिः षोडशिनि आलभ्यः। सारस्वती मेषी अतिरात्रे आलभ्या इति अग्नीन्द्राग्नीन्द्रसरस्वतीदेवत्याः पशवः सवनीयाः पशवो भवन्ति। २. अश्वमेधे तु अश्वः तूपरो गोमृगश्चेति त्रयः सवनीयाः पशव उच्यन्ते। **द्र०** मी०को० पृ० ४२३६। ३. सवनीयादिषु पशुषु अग्नीषोमीयस्य विध्यन्तः आलभति चोदनासामान्यात् पशुत्वचोदनासामान्याच्च। इति विशेषोऽनुसंधेयः। **द्र०** मी०को० पृ० ४२३८। ४. प्रातरादिषु त्रिषु सवनेषु भवः (आग्नेयः) पशुः सवनीयपशुपदवाच्यः। तस्य वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने चरन्तीति सवनीयः (तु०—आ०श्रौ० ५।३।१ नारायणः मी०को० पृ० ४३७)। ५. अग्नीषोमीयपशोः विकृतिः सवनीयः पशु- रुच्यते। तत्र अग्निष्टोमे एक एव आग्नेयः। उक्थ्ये आग्नेयश्चैन्द्राग्न-

श्चेति द्वौ षोडशिनि पूर्वौ द्वौ तृतीय ऐन्द्रो वृष्णिश्च । अतिरात्रे तु पूर्वे त्रयः सारस्वती मेषी च चतुर्थी । इति विशेषोऽवगन्तव्यः । ६. सवनीयपशोः विध्यन्तः ऐकादशिनेषु अतिदेष्टव्यः । मी०को० पृ० ४२४१ ।

**सवनीयपशुपुरोडाशनिर्वाप**— सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमा... तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने ऊर्ध्वं माध्यन्दिनपवमानात् सवनीयपशुपुरोडाशनिर्वाप प्रैषानन्तरं आग्नीध्रो माध्यन्दिनीयैः सवनीयैः सह निर्वपति । अयं सवनीयैः सह पशुपुरोडाशनिर्वाप उच्यते । द्र० श्रौ०प०नि० पृ० २८० ।

**सवनीयपशुपुरोडाशयाग**— द्र० माध्यन्दिनसवनीयप्रचार— । द्र० माध्यन्दिनसवनीयप्रचार— ।

**सवनीयपशुपुरोडाशयाज्यापुरोनुवाक्या**— (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने सवनीयपशुपुरोडाशयागस्य 'इन्द्र त्वं पारया नव्याः' (ऋ० १ ।१८९ ।२) इति पुरोनुवाक्या । 'यथा विप्रस्य मनुषः' इति याज्येति भवति । याज्यानुवाक्ये भवतः द्र० श्रौ०को० २ भा० पृ० ३६८ ।

**सवनीयपशुवपायागप्रचार**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत... तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने सवनीयाङ्गमैत्रावरुणादिप्रवरणानन्तरं ऊर्ध्वं माध्यन्दिनपवमानात् आश्वलायनो यजमानः स्रुवेण प्रवृत्ताहुतीर्जुहोति । अग्नीषोमीयवत् सवनीयपशु वपाप्रचार ऊहेन कर्तव्यः । अयं सवनीयपशुवपाप्रचारः । द्र० श्रौ० प० नि० पृ० २८० ।

**सवनीयपशुवपायागयाज्यानुवाक्या**— (हौ०) सोमयज्ञेषु प्रकृतिभूततद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने ऊर्ध्वं बहिष्पवमानात् सवनीयपशुवपायागस्य 'अग्ने नय सुपथा' (ऋ० १ ।१८९ ।१) इति पुरोनुवाक्या, 'प्र वः शुक्राय' (ऋ० ७ ।४ ।१) । इति याज्येति । याज्यानुवाक्ये भवतः । द्र० श्रौ०को० २ भा० पृ० २९६ ।

**सवनीयपशुविभाग**—(सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयस्य पशोर्ऋत्विगादिभ्यो दक्षिणासु दीयमानानि षट्त्रिंशदङ्गानि सवनीयपशुविभाग उच्यते । तत्र १. हनू सजिह्वे प्रस्तोतुः, २. श्येनं वक्षः उद्गातुः, ३. कण्ठः काकुदः (ककुत्) प्रतिहर्तुः, ४. दक्षिणा श्रोणिर्होतुः, ५. सव्या ब्रह्मणः, ६. दक्षिणं सक्थिमैत्रावरुणस्य, ७. सव्यं ब्राह्मणाच्छंसिनः, दक्षिणं पार्श्वं सांसमध्वर्योः, ८. सव्यमुपगातृणाम्, ९. सव्योंऽसः प्रतिप्रस्थातुः, १०. दक्षिणं दोर्नेष्टुः ११. सव्यं पोतुः, १२. दक्षिण ऊरुरच्छावाकस्य, १३. सव्य आग्नीध्रस्य, १४. दक्षिणो बाहुरात्रेयस्य, १५. सव्यः सदस्यस्यः, १६. सदञ्चानूकं च गृहपतेः, १७. दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य, १८. सव्यौ पादौ गृहपतेर्भार्यायैर्व्रतप्रदस्य, १९. ओष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्यात्, २०. जाघनीं पत्नीभ्यो हरन्ति तां ब्राह्मणाय दद्युः, २१. स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतः, २२. तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतुः, २३. अर्धं चैव वैकर्तस्य, २४. क्लोमा च शमितुः तद् ब्राह्मणाय दद्यात् यद्यब्राह्मणः स्यात्, २५. शिरः सुब्रह्मण्यायै २६. यः श्व सुत्यां प्राह तस्याजिनं २७. इडा सर्वेषां होतुर्वा । ता वा एताः षट्त्रिंशस्तमेकपदा यज्ञं वहन्ति ।

(तु०—आ०श्रौ० १२।९।२-१४ ऐ० ब्रा० ७।१)। अर्थात् यान्येतानि। अङ्गानां द्वित्व-तृत्वाभ्यासेन षट्त्रिंशदङ्गानि उक्तानि तानि षट्त्रिंशदेकपदा उच्यन्ते। उक्तं च-ऊरू-पादौ च तौ द्वौ द्वावन्ये द्वात्रिंशदेव हि। हन्वादीनान्तमुक्तं ताः षट्त्रिंशद्भक्तयः पशोः (ऐ० ब्रा० सा० ७।१ ताश्च यज्ञं वहन्ति, भक्षयितॄणां बलवर्धनद्वारेण। (तु०—तत्रैव नारायणः)।

**सवनीयपशुपृष्ठ्यास्तरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु सवनीयपशौ प्रातः सवने आग्नीध्रः शालामुखीयाद् आरभ्याहवनीय-पर्यन्तं प्राकृतमन्त्रेण पृष्ठ्यां स्तृणाति। इदं सवनीयपशु पृष्ठ्यास्तरणमुच्यते। द्र० श्रौ०प०नि० पृ० २७९।

**सवनीयपशुहविर्याग—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने तृतीयसवनीयहोमानन्तरं नवम्यां प्रस्तुतायां वाचयति—'स पासि० पारय' इति। पञ्चहोतारं व्याख्याय समाप्ते साम्नि (आर्भवमानस्तोत्रे) संप्रैषमाहः—'अग्नीत् शालाकान् (विहर० पशौ संवदस्व' इति। 'अङ्गैः (हृदयादिपश्वङ्गैः) तृतीयसवनम्' इति। पूर्ववद्धविर्धानं प्रविश्य सवनसोममुपतिष्ठते — 'विष्णो त्वन्नः' इत्यादिना। प्रातः सवनवत् शालाकान् विहृत्य धिष्ण्यव्याधारणं पृष्ठ्यास्तरणं च। अध्वर्युः अग्नीदुत्तर बर्हिरित्यादिना अग्नीषोमीयवद् वक्षः परिहरणान्तं प्रचरति। इति सवनीयहविर्याग सवनीयपशुप्रचार उच्यते। तदुक्तं 'स्तुते पवमाने पशुना चरन्ति। श्रौ०को० २. भा० पृ० ४३१. पशुयज्ञेषु हृदयादीनि आभ्यन्तराण्यङ्गानि देवेभ्यः इज्यन्ते। हन्वादीनि बाह्यान्याङ्गानि ऋत्विगादिभ्यः दक्षिणासु प्रदीयन्ते इति विशेषोऽवधेयः। द्र० तु०—श्रौ०प०नि० पृ० ३०७।

**सवनीयपशुहविर्याग याज्यानुवाक्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...तद्विकृतिषु चैकाहा-हीनसत्रेषु तृतीयसवने ऊर्ध्वं आर्भवपवमानात् सवनीयपशुहविर्यागस्य 'पाहिनो अग्ने' (ऋ० १।१८९।४) इति पुरोनुवाक्या, 'प्र कारवो मनना' (ऋ० ३।६।१) इति याज्येति याज्यानुवाक्ये भवतः।

**सवनीयपश्वङ्गर्त्विक्प्रवरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सवनीयपशौ प्रातः सवने यूपरशनामादाय यूपसमीपमागत्य स्वरूं गृहीत्वा पूर्वां रसनामुदुह्य परिव्ययणादिप्रवरान्तं अग्नीषोमीयवत् (पशुबन्धवत् करोति। तत्र विशेषः मन्त्रेषु देवतास्थाने अग्निशब्द ऊह्यः। होतृप्रवरानन्तरं 'अश्विनाऽध्वर्यू आध्वर्यवात्' अहं चामुक शर्मा 'मानुषौ' इति प्रतिप्रस्थातुर्नाम गृह्णाति। होत्रा हुते सकृद्गृहीतेन प्रवृत्ताहुतीर्जुहोति—'जुष्टे० सरस्वत्यै स्वाहा' ऋचा स्तो० नि स्वाहा। सूर्यो मा० ते स्वाहा। एवं प्रतिप्रस्थाता। अध्वर्युः पुनरुत्करं गत्वा 'मित्रावरुणौ प्रशास्तारौ प्रशास्त्रात्।' अमुकशर्मा मानुष इति मैत्रावरुणस्य नाम गृह्णाति। 'इन्द्रो ब्रह्मा ब्राह्मणात्।' पूर्ववद् ब्राह्मणाच्छंसिनो नाम गृह्णाति। 'मरुतः पोत्रात्' इति पोतुः। 'ग्रावो नेष्ट्रात् इति नेष्टुः। 'अग्निराग्नीध्रात्' इत्यग्नीधः। सर्वप्रवरात् पूर्वं आश्रावण प्रत्याश्रवणे भवतः। तत आश्राव्य प्रत्याश्राविते 'अग्निर्ह देवीनां विशां पुर एतायां सुन्वन् यजमानो मनुष्याणां तयोरस्थुरि गार्हपत्यं

दीदयच्छतं हिमाद्वायू राधासीत्संपृञ्चानाव-पृञ्चानौ तन्वः' इत्याह: । इदं सवनीयाङ्गमैत्रा-वरुणादिप्रवरणम् । द्र० श्रौ०प०नि० पृ० २७९-८०) । २. अमुक शर्मा होता मानुषः' इति होतृनाम ग्रहणान्तं पाशुकं कर्म कृत्वा पुनराश्राव्य प्रत्याश्राव्य होतृ व्यतिरिक्तानि-तरान् ऋत्विजः तत्तन्नाममन्त्रैः प्रवृणीते । तत्र 'अश्विनावध्वर्यू आध्वर्यवात्' इति मन्त्रेण अध्वर्युप्रतिप्रस्थातारौ वृणुयात् । 'मित्राव-रुणौ प्रशास्तारौ प्राशास्त्रात्' इति मन्त्रेण प्रशास्तारं वृणुयात् 'इन्द्रो ब्रह्मा ब्राह्मणात्' इति ब्राह्मणाच्छंसिनम्, 'मरुतः पोत्रात्' इति पोतारम्, 'ग्रावो नेष्ट्रात्' इति नेष्टारम्, 'अग्नि-राग्नीध्रात्' इत्याग्नीध्रं वृणुयात् । 'अग्निर्ह-देवानाम्' इति यजमानं च वृणुयात् । ततः वरणक्रमेण होता, अध्वर्युः प्रतिप्रस्थाता, प्रशास्ता ब्राह्मणाच्छंसी (ततोऽच्छावाकः कर्कमते) पोता, नेष्टा, अग्नीत्, यजमानः इत्येते प्रत्येकं द्वे द्वे आहुती (प्रवृत्तहोमौ) 'जुष्टो वाचे भूयासं वाचस्पतये देवि वाग् यत्ते वाचो मधुमज्जुष्टतमं तस्मिन् मा धाः स्वाहा सरस्वत्याः' इति मन्त्रेण आहवनीये जुह्वति । तत्र 'जुष्टो वाचे' इति प्रथमामाहुतिं प्रचरण्या सकृद्गृहीतेनाज्येन जुहुयादिति विशेषोऽवधेयः । तु०—का० श्रौ० ९ ।८ ।७-१५ विद्याधरः) ।

**सवनीयपुरोडाशयागनिर्वाप—** (आध्व०) सोम-यज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयपुरोडाशनिर्वपि प्रातःसवने इन्द्राय हरिवते धानाः, इन्द्राय पूष-ण्वते करम्भं, इन्द्राय सरस्वतीवते परिवापं, इन्द्राय पुरोडाशं, मैत्रावरुणाभ्यां पयस्या-मिति पञ्च हवींषि अग्नीत् निर्वपति । तदु-क्तम्—'हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूप इति हविष्पङ्क्त्या यजति' (ऐ० ब्रा० २ ।२४) । मैत्रावरुणी पयस्या च । उत्तरयोर्माध्यन्दिनतृतीयसवनयोः धानादीनि चत्वारि चत्वारि निर्वपति । येयं प्रातः सवने पञ्चमी पयस्या सा नेत्तरयोः सवनयोः (द्र० श्रौ०को० २ भा० पृ० ३०२) । १. तत्र प्रातःसवने एव प्रातरनुवाकादिप्रैषानन्तरं पिता पुत्रीयायां सुब्रह्मण्यायामाहूतायां आग्नीध्रः ऐन्द्राग् (सवनीयान्) पुरोडाशान् शालामुखीये निर्वपति । तत्र सौत्य (सव-नीय) पुरोडाशीयपात्रासादनान्ते पवित्रकर-णादि । उत्तरवेदिसमीपे प्रणीतासादनम् । ततोऽग्निहोत्रहवण्यादानादि । निर्वपि वि-शेष उच्यते । पात्र्यां व्रीहीन् यवांश्च भेदेन प्रक्षिप्य पूर्वार्धमभिमृशति द्वयोर्द्रव्ययोः बीजेक्षणकिंशारु निरसनयोरावृत्तिः । 'देवस्य त्वा स. भ्यामिन्द्राय जुष्टं निर्वपामि' इति मन्त्रे विशेषः । पुरोडाशार्थं चतुरो व्रीहि मुष्टीन् निरूप्य धानार्थं करम्भार्थं च यवमु-ष्टीन्, परिवापार्थं ब्रीहिमुष्टीन् निर्वपति । ऐन्द्राण्येव सर्वाणि द्रव्याणि । निरुप्ताभि-मर्शनातिशिष्टाभिर्शनैकीकरणानामावृत्तिः । धान्यद्वित्वात् 'उर्वन्तरिक्षमन्वितम् । आदित्या वामुपस्थे सादयामि' इत्यूहः । अयं सवनीयपुरोडाशनिर्वाप उच्यते । द्र० श्रौ०प०नि० पृ० २६० । २. श्रौ०को० २. भा० पृं० ३०१-२ । द्र० सौत्यपुरोडाशीय-पात्रासादन— । २. प्रातःसवने अग्नीत् प्रातरनुवाके होत्रा शस्यमाने एव इन्द्रदेवता-कमेकादशकपालं सवनीयपुरोडाशं निर्व-पेत्, सवनीयानां प्रथमं हविरिदम् । हरिभ्यां धानाः, पूष्णे करंभं, सरस्वत्यै दधि (पक्षे परिवापं), मैत्रावरुणाभ्यां पयस्यामिति द्वितीयादीनि निर्वपति । तदुक्तम्-अग्नीदैन्द्रमेकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भं सरस्वत्यै दधि, मित्राव-

रुणाभ्यां पयस्याम्'। इन्द्राय वा हरिपूषसरस्वतीमित्रावरुणवते धानादीनि यथा—संख्यम्'। अर्थात् इन्द्राय हरिवते धानाः इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतीवतेदधि, इन्द्राय मित्रावरुणवते पयस्या इति चत्वारि हवींषिं स्युः (तु०—का० श्रौ० ९ ।१ ।१५-१६ विद्याधरः)। 'इन्द्रस्यापूपः' इत्यत्र अपूपशब्देन पुरोडाश एवं गृह्यते, 'यथै तत् त्रैयम्बका अपूपाः पुरोडाशाः'। इति। स चैकादशकपाल एव त्रिषु सवनेषु। ततस्तदर्थं एकादश कपालान्युपधीयन्ते। इति विशेषोऽनुसंधेयः। सोऽयं सवनीयपुरोडाशयागनिर्वाप उच्यते।

**सवनीयपुरोडाशयाग—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सदः प्रसर्पणनमस्कारानन्तरं सवनीयपशोः प्रातःसवने वपायागस्य माध्यन्दिनसवने पुरोडाशयागस्य तृतीयसवने हविर्यागस्य च पश्चात् त्रिषु सवनेषु भवानि पुरोडाशः (आपूपः), धानाः, करम्भः, परिवापः (शाखान्तरे दधि), पयस्या इति पञ्च द्रव्याणि सवनीयपुरोडाशाः पुरोडाशा वा समाख्यायन्ते। हविष्पङ्क्तिरिति चोच्यन्ते। तेषां यागः सवनीयपुरोडाशयागोऽभिधीयते। तदुक्तम्—'धानाः करम्भः परिवापः पुरोडाशः (अपूपः) पयस्येत्येष वै यज्ञो हविष्पङ्क्तः हविष्पङ्क्तनायज्ञेन राध्नोति यं एवं वेद (ऐ० ब्रा० २ ।२४)। 'अथैन्द्रैः पुरोडाशैरनुसवनं चरन्ति' (आश्रौ० ५ ।४ ।१)। तत्र पञ्चभिः पुरोडाशैः प्रातःसवने प्रचरन्ति चतुर्भिर्माध्यन्दिनसवने चतुर्भिश्च तृतीयसवने। इति त्रिषु सवनेषु त्रयोदश सवनीयाः पुरोडाशा अनुष्ठीयन्ते। येयं प्रातः सवने पञ्चमी पयस्या न सा माध्यन्दिनतृतीयसवनयोः। उक्तं च 'प्रातःसवन एवैषा मैत्रावरुणी पयस्याऽवक्लृप्ता भवति नेतरयोः सवनयोः' (श० ब्रा० श्रौ०को० २ भा० पृ० ३०२)। यद्यपि तेषां र्निवापविधौ 'इन्द्रस्य पुरोडाशोहर्योः (अश्विनोः) धानाः पूष्ण करम्भः सरस्वत्यै दधि (शाखान्तरे परिवापः) मित्रावरुणयोः पयस्या' इति तत्रैव पृथक् पञ्च देवताः पृथक् पञ्च हवींषि च विहितानि। एवमेव 'अग्नीदैन्द्रमेकादशकपालं निर्वपति, हरिभ्यां धानाः, पूष्णे करम्भम्, सरस्वत्यै दधि, मित्रावरुणाभ्यां पयस्याम्' (का०श्रौ० ९ ।१ ।१५) इति सूत्रितवान्, तथापि तत्तद्देवतागुणक एक एव इन्दो देवता सर्वेषां पुरोडाशानां प्रतिपाद्यते। अतः सर्वे चैन्द्राः पुरोडाशा इत्युपपद्यते। तदाह कात्यायनः-अपि वा हरिपूषसरस्वतीमित्रावरुण वते धानादीनि यथासंख्यम्' (का० श्रौ० ९। १ ।१६)। अर्थात् इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भः, इन्द्राय सरस्वतीवते दधि, इन्द्राय मित्रावरुणवते पयस्या इति चत्वारि हवींषि पृथग्देवतागुणकायैकस्मै एवेन्द्राय निरूप्यन्ते (तु०—तत्रैव विद्याधरः)। सर्वेषां पुरोडाशानां याज्याश्च एकेन्द्रवता सबन्धिन्यो भवन्ति—'हरिवाँ इन्द्रो धाना अत्तु, पूषण्वान् करम्भ, सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपः' इति ब्राह्मणश्रुतेः (ऐ० ब्रा० २ ।२४)। तेन सर्वे पुरोडाशा ऐन्द्रा भवन्ति। 'सर्व ऐन्द्रा भवन्ति' इति श्रुतिश्च पुरोडाशानामैन्द्रत्वं समर्थति (तु०—का० श्रौ० ९ ।१ ।१६ विद्याधरः)। अथापि सवनानां वसुरुद्रविश्वेदेवदेवतात्वसत्त्वेऽपि एकादशकपालत्वविधानादिन्द्रमेव यजन्ति। तदुक्तम्—वसूनां प्रातःसवनम्। रुद्राणां माध्यन्दिनं सवनम्। विश्वेषां देवानां तृतीयसवनम्।

अथ कस्मादेतेषां हविषामिन्द्रमेव यजन्तीति। एता ह्येनं देवता इति ब्रूयात्। (तु०—श्रौ० को० २ भा० पृ० ३०१)। नन्विह 'इन्द्राय हरिवते धानाः, इन्द्राय पूषण्वते करम्भम्, सरस्वत्यै भारत्यै परिवारिवापमिन्द्राय पुरोडाशं मित्रावरुणाभ्यां पयस्याम्' इति धानादिषु हविःसु चतुर्थे एव हविषि पुरोडाशो हविः, तत्कथं सर्वेषां पुरोडाशसंज्ञेति चेदत्र पुरोडाशशब्दः छत्रिन्यायेन सर्वेषु धानादिषूपचर्यते (तु०—ऐ० ब्रा० सा० २।२२-२३ आ०श्रौ० ५।४।६ नारायणः)। २. पुरोडाशशब्देन धानाकरम्भपरिवाप-(शाखान्तरे दधि-) पुरोडाशपयस्याख्यानां पञ्चानामपि हविषामभिधानात् पुरोडाशशब्दस्य लिङ्गसमवायात् धानादिष्वपि प्रवृत्तिः। **द्र०** मी० को० पृ० ४२४३। **द्र०** प्रातःसवनीयप्रचार—, माध्यन्दिनसवनीयप्रचार—, तृतीयसवनीयप्रचार—।

**सवनीयपुरोडाशयागस्य प्रातःसवने पुरोडाशस्य पुरोनुवाक्याप्रैषयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयपुरोडाशयागस्य प्रातः सवने पुरोडाशहविषः (अपूपहविषो वा) होतुः पुरोनुवाक्या-'धानावन्तं करम्भिणम्' (ऋ० ३।५२।१, आ०श्रौ० ५।४।१ श्रौ०को० २ भा० पृ० ३-२) इति मैत्रावरुणस्य प्रैषः—'होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् परिवापः (लाजाः) इन्द्रस्यापूपो (पुरोडाशः) मैत्रावरुणयोः पयस्या प्रातः प्रातःसवनस्य पुरोडाशाँ इन्द्रः प्रस्थितान् जुषाणो होतर्यज' (ऋ०खि० ५।७।५ आ०श्रौ० ५।४।३ श्रौ०को० २. भा० पृ० ३.२) इति। प्रैषरूपा याज्या— 'ये३यजामहे हरि वाँ इन्द्रो धाना अत्तुपूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्या पूपो (पुरोडाशः) मित्रावरुणयोः पयस्या प्रातः प्रातःसवनस्य पुरोडाशाँ इन्द्र प्रस्थिाञ्जुषाणोवे तु' वौषट् (श्रौ०को० २ भा० पृ० ३०२ टि० आ०श्रौ० ५।४।४-५)। इत्येष प्रैष एव आदौ ये३यजामहे' इति अन्ते 'वेतु वौषट् इति द्वाभ्यां पदाभ्यां युक्तो होतुः याज्या भवति। तत्र येनैव (प्रैषेण) मैत्रावरुणः प्रेष्यति तेनैव होता यजति (तु०—शां० ब्रा०)। प्रैषे च 'होतर्यज' इत्यस्य स्थाने वषट्कारं कृत्वा (होता) यजति (श्रौ०-प०नि० पृ० १७५)। 'होता यक्षत्, असौ यजयोः' तु स्थाने आगुर् (ये ३ यजामहे) वषट्कारौ (वौ३षट्) यत्र क्व च प्रैषेण (प्रैषरूपयाज्यया) यजेत्' (तु०— आ०श्रौ० ५। ४।५) एवं च 'ये ३ यजामहे इन्द्रं हरिवाँ इन्दो. जुषाणो वेतु वौ३षट्' इति प्रैषयाज्यास्वरूपः सिद्ध्यति इति विशेषोऽवगन्तव्यः। पुरोडाशयाज्याक्रमस्तु श० ब्रा० अनुसारी प्रथम ऐन्द्रः पुरोडाश आहतो न तु०—ऐ० ब्रा० अनुसारी चतुर्थः ऐन्द्रोऽपूपः (पुरोडाशः) इति च विशेषोऽनुसंधेयः। अथ प्रातः सवने स्विष्टकृतः पुरोनुवाक्या—'अग्ने जुषस्व नः' (ऋ० ३।२८।१ आ०श्रौ० ५।४।६ श्रौ०को० २. भा० पृ० ३०२)। प्रैषः—'होता यक्षदग्निं पुरोडाशानां जुषतां हविर्होतर्यज'। याज्या—'ये३यजामहेऽग्निं पुरोडाशानां जुषतां हविरग्ने वीहि' (तु०—ऐ० ब्रा० २।२४ आ०श्रौ० ५।४।७)। 'ये यजामहेऽग्निं पुरोडाशानां जुषतां हविः' (तु०—श्रौ०को० २. भा० पृ० ३०२ टि०)। इति सवनीयपुरोडाशयागस्य प्रातःसवनीयः पुरोनुवाक्याप्रैषयाज्याः।

**सवनीयपुरोडाशयागस्य माध्यन्दिनसवने पुरोडाशस्य पुरोनुनावाक्या-प्रैष-याज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयपुरोडाशयागस्य पशुपुरोडाशयागानन्तरं माध्यन्दिनसवने पुरोडाशहविषः (अपूवहविषः) होतुः पुरोनुवाक्या—'माध्यन्दिनस्य सवनस्य धानाः' (ऋ० ३।५२।५) आ०श्रौ० ५।४।३ श्रौ०को० २ भा० पृ० ३६८)। मैत्रावरुणस्य प्रैषः—'होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपो माध्यन्दिनस्य सवनस्य पुरोडाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु होतर्यज' (ऋ०खि० ५।७।४उ, श्रौ०को० २ भा० पृ० ३६८)। प्रैषरूपा याज्या—'ये३यजामहे इन्द्रो हरिवाँ इन्द्रोधाना अत्तु पूषण्वान् करंभं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपोमाध्यन्दिनस्य सवनस्य पुरोडाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु वौषट्' इति (आ०श्रौ० ५।४।४-५ श्रौ०को० २ भा० पृ० ३६८)। अथ माध्यन्दिनसवने स्विष्टकृतः पुरोनुवाक्या—'माध्यन्दिने सवने जातवेदः' ऋ० ३।२८।४ आ०श्रौ० ५।४।६)। प्रैष—'होता यक्षदग्निं पुरोडाशानां जुषतां हवि होतर्यज' (ऋ०खि० ५।७।४।३, आ०श्रौ० ५।४।७ श्रौ०को० २ भा० पृ० ३-६८)। प्रैषरूपा याज्या—'ये३यजामहेऽग्निं पुरोडाशानां जुषतां हविरग्नेवीहि' (ऐ० ब्रा० २।२४ आ०श्रौ० ५।४।७) 'ये३यजामहेऽग्निं पुरोडाशानां जुषतां हविः' (श्रौ०को० २ भा० पृ० ३६८ टि०) इति सवनीयपुरोडाशयागस्य माध्यन्दिनसवनीयाः पुरानुवाक्या प्रैषयाज्याः।

**सवनीयपुरोडाशयागस्य तृतीयसवने पुरोडाशस्य पुरोनुवाक्या प्रैषयाज्या—** (हौ०) सोमयागेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनीयपुरोडाशयागस्य पशुपुरोडाशयागानन्तरं तृतीयसवने पुरोडाशहविषः (अपूपहविषः) होतुः पुरोनुवाक्या—'तृतीये धानाः सवने' (ऋ० ३।५२।६ आ०श्रौ० ५।४।३ श्रौ०को० २. भा० पृ० ४३२)। मैत्रावरुणस्य प्रैषः—'होता यक्षदिन्द्रं हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यपूपस्तृतीयस्य सवनस्य पुरोडाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु होतर्यज' (ऋ०खि० ५।७।४।३ आ०श्रौ० ५।४।७ श्रौ०को० २ भा० पृ० ४३२)। प्रैषरूपा याज्या—'ये३यजामहे हरिवाँ इन्द्रो धाना अत्तु पूषण्वान् करम्भं, सरस्वतीवान् भारतीवान् परिवाप इन्द्रस्यापूपस्तृतीयस्य सवनस्य पुरोडाशाँ इन्द्रः प्रस्थिताञ्जुषाणो वेतु वौ३षट्' (आ०श्रौ० ५।४।४-५ श्रौ०को० पृ० ४३२) इति। अथ तृतीयसवने होतुः स्विष्टकृतः पुरोनुवाक्या—'अग्ने तृतीये सवने हि' (ऋ० ३।२८।५ आ०श्रौ० ५।४।६ श्रौ०को० २ भा० पृ० ४३२) मैत्रावरुणस्य प्रैषः—'होता यक्षदग्निं पुरोडाशानां जुषतां हविर्होतर्यज' (ऋ०खि० ५।७।४(३) आ०श्रौ० ५।४।७ श्रौ०को० २ भा० पृ० ४३२)। प्रैषरूपा याज्या—'ये३यजामहेऽग्निं पुरोडाशानां जुषतां हविरग्ने वीहि' (ऐ० ब्रा० २।२४ आ०श्रौ० ५।४।७)। 'ये३यजामहेऽग्निं पुरोडाशानां जुषतां हविः' (श्रौ०को० २ भा० पृ० ३०२ टि०)। इति सवनीयपुरोडाशस्य तार्वीयसवनिकाः पुरोनुवाक्याप्रैषयाज्याः। तदेवं सवनीयपुरोडाशेषु पुरोडाशः, धानाः, करम्भः, दधि (परिवापः ऐ० ब्रा०), पयस्या

चेति श० ब्रा० क्रमेण प्रथमस्य (ऐ० ब्रा० क्रमेण चतुर्थस्य) पुरोडाशाख्यहविषः त्रिषु सवनेषु पुरोनुवाक्याप्रैष-याज्यानामनुष्ठानं यथाक्रमं विहितम्। द्वितीयतृतीयचतुर्थानां धानाकरम्भपरिवापानां पुरोनुवाक्याप्रैष-याज्यानामनुष्ठानप्रकारोऽपि यथासंख्यं त्रिषु सवनेषु याज्यभेदवर्जं सर्वः पुरोडाशाख्यहविर्वदेवानुसंधेयः। पञ्चमी पयस्या तु प्रातः सवने एवानुष्ठीयते न माध्यन्दिनतृतीयसवनयोः। धाना करम्भपरिवापानां प्रैषरूपासु याज्यासु 'ये३यजामहे हरिवाँ इन्द्रो धाना अत्तु...जुषाणो वेतु वौ३षट्' इति धानायाज्या। 'ये३यजामहे पूषण्वान् इन्द्रः करम्भमत्तु...जुषाणो वेतु वौषट्' इति करम्भस्य याज्या। ये३ यजामहे सरस्वतीवान् भारतीवान् इन्द्रः परिवापमत्तु...जुषाणो वेतु वौ३षट्' इति परिवापस्य याज्यां भवतीति तासां भेदोऽवगन्तव्यः। स्विष्टकृतो याज्या सर्वेषु सवनीयपुरोडाशेषु त्रिषु सवनेषु समानी भवतीति तासौ भेदोऽवगन्तव्यः। स्विष्टकृतो याज्या सर्वेषु सवनीयपुरोडाशेषु त्रिषु सवनेषु समानी भवतीति च विशेषोऽनुसंधेयः। (तु०—ऐ० ब्रा० सा० २।२४ आ०श्रौ० ५।४।७ नारायणः)। धानाकरम्भपरिवापपुरोडाशपयस्याशब्दाः वर्णानुक्रमेण तत्र तत्र द्रष्टव्याः।

**सवनीयपुरोडाशयागप्रातर्दोह**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने सवनीयपुरोडाशयागनिर्वापानन्तरं 'देवस्य त्वा स० भ्यामिन्द्राय वो जुष्टं प्रोक्षामि' इति भेदेन उभयोः (व्रीहियवयोः) द्रव्ययोः प्रोक्षणम्। ततः कृष्णाजिनादानादि। व्रीहीन् द्वेधा कृत्वैकैकं भागमवहन्ति। इदानीमेव हविष्कृदाह्वानम्। व्रीह्यवघातकाले पृथक् कृतान् यवाँश्चोपोद्यच्छन्ते। तण्डुलप्रक्षालननिनयनान्ते पुनः 'अग्नेस्तनूरसि' इत्यादिना यवान्। नात्र हविष्कृतमाह्वयति। परिवापव्रीहीनुपोद्यच्छन्ते। प्रक्षालननिनयनान्ते सायंदोहवत् प्रातर्दोहः। उदगग्रेण शाखापवित्रेण नात्रातञ्चनादि। अयं सवनीयपुरोडाशयाग प्रातर्दोह उच्यते। **द्र०** श्रौ०प० नि० पृ० २६०। **द्र०** सवनीयपुरोडाशयागनिर्वाप—।

**सवनीयपुरोडाशयागहविः सादन**— **द्र०** खरे सवनीयासादन—।

**सवनीयपुरोडाशयागामिक्षावाजिनकरण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने सौत्य (सवनीय) पुरोडाशीयसंवापानन्तरं तप्ते प्रातर्दोहे सायं दोहं दध्यानीय आमिक्षा वाजिने शीतले कृत्वा निदधाति। इदं सवनीयपुरोडाशयागामिक्षावाजिनकरणमुच्यते। **द्र०** सौत्यपुरोडाशीयसंवाप—, श्रौ०प०नि० पृ० २६१।

**सवनीयेडाभक्षण** — (आध्व०) सोमयागेषु प्रकृतिभूत...आग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने द्विदेवत्यग्रहभक्षणानन्तरं अध्वर्युरप उपस्पृश्य होत्रङ्गुलिर्वपाञ्जनादि करोति। इडोपह्वानकाले चमसिनः चमसानुपगृह्णन्ति। उपहूतायामिडायां पुरोडाशशकलं ऐन्द्रवायवपात्रे आमिक्षां मैत्रावरुणपात्रे धाना आश्विनपात्रे प्रास्यैतानि गृहीत्वा पूर्व द्वारा निष्क्रम्य अपरद्वारा हविर्धानं प्रपाद्य दक्षिणहविर्धानस्योत्तरचक्रमार्गे सादयति आतृतीयसवनात् (तु०—श्रौ० को० २ भा० पृ० ३१४)। यथेतमेत्य अग्नीधे षडवत्तमा दधाति। प्रशास्तृसहिताः पद सशेषां इडां भक्षयित्वा मार्जयन्ते। उत्त-

रयोः सवनयोः होत्रकचमसप्रचारानन्तरमिडाभक्षणम्। द्र० श्रौ०को० २. भा० पृ० ३७२, ४३५। इदं सवनीयेडा भक्षणमुच्यते। द्र० श्रौ०प०नि० पृ० २८६, द्विदेवत्यग्रहभक्षण—।

**सवनेषूत्तरोत्तरं ध्वन्याधिक्येन शस्त्रशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु सवनेषु शस्त्राणि क्रमशो अधिकाधिकोच्चारणेन होता शंसेत्। तदाह ब्राह्मणम्—'यदा वा एष (आदित्यः) प्रातरुदेत्यथ मन्द्रं तपति तस्मान्मन्द्रया वाचा प्रातः सवने शंसेदथ यदाभ्येत्यथ वलीयस्तपति तस्माद्वलीयस्या वाचा मध्यन्दिने शंसेदथ यदाऽभितरामेत्यथ बलिष्ठतमं तपति तस्माद् बलिष्ठतमया वाचा तृतीयसवने शंसेत्' इति। अर्थात् होता प्रातः सवने मन्द्रया स्वल्पध्वन्युपेतया वाचा शस्त्रं शंसेत्। बलीयस्या प्रबलध्वनियुक्तया वाचा मध्यन्दिने शंसेत्। माध्यन्दिनसवनध्वनेरप्यधिकध्वनियुक्तया वाचा तृतीयसवने शंसेत्। यद्वा यादृशध्वनियुक्तया वाचोत्तरोत्तरिण्योत्सहेत शस्त्रं समापयितुं तथाविधध्वन्युपेतया वाचा शस्त्रं प्रारभेत। एवमपि शस्त्रं सुशस्तं भवतीति विशेषोऽवधेयः (तु०—ऐ० ब्रा० सा० ३।४४)।

**सवनोत्पत्ति—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यानि त्रीणि सवनानि प्रयुज्यन्ते तानि सोमाहरणेन गायत्रीच्छन्दः समुदपादयत्। सा गायत्री देवानामर्थं द्युलोकात्सोममाहरन्ती दक्षिणेन पादेन सोमस्य स्वरूपं यावद् गृहीतवती तावत् प्रातः सवनमभवत्। तच्च प्रातः सवनं गायत्री स्वकीयं स्थानमकरोत्। अथ सा वामपादेन यत् सोमस्य स्वरूपं गृहीतवती तन्माध्यन्दिनं सवनमभूत्। अथ गायत्रीमुखेन यत्सोमस्वरूपं गृहीतवती। तत्तृतीयसवनमभूत्। इति त्रयाणां सवनानामुत्पत्तिरुच्यते (तु०—ऐ० ब्रा० सा० ३।२७)। द्र० सवनच्छन्दस्—।

**सवात्या—** (सा०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे तृतीये साकमेधपर्वणि गृहमेधहविषो यागान्ते सर्वेषामाञ्जनाभ्यञ्जनानन्तरं पौर्णदर्वहोमे पयसि चरुकरणार्थं रात्रौ वत्सान् मातृभिः संवासयन्ति। द्वयोः संवात्ययोस्त्वेतस्यां रात्रौ वत्सं बध्नन्ति। तत्र जीववत्सा मृतवत्सा च ये द्वे गावावेकेन वत्सेन दुह्येते ते सवात्ये उच्येते। द्र० श्रौ०प०नि० पृ०१००।

**सवितुः ककुभोऽहः क्लृप्ति—** द्र० पञ्चमैकात्रपञ्चाशद्रात्रसत्र—।

**सविशेषण वृत्त्यप्रयोग—** (सा०) १. सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं न प्रयुज्यते। २. सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न। द्र० मी०को० पृ० ४२४४।

**सव्यावृत्—** (सा०) इष्टिपशुसोमेषु कर्मकाले दक्षिणेनाङ्गेन यः (ऋत्विगादिः) आवर्तते पर्यावृत्तो न भवति स दक्षिणावृदित्युच्यते। एवं सव्येनावर्तमानः सव्यावृत्पदवाच्यः। द्र० श्रौ०प०नि० पृ० २२।

**सशस्त्रग्रहप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु नाराशंसेषु चमसेषु 'उक्थशा यज सोमस्य' इति सर्वेषां सशस्त्राणां ग्रहाणां प्रैष उच्यते (तु०— का० श्रौ० ९।१३।३३-३४ विद्याधरः। अनाराशंसेषु चमसेषु सश-

स्त्रग्रहेषु सशस्त्र ग्रहस्य 'उक्थशा यज सोमानाम्' इति बहुवचनान्तः प्रैषो भवेत्। तु०— का० श्रौ० ९।१४।१२ विद्याधरः)।

**ससंप्रैषकर्मन्—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च पाशुके कर्मणि प्रयाजानुयाजाज्यभागवनस्पतिस्विष्टकृत्सूक्तवाकान्तानि सर्वाणि कर्माणि ससंप्रैषाणि भवन्ति न केवलं वपादीनि (वपापुरोडाशहवींषि) प्रदानान्येव। द्र० पशुप्रदान—, संप्रैष—।

**सस्तोमपदविभाग्यसामन्—**(औ०, सा०) यस्मिन् साम्नि स्तोमसहितानां पदानां विभागस्तत् सस्तोमपदविभाग्याख्यं सामोच्यते (तु०— द्रा०श्रौ० धन्वी)

**सहस्रसंवत्सरकर्मन्—** (सा०) सहस्रसंवत्सरकर्म दिवसेष्वेव कल्पयितव्यम्। सहस्रसंवत्सरशब्देन सहस्रसंख्याकानि अहानि ग्राह्याणि। सहस्रसंवत्सरं तदायुषामसंभवात् मनुष्येषु। (तस्मात्) सहस्रसंवत्सरसत्रे मनुष्याणामेवाधिकारः। संवत्सरशब्दस्य दिवसपरत्वात्। द्र० मी०को० पृ० ४२४७; ४९।

**सांवत्सरिकवाजपेय—** द्र० वाजपेयभेद—।

**साकमेध—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यानां तृतीयं पर्व साकमेधाः इत्युच्यन्ते। २. अनीकवदिष्टिसान्तपनेष्टि गृहमेधीयेष्टिपौर्णदर्वहोमक्रीडीयेष्टिमहाहविरिष्टिमहापितृयज्ञ-(पित्र्येष्टि)-त्रैयम्बकपुरोडाशात्मकः सर्वेऽवयवाः साकमेधाः चातुर्मास्यानां तृतीयं पर्वेत्युच्यते।

**साकमेधमहाहविरिष्टि—**(अव्य०, आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे साकमेधपर्वणि क्रीडीयेष्ट्यनन्तरं महाहविर्भिः यक्ष्ये इति यजमानः संकल्पयति। तत्र आग्नेयोऽष्टाकपालः पुरोडाशः, सौम्यश्चरुः, सावित्रो द्वादशकपालः, सारस्वतश्चरुः, पौष्णश्चरुः, ऐन्द्राग्न एकादशकपालः, ऐन्द्रश्चरुः, वैश्वकर्मण एककपालः इत्यष्टौ हवींषि। उपांशुप्रकरणे 'सावित्रश्चातुर्मास्ये,' इत्याश्वलायनसत्राद् एककपालानां सर्वेषामपि तत्प्रकरणे उपांशुत्वस्योक्तत्वाच्च सावित्रवैश्वकर्माणावुपांशू भवतः। प्रसूमयं बर्हिर्विहाय अन्यः सर्वो वैश्वदेववद् विकारो भवति। बर्हिः सम्भरणे पञ्च मुष्टयः। वेदकरणानन्तरं पाशुकवेदिमानं वरुणप्रघासवत्। उत्तरपरिग्रहात् पूर्वं वैश्वदेववत् कृत्वा वरुणप्रघासवत् सपरिकराग्निप्रणयनान्ते ब्रह्मणि दक्षिणत उपविष्टे उत्तरपरिग्रहपरिग्रहणादि तिर्यञ्चं स्फ्यं स्तब्ध्वा संप्रैषो वैश्वदेववत् वरुणप्रघासवद् आदिमानां पञ्चानां (हविषां) यजमानस्यानुमन्त्रणम्। इन्द्रस्येन्द्रियावी' इति, विश्वकर्मणे विश्वानि कर्माण्यवरुन्धीय' इति। अत्र 'सहश्च स्वाहा, सहस्यश्च स्वाहा, तपश्च स्वाहा, तपस्यश्च स्वाहा, इति मासाहुतयः। सहस इदं, सहस्यायेदं, तपस इदं तपस्यायेदमिति याजमानम्। आमिक्षाया अभावादत्र न वाजिनयागः। अन्वाहार्यमासाद्य द्वादश गा दक्षिणां ददाति। ब्राह्मणतर्पणान्ता प्रकृतिवत्। इदानीं न व्रतविसर्गः। अध्वर्युः वरुणप्रघासवद् उत्तरवेद्यग्निसमारोपणादि पूर्णाहुत्यन्तं करोति। यजमानः पूर्ववत् तस्मै वरं ददाति। इतीयं साकमेधमहाहविरिष्टिरुच्यते। द्र० श्रौ०प०नि० पृ० १०१।

**साकमेधेष्टि —** (अव्य०, आध्व०) इष्टियज्ञेषु प्रकृतिभूत...चातुर्मास्यप्रकरणे साकमेधना-

मके तृतीये पर्वणि षडिष्टयः इज्यन्ते। तत्र 'अग्नयेऽनीकवते पुरोडाशमष्टाकपालं निर्वपते, साकं सूर्येणोद्यता मरुद्भ्यः सान्तनेभ्यो माध्यन्दिने चरुम्। मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनम् (चरुम्)। मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालं निर्वपति साकं सूर्येणोद्यता।' इति चतस्र इष्टयः। ततः पञ्चमीष्टि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, ऐन्द्रमेकादश कपालं ऐन्द्रंचरुं वैश्वकर्मणमेककपालम्' इत्यष्टौ हवींषि महाहविरिष्टिः ततः षष्ठी पित्र्येष्टिः इति साकमेधेष्टये उच्यन्ते (तु०—श्रौ०को० १. भा० पृ० ५०८ श्रौ०प०नि० पृ० ८९-१०१)।

**साकमेधेष्टिकाल—** इष्टियज्ञेषु प्रकृतिभूतदर्श... चातुर्मास्यप्रकरणे तृतीयं साकमेधपर्व दिनद्वयेनानुष्ठीयते । साकमेधानां कार्तिकी पौर्णमासी आरम्भकालः। तत्र पूर्वेद्युः चतुर्दश्यां पूर्वाह्णे अग्नयेऽनीकवतेष्टाकपालः पुरोडाशः, मध्याह्ने मरुद्भ्यः सान्तपनेभ्यश्चरुः, अपराह्णे मरुद्भ्यो गृहमेधिभ्यः पयसि चरुः, परेद्युः पूर्वाह्णे मरुद्भ्यः क्रीडिभ्यः सप्तकपालः पुरोडाशः, तदनन्तरमेव महाहविरिष्टिः, ततः पित्र्येष्टिः। इति साकमेधेष्टिकाल उच्यते। (तु०—का० श्रौ० ५, अ० ६-८ क० विद्याधरः)। द्र० साकमेधेष्टि—।

**साग्निचित्याग्निष्टोमसामन्—**(औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायां साग्निचित्येऽग्निष्टोमे व्याहृति सामानि, लोकसामानि, गायत्र आज्यदोहः, पुरुषव्रतं साम, रथन्तरं साम, बृहत्साम, यज्ञायज्ञीयं साम, वामदेव्यं साम, प्रजापतेर्हृदयं साम, श्येतं सामेतीमानि चिति सामानि गीयन्ते। (स्थलसंकेतः)। द्र० चित्याग्नेः सामन्—।

**साङ्घातिकाहन्—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतद्वादशाहस्य विकृतौ सत्रप्रकरणे चतुर्विंशतिः सात्रिकाः संघाता पृष्ठ्याभिप्लवच्छन्दोमस्वरसामानोऽभ्यावर्तिनः, चतुर्विंशाभिजिद्विश्वजिद्विषुवन्महाव्रतानि पराञ्चिनश्चाहर्विशेषा संघाता उच्यन्ते। अभ्यावर्तिनः आवृत्तिसहिताः परीञ्चिन आवृत्तिरहिताः। तेषु भवान्यहानि सांघातिकान्यहान्यभिधीयन्ते। (तु०—ऐ० ब्रा० सा० ६।१८)। द्र० अहर्गण—, अभ्यातानरूपनिवृत्ति—,। तायमानरूपनिवृत्ति—।

**साण्ड—**(सा०) त्रीणि वर्षाणि यस्य वयः स त्रिवर्षः साण्डः अण्डाभ्यां सहितः, नानण्डो न भग्नाण्ड इति साण्ड उच्यते (तु०—आ०श्रौ० ९।४।२० नारायणः।

**सात्रिकयजमानसंख्या —** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे यजमानबहुत्वेन च 'चतुर्विंशतिपरमाः सप्तदशपरमाः सप्तदशावराः सत्रमासीरन्' इति सत्रेषु यजमानानां संख्या प्रत्येतव्या।

**सात्रिकयाजमानकर्तृ—**(सा०) सोमयज्ञेषु प्रकृतिभूत...सत्रप्रकरणे सत्रेषु बहुकर्तृकसात्रिके कर्मणि क्रतुगतग्रहादिसंस्काराय यत् कर्मविहितं तत् सात्रिकं याजमानमुच्यते। तस्य यजमानबहुत्वेऽपि एक एव गृहपतिर्यजमानः कर्ता भवति न सर्वे। तत्सत्रेषु गृहपतेरेव याजमानकर्तृत्वं विधीयते।

**सात्रिकाहन्—**(अव्य०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्रेषु प्रयोज्यानि प्रायणीयातिरात्र एकाहः

(ज्योतिष्टोमातिरात्र एकाहः) १, चतुर्विंशम् प्रायणीय एकाहः) २, पृष्ठ्य षडहः ३-८, अभिप्लवषडहः, ९,१४, अभिजित् (एकाहः) १५, स्वरसामत्र्यहः १६-१८, विषुवान् (एकाहः) १९, विश्वजित् (एकाहः) २०, छन्दोमत्र्यहः २१-२३, अविवाक्यं (एकाहः) २४, महाव्रतं (एकाहः) २५ इति पञ्चविंशतिः सत्रसंबन्धीनि सात्रिकाण्यहानि भवन्ति। 'तदेषाऽभियज्ञगाथा गीयतेप्रायणीयश्चतुर्विंशं पृष्ठ्योऽभिप्लव एव च। अभिजित्स्वरसामानानो विषुवान् विश्वजित्तथा। छन्दोमा दशमं चाह उत्तमं तु महाव्रतम् इति। एतान्येवाहानि अहीनैकाहसत्राणां प्रकृतित्वेन तत्तन्नामनामितया सर्वोविधान प्रपञ्चोऽवगन्तव्यः। **द्र०** गवामयनसत्रनिष्पत्ति संघातिकाहन्—।

**सात्रिकाहज्योतिष्टोमातिदेश—** (सा०) एकाहाहीनसत्रात्मकेषु सोमयज्ञेषु विकृतिभूतेषु प्रकृतेरतिदेशो विधीयते। यतो गृह्यते सा प्रकृतिः। यत्र गृह्यते सा विकृतिः। प्रकृतिः प्रकारो न रूपान्तरमिति। यथा ज्योतिष्टोमो हि सर्वेषामेकाहाहीनसत्राणां प्रकृतिरुच्यते तथैव तदतिदिष्टानि सात्रिकाणि चतुर्विंशतिरहानि अहीनैकाहानं प्रकृतित्वेनेष्यन्ते। तदुक्तम् 'एतेभ्य एव सात्रिकेभ्योऽहीनैकाहानां व्याख्यायन्ते' (आ०श्रौ० ८।१३।३५)। व्याख्यायन्ते अतिदिश्यन्ते इत्यर्थः। एवं च सात्रिकाण्यहीनान्यप्यहीनैकाहानां प्रकृतयः सिध्यन्ति। तदेवं आ०श्रौ० नवमदशमत्रयोरध्याययोः अन्यत्र च श्रौतसूत्रेषूक्ता ये एकाहाहीनास्ते ज्योतिष्टोमसरूपाः सात्रिकाहः सरूपाश्चेत्युभयप्रकृतयो भवन्ति। अर्थात् तेषु केचन सात्रिकाऽहरतिदिष्टाः केचन ज्योतिष्टोमातिदिष्टाः सन्तीति सात्रिकोहज्योतिष्टोमयोः द्विविधोऽतिदेशः सिध्यति। तत्र एकाहाहीनेषु येषामह्नां चतुर्विंशादिभिः सात्रिकैरहोभिरतिदेशोऽस्ति तानि सात्रिकाहः प्रकृतीनि। एकाहानां मध्ये च ये सात्रिकैरहोभिर्नातिदिश्यन्ते तेष्वेकाद्वेषु दशशतदक्षिणेन ज्योतिष्टोमेन अतिदेशो विधीयते। तत्रापि एकाहेषु येषु यावन्तोऽतिदेशविधयस्तेष्वहःस्वेवास्य विधेः प्राप्तिरस्ति। एकाहेषु चायं विशेषो भवति ज्योतिष्टोम प्राप्त्यपवादः सात्रिकातिदेश इति। तेन दीक्षोपसद ऐकाहिका एव भवन्ति न ज्यौतिष्टोमिका इति सिद्धम्। अतिदेशश्चायं सुत्यानामेवातिदेशो न दीक्षोपसदाम्। तेनैषु दीक्षोपसदः स्वकीया एव नियमेन भवन्तीति सिद्धम्। (तु०—आ०श्रौ० ९।१।१-३ नारायणः)। **द्र०** श्रौतयज्ञानां प्रकृतिविकृत्युभयानुभयात्मकत्व—।

**सात्रिकाहः प्रकृतिकैकाहाहीनलक्षण—** (सा०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रविकृतौ एकाहाहीनप्रकरणे एकाहाहीनेषु येषामह्नां सात्रिकैश्चतुर्विंशतेरहोभिरतिदेशोऽस्ति तानि सात्रिकाहः प्रकृतीन्यहानि भवन्तीति सात्रिकाहः प्रकृतिकैकाहाहीनानां लक्षणमुच्यते। (तु०—आ०श्रौ० ९।१।२ नारायणः)।**द्र०** सात्रिकाहज्योतिष्टोमातिदेश—।

**सात्रिकेष्वहःस्वेकाहीभवत्सु होत्रकशस्यविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे गणगतेषु सात्रिकेष्वहःसु एकाहीभवत्सु होत्रकाणां माध्यन्दिनसवने अहरहः शस्यानि, आरम्भणीयाः, कद्वन्तश्च (प्रगाथाः) न सन्ति। यतो हि एकाहेषु गणधर्मो न प्रवर्तते। अहरहः शस्यादीनि होत्रकाणां तायमानरूपाणि भवन्ति। तायमानरूपाणामहर्गणो धर्मो भवति। तायमानरूपाणां गणधर्मत्वादेका-

हेषु प्राप्तिर्नास्तीति भावः। तदुक्तम्—'न ह्येकाहीभवत्स्वहरहः शस्यानि नारम्भणीया न कद्रन्तः' (तु०—आ० श्रौ० ८।४।१५ नारायणः)। द्र० तायमानरूपतायमानधर्म-तायमानरूप निवृत्तितुल्यन्यायानां तार्क्ष्यजा-तवेदस्यादीनामपि तायमानरूपाणामेकाही-भवत्सु प्रवृत्तिर्नास्तीति च विशेषोऽनु-संन्धेयः (तु०—तत्रैव नारायणः)। एवमेषाम-भावे होत्रकाः कद्रतां प्रगाथानां स्थाने नित्या-नैकाहिकान् (आग्निष्टोमिकान्) प्रगाथान् शस्त्वा पृष्ठ्याभिप्लवप्रकृतिषु (पृष्ठ्यषड-हाभिप्लवषडहछन्दोमस्वर सामसु अहःसु) संपातान् शंसेयुः। इतरेषु चतुर्विंशादिप्रकृ-तिषु (चतुर्विंशमहाव्रतभिजिद्विश्वजिद्-विप्रवत्सु) प्रगाथानन्तरमहीनसूक्तानि शंसेयुः। तत उभयेष्वहःसु अन्त्यान्यैकाहि-कानि सूक्तानि (निविद्धानीयसूक्तानि) शंसेयुरिति (तु०—आ०श्रौ० ८।४।१६ नारायणः)। द्र० साङ्घातिकाहन्—। इह...

**सात्रिकेष्वहःस्वेकाहीभवत्सु संपातवत्सु सर्व-स्तोमयुक्तेषु प्राकृते वा सर्वस्तोमयुक्ते होत्रकशस्यविधि** — (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्र-प्रकरणे सत्रेषु हौत्रकैः माध्यन्दिनसवने संपा-तसहितानि संपातरहितानि चाहानि शस्यन्ते। तत्र पृष्ठ्याभिप्लवषडहछन्दोम-चतुरहः स्वरसामत्र्यहगतान्येकोनविंशतिर-हानि संपातवन्ति भवन्ति चतुर्विंशमहाव्रता-भिजिद्विश्वजिद्विषुवत्संज्ञकानि पञ्चा-हानि संपातरहितान्युच्यन्ते इत्युक्तम्। तेषु संपात वन्त्यहानि यदा सर्वैस्त्रिवृदादिभिस्त्र-यस्त्रिशान्तैः षड्भिः स्तोमैर्युक्तानि भवन्ति, प्राकृतो वा एकाहः (ज्योतिष्टोमः) एभिः षट्स्तोमैर्युक्तो भवति तदा अहीनसूक्तानि आदितः (पुरस्तात्) इतरेषां सूक्तानां भवन्ति। तृतीयानि च भवन्ति। अत्र क्रमः-सत्रेषु संपातवत्स्वहःसु मैत्रावरुणस्य-अहीनसूक्तम् (१), अहरहः शस्यम् (२), संपातः (३), इति क्रमो भवति। ब्राह्मणाच्छं-सिनः—अहीनसूक्तम् (१), संपातः (२), अहरहः शस्यम् (३), अच्छावाकस्य-अहीन सूक्तम्(१), संपातः (२) अहरहः शस्यम् (३) इति मैत्रावरुणक्रमाद् विशेषः क्रमभेदो भवति। एकाही भवत्सु च तेषु मैत्रावरुणस्य इतरयोश्च न विशेषः समानं भवति। तत्र अहीन सूक्तं संपातोऽन्यत्यमैकाहिकमिति क्रमः। यदा पुनः प्रकृतिभूतोज्योतिष्टोमः सत्रम्, अहीनम्, एकाहं वा प्राप्तः, यदा च 'प्रथमस्य तूर्ध्वं चतुर्थात् सर्वस्तोमोऽतिरात्रः' इति सर्वस्तोमश्च भवति। तत्रायं क्रमः—सर्वेषां (मैत्रावरुणब्राह्मणाच्छंस्यच्छावा-क्यानाम्) च स्वं स्वमहीन सूक्तं तत ऐका-हिके च द्वे द्वे सूक्ते इति मैत्रावरुण-ब्राह्मणाच्छंसिनोः, अच्छावाकस्य अहीन-सूक्तं 'भूय इत' (ऋ० ६।३०।१) अमितष्टी-यम् (ऋ० ३।३८।१। एवमहर्गणप्राप्तौ ऐकाहिकत्वे अहीनसूक्तानि, द्वे द्वे चैकाहिके सर्वेषामिति (तु०—आ० श्रौ० ८।४।१७ नारायणः)।

**सादन—** (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे उपहितानां यजुष्मतीना-मिष्टकानां स्थिरीकरणं सादनमुच्यते। (तु०—का० श्रौ० १६।७।१०)।

**सादन—द्र०** ग्रहग्रहणसादनप्रतिकर्ष—।

**सादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति-ष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थाया-मग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सादनं ग्रहणशेषः। ग्रहणं हि प्रदानार्थम्। सादनेन ग्रहणं होमयोग्यं भवति। तस्माद्

ग्रहणशेषः सादनमुच्यते । द्र० मी०को० पृ० ४२५९ ।

**सादृश्य—** (सा०) १. भूयोऽवयवसामान्यं सादृश्यमुच्यते । २. सामानाधिकरण्येन हि भवति सादृश्यं यथा सिंहो देवदत्तः । ३. सादृश्येन विध्यन्तो नियम्यते । **द्र०** मी०को० पृ० ४२५९-६० ।

**साद्यस्क्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ एकाहप्रकरणे १. साद्यस्क्रानाम सोमयागाः सदीक्षोपसत्का एकस्मिन्नहनि क्रियन्ते (आ०श्रौ० ९ ।७ ।१३ नारायणः) । २. साद्यस्क्रा नाम पञ्चैकाहाः तेषु षष्ठः एकत्रिकः (तां० ब्रा० १६ ।१६ ।१) । पञ्चस्वपि साद्यस्क्रान्वयात् सद्य एव एकस्मिन्नेवाहनि दीक्षाद्यवभृथान्तं कर्तव्यम् (तां० ब्रा० सा० १६ ।१२ ।१) । ३. साद्यस्क्रसंज्ञकाः षडेकाहाः (का०श्रौ० २२ ।२ ।९ विद्याधरः) । ४. सद्यः क्रिया वर्तते इति साद्यस्क्रः । एकत्रिकान्ताः षट् साद्यस्क्राः इति शौचिवृक्षि' (ला०श्रौ० ८ ।३ ।३) अनुष्ठानकाले भेदोऽप्यस्ति । रात्रेर्महति कालेऽवशिष्टे प्रातराहुतिं हुत्वा आदित्यस्योदयसन्निकर्षे उदिते वा साद्यस्क्रे क्रतौ कर्मार्थमृत्विगभ्य आचक्षीति 'एकरात्रीणो द्व्यहीनोऽनुक्री:' इति (ला०श्रौ० ८ ।३ ।१) अग्निस्वामी एकरात्रीणो द्व्यहीनोऽनुक्री:' इति द्व्यहकालता च (ला०श्रौ० ८ ।४ ।३) । पञ्चसु साद्यस्क्रेषु प्रथम द्वितीययोर्दीक्षाप्रभृत्यवभृथान्तं सर्वमेकस्मिन्नेवाहन्यनुष्ठेयम् । तृतीयस्य तु एकस्मिन् दिवसे दीक्षा परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तम् । चतुर्थपञ्चमयोरप्येवमिति (तां० ब्रा० सा० १६ ।१२ ।१) ।

**साद्यस्क्रधर्म —** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे साद्यस्क्रेषु एकस्मिन्नेव सौत्येऽहनि दीक्षाप्रभृति 'देवयजनं जोषयन्ते' (का०श्रौ० ७ ।१ ।१०) इत्यारभ्य 'आदीप्य प्रविशन्ति' (का०श्रौ० १० ।९ ।२६) इत्येदन्तं सर्वं कर्म (आग्निष्टोमिकं) कर्तव्यम् । सौत्येऽहनि अग्नीषोमीय-सवनीयानूबन्ध्यान्त्रीन् पशून् क्रमेण सहैव सवनीयकाले आलभेत । यद्वा अग्नीषोमीयशुस्थाने पुरोडाशः कार्यः । नात्र वपान्ते = वसतीवरीनिधानान्ते विहिता सुब्रह्मण्डा कार्या । होत्रुद्गात्रध्वर्युब्राह्मणः ऋत्विजो देवयजनस्य प्रतिदिशं वसन्ति । तत्र देवयजनस्य पुरस्ताद् योजने होता वसेत् । उत्तरत उद्गाता, अध्वर्युः पश्चात् ब्रह्मा दक्षिणतो वसेयुः । यजमानपुरुषैः सदुग्धभस्त्रायुतैश्चतुर्भिरश्वरथैरानयन्ति । तेभ्यो धावद्भ्यः सक्षीरदृतिभ्यो रथेभ्यो यन्नवनीतमुत्पन्नं तदाज्यं भवति । साण्डेन त्रिवर्षेण वृषभेण सोमः क्रेतव्यः । इति प्रथमतृतीयचतुर्थपञ्चमानां धर्माः । द्वितीयस्य तु सस्याढ्या भूमिः वेदिः कार्याः । सा च ब्रीहि यवान्यतरसस्येन युक्ता भवति । मर्दितो धान्यराशिः (खलः) उत्तरवेदिः कार्या । १. खलमध्यनिखाता मेथी खलेवाली यूपः । २. स्फ्याग्रो यूपः । ३. लाङ्गलस्य ईषा दण्डो यूपः कर्तव्यः । कलापी = धान्यतृणमुष्टिश्चषायार्थे कार्यः । इत्येता धर्मा भवन्ति द्वितीयस्य साद्यस्क्रस्य सन्निधौ विधानात् । (तु०—का० श्रौ० २२ ।३, २७-५१ विद्याधरः, आ०श्रौ० ८ ।७ ।१३-१८ नारायणः) ।

**साध्यासा—** द्र० बृहतीभेद— ।

**सान्तपनेष्टि—**(अव्य०) इष्टियज्ञेषु प्रकृतिभूतदर्शमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे चातुर्मास्यानां तृतीये साकमेधाख्ये पर्वणि १. अनीकवतीष्ट्यनन्तरं मरुतः शिव-

सान्तपनांश्चरुणा यक्ष्ये इति संकल्पयति यजमान: । अध्वर्यु: यथा मध्याह्नकाले निर्वाप: प्रधानयागो वा भवति तथाऽन्वाधानादौ प्रवर्तते। 'प्राणैर्ऋध्यासम्' इति यजमानोऽनुमन्त्रयते। अन्वाहार्यमासाद्य तिस्रो गा दक्षिणां ददाति। ब्राह्मणतर्पणान्ता प्रकृतिवत्। इयं सान्तनेष्टिरित्युच्यते। **द्र०** श्रौ०प०नि० पृ० ९९। २. चातुर्मास्येषु साकमेधावयव: माध्यन्दिने सान्तपनीया नाम इष्टि: 'मरुद्भ्य: सान्तपनेभ्यो माध्यन्दिने चरुं निर्वपति' इति। **द्र०** मी०को० पृ० ४२६५, साकमेध—।

**सान्नाय्य—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासविकृतौ दर्शे तद्वकृतिषु च प्रयोक्तव्यं १. दधिपयसी सान्नाय्यमुच्यते। २. सान्नाय्ये पयो दधि चेति द्रव्यद्वयं भवतीत्यर्थ:। **द्र०** श्रौ०प०नि० पृ० १२। ३. सान्नाय्यो दर्शपूर्णमासार्थे क्षीरेऽधिश्रिते' (तु०— ऐ० ब्रा० सा० ७।२) इति दर्शपूर्णमासार्थं क्षीरं सान्नाय्यमुच्यते। ४. दर्शपूर्णमासयोर्दध्यर्थं सायं दुग्धं पय: सान्नाय्यमुच्यते। ५. सम्यक् नीयते होमार्थमग्निं प्रति इति हविर्विशेष: (पा०सि० ३।१।१२९)। ६. दर्शेयत् सान्नाय्यं हवि: तत् सोमयाजिनो यजमानस्य विधीयते न असोमयाजिन:। असोमयाजिनस्तु आग्नेयैन्द्राग्नौ पुरोडाशौ भवत:। तदुक्तम् 'पुरोडाशाभ्यामेव असोमयाजिनं याजयेत् यावेतौ आग्नेयश्चैन्द्राग्नश्चेति।'

**सान्नाय्यग—** (अव्य०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासविकृतौ दर्शयागे इन्द्रदेवताको दधिद्रव्यको याग:, इन्द्रदेवताक: पयोद्रव्यको यागश्चेति यौ द्वौ दधिपयोयागौ तौ सान्नाय्ययाग: सान्नाय्यमिति चोच्यते। तत्र सान्नाय्यं द्विविधं दधि पयश्चेति। (तु०— का० श्रौ० ४।२।१६ विद्याधर:)। स च सोमयाजिनाऽनुष्ठेय:। तत्र आधानानन्तरं य: सोमेनेष्टवान् स सोमयाजी इत्यभिधीयते। तस्य नित्य: सान्नाय्ययाग इति विशेषोऽवधेय:। सान्नाय्यार्थं तिसृभ्योऽधिका: सर्वा स्वीया गावो दोग्धव्या:। इति च विशेष:। **द्र०** मी०को० पृ० ४२६९।

**सामग्रन्थ—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामप्रयोगार्थं सामगानां (आधारभूतौ) द्वौ ग्रन्थौ छन्द: उत्तरा चेति। तत्र छन्दोनामके ग्रन्थे नानाविधसाम्नां योनिभूता एव ऋच: पठिता:। उत्तराग्रन्थे तु तृचात्मकानि सूक्तानि प्राय: पठितानि। एकस्मिन् तृचे प्रथमा ऋक् छन्दोगता योनिर्नाम, इतरे द्वे उत्तरे नाम। अर्थात् सामगानां रथन्तरादिसामयोनीनामेव पाठात्मक: एको ग्रन्थ: छन्दोनामक:। तथा एकस्य साम्नो योनिपाठानन्तरमपि अयोनिभूत ऋग्द्वयपाठ: क्वचिदेक ऋक्पाठोऽपि, तत: समनन्तरयोनिपाठ: इत्येवं योनितदुत्तरयोनितदुत्तर ऋक् पाठात्मक: अपरो ग्रन्थ: य:, स एव उत्तराग्रन्थ इत्युच्यते। **द्र०** मी०को० ४२९१-९२।

**सामचातुर्विध्य—** (औ०) सोमयज्ञेषु एकाहाहीनसत्रेषु सामगानविधौ विषमविभक्तीनि, पदविभाग्यानि, स्तोमपदविभाग्यानि, स्तोमविभाग्यानि चेति चतुष्टयं साम्नां चातुर्विध्यमुच्यते। तदेवं त्रिविधानि विभाग्यसामानि तदन्यानि विषमभक्तीनीति चतुष्टयानि सामानि तत्र यस्मिन् साम्नि प्रस्तोतुरेक: पाद:, उद्गातुरेक:, प्रतिहतुरेक: पुनश्चोद्गातुरेक: इत्येवं विभज्यते तत् पदवि-

भाग्यम्। यत्र स्तोमसहितानां पदानां विभागः तत् सस्तोमपदविभाग्यम्। यत्र केवलं स्तोमैरेव विभागः, पादास्तु सर्वे निधनान्तभूताः साधारणास्त्रिभिरपि प्रयोज्याः तत् स्तोमविभाग्यमित्यर्थोऽवगन्तव्यः। तत्र विषमभक्तीनि तादुक्तानि 'चतुरक्षरः पूर्वे वार वन्तीये' (ला०श्रौ० ६।१०।१) इत्येवमादीनि पदविभाग्यानि प्रवद्भार्गवो जागत वासिष्ठ वैश्वज्योतिषाणीति, स्तोमविभाग्यानि वात्सप्रादीनि पदस्तोमविभाग्यानि प्रतोदगोष्ठादीनि एतानि विभाग्यानि। साम्प्रतमेतेषां विभाग उच्यते येषां पदानां सदृशा गीतयः तेषां सर्वेषु पदेषु पृथक् पृथक् पदानि भजेरन् प्रस्तोत्रादयो ब्रूयुः, आदेशादन्यत्र शेषम् उद्गाता ब्रूयात्। एवं लक्षणानि विभाग्यान्युच्यन्ते। (तु०—ला०श्रौ० ६।१०।१; ७।५।२ न० अग्निस्वामी, द्रा०श्रौ० धन्वी)। इति विशेषोऽवधेयः।

**सामन्—** द्र० साम्नां तृचे गान—।

**सामन्तकर्मन्—** (आध्व०, सा०) इष्टिपशुसोमयज्ञेषु समन्ताद् भवानि पर्यग्निकरणपरिस्तरणपर्युक्षणादीनि कर्माणि सामन्तानि कर्माण्युच्यन्ते। **द्र०** पर्यग्निकरण—पर्युक्षण—।

**सामभक्ति—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु बहिष्पवमानस्तोत्रमारभ्य स्तोत्रगतानि यानि सामानि प्रस्तोतृद्गातृप्रतिहर्तृभिर्गेयानि तेषु प्रतिगानं पञ्च सामभक्तयो भवन्ति। ताश्च प्रस्तावः, उद्गीथः, प्रतिहारः, उपद्रवः, निधनं चेति। तत्र गानकाले प्रस्तावः प्रस्तोत्रा गेयः, उद्गीथ उद्गात्रा, प्रतिहारः प्रतिहर्त्रा, उपद्रवः पुनरुद्गात्रा गेयः। निधनं तु सर्वैः। **द्र०** श्रौ०को० २, भा० पृ० २७८। गीयमानाया ऋचोऽपि गानक्रमेण पञ्चावयवाः भवन्ति। तद्यथा—'उच्चाते जातमन्धसः (१) दिवि सद्भूम्या ददे (२) उग्रं शर्म (३) महि श्रवः (४)। सा० ६,७२) निधनं तु प्रायः स्तोमाक्षरैरेव भवति। स्तोत्रारम्भश्च प्रथमतः प्रस्तोत्रैव क्रियते। तत्र प्रस्तावरूपप्रथमभागपाठसमये एव प्रत्यङ्मुखः प्रस्तोता आत्मनः पुरतो भूमौ प्राग्दिशमुदग्दिशं वा द्विगुणीकृतं वस्त्रं प्रसार्य तत्र औदुम्बरीः प्रादेशप्रमाणाः तीक्ष्णाग्रा मूले किञ्चित्स्थूलाः कुशाः विष्टुत्यपरनामधेयाः तिर्यङ्निदध्यात्। इति शेषोऽवधेयः। (तु०—का० श्रौ० १०।१। १६ टि० विद्याधरः)। **द्र०** कुशा—, स्तोत्रारम्भ—, पाञ्चविध्य—।

**सामविकार—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने विकारविश्लेषणविकर्षणाऽभ्यासविरामस्तोमाख्याः षट् सामविकारा भवन्ति। यथा—'अग्न आ याहि वीतये गृणानो हव्य दातये। नि होता सत्सि बर्हिसि' (साम० १) इत्यत्र विकारो यथा 'अग्ने' इत्यस्य 'ओग्नायि' इति। विश्लेषणं यथा 'वीतये' इत्यस्य 'वोयि तोया२यि' इति। विकर्षणं यथा 'ये' इत्यस्य 'या २ ३ यि' इति। अभ्यास इति पुनः पुनरुच्चारो यथा 'तोया२यि' तोया२यि' इति विरामो यथा 'गृणानो हव्यदातये' इत्यस्य 'गृणानोह। व्यदातये' इति। 'गृणानो ह' इत्यस्य पदान्तत्वाभावेऽपि गानसौकर्यार्थं शब्दमध्य एव विरामादस्य विरामसंज्ञा भवति। स्तोमः ऋग्विलक्षणो वर्णः, यथा 'औ हो वा। हाउ' इत्यादिः। एवमन्यत्रापि ऋक्षु यथायथं

विकाराः प्रत्येतव्या इति (तु०—सामवेदभूमिका पृ० २. सा०)।

**सामवेद—** (सा०) सामवेदः आदित्यादजायत—। सामवेदस्य उच्चैः स्वरः। सामवेदे गानमेव प्रकृतम्, ऋचां संहितापाठस्तु अत्र गानायैव। सामवेदे सहस्रं गीत्युपायाः। द्र० मी०को० पृ० ४२९३।

**सामवेदप्रत्यय—** (औ०, सा०) सोमयज्ञेषु प्रकृतिविकृति भूतेषु स्तोमः (१) स्तोत्रियः (२) पृष्ठं (३) संस्था (४) इत्येते पदार्थाः सामवेदेनाख्यायन्ते प्रत्यायन्ते। तदुक्तम्—'छन्दोगप्रत्ययं स्तोमः, स्तोत्रियः, पृष्ठं, संस्थेति' (आ०श्रौ० ८।१३।३२) इति।

**सामशब्द—** (सा०, औ०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु १. सामप्रयोगे सस्तोमस्वरकालाऽभ्यासविकारायां, हिंकारप्रणवप्रस्तावउद्गीथप्रतिहारउपद्रवनिधनवत्यां ऋचि सामशब्दः अभियुक्तैरुचर्यते। द्र० मी० को० पृ० ३२९४-४२९१। २. विशिष्टा काचिद् गीतिः सामेत्युच्यते। प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्तिसामान्यधीमहे, सामान्यध्यापयामः, सामानि वर्तन्ते इति। ३. सामशब्दः ऋक्स्तोमस्वरकालअभ्यासविशिष्टायाः गीतेः वाचकः। द्र० मी०को० पृ० ४२९०। अत्रोक्ताः पदार्थाः वर्णानुक्रमेण तत्र तत्र द्रष्टव्याः ४. तिसृभिर्ऋग्भिः यस्मात् संयोगः संभूतस्तस्मात् सामयुक्ताभिस्तिसृभिर्ऋग्भिः सामगाः। यज्ञे स्तोत्रं कुर्वन्ति। तदुक्तम्—'एकं सामतृचे क्रियते स्तोत्रियम्,' इति। तत्र प्रथमायां ऋचि योनिरूपायां यत्सामोत्पन्नं (छन्दोग्रन्थे समाम्नातं) तदेव उत्तराग्रन्थे द्वितीयतृतीययोर्ऋचोः समूहनीयम्। तदुक्तं 'यद्योन्यां तदुत्तरयोर्गायति' इति। तत्र यस्मात् तिसृभिर्ऋग्भिः साम संमितं तस्माद् ऋगक्षरपादादिरूपा 'सा' इत्यनेन शब्देन अभिधेया। साम च अभशब्देनाभिधेयं सत् पश्चादुभयं संयुक्तं सत् सामाभवत्, तस्मादेकोभयात्मकवस्तुनः सामनाम संपन्नम्। तदुक्तम्—'यत् तिसृभिः समभवत् तस्मात्तिसृभिः स्तुवन्ति तिसृभिः गायन्ति, तिसृभिः साम संमितं, यद्वै तत्सा चामश्च समभवतां तत्सामाभवत्। तत्साम्नः सामत्वम्' (तु०—ऐ० ब्रा० सा० ३।२३)। इति।

**सामस्वर —** (औ०, सा०) सोमयज्ञेषु प्रकृतिविकृतिभूतेषु प्रायः सामगानप्रयोगे 'सप्त स्वराः, त्रयो ग्रामाः, मूर्च्छनास्त्वेकविंशतिः। ताना एकोनपञ्चाशत्, इत्येत्स्वर मण्डलम्' (नाशि:) इत्येतस्मिन् स्वरमण्डले 'यः सामगानां प्रथमः स वेणोः मध्यमः स्वरः यो द्वितीयः स गान्धारः, तृतीय स्त्वृषभः स्मृतः। चतुर्थः षट्ज इत्याहुः, पञ्चमो धैवतो भवेत्। षष्ठो निषादोः विज्ञेयः सप्तमः पञ्चमः स्मृतः।' (तु०—ना०शि०) इति सप्त साम स्वराः। तत्र (क) नारदक्रमे —१. प्रथमः वेणोः मध्यमः (म)। २. द्वितीयः गान्धारः (ग)। ३. तृतीयः ऋषभः (रे) ४. चतुर्थः षड्जः (सा)। ५. पञ्चमः (मन्द्रः) निषादः (नि)। ६. षष्ठः (अतिस्वार्यः) धैवतः (धा)। ७. सप्तमः पञ्चमः (अतिक्रुष्टः) पञ्चमः० (पा०) इति सप्त स्वराः। (ख) सामविधानब्राह्मणक्रमे तु योऽवरेषां प्रथमस्तं मनुष्याः (म)। यो द्वितीयस्तं गन्धर्वाप्सरसः। (ग) यस्तृतीयस्तं पशवः (वृषभः ऋषभः) (रे)। यश्चतुर्थस्तं पितरो ये चाण्डेषु शेरते (सा)। यः पञ्चमः तमसुराक्षांसि (निषादः) (नि)। (अन्त्यस्तमोषधयो वनस्पतयश्चान्यज्जगत् (घ) इति सप्तस्वराः। (तु०—सामवेद प्रस्तावः पृ० २ सात०)।

**सामान्त—** (औ०, सा०) सोमयज्ञेषु ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सर्वत्र सामगाने स्तोत्रकल्पने १. तावच्चत्वार एव सामान्ता: स्वरो निधनमिडा वागिति। तत्र ऋचामन्त्यमक्षरं स्वरयित्वा समापितं हा इकार द्वयमपि स्वर इति रूढ्या व्यपदिश्यते। स्वरवागिडाभ्योऽन्या: सामान्ता ऋगेव निधनमित्युच्यते इति विशेषोऽवगन्तव्य: (तु०—तां० ब्रा० सा० १३।५।२८)। २. प्रकृतौ षोडशिमति अतिरात्रे ज्योतिष्टोमे स्वरो निधनं इडा वाग् इति चत्वार: सामान्ता:। ते च प्रायेण सर्वेषु सामसु भवन्ति। तत्र ऋचामन्त्यमक्षरं स्वरयित्वा समापितं हा इकारञ्च द्वयमपि स्वर इति रूढ्या व्यपदिश्यते। स्वर-वाग्-इडाभ्योऽन्ये सामान्ता निधनमित्युच्यन्ते। सामान्ता: प्रायेण सर्वेषु सामसु भवन्तीति

सामानि (सामजातानि) तावत् चतुर्विधानि-स्वाराणि, ऐडानि, वाङ्निधनानि, निधनवन्ति चेति। स्वाराण्यपि द्विविधानि 'हा इ' इत्यनेन स्वरेण यानि सामानि समाप्यन्ते तानि हा इकार स्वराणि। ऋचामन्त्यमक्षरं स्वरयित्वा यानि समाप्यन्ते तानि पदानुस्वराणि भवन्ति। यथौशनकावे समनी। इडा इति निधनं येषां तान्यैडानि। स्वार-वाङ्निधन-ऐडेभ्योस्त्रिभ्य: सामजातेभ्यो यदन्यत् सामजातं तन्निधनवदुच्यते। इति चत्वारि सामजातानि। (तु०— द्रा०श्रौ० १८।१ धन्वी)।

**सामान्तयोग—**(औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु सवनेषु स्तोत्राणां कल्पना न्याय:, छन्दोदैवतसामान्तयोगात् कल्प्यते। तत्र सामान्तयोगो यथा प्रकृतौ षोडशिमति अतिरात्रे ज्योतिष्टोमे प्रात: सवने तावत्स्वारं गायत्रं माध्यन्दिने स्वारं गायत्रं आमहीयवरौरवयौद्धाजयऔशनानि निधनवन्ति बहिर्णिधन इडा त्रिणिधनपदनिधनस्वराणां यथासंख्येन रथन्तरं निधनवत्, वामदेव्यं ह। इकारस्वारं नौधसं पदनिधनं कालेयमिडानिधनं आर्भवं गायत्रं स्वारं संहितं पदनिधनं सफं हा इकारस्वारं पौष्कलं पदनिधनं श्यावाश्वं हा इकारस्वारं आन्धीगवं मध्ये निधनं ऐडं च कावं पदानुस्वारं यज्ञायज्ञीयं वाङ्निधनं प्रथममुक्तं साकमश्वं हा इकारस्वारं सौभरं बहिर्णिधनं नार्मेधं हा इकारस्वारं, रात्रिरविकृतैवेति कल्पाना! आहीनिकं विशेषमुक्त्वा एष एव न्याय: सर्व एव सामान्तयोग इत्युच्यते (तु०—ला०श्रौ० ६।९।१ अग्निस्वामी)। अत्र धन्विभाष्यमपि गृहीतव्यम्)

**सामान्यभेद—**(सा०) इष्टिपशुसोमयज्ञेषु सामान्यं त्रिविधं देवतासामान्यं हवि: सामान्यं अक्षरसामान्यं चेति (तु०—आ०श्रौ० २।१४।१४ सिद्धान्ती)

**सामिधेनी—** (हौ०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च १. सामिधेनीनां अनुवचने अध्वर्युणा सामिधेन्यर्थं 'अग्नये समिध्यमानाय अनुब्रू३हि' इति प्रैषेण प्रेषिता होता 'नम: प्रवक्त्रे' इत्यादि— 'होत्रं जुषध्वम् (ऋ० १०।५३।४) इत्यन्तं जपित्वा 'हिं३इति हिंकृत्य भूर्भुव: स्वरोम्' इत्यभिहिङ्कारजपानन्तरं 'प्रवोवाजा:' (ऋ० ३।२७।१), 'अग्न आयाह्वि,' तं त्वा समिद्भि:, स न: पृथु' (ऋ० ६।१६।१०-१२), 'ईलेन्यो नमस्य:, 'वृषो अग्नि:, 'वृषणं त्वा' (ऋ० ३।२७।१३-१५), 'अग्निं दूत

वृणीमहे' (ऋ० १ ।१२ ।१), 'समिध्यमानः' (ऋ० ३ ।२७ ।४), 'समिद्धो अग्न आहुत' 'आ जुहोत' (ऋ० ५ ।२८ ।५-६) इत्येका दशया ऋचोऽनुब्रवीति ताः समिध्यते सम्यगिध्यतेऽग्नियाभिर्ऋग्भिरित्याग्नेः समिन्धनार्था ऋचः सामिधेन्य उच्यन्ते । (तु०—आ०श्रौ० १ ।२ ।१-७ श्रौ०को० १ भा० पृ० १९८-९९) २. ऋक् सामिधेनी धाय्या च स्यादग्नि समिन्धने' इति कोषात् अग्नि समिन्धनार्थाः काश्चन ऋचः सामिधेन्योऽभिधीयन्ते । ३. प्राकृत्यो वैकृत्यश्चेति सामिधेन्यो द्विधोच्यन्ते । तत्र 'प्रवो वाजाः' इत्याद्या एकादश ऋचो वह्निकसमिन्धनहेतुत्वात् सामिधेन्य उच्यन्ते । तासु 'त्रिः प्रथमां त्रिरुत्तमाम्' इत्यभ्यासेन चत्वारि संयोज्य पञ्चदश संख्याकाः दर्शपूर्णमासयोर्नित्यत्वेन प्रकृतावेव विहिताः प्राकृत्योऽभिधीयन्ते । तदुक्तम्पञ्चदशसामिधेनीकं च समामनामः (त्रीन् तृचानुब्रूयात् वैकृत्यः—चोदकेन पञ्चदशत्वं प्राप्तास्वासु पञ्चदशसु ऋक्षु विकृतिषु यदा 'समिध्यमानसमिद्धवत्योर्द्वयोर्ऋचोर्मध्ये (ऋ० ३ ।२७ ।४; ५ ।२८ ।५) या अन्या अधिका आन्तुका धाय्यासंज्ञका ऋचः प्रक्षिप्यन्ते ता आगन्तुकरूपधाय्याप्रक्षेपयुक्ताः सामिधेन्यः विकृतिषु भवत्वाद् वैकृत्य उच्यन्ते । धाय्याः धाय्याशब्देन चात्र यासां विधानं ता एव धाय्या गृह्यन्ते । यथा—'दीक्षणीयायां धाय्ये विराजौ । पृथु पाजा अमर्त्य इति षड्धाय्याः । पृथुपाजवत्यौ धाय्ये । इत्यादि । अतो न सर्वासामागन्तूनां धाय्या संज्ञेति न तासां मध्ये प्रक्षेपः(तु०—हि० श्रौ० २२ ।२ ।४; ६) । शस्त्रधाय्यानामपि मध्ये न प्रक्षेपः इति विशेषोऽवधेयः ।(क) सप्तदशसामिधेन्यः— विकृतिषु यथा—दीक्षणीयायामिष्टौ पृथुपाजा अमर्त्यः (ऋ० ३ ।२७ ।५) इत्येका, 'तं संवाधो यतस्त्रुचः (ऋ० ३ ।२७ ।६) इति द्वितीया धाय्या समिध्यमानसमिद्धवत्योर्ऋचोरन्तराले तयोर्धाय्ययोः प्रक्षेपः । (तु०—ऐ० ब्रा० सा०१ ।१) । इति सप्तदश सामिधेन्यः । एवमाधाने तृतीयायामिष्टौ सामिधेनीषु इध्यमानेद्धवत्योर्मध्ये 'पृथुपाजाः' इति द्वे धाय्ये । तदुक्तम्—तृतीयायां सामिधेन्यावा पते प्रागुपोत्तमायाः पृथुपाजा अमर्त्यः 'इति द्वे'(आ०श्रौ० २ ।१ ।२६) । एवमन्यत्रापि यत्र यत्र सप्तदश सामिधेन्यः तत्र तत्रैते धाय्ये द्रष्टव्ये (तु०— ऋ० ३ ।२७ ।१ सायणभाष्यम्) । एवं सप्तदश सामिधेन्यः वैमृधे अध्वरकल्पायाम्, मित्रविन्दायाम्, आग्रयणेष्टौ चातुर्मास्येषु, पशुबन्धे अग्निचयने प्राजपत्यपशौ चेत्यादिषु द्रष्टव्याः । तदुक्तम्-सप्तदशसामिधेनीकं च समामनामः, याः पञ्चदशेमाः (त्रीन् तृचान्, त्रिःप्रथमामन्वाह, त्रिरत्तमामन्वाह इति प्राकृत्यः । ताभ्यो द्वे अधिके प्रक्षिप्ते धाय्ये इति सप्तदश सामिधेन्यो भवन्ति । (ख) एकविंशतिः सामिधेन्यः—यथा गवामयने विषुवति अहनि 'पृथुपाजाः' (ऋ० ३ ।२७ ।५-१०) इति षड् धाय्याः सामिधेनीनाम्' इति सामिधेनीनामुपोत्तमायाः प्रागेताः षड् ऋचो धाय्या भवन्ति । इत्येकविंशतिः सामिधेन्यः (तु०—आ०श्रौ० ८ ।६ ।३ नारायणः ।(ग) पञ्चविंशतिः सामिधेन्यः—यथा-गवामयने एव महाव्रतेऽहनि या मूलप्रकृतौ दर्शपूर्णमासेष्टौ 'प्र वो वाजाः' इत्याद्या एकादश ऋचः समाम्नाताः तासामेकादशानां मध्ये 'त्रिः प्रथमामन्वाह, त्रिरत्तमाम्' इति वचनानुसारं आवृत्तौ सत्यां याः पञ्चदश संपद्यन्ते ताश्चातिदेशपरम्परया गवामयने विषुवन्नामके मध्यमेऽहनि सवनीयपशौ प्राप्ताः । तत्र तासां पञ्चदशानां मध्ये 'समिध्यमानो अध्वरे' (ऋ०

३।२७।४) इति नवम्याः 'समिद्धो अग्न आहुत' (ऋ० ५।२८।५) इति दशम्याश्चान्तराले 'पृथुपाजा अमर्त्यः (ऋ० ३।२७।५-१०) इति षड् ऋचः प्रक्षेपणीयाः। तथा चाश्वलायन आह 'पृथुपाजा अमर्त्यः' इति षड् धाय्याः सामिधेनीनाम्' (आ०श्रौ० ८।६।३) इति। सेयमेकविंशतिसंख्या विषुवदन्तर्गता महाव्रतो चोदगकेन प्राप्ता। तस्यामेकविंशतौ येयमुपोत्तमा 'समिद्धो अग्न आहुत। (ऋ० ५।२८।५) इति तस्याः पूर्वं समिधाग्निं दुवस्यत' (ऋ० ८।४४।१-४) इति चतस्रः प्रक्षेपणीयाः। तथा च सति सामिधेनीनां पञ्चविंशति संख्या पूर्यते। तदुक्तम्— एकविंशतौ प्रागुपोत्तमायाः 'समिधाग्निम्' इति चतस्रः (ऐ० आ०सा० ५।१।१)। इति महाव्रते पञ्चविंशतिः सामिधेन्यः। द्र० महाव्रते सवनीयाङ्गसामिधेनी—। वैकृतीषु सामिधेनीषु धाय्यानां सर्वत्र समिध्यमानसमिद्धवत्योर्मध्ये निवेशः कार्य इति विशेषोऽवधेयः। (घ) दर्शपूर्णमासयोः सामिधेनकाम्यकल्पेषु 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, चतुर्विंशतिमनुब्रूयात् ब्रह्मवचसकामस्य, षड्विंशतिमनुब्रूयात् पशुकामस्य' इति काम्यसंख्यायाः प्राकृतसंख्यातः विवृद्धौ प्रकृतिवत् प्रथमोत्तमे त्रिरभ्य पञ्चदशत्वे संपादिते अवशिष्टानांअधिकाना मृचां संख्याः आगमनेन पूरणीया नाभ्यासेन पञ्चदशानामावृत्त्या)। एक विंशतिसंख्यापूत्यर्थं षण्णमागन्तूनामृचां पञ्चदशानामन्ते निवेशः कार्यः, न प्रागुपोत्तमयोरन्ताने। (तु०— मी०को० पृ० २०६२,६४)। बौधायनस्त्वाह—'एकविंशतिं चतुर्विंशतिं त्रिंशतं द्वात्रिंशतं षट्त्रिंशतं चत्वारिंशतं चतुश्चत्वारिंशतं अष्टाचत्वारिंशतमनुब्रूयात् इति धाय्यालोके (स्थाने) एता धातव्या भवन्ति। आग्नेयाः सर्वाः गायत्र्यः। सर्वाणि (गायत्री त्रिष्टुब्जगत्यः) छन्दांस्यनुब्रूयात्। इति धाय्यालोके एवैता धातव्याः' इति। (तु०—बौ० श्रौ० २६।४)। (ड) अग्निचयने पञ्च पशुपक्षे समिद्ध्यमानवत्याः समिद्धवत्याश्चान्तराले 'समास्त्वा' (मा०सं० २७।१-९) इति नव ऋचो धाय्या भवन्ति (का० श्रौ० १६।१।११)। तदेवं पञ्चदशभिः प्रत्कृतीभिः चतुर्विंशतिः सामिधेन्य उच्यन्ते। तत्रैव प्राजापत्यपशुपक्षे 'समिध्यमानसमिद्धवत्योर्मध्ये' 'समास्त्वा' (मा० सं० २७।१-६) इति षड् ऋचः (का० श्रौ० १६।२।३४) वायव्य पशुपक्षे समिध्यमानसमिद्धवत्योरन्तराले 'समास्त्वा' (मा०सं० २७।१-२) इति द्वे ऋचौ च (का० श्रौ० १६।२।३८) धाय्या भवन्ति। तत प्राजापत्यपशौ षट्त्वपक्षे एकविंशतिः द्वित्वपक्षे सप्तदश सामिधेन्यः कार्याः। (तु०—तत्रैव विद्याधरः)। ४. ज्योतिष्टोमे अग्निष्टोमे १. सप्रवर्ग्या पौर्वाह्णिक्यामुपसदि 'उपसद्याय मीह्लुषे' (ऋ० ७।१५।१-३) इति तिसृणामृचां मध्ये एकैकामेव ऋचं त्रिः अनवानमनुब्रूयात्। ता एव नवर्चः सामिधेन्यो भवन्ति। एकैका प्रणवान्ता पृथक् पृथक् त्रिवारमुक्ता नव संपद्यन्ते इत्यर्थः (तु०— आ०श्रौ० ४।८।५ नारायणः)। २. सप्रवर्ग्यां आपराह्णिक्यामुपसदि 'इमां मे अग्ने समिधम्(ऋ० २।६।१-३) इति तिस्र ऋचः त्रिरनवानं अभ्यस्ता नव सामिधेन्यो भवन्ति। तत्र याः पौर्वाह्णिक्यः ताः सुपूर्वाह्णे पूर्वाह्णेषु सति) कर्तव्याः। या आपराह्णिकाः ताः स्वपराह्णे (अपराह्णे सम्पूर्णे सति) कर्तव्या इति विशेषोऽवधेयः (तु०— आ०श्रौ० ४।८।११-१२ नारायणः) ५. इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये

दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च होतुः स्मृत्युक्ताचमनं कृत्वा होतृसदने स्वासने यथाविधि उपवेशनार्थं 'सामिधेनीरन्वाह' इत्यादौ अध्वर्युप्रेषितो होता उत्तरया वेदिश्रोण्यासमां पार्ष्णी निधाय प्रपदेन बर्हिराक्रम्य संहितौ करौ हृदयदेशे अङ्कदेशे वा प्राञ्चौ धारयन् प्राङ्मुखस्तिष्ठन् प्रकृतीष्टौ पञ्चदश विकृतौ पाशुकादौ च ताभ्यो न्यूना अधिक वा ऋचो मन्द्रस्वरेण पठति। ता ऋचः समिधः आधीयन्ते याभिरिति करणव्युत्पत्त्या सामिधेनीपदेनोच्यन्ते। द्र० श्रौ०प०नि० पृ० २२। द्र० इध्माधान्।

**सामिधेनीधाय्या—** द्र० सामिधेनी— (३)।

**सामिधेनीनिगद—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु सामिधेन्यर्थं प्रेषिता होता 'नमः प्रवक्त्रे नम उपवक्त्रे' इत्यादिं 'तदद्य वाचः प्रतमं मसीय' (ऋ० १० ।५३ ।४) इत्यन्तं सामिधेन्यर्थनिगदमन्त्रं जपतीति सामिधेनीनिगद इत्युच्यते। 'नमः प्रवक्त्रे' इत्यादिं 'होत्रं जुषध्वम्' इत्यन्तं जपेत् सामिधेन्यर्थमिति नारायणः (तु०—आ०श्रौ० १ ।२ ।१)।

**सामिधेनी संख्याया मन्त्रे प्रयोग—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते...अन्यत्र च पशुसोमेषु क्वचित् पञ्चदश, क्वचित् सप्तदश, क्वचिदेकविंशतिः, क्वचिच्चतुर्विंशतिः, क्वचित् पञ्चविंशति, तिस्र आवृत्त्या नव इत्याद्याः सामिधेनीनां संख्याविशेषाः श्रूयन्ते। तत्र यत्र कर्मणि या या संख्या तद्वाचकं पञ्चदशादिपदं तस्मिन् मन्त्रे संयोज्य उच्चारयेत्। यथा दर्शपूर्णमासेष्टौ इदमहं पञ्चदेन, अग्न्याधानवैमृधपश्वादौ इदमह सप्तदशेन, प्राजापत्यपशौ इदमहमेकविंशेन, इष्टकापशौ इदमहं चतुर्विंशेन, उपसत्सु इदमहं नवकेन इत्यादिः मन्त्रे संख्यापदप्रयोगः कर्तव्यः (तु०—का०श्रौ० ३ ।१ ।९ विद्याधरः)।

**सामिधेनीसान्तत्यविधि—** (हौ०, सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिषु सर्वाः सामिधेन्यः एकश्रुत्या सन्तानेनानूच्यन्ते न केवलं प्रथमोत्तमे एव। तदुक्तम्—'ता एक श्रुतिसन्ततमनुब्रूयात्' इति। तत्र पूर्वोत्तरयोर्मध्ये मौनकृतकालाव्यवधानाभावः सन्तान उच्यते। तदेवं सामिधेनीमात्रोद्देशेन ऋचां सान्तत्यविधिरुच्यते। तेन सामिधेनीनां सर्वासां सान्तत्यविधिः। द्र० मी०को० पृ०४३०१।

**सामिधेनी सप्तदश्य—**(हौ०) इष्टियज्ञप्रकृतिभूतदर्शपूर्णमासविकृतौ' वैमृधे २ अध्वरकल्पायां ३ पशौ ४. चातुर्मास्येषु ५ मित्रविन्दायां ६ त्रैधातव्यायां ७ आग्रयणेष्ट्यां ८ दीक्षणीयायां सप्तदशानां सामिधेनीनामस्तित्वं विद्यते नान्यस्यां विकृतौ। इति सामिधेनीनां सप्तदशस्थानत्वमुच्यते। द्र० मी०को० पृ० ४३०६।

**सामिधेन्यध्यर्धकार—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते... अन्यत्र च पशुसोमेषु १. सामिधेन्यनुवचने अन्यत्र च यत्र 'अध्यर्धकारम्' इत्याह (द्र० आ०श्रौ० ५ ।१५ ।७; १२ ।१०)। तत्र प्रथमायाः (उत्तमायाश्च त्रिरावृत्तिराम्नाता। सा अध्यर्धकारं संपाद्यते। तत्रेष्टिपशुसोमेषु सामिधेनीनामृचामनुवचने प्रथमायाः (प्रवो वाजा अभिद्यवो हविष्मन्तो घृताच्या। देवाज् जिगाति सुम्नयुः' (ऋ० ३ ।२७ ।१) इत्यस्या ऋचोऽध्यर्धकरण प्रकारः)अध्यर्धां (अर्धर्चत्रयोपेताम्) एतामृचं उक्त्वा अ वसाय अथ द्वे ऋचावुक्त्वा अवस्येत् (विरमेत्)। अत्र आद्यायास्त्रिरा-

वृत्त्या षडर्धर्चाः संपद्यन्ते । तत्संतत्या द्वितीयाया आद्यश्च एकः (अर्धर्चः) इति सप्त अर्धर्चाः । अर्थात् आदितस्त्रीन् अर्धर्चान् उक्त्वा अवसाय अथ चतुर उक्त्वा अन्ते टेः प्रणवं कुर्यात् । एवं हि अध्यर्धकृता त्रिरावृत्ता प्रथमा उत्तरया 'अग्न आ याहि' (ऋ० ६ ।१६ ।१०) इत्यनया सन्तत्या च प्रथमा भवति । तद्यथा—'प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या (१) देवाञ्जिगाति सुम्नयुः (२) प्र वो वाजाअभिद्यवो घृताच्या (३) । देवाञ्जिगाति सुम्नयुः (४) प्रवो वाजा हविष्मन्तो घृताच्या (५) देवाञ्जिगाति सुम्नयुः (५) अग्न आ याहि वीतये गृणानो हव्यदातयो३म् (७) । इति सप्तार्धर्चाः प्रथमाया अध्यर्धकरणप्रकारः । अथ अन्त्याया अध्यर्धकरणप्रकारः—अत्रापि अन्त्यायाः 'आ जुहोता दुवस्यताऽग्निं प्रयत्यध्वरे । वृणीध्वं हव्यवाहनम्' (ऋ० ५ ।२८ ।६) इत्यस्याः त्रिरावृत्त्या षडर्धर्चाः संपद्यन्ते । उपान्त्यायाः 'समिद्ध अग्न आहुत' (ऋ० ५ ।२८ ।५) इत्यस्या अन्त्य एकः (अर्धर्चः) सन्तत्या इति सप्तार्धर्चाः । तत्रादितश्चतुरोऽर्धर्चान् उक्त्वाऽवसाय अथ त्रीन् अर्धर्चान् उक्त्वाऽवस्येत् । अन्ते टेः प्रणवं च कुर्यात् । एवं ह्यन्त्या अध्यर्धर्चकृता उपान्त्यया सन्तता च भवति । तद्यथा—'आ जुहोता दुवस्यताऽग्निं प्रत्यध्वरे (१) वृणीध्वं हव्यवाहनम् (२) आ जुहोता दुवस्यताऽग्निं प्रत्यध्वरे (३) वृणीध्वं हव्यवाहनम् (४) आ जुहोतादुवस्याऽग्निं प्रत्यध्वरे (५) वृणीध्वं हव्यवाहनं (६) त्वं हि हव्यवाहनो३म् (७) ॥ इति सप्तर्धर्चा अन्त्याया अध्यर्धर्चकरणप्रकारः (तु०—आ०श्रौ० १ ।२ । १९-२१ षड्गुरुशिष्यः, देवत्रातः, नारायणश्च) ।

२. सामिधेनीनां प्रथमाया ऋचः द्वयोरर्धर्चयोः संहितया पाठः, ऋगन्ते टेः स्थाने त्रिमात्रः प्रणवः तदन्ते मकारः, तेन च मकारेण सह उत्तरस्या ऋचः प्रथमार्धर्चेन सन्धानं कार्यम् । समाप्ते द्वितीयसामिधेन्यर्धर्चे उच्छ्वासः कार्यः । एतदेकमवसानम् । ततः द्वितीयार्धर्चेन तृतीयसामिधेन्यर्धर्चं सन्धाय तेन च द्वितीयार्धर्चं प्राणवान्तं संधाय । प्रणवान्तिममकारेण चतुर्थसामिधेन्यर्धर्चं तस्मिन्नेवार्धर्चे उच्छ्वसेत् एतावद् द्वितीयमवसानम् । एवं च प्रथमोच्छ्वासे त्रयोऽर्धर्चाः । द्वितीये तु चत्वारः संपद्यन्ते । संकलनेन सप्त सम्पन्नाः । तत्र त्रिः पठ्यमानायाः प्रथमाया ऋचः षड् अर्धर्चाः, द्वितीयस्या ऋचः एकोऽर्धर्चः, एतदनन्तरं प्रत्युच्छ्वासं द्वावर्धर्चौ भवतः । एवं प्रथमावत् उपान्त्याया द्वितीयार्धर्चमारभ्य तदीयप्रणवमकारेण अन्तिमाया अर्धर्चं संधाय तेन च द्वितीयार्धर्चं संधाय तदन्तिमप्रणवेन उत्तरस्या अर्धर्चं संधाय तदन्ते विरमेत् । अन्तिमायां त्रिः पठ्यमानायां एतदवसानम् । ततो द्वितीयमर्धर्चमारभ्य तदन्तिमप्रणवमकारेण द्वादशाक्षरं (अग्ने महां असि ब्राह्मण भारत) निगदभागं संधाय तदन्ते विरमेत् । एतत् अन्तिमायां द्वितीयमवसानम् । अनया रीत्या सामिधेनीनामाद्यन्त्योर्ऋचोः पठनं अन्यासामृचामपेक्षया अधिकस्य अर्धर्चस्य एकैकस्मिन् उच्छ्वासे उच्चारणात् अध्यर्धकारमन्वाहेतिणमुलन्तेन 'अध्यर्धकारम्' इत्येतेन पदेन आश्वलायनसूत्रे (आ०श्रौ० १ ।२ ।१९, २१) व्यवहृतम् । द्र० श्रौ०प०नि० पृ० २३ ।

**सामिधेन्यनुवचन—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च 'होता

सामिधेनीरनुब्रूयात्' इत्युपदेशात् 'अग्नये समिध्यमानायानुब्रूहि' इत्यध्वर्युणा प्रेषितो होता उत्तरस्यां वेदिश्रोण्यां समां पार्ष्णीं निधाय प्रपदेन बर्हिराक्रम्य संहितौ करौ हृदयदेशे अङ्कदेशे वा प्राञ्चौ धारयन् प्राङ्मुख अभिहिंकारानन्तरं प्रकृतौ 'प्र वो वाजा अभिद्यव:' (तै० ब्रा० ३ ।५ । २ ।१) इत्यादीनामेकादशानामृचां प्रथमोत्तमयो: त्रिरभ्यासेन अध्यर्धकारं पञ्चदशर्चो विकृतौ च ततोऽप्यधिका धाय्यासंज्ञका ऋच ऐकश्रुत्यस्वरेण (मन्द्रस्वरेण) ऋगन्ते न मकारान्तप्रणवेन च यत् सन्ततं पठति अनुब्रवीति तदुक्तम्—'ता एक श्रुतिसन्तवमनुब्रूयात् । उदात्तानुदात्तस्वरितानां पर: सन्निकर्ष ऐकश्रुत्यम् । स्वरादिमृगन्तमोकारं त्रिमात्रं मकारान्तं कृत्वोत्तरस्या अर्धर्चेऽवस्येत् तत् सन्ततम्' (आ०श्रौ० १ ।२ ।८-१०) । इति सामिधेन्यनुवचनमुच्यते । **द्र०** सामिधेनी—, सामिधेन्यध्यर्धकार— श्रौ० प० नि० पृ० २२, अभिहिंकारअनुवचन— ।

**सामिधेन्यनुवचनस्थान—** (हौ०) इष्टियज्ञेषु... अन्यत्र च पशुसोमेषु १. वेद्युत्तरश्रोणिदेश: सामिधेन्यनुवचनस्थानमुच्यते । (तु०— आ० श्रौ० १ ।१ ।२; २ ।१६ ।१ षड्गुरुशिष्य:) । **द्र०** होतृस्थान— २. हविर्धानशकटयोर्मध्ये यस्मिन् हविर्धाने सोमरसं निष्पादयन्ति तस्मिन् सामिधेनीनामनुवचनं कर्तव्यम् । सामिधेन्यनुवचनार्थं दक्षिणहविर्धानशकटसमीपदेश: । **द्र०** मी० को० पृ० ४२९९-४३०० ।

**सामिधेन्यनुवचनार्थप्रैष—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते......अन्यत्र च पशुसोमेषु अध्वर्यु: इध्मादेकां समिधमादाय 'अग्नये समिध्यमानायानुब्रूहि' इति सामिधेन्यनुवचनार्थं होतारं प्रेष्यतीति अध्वर्युकृतो होत्रे प्रैष: सामिधेन्यनुवचनार्थ: प्रैष उच्यते । केचित्तु 'अग्नये समिध्यमानाय होतरनुब्रूहि' इति प्रैषस्वरूपं वदन्ति । इति विशेषोऽवधेय: ।

**सामिधेन्यभ्यास—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते...अन्यत्र च पशुसोमेषु अभिहिङ्कारानन्तरं होत्रा पठ्यमानासु सामिधेनीसु प्रथमाया अन्तिमायाश्च ऋचस्त्रिवारं य: पाठ: स सामिधेन्यभ्यास उच्यते । **द्र०** सामिधेन्यनुवचन—, अभिहिंकार—, सामिधेनी—, श्रौ०प०नि० पृ० २३ ।

**सामोहग्रन्थ—** (औ०, सा०) सोमयज्ञेषु प्रकृतिविकृतिषु सामगानविधाने यस्मिन् ग्रन्थे सामगास्तृचे तृचे साम एकैकं गायन्ति स साम्नां समूहरूपो ग्रन्थ: सामोहग्रन्थ उच्यते ।

**साम्नां तृचे गान—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु साम्नां गानविधौ १. तावद् गीतौ सामशब्दोगीति विशेषवाचकत्वेन निर्णीत: (मी०को० पृ० ४२९०) । २. साम संमितमृचा । यावद् ऋक् तावदेव साम । अस्यतेर्वा, क्षिप्तं हि तत् ऋगक्षरेषु, ऋच्यध्यूढं साम गीयते (तु०—निरु० २ भा० पृ० ६६-६७ स्कन्दमहेश्वर:) । ३. गीतिषु सामाख्या । प्रगीते हि मन्त्रवाक्ये सामशब्दमभियुक्ता उपदिशन्ति सामान्यधीमहे, सामान्यध्यापयाम: (मी०को० पृ० ४२९०) । ४. प्रगीतसाध्या ऋच: सामानि भवन्ति, गीतिविशिष्टा मन्त्रा: साम, तत्रापि गीतिरेव मुख्या (मी०को० पृ० ४२७५) । तथा च ५. (क) सामशब्दो रथन्तरादिशब्दाश्च गीतिवाचका: । सन्ति सामानि रथन्तरं बृहत्, वैरूपं, वैराजं शाक्वरं, रैवतमिति । एवं (मी०को० पृ० ४२ ९०) (ख)

एवं अनुश्लोकं, अभीवर्तं, आन्धीगवं, आमहीयवं, औशनशं, काण्वं, कालेयं, कावं, कौत्सं, क्रौञ्चानि, गायत्रं नौधसं, पौष्कलं, यज्ञायज्ञीयं, यौधाजयं, रथन्तरं, रौरवं, वामदेव्यं, वासिष्ठस्य जनित्रे, शारीरं, श्यावाश्वं, श्लोकं, संहितं, सफमिति (मी०को० पृ० ४२७४)। (ग) रथन्तरम्, बृहत्, वैरूपम्, वैराजम्, शाक्वरम्, रैवतम्, त्रैशोकम्, गायत्रम्, आमहीयम्, रौरवम्, यौधाजयम्, औशनम् वामदेव्यम्, नौधसम्, कालेयम्, संहितम्, श्यावाश्वम्, आन्धीगवम्, सफम्, पौष्कलम्, कायम्, यज्ञायज्ञीयम्, सिमासन्तनियतयएवागपत्यशाक्वरवर्णमिति। द्र० मी०को० पृ० ४२७६।(घ) तथा दश सामसहस्राणि शतानि च चतुर्दश। सङ्गानि सरहस्यानि यानि गायन्ति सामगाः। अशीति शतमाग्नेयं (काण्डं) पावमानं (काण्डं) चतुः शतम्। ऐन्द्रं (काण्डं) स्यात् सप्तविंशानि यानि गायन्ति सामगाः। इति बहूनि सामानि श्रूयन्ते (मी०को० पृ० ४२७५)। एतेषां रथन्तर-बृहद्-वैरूपादीनां साम्नां ऋक्त्रयसंघातरूपे तृचे गानं क्रियते तत् साम्नां तृचे गानमुच्यते। तदुक्तम्—'एकं साम तृचे क्रियते स्तोत्रीयम्' इति। अर्थात् सामच्छन्दस्के तृचे प्रत्येकमेकं साम गेयं न विषमच्छन्दस्के, स्तोत्रप्रयोगे तृचे गेयं नैकस्यामेव ऋचि (मी०को० पृ० ४२७५)। तच्च 'यद् योन्यां तदुत्तरयोः गायति' इति वचनात् छन्दःसामनामके ग्रन्थे (पूर्वार्चिके) एकस्यामृचि (योनिनाम्न्यां। समुत्पन्नं साम उत्तराख्ये ग्रन्थे (उत्तरार्चिके) आम्नातेषु गातव्यम्। एतदुक्तं भवति तृचस्य प्रथमायामृचि योनिरूपायां यत्सामोत्पन्नं, छन्दः सामग्रन्थे समाम्नातं तदवलोक्य तत्सादृश्येन द्वितीयतृतीययोर्ऋचोर्गानं समूहनीयम् (तु०—ऐ० ब्रा० सा० ३।२३)। एवं च साम तदाधारम् ते तृचे प्रत्यृचं कृत्स्नं समापनीयम्। यदेव प्रथमायां तदेव द्वितीयतृतीययोर्ऋचोरावर्तनीयमति तात्पर्यः। द्र० मी०को० पृ० ४२७५। तत्रापि 'यद्योन्यां त तदुत्तरयोर्गायति' इति निर्णीतेऽपि योनिवर्णवशेन साम गातव्यं उत्तरावर्णवशेन वा इति संशये उत्तरावर्णवशेनैव गातव्यं न योनिवर्णवशेनेति विशेषोऽनुसंधेयः (तु०—मी०को० पृ० ४२८९)। द्र० सामशब्द—, सामग्रन्थ—।

**साम्युत्थाने विश्वजिदतिरात्रप्रयोग—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्राय दीक्षिता यजमाना यदा सत्रावसानात्पूर्वमेव सामि अर्थात् (मध्ये) केचन सर्वे वा उत्तिष्ठेरन् तदा तन्निमित्ते सति विश्वजिदतिरात्रयागः कर्तव्यः। तदुक्तम्—'यदि सत्राय दीक्षितानां सामि उत्तिष्ठेरन् विश्वजिताऽतिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्वस्वर दक्षिणेन यजेरन्'। इति। तत्र सत्रस्य त्यागे कृते यो विश्वजिद्यागः प्रायश्चित्तरूपेण कर्तव्यतया विहितः स उत्थानात् परं कर्तव्यः। समाप्ते विश्वजिदतिरात्रे ततः परं पुनः शिष्टं सत्रमनुष्ठाय सत्रोत्थानं कर्तव्यमिति विशेषोऽवगन्तव्यः। (तु०—मी०को० पृ० ४२९८-९९)। द्र० विश्वजिदतिरात्र—।

**सारस्वतकुष्ठिकशफहोममन्त्र—** (आध्व०) इष्टिनिरूढपशुबन्धविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रमणी प्रकरणे द्वितीयस्य कुष्ठिकशफस्य होमविधौ 'मुखं सदस्य शिर इत्सदेन जिह्वापवित्रमश्विना सरस्वती॥ चाप्यन्नपामुर्मिषगस्य वीलो नवस्तिर्न शेपो हरसा तपस्वी स्वाहा॥ १॥ अश्विभ्यां चक्षुरमृतं ग्रहाभ्यां छागेन तेजो हविषा शृतेन॥ पक्ष्माणि गोधूमैः क्वलैरु-

तानि पेशो न शुक्रमसितं वसाते स्वाहा ॥ २ ॥ अविर्न मेषोऽसि न वीर्याय प्राणस्य पन्था अमृतो ग्रहाभ्याम्। सरस्वत्युपवाकैर्व्यानं नस्यानि वर्हिर्बदरैर्जजान स्वाहा ॥ ३ ॥ इन्द्रस्य रूपमृषभो बलाय कर्णाभ्यां श्रौत्रममृतं ग्रहाभ्याम् ॥ यवान् बर्हिर्भुवि केसराणि कर्कन्धुजज्ञे मधुसारधं मुखात् स्वाहा ॥ ४ ॥ आत्मन्नुपस्थे न वृकस्य लोममुखे श्मश्रूणि न व्याघ्रलोमन् ॥ केशा न शीर्षम् यशसे श्रियै शिखा सिंहस्य लोम त्विषिरिन्द्रियाणि स्वाहा ॥ ५ ॥ अङ्गान्यत्मन् भिषजा तदश्विनाऽऽत्मानमङ्गैः समधात् सरस्वती ॥ इन्द्रस्य रूपं शतमानमायुश्चन्द्रेण ज्योतिरमृतं दधाना स्वाहा ॥ ६ ॥ सरस्वती योन्यां गर्भमन्तरश्विभ्यां पत्नी सुकृतं बिभर्ति ॥ अपां रसेन वरुणो न साम्नेन्द्रं श्रियैजनयन्नप्सु राजा स्वाहा ॥ ७ ॥ तेज: पशूनां हविरिन्द्रियावत् परिस्रुता पयसा सारधं मधु ॥ अश्विभ्यां दुग्धं भिषजा सरस्वत्या सुतासु ताभ्याममृत: सोम इन्दु: स्वाहा ॥ ८ ॥ एते सारस्वतकुष्ठिकशफहोममन्त्रा इत्युच्यन्ते । द्र० आश्विनसारस्वतैन्द्रकुष्ठिकशफहोमविधि आश्विन कुष्ठिकशफहोममन्त्र—, ऐन्द्रकुष्ठिकशफहोममन्त्र— । श्रौ०प०नि० पृ० १६४-६५ ।

**सारस्वतसत्र—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहगवामयनाद्ययनसंवत्सरसत्र प्रकरणे ९. सारस्वताख्यानि चत्वारि सत्राणि सन्ति । तत्र प्रथमं मित्रावरुण्योरयनं, द्वितीयं इन्द्राग्न्योरयनं, तृतीयं अर्यम्णोरयनं, चतुर्थं सरस्वतीपरिसर्पणमिति । तानि सरस्वत्या विनशनप्रदेशे यावत् प्लाक्षं प्रस्रवणमाप्यते अनुव्रजद्भि: सत्रियजमानै: उपेयानि । अनुव्रजनं च सरस्वतीं दक्षिणेन तीरेण शम्याप्रासे अहरहर्वसित्वाऽनु व्रजेयुरिति । तत्र शम्या प्रासो नाम ब्रह्मा दक्षिणपुरस्तादाहवनीयस्य अवस्थाय शम्यां प्रहरेत् । सा यत्र समे देशे निपतेत् स देश: शम्या प्राश इति प्रसिद्ध: । तस्मिन् शम्या प्रदेशे सत्राणि कुर्युरित्यर्थ: । तत्र प्रथमस्य मित्रावरुणयोरयनस्य सारस्वतसत्रस्य द्वौ कल्पौ भवत: । प्रथमे कल्पे सत्रिणो यजमाना: सरस्वत्या: विनशनदेशं (सरस्वत्या: पश्चिममुदकान्तं) गत्वा दीक्षित्वा महावेदिप्राकृतविहारे द्वादश दीक्षा:, द्वादशोपसदश्च समाप्य औपवसथिकं (उपवसथदिनकर्म) च कृत्वा प्रायणीयातिरात्रं तत्रैव कुर्यु: । तदनन्तरं ब्रह्मा गार्हपत्यस्य दक्षिणपुरस्तादवस्थाय शम्यां प्रहरेत् । सा यत्र निपतेत् समेदेशे गार्हपत्यायतनं कुर्यु: । गार्हपत्यायतनादारभ्य पुरस्ताद् यथा भवति पुनर्विहार: कल्पनीय: । तदेवं शम्याप्रासे विहारं प्रकल्प्य एकं मासं कुण्डपायिनामयनवद् अग्निहोत्रं जुह्वति प्रातरुपक्रमं सायमपवर्गम् । एवमग्निहोत्रमासेऽतीतेऽनन्तरमेकं मासं दर्शपूर्णमासाभ्यां यजन्ते कृष्णपक्षेऽहरह: पूर्णमास्या, शुक्लपक्षेऽहरहरमावास्यया । ततो मासमहरहश्चातुर्मास्यानां प्रथमेन वैश्वदेवपर्वणा यजन्ते । तदनन्तरं मासमहरहर्वरुणप्रघासैर्यजन्ते । ततो मासमहरह: साकमेधै:, ततो मासमहरह: शुनासीरीयेण यजन्ते । अथ सरस्वतीं दक्षिणेन तीरेणानुव्रजेयु: । तत्र यथाऽपरपक्षस्य चतुर्दश्यामौपवसथिकं कर्म भवेत्तथा दीक्षेरन् । तत अमावास्यायां प्रायणीयातिरात्रं कृत्वा कुण्डपायिनामयने विहितानां अग्निहोत्रादीन् आद्यान् षड् हविर्यज्ञान् दण्डचक्रवद् आवर्तयन्तो यजेयु: । तत: पौर्णमास्यां गोसंज्ञकमेकाहमुपेयु: । उत्तरस्यां पौर्णमास्यां आयु: संज्ञकमेकाहमुपेयु: । एवमेव उत्तरत्र

गो आयुषी पौर्णमास्यां पौर्णमास्यां क्रमेणोपेयुः । तदेवं हविर्यज्ञमासान् क्रमेण आवर्तयन्तो यावत्प्लाक्षं प्राप्यते सरस्वतीं दक्षिणेन तीरेणाभिव्रजेयुः । तत्तत्रैवं कृते 'आयुः' अयुग्मेषु (प्रथमतृतीयपञ्चमेषु) मासेषु 'गौः' युग्मेषु (द्वितीय चतुर्थषष्ठेषु) कृतौ भवतः । इति मैत्रावरुणयोरयनसत्रस्य प्रथमः कल्पः (पक्षः) । (तु०—आ०श्रौ० १२ ।६ ।१-१३ नारायणः) । अथ द्वितीयः कल्पः—यथा अमावास्यायां प्रायणीयोऽतिरात्रः स्यात् तथा दीक्षित्वाऽपरपक्षस्य चतुर्दश्यामेवौपवसथिकं कर्म कृत्वाऽमावास्यायामतिरात्रं प्रायणीयं कुर्युः । तेऽमावास्यायामेकस्मिन्नेवाहनि अतिरात्रमाश्विनशस्त्रान्तं समाप्य तदहरेव आमावस्यस्यं वत्सायाकरणादि कृत्वा श्वोभूते यजेरन् । ततस्तं पूर्वपक्षमावास्येन व्रजित्वा पौर्णमास्यां गाम्' (एकाहं) उपेयुः । पौर्णमासेनोत्तरपक्षं व्रजित्वाऽमावास्यायां 'आयुषं' (एकाहं) उपेयुः । एवमावर्तयन्तो यावत् प्लाक्षं प्राप्यते व्रजेयुः । इति द्वितीयः कल्पः ।(तु०—आ०श्रौ० १२ ।६ । १४-१८ नारायणः) । द्वितीये च इन्द्राग्न्योरयने सारस्वतसत्रे सर्वं मित्रावरुणयोरयनसारस्वतसत्रवद् भवति । अस्मिन् सारस्वते गो आयुषीभ्यामेवान्तं कालं अभ्यस्यन्तः (आवर्तयन्तः) यावत् प्लाक्षं प्रस्रवणं व्रजन्ति इति तु विशेषोऽवगन्तव्यः (तु०—आ०श्रौ० १२ ।६ ।१९-२० नारायणः) । तृतीये अर्यम्णोऽयनसारस्वतसत्रे सर्वं मित्रावरुणयोरयनसारस्वतसत्रवद् भवति । अयं तु विशेषः— त्रिकद्रुकैः 'ज्योगौरायुः' इत्येतैः अभिप्लवपूर्वत्र्यहैः दण्डकलितवदभ्यस्य यावत् प्लाक्षं प्रस्रवणं व्रजन्तीति । (तु०—आ०श्रौ० १२ ।६ ।२१ नारायणः) । **द्र०** दण्डकलित— । चतुर्थस्य सरस्वतीपरिसर्पणसारस्वतसत्रस्य शस्यं गवामयनसंवत्सरसत्रवद् भवति । परन्त्वत्र गवामयनान्तर्गतानि चतुर्विंशभिजिद् विषुवद् विश्वजिन्महाव्रतानि एकपातीन्यहानि, पृष्ठ्यषडहस्य चतुर्थं चाहश्च अतिरात्रसंस्थानि भवेयुः । शिष्टं सत्रोत्थानादिकं सारस्वतसत्रोक्तमेव भवतीति विशेषोऽवगन्तव्यः (तु०—आ०श्रौ० १२ ।६ ।२२-२४ नारायणः) । २. सारस्वतसत्राणि नाम सरस्वत्यास्तीरे यानि क्रियन्ते तानि सारस्वतसत्राणि । त्रीणि सारस्वतानि मित्रावरुणयोः प्रथमं, इन्द्राग्न्योर्द्वितीयं, अर्यमणोस्तृतीयम् । द्र० मी०को० पृ० ४३०९ ।

**सारस्वतसत्रोत्थाननिमित्त—** (सा०) सोमयज्ञेषु प्रकृतिभूत...द्वादशाहगवामयनाद्ययनसंवत्सरसत्रप्रकरणे सर्वेषां चतुर्णामपि सारस्वतसत्राणां पञ्च सत्रोत्थाननिमित्तानि भवन्ति १. प्लाक्षप्रस्रवणप्राप्तिः २. सवृषभाणां गवां सहस्रभावः ३. चौरादिभिः सर्वस्वापहारः ४. उत्सृष्टानां गवां सर्वनाशः ५. गृहपतिमरणं चेति । तेषु प्लाक्षं प्रस्रवणं प्राप्योत्थानमेव कर्तव्यं न क्रमप्राप्तं गत्युक्तं कर्मारब्धव्या । (क) ये प्लाक्षं प्रस्रवणं प्राप्योत्तिष्ठन्ति तेऽस्मिन् देशेऽवभृथं कुर्युः । अवभृथेष्टिमुदेत्य 'अग्नये कामाय अष्टाकपालं पुरोडाशं निर्वपन्ति' इति वैराजतन्त्रेष्टिः कार्याः । अर्थात् सारस्वतं सत्रं सरस्वत्या नद्यास्तीरे कर्तव्यम् । सा च नदी यस्मात् पर्वतादारभ्य प्रवहति तत्र प्लक्षमूलोत्पन्नं जलप्रस्रवणमस्ति तद्देशं प्राप्य तत्र देशे इयं कामेष्टिः कार्या । (द्र० मी०को० पृ० ४३०७-८) । तस्यां स्त्री अश्वा, स्त्री पुरुषी ते धेन्ववस्थे (प्रथम प्रसूते) च दक्षिणायां दद्युः । तदुक्तम्— 'तस्यामश्वां च पुरुषीं च धेनुके दद्युः' (तु०—आ०श्रौ० १२ ।६ ।३० नारा-

यणः)। इदं सर्वेषां प्लाक्षप्रस्रवणप्राप्तिरूपं प्रथमं सत्रोत्थाननिमित्तम्। अस्मिन्नेव च कामेष्टिः कार्या, नान्येषु निमित्तेषु (तु०— तत्रैव० ३१ नारायणः)। (ख) सत्रारम्भकाले उत्सृष्टानां सवृषभाणां एकाधिकशतगवां प्लाक्षप्रस्रवणप्राप्तिनिमित्तात् पूर्वं सहस्रभावे द्वितीयं सत्रोत्थाननिमित्तं भवति। तदानीमेव आयुषा गवां चाहोभ्यां सत्रोत्थानं कुर्युरिति भावः। एवमेव प्लक्षप्रस्रवणप्राप्तिनिमित्तात् प्राक् चौरादिभिः सर्वस्वापहारे तृतीयां निमित्तम्, (घ) अथवा प्लाक्षप्रस्रवणप्राप्तेः पूर्वमुत्सृष्टानां गवां सर्वनाशे चतुर्थं सत्रोत्थाननिमित्तं ज्ञेयम्। (ङ) तथा च प्लाक्षप्रस्रवणप्राप्तेः प्रागेव गृहपतिमरणे पञ्चमं सत्रोत्थानं भवति। तत्र विश्वजिदतिरात्रे सत्रोत्थानं कुर्युः। इतीमानि सारस्वतसत्रोत्थानस्य पञ्च निमित्तानि उच्यन्ते। (तु०—आ०श्रौ० १२।६।२६-३६ नारायणः)।

**सारस्वतहविःप्रचार** — (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञेषु सप्तमे कौकिलसौत्रामणीप्रकरणे त्रिपशोः अङ्गयागे आश्विनहविः प्रचारानन्तरं ता भिषजा सुकर्मणा सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियो३म् इत्यनुवाक्या। 'होता यक्षदिन्द्रं वृष्णोर्मेषस्य हविषः आद० गृभः। घस्तान्नूनं करदेवेन्द्रः सरस्वती सरस्वती जुषतां हविर्होतर्यज' इति प्रैषः। ये३यजामहे सुवस्ता भिषजा सुकर्मणा सा सुदुघा सरस्वती। स वृत्रहा शतक्रतुरिन्द्राय दधुरिन्द्रियो३म् वौ० ३। वाग्व.. अयं सारस्वतहविः प्रचार इत्युच्यते। द्र० श्रौ० प०नि० पृ०१७९।

**सारस्वतहोम**— (आध्व०) इष्टियज्ञेषु हविर्यज्ञानां द्वितीयस्य अग्निहोत्रहोमस्यानन्तरं 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयाम्' इत्याश्वलायनसूत्रात् (आ०श्रौ० २।८।१) दर्शपूर्णमासाभ्यां प्राक् क्रियमाणाया अन्वारम्भणीयेष्टेः प्रधानदेवतानां यागानन्तरं अध्वर्युः अन्वाधानानन्तरं गार्हपत्ये स्मार्तवदाज्यं संस्कृत्य स्रुक्स्रुवौ निष्टप्य संमृज्य स्रुचि चतुर्गृहीतं गृहीत्वा आहवनीये समिधमाधाय पर्युक्ष्य यजमानेनान्वारब्ध उपांशु 'पृथिवी होता' इत्यादि जननादिन्द्रं इन्द्रियाय स्वाहा' इत्यन्तेन मन्त्रेण जुहोति। 'यद्देवाः, यददीव्यम्, आयुष्ट' इति त्रिभिरनुवाकैः प्रत्यृचं स्रुवेणाहवनीये जुहोति। यजमानः स्वायतने तिष्ठन् समित्पाणिः 'वैश्वानराय' इत्युपस्थानादि वरदानान्तं करोति। ततोऽध्वर्युश्चतुर्गृहीतं गृहीत्वा 'पूर्णा पश्चात्' इति ऋग्द्वयान्ते स्वाहाकारेण आहवनीये हुत्वा पुनश्चतुर्गृहीतेन 'निवेशनी संगमनी' इत्यृग्द्वयेन स्वाहाकारान्तेन जुहोति। सोऽयं सारस्वतहोम इत्युच्यते। द्र० श्रौ०प०नि० पृ० ६७।

**सार्पराज्ञी**— (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूत....... उपस्थाने 'आ यं गौः' (ऋ० १०।१८९।१-३) इति तिस्र ऋचः सार्पराज्य उच्यन्ते। सर्पराज्ञ्यृषिका दृष्टत्वात्। उक्तं च 'आ यं गौरिति चोपतिष्ठते सार्पराज्ञीभिः' (आ० श्रौ० ४।९।१६)। द्र० सर्पराज्ञी—।

**सार्वत्रैष्टुभपशु**— (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अन्यत्र च पशुषु पशुः सार्वत्रैष्टुभो भवति। त्रिष्टुबिति एकादशसंख्याया द्योतकः। तदुपलक्षितं पशुसंबन्धिसर्वं त्रैष्टुभभवति। त्रिष्टुप्संबन्धात्-। 'अथाऽयं पशुः सार्वत्रैष्टुभो भवति एकादश प्रयाजाः, एका दशाऽनूयाजाः, एकादशकपालः पशुपुरोडाशः, एकादशाऽवदानानि, एकादशोपयाजाः इति'। एवं पशुः सार्वत्रै-

ष्टुभो भवति । अर्थात् प्रयाजादीनि सर्वाण्यङ्गानि एकादशाक्षर पादवतस्त्रिष्टुप्छन्दसः पादाक्षरसंख्येव संख्यान्वितानि सन्त्यत्रेति व्युत्पत्त्या सर्वः पशुयागः सार्वत्रैष्टुभ उच्यते । (तु०—श्रौ०को० १. भा० पृ० ६०२ ।

**सार्वमेधिकदशरात्राहीनस्याहःक्लृप्तिः—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अहीनप्रकरणे सर्वमेधाख्येऽहीने भवानि यानि दशाहानि तानि सार्वमेधिको दशरात्रोऽहीन इत्युच्यते । तस्य अग्निष्टुत् प्रथममहः, इन्द्रस्तुत् द्वितीयमहः, सूर्यस्तुत् तृतीयमहः, वैश्वदेवस्तुत् चतुर्थमहः, महाव्रतं पञ्चममहः, वाजपेयः षष्ठमहः, अप्तोर्यामः सप्तमहः, त्रिणवस्तोमोऽष्टममहः, त्रयस्त्रिंशत्स्तोमो नवमममहः, विश्वजित्सर्वपृष्ठो दशममहः इति दशाहानि । तत्र अग्निष्टुत् अग्निष्टोमसंस्थः, इन्द्रस्तुत्सूर्यस्तुद्वैश्वदेवस्तुतः उक्थ्यसंस्थाः, वाजपेयः षोडशि संस्थः, अप्तोर्यामोऽतिरात्रसंस्थः, महाव्रतं अग्निष्टोमसंस्थम्, त्रिणवस्तोम उक्थ्यसंस्थः, त्रयस्त्रिंशत् स्तोमो उक्थ्यसंस्थः, विश्वजित् अतिरात्रसंस्थः इत्यहः संस्था भवन्ति । **द्र०** सर्वसोमसंस्थास्तोत्रअहीनसत्राहर्गणानामङ्गप्रधानविधि-, अहीन—, अहीनशस्योपाय— ।

**सावित्रहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र प्रवर्ग्यवत्सु च पूर्वशान्त्यनन्तरमध्वर्युः प्राग्वंशालाया अग्रभागे धनुर्मानि गर्तं खात्वा शोधिल्या मृदाऽभिपूर्य तदुत्तरतस्तृणेषूदक्संस्थं वराहविहितं वल्मीकवपां शुक्लां दूर्वां कंसे छागापय इत्यासाद्य तेषामुत्तरतः प्रागग्रेषु दर्भेषु प्राचीनग्रीवमुत्तरलोम कृष्णाजिनमास्तीर्य उत्तरस्थशालाखण्डस्याग्रे स्फ्येनोद्धत्यावोक्ष्य सैकतं परिमण्डलं खरं कृत्वा तं कुशैर्दूर्वाभिः प्रच्छाद्य परिश्रित्योत्तरतो द्वारं कृत्वा खरसमीपे । अर्भकपालपिष्टानि शर्करापिष्टानि अजकृष्णाजिनलोमानि फलकंवेणुशलाकां च सादयति । कुशलं कर्तारं सन्निधाप्य गार्हपत्ये प्रवर्ग्यमदन्तीरधिश्रित्य वेद्यामुभयतस्तष्टामरत्निमात्रीं वैणवीमभ्रिं प्राचीं निधाय द्वाराणि परिश्रिरित्य पत्नीशालायां पत्नीमुपवेश्याग्नीन् परिस्तीर्य दक्षिणेनाहवनीयं ब्रह्मयजमानावुपवेश्य यजमानेऽन्वारब्धे 'युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः । विहोत्रा दधे वायुना विदेकः इन्मदो देवस्य सवितुः । परिष्टुतिः स्वाहा' । इति मन्त्रेणाहवनीये जुहोति । सोऽयं प्रवर्ग्ये सावित्रहोम उच्यते । तत्र यजमानः देवाय सावित्रे इदं न ममेति त्यागं पठति । दीक्षिते तु यजमाने स्वाहारहितमिमं मन्त्रमध्वर्युर्जपतीति विशेषोऽवधेयः । **द्र०** श्रौ०प०नि० पृ० १८९ प्रवर्ग्यसम्भरण— ।

**सावित्रहोम—** (आध्व०) सोमयज्ञे साग्निचित्येषु अग्निचयनप्रकरणे उखासंभरणे अग्नेर्निधानानन्तरं गार्हपत्ये घृतं संस्कृत्य जुहूं स्रुवं च संभृज्य स्रुचि अष्टागृहीतमाज्यं आहवनीये परिस्तरण-समिदाधानपूर्वकं सन्ततमविच्छिन्नधारया स्रुचमूर्ध्वां कुर्वन् अध्वर्युर्जुहोति—'युञ्जानः प्रथमम्, (मा०सं० ११ । १-८) इत्यष्टाभिर्ऋग्भिः । इति सावित्रहोम उच्यते (तु०—मा०सं० ११ ।१ महीधरः, का० श्रौ० १६ । २ ।७ विद्याधरश्च) । ततोऽभ्यादानाद्यनन्तरं प्रातर्दशेष्टिं कृत्वा साग्निचित्यस्य सोमयागस्य ऋत्विगादिवरणमारभ्य दीक्षाणीया कार्येति कात्यायनक्रमः (तु०—का०श्रौ० १६ ।५ ।२७ विद्याधरः) । शाखान्तरे तु०—सावित्रहोमः,

तत उखासंभरणम्, ततो दीक्षणीयादिकं इति यथापाठमेवानुष्ठेयम्, प्रत्यक्षपाठक्रमस्य चोदकात् प्राबल्यात् इति सावित्रहोमस्य दीक्षणीयाया: प्राक्क्रमो निर्णीत:। द्र० मी०को० पृ० ४३ ।१२।

**सावित्रेष्टि** — (अव्य०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र अहीनप्रकरणे अश्वत्रिरात्रे अश्वमेधे द्वादशकपालै: पुरोडाशै: प्रसवितृसवितृदेवत्या आसवितृसवितृदेवत्या:
सत्यप्रसवसवितृदेवत्यास्तिस्र इष्टय: सावित्र्य इष्टय उच्यन्ते। तत्र मध्यमायामिष्टौ राजत: शतमानो दक्षिणा, प्रथमोत्तमयोस्तु सौवर्ण इति विशेषोऽ-वधेय:।

**साह्न**— (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे एकेन अह्ना निष्पाद्यत्वात् ज्योतिष्टोम: साह्न: ज्योतिष्टोम उच्यते। २. एकेनाह्ना निष्पाद्य: सुत्यायाग:, यथा ज्योतिष्टोम:। ज्योतिष्टोमे हि साह्नता, अह्ना समाप्यमानत्वात्। द्र० मी०को० पृ० ४३१३।

**सिक्त**— (सा०) प्रायश्चित्तप्रकरणे गोर्दुह्यमानं क्षीरं भूमौ पतितं सिक्तमुच्यते। यथा अग्निहोत्र प्रायश्चित्तौ सर्वसिक्तप्रायश्चित्त मुच्यते।

**सिद्धघर्ममहावीरग्रहण**— (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये अन्यत्र च प्रवर्ग्यवत्सु घर्मोष्मान्वीक्षणानन्तरं प्रतिप्रस्थाता स्वपिन्वनस्थं छागापयस्तूष्णीं महावीरेऽवनयति। उभयोर्गोच्छागावपयसो: शेषमेकीकृत्याध्वर्युस्तृतीयमवनयति। कंसस्थं गोपय उपयमनेऽवनीयाङ्गारान् प्रत्यूह्य 'द्यावापृथिवीभ्यां त्वा परिगृह्णामि' इति महावीरं शफाभ्यां परिगृह्णाति। तदिदं सिद्धघर्ममहावीरग्रहणमुच्यते। द्र० श्रौ०प०नि० पृ० २२१-२२। घर्मोष्मान्वीक्षण—।

**सिनीवाली**— (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासविकृतौ दर्शे प्रयोक्तव्या या पूर्वाऽमावास्या सा सिनीवाली चतुर्दशी संयोगाच्चन्द्रदर्शने सति दृष्टेन्दुकस्य कला अमावास्या सिनी वालीत्युच्यते। 'सा दृष्टेन्दु: सिनीवाली' इत्यमर:।

**सिन्धुच्छन्दस्**— (सा०) अशीत्यक्षरस्य छन्दस: सिन्धु: समुद्रो वेति संज्ञा भवति (तु०—तां० ब्रा० सा० ५ ।३ ।३)।

**सीता**— (आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयने चितिसाधने लाङ्गलपद्धति: सीता। चितिक्षेत्रमर्धं कृष्टमर्धमकृष्टमिति यथाप्रमाणं द्विगुणं भवति। तत्र कर्षणचिते: पुच्छादारभ्य शिर: पर्यन्तं तिस्र: सीता: कृषेत्। तथा दक्षिणस्या: श्रोणेरारभ्योत्तरांसपर्यन्तं तिस्र: सीता: कृषेत्। तथोत्तरस्या: श्रोणेरारभ्य दक्षिणांसपर्यन्तं तिस्र: सीता: कृषेत्। एवं द्वादश सीता: संपद्यन्ते इति प्रयोगे विशेषोऽवधेय:(तु०—तै० सं० सा० ४ ।२ ।५)।

**सुज्ञानसामन्**— (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ गवामयने 'सोम: पुनान ऊर्म्मिणा' (साम० ५७२) इत्यस्यां योनावुत्पन्नं साम शोभनज्ञानहेतुत्वात् सुज्ञानमुच्यते। तस्य 'उपा' इति निधनं भवति। गवामयने तु उपास्थाने स्वरिति निधनं कर्तव्यम्। एवं सति गवामयने स्वर्णिमधनमन्वहमनुष्ठितं भवतीति। (तु०—तां० ब्रा० सा० ५ ।७ ।७-८)।

**सुत्य–** (सा०) सोमयज्ञेषु एकाहाहीनसत्रेषु १. ग्रहचमससोमयागरूपाणिं प्रधानकर्माणि सुत्यान्युच्यन्ते। तानि च ज्योतिष्टोमातिरात्रेण (चतुष्टोमेन ज्योतिष्टोमेन) एकाहेनातिदिश्यन्ते (तु०—आ०श्रौ० ७।१।३ नारायणः)। दीक्षोपसद्भ्य उत्तराणि सुत्यानि इति तत्रैव देवत्रातः)। तत्रैकाहाः सौमिकचातुर्मास्यादयः आयुरन्ताः आ० श्रौ० नवमेऽध्यायेऽनुक्रान्ताः। द्व्यहप्रभृतयो द्वादशरात्रपरार्ध्या अहीनद्वादशरात्रात् पूर्ववर्त्तिनं एकादशरात्रा अहीना आ०श्रौ० दशमेऽध्याये उक्ताः। सत्राणि त्रयोदशरात्रसत्रादीनि गवामयनसंवत्सरसत्रपर्यन्तानि एकादशेऽध्याये विहितानि। अन्यत्र श्रौतसूत्रेषु एकाहाहीनसत्राणि तत्तत्प्रकरणेषु द्रष्टव्यानि। तेषु अहीनाः सत्राणि च अहर्गणभूताः पृथक् पृथग्दिवसाः सन्तोऽपि प्रत्येकं समुदायरूपमेकं कर्मनामधेयं भजन्ते फलैक्यदर्शनात्। यथा दर्शपूर्णमासयोरुभयोरनुष्ठानमेकं कर्म। तयोः सहानुष्ठानेनैव फलमेकं प्राप्यते तद्वत् अहीनानां सत्राणां चानेकदिनसुत्यसाध्यत्वेऽपि प्रत्येकं कर्म फलं चैकमेव लभ्यते। चतुष्टोमस्य ज्योतिष्टोमातिरात्रस्य विकृतयोऽहीनाः सत्राणि चेत्युक्तत्वात्। ततः सत्राहीनेषु ज्योतिष्टोमस्य केषांचिद्धर्माणामुद्धारः अन्येषां केषाञ्चिदपूर्वाणामुपजनञ्च विधीयते। तत्र सुत्यानि प्रधानकर्माणि मध्ये क्रियन्ते। सत्राहीनानामहर्गणानामनेकसुत्याहः साध्यानां बहूनां सोमयागानां प्रतिदिनं प्रधानकर्मणामाद्यस्यान्त्यस्य च कर्मणो निर्णये सूत्रकार आह — 'प्रातरनुवाकाद्युदवसानीयान्त्यान्त्यानि। पत्नीसंयाजान्तानीतराणि' (आ० श्रौ० ७।१।४-५) अर्थात् प्रतिप्रधानमाद्यन्ताङ्गावृत्तौ प्राप्तायां यावतोऽङ्गकाण्डस्य सकृत्कृतस्यापि प्रधानविशेषसंबन्धे कारणं न गृह्यते तत् सकृदेव कृतं सर्वार्थं भवतीति (पुनः) नावर्तते। यस्य पुनरेवं न संभवति तदावर्तते इति समानो न्यायः। ततः प्रातरानुवाकात् पूर्वाणि यान्यङ्गकर्माणि तानिपूर्वेष्वहः सु सकृत्कृतानि सर्वार्थानि भवेयुः यानि तु पत्नीसंयाजेभ्य ऊर्ध्वमङ्गानि तान्यन्त्येष्वहःसु सकृत्कृतानि सर्वार्थानि स्युरिति नारायणः। तथा च सत्राहीनामन्त्यानां दिवसानां सुत्याङ्गभूतादग्नीष्टोमीयात् पशोरधस्तात् प्रातरनुवाकादारम्भः। अन्तस्तु उदवसानीयेष्टिः। एवं तत्राद्यान्त्यानि सर्वाण्यङ्गकर्माण्यनुष्ठीयन्ते। 'द्रप्सप्राशनसख्यविसर्जने तु अन्त्ये एव' (आ०श्रौ० ७।१।६)। तत्र अन्त्येतराणि अनन्त्यानि सत्राहीनानां प्रथमादीनि प्रातरनुवाकादीनि पत्नीसंयाजान्तानि भवन्ति। तेषु अवभृथादिशिष्टमङ्गजातं हीयते (उत्सृज्यते) इत्यर्थः। तदुक्तम्—'पत्नीसंयाजैश्चारित्वाऽवभृथं ब्रजन्ति' (आ०श्रौ० ६।१३।१) उदवसानीया अन्तो येषां तानि उदवसानीयान्तानि सत्राहीनाहर्गणानामन्त्यान्यहानि। पत्नीसंयाजाः अन्तो येषां तानि पत्नीसंयाजान्तानि अनन्त्यानि प्रथमादीन्यहानि प्रातरनुवाकः आदिर्येषां तानि प्रातरनुवाकादीनि। प्रातरनुवाकादित्वं तु सर्वेषामिति विशेषोऽवधेयः। तु०—देवत्रातः)। २. प्रातरनुवाकाद्युदवसानीयान्तं एकमेवाहः सुत्यशब्देनोच्यते तच्चाग्निष्टोमे पञ्चममहः। (आ०श्रौ० ४।२।१७ नारायणः)। द्र० अहीनाहर्गणसत्राहर्गणानामङ्गप्रधानविधि–।

**सुत्या–** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. यस्मिन् दिने येषु च दिनेषु अभिषवादिना संस्कृतः सोमो हूयते तद्दिनं तानि वा दिनानि

सुत्या: उच्यन्ते (तु०— का० श्रौ० १ ।७ ।६ टि० विद्याधर:) । २. सुत्याशब्द: सोमाभिषवयुक्त: प्रधानसुत्ये (कर्मणि) वर्तते (तु०— आ०श्रौ० १ ।२ ।४;१३ सिद्धान्ती) । ३. यस्यां क्रियायां सोम: सूयतेऽभिषूयते सा सुत्या (तु०—ऐ० ब्रा० सा० १ ।२६) ४. दीक्षोपक्रमदिनमारभ्य पञ्चमे सप्तमेऽष्टमे वा दिने सुत्या भवतीति अग्निष्टोमे सुत्याप्रसङ्गोऽवगन्तव्य: । ५. सुत्या सोमवल्ल्या: दृषादि ग्रावभि: कण्डयित्वा रसनिष्पादनम् । लक्षणया च रसनिष्पादनं, हवनं, भक्षणं इति सर्वं सुत्या इत्युच्यते । अग्निष्टोमादौ एतत् सर्वं यस्मिन् दिने भवति तत् सौत्यं अह: इत्युच्यते । इति विशेषोऽवधेय: । **द्र०** मी०को० पृ० ४३१५ ।

**सुत्यारम्भप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु सुत्यार्थप्रबोधनानन्तरं यजमानो हस्तपादं प्रक्षाल्यान्तरेण चात्वालोत्करौ प्रविश्याग्नीध्रीये उपविशति । ऋत्विजोऽपि हस्तपादप्रक्षालनाचमनं कृत्वा यजमानसमीपे गच्छन्ति । अध्वर्यु: अग्नीषोमीयपशुवत् सवनीयपशुशाखाया: पवित्रादिकुम्भ्यादि प्रोक्षणान्तं कृत्वा आग्नीध्रीयधिष्ण्यस्योत्तरतस्तिष्ठन् पाणिसंमर्शनं कृत्वा तत्रैव तिष्ठन् सम्प्रैषमाह—'उन्नेतर्ग्राब्णो वायव्यानि कलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षं संसादय' अग्नीद् आज्यमधिश्रय, प्रतिप्रस्थात: स्रुच: सम्मृढ्याज्येनोदेहि पृषदाज्याय दध्याहर' इति । सोऽयं सुत्यारम्भप्रैष उच्यते । **द्र०** श्रौ०प०नि० पृ० २५६ ।

**सुत्यार्थप्रबोधन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतचैकाहाहीनसत्रेषु अभ्रणसादनानन्तरं यजमान एतां रात्रिमाग्नीध्रीये संविशति । रक्षिणो हविर्धाने राजानं गोपायन्ति । ततस्तस्या रात्र्यास्तृतीयभागेऽवशिष्टे सति यजमानस्तत्पुरुषाश्च प्रबुध्य अध्वर्य्वादीन् सर्वान् ऋत्विजश्चमसाध्वर्यून् पत्नीं परिकर्मिणोऽपि बोधयन्तीति । न महारात्रे स्नान्ति । तदेतत्सुत्यार्थप्रबोधनमुच्यते । **द्र०** श्रौ०प०नि० पृ० २५६ । अम्भ्रणसादन— **द्र०** ।

**सुत्यासंकल्प—** (याज०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु सौत्येध्माबर्हि: संभरणानन्तरं सुब्रह्मण्यायामाहूतायां यजमान: पशुदेवतामग्निं वनस्पत्यादि च सङ्कल्पयति—तद्यथा या पुरस्तादि जपं प्रकृतिवत् कृत्वा सवनीयेन पशुना यक्ष्ये । (तत्र) पाशुकं हवि: अग्नि: प्रधानदेवता । वनस्पति: पृषदाज्यस्येत्याद्युक्त्वा, 'इन्द्रो वसुमान् प्रात: सवनस्य देवता । इन्द्रो रुद्रवान् माध्यन्दिनस्य सवनस्य देवता । इन्द्र आदित्यवान् ऋभुमान् वाजवान् बृहस्पतिमान् विश्वदेव्यावान् तृतीयस्य सवनस्य देवता । इत्यादि इत्ययं सुत्यासंकल्प उच्यते । **द्र०** श्रौ०प० नि० पृ० २५५ । **द्र०** सौत्येध्माबर्हि: संभरण— ।

**सुत्यासामग्रीसंपादनप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अथ (वसतीवरीस्थापनानन्तरं) संप्रेष्यति—'या सम्राड्धुक् तस्यै दधिघर्माय दधि कुरुत, या यजमानस्य तस्या आमिक्षायै, या पत्न्यै तस्या आशिरे, पयश्च सक्तूश्च कुरुत, शृतातङ्क्यमादित्यग्रहाय दधि कुरुत, पुरोडाशीयानि पिष्टानि कुरुत, धाना हारियोजनी: कुरुत, चतुरोऽम्भ्रणाँ स्त्रीनुदञ्चनानयुज एकधनान् त्र्यवमानेकादश परमान् द्वे रशने, द्वे वपाश्रपण्यौ, एकतयमि-

ध्माबर्हिः, औदुम्बरान् महापरिधीन् कुरुत। सुब्रह्मण्यामाह्वयतु इति। सोऽयं सुत्या सामग्रीसंपादनप्रैष उच्यते द्र० श्रौ०प०नि० पृ० २५४।

**सुपर्णचित्**— (अव्य०, सा०) सोमयज्ञे, साग्निचित्येषु अग्निचयनप्रकरणे 'सुपर्णोऽसि' इत्यादिमन्त्रैर्विहिता चितिः स्थण्डिलं सुपर्णचिदुच्यते।

**सुब्रह्मण्य**—(सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन- सत्रेषु सुब्रह्मण्याह्वानकर्ता वृद्धतमः पुरुषः षोडशर्त्विजां मध्ये उद्गातृवर्गीयो दक्षिणायाः पादभागी सुब्रह्मण्य ऋत्विग् भवति। सुब्रह्मण्यमुन्नेता दीक्षयति। द्र० मी०को० पृ० ४३१७।

**सुब्रह्मण्यदक्षिणा**— (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूत... चैकाहाहीनसत्रेषु ऋषभः सुब्रह्मण्यस्य विशेष दक्षिणा भवति।

**सुब्रह्मण्या**— (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु १. इन्द्राऽऽगच्छ हरिव आगच्छ इत्यादि निगदः सुब्रह्मण्या उच्यते। तां च सोमक्रयणादूर्ध्वं सुब्रह्मण्य ऋत्विक् तत्तत् प्रयोगेषु आह्वयेत् सुब्रह्मण्यानिगदं पठेत्। २. सुत्योपसदामेव गुणभूता सुब्रह्मण्या भवति। (तु०, आ० श्रौ० १२।४।२१ सिद्धान्ती)। प्रकृतौ (अग्निष्टोमे) सुब्रह्मण्या वसतीवरिनिधानान्ते आहूयते। द्र० सुब्रह्मण्यानिगद—, आग्नेयसुब्रह्मण्या—, ऐन्द्रसुब्रह्मण्या—द्र०।

**सुब्रह्मण्याजप**— (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु...सा न इषमूर्जं धुक्ष्व तेज इन्द्रियं ब्रह्म वर्चसमन्नाद्यम्' इति सुब्रह्मण्याया जप उच्यते। (तु०— आप० श्रौ० १०।२५।५), द्र० सुब्रह्मण्यानिगद—।

**सुब्रह्मण्यानिगद**— (औ०) सोमयज्ञेषु प्रकृतिभूत...चैकाहाहीनसत्रेषु प्रयुज्यमानः 'इन्द्रागच्छ हरिव आगच्छ मेधातिथिर्मेष वृषणस्यश्वं मेने गौरावस्कन्दिन्नहल्यायै जारकौशिक ब्राह्मण गौतम ब्रुवाण त्र्यहे सुत्यामागच्छ मघवन् देवा ब्राह्मणा आगच्छत' (श० ब्रा० ३।३।४।१-८)। इति सुब्रह्मण्यानिगद उच्यते। स च सुब्रह्मण्यसंज्ञकेन ऋत्विजा पठनीयः। निगदोऽयं द्विविधः एकः सुत्याकालिकः, अपर उपसत्कालिकः। उपसदो ज्योतिष्टोमस्य द्वितीयतृतीय-चतुर्थदिवसेषु अनुष्ठीयन्ते तत्र प्रथमोपसद्दिने 'त्र्यहे सुत्यामागच्छ' इति पठ्यते। द्वितीयोपसद्दिने 'द्व्यहे सुत्यामागच्छ' इति पठ्यते। तृतीयोपसद्दिने 'श्वः सुत्यामागच्छ' इति पठ्यते। सुत्यादिने तु 'अद्य सुत्यामागच्छ' इति पठ्यते। केषांचिन्मते 'चतुरहे सुत्यामागच्छ' इति प्रयोगः, इति विशेषोऽनुसन्धेयः। (तु०— का०श्रौ० १।७।६ विद्याधरः)। द्र० सुब्रह्मण्या—।

**सुब्रह्मण्यासमाप्तिकाल**— (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दक्षिणाः अनु सुब्रह्मण्या सन्तिष्ठते। (समाप्यते) इति सुब्रह्मण्यायाः समाप्तिकाले उच्यते। (तु०—ऐ० ब्रा० ६।३)।

**सुब्रह्मण्याह्वान**— (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. सुब्रह्मण्याख्येन ऋत्विजा वेदेर्बहिर्भागे उत्करदेशे तिष्ठता सुब्रह्मण्यानिगदेन

यदिन्द्राद्या- वाहनं आह्वानं क्रियते तत्सुब्रह्मण्याह्वानमुच्यते। २. द्वादशाहे उपसत्काले सुत्याकाले च यत् सुब्रह्मण्याह्वानं क्रियते। तत्र उपसत्काले या सुब्रह्मण्या सा कर्मण आदौ तन्त्रेण सकृद् भवति। या तु सुत्याकाले सा प्रतिसुत्याकालमावर्तनीया भवतीति विवेकोऽवगन्तव्यः।

**सुब्रह्मण्याह्वान—** सोमयज्ञेषु प्रकृतिभूत.........तद्विकृतिषु चैकाहाहीनसत्रेषु। अध्वर्युः सुब्रह्मण्यो३म् सुब्रह्मण्यो३म् सुब्रह्मण्यो३मिति त्रिरुक्त्वा इन्दागच्छ हरिव आगच्छ मेधातिथिर्मेष वृषणश्वस्यमेने। गौरावस्कन्दिन्नहिल्यायै जार कौशिक ब्राह्मण गौतम ब्रुवाण। त्र्यहे सुत्यामागच्छ मघवन् देवा ब्राह्मणा आगच्छताऽऽगच्छताऽऽच्छत' इति सकृन्निगदं ब्रूयात् (आह्वयेत्)। तत्र यावत्सङ्ख्यकेषु अहःसु व्यतीतेषु सुत्यादिनं भवति तावन्ति संख्याय ब्रूयात्। यथा त्रिषु दिनेषु व्यतीतेषु चतुर्थे दिवसे यदि सुत्या, तदा चतुरहे सुत्यामागच्छेत्यादि। इति विशेषोऽनुसन्धातव्यः। **द्र०** १. सुब्रह्मणानिगद— (तु०—का० श्रौ० ७।९।१७ विद्याधरः)। सुब्रह्मण्याऽऽह्वानस्य सुत्यकालीनस्य अहर्गणे प्रत्यहमावृत्तिः। सुब्रह्मण्याऽह्वानं उपसत्कालीनं तन्त्रं (सकृत्) अहर्गणे। इति च विशेषोऽवधातव्यः **द्र०** मी०को० पृ० ४३१८।

**सुमन्द्र—** (सा०) १. मन्द्रस्य (स्वरस्य) आद्यो द्वितीयो वा यमः सुमन्द्र उच्यते। २. मन्द्रस्य स्वरस्य सप्तमयमाऽऽद्यमयोराख्या (तु०—आ० श्रौ० २।१५।११ षड्गुरुशिष्यः) **द्र०** यम—।

**सुरा—** (सा०) १. सुरा वै मलमन्नानां पायप्मा च मलमुच्यते। तस्माद् ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् मी०को० पृ० ४३१९। २. सुरया क्षत्रियस्यैव मदयोगात् क्षत्ररूपत्वं व्रीह्याद्यङ्कुरजन्यत्वादन्नरसत्वम्। (ऐ० ब्रा० सा० ८।८)। सा गौडी षष्ठी माध्वी चेति त्रिविधा। तस्या ब्राह्मणानां निषेधः। सुरासंधानं सौत्रामण्यां राजसूये वाजपेये च दृष्टम् **द्र०** सुराद्रव्य—, सुरानिष्पादनप्रकार—सुरापाननिषेध—।

**सुराग्रह—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुराग्रहार्थं क्रमेण पलाशन्यग्रोधाश्वत्थकाष्ठनिर्मितान्युलूखलाकाराण्यूर्ध्वमुखानि प्रादेशमात्राणि त्रीणि पात्राणि भवन्ति। एतान्येव सुरासहितानि सुराग्रहा उच्यन्ते। **द्र०** सौत्रामणीपदार्थ— श्रौ०प०नि० पृ० १५२॥

**सुराग्रहप्रचारदक्षिणा—** (याज०, आध्व०) इष्टिनिरूढपशुविकृतौ उपस्पृश्य हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सौत्रामण्यङ्गपैतृकहोमानन्तरं अप उस्पृश्य (ऋत्विजः) यज्ञोपवीतानि कुर्वते। अन्वाहार्यमासाद्य चत्वारिंशद् गा दक्षिणात्वेन ददाति शिशुसहितां वडवां च। चयनपक्षे धेन्वृषभाऽनडुहामन्यतमो वरः। एकविंशति शतसहस्रान्विष्टकानामन्यतमा दक्षिणा। एवं धेन्वादि वरः एकविंशतिः गवादीनां विकल्पः। षष्ठौही त्वन्तर्वत्नी वाससा समुच्चीयते तथा च 'ऋत्विजः अयं व ओदनः इदं वश्चत्वारिंशद् गोनिष्क्रयद्रव्यं सशिशुबडवानिष्क्रयद्रव्यं च यथाभागं प्रतिगृह्णीध्वम्।' अध्वर्यो इदन्ते एकविंशतिगोनिष्क्रियद्रव्यं पष्ठौहीहिरण्यनिष्क्रयद्रव्यं वासोनिष्क्रयद्रव्यं च यथाभागं प्रतिगृह्णीस्व। अथवा अध्वर्यो इमानि त एकविंशति गोपष्ठौही हिरण्यवासांसि प्रतिगृह्णीष्व' इति यजमानः प्रतिग्राहयति। ते

पूर्वोक्तप्रकारेण प्रतिगृह्णीयुः। इति सुराग्रहप्रचारदक्षिणा (सौत्रामणी दक्षिणा) उच्यते। द्र० श्रौ०प०नि० पृ० १६२, द्र०। सुराग्रहपैतृकहोम—।

**सुराग्रहभक्षविधि—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुराग्रहहोमानुमन्त्रणानन्तरं होतुरनुवषट्कारेऽध्वर्युप्रतिप्रस्थातारौ उभौ तूष्णीं जुहुतः। यजमानः अग्नय इदम्। 'अग्नेरहं देवयज्यया युष्मान् यज्ञेन प्रतिष्ठां गमेयम्' इत्यनुमन्त्रयते। प्रतिप्रस्थातुर्दक्षिणखरस्याग्नौ वा होमः। तत्पक्षे शालामुखीयादग्नेरिध्मं प्रणीयोत्तरवेदिवत् संभारनिधानम्, अध्वराहुत्यादि परिस्तरणपरिधीध्मादि सम्मार्गान्तं तूष्णीमध्वर्युपुरुषाः कुर्वन्तीति विशेषः। प्रतिप्रस्थाताऽऽश्विनं संस्रावं सारस्वतेऽवनयति सारस्वतमैन्द्रे। ततः प्रत्याक्रम्याश्विनं पयोग्रहमध्वर्युर्भक्षयति- 'यमश्विना नमुचेरा सुरादधि सरस्वत्यसुनोदिन्द्रियाय। इमं तं शुक्रं मधुमन्तमिन्दुं सोमं राजानमिह भक्षयामि' इति मन्त्रेण। प्रतिप्रस्थाताऽऽग्नीध्रश्च सारस्वतं भक्षयतः- 'यदत्र रिप्तं रसिनः सुतस्य यदिन्द्रो अपिवच्छचीभिः अह तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि' इति मन्त्रेण। 'इदं हविः प्रजननं मे अस्तु दशवीरं सर्वगणं स्वस्तये। आत्मसनि पशुसनि अभयसनि लोकसनि। आग्निः प्रजां बहुलां मे करोत्वन्नं पयोरेतो अस्मासु धत्त। रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहा।' आभ्यामृग्भ्यामैन्द्रं ब्रह्मयजमानौ भक्षयतः। प्रतिप्रस्थाता ऐन्द्रं सुराग्रहं होत्रे हरति। पयोग्रहत्वात् होता भक्षयति। प्राणभक्षं वा। यदि होता न भक्षयति तदा खरे उपविष्टः कश्चिद् ब्राह्मणो भक्षयति—'नाना हि वाम्' इत्यृचा, 'यदत्र शिष्टम्' इत्यृचा च। यदि ब्राह्मणं न विन्देत् तर्हि आहवनीयस्य दक्षिणतो भस्मनिर्मित खरस्थवल्मीकवपायामवनयति एताभ्यामेव मन्त्राभ्याम्। सोऽयं सुराग्रहभक्षविधिरुच्यते। द्र० १. उदवसानसनि—, सुराधारोपस्थान—, श्रौ०प०नि० पृ० १६०।

**सुराग्रहयाज्याप्रैषप्रैष—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुराग्रहानुवाक्याप्रैषानन्तरमत्याक्रामतोऽध्वर्युप्रतिप्रस्थातौ। अध्वर्युराश्रावयति। आग्नीध्रेण प्रत्याश्राविते 'अश्विभ्यां सरस्वत्या इन्द्राय सुत्राम्णे सुरासोमान् प्रस्थितान् प्रेष्य' इति अयं सुराग्रहयाज्याप्रैष प्रैष उच्यते। द्र० श्रौ०प०नि० पृ० १५९।

**सुराग्रहहोममन्त्र—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुराग्रहयाज्या प्रैषप्रैषानन्तरं होतृवषट्कारसमकालं प्रतिप्रस्थाता सुराग्रहान्, अध्वर्युः पयोग्रहान् सहोभौ (वक्ष्यमाणमन्त्राभ्यां) स्वाहाकारान्ताभ्यां जुहुतः 'सुरावन्तं बर्हिषदं सुवीरं यज्ञं हिन्वन्ति महिषा नामोभिः। दधानाः सोमं दिवि देवतासु मदेमेन्द्रं यजमानाः स्वर्काः स्वाहा' इत्यध्वर्योः। 'यस्ते रसः सम्भृत ओषधीषु सोमस्य शुष्मः सुरया सुतस्य। तेन जिन्व यजमानं मदेन सरस्वत्यश्विना विन्द्रमग्निं स्वाहा (इति प्रतिप्रस्थातुः)॥ ताविभौ द्वौ सुराग्रहहोममन्त्रौ उच्येते। अश्विभ्यां सरस्वत्यै इन्द्राय सुत्राम्णे इदं न ममेति यजमानस्य त्यागः। अत्र हुतानुमन्त्रणं नास्ति सोमधर्मत्वात्। अत एव च चरकोक्तयोः 'अहाव्यग्ने हविः' 'यस्मिन्नश्वास०' इत्यनयोर्निवृत्तिरिति विशेषोऽव- धेयः। द्र० श्रौ०प०नि० १५९-६०।

**सुराग्रहहोमानुमन्त्रण—** (आध्व०) इष्टिनिरूढ-विकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे हुतानुमन्त्रणकरणपक्षे तु आपस्तम्बसूत्रोक्तम् अनुमन्त्रणं सान्नाय्यवद् ग्राह्यम्। तद्यथा—'अहाव्यग्ने हविरास्येते स्रुचीव घृतं चमू इव सोमः। वाजसनीं रयिमस्मे सुवीरं प्रशस्तं धेहि यशसं बृहन्तम्॥ १॥ 'यस्मिन्नश्वास ऋषभास उक्षणो वशा मेषा अवसृष्टास आहुताः। कीलालपे सोमपृष्ठाय वेधसे हृदामतिं जनय चारुमग्नये'॥ २॥ इति मन्त्राभ्यां सुराग्रहान् हूयमानान्वाऽनुमन्त्रयते यजमानः। तदिदं मन्त्रद्वयं सुराग्रहहोमानुमन्त्रणमुच्यते। द्र० श्रौ०प० नि० पृ० १६०।

**सुराग्रहानुवाक्याप्रैष—** (आध्व०) इष्टिनिरूढ-विकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अध्वर्युः मैत्रावरुणं सम्प्रेष्यति-'अश्विभ्यां सरस्वत्या इन्द्राय सुरासोमानामनुब्रू३हि'। अयं सुराग्रहानुवाक्या प्रैष उच्यते। तत्र प्रैषात् पूर्वं सौत्रामणीपशु श्रपणकालेऽप्रेषित एवाऽग्नीध्रः त्रीन्पुरोडाशान्निर्वपति—इन्द्रायैकादशकपालम्, सवित्रे द्वादशकपालम्, वरुणाय दशकपालम्। सर्वाणि कपालानि त्रयस्त्रिंशद् भवन्ति। अत्रैव वारुणमेककपालं निर्वपति। आमिक्षाश्रपणं साग्नौ आप्यनिनयनान्तं करोति। पश्वङ्गश्रपणकाले ग्रहैः प्रचरन्ति। अध्वर्युः पयोग्रहान् वंशरज्वादिना युगपद्धोमार्थमेकत्र बध्वा आदत्ते। प्रतिप्रस्थाता तथैवेकीकृत्य सुराग्रहानादत्ते इति विशेषोऽवगन्तव्यः। द्र० सौत्रामणीपशुश्रपणप्रैष—, श्रौ०प०नि० पृ० १५९।

**सुराग्रहोपस्थान —** (आध्व०) इष्टिनिरूढ-विकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुरास्थानीयपयोग्रहासादनानन्तरं सन्नान् ग्रहान् अध्वर्युः प्रतिप्रस्थाता यजमानश्चोपतिष्ठन्ते—'ओ जोऽसीत्यादि सुरावन्तमित्यन्तैर्वाक्यमन्त्रैः। तेषु तु वसुवाक्यसमूहेषु प्रथमवाक्यसमूहान्तपठितस्य 'ऋतेन सत्यमिन्द्रियमित्यादि वाक्यत्रयस्यानुषङ्गः क्रियते। तथाहि—'ओजोऽसि ओजो मयि धेहि। मन्युरसि मन्युं मयि धेहि। महोऽसि महो मयि धेहि। सहोऽसि सहो मयि देहि। या व्याघ्रं विषूचिका। उभौ वृकं च रक्षति। श्येनं पतत्रिणं सिंहं सेमं पात्वहंसः। संपृचः स्थ सं मा भद्रेण पृंक्त। वि पृचः स्थ वि मा पाप्मना पृंक्त। सोमो राजाऽमृतं सुतः। ऋजीषेणाजहान्मृत्युम्। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥१॥ सोममद्भ्यो व्यपिबत्। छन्दसा हंसः शुचिवत्। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥ २॥ अद्भ्यः क्षीरं व्यपिबत्। क्रुङ्ङागिरसो धिया। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥ ३॥ अन्नात् परिस्रुतो रसम्। ब्रह्मणा व्यपिबत् क्षत्रम्। ऋतेन सत्यमिन्द्रियम् विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥ ४॥ रेतो मूत्रं विजहाति। योनिं प्रविशदिन्द्रियम्। गर्भो जरायुणा वृतः। उल्बं जहाति जन्मना। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥ ५॥ वेदेन रूपे व्याकरोत्॥ सतासती प्रजापतिः। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु॥ ६॥ सोमेन सोमौ व्यपिबत्। सुतासुतौ प्रजापतिः। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रि-

यम्। इदं पयोऽमृतं मधु ॥ ८ ॥ दृष्ट्वा परिस्रुतो रसम्। शुक्रेण शुक्रं व्यपिबत्। पयः सोमं प्रजापतिः। ऋतेन सत्यमिन्द्रियम्। विपानं शुक्रमन्धसः। इन्द्रस्येन्द्रियम्। इदं पयोऽमृतं मधु ॥ ९ ॥ तदेतत् सुराग्रहोपस्थानमुच्यते। द्र० सुरास्थानीयपयोग्रहासादन श्रौ०प०नि० पृ० १५७ द्र०।

**सुराद्रव्य—** इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिल सौत्रामणी प्रकरणे अन्यत्र राजसूये वाजपेये च सुरानिर्मितौ 'सर्ज्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा। चतुर्जातसंयुक्तं पिप्पली गज पिप्पली ॥ १ ॥ वंशोऽवका बृहच्छत्रा चित्रकं चेन्द्रवारुणी। अश्वगन्धा समुत्पाद्य मूलान्येतानि निर्दिशेत् ॥ २ ॥ धान्याकं च यवानीं च जीरकं कृष्णजीरकम्। द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः ॥ ३ ॥ इतीमानि सुराद्रव्याण्युच्यन्ते। (तु०—का० श्रौ० १४। १।१५ विद्याधरः टि०)।

**सुराधारोपस्थान—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां कौकिल सौत्रामणी प्रकरणे सुराग्रहविधौ ग्रहपात्राणां सुरानिनर्देन पूरणं श्येनपत्रावगूहनञ्च। वंशपादानुच्छ्रित्य तयोरुपरि दक्षिणाग्रं दीर्घवंशं निधाय वंशशिक्यं च बध्वा शिक्ये शतातृष्णं कुंभं निधाय दक्षिणाग्रगोवालपवित्रान्तर्हितं कृत्वा पवित्रे शतमानं हिरण्यं निधाय तत्रावशिष्टं सुरास्थानीयं पयोऽवनयति। (सुराग्रहमक्षविधि यत् पतितं द्रोणे (कलशे) धाराशेषं तद्दक्षिणामुखः प्राचीनावीती तिष्ठन् 'सोमप्रतीकाः पितरस्तृण्णुत' इति मन्त्रेण शतातृष्णकुम्भतो धारा अग्नौ पातयति। तासु पतितासुअध्वर्युर्ब्रह्मा होता यजमानश्च प्राचीनावीतिनो दक्षिणामुखा उपतिष्ठन्ते—'पवमानः सुवर्जनः पवित्रेण विचर्षणिः। सा पोता स पुनातु मा ॥ १ ॥ पुनन्तु मा देवजनाः पुनन्तु मनवो धिताः। पुनन्तु विश्व आयुवः ॥ २ ॥ जातवेदः पवित्रवत् पवित्रेण पुनीहि मा। शुक्रेण देव दीद्यत् अग्ने क्रत्वा क्रतूंरनु ॥ ३ ॥ यत्ते पवित्रमर्चिषि अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे ॥ ४ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे ॥ ५ ॥ वैश्वदेवी पुनती देव्यागात् यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु वयं स्याम पतयो रयीणाम् ॥ ६ ॥ वैश्वानरो रश्मिभिर्मा पुनातु। वातः प्राणेनेषिरो मयो भूः द्यावापृथिवीः पयसा पयोभिः ऋतावरी यज्ञिये मा पुनीताम् ॥ ७ ॥ बृहद्भिः सवितस्तृ(स्त्रि)भिर्वर्षिष्ठैर्देवमन्मभिः। अग्ने दक्षैः पुनीहि मा ॥ ९ ॥ इत्येतैरष्टाभिर्मन्त्रैः। तदेतत् सुराधारोपस्थानमुच्यते। द्र० श्रौ० प० नि० पृ० १६१।

**सुरानिष्पादनप्रकार —** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे वाजपेये राजसूये सुरासन्धाने च प्रथमं शष्पाणि पिनष्टि, ततस्तोक्मानि, ततो लाजाः, ततः सर्ज्जत्वगादीनि। एतानि पिष्ट्वा पृथक् पृथक् पात्रेषु स्थापयति। ततो व्रीहितण्डुलानां श्यामाकतण्डुलानां च दौ ओदनौ दक्षिणाग्नौ बहूदके श्रपयति। शृतौ तावोदनौ उद्वावस्य पात्रद्वये पृथक् चर्वोराचामं निषिञ्चति। ततः शष्पादित्रयचूर्णस्य तृतीयं तृतीयमंशमादाय तस्य तस्य तृतीयांशस्यार्धमर्धं द्वयोराचामयोः प्रक्षिपेत्। (तयोश्चूर्णसंसृष्टयोर्मासरमिति संज्ञा)। ततः शष्पादि चूर्णत्रयस्य एकैकं भागमादाय अर्धमर्धमोदनयोः प्रक्षिप्य मासरसर्ज्जत्वगादिचूर्णमवशिष्टं सर्वमादाय

तस्यार्धमर्धमोदनद्वये प्रक्षिपेत्। तत एकस्मिन् महति पात्रे ओदनं प्रक्षिप्य मासरसंज्ञकौ आचामौ तस्यां कुम्भ्यां प्रक्षिपेत्। ततो नैर्ऋत्यकोणे शालायां गर्तं कृत्वा तत्र कुम्भीं निधाय गर्तं मृदाप्रपूर्य दिन त्रयं तिष्ठेत्। सेऽयं सुरानिष्पादनप्रकार उच्यते। द्र० सुराद्रव्य—। का० श्रौ० १४।१।१७ टि० विद्याधरः। राजसूये 'कुवल-कर्कन्धु-वदरचूर्णान्यावति' इति विशेषः।

**सुरापयसोरुत्पवन—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अध्वर्युः आज्यमुत्पूय स्वीयेनोदग्देशेनाजाऽविलोमनिर्मितेन दशापवित्रेण द्रोणस्थं पय उत्पुनाति—'पुनाति ते परिस्रुतम्' इत्यृचा। प्रतिप्रस्थाता सुरास्थानीयं कुम्भस्थं पयः स्वीयेनोदग्देशेन गवाश्वलोमनिर्मितेन दशापवित्रेणान्तर्हिते स्वीयद्रोणकलशेऽवनायोत्पुनाति—'ब्रह्मक्षत्रं पवते तेजः' इत्यादिना 'रसेनान्नं यजमानाय धेहीत्यन्तेन यजुषा। तदिदं सुरापयसोरुत्पवनमुच्यते। तत्र उत्पवनात् पूर्वं प्रातर्दोहापकर्षानन्तरम् आग्नेयीं पश्विष्टिं समाप्य संमर्शनादि करोति। आज्यं दधि च निरूप्यापूर्वाज्यं च निर्वपति। आज्यमधिश्रित्य पर्यग्निं करोति। चयनाभावे इदानीं वेदिकारणम् अग्नीदितस्त्रिर्हरेत्यन्तम् (चयनपक्षे उत्तर परिग्राहादि) करोति। प्रतिप्रस्थाता स्यमग्निहोत्रहवणीं जुहूद्वयमित्यादिपात्राण्यासाद्य 'कर्मणेवाम्' इत्यादि करोति। ऊर्ध्वमुखानां ग्रहाणां जुहूवत्सम्मार्गः। आज्यं निरूप्य 'महीनां पयोऽसि' इति पत्नीमाज्यमवेक्षयति। अध्वर्युर्द्रोणकलशे प्रभूतं पयो निर्वपति तूष्णीम्। प्रतिप्रस्थाता सुरास्थानीयं पयः प्राकृतवेद्यां निदधाति। अध्वर्युः पर्यग्निकरणादि करोति। 'प्रोक्षणीरासादयेध्माबर्हिरूपसादय, स्रुवं च स्रुचश्च समृद्धितूष्णीं पृषदाज्यग्रहणीं पत्नीं सन्नह्याज्येन दध्ना चोदेहि प्रतिप्रस्थातः सुरासोमस्य विद्धि' इति प्रेष्यति। ततः प्रतिप्रस्थाता सुराकुम्भं दशापवित्रं श्येनपत्रं ग्रहान् द्रोणकलशं नकलवदरकर्कन्धूनां यवगोधूमोपवाकानां च सक्तून् सिंहव्याघ्रलोमानि शतातृण्णां स्थालीं चादाय पूर्वया द्वारा निष्क्रम्यान्तर्वेदि आसादयतीति विशेषोऽवगन्तव्यः। द्र० अपकर्ष—, श्रौ०प०नि० पृ० १५५।

**सुरापान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये 'स्वादिष्ठया मदिष्ठया'... (ऋ० ९।१।१) इत्यनयर्चा क्षत्रियस्य राज्ञो हस्ते सुरायुक्तकांस्यपात्रमाधाय 'नाना हि वां देवहितं...(ऐ० ब्रा० ८।८) इत्यनेन मन्त्रेण शान्तिं वाचयित्वा राजा कांस्यपात्रगतां सुरां पीत्वा पीतशेषां मित्राय प्रयच्छतीति। इदं राजसूये सुरापानमुच्यते।

**सुरापाननिषेध—** द्र० सुरा—।

**सुरास्थानीयपयोग्रहासादन—** (आध्व०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणी प्रकरणे पयोग्रहासादनानन्तर मध्वर्युः सन्तान् ग्रहानुपतिष्ठते—'तेजोऽसि तेजो मयि धेहि' इति मन्त्रेण प्रथमम्, 'वीर्यमसि वीर्यं मयि धेहि' इति मन्त्रेण द्वितीयम्, 'बलमसि बलं मयि धेहि' इति मन्त्रेण तृतीयम्। अथाग्नीध्राः द्रोणकलशस्थं सुरापयः पात्रान्तरे कृत्वा द्रोणकलशो परिधृतगोवालपवित्रमवनीय धारां करोति। प्रतिप्रस्थाता धारायां गृह्णाति—'नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमन् सुरा त्वमसि शुष्मिणी सोम एष मा मा हिंसीः स्वां योनिमाविशन्। उपयामगृहीतोऽस्याश्विनं तेजोऽश्विभ्यां त्वा जुष्टं गृह्णामि' इति।

आभ्यामृग्यनुर्भ्यां पर्णमये पात्रे गृहीत्वा बर्हिषी अन्तर्धाय नकलसक्तुभिः सिंहलोमभिश्च संश्रित्य बर्हिषी दूरीकृत्य स्वीयेन श्येनपत्रेण परिमृज्य पयोग्रहाणां पुरत उत्तरतो वा प्रागपवर्गमुदगपवर्गं वा सादयति—'एष ते योनिर्मोदाय त्विति मन्त्रेण। नैयग्रोधे पात्रे द्वितीयं गृह्णाति—'नाना हि वाम्' इत्यृचं पठित्वा 'उपयामगृहीतोऽसि सारस्वतं वीर्यं सरस्वत्यै त्वा जुष्टं गृह्णामि' इति यजुषा। ततो बर्हिषी अन्तर्धाय बदरसक्तुभिः व्याघ्रलोमभिश्च संश्रित्य अपोद्धृत्य बर्हिषी स्वीयश्येन पात्रेण परिमृज्य 'एष ते योनिरानन्दाय त्वा' इति मन्त्रेण। आश्वत्थे पात्रे तृतीयं गृह्णाति—'नाना हि वाम्' इत्यृचा, 'उपयामगृहीतोऽस्यैन्द्रं बलमिन्द्राय त्वा सुत्राम्णे जुष्टं गृह्णामि' इति यजुषा च। बर्हिषी अन्तर्धाय कर्कन्धुसक्तुभिः वृकलोमभिश्च संश्रित्य अपोद्धृत्य बर्हिषी श्येनपत्रेण परिमृज्य 'एष ते योनिर्महसे त्वा' इति मन्त्रेण सादयति। सिंहादिलोमाभावे सिंह-व्याघ्र-वृकान् ध्यायति। एतत्कर्म सुरास्थानीयपयोग्रहासादनमुच्यते। द्र० पयोग्रहसादन—, श्रौ०प०नि० पृ० १५६-५७

**सूक्त—** (सा०) इष्टिपशुसोमयज्ञेषु हौत्रे औद्गात्रे च कर्मणि सूक्तोक्तौ १. तृचावमं सूक्तमुच्यते। तदुक्तं बृहद्देवतायाम्—तृचावमं याज्ञिकाः।(तु०—बृ० दे० ८।९९)। द्र० महासूक्त—। २. सामवेदे चतुर्ऋच प्रभृतीनि सूक्तानि (तु०—ला०श्रौ० ६।३।१ अग्निस्वामी)। ३. निविद्धानीयसूक्तान्यपि सूक्तशब्देनोच्यन्ते तेषां केवलेन सूक्तपदेनापि प्रयोगदर्शनात्। द्र० निविद्धानसूक्त—।

**सूक्तप्रतिपद्—** द्र० निविद्धानीयसूक्त—।

**सूक्तमुखीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूयगतदशपेयउशनसस्तोमगोस्तोमभूमिस्तोमवनस्पतिस्तोमवृहस्पतिसवभूसद्यस्क्रियाअनुक्रियापरिक्रियाएकत्रिकत्र्येकनामधेयानामेकाहानां माध्यन्दिनसवने मरुत्वतीयनिष्केवल्यशस्त्रयोः वैश्वदेवनिविद्धानसूक्तयोर्मुखे अष्टौ भवाया ऋचो विधीयन्ते ताः सूक्तमुखीया। इत्युच्यन्ते। सूक्तमुखीये सूक्तमुखीयाः वा इत्युक्ते एतदेव सर्वत्र सूक्तमुखीयानां शंसनस्थानं प्रतीयादिति विशेषोऽवगन्तव्यः। तु०—आ० श्रौ० ९।३।२३ नारायणः)। तत्र यथाक्रमं राजसूयगतदशपेयस्य माध्यन्दिनसवने निष्केवल्यमरुत्वतीययोर्निविद्धानयोराद्ये 'नवग्वासः सुतसोमासः' (ऋ० ५।२९।१२); 'सखा ह यत्र सखिभिर्नवग्वैः' (ऋ० ३।३९।५) इति द्वे अधिके सूक्तमुखीये भवतः। उशनसस्तोमस्य मा० सवने निविद्धानयोराद्ये 'उशना यत्सहस्यै ३ रयातम्' (ऋ० ५।२९।९) 'त्वमपो यदवे' (ऋ० ५।३१।८)। इति द्वे अधिके सूक्तमुखीये। गोस्तस्तोमस्य मा० सवने निविद्धानयोराद्ये 'न ता आवरिणुककाटः' (ऋ० ६।२८।४); 'न ता न शान्ति न दमाति' (ऋ० ६।२८।३)। इति द्वे अधिके सूक्तमुखीये। भूमिस्तोमस्य मा० सवने निविद्धानयोराद्ये 'बलित्था पर्वतानाम्' (ऋ० ५।८४।१); दृल्हाचिद् या' (ऋ० ५।८४।३) इति द्वे अधिके सूक्तमुखीये। (तु०— वनस्पतिसवस्य देवेभ्यो वनस्पते हवींषि (मै० सं० ४।११।३); 'वनस्पते रशनया नियूय' (ऋ० १०।७०।१०) इति द्वे अधिके सूक्तमुखीये आ०श्रौ० ९।५।२)। निविद्धानयोराद्ये बृहस्पतिसवस्य मा० स० 'यस्तम्भ' (ऋ० ४।५०।१)

'धुनेतयः' (ऋ० ४।५०।२) इति द्वे अधिके सूक्तमुखीये। आ०श्रौ० ९।५५)। भुवः मा० निविद्धानयोराद्ये त्वं भुवः प्रतिमानम्' (ऋ० १।५२।१३); 'भुवस्त्वमिन्द्र' (ऋ० १०।५०।५) इति द्वे अधिके सूक्तमुखीये। (आ०श्रौ० ९।५।१६)। सद्यस्क्रियायाः एकाहस्य मा० सवने निवद्धानयोराद्ये 'सद्योह जातः' (ऋ० ३।४८।१) 'त्वं सद्यो अपिबो जात इन्द्र' (ऋ० ३।३२।१०) इति द्वे सूक्तमुखीयेऽधिके। अनुक्रियाया एकाहस्य मा० सवने निविद्धानयोराद्ये 'अनु त्वाऽहिघ्ने' (ऋ० ६।१८।१४), 'अनु ते दायि' (ऋ० ६।२५।८) इति द्वे अधिके सूक्तमुखीये। परिक्रियाया एकाहस्य मा० सवने निविद्धानयोराद्ये 'कथो नु ते परिचराणि' (ऋ० ५।२९।१३-१४) इति द्वे अधिके सूक्तमुखीये। एकत्रिकस्यैकाहस्य मा० सवने निविद्धानयोराद्ये 'एकस्य चिन्मे' (ऋ० १।१६५।१०), 'एकं नु त्वा सत्पतिम्' (ऋ० ५।३२।११) इति द्वे अधिके सूक्तमुखीये। त्र्येकस्यैकाहस्य मा० सवने निविद्धानयोराद्ये 'त्र्यर्यमा मनुषो देवताता' (ऋ० ५।२९।१), 'प्र घान्वस्य महतः' (ऋ० २।१५।१) इति द्वे अधिके सूक्तमुखीये। गोतमस्तोमस्यैकाहस्य मा० सवने निवद्धानयोराद्ये 'इत्था हि सोम इन्मदे' (ऋ० १।८०।१), 'इन्द्रो मदाय वावृधे' (ऋ० १।८१।१) इति द्वे अधिके सूक्तमुखीये भवतः। इति दशपेयादि गोस्तोमान्तानामेकाहानां माध्यन्दिनसवने मरुत्वतीयनिष्केवल्यशस्त्रयोः निवद्धानसूक्तयोराद्ये प्रत्येकं द्वे द्वे सूक्तमुखीये ऋचावगन्तव्ये। एवमेव ऋतपेयस्यैकाहस्य माध्यन्दिनसवने निष्केवल्यमरुत्वतीययोर्निविद्धानयोराद्ये 'ऋतस्य हि शुरुधः सन्ति' (ऋ० ४।२३।८-९) इति द्वे अधिके सूक्तमुखीये भवतः। तु०— आ०श्रौ० ९।७।३६)। तथा च अतिमूर्तिन एकाहस्य मा० सवने निविद्धानयोराद्ये 'स ईं महीं धुनिमेतोररम्णात्' (ऋ० २।१५।५), 'स्वप्नेनाभ्युप्या चुमुरिम्' (ऋ० २।१५।९) इति द्वे अधिके सूक्तमुखीये भवतः (तु०— आ०श्रौ० ९।८४)।

**सूक्तवाक—** (सा०, हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमयज्ञेषु च तत्र तत्र सूक्तवाकप्रैषानन्तरं १. अध्वर्युप्रेषितो होता यं मन्त्रं पठति स सूक्तवाक इत्युच्यते। **द्र०** श्रौ०प०नि० पृ० ३७। २. 'इदं द्यावा पृथिवी' का० हौ० प० १।१३ इत्यनुवाकप्रतिपाद्यो मन्त्रविशेषः सूक्तवाकः। आवाहनप्रधानयागादौ या देवताः पूर्वमुक्ताः, ताः पुनरनेनापि मन्त्रसमुदायेन उच्यन्ते इति सूक्तवाकः (तु०—का०श्रौ० १।७।२ टि० विद्याधरः)। ३. सूक्तवाकशब्दः 'सुष्ठु उक्तं वदति' इति व्युत्पत्त्या इष्टदेवता प्रकाशकमन्त्रविशेषे योगरूढः। तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः। **द्र०** मी०को० पृ० ४३३०। सूक्तवाकस्येष्टदेवतासंकीर्तनार्थत्वाद् यथास्थानं देवतादेशपूर्वकं सूक्तवाकं पठेदित्यर्थः।४. सूक्तवाकशब्दस्य 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादौ 'नभो देवेभ्यः' इत्यन्ते पदसमूहे अध्येतृप्रसिद्धिः। **द्र०** मी०को० पृ० ४३३१। पाठस्तु 'इदं द्यावापृथिवी भद्रमभूदार्ध्म सूक्तवाकमुत नमोवाकमृध्यास्म सूक्तोच्यमगने त्व ँ सूक्तवागसि। उपश्रितो दिवः पृथिव्योरोमन्वती तेऽस्मिन् यज्ञे यजमान द्यावा पृथिवी स्ताम्। सङ्गथे जीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती

अभयं कृतौ वृष्टिद्यावा रीत्याया शंभुवौ मयोभुवावूर्जस्वती च पयस्वती च सूपचरणा च स्वधिचरणा च तयोराविदि। अग्निरिदँ हविरजुषताऽवीवृधत महोज्यायोऽकृत। सोम इदँ हविरजुषताऽवीवृधत महोज्यायोऽकृत। अग्निरिदँ हविरजुषताऽवीवृधत महोज्यायोऽकृत। प्रजापतिरिदँ हविरजुषताऽवीवृधत महोज्यायोऽकृत। अग्निषोमाविदँ हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्। इन्द्राग्नी इदँ हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्। इन्द्र इदँ हविरजुषताऽवीधत महोज्यायोऽक्रत। महेन्द्र इदँ हविरजुषताऽवीवृधत महोज्यायोऽक्रत। देवा आज्यया आज्यमजुषन्ताऽवीवृधन्त महोज्यायोऽक्रत। अग्निर्होत्रेणेदँ हविरजुषताऽवीवृधत महोज्यायोऽक्रत। अग्निर्होत्रणेद ँ हवि रजुषताऽवीवृधत महोज्यायोऽक्रत। अस्यामृधद्धोत्रायां देवंगमायामाशास्तेऽयं यजमानोऽसौ (अमुकशर्मा व्यावहारिकं नामोच्चार्य नाक्षत्रमपि उच्चारणीयम्)। आयुराशास्ते सुप्रजास्त्वमाशास्ते सजातवनस्यामाशास्त उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्त्रे दिव्यं धामाऽऽशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात्तध्यात्तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः इष्टं च वीतं चोभे च नो द्यावापृथिवी अँहसस्पातामिह गतिर्वामस्येदं च नमो देवेभ्य:' इति (तु०—श्रौ०को० १. भा० पृ० २३०-३१ २ भा० पृ० ४६७ टि०) दर्शपूर्णमासयो: यथा सामर्थ्यं अयं सूक्तवाको निष्कृष्य विनियुज्यते। नोभयत्र कृत्स्नः। तत्र (क) पूर्णमासेष्ट्यां प्रजापतिरिदँ हविरजुषताऽवीवृधत महो ज्यायोऽक्रत। अग्नीषोमा विदँ हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इति। दर्शेष्ट्यामसंनयत:-'इन्द्राग्नी इदँ हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इति। (ग) दर्शेष्ट्यां सन्नयतः—'इन्द्र इदँ हवि रजुषताऽवीवृधत महोज्यायोऽक्रत' इति। (घ) दर्शेष्ट्यां संनयतो महेन्द्रयाजिन:-'महेन्द्र इदँ हवि'रजुषताऽवीवृधत महोज्यायोऽक्रत' इति प्रयोगोऽनुसन्धेय: (तु०—श्रौ०को० १ भा० पृ० २३० टि०)। तदुक्तं शाबरभाष्ये 'ये पौर्णमासीदेवतावाचिन: शब्दाः, ते पौर्णमास्यां प्रयोक्तव्याः नामावास्यायाम्। योऽभावास्यादेवतावाचिन: ते अमावास्यायाम्, न पौर्णमास्याम्। शेषभूतमर्थं संस्कुर्वन्तो मन्त्रा उपकुर्वन्ति नान्यथा इत्युक्तम्। तस्माद् ये यत्रोपकुर्वन्ति, ते तत्र प्रयोक्तव्या इति न कृत्स्न: (सूक्तवाक:) पौर्णमास्याम्, न कृत्स्नश्च अमावास्यायामिति। द्र० मी०को० पृ० ४३२७। सूक्तवाकाय अध्वर्युणा संप्रोषेत एव होता सर्वत्र सूक्तवाकं पठतीति च विशेषोऽवधेय:। द्र० १-३ सूक्तवाकप्रैष—। तथा च दर्शपूर्णमासयोरुक्तयोऽयं सूक्तवाक: ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे, अग्निष्टोमे अग्नीषोमीयपशुपुरोडाशे तृतीयसवने हारियोजनग्रहे च आवाहितदेवतानामोहपूर्वकं सूक्तवाकप्रैषानन्तरं पठनीय:। सर्वत्र पाठस्तु 'इदं द्यावापृथिवी भद्रममूदार्ध्म सूक्तवाकमुत नमो वाकमृध्यास्म सूक्तोच्यमग्ने त्वं सूक्तवागसि। उपश्रुती दिवस्पृथिव्योरोमन्वतीतेऽस्मिन् यज्ञे यजमानद्यावापृथिवी स्ताम्। शंगयीजीरदानू अत्रस्नू अप्रवेदे उरुगव्यूती अभयंकृतौ। वृष्टिद्यावारीत्याया शंभुवौ मयोभुवा ऊर्जस्वती पयस्वती सूपचरणा च स्वधिचरणा च तयो-

राविदि। अग्निरिदँ हविरजुषतावीवृधत महोज्यायोऽकृत। सोम इदं हविरजुषतावीवृधत महोज्यायोऽकृत। अग्निरिदं हविरजुषतावीवृधतमहोज्यायोऽकृत। (निरूढपशुबन्धे) 'वनस्पतिरिदं हविरजुषतावीवृधत महोज्यायोऽकृत। इन्द्रो रुद्रवानिदं हविरजुषतावीवृधत महोज्यायोऽकृत। इन्द्र आदित्यवानृभुमान् विभुमान् वाजवान् बृहस्पतिवान् विश्वदेव्यावानिदं हविरजुषतावीवृधत महोज्यायोऽकृत (तु०— आ०श्रौ० १।९।१; ५।३।१०-११)। देवा आज्यपा आज्यमजुषन्तावीवृधन्त महोज्योऽक्रत। अग्निहोत्रेणेदं हविरजषतावीवृधत महोज्यायोऽकृत। अस्यामृधेद्धोत्रायां देवं गमायामाशास्तेऽयं यजमानः अमुकशर्मा (व्यावहारिकं नामोच्चार्य नाक्षत्रनामाप्युच्चारणीयम्) आयुराशास्ते सुप्रजास्त्वमाशास्ते रायस्पोषमाशास्ते सुप्रजात वनस्यामाशास्त उत्तरां देवयज्यामा शास्ते भूयो हविष्करणमाशास्ते दिव्यं धामाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाशास्ते तदश्यात्तद् ऋध्यात् तदस्मै देवा रासन्तां तदग्निर्देवो देवेभ्यो वनते वयमग्नेर्मानुषाः। इष्टं च वित्तं चोभे च नो द्यावापृथिवी अंहसस्यातामेह गतिर्वामस्येदं नमो देवेभ्यः' इति (तु०— श्रौ०को० २ भा० पृ० ४६७ टि०)।

**सूक्तवाकनिगद—** द्र० सूक्तवाक—।

**सूक्तवाकप्रैष—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च प्रस्तराञ्जनानन्तरं प्रस्तरसंबन्ध्येकं तृणमादाय प्रज्ञातं निधाय दक्षिणोत्तराभ्यां हस्ताभ्यां प्रस्तरं धृत्वा जुह्वामूर्ध्वमवष्टभ्य आश्राव्य प्रत्याश्राविते (अध्वर्युः) प्रैषं पठति स सूक्तवाकप्रैष इत्युच्यते। द्र० श्रौ०प०नि० पृ० ३६-३७। स (अध्वर्युः) यत्राह— दैव्या होता रोमद्रवाच्याय प्रेषितो मानुषः सूक्तवाकायेति। द्र० श्रौ०को० १ भा० पृ० २३१।

**सूक्तवाकप्रैष—** (आध्व०, हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे मैत्रावरुणेन पठ्यमानानामेकादशानुयाजप्रैषाणामनन्तरं अध्वर्युणा 'इषिता दैव्या होतारो भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ताऽनुब्रूहि' इत्युक्ते मैत्रावरुणः 'अग्निमद्य होतारमवृणीताऽयं यजमानः पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्निन्द्राग्निभ्यां छागं सूपस्था अद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनेन्द्राग्निभ्यां छागेनाद्यस्तां तं भेदस्तः प्रतिपचताऽग्रमीष्टामवीवृधेतां पुरोडाशेन त्वां मद्यर्ष आर्षेयर्षीणां न पादवृणीताऽयं यजमानो बहुभ्य आसंगतेभ्यः। एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसिभद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ताऽनुब्रूहि' इति निरूढपशुबन्धे सूक्तवाकप्रैष उच्यते। अनेन प्रैषेणाध्वर्युर्होतारं प्रेष्यति। ततो होता सूक्तवाकं पठति। तत्र (सूक्तवाके) आज्यभागदेवतानन्तरं 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेताम्। वनस्पतिरिदं हविरजुषताऽवीवृधत महोज्यायोऽकृत। ततो 'देवा आज्यपाः' इत्यादि प्रकृतिवदिति प्रयोगे विशेषोऽवधेयः। द्र० श्रौ०प०नि० १५० श्रौ०को० १ भा० पृ० ५८५।

**सूतवाकप्रैष—** (आध्व०, हौ०) सोमयज्ञेषु प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्निषोमीयपशुपुरोडाशे एकादशानुयाजप्रैष याज्यानन्तरं अध्वर्युणा

'इषिता दैव्या होतारो भद्र वाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ३ ब्रूहि' इत्युक्ते 'अग्निमद्य होतारमवृणीतायं यजमानः पचन् पक्तीः पचन् पुरोडाशं गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नीषोमाभ्यां छागं सूपस्थाद्य देवो वनस्पतिरभवदग्नय आज्येन सोमायाज्येनाग्नीषोमाभ्यां च्छागे नाधत्तां तं भेदस्तः प्रतिपचताग्रमीष्टामवीवृधेतां पुरोडाशेन त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्य आसंगतेभ्यः । एष मे देवेषु वसु वार्यायक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्त्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषाः सूक्तवाकाय सूक्ता ब्रूहि' इति अग्नीषोमीयपशुपुरोडाशे सूक्तवाकप्रैष उच्यते। एतदनन्तरं होता आ०श्रौ० १ ।९ ।१ इत्यत्रस्थ पाठानुसारेण यथास्थानं देवतादेशपूर्वकं सूक्तवाकं पठेत् (तु०—श्रौ०को० २ भा० पृ० २१३ टि०)। द्र० ४ सूक्तवाक— ।

**सूक्तवाकप्रैष** — (आध्व०, हौ०) सोमयज्ञेषु प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने यज्ञपुच्छे हारियोजनग्रहप्रचारे हारियोजनग्रहग्रहणानन्तरं हरिभ्यां धानासोमहोमान्ते 'अग्निमद्य होतारमवृणीतायं सुन्वन् यजमानः पचन् पक्तीः पचन् पुरोडाशान् गृह्णन्नग्ननय आज्यं गृह्णन् सोमायाज्यं बध्नन्नग्नयेच्छागं सुन्वन्निन्द्राय सोमं भृज्जन्हरिभ्यां धानाः सूपस्था अद्य देवो वनस्पतिमवदग्नय आज्येन सोमायाज्येनाग्नयेच्छागेनेन्द्राय सोमेन हरिभ्यां धानाभिरधत्तं भेदस्तः प्रति पचताग्रभीदवीवृधत पुरोडाशैरपादिन्द्रः सोमं गवाशिरं यवाशिरं तीव्रान्तं बहुरमध्यमुपोत्था मदा व्यश्रौद्विमदाँ आनलवीवृधताङ्गूषैस्त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं सुन्वन् यजमानो बहुभ्य आ संगतेभ्यः । एष मे देवेषु वसु वार्या यक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्त्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि' इति हारियोजनग्रहप्रचारे सूक्तवाकप्रैष उच्यते । प्रैषानन्तरं होत्रा आश्वलायनोक्तरीत्या (आ०श्रौ० १ ।९ ।१; ५ ।३ । १०-११) इत्यत्रोक्तप्रकारेण सूक्तवाकः पठनीयः (तु०—श्रौ०को० २ भा० पृ० ४६७ टि० द्र० ४- सूक्तवाक— ।

**सूक्तस्थानसूक्त**— द्र० निविद्धान— ।

**सूत्र**— द्र० श्रौत्रसूत्र— ।

**सूददोहस्**— (सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयने १. सर्वासामिष्टकानामुपधानानन्तरं 'ता अस्य सूददोहसः' (मा०सं० १२ ।५५) इति सूददोहसं कुर्यात् । अयं मन्त्रः सूददोहाः इत्युच्यते । अस्य मन्त्रस्योच्चारणमात्रं कुर्यादित्यर्थः। (तु०—का० श्रौ० १६ ।७ ।१५ विद्याधरः)। २. सूदं स्वादं सरसं दोग्धीति सूददोहाः कामधेनुरित्यर्थः । तद्वाचकोऽयं शब्दः 'ता अस्य सूददोहसः' (ऋ० ८ ।६९ । ३) इत्यस्यामृचि वर्तते साप्यृक् सूददोहाः सूददोहः शब्देनाभिधीयते । सेयमृक् पञ्चविंशस्य सात्रिकस्य महाव्रतस्याह्नः माध्यन्दिनसवने निष्केवल्यशस्त्रस्य ऋग्रूप पक्ष्यकारस्य आत्मभाग- (मध्यशरीरः) ग्रीवाभागशिरोभागविजवभागदक्षिणोत्तरपक्षभागपुच्छभागस्थानीयानां शस्त्रावयवभूतानामृचामन्ते पठ्यते । इति विशेषोऽनुसंधेयः । (तु०—ऐ० आ० सा० १ ।४ ।१-२; ५ ।१-६-५ ।२ ।१-२) । ३. सूद इति कूप नाम । तादृशदोहनः

(गाव:) सूददोहस:(तु०—ऋ० ८ ।६ ।९ ।३ सामभाष्यम्)

**सृष्टि—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयने चितिसाधने १. सृजतिधातुयुक्तैर्मन्त्रैरुपधेया इष्टका: सृष्टय: । २. सृष्टिशब्दोपेता मन्त्रा यासामिष्टकानामुपधाने विद्यन्ते ता इष्टका: सृष्टय उच्यन्ते । तु०—तै० सं० सा० ४ ।३ ।१० ।

**सौरावन्नौ—** (सा०) इराऽन्नं तत्समूह: ऐरं तेन सह वर्तते इति सैरं नौस्थं वस्तुजातम् । तत् सैरं यस्यां नावि अस्ति सेयं नौ: सैरावतीत्युच्यते । (तु०—ऐ० ब्रा० सा०) ।

**सोम—** (अव्य० सा०) १. सोम: अपूर्व: सव: । स न कुतश्चिद् धर्मान् गृह्णाति । अव्यक्त चोदनत्वात् सोमं ये सवधर्मा विधीयन्ते ते एव भवन्ति नान्ये । २. सोम: अव्यक्तचोदन: (अव्यक्तनामधेयम्) । व्यक्तचोदनात्वं च द्रव्य देवतावत्त्वम् । **द्र०** मी०को० पृ० ४३३८ । अर्थात् यत्र द्रव्यं (चरुपुरोडाशाज्यादिकं) विधीयते । यत्र देवता अग्नीषोमेन्द्रादित्यविष्णुप्रभृतयो विधीयन्ते सा व्यक्तचोदनोच्यते । ३. यजति चोदन: सोम: । ४. वषट्कारनिर्दिष्ट: सोम: । ५. सोमशब्द: सुत्यायुक्तस्य क्रतुमात्रस्याभिधायक: कर्ममात्रवाच्य: । ६. सोमानां मूलप्रकृतिज्योतिष्टोम: । **द्र०** मी०को० पृ० ४३४१ ।७. सर्वप्रत्ययो वीरुद्विशेषो लताविशेषो वा सोमो द्रव्यं रसो राजेत्यादिपर्यायैरभिधीयते । ८. सोमशब्दो लताविशेषपरो न तु चन्द्रादिपर: । तस्य यागेऽनुपयोगात् । 'श्यामलाऽमला निष्पन्ना क्षीरिणी त्वचि मांसला । श्लेष्मला वमनी वल्ली सोमाख्य छागभोजनम्' इत्यादिसोमस्वरूपमायुर्वेदेनावगन्तव्यम् (**द्र०** का० श्रौ० ७ ।१ ।५ टि० विद्याधर: । ९. वल्ली रस: सोम: (तु०—ऐ० ब्रा० सा० १ ।२२) । १०. सोम: (यज्ञेषु) दशमुष्टिपरिमित: श्रुत: । यावानेवाग्निष्टोमे सोम: तावानेव उक्थ्यादिषु अपि संस्थासु । उक्थ्यादिष्वपि दशमुष्टिरेव सोमो ग्रहीतव्य: । सोम: नैव यागसाधनं किन्तु तदुपलक्षितो रस: । स चावशिष्ट: पूतीकेष्वपि । **द्र०** मी०को० पृ० ४३३९ ।११. यदि सोमं न विन्देत् पूतीकानभिषुणुयात् । **द्र०** मी०को० पृ० ४३३९ । १२. सोमाभावे बहुषु सदृशेषु प्राप्तेषु नियम: क्रियते पूतीका एवाभिषोतव्या: । **द्र०** मी०को० पृ० ४३४५ । १३. सोमस्य जगतीच्छन्दस्क ऋच्युत्पन्नसामकत्वे माध्यन्दिने पृष्ठस्तोत्रे आग्रयणाग्रत्वम् । सोमस्य बृहत्सामत्वे पृष्ठस्तोत्रे शुक्राग्रत्वम् । सोमस्य रथन्तरसामत्वे ऐन्द्रवायवाग्रत्वम् । **द्र०** मी०को० पृ० ४३४०-४१ । **द्र०** ग्रहाग्रता— ।

**सोमक्रयण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमविमानानन्तरं वस्त्रवेष्टितस्य चर्मणि निहितस्य सोमस्यावेक्षणान्ते सोमविक्रयिणा तस्मिन् गृहीते सति अध्वर्यु: जलेन तदभ्युक्षति । चर्मदूरे प्रक्षिप्योत्थाय पृच्छतिसोमविक्रयिन् क्रय्यस्ते सोमा: ३ । सोमविक्रयी क्रय्य इति प्रत्याह । अध्वर्युराहमूजवता: ३ इति । मूजवतो हि इति स प्रत्याह । अध्वर्युराहगवा ते क्रीणानि इति सोमक्रयण्या सोमं पणते । तत: क्रीत: सोम: वयांसि व्याचक्ष्य इति सोमविक्रयी प्रत्याह । अध्वर्यु: एषा ते सोमक्रयणी चन्द्रं ते छागं/ते वस्त्रं ते । ततो हिरण्येन पणते । सोमं ते क्रीणाभ्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाह ँ् शुक्रं ते शुक्रेण क्रीणामि चन्द्रं

चन्द्रेणामृतममृतेन सम्यक् ते गो: इति कौत्साय हिरण्यं दर्शयति, अस्मे चन्द्राणि इति यजमानाय प्रददाति। तपसस्तनूरसि प्रजापते वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामि इति प्रतीचीनग्रीवयाऽजया सोमं राजानं पणते। 'अस्मे ते बन्धु:' इति यजमानं समीक्षते। तदनन्तरं 'मयि ते राय: श्रयन्ताम्' इति आत्मानं समीक्षते। तदनन्तर मजां प्रदक्षिणमावर्त्य अभ्युक्ष्योदङ्मुखीं तां कौत्साय ददाति। ब्रह्मा 'मित्रो न एहि सुमित्रधा:' इति सोमं राजानमादत्ते। 'इन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्त ँ स्योन: स्योनम्' इति यजमानस्य दक्षिणे उरौ सादयति अध्वर्यु: 'वय: सुपर्णा उपसेदुरिन्द्र प्रियमेधा ऋषयो नाधमाना:। अपध्वान्तमूर्णु हि पूर्धि चक्षुर्मुमुग्ध्यस्मान् निधेऽवबद्धान्' इति कृष्णविषाणया यजमानस्योष्णीषमपनयति। यजमान: उष्णीषं जलेनाभ्युक्ष्य कौत्साय परिकर्मिणे वा ददाति। दण्डं मैत्रावरुणाय प्रयच्छति। तदानी मध्वर्यु: यजमानं वाचयति—'त्वां गावो वृणत राज्याय त्वा ँ हवन्त मरुत: स्वर्का:। वर्ष्मन् क्षत्रस्य ककुभि: शिश्रियाणस्ततो न उग्रो विभजा वसूनि। मित्रावरुणयोस्त्वा बाहुभ्यां प्रशास्त्रो: प्रशिषा प्रयच्छामि' इति अध्वर्यु: 'अस्मे ज्योति:' इति शुक्लोर्णास्तुकां यजमाने प्रक्षिपति। कृष्णोर्णास्तुकां तु इदमहं सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नानि' इत्युपग्रथ्य 'सोमविक्रयिणि तम:' इति तया सोमविक्रयिणं भ्रुवोर्विध्यति। सोमक्रयहेतून् पदार्थाननुदिशति—'स्वानुभ्राजाङ्घारे बम्भारे हस्त सुहस्त कृशानवेते व: सोमक्रयणास्तान् रक्षध्वं मा वो दभन्' इति मन्त्रेण। ततस्तस्मिन्नेव स्थाने उदकुम्भस्थजलं सर्वं प्रक्षिपति। इति 'सोमविक्रयिन क्रय्यस्ते सोमा३' इत्यारभ्यैतदन्तं कर्म सोमक्रयणमित्युच्यते। **द्र०** श्रौ०प०नि० पृ० २०६-७।

**सोमक्रयणी —** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. या बभ्रु: पिङ्गाक्षी सा सोमक्रयणी अरुणा वा। अवण्डाऽकूटाऽकाणाऽकर्णाऽलक्षिताऽसप्तसफा च भवति। २. या बभ्रुरेकहायनी तया (सोमं) क्रीणीयात्। तत्र सोमक्रयणी एकहायनी गौ: सोमं क्रेतुं ज्योतिष्टोमे यदा नीयते तदा तया सप्तमं पदं यत्र निहितं तत्र भूमौ हिरण्यं निधाय हुत्वा तद्रजोऽध्वर्युर्गृह्णाति आज्यसंसृष्टम्, 'स सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' इति विशेषोऽवगन्तव्य:। **द्र०** मी०को० पृ० ४१४८।

**सोमक्रयण्यनुगमन —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमक्रयण्यनुमन्त्रणानन्तरं 'दक्षिणस्येमस्य (दोष्ण:) सप्तमं पदं जोषयध्वम्' इति प्रैषान्ते उदग्दिशं प्रति नीयमानाया: सोमक्रयण्या दक्षिणस्य दोष्ण: षट् पदान्यनुक्रामति। तत्रैकैकपदानुक्रमणे षण्णां मन्त्राणां मध्ये एकैको मन्त्र: पठनीय:। 'वस्व्यसि, रुद्राऽसि, अदितिरसि, आदित्याऽसि, शुक्राऽसि, चन्द्राऽसि। एतै: षड्भिर्मन्त्रै: अध्वर्यु: गोर्दोष्ण: प्रक्षेपस्थाने स्वदक्षिणं पादं प्रक्षिप्य क्रमेण गच्छति। इदं सोमक्रयण्यनुगमनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २०५।

**सोमक्रयण्यनुमन्त्रण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु (अध्वर्यु:) सोमक्रयणीं गां शालाया अग्रे पृष्ठ्यासूत्रस्थाने उदङ्मुखीं स्थितामनुमन्त्रयते—'चिदसि मनासि धीरसि

दक्षिणासि यज्ञियासि क्षत्रियास्यदितिरस्युभयतः शीर्ष्णी सा नः सुप्राची सुप्रतीची संभव मित्रस्त्वापदि बध्नातु पूषाऽध्वनः पात्विन्द्रायाऽध्यक्षायानु त्वा मन्यतामनु पिताऽनुभ्राता सगर्भ्योऽनुसख्या सयूथ्यः, सा देवि देवमच्छेहीन्द्राय सोम ँ रुद्रस्त्वा वर्तयतु मित्रस्य पथा स्वस्ति सोमसखा पुनरेहि सह रय्या। इदं सोमक्रयण्यनुमन्त्रणामुच्यते। तत्र अनुमन्त्रणात् प्राक् सोमक्रयाहुत्यनन्तरं पुनश्चतुर्गृहीतं गृहीत्वा स्फ्यमुदपात्रं बर्हिर्हिरण्यं चादाय 'एहि यजमान' इति तमामन्त्र्य उद्धरणीहस्तया पत्न्याऽनुगतेन यजमानेन सह पूर्वद्वारेण शालाया बहिर्निष्क्रम्य अग्रे तिष्ठन् चतुर्गृहीतं स्रुक्स्थमाज्यं यजमानमवेक्षयति—'शुक्रमस्यमृतमसि वैश्वदेव ँ हविः' इति यजुर्मन्त्रेण। हिरण्यमन्तर्धाया दित्यमुदीक्षयति—'सूर्यस्य चक्षुरारुहमग्नेरक्ष्णः कनीनिका यदेतशेभिरीयसे भ्राजमानो विपश्चिता' इति मन्त्रेण। इति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २०४-५।

**सोमक्रयदेश**— (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु उत्तरवेदिदेशे उपरवदेशे वा सोमः क्रीयते। द्र० मी०को० पृ० ४३४६।

**सोमक्रयसाधनदशद्रव्य**—(सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं १. अरुणया २. अजया ३. हिरण्येन ४.-५ सवत्सया धेन्वा, ६. ऋषेण, ७. अनडुहा, ८-९. मिथुनाभ्यां (गोभ्यां) १०. वाससा क्रीणति' इति दश द्रव्याणि' सोमक्रयसाधनानि दश द्रव्याण्युच्यन्ते। द्र० मी०को० पृ० ४३४६-४७।

**सोमक्रयात् पूर्वमुपकल्प्यमानसंभार**—(आध्व०) सोमयज्ञेषु प्रकृतिभूत ज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे राजसूये औपवसथ्येऽहनि अध्वर्युः सोमक्रयस्य पुरस्तादेतानि संभाराण्युपकल्पयति—अधिषवणं चर्म, अधिषवणे फलके, द्रोणकलशम्, दशापवित्रम्, अद्रीन् (अभिषवणार्थान् ग्राव्णः), पूतभृतम्, चाधवनीयं च, स्थालीमुदञ्चनम् (उन्नयनपात्रम्), चमसं चेत्येतानि सोमक्रयात् पूर्वं संभरणीयानि भवन्ति।

**सोमक्रयाहन्** — (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षाहःसु परिसमाप्तेषु अनन्तरं यदहस्तस्मिन्नहनि राजक्रयः कर्तव्यः। तदुक्तम्—'दीक्षान्ते राजक्रयः' (आ०श्रौ० ४।२।१८) इति। यस्मिन्नहनि सोमः क्रेष्यते तस्मिन्नहनि प्रायणीयानामेष्टिः कार्या। अर्थात् दीक्षान्ते यदहस्तस्य राजक्रय इति संज्ञा कृता भवति। तेन प्रायणीयासहितं तदहः सोमक्रयसंज्ञकमह उच्यते। (तु०—आ०श्रौ० ४।२।३।१ नारायणः)।

**सोमक्रयाहुति**—(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमशोधनादिप्रैषाङ्गहोमानन्तरं अध्वर्युरुपनिष्क्रम्य प्रेष्यति—'सोमविक्रयिन् सोमं संसोधय, उपरवाणां काले रोहिते चर्मणि आनुडुहेऽपामन्ते ब्राह्मणो दक्षिणत आस्ताम्, ता गावो दूरं मा गुर्यासु सोमक्रयणी च सोमवाहनावनुड्वाहौ, सोमवाहनमनः, प्रक्षालितोदधृतफलकम्' इति। अनेन प्रैषेण प्रेषितः सोमविक्रयी सोमशोधनादियथोक्तं करोति। ततोऽध्वर्युः प्रायणीयेष्टौ प्रकृतिवद् धृष्ट्यादानादि कृत्वा चातुर्मास्यवत् चरुं श्रपयित्वा 'सूर्यं ते चक्षुः, वातं प्राणः, द्यां पृष्ठम्, अन्तरिक्षमात्मा, अङ्गै-

र्यज्ञम्, पृथिवीं शरीरैः' इति षड्ढोतृनामकेन वाक्यसमूहेन अन्तर्वेदि चरुमासादयति। प्रकृतौ तु समस्तव्याहृतिभिर्हविरासादनम्। प्रयाजशेषेणाभिधारणे विशेषः। प्रथमं ध्रुवां पञ्चकृत्वोऽभिघार्य ततश्चरुमभिघार्य उपभृतमभिघारयति। अस्यामिष्टौ आज्यभागप्रचारो वैकल्पिकः। पृथक् पृथक् चतुर्गृहीतेन ध्रौवाज्येन प्राच्यां दक्षिणस्यां प्रतीच्यां उदीच्यां च क्रमेण पथ्यां स्वस्तिं अग्निं सोमं सवितारं चोपांशु यजति। सर्वत्र 'दब्धिरसि' इत्यनुमन्त्रणं यजमानस्य। अदितिं चरुणा मध्ये यजति। 'अन्नादः' इत्यनुमन्त्रणम्।

अदितियागानन्तरमध्वर्युः 'मरुतो यद्धनो दिवः सुम्नायन्तो हवामहे। आ तू न उपगन्तन' इति मारुतीमृचमनुपठति। स्विष्टकृद्यागे विशेषः जुह्वामुपस्तीर्य ध्रुवाज्याच्चतुरवदाय सकृच्चरोरुत्तरार्धादवदाय द्विरभिघार्य चरुसंबन्धिमेक्षणं जुहूपभृतोरधोभागेन नीत्वा आग्नीध्राय प्रयच्छन्नाह-'अतिवालवतादेवमानुप्रहार्षीः' इति। ततोऽत्याक्रम्य स्विष्टकृता प्रचरति। आग्नीध्रो मेक्षणमग्नेरुपरि प्राङ्नीत्वाभ्युक्ष्योत्तरतः सादयति। ततोऽध्वर्युर्जुहूसंक्षालनादि करोति। इडावदाने विशेषः इडामुपस्तीर्य ध्रुवाज्यादष्टकृत्वोऽवदाय द्विश्चरोऽवदायाभिघारयति। हविरुच्छिष्टोद्वासनानन्तरं परिकर्मिणः संप्रेष्यति—'अनुच्छिष्टी कुर्वन्त एतं चरुं व्युद्धृत्य प्राश्नीत, अथैतां चरुस्थालीँ सक्षामकषां, एतन्मेक्षणं, एतं वेदं, एतद्बर्हिश्चतुष्टयमुदयनीयाय निधत्तात्' इति। परिकर्मिणो यथाप्रैषं कुर्वन्ति। (इति प्रायणीयेष्टिं शंय्वन्तां समाप्यो स्रुग्विमोकानन्तरं तूष्णीमन्तर्वेदि प्रणीता निनीय तूष्णीं ध्रुवामाप्याय्य स्रुचि चतुर्गृहीतं गृहीत्वा स्रुगग्रे सूत्रेण हिरण्यं निष्टर्क्यं बद्ध्वा दर्भमूले प्रग्रथ्य जुह्वग्रे लम्बमानमवदधाति—'इयं ते शुक्र तनूरिदं' वर्चस्तया संभव भ्राजं गच्छ' इति मन्त्रेण। 'जूरसि धृता मनसा जुष्टा विष्णवे तस्यास्ते सत्यसवसः प्रसवे वाचो यन्त्रमशीय स्वाहा' इत्यन्वारब्धे यजमाने जुहोति। वाचे सोमक्रयण्या इदं न मम' इति यजमानोऽनुमन्त्रयते। इतीयं सोमक्रयार्थाऽऽहुतिः सोमक्रयाहुतिरित्युच्यते। द्र० श्रौ०प०नि० पृ० २०३-४ सोमशोधनादिप्रैषाङ्गहोम—।

**सोमग्रहहोम—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमाभिषवानन्तरं तत्तद्देवताभ्यः सोमरसः तत्तत्पात्रेषु (ग्रहेषु) अध्वर्युणा गृह्यते। ग्रहणानन्तरं उद्गातॄन् प्रति स्तोत्रोपाकरणार्थं प्रेष्यति। 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' इति श्रुतेः (तै०—सं० ३।१।२)। प्रेषिता उद्गातारः तद्ग्रहसंबन्धिनीं देवतां तद्देवताकैः स्तोत्रैः स्तुत्वा स्तोत्रान्तिमाया ऋचः प्रस्तावानन्तरं होतारं प्रति 'होतरेषोत्तमा (ला०श्रौ० ५।६।११) इति प्रैषं ददति। एवं प्रेषितो होता याज्यां पठति। याज्यापाठ विधिना पठित्वा तदन्ते वषट् करोति। वषट् कृते सति चाध्वर्युर्जुहोति। सोऽयं सोमग्रहहोमः सोमग्रहयागो वा सोमग्रहहोम इत्युच्यते। (का०श्रौ० ३।३।१९ टि० विद्याधरः) तत्र अस्मिन् सोमयागे अध्वर्युः ग्रहं गृहीत्वा स्तोत्रारंभात् पूर्वं नापव्याहरेत्। अर्थात् उद्गातृभिः क्रियमाणस्य स्तोत्रस्योपाकरणात् प्रारंभात् पूर्वं न किञ्चिदपवदेत्। उद्गातृभिस्तैस्तैः स्तोत्रैः स्तुत्वा अन्तिमायाः स्तोत्रीयाया ऋचः प्रस्तावे कृते प्रस्तोता 'होतरेषोत्तमा' इति होतारमुद्दिश्य प्रेष्यति, तावत्पर्यन्तमुद्गातारो

न व्याहरेयुः। होता च ग्रहसंबद्धहोमवषट्कारात् पूर्वं न व्याहरेत्। इति विशेषोऽवगन्तव्यः। (तु०—का० श्रौ० ३।३।१७-१९ विद्याधरः)।

**सोमग्रहावेक्षण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु यजमानो ग्रहानवेक्षते—'प्राणापानाभ्यां मे वर्चोदसौ पवेथाम्' इत्युपांश्वन्तर्यामौ...(मा०श्रौ० २।३।७।१-६) इत्यादिमन्त्रैर्ग्रहाणामवेक्षणं सोमग्रहावेक्षणमुच्यते। द्र० ग्रहावेक्षण—।

**सोमतनु—**(आध्व० सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु संकल्पमारभ्य समाप्तिपर्यन्तं ये सोमयागास्ते यज्ञपुरुषस्य तनुविशेषाः। (तु०—तै० सं० सायण० ४।४।९)। द्र० यज्ञतनुमन्त्र—।

**सोमदक्षिणा—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमाति.......अग्निष्टोमे तद्विकृतिषु चैकाहाहीनेषु माध्यन्दिनसवने देयाः गौः, अश्वः, अश्वतरः, गर्दभः, अवयः, व्रीहयः, यवाः तिलाः, माषाः, द्वादशशतं हिरण्यं चेति विशेषवर्जं दक्षिणा भवन्ति। सत्रेषु दक्षिणा न दीयते। तदुक्तम्— 'अदक्षिणानि सत्राणीत्याहुः' इत्यवधेयम्।

**सोमदक्षिणाकाल —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनेषु माध्यन्दिनसवने दक्षिणा दीयन्ते।

**सोमद्रप्सस्कन्दनानुमन्त्रण —**(आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ध्रुवस्थाली सोमग्रहणानन्तरमुन्नेता आधवनीयादुदञ्चनेनोपर्यर्धं द्रोणकलशं पूरयति। अध्वर्युस्तस्मिन् पयः, सक्तून्, हिरण्यं च प्रक्षिप्य मिश्रीकृत्य परिप्लुपात्रं च प्रास्य द्रप्सानमन्त्रयते— 'द्रप्सश्च स्कन्द० सप्त होत्राः। यस्ते द्रप्सः स्कन्दति. तं जुहोमि। यो द्रप्सो अँ्शुः तं जुहोमि। यस्ते द्रप्सो सं० तं जुहोमि' इति चतसृभिः। तदिदं सोम द्रप्सस्कन्दनानुमन्त्रमुच्यते। द्र० ध्रुवस्थालीसोमग्रहण—। द्र० श्रौ०प०नि० पृ० २७६।

**सोमप-देव—** (सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः प्रजापतिः वषट्कारश्चैते (त्रयस्त्रिंशत्) देवाः सोमपाः। (तु०—ऐ० ब्रा० २।१८) भवन्ति।

**सोमपात्रयोजन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने प्रातरनुवाके शस्यमाने सोमपात्राणां योजनमुन्नेता खरे कुर्यात्। तत्र खरो नाम दक्षिणहविर्धानस्य पुरस्तादरत्निमात्रश्चतुरङ्गुलोच्चो मृदा निर्मितः स्थण्डिलविशेष उच्यते। तस्य खरस्य ईशानकोणे उपांश्वन्तर्यामयोर्ग्रहयोः पात्रं सादयेत्। तत्रोपांशुग्रहस्य पात्रं दक्षिणं अन्तर्यामस्य पात्रामुत्तरं भवति। उपांशुपात्रस्य पश्चात् समीप एव त्रीणि (ऐन्द्रवायवमैत्रा वरुणाश्विनानि) द्विदेवत्यपात्राणि प्रत्यक् संस्थानि योजयेत्। खरस्य आग्नेयकोणे शुक्रमन्थिनो ग्रहयोः पात्रे सादयेत्। तत्र शुक्रस्य दक्षिणं मन्थिन उत्तरम्। खरस्य मध्ये आग्रयणस्थालीं सादयेत्। आग्रयणस्थाल्या दक्षिणतः सपात्रामुक्थ्यस्थालीं सादयेत्। तत्रापि दक्षिणतः स्थालीं पात्रं तस्याः पुरस्तात्। आग्रयणस्थाल्या उत्तरतः समीप एव सपात्रामादित्यस्थालीं सादयेत्। तत्रापि

श्रोण्यां आदित्यस्थालीं पात्रं तस्या: पूर्वमासादयेत्। आग्रयणस्थाल्या: पूर्वे द्वे ऋतुपात्रे दक्षिणतो योजनीये। तत्र दक्षिणतोऽध्वर्युपात्रम्, उत्तरत: प्रतिप्रस्थातु: पात्रं योजयेत्। आग्रयणस्थाल्या: पश्चिमत: परिप्लवां सादयेत्। इत्येतानिपात्राणि खरे सादयेत्। तत्र चित्रम् यथा— तेषु पात्रेषु उपांशु:, अन्तर्याम:, ऐन्द्रवायव:, मैत्रावरुण:, आश्विन:, शुक्र:, मन्थी, उक्थ्य:, आदित्य: इति नव ग्रहा: (पात्राणि) उलूखलाकारा: (उलूखला:) आग्रयणस्थाली, उक्थ्यस्थाली, आदित्यस्थाली, ध्रुवस्थालीति चतस्र: स्थाल्य:। द्वे द्विमुखे (उभयतो मुखे) ऋतुपात्रे परिप्लवा च भवन्ति । इति विशेषोऽवधेय:। तत्र उपांश्वन्तर्यामैन्द्रवास्यवादिशब्दा: मुख्यया वृत्त्या रसवाचका: लक्षणया च तदाधारपात्रबोधका अपि। अतश्च तत्तत्प्रकरणानुरोधेन रसवाचकत्वं पात्रवाचकत्वं च यथायथं बोध्यम्। द्विदेवत्यपात्राणां मध्ये मेखलासदृशावयवयुक्तमैन्द्रवायवग्रहस्य पात्रं स्यात्। अजागलस्तनाकारचिह्नवन्मैत्रावरुण- ग्रहस्य पात्रं कुर्यात्। ओष्ठवत् कोणद्वययुक्तमाश्विनग्रहस्य पात्रं भवेत्। **द्र०** ग्रहाकृति—। तथा च दक्षिणस्य हविर्धानस्य योऽक्षस्तस्याधस्तात् समीपमार्गेणैव द्रोणकलशं प्रागग्रं प्रतीच्यां स्थापयित्वा अक्षस्यो परिमार्गेण अन्यतरतो दशं अरत्लिमात्रं प्रादेशसंमितं मेषशुक्लोर्णानिर्मितं पवित्रं प्रत्यक् नीत्वा तस्मिन् द्रोणकलशे निदध्यात्। एवंविधमेवोभयतो दशं प्रादेशमात्रं द्वितीयं पवित्रं परिप्लवायां निदध्यात्। उत्तरस्य हविर्धानस्य उत्तरादुपस्तंभनात् पूर्वस्यां दिशि अदूरे अनन्तर्हिते प्रदेशे ध्रुवस्थालीं योजयेत्। प्रचरणीं (पालाशीं जुहूम) उत्तरस्यैवानसो धुरि योजयेत्। उत्तरस्यैवानसोऽक्षस्य पूर्वस्यां दिशि अनस उपर्येव पूतभृत्संज्ञकं महाकलशं योजयेत्। उत्तरस्यैवानसोऽक्षस्य पश्चाद् अनस उपर्येव आधवनीयकलशं योजयेत्। उत्तरस्यैव हविर्धानस्य अक्षात् प्रत्यग्भागे भूमौ सवृन्तान् पालाशान् तत्तद् ऋत्विक्संबन्धिन उदक्संस्थान् दश चमशान् योजयेत्। तत्रैव भूमौ उदकहरणान् त्रिप्रभृतिपञ्चदशपर्यन्तान् विषमसंख्यान् एकधननामकान् कलशान् निदध्यात्। तेषां च अग्निष्टोमात्यग्निष्टोमयो: त्रय: पञ्च वा, उक्थ्ये पञ्च सप्त वा, षोडशिनि सप्त नव वा, वाजपेये नव एकादश वा, अतिरात्रे एकादश त्रयोदश वा, अप्तोर्यामे त्रयोदश पञ्चदश वेति संख्यावृद्धिर्भवतीति देवयाज्ञिक:! इति विशेषोऽनुसन्धेय:। इति प्रात:सवने सोमपात्राणां सादनं निधानं च सोमपात्रयोजनमुच्यते। (तु०—का०श्रौ० ९।२।१-२२ विद्याधर:)।

**सोमप्रतिनिधि—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्यो...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमाभावे पूतीकार्जुनानि सोमप्रतिनिधय उच्यन्ते। तदुक्तम् 'यदि सोमं न विन्देयु: पूतीकानभिषुणुयु:। यदि न पूतीकानर्जुनानि' (तु०—तां० ब्रा० सा० ९।५।२) इति। **द्र०** ४ सोम—, सोमक्रयसाधनदशद्रव्य—।

**सोमप्रवहण—**(सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्यो...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु क्रयादूर्ध्वं प्राचीनवंशं प्रति सोमस्य नयनं सोमप्रवहणमित्युच्यते। (तु०—ऐ० ब्रा० सा० १।१३)।

**सोमप्रवहणानुवचनप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योति...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अध्वर्युर्होतारं प्रेष्यति-

सोमाय क्रीताय प्रोह्यमाणायानुब्रू३हि' इति सोमप्रवहणानुचनप्रैष इत्युच्यते (ऐ० ब्रा० सा० १ ।१३) ।

**सोमप्रवहणानुवचनीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमस्य क्रयादूर्ध्वं प्राचीनवंशं प्रति नीयमाने या ऋचोऽनूच्यन्ते ता: सोमप्रव- णानुवचनीया उच्यन्ते । ताश्च अष्टौ भवन्ति । तथाहि १. भद्रादभिश्रेय: प्रेहि बृहस्पति: पुर एता ते अस्तु । अथेमवस्य वर आपृथिव्या आरे शत्रून् कृणुहि सर्ववीर: । (ऐ० ब्रा० सा० १ ।१३) । २-४ 'सोम यास्ते मयोभुव:' (ऋ० १ ।९१ ।९-११) । ५. सर्वे नन्दन्ति यशसा गतेन' (ऋ० १० ।७१ ।१०) । 'आगान् देव ऋतुभि:' (ऋ० ४ ।५३ ।७) । ७. 'या ते धामानि हविषा'(ऋ० १ ।९० ।१९) ।८.'इमां धियं शिक्षमाणस्य' ऋ० ८ ।४२ ।३) । 'तासां त्रि: प्रथमामन्वाह त्रिरुत्तमाम् । ता द्वादश संपद्यन्ते'(ऐ० ब्रा० १ ।१३) इति विशेषोऽवधेय: ।

**सोमप्रवाक—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. असौ सोमेन यजते स त्वामार्त्विज्यमभ्यर्थयते' इति यो वक्ति स सोमप्रवाक: (तु०—द्रा०श्रौ० १ ।१ ।१९ धन्वी) । २. सोमाख्ये यज्ञे यो यजमानेन वृत: सन् ब्रह्मादीनामाह्वानं करोति स सोमप्रवाक उच्यते । **द्र०** श्रौ०प०नि० पृ० १९७ ।

**सोमप्रवाकवरण—** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु 'संकल्पानन्तरं 'तन्म इत्यादि ओं तथेत्यन्तं प्रकृतिवत् । सोमादि द्रव्यम्, इन्द्रादयो देवता:, अस्मिन् ज्योतिष्टोमेऽग्निष्टोमे (तद्विकृतावन्यस्मिन् वा) सोमे सोमप्रवाकं त्वामहं वृणे, इत सोम प्रवाकं (यजमान:) वृणीते । स भविष्यामीति वदति । इदं सोमप्रवावरणमुच्यते । **द्र०** अग्निष्टोमसंकल्प—, श्रौ०प० नि० पृ० १८७ ।

**सोमभक्षणमन्त्र—**(सा०, हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने सोमभक्षणं सर्वत्र 'अध्वर्य उपह्वयस्व' इत्युक्त्वा अर्थात् उपहवानन्तरं नासिकाभ्यामवघ्राय 'वाग्देवी सोमस्य तृप्यतु' इति मन्त्रेण कुर्यात् । अयं च सोमभक्षणमन्त्र: सर्वत्र सोमभक्षणे भवति न द्रव्यान्तरभक्षे । सोऽयं भक्षमन्त्र: सोमभक्षणमन्त्र: सोमभक्षजप इति चोच्यते (तु०—आ०श्रौ० ५ ।६ ।२ ।२२ नारायण:) ।

**सोमभक्षनिमित्त —** (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्यो..अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात: सवने वषट्कारो होमाभिषवौ चमसिता (समाख्या) इति त्रीणि सोमभक्षस्य निमित्तान्युच्यन्ते । एषां निमित्तानां मध्ये येषां किमपि निमित्तं नास्ति तेषां सोमभक्षो नास्ति (तु०—आ०श्रौ० ५ ।६ । २१ नारायण:) तत्र सोमभक्षणे त्रिषु निमित्तेषु 'वषट् कर्तु: प्रथमभक्ष:' इति प्राथम्यविशिष्टं भक्षणं वषट् कार निमित्तं विधीयते । अभिषुत्य हुत्वा भक्षयतीति होमाभिषवनिमित्तं विधीयते । होतृचमस इत्यादिसमाख्याबलात् साऽपि समाख्याभक्षणे निमित्तमस्तीति विशेषोऽवगन्तव्य: (तु०— आ० श्रौ० ५ ।६ ।२३ नारायण:) ।

**सोमभक्षहेतु —** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतअग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमभक्षणहेतव: समाख्यावाक्यवषट्कारअभिषवसहितहोमश्चेति चत्वार: । तत्र सोमभक्षणं एकपात्रे अध्वर्यो: पूर्वं होतु: । सोमभक्षणं सुब्रह्मण्यासहितोद्रा-

त्रादीनामिति शबरभाष्यमतम्। सुब्रह्मण्यारहितानां त्रयाणामेवेति वार्तिककारमतम्। सोमभक्षणे 'उपह्वयस्व' इति प्रश्नमन्त्रः, उपहूतः' इति चोत्तरमन्त्रः इति लिङ्गेन विभज्य विनियोगः इति विशेषोऽवधेयः। **द्र०** मी० को० पृ० ४३५२।

**सोममधुपर्क—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आतिथ्येष्टौ सोमासन्दीस्थापनानन्तरं यजमानो राजानं सोमं मधुपर्केण (विष्टरदानप्रभृतिफलाद्युपहारपर्यन्तया पूजया तु०—श्रौ०प०नि० पृ० ५०-५१) पूजयति। अयं सोममधुपर्क उच्यते। तत्र निवेदितां गाम् अध्वर्युः 'उत्सृजत' इति वदतीति विशेषोऽवधेयः। **द्र०** श्रौ०प०नि० पृ० २११।

**सोमयागप्रकृति—** (सा०) एकाहः अहीनः सत्रमिति त्रिस्कन्दात्मकस्य सोमयागस्य ज्योतिष्टोमातिरात्रः (अग्निष्टोमः) द्वादशाहश्चेति द्वे प्रकृती भवतः। ज्योतिष्टोमातिरात्रः (ज्योतिष्टोमोऽग्निष्टोमः) तावत् सामान्यतः सर्वेषां एकाहाहीनसत्राणां मूलप्रकृतिः, विशेषतः सर्वेषामेकाहानाम्। अत एव सर्वसोमप्रकृतिरग्निष्टोम इत्युच्यते। द्वादशाहस्तु ज्योतिष्टोमातिरात्रविकृतिभूतो द्विरात्र (द्व्यह) प्रभृत्येकादशरात्रपर्यन्तानां सर्वेषामहीनाम्, त्रयोदशरात्रादि शतरात्रपर्यन्तानां रात्रि सत्राणाम्, गवामयनादि विश्वसृजामयनान्तानामयनसंवत्सरसत्राणां प्रकृतिर्भवति। तदाह सायणाचार्यः—'उभय- (सत्राहीन) लिङ्गसद्भावात् सत्राहीनात्मको दशरात्रः। सोऽयं प्रायणीयोदयनीयातिरात्रसंयुक्तो द्वादशाहाख्यः क्रतुर्भवति। स च द्वादशाहो विधास्यमानानां द्विरात्रप्रभृतीनामहीनामेकादशरात्रादीनाम्, सत्राणां च प्रकृतिरिति सर्व (सोम) प्रकृतेरग्निष्टोमस्य विधानानन्तरं गतैः (ताण्ड्य ब्रा० ४-१५) अध्यायैर्विहितः। एवं प्रकृतिभूतौ अग्निष्टोमद्वादशाहौ येनैव क्रमेण विहितौ तेनैव क्रमेणातः परं तद्विकृतयो (एकाहाः अहीना सत्राणि विधास्यन्ते। तत्र प्रथममग्निष्टोमविकृतिभूतानेकाहान्' इति। **द्र०** तां० ब्रा० १६।१।१।

**सोमयागभेद—** (सा०) सोमयागा एकाहा अहीनाः सत्राणि चेति त्रिविधाः। पुनः सोमाः एकाहाः, अहर्गणरूपा अहीनाश्चेति द्विधा विभज्यन्ते। पुनरपि आवृता अनावृत्ताश्चेति द्विविधा भवन्ति। तत्र अनावृत्ता एकाहाः। आवृत्ता अहीन रूपाः सत्ररूपाश्च। द्विरात्रमारभ्यैकादशरात्रपर्यन्ता अहीनाः। द्वादशरात्रः (द्वादशाहः) अहीनरूपः सत्ररूपश्च त्रयोदशरात्रमारभ्योपरितनानिसत्राणि। तान्यपि द्विविधानि रात्रिसत्राणि अयनात्मकसत्राणि च। तत्र त्रयोदशरात्रमारभ्य शतरात्रपर्यन्तानि रात्रिसत्राणि, संवत्सरमारभ्योपरितनान्ययनसत्राणि। संवत्सरायनसत्रादूर्ध्वभाविनामयनसत्राणां गवामयनं प्रकृतिः। गवामयनस्य प्रकृतिः द्वादशाहः। तस्य च ज्योतिष्टोमोऽग्निष्टोमः प्रकृतिरिति प्रकृतिभावरूपो विशेषोऽवगन्तव्यः। (तु०—तै० सं० सा० ७।५।२)। **द्र०** श्रौतयज्ञानां प्रकृतिविकृत्युभयानुभयात्मकत्व—।

**सोमयागात् प्राचीनेष्टि—** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्यो..अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रधानसोमयागात् प्राग्भाविन्यो दीक्षणीयाप्रायणीयाऽऽतिथ्याउपसदः इति चतस्र इष्टयो भवन्तीति। **द्र०** सोमाङ्गप्रधान—।

**सोमयाजिन्—** (सा०) आधानानन्तरं यः सोमेनेष्टवान् स सोमयाजी इत्युच्यते। तस्य दर्शे नित्यः सान्नाय्ययागः। द्र० असोमयाजिन्—।

**सोमराजोपावरोहण —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिकपरिधिस्रुगभिमर्शनानन्तरं 'विष्णूनिस्थ' इत्यादि प्राकृतमन्त्रेण सर्वाण्याज्यानि अभिमन्त्र्य अग्नीषोमीयवत् स्रुवं ध्रुवायामवदधाति। यजमानः 'यन्मे अग्ने' इत्यादि पठति। अध्वर्युः अप उपस्पृश्य 'एहि यजमान' इति यजमानमामन्त्र्य पूर्वया द्वारा हविर्धानं प्रपाद्य नीडे निहितं यच्चर्म तत्फलकयोः प्राचीनग्रीवमुत्तरलोम 'यज्ञ प्रतितिष्ठ' इति मन्त्रेण तूष्णीं वोपस्तृणाति। तस्मिन्नुपांशुसवनातिरिक्तांश्चतुरो ग्राब्णश्चतुर्षु दिक्षु परस्पराभिमुखाभिषवप्रदेशान् स्थापयित्वा ईषयोर्मध्यमार्गेण राजानमुपावहरन्ति-'हृदे त्वा नमते त्वा दिवे त्वा सूर्याय त्वोर्ध्वमिममध्वरं कृधि दिवि देवेषु होत्रा यच्छ' इति। 'सोमराजन् एहि अवरोह मा भेर्मा संविक्था मा त्वा हिँसिष प्रजास्त्वमुपावरोह प्रजास्त्वामुपावरोहन्तु' इति। तदिदं सोमराजोपावरोहणमुच्यते। द्र० सौमिकपरिधिस्रुगभिमर्शन—, श्रौ०प० नि० पृ० २५८, ४. सोम—।

**सोमरूप—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे देवैरनुष्ठितस्य प्रथमस्याग्निष्टोमाभिधस्य सोमयागस्य दीक्षणीयेष्टिः, प्रायणीयेष्टिः, क्रयः, सोमांशवः, आतिथ्येष्टिः, प्रवर्ग्यः, (धर्मः) उपसदिष्टयः, अभिषवः, राजासन्दी, दक्षिणवेदिः, उत्तरवेदिः, बर्हिः, यूपः, प्रणीताग्निः, हविर्धानम्, आग्नीध्रम्, पत्नीशालम्, प्रैषाः, प्रयाजाः, अनुयाजाः, वषट्कारः, अग्नीषोमीयसवनीयानूबन्ध्यापशवः, हवींषि (पुरोडाशाः) सामिधेन्यः, याज्याः, वषट्काराः, धानाः, करम्भः, सक्तवः, परीवापः, पयः, दधि, आमिक्षा, वाजिनम्, स्तोत्रियाः, (स्तोत्रियतृचाः), अनुरूपः, धाय्याः, प्रगाथाः, अर्धर्चाः, उक्थाः, निविदः, प्रणवः सोमाप्यायनम्, प्रातःसवनम्, माध्यन्दिनसवनम्, तृतीयसवनम्, वायव्यपात्राणि, सृतः, द्रोणकलशः, कुम्भ्यौ, अम्भृणौ, स्थाल्याः, ग्रहाः, स्तोमाः, विष्टुतयः, उक्थ्यः शस्त्राणि, साम, अवभृथः, इडाः, भक्षः, सूक्तवाकः, शंयुवाकः, पत्नीसंयाजाः, समिष्टयजुः, संस्था, व्रतम्, दीक्षा, दक्षिणा, श्रद्धा, सत्यम्। इत्येतावन्ति सोमस्य यज्ञस्य देवैः प्रजापतिना च दृष्टानि (कृतानि) रूपाणि भवन्तीति सोमस्य रूपाणि (संपदः पदार्थानि विषया वा) उच्यन्ते। (तु०—मा०सं० १९।१२-३१ उ० म० भाष्यम्)। द्र० सौत्रामण्यां सोमसंपत्साम्य—।

**सोमविधा—** (सा०) अग्निहोत्रं दर्शपूर्णमासे चातुर्मास्यानिपशुः सोमः इति पञ्चविधे यज्ञे य एष सोमयज्ञः तस्मिन् सुत्यादिनेऽनुष्ठेयेभ्यः सवनेभ्यः प्राचीनं दीक्षणीयादिकं यदस्ति सोऽयमेकः प्रकारः एका विधा। प्रातःसवनं माध्यन्दिनं सवनं तृतीयसवनं चेति प्रकारत्रयं तिस्रो विधाः। सवनेभ्य ऊर्ध्वमवभृथमारभ्योदवसानीयान्तं यत् कर्मजातमस्ति सोऽयं पञ्चमः प्रकारः पञ्चमी विधा। इति सोमे पञ्च विधाः सोम विधा उच्यन्ते। एतासां विधानां अग्निहोत्रादियज्ञेष्वभावात्सोमयागः संपन्नतम उच्यते इति विशेषोऽवगन्तव्यः। तदुक्तमैतरेयारण्यके-'यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः, स एष यज्ञानां संपन्नतमो

यत्सोमः, एतस्मिन् ह्येताः पञ्च विधा अधिगम्यन्ते यत्सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी इति (तु०—ऐ० आ० सा० २।३।३ सायणः)। द्र० सोमरूप—।

**सोमविमान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु क्रयणाभिमर्शनानन्तरम् 'अभि त्यं देव ँ सवितारमूण्योः कविक्रतुमर्चासि सत्यसवस ँ रत्नधामभिप्रियं मतिमूर्ध्वा यस्यामतिर्भा आदिद्युतत् सवीमनि हिरण्यपाणि रमिमीत सुक्रतुः कृपा सुवः' इत्यस्य मन्त्रस्य पञ्चकृत्व आवृत्या सोमस्य पञ्च मुष्टीर्विमाति। तत्र प्रथमविमानं अङ्गुष्ठसहितया प्रदेशिन्या, द्वितीयं सङ्गुष्ठोपकनिष्ठिकया, तृतीयं तथैव प्रदेशिन्या, चतुर्थं तथैव कनिष्ठिकया, पञ्चमं तथैव मध्यमया। इति समन्त्रकं विमानम्। ततस्तूष्णीं पञ्चकृत्वो विमाति। तच्च कनिष्ठिकया मध्यमया, कनिष्ठिकया, प्रदेशिन्या, महानाम्न्येति क्रमेण। एवं दशकृत्वो विमानः सन् क्रीयमाणस्य सोमस्यार्धं मुष्टिदशकरूपं द्विगुणिते वस्त्रे गृहीत्वा 'प्रजाभ्यस्त्वा' इति मन्त्रेणावशिष्टमर्धं गृह्णाति। तच्च विमिते सोमे प्रक्षिपति (इत्यमन्त्रकं विमानम्)। तदेतत्सोमविमानमुच्यते। द्र० क्रयणाभिमर्शन—द्र० श्रौ०प०नि० पृ० २०६।

**सोमवेष्टन—**(आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमविमानानन्तरं वस्त्रस्य प्रान्तानेकत्र करोति-'प्राणाय त्वा' इति प्रदक्षिणमुष्णीषेण वेष्टयति। 'व्यानाय त्वा' इति प्रान्तभागान् उपगूहति। अङ्गुल्या मध्ये वायुसंचारार्थमवकाशं करोति। एतत् सोमवेष्टनमित्युच्यते। द्र० श्रौ०प०नि० पृ० २०६ सोमविमान—।

**सोमशब्द—** (सा०) सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धः न सोमरसे। मी०को० पृ० ४३५८। सोमलता स्वीयक्षेत्रेऽपि वर्धयितुं शक्यते। सोमक्रयस्तु अपूर्वार्थत्वात् पुनः कर्तव्य एव। द्र० मी०को० पृ० ४३५५।

**सोमशोधनादिप्रैषाङ्गहोम—** (आध्व०) प्रायणीयेष्ट्यनन्तरं यज्ञयोगमन्त्रजपान्ते गार्हपत्ये स्मार्तवदाज्यं संस्कृत्याऽऽहवनीये स्रुवेण जुहोति—'कविर्यज्ञस्य वितनोति पन्थां नाकस्य पृष्ठ अधिरोचने' दिवः येन हव्यं वहसि यासि दूत इतः प्रचेता अमुतः सनीयान् स्वाहा' इति। कवय अग्नय इदं इति यजमानस्त्यजति। अयं होमः सोमशोधनादिप्रैषाङ्गहोमः इत्युच्यते। द्र० श्रौ०प० नि० पृ० २०३; २. प्रायणीयेष्टि—।

**सोमसंस्था—**(सा०, औ०) अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्यामः इति सप्तक्रतवः सोमस्य सप्त संस्थाः सोमसंस्था उच्यन्ते। सोमसंस्थासु येन स्तोत्रेण यः क्रतुः सन्तिष्ठते (समाप्यते न ततः परं स्तोत्रान्तरं (प्रधानं) भवति सक्रतुस्तत्स्तोत्रनाम्नाऽऽख्यायते इति संप्रदायः। द्र० २. अत्यग्निष्टोम—।

**सोमसंस्थासु स्तोत्रशस्त्रसामान्य—**(सा०) अग्निष्टोमः अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः अतिरात्रः अप्तोर्यामः इति सप्तसु सोमसंस्थासु यस्यां यावन्ति स्तोत्राणि सामगैस्तूयन्ते तस्यां तावन्त्येव शस्त्राणि होतृभिः शस्यन्ते। इति सोमसंस्थासु स्तोत्रशस्त्रयोः सामान्यमुच्यते (तु०—का०श्रौ० भूमिका विद्याधरः)।

**सोमस्थापन—** (आ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमक्रयणानन्तरं यजमानः 'उदायुषा स्वायुषोदोषधीनाँ रसेनोत्पर्जन्यस्य धामभिरुदस्थाममृताँ अनु' इत्यनेन मन्त्रेण राजानमादायोत्तिष्ठति। ततो राजानं स्वशिरसि निधाय 'उर्वन्तरिक्षमन्विहि' इति प्राङ्मुखस्य शकटस्य दक्षिणतोऽभ्येति। ततोऽध्वर्युः 'अदित्याः सदोऽसि' इति शकटस्य नीडे कृष्णाजिनमास्तृणाति। यजमानः 'आदित्याः सद आसीद' इति कृष्णाजिने सोमं राजानं स्थापयति। अध्वर्युयजमानौ 'अस्तम्नाद्यामृषभो अन्तरिक्षममिमीत परिमाणं पृथिव्याः। आसीदद्विश्वा भुवनानि सम्राड् विश्वेत्तानि वरुणस्य व्रतानि' इत्यनेन राजानमुपतिष्ठेते। अध्वर्युः—'वनेषु व्यन्तरिक्षं ततान वाजमर्वत्सु पयो अध्नियासु। हृत्सु क्रतुं वरुणो विक्ष्वग्निं दिवि सूर्यमदधात् सोममद्रौ'। राजानं प्रग्दिशं वर्जयित्वा सर्वासु दिक्षु उत्तमन्त्रेण वाससा वेष्टयति। 'उदु त्यं जातवेदसं देवं वहन्ति केतवः। दृशे विश्वाय सूर्यम्' इति पूर्वदिशि ऊर्ध्वग्रावमन्तर्लोम कृष्णाजिनं बध्नाति। इदं सोमग्रहणपूर्वकोत्थानमारभ्यैतदन्तं कर्म शकटे सोमस्थापनमुच्यते। द्र० श्रौ०प०नि० पृ० २०८, सोमक्रयण—।

**सोमस्वस्थान—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सर्वे पवमानाः (बहिष्पवमानमाध्यन्दिनपवमानार्भवपवमानाः) सोमस्य स्वस्थानमित्युच्यते तेषां सोमदेवत्यत्वात् (तु०—द्रा०श्रौ० धन्वी)।

**सोमाङ्गप्रधान —** (सा०) सोमयज्ञानां प्रकृतिविकृतिभूतानामेकाहाहीनसत्राणां दीक्षणीयादीष्टीनां हवींषि अग्नीषोमीयादयः पशवश्चाङ्गानि (पूर्वाङ्गानि)। ग्रहचमसस्थस्य सोमस्य (रसस्य) यागः प्रधानम्। यज्ञपुच्छादय उत्तराङ्गानि। इति सोमयाजानामङ्गप्रधाने उच्येते। अङ्गानि प्रधानस्य पुरस्तादुपरिष्टाच्च भवन्तीति विशेषोऽवधेयः।

**सोमातिपवित —** (सा०, अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ एकाहप्रकरणे तीव्रसुत्येकाहे सोमातिपवितं यजयेत्। तत्र सोमातिपवितो नाम १. 'य इष्ट्वा पापीयान् स्यात् स सोमातिपवितः इति शाण्डिल्यः'। 'यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानञ्जय्यः' (ला०श्रौ० ८।१०।९-१०)। २. सोमयागोत्तरकालं नष्टश्रीकः स सोमातिपवितः। अथवा ज्येष्ठे चानिष्टिनि कनीयसीष्टिनि सति सोमातिपवितः। अर्थात् यः कनीयसि भ्रातरि इष्टवति सति स्वयं नेष्टवान् सोमेन स सोमातिपवितः उच्यते (तु०— तां० ब्रा० सा० १८। ५।४)।

**सोमातिरेके शस्त्रातिशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायश्चित्तविधौ सोमातिरेको नाम सवनार्थो यः सोमः स सवने परिसमाप्ते यद्यतिरिच्येत तदा सोमातिरेक इत्युच्यते। स प्रायश्चित्तम्। तस्यापनुत्त्यर्थं होत्रा स्तोत्रियानुरूपैः, प्रगाथैः, स्तोत्रियानुरूपैः, स्तोमातिशंसनार्थाभिर्ऋग्भिर्याज्याभिश्च शस्त्रोपजनः क्रियते। (आ०श्रौ० ६।७।१; स्वशस्त्रं वर्धयतीत्यर्थः। तत्र यदि प्रातः सवने सोमोऽतिरिच्यते तदा होतुः शस्त्रस्य स्तोत्रियस्तृचः—'अस्ति सोमो अयं सुतः' (ऋ० ८।९४।४-६)। अनुरूपस्तृचः— 'गौर्धयति मरुताम्' (ऋ० ८।९४।१-३)। सोमातिशंसनार्थे ऐन्द्री वैष्णवी च ऋचौ—

'महाँ इन्द्रो य ओजसा' (ऋ० ८।६।१), 'अतो देवा अवन्तु' (ऋ० १।२२।१६) इति द्वे एवर्चौ शंस्तव्ये एकायर्चा द्वाभ्यां वा ऋग्भ्यां प्रातः सवने स्तोमोऽतिशंस्तव्यः, अपरिमिताभिः (त्रिप्रभृतिभिः। ऋग्भिरुत्तरयोः सवनयोः स्तोमातिशंसनं कर्तव्यमित्युक्तत्वात् (तु०—आ०श्रौ० ६।७।२; ७।१२।४-५ नारायणः)। श्रौतकोशे तु प्रातः सवने ऋ० ८।६।१-४; १।२२।१६-१८ इति सप्त ऋच उद्धृताः द्र० श्रौ०को० २ भा० पृ० ६४५। याज्या—'आ नो याहि' (ऋ० ८।६।३६) इति। अथवा वैकल्पिकी 'त्रीणि यदा विचक्रमे' (ऋ० १।२२।१८), अथवा 'विष्णोः कर्माणि पश्यत' (ऋ० १।२२।१९), अथवा 'सं वां कर्मणाम्' (ऋ० ६।६९।१) इति। द्र० श्रौ०को० २ भा० पृ० ६४५। नारायणस्तु 'सं वां कर्मणाम्' इत्यैन्दावैष्णव्या त्रिष्टुभा एव गायत्रीं छन्दः परित्यज्य यष्टव्यमिति सिद्धान्तमाह (तु०— आ०श्रौ० ६।७।५)। यदि माध्यन्दिने सवने सोमोऽति-रिच्यते तदा होतुः शस्त्रस्य स्तोत्रियः प्रगाथस्तृचः—'बण्महा ँ॒ असि सूर्य' (ऋ० ८।१०१।११-१२)। अनुरूपः प्रगाथस्तृचः-'उदु त्यद् दर्शतम्' (ऋ० ७।६६।१४-१५)। स्तोमातिशंसनार्था ऋचः—'महा ँ॒ इन्द्रो नृवद् (ऋ० ६।१९।१-१३), 'विष्णोर्नुकम्' (ऋ० १।१५४।१-६) इत्येकोनविंशतिरैन्द्रावैष्णवीर्ऋचः शंसति 'अपरिमिताभिरुत्तरयोः सवनयोः' (आ०श्रौ० ७।१२।५) इत्युक्तत्वात्। याज्या—'या वि या विश्वासां श्वासां जनितारा' (ऋ० ६।६९।२) इति। (तु०—आ०श्रौ० ६।७।७ श्रौ०को० २ भा० पृ० ६।४९-५०)। यदि तृतीयसवने सोमोऽतिरिच्येत तदा उत्तरोत्तरश्चतुष्टोमस्य ज्योतिष्टोमस्य चतस्रः संस्थाः कुर्युः। अर्थात् प्रागतिरात्रात् यद्यग्निष्टोमे तृतीयसवनेऽतिरेकः स्यात् तदोक्थ्यं कुर्युः। यद्युक्थ्ये षोडशिनम्। यदि षोडशिन्यतिरात्रम्। एवं च यद्यतिरात्रेऽति रात्रादतिरेकः स्यात्तदास्तोत्रियस्तृचः—'प्र तत्ते अद्य' (ऋ० ७।१००।५-७)। अनुरूपस्तृचः—'प्र तद्विष्णुस्तवते' (ऋ० १।१५४।२-४)। स्तोमातिशंसनार्था ऋचः—'महा ँ॒ इन्द्रो नृवत्, (ऋ० ६।१९।१-३३), विष्णोर्नुकम्' (ऋ० १।१५४।१-६)। याज्या—'या विश्वासां जनितारः' (ऋ० ६।६९।२) इति माध्यन्दिनसवनवत्। यद्वा 'त्वेषमित्था समरणम्' (ऋ० १।१५५।२) इति याज्या भवति। इति सोमातिरेके शस्त्रातिशंसनमुच्यते। (तु०—आ०श्रौ० ७।७।१-७ नारायणः)।

**सोमातिरेके स्तोत्रादिस्तवन—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रायश्चित्तविधौ सोमातिरेको नाम सवनार्थो यः सोमः स सवने परिसमाप्ते यद्यतिरिच्येत तदा सोमातिरेक इत्युच्यते। स प्रायश्चित्तनिमित्तं भवति। तस्य परिहाराय उद्गातारः स्तोत्रोपजनं कुर्युः। अधिकं स्तोत्रं स्तुयुरित्यर्थः। तदुक्तमाश्वलायनेन 'स्तोमातिरेके स्तुतशस्त्रोपजः (तु०—आ०श्रौ० ७।७।१ नारायणः)। (क) तत्र प्रातः सवने सन्ति चत्वारि आज्यस्तोत्राणि। तत्र होतुः स्तोत्रे सोमपूर्णाश्चमसा होतव्याः। तत्र होतृमुख्येषु चतुर्षु चमसगणेषु अन्त्यचमसगणे (द्र० चमसगण—)। द्रोणकलशाधवनीयपूतभृत्सु विद्यमानः सकलसोमरस आसेचनीयः। तत्र यद्यन्त्यस्य चमसगणस्य होमात् प्राक्

सोमोऽतिरिक्तो दृश्यते। तं चमसगणं पुनरानीयं होतव्यम्। यदान्त्यचमसगणस्य होमादूर्ध्वं दृश्येत तदिदं प्रायश्चित्तम्। अयमर्थः—प्रातःसवनसमाप्तेरूर्ध्वं यदि सोमोऽतिरिक्तोऽधिको दृश्येत तदाऽध्वर्यवः तं सोमं होतृचमसमुख्येषु चमसेष्वानीय स्तोत्रमुपाकुर्वन्ति तदा उद्गातारः 'अस्ति सोमो अयं सुतः' (साम० १७८५-८७) इति मरुत्वतीषु मरुच्छन्दयुक्तासु गायत्रीषु ऋक्षु गायत्रेण = 'तत्सवितुर्वरेण्यम्' इयस्यामुत्पन्नेन गायत्रसाम्ना स्तुवीरान्। तदुक्तम्—'यदि प्रातःसवनात्। सोमोऽतिरिच्येत 'अस्ति सोमो अयं सुतः' इति मरुत्वतीषु गायत्रेण स्तुयुः' (तु०—तां० ब्रा० सा० ७ ।९ ।१)। (ख) यदि अयं सोमो माध्यन्दिनं सवनमभिलषन्नेवातिरिच्यते। मरुत्वतीषु स्तुवन्ति। मरुत्वतीयं माध्यन्दिनसवनम्। अतो मरुत्वतीषु स्तवनेनातिरिक्तस्य सोमस्य माध्यन्दिनसवनप्राप्तिः। यस्मादेष सोमः प्रातः सवनसंबद्धस्तस्मादेव गायत्रीषु स्तुवन्ति। गायत्रं हि प्रातः सवनम्। यस्माच्च प्रातः सवनान्तिमात् स्तोमात् त्रिवृतोऽतिरिच्यते सोमः तन्निमित्तकस्य स्तोत्रस्य सवनानि मस्तोत्रस्तोमः (पञ्चदशः) कार्यः (तु०—तां० ब्रा० सा० ९ ।७ ।२-३)। माध्यन्दिनस्य पवमानस्य पुरस्तात् स्तुयुः। यावदाज्यानां स्तोत्रं तावत् स्तोत्रं भवति। इति विशेषोऽवधेयः। द्र० श्रौ०को० २. भा० पृ० ६४४-४५)। (ग) यदि माध्यन्दिनसमाप्तेरूर्ध्वं सोमोऽतिरिच्यते माध्यन्दिनस्यान्त्यचमसगणे हुते सोमोऽधिको दृश्यते चेत् तदा तं सोममध्वर्यवः चमसेषून्नीय स्तोत्रमुपाकुर्वन्ति तदोद्गातारः 'बण्महाँ असि सूर्य' (साम० १७८८-८९) इत्यादित्यशब्दयुक्तासु ऋक्षु 'अभि प्र गोपतिं गिरा' (साम० १६८) इत्यस्यामुत्पन्नेन गौरीवितेन साम्नास्तुयुः। तदुक्तम्—'यदि माध्यन्दिनात् सवनादतिरिच्येत। 'बण्महाँ असि सूर्य' इत्यादित्यवतीषु गौरीवितेन स्तुयुः' इति (तु०—तां० ब्रा० सा० ९ ।७ ।६ यो माध्यन्दिनात् सवनात् सोमोऽतिरिच्यते एव तृतीयसवनमेव नितरमिच्छन्नतिरिच्यते। यस्मादेष सोमो माध्यन्दिनादतिरिच्यते तस्मादेव वृहतीषु स्तुवन्ति। माध्यन्दिनं सवनं हि बार्हतमुच्यते। यस्माच्च माध्यन्दिनसवनान्तिमात् स्तोमात् पञ्चदशादतिरिच्यते। सोमः तन्निमित्तकस्य स्तोत्रस्य सवनान्तिमस्तोत्रस्तोमः (सप्तदशः) कार्यः (तु०—तां० ब्रां० सा० ९ ।७ ।७-८)। (घ) यदि तृतीयसवनात् सोमोऽतिरिच्यते तदोद्गातारः 'किमित्ते विष्णो' (साम० १६२५-२७) इति विष्णुदेवत्यासु शिपिविष्टशब्दयुक्तासु ऋक्षु 'अभि प्र गोपतिं गिरा' (साम० १६८) इत्यस्यामुत्पन्नेन साम्ना स्तुवीरन्। यस्माद् गौरीवितं सामातिरिक्तं सोमश्च सवनादतिरिक्तः तस्मात् शिपिविष्टवतीषु गौरीवितेन स्तुवन्ति। तदुक्तम्—'यदि तृतीयसवनादतिरिच्येत विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुः (तु०—तां० ब्रा० सा० ९ ।७ ।९-१०; श्रौ०को० २. भा० पृ० ६५१-५२) (ङ) अथ तृतीयसवने सोमातिरेके द्वितीयः पक्षः—यदि तृतीयसवनात् त्रिसंस्थात् अग्निष्टोमात् सोमोऽतिरिच्येत तदा तृतीयसवनादतिरिक्तेन सोमेन अग्निष्टोमादन्यत् संस्थान्तरं कार्यम्। अर्थात् तेन अग्निष्टोमादुपरिते उक्थ्यातिरात्रसंस्थे अनुष्ठेये। सामशाखिनां मते षोडशी न स्वतन्त्रः क्रतुः इति तस्य संस्थाभावः। तत्र यः सोमोऽग्निष्टोमादतिरिच्यते (स एष उक्थस्तोत्राणि नितरामभिलषन् अभिप्रा-

प्तयेऽतिरिक्तोभवति। यद्युक्थेभ्योऽतिरिक्तः स्यात् तदाऽतिरात्रः कार्यः। उक्थेभ्योऽतिरिक्त एष सोमः अतिरात्रमेवाभिलषन् अभ्यतिरिच्यते। अतोऽतिरात्रः कार्य इत्यर्थः। (च) यदि अतिरात्रात् पर्यायत्रयात् सन्धिस्तोत्राच्च सोमोऽतिरिच्येत तदा विष्णुदेवत्यासु शिपिविष्टशब्दवतीषु 'किमित्ते विष्णो' इति ऋक्षु बृहत्साम्ना स्तुयुः। तत्र यः सोमोऽतिरात्रादन्तिमसंस्थाया अतिरिच्यते स एवातिरिक्त उच्यते। यस्तु अग्निष्टोमादिकाददतिरिच्यते सोऽतिरिक्तो न भवति, उत्तरोत्तरसंस्थाया विद्यमानत्वात्। अतिरात्रादूर्ध्वमन्यत् संस्थान्तरं नास्तीत्यतोऽतिरिक्तः सोम उपयोगाभावान्निरर्थको भवेत्। अतोऽत्रैव प्रायश्चित्तमिति विशेषोऽवधेयः। यश्च सोमोऽतिरात्रसंस्थायाअतिरिच्यतेस्वर्गमेवलोकमेषोऽभिलषन्नभ्यतिरिच्यते। अतिरात्रादधिकस्य संस्थराभावात् साम्नां मध्ये बृहत्सामैवामुं स्वर्गं लोकमाप्तुमर्हतीति बृहत्साम्ना स्तुवन्तीति च विशेषोऽनुसंधेयः। तु०—तां० ब्रा० सा० ९।७।११-१२)। श्रौ०को० २ भा० २६५१-५२)।

**सोमातिरेके स्तोत्रातिस्तवन—** (औ०) सोमयज्ञेषु प्रकृतिभूत... चैकाहाहीनेषु यस्य प्रातःसवने सोमोऽतिरिच्यते माध्यन्दिनं सवनं कामयमानः (स सोमः) अभ्यतिरिच्यते इत्यवगन्तव्यम्। स (अध्वर्युः) प्रातः सवने सोमेऽतिरिक्ते प्राङायन्नाह 'होतुश्चमसमुन्नयध्वम्, उन्नेतः सर्वश एव राजानमुन्नयमातिरीरिचः' इति। तत्र होतृचमसमेव प्रथममुन्नयन्ति, यथोपपादमितरान् (चमसान्)। सर्वश एव राजानं समुन्नीयोत्तरवेद्यां संसादयन्ति। अथापः उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा (गत्वा) स्तोत्रमुपाकरोति। तत उद्गातारः स्तुवते—तदेतद् गायत्रं साम पञ्चदशं 'गौर्धयति मरुताम्' (साम० १४९, ऋ० ८।९४।१) इति (गायत्रीषु। धयदवतीषु कुर्वन्ति। होत्रे 'एषोत्तमा' इति प्राहुः। समानमत ऊर्ध्वम्। इति नु छन्दोबह्वचेषु कामयमानेषु। द्र० सोमातिरेके स्तोत्रातिस्तवन—, श्रौ०को० २. भा० पृ० ६८४-८५। यस्य माध्यन्दिने। यस्य सवने सोमोऽतिरिच्यते, आदियं तृतीयसवनं कामयमानः (स सोमः) अभ्यतिरिच्यते इति (अवगन्तव्यम्) स (अध्वर्युः) माध्यन्दिने सवने सोमेऽतिरिक्ते प्राङायन्नाह—'होतुश्चमसमुन्नयध्वम्, उन्नेतः सर्वश एव राजानमुन्नयमातिरीरिचः' इति होतृचमसमेव प्रथममुन्नयन्ति, यथोपपादमितरान् (चमसान्) सर्वश एव राजानं समुन्नीयोत्तरवेद्याँ सादयन्ति। अथाप उपस्पृश्य बर्हिषी आदाय वाचंयमः प्रत्यङ् द्रुत्वा स्तोत्रमुपाकरोति। ततः उद्गातारः स्तुवते। तदेतद् गौरीवीतं सम सप्तदशं 'बण्महाँ असि सूर्य (साम० १७८८-८९)। इत्येतासु कुर्वन्ति। होत्रे 'एषोत्तमा' इति प्राहुः। समानमत ऊर्ध्वम्। इति नु छन्दोगबह्वचीषु कामयमानेषु। द्र० १. सोमातिरेके स्तोत्रस्तवन- श्रौ०को० २ भा० पृ० ६८४-८५। यस्य तृतीयसवने सामोऽतिरिच्येत उक्थ्यं कुर्वीत। इति नु छन्दोगबह्वचेषु कामयमानेषु। द्र० १. सोमातिरेके स्तोत्रातिस्तवन—, श्रौ०को० २ भा० पृ० ६८४-८५)।

**सोमाप्यायन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मदन्तीयाचनानन्तरं यजमानान्ताः सर्वे ऋत्विजो मुख्यादिक्रमेण मदन्तीरुपपृस्यो-

पोत्थाय सोमसमीपं गत्वा तं विस्रस्य हिरण्यमवधाय सोमं राजानं मदन्ती जलेनाप्याययन्ति—'अँ्शुरँ्शुस्ते देव सोमाप्यायतामिन्द्रायैकधनविद आ तुभ्यमिन्द्रः प्यायतामा त्वमिन्द्राय प्यायस्व' इति मन्त्रेण। अध्वर्युः— यजमानं वाचयति 'आप्यायय सखान्तसन्या मेधया स्वस्ति ते देव सोम सुत्यामशीय' इति। तदिदं सोमाप्यायनमुच्यते। द्र० ऐ० ब्रा० १।२६, श्रौ०प०नि० पृ० २१२। मदन्तीयाचन—।

**सोमाभिषव—** (आध्व) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. अभिषूयते इति अभिषवः। सोमस्य अभिषवः सोमाभिषवः। स द्विविधः। उपांशुग्रहाभिषवो महाभिषवश्च। तत्र पूर्वं महाभिषवः क्रियते पश्चादुपांशु ग्रहाभिषवः। उपांशुग्रहाभिषवेन सोमरसेन उपांशुग्रहहोमो भवति। महाभिषवेन सोमरसेन अन्तर्यामादिध्रुवग्रहान्तानां ग्रहाणां होमा विधीयते इति विशेषोऽवधेयः। द्र० उपांशु पात्रहोम—, उपांशुग्रहाभिषवमहाभिषवयोर्भेदेनानुष्ठान- २. सोमाभिषवः वेद्यां सदसः प्राचीने हविर्धानमण्डपे दक्षिणहविर्धानशकटसमीपे क्रियते. द्र० मी०को० पृ० ४३४५।

**सोमाभिषवप्रथमपर्याय—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... प्रातःसवनेंऽशुपरिप्लावनान्तरं होतृचमसादं शून् (सोमखण्डान्) आदाय चर्मणि निधाय राजानं होतृचमसोदकेनोपसिच्य प्रत्यात्मानं सर्वे विभज्य अंशूनाकृष्य यावद् रसनिस्रावमभिषुण्वन्ति। आहरोपसृजेति अंशुपरिप्लावनाद्येतदन्तं त्रिवारं समन्त्रकं कृत्वा चतुर्थे आहरोपसृजेनि प्रैषमात्रम्। अन्यत्तूष्णीम्। ततो राजानं हस्तेन निष्पीड्य सम्भरणीयकलशे रसं गृहीत्वा अध्वर्युरन्तरेणेषे उन्नेत्रे प्रयच्छति। उन्नेता आधवनीयस्याः अपोऽन्यस्मिन्नम्भ्रणेऽवनीयाधवनीये पवित्रं विहत्य सम्भरणीमवनयति। एष एकः पर्यायः। सोऽयं सोमस्य प्रथमाभिषव उच्यते। द्र० अंशुपरिप्लावन्, श्रौ०प०नि० पृ० २७२।

**सोमाभिषवद्वितीयपर्याय—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने सोमाभिषवप्रथमपर्यायानन्तरम् 'आहरोपसृज' इत्यादि त्रिवारं समन्त्रकम्। सकृत्तूष्णीं च कृत्वा अम्भ्रणान्तरस्था आधवनीया अप उपसृजति। सम्भरणीयमवनयतीत्यन्तं प्रथमपर्यायोक्तं करोति। सोऽयं सोमाग्निषवद्वितीयपर्याय उच्यते। द्र० सोमाभिषवप्रथमपर्याय — द्र० श्रौ० प० नि० पृ० २७२।

**सोमाभिषवतृतीयपर्याय—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... सोमप्रथम संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने सोमाभिषवद्वितीयपर्यायवत् तृतीयः पर्यायः। तृतीये अम्भ्रणे आधवनीया अपोऽवनयतीति विशेषोऽवगन्तव्यः। सोऽयं सोमाभिषवतृतीयपर्याय उच्यते। द्र० श्रौ०प०नि० पृ० २७२-७३।

**सोमावस्थापन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानमण्डपे दक्षिण शकटस्याधस्तात् पश्चिमभागेऽभिषवार्थं सोमोऽवस्थापितो भवति। इति सोमस्यावस्थापनमुच्यते। (तु०—तां० ब्रा० सा० १।२।१)।

**सोमावेक्षण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृ-

तिषु चैकाहाहीनसत्रेषु सोमवेष्टनानन्तरं 'प्रजाभ्यस्त्वामनुप्राणिहि प्रजास्त्वामनु-प्राणन्तु' इति यजमानं सोममवेक्षयति । तत-स्तत्सोमवद् वस्त्रं धर्मणि निदधाति । तदेत-त्सोमावेक्षणमुच्यते । **द्र०** सोमवेष्टन— **द्र०** श्रौ०प० नि० पृ० २०६ ।

**सोमासन्दीप्रतिष्ठापन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमा-यां सोमप्रथमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु आतिथ्येष्टौ चत्वारो ब्राह्मणा राजा सन्दीं धृत्वा शालां प्रवेश-यन्ति । 'या ते धामानि हविषा यजन्ति ता ते विश्वा परिभूरस्तु यज्ञम्' । इत्यनेन मन्त्रेण यजमानः सोममादत्ते । 'गयस्फानः प्रतरणः सुवीरो वीरहा प्रचरा सोमदुर्यान्' इति तं शालां प्रवेशयति । आसन्दीधरा ब्राह्मणारा-जासन्दीं वेद्युत्करयोर्मध्येन नीत्वाऽग्रेणाह-वनीयं पर्याणीयाहवनीयस्य दक्षिणतः सादयन्ति । तथैव यजमानः सोमं नीत्वा आसन्दीसमीपे तिष्ठति । अध्वर्युः 'आदित्याः सदोऽसि' इति आसन्द्यां कृष्णा-जिनमास्तृणाति । यजमानः 'आदित्याः सद आसीद' इति कृष्णाजिने राजानं स्थापयति । 'वरुणोऽसि धृतव्रतो वारुणमसि' इति राजा-नमुपतिष्ठते । अध्वर्युः 'शंयोर्देवाना संख्यात्' इति कृष्णाजिनान्तानेकीकृत्वा रज्जवा बद्ध्वा मध्यमे वंशे प्रग्रथ्नाति । 'मा देवानामयसश्छिस्महि' इति आसन्द्याः पाश्चिमपादयोर्मध्ये राजपादौ प्रक्षालयामि' इति भावयन्नञ्जलिना जलं सिञ्चति । ततः कश्चित् शूद्रस्तूष्णीं प्रक्षालयति । 'तत्त्वा यानि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः अहेडमानो वरुणेह बोध्युरुशँ स मा न आयुः प्रमोषीः, इति यजमानः । पुनरुपति-ष्ठते । तदेतावत् कर्म सोमासन्दीप्रतिष्ठाप-नमुच्यते **द्र०** । श्रौ०प०नि० पृ० २१० ।

**सोमोपस्थान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत-अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु अग्नीषोमीयप्रणयनप्रैषानन्तरं होत्रा अग्नी-षोमीयप्रणयनीयासु प्रथमायामृचि त्रिरुक्ता-यामिध्मं शालामुखीयादुद्यम्य पूर्वया द्वारोपनिष्क्रामन्तिअन्यग् राज्ञा च आज्यैश्च अन्वग् ग्राब्णो वायव्यानि 'अयं नो अग्नि-र्वरिवः कृणोत्वयं मृधः पुर एतु प्रभिन्दन् । अयं शत्रून् जयतु जर्हृषाणोऽयं वाजं जयतु वाजसातौ' इति मन्त्रेण । तत उत्तरेण सदः परीत्य आग्नीध्रागारे अग्निं निधाय परि-स्तीर्य परिषिच्य चतुर्गृहीतेनाभिजुहोति-'अग्ने नय सुपथाराये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम स्वाहा' इति । अग्नय इदमिति यजमानः । अत्रैवैतद् ग्राब्णो पायव्यानि सादयित्वा उत्तरेणाग्नी-ध्रीयं धिष्ण्यं राज्ञा चाज्यैश्च गत्वा आहव-नीयं स्रुवाहुतिं जुहोति-'उरु विष्णो विक्र० स्वाहा' इति । विष्णव इदमिति यजमानः । ब्रह्मा राजानमन्यस्मै प्रदाय मन्त्रेणोपविशति, यजमानञ्च स्वायतने । ततोऽध्वर्युः 'प्रोक्ष-णीरुन्महयन्नित्यादि यन्मे अग्न' इत्यादि पशुवत् करोति । खरे प्रोक्षणादीनि करोति । महावेदि श्रौण्यां प्रोक्षणीर्निनयति । ततो ब्रह्मा यथा यतनमागत्य राजानमुपादत्ते । यजमानः उप उपस्पृश्य यथेतमेत्य ब्राह्मणः सकाशाद् राजानमादाय पूर्वक्रया द्वारा हवि-र्धानं प्रपादयति—'सोमो जिगाति तु गातु विद् देवानामेति निष्कृतममृतस्य योनिमास-दम्' इति । ततोऽध्वर्युः अप उपस्पृश्य दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनमा-स्तृणाति—'अदित्याः सदोऽसि' ति । यज-

मानस्तस्मिन् कृष्णाजिने राजानं सादयति 'अदित्याः सद आसीद' इति । 'एष वो देव सवितः सोमस्त ँ रक्षध्वं मा वोऽदभन्' इति राजानं देवताभ्यः प्रयच्छति । 'एतत्त्वं देव सोमदेवो देवानुपगा इदमहं मनुष्येभ्यो मनुष्यान् सह प्रजया सह रायस्पोषेण' इति तं सोमुपतिष्ठते । 'नमो देवेभ्यः' इति सोमस्योपरि प्राञ्चमञ्जलिं करोति । 'स्वधा पितृभ्यः' इति तस्य दक्षिणतो न्यञ्चमञ्जलिम् अप उपस्पृश्य 'इदमहं निर्वरुणस्य पाशात्' इति ततो निष्क्रम्य 'सुवरभिविख्येषं वैश्वानरं ज्योतिः' इत्याहवनीयमुपतिष्ठते । इत्येतावत् कर्म सोपस्थानमुच्यते । द्र० श्रौ०को० श्रौ०प०नि० पृ० २५१-५२ ।

**सोमोपावहरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. वेद्या उदङ्मुखत्वेनावस्थितात् शकटात् सोमस्य अद्योऽवतारणमुपावहरणमुच्यते । २. उपावहरणं हविर्धानशकटात् सोमस्य ग्रावसु अवतारणम् । ३. उपावहरणं सोमस्य पृथक् कृत्वा ग्रहणम् । अहर्गणे सोमं क्रीत्वा सर्वमेव हविर्धानशकटे स्थापयन्ति । प्रत्यहं च तत्तद्दिनपर्याप्तं सोमं समुदायात् पृथक्कृत्य गृहणन्ति । तदिदं उपअवहरणं सोमोपावहरणमुच्यते ।द्र० मी०को० पृ० १२१६ ।

**सौत्यपुरोडाशीयपात्रासादन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमेतद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने प्रातरनुवाकादिप्रैषेण प्रेषिता ऋत्विजो यथासम्प्रैषं कुर्वन्ति । पितापुत्रीयायां सुब्रह्मण्यायामाहूतायाम् आग्नीध्रः ऐन्द्रान् पुरोडाशान् शालामुखीये निर्वपति । तद्यथा पाणी सम्मृश्याग्रेण शालामुखीयं तृणानि संस्तीर्य तेष्वेकादश पुरोडाशकपालानि द्वे भर्जनकपाले, त्रीणि पात्राणि, आमिक्षा कुंभं, द्वे मेक्षणे, आमिक्षामेक्षणं, मन्थनशलाकां शूर्पं, कृष्णाजिनं शम्यामुलूकखलं मुसलं दृषदमुपलां, पिण्डोद्वयनीं मेक्षणं, प्रणीताप्रणयनं पञ्चायतनां दारुपात्रीं, प्राकृतया दारुपात्र्या सहान्यानि चत्वारि पात्राणि वा, अजिनपात्रम् उपवेषं मदन्तीं यानि चान्यानि उपयुक्तानि तानि सर्वाणि द्वन्द्वं सादयति । तदिदं सौत्यपुरोडाशीयपात्रसादनमुच्यते । द्र० श्रौ०प० नि० पृ० २५९-६० ।

**सौत्यपुरोडाशीयसंवाप—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन सत्रेषु आमिक्षाकुम्भ्युपधानानन्तरं संवपनादि । 'इन्द्राय जुष्टं संवापमीति ऊहः । पिण्डाभिमर्शने मन्त्रः—'इन्द्राय त्वा' इति । पुरोडाशं प्रथयित्वा यवान् परिक्षुद्य भर्जनकपाले निवपित-'घर्माः स्थ विश्वायुषः' इति मन्त्रेण । एवमेव परिवापव्रीहीन् द्वितीये निवपति । सोऽयं सौत्यपुरोडाशीयसंवापः उच्यते । द्र० आमिक्षाकुम्भ्युपधान—, श्रौ०प०नि० पृ० २६१ ।

**सौत्यसायंदोहकरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र....चैकाहाहीनसत्रेषु सुत्यासामग्रीसंपादनान्तरं अध्वर्युपुरुषेष्वन्यतमः सवनीयातिरिक्तानां शाखानां क्रमेण पर्णानि छित्वाग्रेण शालामुखीयं निधाय मूलतः परिवास्योपवेषान् कृत्वा शालामुखीयस्य पश्चात् प्रज्ञातान् निधाय द्वितीयमन्त्यं च शाखापवित्रं मन्त्रेण प्राकृतेन कृत्वाऽन्यानि षट् शाखापवित्राणि तूष्णीं कृत्वा गार्हपत्यादुत्तरतः षट् दोहनानि षट् शाखापवित्राणि अष्टौ स्थालीश्च सादयित्वा प्राकृतमन्त्रेण प्रोक्ष्य तत्तदुपवेषेणाङ्गारान्

निरुह्य तत्तत्पवित्रं निधाय तेन तेन दोहेन दोहयित्वा तप्त्वा उदगुद्वास्यातनक्ति। नाभ्यातनक्ति। (अत्र द्वितीयो दोह ऐन्द्रः। षष्ठो दोहो मैत्रावरुणः अतस्तत्र विशेषो मन्त्रेषु भवति। स यथा—'मित्रावरुणौ रमयतां गावः। मित्रावरुणाभ्याँ्हविरिन्द्रियमिति। बहुदुग्धि मित्रावरुणाभ्यां देवेभ्यो हविरिन्द्रियमिति)। दोहानन्तरं तत्तदुङ्पवेषान् शाखापवित्राणि मेक्षणानि दोहांश्च प्रज्ञातान् निधाय प्रातर्दोहस्थाल्यौ चान्यत्र स्थापयित्वा दर्भैः प्रातर्दोहाय वत्तानपाकरोति। तदेत्सौत्य- सायं दोहकरणमुच्यते। द्र० श्रौ०प०नि० पृ० २५४-५५।

**सौत्येध्माबर्हिः संभरण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत....अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौत्यसायं दोहकरणानन्तरं सवनीयपशुसाखाद्वयमाहरति वा। ततः प्रकृतिवदसिदादानादि कृत्वा एकविधं बर्हिः, अश्ववालं प्रस्तरम्, ऐक्षवी विधृती च संभृत्य औदुम्बरैर्महापरिधिभिः सह विंशतिं समिधः। ततः 'त्वा त्रयोविंशतिधा' इत्यूहितमन्त्रेण संभरति। परिभोजनीयान् वेदं च करोति। इदं सौत्येध्माबर्हिः संभरणमित्युच्यते। द्र० सौत्यसायंदोहकरण—, श्रौ०प०नि० पृ० २५५।

**सौत्रामणी—** (अव्य०) १. इष्टिनिरूढपशुबन्धविकृतिभूता ('उभयं सौत्रामणी इष्टिश्च पशुश्च' श० ब्रा० इतीष्टिपशूभयरूपा) हविर्यज्ञानां सप्तमीसंस्थाप्रधानत्रिपशुसाध्या सौत्रामणी भवति। अर्थात् यत्र आदौ पूर्वाङ्गं प्रथमः ऐन्द्रः पशुः, मध्ये आश्विन-सारस्वत सुत्रामैन्द्रपशुत्रयरूपः प्रधानपशुः, मध्ये आश्विनसारस्वत सुत्रामैन्द्रपशुत्रयरूपः प्रधान पशुः, अवसाने उत्तराङ्ग द्वितीयः वायोधसैन्द्रः पशुः इत्येवं पञ्चानां प्रधानाङ्गभूतपशूनामेकत्र प्रयोगोऽनुष्ठीयते स सौत्रामणी नाम यज्ञ उच्यते। तदुक्तं शतपथे 'आत्मा (मध्यभागः) वै यज्ञस्य यत् सौत्रामणी (आश्विनसारस्वतसुत्रामैन्दात्मकः त्रिपशुः) बाहू एन्द्रश्च वयोधाश्च। तद् यदेतावभितः पशू भवतः (तु०—श्रौ०-को० भा० १ पृ० ७४३)। इति त्रिपशुप्राधान्येन सौत्रामणीकर्म त्रिपशुनामधेयेन, व्यवह्रियते तथाप्यत्र प्रयोगबाहुल्यात् स्पष्टप्रतिपत्तये सौत्रामणीशब्देन व्यवहारः प्रतिपन्नः सा सौत्रामणी द्विविधा। एका कौकिली अपरा चरका। सर्वापीयं च नित्या हविर्यज्ञसोमसंस्थान्तर्गतत्वात्। एतयाऽन्नाद्यकामो यजेत स्र्वकामश्चेत्यादिना फलश्रवणात्काम्यत्वमपि 'बार्हपत्यं पशुं चतुर्थं यदि' इत्यादिना नैमित्तिकत्वमपि श्रूयते। 'यजेत सौत्रामण्याऽपत्नीकोऽप्यसोमप इत्यैतरेयब्राह्मणोक्ता या पत्नीकाऽसोमपयजमानकर्तृका सौत्रामणी सा कौकिल्येव स्वतन्त्रा अग्निं चित्वा सौत्रामण्या यजेत' इत्यादौ राजसूयस्थ अङ्गत्वेन श्रूयमाणा चरकैवं तितयोः कौकिलीय अग्निचयनस्याप्यङ्गमिति स्वतन्त्रा च भवतीति भेदोऽप्यवगन्तव्यः। द्र० श्रौ० प० नि० पृ० १५१, सौत्रामणीभेद—, त्रिपशु—, २. सौत्रामणी नाम पशुयागाः। तत्र अतिदेशप्राप्तदेवतासंस्कारार्थेपशुपुरोडाशे द्रव्यतया पयोग्रहाः सुराग्रहाश्च विधीयन्ते। द्र० मी०को० पृ० ४३६८।

**सौत्रामणीकाल—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे सौत्रामणीप्रकरणे कौकिल्याः सौत्रामण्या निरूढपशुबन्ध काल एवानुष्ठानकालः। पशुबन्धकालश्च उत्तरायणं शुक्लपक्षो देवनक्षत्रं रेवती वा अमावास्या यजनीयदिनं वा।

पर्वणि त्रिपशुरूपं प्रधानकर्म रेवती वामावास्या यजनीयदिनं वा । पर्वणि त्रिपशुरूपं प्रधानकर्म संपद्येत तथा कर्त्तव्यम् । तथा च कर्ता द्वादश्यां नान्दीश्राद्धोदकशान्ति प्रतिसरबन्धादि कृत्वा त्रयोदश्यामैन्द्रेण पूर्वाङ्गपशुना आदित्य चरुणा च प्रचर्य चतुर्दश्यां त्रिपशूपसथं कृत्वा पर्वणि त्रिपशुम्, अवभृथं, महापितृयज्ञं च कृत्वा प्रतिपदि उत्तराङ्ग वायौधसेन पशुना आदित्येन चरुणा च प्रचर्य समापयति । असंभवे पितृयज्ञोऽपि प्रतिपदि कार्यः । 'त्र्यहे पुरस्तात्' इति वचनं सुरासंधानकरणपक्षे नवम्यामारम्भपरम् । अयं सौत्रामणीकाल इत्युच्यते । द्र० श्रौ०प०नि० पृ० १५१ ।

**सौत्रामणीत्रिपशुपूर्वादित्येष्टि**–(आध्व०, अव्य०) इष्टिनिरूढपशुविकृतौ......सौत्रामणीप्रकरणे सौत्रामणी पूर्वाङ्गैन्द्रपशव नन्तरं तदानीमेव पुनर्विहृत्यादित्येष्टिः 'अस्यामिष्टौ वत्सो दक्षिणा वत्सं पूर्वस्यां ददाति मातरमुत्तरस्यामिति वचनात् आदित्यौ द्वौ सौत्रामण्यामिति वचनाच्च । 'अंहसो मुच्येयम्' इति यजमानस्यानुमन्त्रणम् पुनरालम्भवर्जं इयमिष्टिः सन्तिष्ठते । इयं सौत्रामणी त्रिपशुपूर्वेष्टिरित्युच्यते । द्र० श्रौ०प०नि० पृ० १५३ ।

**सौत्रामणीदेवतावाहन**– (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे होता त्रिपशोः पश्विष्ट्यग्निप्रणयनमन्थनानि सौत्रामणीपूर्वाङ्गैन्द्रपशुवत् कृत्वा आवाहनकाले आज्यभागावाहानन्तरं अश्विना वा३वह सरस्वतीमा३वह, इन्द्रमा३ वह, वनस्पतिमा३ वह, इत्यादि पूर्ववत् करोति । एतत्सौत्रामणीदेवतावाहनमित्युच्यते । द्र० श्रौ०प०नि० पृ० १७५ ।

**सौत्रामणी देवतासंकल्प**– द्र० त्रिपशुदेवतासंकल्प—, त्रिपशुसंकल्प— ।

**सौत्रामणीपदार्थ**– (सा० आध्व०) इष्टिनिरूढपशुविकृतौ हवि-र्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे उदवमानानन्तरं ऋत्विग्वरणं, षड्ढोतृकूष्माण्डसारस्वतादिहोमश्च सकृदेव सर्वपश्वर्थः । त एव विहाराः । दक्षिणतः पैतृकी वेदिः । आद्यन्तपशुबन्धयोः (ऐन्द्रवायोधसयोः) पशुबन्धयोः पाशुकी वेदिस्तु द्वादशपदा भवति । त्रिपशौ साग्निचित्ये निरग्निचित्ये वा अष्टादशपदा वा भवति । अथ सौत्रामणीकर्मसंबन्धिनः पदार्थाः । त्रयो यूपाः चयनार्थं शर्कराः साग्निचित्ये । सुराग्रहार्थं क्रमेण पलाशन्यग्रोधाश्वत्थकाष्ठनिर्मितान्युलूखलाकाराणि ऊर्ध्वमुखानि प्रादेशमात्राणि पात्राणि एतान्येव सुराग्रहा इत्युच्यन्ते । यज्ञियस्य फलेग्रहेः पलाशादिवृक्षस्य सुराग्रहसदृशान्येव त्रीणि पात्राणि तानि पयोग्रहा उच्यन्ते । जुहूसदृशे महापुष्करे द्वो पात्रे ते द्रोणकलशपदवाच्ये, एकः कुम्भः शतातृण्णस्थाली । नक्वलवदरकर्कन्धूनां सक्तवः । (नक्वलवदरकर्कन्धवो वदरभेदाः) यवगोधूमोपवाकानां सक्तवः । हरितयवाः । श्येनस्य पक्षिणो द्वौ पक्षौ । सिंहव्याघ्रवृकानां लोमानि । अजाविलोम्नां दशापवित्रमध्वर्योः । गवाश्वलोम्नां प्रतिप्रस्थातुः । नाभिदध्नपादा अरत्निमात्रशीर्षण्यानूच्या मौञ्जविवयना या सा आसन्दीत्युच्यते । प्रभूतं पयः । अन्येऽपि य उपयुक्ताः पदार्थाः ते संपादनीयाः । इति सौत्रामणीपदार्था उच्यन्ते । तत्र श्रीपरमेश्वरप्रीत्यर्थं अन्नाद्यकामः स्वर्गकामो वा कौकिल्या सौत्रामण्या पक्षे त्रिरुपांशु त्रिरुच्चैः इत्ययं सौत्रामणी-

संकल्पश्च भवतीति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १५२। द्र० उदवमान–।

**सौत्रामणीपर्यग्निकरण–** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे पाशुकपर्यग्निकरणप्रैषानन्तरं आग्नीध्र आहवनीयादुल्मुकमादायान्तरेण चत्वालोत्करौ उत्तरेण शामित्रम् अग्रेण पशुं जघनेन स्रुव इत्येवं रीत्या त्रिः प्रदक्षिणं पर्येति यथोल्मुकमन्तर्भवति स्वयं बहिर्भवतीति पाशुकपर्यग्निकरणवत् सौत्रामणीपर्यग्निकरणं भवति। परमत्र पर्यग्निकरणेऽस्ति विशेषः। आग्नीध्रो द्वितीये पर्यये पर्यग्निकुर्वन् प्रतिप्रस्थात्रा उत्तरवेदेर्दक्षिणेन पथा गत्वा तत्र खरे उल्मुकैकदेशं प्रक्षिप्य करीषादिनोपसमाधायोपसदिते सति आग्नीध्रः शेषेणोल्मुकेन पर्यायान् समाप्य तदेवोल्मुकं पृथङ्निधाय पशुश्रपणकाले तदर्थं प्रणयति। 'अथोल्मुकप्रथमा' इत्यादिना विहितस्य शामित्रशालां प्रति पशुनयनस्याङ्गभूतमुल्मुकं पृथङ्निहितस्यैवैकदेशो गृह्यते। तमेकदेशं कार्यानन्तरं आहवनीये प्रक्षिपति। इति पर्यग्निकरणे उल्मुकप्रणयनप्रक्षेपौ विशेषः। तत्र वृषभे निषण्णे सति तं 'उदुत्तिष्ठ' इत्यादिमन्त्रेणोत्थापयति। ततो वपाप्रचारान्तं पाशुकं चरकवद्भवति। इति विशेषोऽवगन्तव्यः। द्र० पाशुकपर्यग्निकरण—, श्रौ०प०नि० पृ० १५८।

**सौत्रामणीपशु–** (सा०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रामण्यां त्रयः पशव आलभ्यन्ते। तत्राश्विभ्यां धूम्रवर्णश्छागः। सरस्वत्यै मेषश्छागो वा। इन्द्राय ऋषभः इत्येते त्रयः। चतुर्थो नैमित्तिको बार्हस्पत्यः पशुरपि श्रूयते। आद्यन्तौ अङ्गभूतौ ऐन्द्रवायोधसौ द्वौ पशू च भवतः इति नैमित्तिकेन सह षट् पशवः सौत्रामणी संबन्धिनः पशवो भवन्तीति सौत्रामणीपशव उच्यन्ते। तत्र आश्विन सारस्वतैन्द्राणां त्रयाणां प्रधानपशूनामालम्भात् पूर्वं सुराग्रहोपस्थानान्ते अपः उप स्पृशन्ति। ततः प्रतिप्रस्थाता (सुरा—) ग्रहान् गृहीत्वा अवशिष्टसुरं कुम्भं द्रोणकलशं चादाय आहवनीयस्याग्रतः दक्षिणखरस्याग्निसमीपे सादयति। विशाखयोः शिक्यं शतमानं पवित्रं शतातृण्णञ्च आसाद्य खरस्य पूर्वतः पुराणभस्मना खरान्तरं कृत्वा तस्मिन् वल्मीकवपां निदधाति। ब्रह्माणं चोपवेशयति। अप उपस्पृश्य 'यन्मे अग्ने' इतयादिमन्त्रं वाचयति यजमानम्। ततो यूपप्रक्षाल नादिपाशुकं कर्म चरकवत् करोति। इति विशेषोऽवधेयः। काले युगे तु गवालम्भनिषेधात् ऋषभप्रतिनिधित्वेन छागो भवति। 'छाग ऋषभकार्ये' इति गोपालकारिकोक्तत्वात्। 'वृष्णिर्वा' इत्यापस्तम्बसूत्रोक्तत्वान्मेषो वा भवति। प्रतिनिधि स्वीकारेऽपि पशूनामादेशादौ ऋषभशब्द एव प्रयोक्तव्यः। न तु वृष्णिशब्द उस्रशब्दो गो शब्दो वा मन्त्रपाठे ऋषभदर्शनात्। इति च विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० १५७-५८।

**सौत्रामणीपशुश्रपणप्रैष–** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे ऐन्द्रयाज्याप्रैषप्रैषानन्तरं वपामार्जनान्तं निरूढपशुसमानं भवति। (इदानीमेव वा पयोग्रहादिग्रहणम्)। ततः प्रतिप्रस्थातः पशून् विशाधि इत्यादि करोति। (नैतेषु पशुपुरोडाशा विद्यन्ते ग्रहपुरोडाशाह्येते इति वचनात्)। शमितर् हृदयानि जिह्वा वक्षांसि तानि कुरुतात्, तनिमानि भतस्नूः तानि सार्धं सव्यानि दोषाणि एकचराणि कुरुतात्, नानापार्श्वाण्यवधत्तात्,

दक्षिणाः श्रोणीरध्युद्धीः कुरुतात्, दक्षिणानि दोषाणि सव्याः श्रोणीरणिभन्ति गुदानां तानि अङ्गानि कुरुतात्, वनिष्ठूश्च जाघनीश्चाव-धत्तात्, बहु यूष्णः कुरुतात्, त्रिःपशून् प्रच्या-वयतात्, त्रिःप्रच्युतानां पशूनां हृदयान्युत्त-मानि कुरुतात्, तस्य तस्य पशोः इत्यध्याहारे तु एकवत् प्रैषोऽप्यन्वेतीत्यनूहो वा। अयं सौत्रामणीपशुश्रपणप्रैष इत्युच्यते। द्र० श्रौ० प० नि० पृ० १५९।

**सौत्रामणीपाशुकपात्र—** (आध्व०) इष्टिनिरूढ-पशुविकृतौ...सौत्रामणीप्रकरणे अध्वर्युः प्रथमं जुह्वाग्रहणादि सर्वाऽऽज्याभि-मन्त्रणान्तं करोति। ततः सायमग्निहोत्रं हुत्वाशालामुखीयस्योत्तरतः दर्भेषु तिस्रः पशुकुम्भीः त्रीणि शाखापवित्राणि तिस्रो यूपरशनाः पशुरशनाश्च त्रीणि वपाश्रपणी युग्मानि त्रीन् पयोग्रहाँस्तथा सुराग्रहाँश्च नक्वलवदरकर्कन्धूनां यवगोधूमोपवाकानां च सक्तून् द्वे श्येनपत्रे द्वे दशापवित्रे द्वौ द्रोणकलशौ शतातृण्णां स्थालीं चासाद-यति। एतानि सौत्रामणीपाशुकपात्राण्यु-च्यन्ते। एतेषां पात्राणामासादनात्पूर्वं खरे स्रुचां स्थापनं करोति। तस्य खरस्य पश्चा-दपरः खरः क्रियते तस्मिन् ग्रहाः स्थाप्यन्ते। ततोऽभ्यादानादि यूपावटकरणान्तम्। ततः 'इन्द्रघोषस्त्वा' इत्यादिना सं स्रावाभिघार-णादि सिकतसमीकरणान्तम्। ततः शाखा-पवित्रमुपवेषं च करोति। ततोऽग्निप्रणयनं करोति। ततो ब्रह्मयजमानयोः स्वायतने उपवेशनम्। ततः अध्वर्युः उत्तरपरिग्रहादि स्फ्यप्रक्षालनान्तं करोति। आग्नीध्रः शाला-मुखीये स्रुचः प्रतितप्य स्रुववत् स्वधितिं संमार्ष्टि। इति तत्र विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० १५५-५६।

**सौत्रामणीपूर्वाङ्गैन्द्रपशु—** (अव्य०, आध्व०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे त्रिपशुपूर्वाङ्गैन्द्रपशुसंकल्पानन्तरं सौत्रा-मणीपूर्वोत्तराङ्गपश्वोरपि अग्नीन् विहृत्य षड्ढोतृकूष्माण्डसारस्वतहोमाः सर्वपश्वर्थ-मादावेव सकृत् प्रवर्तन्ते न तु प्रतिपश्वा-वर्तन्ते एक प्रयोगत्वात्। आग्नेयी पशुपूर्वे-ष्टिस्त्वावर्तते एवेति सामान्यो नियमः।

परन्त्वाश्वलायनमते पूर्वोत्तरयोरैन्द्रपश्वोर-ङ्गत्वात् पश्विष्टिस्तयोर्न भवति। समप्राधा-न्ये तु सर्वपशुषु पश्विष्टिर्भवति। किन्त्वापस्तम्बमते ऐन्द्रस्य पशोः पश्वि-ष्ट्यादि सर्वं निरूढपशुवद् भवति। अतः पशुत्रये (त्रिपशौ) च वेदियूपाहुत्यादि यूपो-पस्थानान्तं निरूढवत् करोति। अस्मिन्नैन्द्र-पशौ ऋषभो दक्षिणा। पुनरालम्भवर्जं सन्तिष्ठते एष पशुः। इत्यैन्द्रस्य पशोः पश्विष्ट्यादि अनुयाजान्तं कर्म सौत्रामणी-त्रिपशुपूर्वाङ्गैन्द्रपशु- रुच्यते। द्र० श्रौ०-प०नि० पृ० १५३; १७१-७५।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुपुरोडाशयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे त्रिपशुपूर्वाङ्गैन्द्र-पशुपुरोडाशयागे मैत्रावरुणस्य पुरोनु-वाक्या— 'तं सध्रीचीरुत यो वृष्णीयानि पौँ स्यानि नियुतः स्रश्चु-रिन्द्रम्। समुद्रं न सिन्धव उक्थशुष्मा उरुव्यचसमङ्गिर आवि-शन्तो३म्। प्रैषः —'होता यक्षदिन्द्रं पुरोडा-शस्यजुषतां हविर्होतर्यज' इत्यनेन प्रैषेण, मैत्रा वरुणो होतारं प्रेष्यति। याज्या—'ये ३ यजामहे भूर्भुवः स्वः सत्यमित्तन्नतवावाँ अन्यो अस्तीन्द्र देवो न या ज्यायान। अह-न्नहिं परिशयानमर्णो वा सृजो अपो अच्छा समुद्रा३द् वौ३ ०। वाग्वषट्कार०। होता अनया याज्यया यजति सोऽयं सौत्रामणीपू-

र्वाङ्गपशुपुरोडाशयाग उच्यते। **द्र०** श्रौ०प०नि० पृ० १७४। पशुयज्ञेषु ऐन्द्राग्नप्रकृतिकेषु निरूढपशुबन्धे अग्नीं तत्प्रकृतिकेषु षोमीये सौमिकेषु पशुषु च अध्वर्युणा मैत्रावरुणमुद्दिश्य प्रेष्येति प्रेषितो मैत्रावरुणः तद्देवताकामनुवाक्यां पठित्वा तदन्ते हविर्होतर्यज' इति होतारं प्रेष्यति। ततो होता याज्यया यजति। इति सप्रैषे मैत्रावरुणः अनुवाक्यां प्रैषं च ब्रवीति ततो होता याज्यां पठतीति सर्वत्र समानो विधिक्रमः इति विशेषोऽवधेयः **द्र०** मैत्रावरुणप्रैष— मैत्रावरुणप्रैषवचनविधि—।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुपूर्वादित्येष्टि—** (हौ०, अव्य०) इष्टि निरूढपशुविकृतौ..... सौत्रामणीप्रकरणे पूर्वाङ्गादित्येष्टौ अदितिर्देवता चरुः द्रव्यम्। सामिधेनीप्रभृतिसर्वं प्रकृतिवत् 'अदितिर्न उरुष्यतु' इति प्रधानस्य अनुवाक्या। 'महीमूषु मातरं सुव्रतानाम्' इति याज्या। इतीयं सौत्रामणीपूर्वाङ्गाऽऽदित्येष्टिरिति गीयते। **द्र०** श्रौ०प०नि० पृ० १७५।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुप्रयाज —** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अध्रिगुप्रैषात् पूर्वमेव प्रयाजा आश्वलायनेनानुक्तत्वाद् यजुर्वेदोक्तप्रकारेणोच्यन्ते। तद्यथा 'ये३यजामहे भूर्भुवः स्वः समिद्ध इन्द्र उषसामनीके पुरोरुचा पूर्वकृद्वावृधानः। गोभिर्वपावान् मधुना समञ्जन् त्रिभिर्देवैस्त्रिंशता वज्रबाहुर्जघान वृत्रं विदुरो ववारा३ वौ३ ० ॥ १ ॥ (वाग्वषट्कार) नमस्ते अस्तु मा मा हिंसीः इति वषट्कारानन्तरं (जपति)। ये३ यजामहे नराशंसः प्रति शूरो भिमानस्तनूनपात् प्रति यज्ञस्य धाम। गोभिर्वपावान् मधुना समञ्जन् हिरण्यैश्चन्द्री यजति प्रचेता३ वौ३ ० ॥ २ ॥ (वाग् वषट्कार नमस्ते अस्तु मा मा हिंसीः) ॥ ये३ य० सुवरीडितो देवैर्हरिवाँ अभिष्टिराजुह्वानो हविषाशर्धमानः। पुरन्दरो मघवान् वज्रबाहुराया तु यज्ञमुप नो जुषाणा३ वौ३ ० ॥ ३ ० ॥ (वाग् वषट्कार नमस्ते अस्तु- मा मा हिंसीः) ॥ ये ३ य० सुवर् जुषाणो बर्हिर्हरिवान् न इन्द्रः प्राचीनं सीदत् प्रदिशा पृथिव्याः। उरुव्यचाः प्रथमानं स्योनमादित्यैः अक्तं वसुभिः सजोषाः स्वाहा ॥ ४ ॥ (वाग्वषट्कार०) ॥ ये३य० सुवरिन्द्रं दुरः कवष्यो धावमाना वृषाणं यन्तु जनयः सुपत्नीः। द्वारो देवीरभितो विश्रयन्तीं सुवीरा वीरं प्रथमातनामहोमी३ वौ३ ० ॥ ५ ॥ (वाग्वषट्कार) ॥ ये३ य० सुवरुषासानक्ता बृहती बृहन्तं पयस्वती सुदुधे शूरमिन्द्रम् पेशस्वती तनुना संव्ययन्ती देवानां देवी यजतः सुरुक्मे३ वौ०३ ॥ ६ ॥ (वाग्वषट्०) ॥ ये३ य० सुवर्दैव्याभ्रिमाना प्रथमा पुरुत्रा होत्रारविन्द्रे प्रथमा सुवाचा०। मूर्धन् यज्ञस्य मधुना प्राचीनं ज्योतिर्हविषा वृधाता ३वौ३ ० ॥ ७ ॥ (वाग्वषट्०)। ये३ य० सुवस्तिस्रो देवीर्हविषा वर्धमाना इन्द्र जुषाणा वृषणं न पत्नी। अच्छिन्नं तन्तुं पयसा सरस्वतीडा भारती विश्वतूर्ती३ वौ३ ० ॥ ८ ॥ वाग् वषट् ॥ ये३य० सुवस्त्वष्टा दधदिन्द्राय शुष्ममपा माचिष्टुर्यशसे पुरूणि। वृषा यजन् वृषणं भूरिरेता भूर्धन् यज्ञस्य समन्क्तु देवा३..... वौ३ ० ॥ ९ ॥ वाग्वषट्० ॥ ये३ य० सुवर्चनस्पतिरवसृष्टो न पाशैरत्मन्या समञ्जन् क्षमिता न देवः। इन्द्रस्य हव्यैर्जठरं पृणानः स्वदति हव्यं मधुना धृतेना३ वौ३ ० ॥ १० ॥ वाग्वषट्० ॥ इति दशभिरिष्ट्वा तत आश्वलायनसूत्रपठितमध्रिगुमूहेन पठति।

तत एकादशेन प्रयाजेन यजति । स यथा— ये३ य० सुवस्तोकानामिन्द्रं प्रति शूर इन्दो वृषायमाणो वृषभस्तुराषाट् धृतप्रुषा मधुना हव्यमुन्दन् मूर्धन यज्ञस्य जुष तां स्वाहा३ वौ३ ० ॥ ११ ॥ वाग्वषट्० ॥ इत्येते एकादश प्रयाजमन्त्रा आपस्तम्बसूत्रपठिताः सौत्रामणीप्रयाजा इति गीयन्ते । द्र० श्रौ०-प०नि० पृ० १७१-७२ ।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुप्रयाजप्रैष—** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे पूर्वोक्तानां प्रयाजानां प्रैषा उच्यन्ते । ते च यथा— 'होता यक्षत् समिधेन्द्रमिडस्पदे नाभा पृथिव्या अधि । दिवो वर्ष्मन्त्समिध्यत ओजिष्ठश्चर्षणीसहान् वेत्वाज्यस्य होतर्यज ॥ १ ॥ होता यक्षत् तनूनपात् भूतिमिर्जेतारमपराजितमिन्द्रं देवं सुवर्विदं पथिभिर्मधुमत्तमैर्नराशंसेन तेजसा वेत्वाज्यस्य होतर्यज ॥ २ ॥ होता यक्षदिडामिरिन्द्रभिन्द्रमीडितं मा जुह्वानममर्त्यम् । देवो देवैः सवीर्यो वज्रहस्तः पुरन्दरो वेत्वाज्यस्य होतर्यज ॥ ३ ॥ होता यक्षद्बर्हिषेन्द्रं निषद्वरं वृषभं नर्यापसम् । वसुभीरुद्रैरादित्येभिर्नियुद्भिर्बर्हिरासद्वेत्वाज्यस्य होतर्यज ॥ ४ ॥ होता यज्ञदोती वीर्यं सहो द्वार इन्द्रमवर्धयन् । सुप्रायणा विश्रयन्तामृतावृधो द्वार इन्द्रस्य मीढुषे वियन्त्वाज्यस्य होतर्यज ॥ ५ ॥ होता यक्षदुषे इन्द्रस्य धेनू सुदुघे मातरौ मही । सवातरौ न तेजसा वत्समिन्द्रमवर्धतां वीतामाज्यस्य होतर्यज ॥ ६ ॥ होता यक्षद् दैव्या होतारा भिषजा सखाया हविषेन्द्र भिषज्यतः । कवी देवौ प्रचेतसाविन्द्राय धत्त इन्द्रियं वीतामाज्यस्य होतर्यज ॥ ७ ॥ होता यक्षत् तिस्रो देवीस्त्रयः त्रिधातवोऽपसम् । इडा सरस्वती भारती मही इन्द्रपत्नीर्हविष्मतीर्वियन्त्वाज्यस्य होतर्यज ॥ ८ ॥ होता यक्षत त्वष्टारमिन्द्रं भिषजं सुयजं घृत श्रियम् । पुरुरूप ँ् सुरेतसं मधोनिमिन्द्राय त्वष्टा दधदिन्द्रियाणि वेत्वाज्यस्य होतर्यज ॥ ९ ॥ होता यक्षद् वनस्पति ँ् शमितार ँ् शतक्रतुं धियो जोष्टारमिन्द्रियम् । मध्वा समञ्जन् पथिभिः सुगेभिः स्वदाति हव्यं मधुना घृतेन वेत्वाज्यस्य होतर्यज ॥ १० ॥ ततोऽग्निर्होता नो अध्वरे इत्यादि पर्यग्नये क्रियमाणायान्वाह निरूढवत् । तदनन्तरं 'होता यक्षदिन्द्रस्य स्वाहाऽऽज्यस्य स्वाहा भेदसः स्वाहा स्तोकाना ँ् स्वाहा स्वाहाकृतीनां स्वाहाऽऽज्यस्य स्वाहा भेदसः स्वाहा स्तोकाना ँ् स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीना ँ् स्वाहा देवा ँ् आज्यपान् स्वाहेन्द्र ँ् होत्राज्जुषाणा इन्द्र आज्यस्य वियन्तु होतर्यज ॥ ११ ॥ एते एकादश आपस्तम्बसूत्रपठिताः सौत्रामणी प्रयाजप्रैषा इत्युच्यन्ते । द्र० श्रौ०प०नि० पृ० १७२-७३ ।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुवनस्पतियाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे वनस्पतियागो निरूढपशुवनस्पतियागवद् भवति । द्र० श्रौ०प०नि० पृ० १७४, वनस्पतियाग— ।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुवपायाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे प्रयाजप्रैषानन्तरं निरूढपशुवदाज्यभागप्रचारः । ततो वपायागे अनुवाक्या— 'आचर्षणिप्रा वृषभोजनानां राजा कृष्टीनां पुरुहूत इन्द्रः । स्तुतः श्रावस्यन्मनसो यमद्भिरयुक्त्वा हरी पृष्णा याह्यर्वो३म् इत्यनुवाक्यामध्वर्युप्रेषितो मैत्रावरुणः पठति । प्रैषः— 'होता यक्षदिन्द्रं छागस्य वपाया भेदसो जुषतां हविर्होतर्यज' अध्वर्युप्रेषितो मैत्रावरुणोऽ-

नेन प्रैषेण होतारं प्रेष्यति। याज्या 'ये३व युवर्विवेश यज्मा धिषणा जजानस्तवै पुराथार्यादिन्द्रमह्नः अ ँ् हसो यत्र पीपरद्यथा नो नावेव यान्तमुभये हवन्ता३द् वौ३....वाग्वषट्कार०। इत्यनया याज्या होता यजति। मैत्रावरुणप्रैष—मैत्रावरुणप्रैषवचनविधि होतृमैत्रावरुणयार्निरूढपशुवच्चात्वाले वपामार्जनं भवति। द्र० श्रौ०प०नि० पृ० १७३ इति सौत्रामणीपूर्वाङ्गैन्द्रपशुवपायाग उच्यते।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुवेदि — द्र०** सौत्रामणीपूर्वोत्तराङ्गैन्द्रपशुत्रेदिमान—

**सौत्रामणीपूर्वाङ्गैन्द्रपशुसंकल्प— द्र०** ऐन्द्रपशुसंकल्प—।

**सौत्रामणीपूर्वाङ्गैन्द्रपशुस्विष्टकृद्याग—** (हौ०) इष्टिनिरूढपशु-विकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे पशुपुरोडाशभागानन्तरं स्विष्टकृद् यागस्य अनुवाक्या 'त्वामीहते अजिरं दूत्याय हविष्मन्तः सदमिन्मानुषासः। यस्य देवैरासदो बर्हिरग्नेऽहान्यस्मै सुदिना भवन्तो३म् मैत्रावरुणोऽनुवाक्या पठति। इत्यनुयाक्या। प्रैषः — होता यक्षदग्निं पुरोडाशस्य जुषतां हविर्होतर्यज' अनेन प्रैषेण मैत्रावरुणः होतारं प्रेष्यति। याज्या— 'ये३य० सुवरग्निं सुदीतिं सुदृशं गृणन्तो नमस्यामरस्वेड्यं जातवेदः। त्वा दूतमरतिं हव्यवाहं देवा अकृण्वन्नमृतस्य नाभिर्वौ३ ०....' वाग्वषट्कारः॥ होताऽनया संयाज्यया यजतीति सौत्रामणी पूर्वाङ्गैन्द्रपशुस्विष्टकृद् याग उच्यते। द्र० श्रौ०प०नि० पृ० १७४। द्र० मैत्रावरुणप्रैष— मैत्रावरुणप्रैषवचनविधि—।

**सौत्रामणीपूर्वाङ्गैन्द्रपशवङ्गयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ..... सौत्रामणीप्रकरणे पूर्वाङ्गैन्द्रपशुस्विष्टकृद्यागानन्तरम् अङ्गयागस्यानुवाक्या अङ्गयागे 'मनोतायै हविषोऽवदीयमानस्यानुब्रूहि' इत्यध्वर्युप्रेषितो मैत्रावरुणोऽभिहिंकृत्य 'त्वं ह्यग्ने प्रथमो मनोता' (ऋ० ६।१।१) इति सूक्तमन्वाह। ततः 'प्र स साहिषे पुरुहूत शत्रून् ज्येष्ठस्ते शुष्म इह रातिरस्तु इन्द्राभर दक्षिणेनाप्रसूनि पतिः सिन्धूना मपि रेवतीनो ३म् इति पुरोनुवाक्यां मैत्रावरुणो पठति। प्रैषः— 'होता यक्षदिन्द्रं छागस्य हविष आदद्य० गृभः। घस्तान्नून० करदेवं देवो जुषतां हविर्होतर्यज' इत्यनेन प्रैषेण स होतारं प्रेष्यति। याज्या 'ये३य० सुवः शसे वृधमधिधाद्युम्नमस्मै महि क्षत्रं जननाषाडिन्द्रतव्यम्। रक्षा च नो मघोनः पाहि सूरी म्रायेण चनः। स्वपत्या इषे धा० वौ३ ०' वाग्वषट्कार०। होता अनया याज्यया यजति। ततो 'देवेभ्यो वनस्पते हवींषि इत्यादिवनस्पतियागो निरूढवत्। इति सौत्रामणी पूर्वाङ्गैन्द्रपशवङ्गयाग उच्यते। द्र० श्रौ०प०नि० पृ० १७४ मैत्रावरुणप्रैष—, मै० वचनविधि—।

**सौत्रामणीपूर्वाङ्गैन्द्रपशवनुयाजप्रैषयाज्या—** (हौ०) इष्टिनिरूढपशुविकृत....सौत्रामणीप्रकरणे पूर्वाङ्गैन्द्रपशुवनस्पतियागानन्तरं पूर्वाङ्गैन्द्रपशवनुयाजप्रैषयाज्या उच्यन्ते ता एकादश भवन्ति। तत्र यदा मैत्रावरुणो होतारं प्रेष्यति यजेत्युक्त्वा तदा प्रैषाः, यदा च यजेत्यस्य स्थाने होता वषट्कारं कृत्वा यजति तदा याज्याः उच्यन्ते। तद्यथा- देवं बर्हिरिन्द्र ँ् सु देवं देवैर्वीरवत् स्तीर्णं बर्हिर्वेद्यामवर्धयत्। वस्तोर्वृतां प्राक्तोर्भृत ँ् राया बर्हिष्मतोऽत्यागाद्वसुवने वसुधेयस्य वेतु यज ॥ १ ॥ देवीर्द्वार इन्द्रं संघाते वीड्वीर्यामन्नवर्धयन्नावत्सेन तरुणेन कुमारेण च

भीविता अपाऽर्वाण । रेषुक काटं नुदन्तां वसुवने वसुधेयस्य वियन्तु यज ॥ २ ॥ देवी उषासानक्तेन्द्रं यज्ञे प्रत्यह्वयेतां देवीर्विशः प्रत्यासिष्टाम् । सुप्रीते सुधिते अभूत वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥ देवी जोष्ट्री वसुधिती देवमिन्द्रवर्धयताम् । अयाव्यन्याऽर्धा द्वेषाँ स्याऽन्याऽवाक्षीद्वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ ४ ॥ देवी ऊर्जाहुती दुधे सुदुधे पयसेन्द्रमवर्धताम् । इषमूर्जमन्याऽवाक्षीत् सग्धिँ सपीतिमन्या नवेन पूर्वं दयमाने पुराणने नवमधातामूर्जमूर्जाहुती वसु वार्याणि यजमानाय शिक्षिते वसुवने वसुधेयस्य वीतां यज ॥ ५ ॥ देवा दैव्या होतारा देवमिन्द्रमर्धताम् । हताघशँ सावामार्ष्टां वसुवार्याणि यजमानाय शिक्षितौ वसुवने वसुधेयस्य वीतां यज ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवीः पतिमिन्द्रमवर्धयन् । अस्पृक्षद्भारती दिवँ रुद्रैर्यज्ञँ सरस्वतीडा वसुमती गृहान् वसुवने वसुधेयस्य वियन्तु यज ॥ ७ ॥ देव इन्दो नराशँ सस्त्रिवरूथास्त्रिबन्धुरो देवमिन्द्रमवर्धयत् । शतेन शितिपृष्ठानामाहितः सहस्रेण प्रवर्तते मित्रावरुणेदस्य होत्रमर्हतो बृहस्पतिः स्तोत्रमश्विनाऽऽध्वर्यवं वसुवने वसुधेयस्य होतुर्यज ॥ ८ ॥ देव इन्द्रो वनस्पतिर्हिरण्यपर्णो मधुशाखः सुपिप्पलोदेवमिन्द्रमवर्धयत् । दिवमग्रेणाऽऽप्रादाऽन्तरिक्षं पृथिवीमहँ हीद् वसुवने वसुधेयस्य वेतु यजः ॥ ९ ॥ देवं बर्हिर्वारितीनां देवमिन्द्रमवर्धयत् । स्वासस्थमिन्द्रेणाऽऽसन्नमन्याबर्हीँ ष्यभ्यभूद् वसुवने वसुधेयस्य वेतु यज ॥ १० ॥ देवो अग्निः स्विष्टकृद्देवमिन्द्रमवर्धयत् । स्विष्टं कुर्वन्ति स्विष्टकृत् स्विष्टमद्या करोतु नो वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥ इत्येते एकादश सौत्रामणी पूर्वाङ्गैन्द्र पश्वनुयाजप्रैषाः प्रैषरूपा याज्याश्चोच्यन्ते । अर्थात् एषामेकैन मैत्रावरुणो होतारं प्रेष्यति । होता एतैरेव प्रैषैः 'यज' इत्यस्य स्थाने वषट्कारं कृत्वा यजति । एवं सति प्रैषा एव याज्याः । द्र० श्रौ०प०नि० पृ० १७४-७५; श्रौ०को० १ भा० पृ० ७०६-७ ।

**सौत्रामणीपूर्वाङ्गैन्द्रपश्वावाहन** — (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पूर्वाङ्गैन्द्रस्य पशोः पश्विष्ट्यादिसर्वं निरूढपशुवद्भवति । आवाहनकाले होता आज्यभागदेवताऽऽवाहनानन्तरं 'इन्द्रमावह, वनस्पतिमावह, देवां आज्यपां आवह' इत्यादिप्रकृतिवदावाहयति । इदं सौत्रामणीपूर्वाङ्गैन्द्रपश्वावाहनमुच्यते । द्र० श्रौ०प० नि० पृ० १७१ ।

**सौत्रामणीपूर्वाङ्गादित्येष्टि** — (हौ०, अव्य०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पूर्वाङ्गादित्येष्टौ अदितिर्देवता । चरुः द्रव्यम् । सामिधेनीप्रभृति सर्वं प्रकृतिवत् । अनुवाक्या— 'अदितिर्न उरुष्यतु' इति प्रधानस्य (अदितेः) अनुवाक्या । याज्या— 'महीमूषु मातरं सुव्रतानाम्' इति याज्या इति विशेषः इतीयं सौत्रामणीपूर्वाङ्गादित्येष्टिरिति गीयते । द्र० श्रौ०प०नि० पृ० १७५ ।

**सौत्रामणीप्रधानदेवता**— (सा०) इष्टिनिरूढपशुविकृतौ सौत्रामणी प्रकरणे त्रिपशौ सौत्रामणीप्रधानयागे सामान्यतः अश्विनासरस्वतीन्द्राः, प्रधानदेवताः । परं 'बार्हस्पत्यं पशुं चतुर्थं सोमातिपवितस्यालभते तै०ब्रा० वचनात् (१ ।८ ।६) बृहस्पतिरितिचतुर्थी देवताऽपि भवितुमर्हति । द्र० श्रौ०को० १ भा० पृ० ७३३ टि० ।

**सौत्रामणीप्रधानपशुप्रयाजप्रैषयाज्या**— द्र० त्रिपशुप्रयाजप्रैषयाज्या— ।

**सौत्रामणीप्रधानसारस्वतपशुवपायाग—** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणी प्रकरणे त्रिपशौ आज्यभागयोः पश्चात् आश्विनपशुवपायागानन्तरं सारस्वतपशुवपायागे पुरोनुवाक्या— 'यमश्विना सरस्वतीहविषेन्द्रमवर्धयन्। स विभेद बलं मघं नमुचावासुरे सचो३म्' इति पुरोनुवाक्यां मैत्रावरुणः पठति। प्रैषः— होता यक्षत् सरस्वतीं मेषस्य वपाया भेदसो जुषताँ होतर्यज मैत्रावरुणः पेष्यति इति प्रैषः। याज्या—ये३य० सुवर्यमश्विना सरस्वती हविषेन्द्रमवर्धयत्। स विभेद बलं मघं नमुचावासुरे सचा३ वौ ३...। वाग्वषट्कारनमस्ते० इति याज्या। सोऽयं सौत्रामणीत्रिपशुप्रधानसारस्वतवपायाग उच्यते। द्र० श्रौ०प०नि० पृ० १७८।

**सौत्रामणीप्रधानाश्विनपशुवपायाग—** (हौ०) इष्टिनिरूढपशुविकृतौ....सौत्रामणीप्रकरणे त्रिपशौ आज्यभागानन्तरं आश्विनपशुवपायागे अनुवाक्या— 'अश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती। आशुक्रमासुराद् वसु मघमिन्द्राय जभ्रिरो३म्' इत्यनुवाक्यं मैत्रावरुणः पठति प्रैषः— 'होता यक्ष दश्विनौ मेषस्य वपाया मेदसो जुषताँ हविर्होतर्यज' इति प्रैषेण होतारं मैत्रावरुणः प्रेष्यतीतिप्रैषः। याज्या 'ये३य०' सुवर्यमश्विना सरस्वती हविरिन्द्रमवर्धयत् स विभेद बलं मघं नमुचावासुरे सचा३ वौ३ ०। वाग्वषट्कारनमस्ते० इति याज्या। सोऽयं पुरोनुवाक्याप्रभृतिः सौत्रामणी त्रिपशुयागे आश्विनपशुवपायाग उच्यते। द्र० श्रौ०प० नि० पृ० १७८। द्र० मैत्रावरुणप्रैष— मैत्रावरुणप्रैषवचनविधि—।

**सौत्रामणीप्रधानैन्द्रपशुवपायाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे त्रिपशौ ऐन्द्रपशुवपायागे सारस्वतपशुवपायागानन्तरं अनुवाक्या 'तमिन्द्रं पशवः सचाश्विनोभ्य सरस्वती। दधाना अभ्यनूषत हविषा यज्ञमिन्द्रियो३म्।' इत्यनुवाक्यां मैत्रावरुणः पठति। प्रैषः— होता यक्षदिन्द्रं वृष्णोर्मेषस्य वपाया मेदसो जुषताँ हविर्होतर्यज। इति होतारं मैत्रावरुणः प्रेष्यति प्रैषः। याज्या— 'ये३य० सुवरश्विना हविरिन्द्रियं नमुचेर्धिया सरस्वती। आ शुक्रमासुराद् वसुमघमिन्द्राय जमिरो३ वौ३ वाग्वषट्कार नमस्ते०' इति याज्या अयं सौत्रामणी त्रिपशुप्रधानैन्द्रपशुवपायाग उच्यते। द्र० श्रौ०-प०नि० पृ० १७८। द्र० मैत्रावरुण प्रैष—, मैत्रावरुणप्रैषवचनविधि—।

**सौत्रामणीभेद—** (सा०) इष्टिनिरूढपशुविकृतिभूता हविर्यज्ञानां सप्तमीसंस्था पशुयागरूपा सौत्रामणी नाम यज्ञः। सा द्विविधा चरकसौत्रामणी कौकिलसौत्रामणी च। तत्र चरकसौत्रामणी तैत्तिरीयसंहितायां राजसूययागानुषङ्गेणाम्नाता, तैत्तिरीयब्राह्मणे (१।४।२;१।८।५-६) इत्यत्रापि सैव पठिता। तथा च वाजसनेयसंहितायां राजसूयानन्तरं चरकसौत्रामणी विहिता। साँ नित्या नैमित्तिका च भवति। कौकिलसौत्रामणी तैत्तिरीयब्राह्मणे (२।६।१-२०) इत्यत्र प्रपञ्चिता। वाजसनेयमाध्यन्दिनसंहितायां चयनान्तरं त्रिभिः (१९-२१) अध्यायैः प्रक्रान्ता अष्टाविंशेनाध्यायेन च निरूपिता। शतपथब्राह्मणे (१२।७-९) इत्यत्र च द्रष्टव्या। एषा च नित्यनैमित्तिककाम्यभेदेन त्रिविधा। नित्यायां ब्राह्मणस्यैवाधिकारः अत्र प्राधान्येन कौकिला निरूपिता प्रसङ्गाच्चरका इति च विशेषोऽवधेयः। द्र० श्रौ०को० १ भा० पृ० ६९८ टि०।

**सौत्रामणीवेदि —** (आध्व०) इष्टिनिरूढपशुविकृतौ..... सौत्रामणी- प्रकरणे त्रिपशौ प्राकृतविहारात् पूर्वतः सौत्रामणीपूर्वाङ्गैन्द्रपश्वनुष्ठानोपयोगिनीं पूर्वनिर्मितां पाशुकवेदिं उद्वास्य यूपञ्चोद्वास्य आहवनीयात् सञ्चरमवशेष्य सौमिक्या वेदेः द्विसप्तत्यधिकनवशतपदक्षेत्रफलायाः तृतीयांशक्षेत्रफलमूलषट्त्रिंशदङ्गुल (षड्वित्य) दण्डेन द्वादश पदा प्राची दशपदा पश्चात् अष्टादशपदा पुरस्तादिति त्रिपश्वनुष्ठानोपयोगिनी पाशुकी वेदिः सौत्रामणिकी वेदिः कार्या। तत्र शम्यामात्रोत्तरवेदिर्भवति। द्वादशाङ्गुलपदपक्षे षट्तिलोनैकविंशत्यङ्गुलदण्डेन दशाङ्गुलपदपक्षे सप्तदशाङ्गुलदण्डेनापि। तत्रैव त्रिभागदण्डादि। त्रयोदशाङ्गुलसमचतुरस्रोत्तरनाभिः। 'साग्नौ मयि गृह्णामि' इत्युपधान प्रभृति 'ये ब्राह्मणा बहुविदः' इत्यन्तं कृत्वा आरुणकेतुकपक्षे, सद्यस्कालपक्षे तु पश्विष्ट्यनन्तरं यूपाहुत्यादि भवति। अग्निचयनपक्षे तु वेदं (वेदि) विमाय परिस्तीर्य भोजनवपनस्नानवासः परिधानाभ्यञ्जनादि दीक्षारूपं कुर्वन्तीति विवोषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १५३-५४।

**सौत्रामणीसंस्थान—** (आध्व०) इष्टिनिरूढपशुविकृतौ..... सौत्रामणीप्रकरणे आहवनीयोपस्थानन्तरं अध्वर्युः स्रुवाहुतिं जुहोति 'भूः स्वाहा'। अग्नय इदम्० इति त्यागः। व्रताविसर्गादि पुनरालम्भब्राह्मणतर्पणान्तं कृत्वा औपयाजिके औत्तरवेदिके वा अग्नौ उत्तरवेदिदक्षिणे बर्हिरुपोषति। 'यत्कुसीदम्' इत्यादिहोमः, औत्तरवेदिके वा। वाय्वादित्ययूपोपस्थान समारोपणाभ्याधानपूर्णाहुति—वरदानञ्चेति। व्रतविसर्गादि पुनरालं भवर्जं ब्राह्मणतर्पणान्ता सन्तिष्ठते त्रिपशुसौत्रामणी। इदं त्रिपशुसौत्रामणीसंस्थानमुच्यते। द्र० श्रौ०प०नि० पृ० १७०।

**सौत्रामणीसंकल्प—** (याज०) इष्टिनिरूढपशुविकृतौ कौकिलसौत्रामणीप्रकरणे पदार्थसंपादनान्तरं १. श्रीपरमेश्वरप्रीत्यर्थं अन्नाद्यकामः स्वर्गकामो वा कौकिल्या सौत्रामण्या यक्ष्ये, त्रिरुपांशु त्रिरुच्चैः। अयं सौत्रामणीसंकल्प इत्युच्यते। ततः प्रशास्तृषष्ठान् ऋत्विजो नृत्वाऽर्हयित्वा, इडाजपं कृत्वा अन्वारम्भणीयामिष्टिं कृत्वा अरण्योरग्नीन् समारोप्य अथवा अजस्रानग्नीन् गृहीत्वोदवसाय मथित्वा मनस्वत्या जुहोति। इत्येतावत् कर्म क्रियते। २. साग्निचित्ये तु 'याः पुरस्तात्' इत्यादि जपित्वा स्वर्गकाम आरुणकेतुमग्निं चेष्ये इत्यग्निचयनसंकल्प इत्युच्यते। द्र० श्रौ०प०नि० पृ० १५२।

**सौत्रामणीसंबन्धिमहापितृयज्ञ —** ( आध्व०) इष्टिनिरूढपशु- विकृतौ सौत्रामणीप्रकरणे सौत्रामणीसंस्थानसमये एव, असंभवे श्वो वा विहृत्य साकमेधिकमहापितृयज्ञवद् अनुष्ठानं भवति। (द्र० चातुर्मास्य साकमेधसंबन्धिमहापितृयज्ञ) याः पुरस्तात् इत्यादि जपित्वा महापितृयज्ञहविर्भिर्यक्ष्ये, इति संकल्पः। 'प्रज्ञापते न त्वदेतानि यदन्तरिक्षं पृक्षिवीमुतद्याम्' इत्युपस्थानान्तं करोति। अयं सौत्रामणीसंबन्धिमहापितृयज्ञ इत्युच्यते। द्र० श्रौ०प०नि० पृ० १७०।

**सौत्रामणीसूक्तवाक—** (हौ०) इष्टिनिरूढविकृतौ सौत्रामणीप्रकरणे त्रिपशौ सूक्तवाकप्रैषेण प्रेषितो होता सूक्तवाकं पठति। द्र० सूक्तवाक—। तत्र आज्यभागदेवताऽऽवाहनान्तरं अश्विनाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्। सरस्वतीदं हविरजुषतावीवृधत महोज्यायोऽकृत। इन्द्रः इदं

हविरजुषतावीवृधताकृत । 'वनस्पतिरिदम्' इत्यादिनिरूढवत् । इति विशेषोऽवगन्तव्य: । द्र० श्रौ०प० नि० पृ० १८१-८२ । निरूढवत् । इति सौत्रामणी सूक्तवाक: ।

**सौत्रामणीसूक्तवाकप्रैष—** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे सौत्रमणीप्रकरणे पूर्वाङ्गेन्द्रपशवनुयाजप्रैषयाज्यानन्तरं अग्निमद्य होतारमवृणीतायँ सुतासुता सुतो यजमान: पचन् पक्ती: पचन् पुरोडाशान् गृह्णन् ग्रहान् गृह्णन्नग्नय आज्यं गृह्णन् सोमायाज्यं बन्ध्नन्नश्विभ्यां छागँ सरस्वत्या इन्द्राय बध्नन् सरस्वत्यै भेषमिन्द्रायाऽश्विभ्यां बध्नन्निन्द्रायर्षभमश्विभ्याँ सरस्वत्यै सूपस्या अद्य देवो वनस्पतिरभवदाश्विभ्यां छागेन सरस्वत्या इन्द्राय सरस्वत्यै मेषेणेन्द्रायाऽश्विभ्यामिन्द्रायर्षभेणाऽश्विभ्याँ सरस्वत्या अक्षँ स्तान् भेदस्त: प्रति पचताऽग्रभीषु इवीवृधन्त ग्रहैरपातामश्विना सरस्वतीन्द्र: सुत्रामा वृत्रहा सोमान्त्सुराम्ण उपो उक्थामदा: श्रौद्गिमदा अदन्नवीवृध- न्ताऽऽङ्गूषैस्त्वामद्यर्ष आर्षेयर्षीणां नपादवृणीताऽयं सुतासुती यजमानो बहुभ्य आसंगतेभ्य: । एष मे देवेषु वसु वार्यायक्ष्यात् इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्त्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुष: सूक्तवाकाय सूक्ता ब्रूहि' अयं सौत्रामणीत्रिपशुसूक्तवाकप्रैष उच्यते। अनेन प्रैषेण मैत्रावरुणो होतारं प्रेष्यति। प्रेषितो होता चाश्व्यादिसमूहितं सूक्तवाकं निरूढपशुबन्धवत् पठति । इति विशेषोऽवधेय: । द्र० श्रौ०प०नि० पृ० १८१ ।

**सौत्रामणी हौत्र—** द्र० हौत्रद्वैविध्य— ।

**सौत्रामण्यङ्गपितृतर्पण—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सुराधारोपस्थानानन्तरं प्रत्यङ्मुखोऽध्वर्यु: 'त्वं सोम प्रचिकितो मनीषा' इति, 'त्वया हि न: पितर:' इति, 'वन्व ववात' इति, 'त्वं सोम पितृभि: संविदान' इति, 'तस्मै त इन्दो हविषा विधेम' इति पञ्चभिर्ऋग्भिरुपतिष्ठते । उदङ्मुखो ब्रह्मा 'बर्हिषद: पितर ऊत्यर्वाक्' इति, 'त आगता वसा' इति, चतसृभिर्ऋग्भिरुपतिष्ठते। प्राङ्मुखो होता 'अग्निष्वात्ता: पितर एह गच्छत' इति, 'ये अग्निष्वात्ता येऽनग्निष्वात्ता:' इति, 'वान्यायै दुग्धे, 'अग्निष्वात्ता:' इति चतसृभिरुपतिष्ठते। अत्र सुराग्रहस्थापनं चरकवत् खरे भवति । ततो यजमान: प्राचीनावीती आहवनीयस्य दक्षिणत: सुरास्थानीयं अवशिष्टं पय: पित्रादिभ्यो वेद्यामवनयति 'पितृभ्य: स्वाधायिभ्य: स्वधा नम: । पितामहेभ्य: स्वधायिभ्य: स्वधा नम:। प्रपितामहेभ्य:। स्वधा नम: । अक्षन् पितर: । अमीमदन्त: पितर: । अतीतृपन्त पितर: । अमीमृजन्त पितर:। पितर: शुन्धध्वम्' इत्येतैर्मन्त्रै: एतत् सौत्रामण्यङ्गपितृतर्पणमित्युच्यते। द्र० श्रौ०प०नि० पृ० १६१-६२ ।

**सौत्रामण्यङ्गपितृयज्ञे जीववदाज्यभाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रामण्यङ्गपितृयज्ञे आग्नेयाज्यभागस्य जीववदनुवाक्या— 'आनो अग्ने सुकेतुना' इत्याग्नेयाज्यभागस्यानुवावाक्या । सौम्याज्यभागजीववदनुवाक्या— 'त्वँ साम महे भगम्' इति सौम्यस्याज्यभागस्यानुवाक्या । आग्नेयस्य याज्या—'आनो अग्ने सुकेतुना जुषाणो अग्नेराज्यस्य वेतु। सौम्यस्य याज्या— 'त्वँ सोम महे भगं....जुषाण: सोम

आज्यस्य हविषो वेतु (द्र० श्रौ०को० १ भा० पृ० २०७)। तदाह— जुषाणः इत्यादिरुभयोः पूववद् याज्ये। अनुवाक्ययोरुभयोर्जीवपदसत्वात् इमावाज्यभागौ जीववन्तावित्युच्येते। इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे देवताऽऽवाहन—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रामण्यङ्गपितृयज्ञे तृतीयेन प्रणवेन सह 'आवह देवान् पितॄन् यजमानाय' इति सर्वत्रानुषङ्गः। आज्यभागदेवताऽऽवाहनानन्तरं सोमं पितृमन्तमा३ वह ओ३म् आवह देवान् पितॄन् यजमानाय पितॄन् बर्हिः पद आ३ वह। पितॄनग्निष्वात्ताना३वह देवा ँ॒ आज्यपा ँ॒ आ३वह अग्निं कव्यवाहनमा३वह इत्यावाहने विशेषः। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे पितॄणामग्निस्वात्तानां याज्यानुवाक्या—**(हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितॄणामग्निष्वात्तानामनुवाक्या 'अग्निष्वात्ताः' पितर एह गच्छत, इति, 'ये अग्निष्वात्ता ये अनग्निष्वात्ताः' इति च द्वे ऋचौ मिलित्वा अनुवाक्या। याज्या— ये स्वधामहे सुववन्या यै दुग्धे इत्यादिर्याज्या। इति पितॄणामग्निष्वात्तानां याज्यानुवाक्ये। तत्र याज्याया आदौ 'ये३यजामहे इत्यस्य स्थाने 'ये३स्वधामहे' इति प्रयुज्यते द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे पितॄणां बर्हिःषदां याज्यानुवाक्या—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितॄणां बर्हिः षदामनुवाक्या 'बर्हिः षदः पितरः ऊत्यर्वाक्' इति, 'आहं पितॄन्त्सुविदत्रा ँ॒ अवित्सीति च द्वे ऋचौ मिलित्वा अनुवाक्या। ये३स्वधामहे सुवरुपहूताः पितरः सोम्या सः' इति याज्या। इति पितॄणां बर्हिः षदां याज्यानुवाक्ये उच्येते। तत्र याज्याया आदौ ये३यजामहे' स्थाने ये३स्वधामहे इति प्रयुज्यते इति विशेषः। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे प्रयाज—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितृयज्ञे वर्हिर्वर्जं चत्वारः प्रयाजा भवन्ति १. ये० स्व० सुवः समिधो अग्न आज्यस्य वियन्तु २. ये० स्व० सुवस् तनूनपादग्न आज्यस्य वेतु। ३. ये० स्व० मुवस् इडो अग्न आज्यस्य वियन्तु ४. ये३ स्वधामहे सुवः स्वाहाऽग्निं, स्वाहा सोमं, स्वाहा सोमं पितृमन्तं, स्वाहा पितॄन् बर्हिः षदः, स्वाहा पितॄनग्निस्वात्तान्, स्वाहाऽग्निं कव्यवाहनं, स्वाहा देवान् पितॄनाज्यपान् इत्याद्युत्तमे प्रयाजे विशेषो द्रष्टव्यः। एते सौत्रामण्यङ्गपितृयज्ञे चत्वारः प्रयाजा उच्यन्ते। द्र० श्रौ०प०नि० पृ० १८२, चातुर्मास्य साकमेधसंबन्धिमहापितृयज्ञ—।

**सौत्रामण्यङ्गपितृयज्ञे सामिधेनी—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितृयज्ञे होता दक्षिणामुखास्तिष्ठन् हिंकृत्य 'उशन्तस्त्वा निधीमहि' इति ऋचं त्रिरनवानमन्वाह। ताः सामिधेन्यो भवन्ति। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे सोमस्य पितृमतो याज्यानुवाक्या—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितृयज्ञे सोमस्य पितृभावोऽनुवाक्या 'त्व ँ॒ सोम प्रचिकितो मनीषा' इति, 'त्वया हि नः पितरः सोम पूर्वे' इति च द्वे ऋचौ एकानुवाक्या भवति अध्यर्धमनवानम्। याज्या— ये३स्वधामहे सुवः सोमं पितृमन्त त्व ँ॒ सोम पितृभिः संविदानो० रयीणा ँ॒ स्वधा नमः' इति सोमस्य पितृमतो याज्यानुवाक्ये उच्येते। तत्र

याज्याया आदौ ये३यजामहे इत्यस्य स्थाने ये३स्वधामहे इति प्रयुज्यते इति विशेषोऽवधेय:। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपितृयज्ञे स्रुगादापन—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पितृयज्ञे सीद होतरित्यध्वर्युणोक्ते तूष्णीं निरसनोपवेशने करोति। तत: 'ईलामहे देवान् पितॄनीलेन्यान्' इत्यादि: स्रुगादापने विशेषोऽवगन्तव्य:। द्र० श्रौ०प०नि० पृ० १८२।

**सौत्रामण्यङ्गपित्रुपस्थान—** (आध्व०) इष्टिनिरूढपशुविकृतौ.... सौत्रामणीप्रकरणे पितृतर्पणानन्तरं ब्रह्मयजमान होतारो दक्षिणामुखा (पितॄन्) उपतिष्ठन्ते— 'पुनन्तु मा पितर: सोम्यास:। पुनन्तु मा पितामहा:। पुनन्तु (मा) प्रपितामहा: ॥ १ ॥ पवित्रेण शतायुषा (पुनन्तु मा पितर:) पुनन्तु मा पितामहा:। पुनन्तु मा पितामहा:। विश्वमायुर्व्यश्नवै न० ॥ २ ॥ अग्न आयूंषि पवस आसुवोर्जमिषं च न:। आरे वाधस्व दुच्छनाम् ॥ ३ ॥ अग्ने पवस्व स्वपा अस्मे वर्च: सुवीर्यम्। दधत् पोषं रयिं मयि० ॥ ४ ॥ पवमान: सुवर्जन:० ॥ ४ ॥ पुनन्तु मा देवजना: ॥ ६ ॥ जातवेद: पवित्रवत्० ॥ ७ ॥ यत्ते पवित्रमर्चिषि० ॥ ८ ॥ उभाभ्यां देव सवित: ॥ ९ ॥ वैश्वदेवी पुनती देव्यागात् ॥ १० ॥ इति दशभिर्ऋग्भि:। इदं सौत्रामण्यङ्गपित्रुपस्थानमित्युच्यते। द्र० श्रौ०प०नि० पृ० १६२। सौत्रामण्यङ्गपितृतर्पण—।

**सौत्रामण्यङ्गपैतृकहोम—** (आध्व०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे पित्रुपस्थानानन्तरं अध्वर्युर्जुह्वा सकृद् गृहीतेनाज्येन जुहोति— 'ये समाना: समनस: पितरो यमराज्ये। तेषां लोक: स्वधा नमो यज्ञो देवेषु कल्पतां स्वाहा' इत्यनेन मन्त्रेण। पितृभ्य इदं न ममेति यजमानस्य त्याग:। तथैव प्रतिप्रस्थाता जुहोति 'ये सजाता: समनसो जीवा जीवेषु मामका:। तेषां श्रीर्मयि कल्पतामस्मिन् यज्ञे शतं समा: स्वाहा' इति मन्त्रेण। पूर्ववत् त्याग:। अयं सौत्रामण्यङ्गपैतृकहोम इत्युच्यते। द्र० श्रौ०प०नि० पृ० १६२, सौत्रा- मण्यङ्गपित्रुपस्थान—।

**सौत्रामण्यङ्गैन्द्रपशुपुरोडाशयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे १. आश्विनसारस्वतैन्द्रपशुभि: प्रचर्य पुरोडाशेन प्रचरन्तीति वचनाद्धवि: प्रचारानन्तरं पशुपुरोडाशप्रचार:। द्र० श्रौ०प०नि० पृ० १८०। तदुक्तम्— आश्विनं धूम्रालभते, सारस्वतं मेषं, ऐन्द्रमृषभमिति। 'पुरस्तादनुयाजानां पुरोडाशै: प्रचरति। ऐन्द्रमेकादशकपालं निर्वपति, सावित्रं द्वादशकपालं, वारुणं दशकपालमिति' (द्र० श्रौ०को० १ भा० पृ० ७१७)। 'ऐन्द्रसावित्रवारुणा: पशुपुरोडशा:'(आ०श्रौ० ३।९।२)। पुरोडाशानां प्रैषाभावात् अप्रैषित एव होता यजति। तत्र 'य इन्द्र इन्द्रियं दधु: सविता वरुणो भग:। स सुत्रामा हविष्पतिर्यजमानाय सश्चतो३म्' होतै वे मामैपुन्द्रपुरोडाशष्यानुवाक्या पठति। याज्या— ये३ यजामहे सुवरिन्द्रं सविता वरुणो दधद्यजमानाय दाशुषे। आदत्त नमुचेर्वसु सुत्रामा वलमिन्द्रिया३ वौ ३...। वाग्वषट्कार। इति याज्यां पठति। अयं सौत्रामण्यङ्गैन्द्रपशुपुरोडाशयाग उच्यते द्र० श्रौ०प०नि० पृ० १८०।

**सौत्रामण्यङ्ग सावित्रपशुपुरोडाशयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रामण्यङ्गैन्द्रपशुपु रोडाशयागानन्तरं

प्रैषाभावात् होत्रा पठ्यमाना सवित्रपशुपुरोडाशस्यानुवाक्या — 'सविता वरुणो दधत्० सुत्रामा बलमिन्द्रियो३म्' इत्यनुवाक्या। याज्या— 'ये३यजामहे स्तुवः सवितारं बलमिन्द्रियं दधुः स० यं दधाना यज्ञभाशता३ वौ३.... वाग्वषट्कार०। इति याज्या। अयं सौत्रामण्यङ्ग सावित्रपशुपुरोडाशयाग उच्यते। **द्र०** श्रौ०प०नि० पृ० १८०।

**सौत्रामण्यङ्गवारुणपशुपुरोडाशयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रामण्यङ्गसावित्रपशुपुरोडाशयागानन्तरं प्रैषाभावात् होत्रा पठ्यमाना वारुणपशुपुरोडाशस्यानुवाक्या— 'वरुणः क्षत्रमिन्द्रियं भगेन सविता श्रियम्। सुत्रामा यशसा बलं दधाना यज्ञमाविशतो३म्' इत्यनुवाक्या। याज्या ये३यजामहे सुवर्वरुणं य इन्द्र इन्द्रियं दधु० र्यजमानाय शश्वता३ वौ३...। वाग्वषट्कार०। इति याज्या। अयं सौत्रामण्यङ्ग वारुणपशुपुरोडाशयाग उच्यते। (प्रक्रियाक्रमानुरोधने पुरोडाशयागेषु वर्णक्रमो नादृतः) **द्र०** श्रौ०प०नि० पृ० १८०, श्रौ०को० १ भा० पृ० ७१०।

**सौत्रामण्यङ्गाग्निहोत्र—** (अव्य०, आध्वं०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशोरनन्तरं विहितायाः सौत्रामण्युत्तरादित्येष्टेरनन्तरं अग्नीन् समारोप्य स्वान्यग्न्यायतानि सम्प्राप्य मथित्वाऽग्नीन् विहत्याग्निहोत्रं जुहोति। इदं सौत्रामण्यङ्गाग्निहोत्रमुच्यते। **द्र०** श्रौ०प०नि० पृ० १७१।

**सौत्रामण्यनुयाजप्रैषयाज्या— द्र०** त्रिपश्वनुयाजप्रैषयाज्या—।

**सौत्रामण्यन्योऽन्यधावन — द्र०** अन्योऽन्यधावन—।

**सौत्रामण्यवभृथ—** (आध्व०) इष्टिनिरूढपशुविकृतौ... सौत्रामणीप्रकरणे 'अवभृथेन चरन्ति' इत्यादि 'विभुं कामं व्यश्नवै' एतैर्वाक्यमन्त्रैराहवनीयमुपतिष्ठते, इत्यन्तं कर्म सौत्रामण्यवभृथ इत्युच्यते। **द्र०** श्रौ०प० नि० पृ० १६८-७०।

**सौत्रामण्यवभृथानुमन्त्रणमन्त्र— द्र०** अवभृथानुमन्त्रणमन्त्र—।

**सौत्रामण्यवभृथाहुति—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्याज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे अवभृथीयवायव्यपात्रासादनानन्तरं बर्हिः प्रासनादि करोति। अपस्त्रिः संमृज्य बर्हिवर्जं चतुरः प्रयाजानिष्ट्वा आज्यभागाभ्यां प्रचर्य वारुणमेककपालं पूर्वार्धादपरार्धाच्चावदाय उच्चैर्जुहोति। अवत्ते स्विष्टकृति स्रुवेण पञ्चाहुतीर्जुहोति— 'यद्देवा देवहेडनं देवासश्चकृमां वयम्। अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्व ँ्हसः स्वाहा॥ यदि दिवा य० क्तमेना व०। वायुर्मा तस्मादेनसो विश्वान्मुञ्चत्व ँ् हसः स्वाहा॥ यदि जाग्रदूयदि स्वप्न० वयम्। सूर्यो मा तस्मादेनसो विश्वान्मुञ्चत्वँहसः स्वाहा'॥ अत्र क्रमेण अग्नये वायवे सूर्याय इति यथालिङ्गं यजमानस्य त्यागः। यद्ग्रामे यदरण्ये यत् सभायां यदिन्द्रिये। यच्छूद्रे यदर्य एनश्चकृमा वयम्। यदे कस्याधि धर्मणि तस्यावयजनमसि स्वाहा॥ प्रजापतय इदं न ममेति त्यागः। 'यदापो अघ्निया वरुणेति शपामहे ततो वरुण मुञ्च स्वाहा' वरुणायेदं न ममेति त्यागः। एताः पञ्चाहुतयः सौत्रामण्यवभृथाहुतय उच्यन्ते। **द्र०** श्रौ०प०नि० १६९।

**सौत्रामण्यवभृथीयवायव्यपात्र—**(आध्व०,सा०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे अवभृथेऽपां समीपेऽधिष्ठानान्तरं प्रसिद्धं दृश्यहृदयशूलैश्चरित्वा स्फ्येनोद्धृत्या-वोक्ष्य शुष्कस्यार्द्रस्य च सन्धावित्यादि० 'वरुण नो मुञ्च' इत्यन्तं शूलानां कर्म करोति। तत उदकसमीपे दक्षिणापवर्गाणि वायव्यानि सादयति— षट् ग्रहपात्राणि द्वौ द्रोणकलशौ एकं कुम्भं दशापवित्रादि। एतानि सौत्रामण्यवभृथीयव्यपात्राण्यु-च्यन्ते। द्र० श्रौ०प०नि० पृ० १६९।

**सौत्रामण्यवभृथीयवायव्यासादन—** द्र० अव-भृथीयवायव्यासादन—।

**सौत्रामण्यवभृथेऽपां समीपेऽधिष्ठान—** (आध्व०) इष्टिनिरूढपशुविकृतौ हविर्य-ज्ञानां सप्तमे कौकिलसौत्रामणी प्रकरणे यज्ञविमोकान्ते शूलोद्वासनान्तशूलकर्मान-न्तरं 'अवभृथेन चरन्ति' इति चरकसौत्राम-ण्युक्तः सौमिकोऽनुष्ठीयते। तत्र परिभोजनीयान् (दर्भान्) वेदं च कृत्वा पाणी सम्मृश्याग्नीन् परिस्तीर्य गार्हपत्यस्योत्तरतः तृणेषु पात्राण्यासाद्य उत्तरवेदिसमीपे प्रणी-तासादनम् प्रोक्षणीभिर्वा संयवनम्। पुराण-गार्हपत्ये निर्वापादि। वारुणमेककपालं पुरोडाशं निर्वपति आप्यनिनयनान्ते। 'प्रोक्षणीरासादय, स्रुवं स्रुचं च सम्मृढि, पत्नीं सँनह्याज्येनोदेहि' इत्यध्वर्युराग्नीध्रं प्रेष्यति। प्रत्युष्टं रक्षः प्रत्युष्टा अरा-तयोऽग्नेर्वा तेजिष्ठेन तेजसा निष्टपामि' इत्यूहितमन्त्रेण स्रुवस्रुचोर्निष्टपनम्। पत्नीं सन्नह्य आज्यमवेक्षयित्वा यजमानं चाज्य-मवेक्षयित्वाऽऽज्यं प्रकृतिवदुत्पुनाति। 'विष्णवसि वैष्णवं धामासि प्र (प्रा) जापत्यम्' इत्यनेन मन्त्रेणाज्यमभिमन्त्रयते। 'स्योनं ते सदनम्' इत्यादिमन्त्रेण एककपालभाविः पृष्ठं कृत्वा 'यन्मे अग्ने' इत्यादिनाभिमन्त्र-यते। आज्यस्थालीं स्रुतं जुहूं स्फ्य बर्हिर्मुष्टिं एककपालं पुरोडाशं प्रतिवसनीये वाससी सुराग्रहपात्राणि बालानि शततृण्णां स्थालीं हृदयशूलादीनि आदाय अन्तरेण चात्वालो-त्करौ उदङ्पनिष्क्रामन्ति द्वे सृती अशृणवं पितृणामहं देवानामुत मर्त्यानाम्। याभ्या-मिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्च' इति मन्त्रेण। 'उरुं हि राजा वरुण-श्चकार सूर्याय पन्थामन्वेतरा। अपदे पादाः प्रतिधातवे कुरु तापवक्ता हृदया विध-श्चित्' इत्यनेन मन्त्रेण यत्रापः तत्र यन्ति। न सामानि गायन्ति। 'शतं ते राजन् भिषजः सहस्रमूर्वी गभीरामु प्रतिष्टे अस्तु। बाधस्व दूरे निर्ऋतिं पराचैः प्र मुमुग्ध्यस्मत्' इत्यृचं अपो दृष्ट्वा जपन्ति। अपामन्तमधिति-ष्ठन्ति। इदं सौत्रामण्यवभृथेऽपां समीपेऽ-धिष्ठानमुच्यते। द्र० श्रौ०प०नि० पृ० १६८-६९।

**सौत्रामण्यांसोमरूपसंपत्साम्य—** (सा०) इष्टिनि-रूढपशुविकृतौ सोत्रामणीप्रकरणे देवैरनु-ष्ठितस्य प्रथमस्य ज्योतिष्टोमाग्निष्टोमस्य सोमयागस्य यावन्ति। सोमरूपाणि देवैः प्रजापतिना च कृतानि सौत्रामण्यां यज्ञे सुरा-सोमे सुते सति यजमानस्तावन्ति सर्वाणि सोमरूपाण्याप्नोति। तदाह श्रुतिः— 'एता-वद्रूपं यज्ञस्य यद्देवैर्ब्रह्मणा कृतम्। तदेतत्स-र्वमाप्नोति यज्ञे सौत्रामणी सुते (मा० सं० १९।३१) अर्थात् सौत्रामण्यां यज्ञेऽपि पूर्वोक्तं सर्वं सोमरूपसाम्यं दृश्यते। यज-मानस्तत्र सर्वं सोमरूपमाप्नोतित्यतः सौत्रा-मणी यज्ञ सोम यज्ञसदृश एव सोमरूपसाम्यदर्शनात्। साम्यं चैतद् ध्यानेन (भावनया) अवगम्यते। तद्यथा— सौत्रामण्यां शष्पाणि नवप्ररूढव्रीहयः सोमे

दीक्षणीयेष्टे रूपं धेयम् । तोक्मानि नवप्ररूढयवाः प्रायणीयेष्टे रूपम् । लाजाः सोमक्रयस्य रूपेण धेयाः । मधुसोमखण्ड(अंशु—) रूपेण धेयम् । भासरं व्रीहिश्यामाकौदनाचामयोः शष्प तोक्म-लाज-नग्न-हु-चूर्णैः संसर्गः आतिथ्येष्टेः स्वरूपं धेयम् । नग्नहुः सर्जस्वगादिविंशतिवस्तून्येकीकृतान्युच्यते, (द्र० सुरा० द्रव्य०) सधर्मस्य (प्रवर्ग्यस्य) रूपं धेयम् । पूर्वोक्तं सर्वमेकपात्रे कृत्वा 'स्वाद्वीं त्वा' इति मन्त्रेण यद् गर्त्ते त्रिरात्रं स्थापनं सत् उपसत्संज्ञकानामिष्टीनां रूपम् । यत्परिषिच्यते तत्क्रीतस्य सोमस्य रूपं ज्ञातव्यम् । यजमानाभिषेकाऽऽसन्दी सोमराजासन्द्या रूपत्वेन धेया । सुराधानी कुम्भी सौमिक्या वेदेः स्वरूपम् । वेदिद्वयमध्यभागः उत्तरषेवेद्याः रूपम् । सुरापावनचालनचालनी इन्द्रस्य यजमानस्य च भिषक् ज्ञेयः । सौत्रामण्यां वर्तमानया वेद्या सौमिकी वेदिः प्राप्यते । तद्रूपाधेयेत्यर्थः । बर्हिषाऽत्रत्येन सौमिकं बर्हिः संप्राप्यते । वीर्यमिन्द्रियेणाप्यते । यूपेनात्रत्येन सौमिको यूप आप्यते । अग्निनाऽत्रत्येन सौमिकः प्रणीतोऽग्निराप्यते । अत्र सौत्रामण्यां अश्विदेवतासद्भावेन हविर्धानं सौमिकमाप्यते । सरस्वतीसद्भावेन आग्नीध्रं सौमिकमाप्यते । सौत्रामण्यामिद्राय यद्धविः तेन इन्द्रसदः कृतमाप्यते पत्नीशालं गार्हपत्य आप्यते । सौत्रामण्यामिन्द्राय यद्धविस्तत्सौमिकसदा पत्नीशालगार्हपत्यरूपेण धेयमित्यर्थः । प्रैषैः प्रैषानाप्नोति । आप्रीभिः प्रयाजयाज्याभिः यज्ञस्याप्रीराप्नोति । प्रयाजैः प्रयाजानाप्नोति । अनुयाजैरनुयाजानाप्नोति । याज्याभिर्याज्या आप्नोति । वषट्कारैर्वषट्कारानाप्नोति । आहुतिराहुतीराप्नोति । पशुभिः पशूनाप्नोति । पुरोडाशैः पुरोडाशाना प्नोति । हविर्भिरन्यैर्हवींष्याप्नोति । छन्दोभिः छन्दांसि, सामिधेनीभिः सामिधेनीः, याज्याभिर्याज्याः, वषट्कारैर्वषट्कारानाप्नोति । धानाः, करम्भः, सक्तवः, परीवापः, पयोदधनी च सोमस्य रूपम् । आमिक्षा, वाजिनं च हविषो रूपम् । तत्र धानाः (मृष्टयवाः, करम्भः उदमन्थः) । एवमेव च वानादीनां सोमरूपाणां सोमहविषां सोमस्य संपत्तिः सौत्रामणीद्रव्यैः सह । संपद्यते—'धानाना ँ रूपं कुवलं परिवापस्य गोधूमाः । सक्तूनां रूपं वदरमुपवाकाः करम्भस्य ॥ पयसोरूपं यद्यवाः दध्नो रूपं कर्कन्धूनि । सोमस्य रूपं वाजिन ँ सौम्यस्य रूपमामिक्षा ॥' अर्थात् कुवलं कोमलं बदरीफलं धानानां रूपं धेयम् । गोधूमाः परीवापस्यरूपम् । वदरं सर्वं बदरीफलं सक्तूनां रूपम् । उपवाका यवाकाः करम्भस्य रूपं ज्ञेयम् । ये यवाः ते पयसो रूपम् । कर्कन्धूनि स्थूलवदराणि दध्नो रूपम् । वाजिनं सोमस्य रूपम् । आमिक्षा पयस्या सामेस्य चरो रूपमिति अथ शस्त्रसंपत्तिः— सौत्रामण्यां 'अश्रावय' इति शब्दः सोमे निष्केवल्य शास्त्रे स्तोत्रियतृचस्य रूपम् । अस्तु श्रौषट् प्रत्याश्रावः इति शब्दः । अनुरूपतृचस्य रूपम् । 'यज' इति धाय्यारूपम् । 'ये यजामहे' इति प्रगाथरूपत्वेन धेयः । अत्रत्यैरर्धर्चैः उक्थशस्त्रविशेषाणां रूपं प्राप्यते । पदैः, निविदो न्यूङ्खानान् आप्नोति । प्रणवैः ओङ्कारैः शस्त्राणां रूपमाप्यते । दुग्धेन सोम आप्यते । अथ सवनसंपत्तिः अश्विभ्यां प्रातःसवनं प्राप्तम्, इन्द्रेण ऐन्द्रं माध्यन्दिनसवनं प्राप्तम् । सरस्वत्या वैश्वदेवं तृतीयसवनं प्राप्तम् । वायव्यैः पात्रैः व्यायव्यानि सोमपात्राण्याप्नोति । स तेन द्रोणकलशमाप्नोति । वैतसं पात्रं सत इत्युच्यते । कुम्भीभ्यां सुराधानीभ्यां शतच्छि-

द्राभ्यां अम्भृणौ। अम्भृणौ पूतभृदाधवनीयावुच्येते। सुतेऽभिषुते सोमे यौ भवतः तौ आप्नोति। स्थालीभिः स्थालीराप्नोति। यजुर्भिः यजूंषि आप्यन्ते। ग्रहाः ग्रहैराप्यन्ते। स्तोमैः स्तोमा आप्यन्ते विष्टुतिभिः विष्टुतयः आप्यन्ते। छन्दोभिः उक्थानि शास्त्राणि आप्यन्ते। साम्ना साम आप्यते। अवभृथेनावभृथ आप्यते। इडाभिरिडामाप्नोति। भक्षैर्भक्षानाप्नोति। सूक्त्वाकेन सूक्तवाकम्। आशीभिराशिषः आप्नोति। शंयुना (शंयुवाकेन) शंयुमाप्नोति। पत्नीसंयाजैः पत्नीसंयाजानाप्नोति। समिष्टयजुषासमिष्टजुराप्नोति। संस्थया (संस्थाजपेन) संस्थामाप्नोति। अवभृथानन्तरम् उक्तानामिडादीनां सौत्रामण्यां सोमे चोभयत्र समानः सद्भावो दृश्यते। उभयत्र च हुतोच्छिष्टभक्षश्चतूरा त्रिमग्निहोत्रं जुहोतीतिव्रतेन दीक्षामाप्नोति। दीक्षया दक्षिणाप्नोति। दक्षिणया श्रद्धामाप्नोति। श्रद्धया सत्यं ज्ञानमनन्तं ब्रह्म प्राप्यते इति समानो धर्मः। इति सोमरूप सौत्रामणीपदार्थयोः तत्तद्भावनया कृतं साम्यमुदाहृतम् (तु० मा०सं० १९।१२-३१ उ०म० भाष्यम्) द्र० सोमरूप—।

**सौत्रामण्याज्यभागप्रचार—** द्र० निरूढपश्वाज्यभागप्रचार—।

**सौत्रामण्याहवनीयोपस्थान—** द्र० आहवनीयोपस्थान—।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशु —** (अव्य०, आध्व०) इष्टिनिरूढपशुविकृतौ.... सौत्रामणीप्रकरणे सौत्रामणीसंबन्धिमहापितृयज्ञानन्तरं प्रतिपदि पूर्वाङ्गैन्द्रपशुवत् संकल्पप्रभृति इन्द्राय वयोधसे पशुमालभते। नात्र समारोपः। सौत्रामणीत्रिपशुवेदिमुद्रास्य यूपं चोद्वास्य आहवनीयस्याग्रे द्वादशपदां वेदिं विमायोत्तरवेदिं शम्यामात्रीं प्रादेशमात्रीं योनिं च करोति। नात्र सौमिकी वेदिर्न चयनम्। ऋषभो दक्षिणा। पूर्णाहुत्यन्तं पुनरालम्भवर्जं ऐन्द्रं पशुं समापयति। अयं सौत्रामण्युत्तराङ्गवायोधसपशुरुच्यते। द्र० श्रौ०प०नि० पृ० १७१।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुपुरोडाशयाग—** (हौ०) इष्टिनिरूढविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे वायोधसपशुवपायागानन्तरं मैत्रावरुणस्य वायोधसैन्द्रपशुपुरोडाशस्यानुवाक्या— 'वर्षाभिर्ऋतुनाऽऽदित्या स्तोमे सप्तदशे स्तुतम्। वैरूपेण विशौजसा हविरिन्द्रे वयो दधो ३म्'। इत्युनुवाक्या। मैत्रावरुणस्य प्रैषः— 'होता यक्षदिन्द्रं वयोधसं पुरोडाशस्य जुषता ँ् हविर्होतर्यज'। अयं प्रैषः। हविरिन्द्रेवयो याज्या—'ये३ यजामहे सुवः शारदेनर्तुना देवा एकविंश ऋभवः स्तुतम्। वैराजेन श्रिया श्रिय ँ् हविरिन्द्रेदधू३र्वौं० वाग्वषट्कार०। पुरोडाशस्विष्टकृतः अनुवाक्यान्त्वामीहते अजिरम्' इति सौत्रामणीपूर्वाङ्गैन्द्रपशुस्विष्टकृद्यागे प्रोक्ता। प्रैषः— 'होता यक्षदग्निं पुरोडाशस्य' इति सौत्रामणीपूर्वाङ्गैन्द्रपाशुस्विष्ट० प्रोक्ता याज्या— ये३यजामहे सुवराग्नि ँ् सुदीति ँ् सुदृशं गृणन्तो नमस्यामस्त्वेड्यं जातवेदः। वाग्वषट्कार। अयं सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुपुरोडाशयाग उच्यते। द्र० श्रौ०प०नि० पृ० १८४।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुप्रयाजप्रैषयाज्या—** (हौ०) इष्टि-निरूढपशुविकृतौ..... सौत्रामणीप्रकरणे वायोधसैन्द्रपशोरावाहनानन्तरं प्रयाजा अपुरोनुवाक्या भवन्तीति तेषां प्रैषा याज्याश्चेज्यन्ते। तत्र प्रैषः मैत्रावरुणस्य। याज्या होतुः प्रैषः— होता यक्ष-

दिडस्पदे समिन्धन महद्यश: सुषमिद्धं वरेण्यमग्निमिन्द्रं वयोधसम्। गायत्रीं छन्द: इन्द्रियं त्र्यविं गां पयो दधद् वेत्वाज्यस्य होतर्यज। याज्या— ये३यजामहे सुव: समिद्धो अग्नि: समिधा सुषमिद्धो वरेण्य:। गायत्री छन्द इन्द्रियं त्र्यविं गौर्वयोदधू३ वौं०। वाग्वषट्कार०॥ १॥ प्रैष:— होता यक्षच्छुचिव्रतं तनूनपातमुद्भिदं गर्भमदितिर्दधे शुचिमिन्द्रं वयोधसम्। उष्णिहंछन्द इन्द्रियं दित्यवाहं गां वयो दधद्वेत्वाज्यस्य होतर्यज॥ याज्या—ये३यजामहे सुवस्तनूनपाच्छुचिव्रतस्तनूनपाच्च सरस्वती। उष्णिक् छन्द इन्द्रियं दित्यवाड्गौर्वयो दधू३वौं०। वाग्वषट्कार०॥ २॥ (द्वितीयप्रैषयाज्ययोर्वसिष्ठादिषु तदितरेषु च प्रवृत्ति:। अन्यस्यानुक्तत्वात्)। प्रैष:— होता यक्षदीडेन्यमीडितं वृत्रहं तमिडाभिरीज्य ँ सह: सोममिन्द्रं वयोधसम्। अनुष्टुभं छन्द इन्द्रियं त्रिवत्सो गौर्वयो दधद् वेत्वाज्यस्य होतर्यज। याज्या ये३यजामहे सुवरिडाभिरग्नि रीड्य: सोमो देवो अमर्त्य:। अनुष्टुप छन्द: इन्द्रियं त्रिवत्सो गौर्वयो दधू३वौं० वाग्वषट्कार०॥ ३॥ प्रैष:— होता यक्षत् सुबर्हि:षदं पूषण्वन्तममर्त्यँ सीदन्तं वर्हिषि प्रियेऽमृतेन्द्रं वयोधसम्। बृहतीं छन्द इन्द्रियं पञ्चाविं गां वयो दधद्वेत्वाज्यस्य होतर्यज। याज्या ये० सुव: सुवर्हिरग्नि: पूषण्वाँ स्तीर्णं बर्हिरमर्त्य:। बृहती छन्द इन्द्रियं पञ्चाविगौर्वयो दधद् धू३वौं३...। वाग्वषट्कार०॥४॥ प्रैष:— होता यक्षद् व्यचस्वती: सुप्रायणा ऋतावृधो द्वारो देवीर्हिरण्ययीर्ब्रह्माण इन्द्रं वयोधसम्। पङ्क्तं छन्द इहेन्द्रियं तुर्यवाहं गां वयो दधद्वेत्वाज्यस्य होतर्यज। याज्या— ये० सुवर्दुरो देवीर्दशो मही ब्रह्मा देवो बृहस्पति:। पङ्क्तिश्छन्द इहेन्द्रियं तुर्यवाड् गौर्वयो दधू३वौं० वाग्वषट्कार०॥ ५॥ प्रैष:— होता यक्षत् वाहं गां दधद्वेत्वाज्यस्य होतर्यज। याज्या— ये० सुवरूपे पह्वा सुपेशसा विश्वे देवा अमर्त्या:। त्रिष्टुप् छन्द इन्द्रियं षष्ठवाग्गौर्वयो दधू३ वौं३...। वाग्वषट्कार०॥ ६॥ प्रैष:— होता यक्षत् प्रचेतसा देवानामुत्तं यशो होतारा दैव्या कवी सुयुजेन्द्रं वयोधसम्। विराजं छन्द इहेन्द्रियमनड्वाहं गां वयो दधद् वेत्वाज्यस्य होतर्यजा। याज्या— ये० दैव्या होताराभिषजेन्द्रेण सयुजा युजा। जगती छन्द इहेन्द्रियमनड्वान् गौर्वयो दधू३वौं३... वाग्वषट्०॥ ७॥ प्रैष:— होता यक्षत् पेशस्वतीस्तिस्रो देवीर्हिरणमयी भारतीर्बृहतीर्मही: पतिभिन्द्रं वयोधसम्। वि-राजं छन्द इन्द्रियं धेनु गां वयो दधद्वेत्वाज्यस्य होतर्यज॥ याज्या— ये३यजामहे सुवस्तिस्र इडा सरस्वती भारती मरुतो विश:। विराट् छन्द इहेन्द्रियं धेनुगौर्वयो दधू३ वौं३...। वाग्वषट्कार०॥८॥ प्रैष:—होता यक्षत् सुरेतसं त्वष्टारं पुष्टिवर्धनं रूपाणि विभ्रतं पृथक् पुष्टिमिन्द्रं वयोसतम्। द्विपदं छन्द इन्द्रियमुक्षाणं गां वयो दधद् वेत्वाज्यस्य होतर्यज॥ याज्या— ये३यजामहे सुवस्त्वष्टा त्वरीय अद्भुत इन्द्राग्नी पुष्टिवर्धना। द्विपाच्छन्द इहेन्द्रियमुक्ष: गौर्न वयो दधू३वौं३...। वाग्वषट्कार०॥ ९॥ प्रैष: होता यक्षत् क्रतुँ हिरण्यपर्णमुक्थिनँ रशनां विभ्रां वशिं भगमिन्द्रं वयोधमम्। ककुभं छन्द इहेन्द्रियं वशां वेहतं गां वयो दधद्वेत्वाज्यास्य होतर्यज॥ याज्या— ये३यजामहे सुव: शमिता नो वनस्पति: सवित: प्रसुव न (नो) भगम्। ककुप् छन्द इहेन्द्रियमुक्षा गौ न वयो दधू३वौं३...। वाग्वषट्कार०॥ १॥ ततो मैत्रावरुणस्य अग्निर्होता नो अध्वरे इत्यादि पर्यग्निकरणानुवचनं निरू-

ढवता होतु: 'दैव्या: शमितार आरमध्वम्' इत्यादि ऐन्द्रपशुवत् । ततो मैत्रावरुण एकादशं प्रयाजप्रैषं पठति । स यथा— होता यक्षत् । स्वाहाकृतीरग्निं गृहपतिं पृथग्वरुणं भेषजं कविं क्षत्रमिन्द्रं वयोधसम् । अतिच्छन्दसं छन्द इहेन्द्रियं बृहद् ऋषभं गां वयो दधद्वेत्वाज्यस्य होतर्यज । याज्या ये३यजामहे सुव: स्वाहा यज्ञं वरुण: सुक्षत्रो भेषजं करत् । अतिच्छन्दाश्छन्द इन्द्रियं बृहद्वृषभो गौर्वयो दधू ३ वौं० वाग्वषट्कार० ॥ ११ ॥ इत्येकादश सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशो: प्रैषा याज्याश्च । तासां निरूढपशुतोऽत्रत्यो विशेषोऽवगन्तव्य: । आज्यभागप्रचारो निरूढवद् द्र० । श्रौ०प०नि० पृ० १८३-८४ ।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुवपायाग—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे निरूढवदाज्यभागप्रचारानन्तरं वायोधसपशुवपायागस्य मैत्रावरुणस्य अनुवाक्यात्वसन्तेनार्तुना देवा वसवस्त्रिवृता स्तुतम् । रथन्तरेण तेजसा हविरिन्द्रे वयो धो३म् इयमनुवाक्या । मैत्रावरुणस्य प्रैष:— 'होता यक्षदिन्द्रं वयोधसं छागस्य वपाया भेदसो जुषताँ हविर्होतर्यज । अयं प्रैष: । होतु: योज्या— 'ये३यजामहे सुवर्ग्रीष्मेण देवा ऋतुना रुद्रा: पञ्चदशे स्तुतम् । वृहता यशसा बलँ हविरिन्द्रे वयो दधू३वौं० । वाग्वषट्कार० । इयं याज्या । तत्र वपामार्जनं पूर्ववत् (निरूढवत्) । अयं सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुवपायाग उच्यते । द्र० श्रौ०प०नि० पृ० १८४ । द्र० मैत्रावरुणप्रैष—मैत्रावरुणप्रैषवचनविधि- ।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुसूक्तवाक—** (हौ०) इष्टिनिरूढपशुविकृतौ..... सौत्रामणीप्रकरणे वायोधसैन्द्रपशुसूक्तनिरूढपशुसूक्तवाके आज्यभागानन्तरं 'इन्द्रो वयोधा इदँ हविरजुतावीवृधत महोज्यायोयऽकृत' इति विशेष: । अन्यत् सर्वं निरूढवत् । अयं सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुसूक्तवाक उच्यते द्र० श्रौ०प०नि० पृ० १८५ ।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशुपूर्वादित्येष्टि—** (हौ०, अव्य०) इष्टिनिरूढपशुविकृतौ... सौत्रामणीप्रकरणे वायोधसैन्द्रपशुसमाप्त्यनन्तरं पुनर्विहृत्य पूर्ववत् आदित्येष्टिं करोति । समातरं गां दक्षिणां ददाति । पुनरालम्भवर्जं ब्राह्मणतर्पणान्तं करोति । इयं सौत्रामण्युत्तराङ्गवायाधसैन्द्रपशुपूर्वादित्येष्टिरुच्यते । द्र० श्रौ०प०नि० पृ० १७१ ।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशवङ्गयाग—** (हौ०) इष्टिनिरूढपशुविकृतौ... सौत्रामणीप्रकरणे वायोधसपुरोडाशानन्तरं वायोधसपशवङ्गयागस्य मैत्रावरुणस्य अनुवाक्य— 'हेमन्तेनर्तुना देवा मरुतस्त्रिणवे स्तुतम् । बलेन शक्वरी: सहो हविरिन्द्रे वयो दधो३म् इयमनुवाक्या । मैत्रावरुणस्य प्रैष:— 'होता यक्षदिन्द्रं वयोधसं छागस्य हविष आददद्य मध्यतो मेद उद्भृतम् धस्ताम्० करदेवेन्द्रो वयोधा जुषतां यज । अयं प्रैष: । होतु: याज्या— ये३यजामहे सुव: शैशिरेणर्तुना देवास्त्रयस्त्रिंश ऋभव:स्तुतम् । (अर्धर्चेन वसाहोमार्थमारभेत्) रैवतेन श्रिया श्रियँ हविरिन्द्रे वयो दधू३वौं०' । वाग्वषट्कार० । इति याज्या । अयं सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशवङ्ग (हविर्) याग उच्यते । द्र० वनस्पतियागादिपूर्ववत् । द्र० श्रौ०प०नि० पृ० १८४-८५ ।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्र पशवनुयाजप्रैषयाज्या—** (हौ०) इष्टिनिरूढपशुविकृतौ सौत्रामणीप्रकरणे वायोधसैन्द्रपशवङ्गयागानन्तरं वायोधसैन्द्रपशोरनुयाजप्रैषा: त

एव याज्याश्चेज्य- न्ते। तत्र देवं बर्हिरिन्द्रं वयोधसं देवमिन्द्रमवर्धयद् गायत्रिया छन्द-सेन्द्रियं तेज इन्द्रे वयो दधद् वसुवने वसु-धेयस्य वेतु होतर्यज ॥ १ ॥ देवीर्द्वारो देवमिन्द्रं वयोधसं देवीर्देवमवर्धयन्। उष्णिहा छन्दसेन्द्रियं प्राणमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वियन्तु यज ॥ २ ॥ देवी देवं वयोधसमुषे इन्द्रमवर्धतामनुष्टुभा छन्दसेन्द्रियम् वाचमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वीतां यज ॥ ३ ॥ देवी जोष्ट्वी देवमिन्द्रं वयोधसं देवी देवमवर्धताम्। बृहत्या छन्दसेन्द्रियँ श्रोत्रमिन्द्रे वयो दधद् वसुवने वसुधेयस्य वीतां यज ॥ ४ ॥ देवी ऊर्जाहुती देवमिन्द्रं वयोधसं देवी देवमव-र्धताम्। पङ्क्त्या छन्दसेन्द्रियँ शुक्रमिन्द्रे दधद् वसुवने वसुधेयस्य वीतां यज ॥ ५ ॥ देवा दैव्या होतार देवमिन्द्रं वयोधसं देवा देवमवर्धताम्। त्रिष्टुभा छन्दसेन्द्रियं त्विषि-मिन्द्रे वयोदधद्वसुवने वसुधेयस्य वीतां यज ॥ ६ ॥ देवीस्तिस्रस्तिस्रो देवीर्वयोधसं पतिमिन्द्रमवर्धयन्। जगत्या छन्दसेन्द्रियं बलमिन्द्रे वयोदधद् वसुवने वसुधेयस्य वियन्तु यज ॥ ७ ॥ देवो नराशंसो देव-मिन्द्रं वयाधसं देवो देवमवर्धयत्। विराजा छन्दसेन्द्रियं रेत इन्द्रे वयो दधद् वसुवने वसुधेयस्य वेतु यज ॥ ८ ॥ देवो वनस्पति र्देवमिन्द्रं वयोधसं देवो देवमवर्ध-यत्। द्विपदा छन्दसेन्द्रियं भगमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ९ ॥ देवं वर्हिर्वारितीनां देवमिन्द्रं वयोधसं देवो देवमवर्धयत्। ककुभा छन्दसेन्द्रियं यश इन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ १० ॥ देवो अग्निः स्विष्टकृद् देवमिन्द्रं वयोधसं देवो देवमवर्धयत्। अतिच्छन्दसा छन्दसेन्द्रियं क्षत्रमिन्द्रे वयो दधद्वसुवने वसुधेयस्य वेतु यज ॥ ११ ॥ एते एकाद-शानुयाजा उच्यन्ते। तैः प्रथमः प्रैषः ततो याजक्रमेण मैत्रावरुणो होतारं प्रेष्यति। होता च एतैः प्रैषैः यजशब्दस्थाने वषट्कार-युतैर्याज्याभूतैः क्रमेण यजति। इत्येते प्रैषा याज्याश्चोच्यन्ते। द्र० श्रौ०प०नि० पृ० १८५।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपश्वावाहन—** (हौ०) इष्टिनिरूढपशुविकृतौ.....सौत्रामणीप्रकरणे इन्द्राय वयोधसे पश्विष्ट्यादि सर्वं निरूढ-वद् भवति। आज्यभागावाहनानन्तरं इन्द्रं वयोधसमावह। वनस्पतिमित्यादिनिरूढ-वत् कार्यम्।

**सौत्रामण्युत्तराङ्गवायोधसैन्द्रपशूत्तरादित्येष्टि —** (आध्व० हौ०) द्र० सौत्रामण्युत्तराङ्गा-दित्येष्टि—।

**सौत्रामण्युत्तराङ्गादित्येष्टि—** (हौ०, अव्य०) इष्टि-निरूढपशुविकृतौ सौत्रामणीप्रकरणे सौत्रा-मण्युत्तराङ्ग वायोधससूक्तवाकानन्तर-मुत्तराङ्गादित्येष्टौ अदितिर्देवता (चरु-र्द्रव्यम्। 'अदितिर्नउरुष्यति' इत्यनुवाक्या। 'महीमूषु मातरं सुव्रतानाम्' इति याज्या। 'उपदेशादितराणि' इति वचनात् सर्वं याजु-षवत्। शेषं प्रकृतिवत्। इति सौत्राम-ण्युत्तराङ्गादित्येष्टिरुच्यते। द्र० श्रौ०प०नि० पृ० १८५-८६।

**सौपर्णसूक्त—** (हौ०, सा०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने मैत्रा-वरुणस्य विकृतशिल्पशस्त्रे १. इमानि वां भागधेयानि' (ऋ० ८।५९।१-७) इति सप्तर्चं खिलसूक्तेषु एकादशं सूक्तं सुपर्णे-नर्षिणा दृष्टं सौपर्णसूक्तमुच्यते। तच्छिल्प-शस्त्रे बालखिल्येभ्य ऊर्ध्वं शंसेत्। तस्य प्रागुत्तमाया (६) ऋच आह्वानं (सोंशावोम्) कृत्वा 'हंसः शुचिषत्' (ऋ० ४।४०।५)

इत्यस्यां दूरोहणं शंसेदिति विशेषोऽवधेयः (तु०—आ०श्रौ० ८।२।१३-१४ नारायणः)। २. सौपर्णे खैलिके सूक्ते दूरोहणं रोहेत्। 'इमानि वां भागधेयानि' इति सौपर्णं सूक्तम्। तदुक्तम्— इमानि वेति सप्तर्वं सौपर्णं खैलिकं विदुः' इति। यद्वा 'प्रधारा यन्तु' इति गृह्योक्तं सूक्त सौपर्णम् (आ०गृ०-१)। (तु०—ऐ० ब्रा० सा० ६।२५)। द्र० दूरोहण—।

**सौभर—** (सा०, औ०) सौभरं नाम सामविशेषः। षोडशिसंस्थायां नित्यं नैमित्तिकं च। अतिरात्रे नैमित्तिकं च। सौभरं 'हीष्, ऊक्, ऊ' इत्रिणिधनम्। तत्र हीष् इति वृष्टिकामाय निधानं कुर्यात्, ऊक् इति अन्नाद्यकामाय, ऊ इति स्वर्गकामाय, इति विशेषोऽवधेयः। द्र० मी०को० पृ० ४३६९।

**सौमिककर्मभेद—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमसम्बन्धीनि कर्माणि बाहिर्वेदिकान्तवेदिकसर्वर्त्विकसाध्यभेदेन त्रिविधानि भवन्ति। १. दीक्षणीयाप्रावणीया आतिथ्या— घर्मोपसदुदयनीयानि बाहिर्वेदिकानि २. अग्नीषोमीयादीनि आन्तर्वेदिकानि। ३. अभिषवधिष्ण्योपस्थानादीनि सर्वर्त्विक्साध्यानीति। (तु०—का०श्रौ० २२।१।४०-४३ विद्याधरः)। द्र० सोमविधा—।

**सौमिकत्व—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे.... अग्निष्टोमे तद्विकृतिषु-चैकाहाहीनसत्रेषु दीक्षा उपसदः सुत्या इति त्रिप्रकारणामेव सौमिकत्वम्। तेन दीक्षणीयायाः प्राग्भाविन उरवासंभरणीयादेः सौमिकधर्म उपांशुत्वादिर्न भवतीति। (तु०—आ०श्रौ० ४।२।१७ नारायणः)।

**सौमिकदक्षिणादान —** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनेषु दक्षिणाविभजनान्तरं यजमानः सदसि गच्छति— 'एतत्ते अग्ने राध० नयन्तीः इति।' सदसः पुरस्तादासीनमात्रेयं ब्राह्मणं प्रत्येति— 'ब्राह्मणमद्य० सुधातु दक्षिणम्' इति। किञ्चित् किञ्चित् गृहीत्वा तं पृच्छति त्रिः। क आत्रेयः इति। स द्विवारं अयमहमिति वदति। तृतीये त्वहमित्येव। यजमानस्तं संपूज्य हस्ते तस्मै हिरण्यं ददाति— 'चन्द्रम ँ ह्ः' इति। यथासंभवं वस्त्रादि च ददाति आग्नीध्रीयं गत्वाऽग्नीधे हिरण्यं दक्षिणाभागं ददाति 'अग्नीद् यथाभागं दक्षिणां ते ददामि' इति। एवं सदसि गत्वा ब्रह्मणे होत्रे उद्गात्रे च। हविर्धाने गत्वाऽध्वर्यवे प्रतिप्रस्थात्रे च। चमसाध्वर्युभ्यस्तु क्रतुदक्षिणा-भिन्नां यथासंभवं दक्षिणां ददाति। पुनः सदो गत्वा प्रस्तोत्रे मैत्रावरुणाय ब्राह्मणाच्छंसिने अच्छावाकाय नेष्ट्वे उन्नेत्रे सुब्रह्मण्याय च दत्त्वा प्रसर्पकेभ्यो विद्याविशेषानुरूपां क्रतुदक्षिणाभिन्नां दक्षिणां अशं तदीयं ददाति। प्रकृतिवत् सर्वे प्रति गृह्णन्ति। प्रतिग्रहमन्त्रे रुद्राय वा इत्यूहो विशेषः। सत्रेषु दक्षिणा न दीयन्ते इति विशेषोऽवधेयः। इदं सौमिकदक्षिणादानमित्युच्यते। द्र० श्रौ०प०नि० पृ० २९९-३००।

**सौमिकदक्षिणादानकाल—** (आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूत...... प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनेषु माध्यन्दिने सवने माध्यन्दिनपवमाने बृहत्याः स्तोत्रे गौरवयौधाजयसाम्नोर्गानसमये दक्षिणा दीयन्ते यजमानैः। इत्यनेन माध्यन्दिनपवमानस्य मध्ये दक्षिणा दातव्या।

तच्च आसन्नेषु नाराशंसेषु दक्षिणा दातव्या' इत्यनेन सह विकल्प्यते। तदुक्तं 'पवमानस्य बृहती यद् बृहत्याः स्तोत्रे दक्षिणा दीयन्ते' (तु०—ता० ब्रा० सा० ७।४।१)।

**सौमिकद्वादशिकविहार—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे सप्रवर्ग्ये प्रवर्ग्यवत्सु अन्यत्र चैकाहाहीनसत्रेषु कुशलैः भृत्यैः पूर्वमेव यथाविधि कृतायां शालायां (द्र० शाला—) प्रवेशस्यानन्तरं प्राग्वंशस्य (शालायाः) पश्चिमाच्छङ्कोरनुस्पन्द्यं सार्धपदत्रयं सार्धतिस्रद्वयाधिकाङ्गुलद्वयं च मुक्त्वा शङ्कुं निहन्ति। स च गार्हपत्यमध्यशङ्कुः। सार्धतिलद्वयाधिकसप्तदशाङ्गुलया रज्ज्वा शङ्कौ पाशं प्रतिमुच्य मण्डलं परिलिखति। तद् गार्हपत्यायतनं भवति। एवं सति पश्चाद्गार्हपत्यस्य सार्धपदद्वयमवशिष्टं भवति। पञ्चतिलाधिकचतुस्त्रिंशदङ्गुलं च गार्हपत्यस्यायतनं संपद्यते। प्राग्वंश- पूर्वशङ्कोः प्रत्यञ्चमनुस्पन्द्यं सार्धपदत्रये शङ्कुं निहन्ति। स आहवनीयमध्यः। द्विपदमाहवनीयायतनं संपद्यते। आहवनीयस्याग्रे सार्धपदमवशिष्टं भवति। गार्हपत्याहवनीययोरन्तरालं पञ्चधा षोढा वेत्यादिप्रकारेण दक्षिणाग्नेर्मध्यदेशं कल्पयित्वा शङ्कुं निहत्य पादोनतिलाधिक तिलाधिकचतुर्विंशत्यङ्गुलया रज्ज्वा मण्डलं परिलिख्य मध्यशङ्कोरञ्जसा उदगध्यर्धतिलद्वयाधिक-द्वादशाङ्गुले षडङ्गुले वा शङ्कुं निहत्य तत्र पाशं प्रतिमुच्य तयैव रज्ज्वा मण्डलं परिलिख्य तयोः संसर्गो नियम्योत्तरं धनुरुत्सृजेत्। दक्षिणं दक्षिणाग्नेरायतं भवति। आहवनीयस्य पश्चात् प्राकृतवेदिः। तत्पश्चात् अवशिष्टो विशयः। इत्यन्तादन्तपक्षेण द्वादशिको विहारः। शेषं प्रकृतिवत्। अयं सौमिकद्वादशिको विहार उच्यते। श्रौ०प०नि० पृ० १८८-८९।

**सौमिकपरिधिस्रुगभिमर्शन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने आग्नीध्रीयादिपञ्चकसंमर्शनानन्तरं ब्रह्मयजमानाभ्यां आज्यदधिभ्यां च सहाग्नीध्रीयदेशं गत्वाऽग्नीषोमीयवत् पृषदाज्यसहितान्याज्यानि गृहीत्वा परिकर्मिभ्यः प्रदाय प्रोक्षण्युन्महनादि कृत्वा वेदिप्रोक्षणस्थाने खरस्योत्तरार्धे प्रोक्ष्य तत्रैवैकविधं बर्हिः स्तीर्त्वा प्रस्तरपाणिः प्राङ्भिसृज्यौदुम्बरान् महापरिधीन् परिधाय 'एता असदन्' इत्यादिमन्त्रेण स्रुगभिमर्शनान्तं कृत्वा परिधीन् योगेन युनक्ति—'युनज्मि ते पृथिवीं ज्योतिषा सह' इति मध्यमं परिधिम्। युनज्मि वाचं सह सूर्येण ते' इत्युत्तरम्। सन्नाः स्रुचोऽभिमृशति। 'युनज्मि तिस्रो विपृचः सूर्यं ते' इति। इदं सौमिकपरिधिस्रुगभिमर्शनमित्युच्यते। द्र० श्रौ०प०नि० पृ० २५८।

**सौमिकपशु—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जमालभ्यमानेषु पशुषु १. यस्य पित्रादिभिः सोमयागो न कृतः एवं यस्य त्रिपुरुषपर्यन्तं वेदाध्ययनमग्न्याधानं च न जातं तस्य प्रायश्चित्तत्वेन ऐन्द्राग्न आश्विनो वा पशुः। २. आनीषोमीयः पशुः ३. सवनीयाः (स्तोमायनपशवः) ते च अग्निष्टोमसंस्थेषु क्रतुष्वेक आग्नेयः सवनीयः पशुः, उक्थ्यसंस्थेष्वाग्नेयैन्द्राग्नौ द्वौ, षोडशिसंस्थेष्वाग्नेयैन्द्राग्नैन्द्रास्त्रयः, अतिरात्र-

संस्थेषु आग्नेयैन्द्राग्नैन्द्रसारस्वताश्चत्वार: इति दश। ४. आग्नेय स्थाने पश्वैकादशिन:— आग्नेय:, सारस्वत:, सौम्य:, पौष्ण:, बार्हस्पत्य:, वैश्वदेव:, ऐन्द्र:, मारुत:, एन्द्राग्न:, सावित्र:, वारुणश्चेत्येकादश पशव:। ५. आनूबन्ध्य: पशु:। ६. द्वादशाहे प्राजापत्य: पशु:। गवामयने विषुवति द्वितीय: सौर्य: पशु:। ७. वाजपेये प्राजापत्या: सप्तदश: पशव:। ८. सामाङ्गे अग्निचयने इष्टकापशु:— पुरुषाश्वगोऽव्यजा: पथमे पक्षे पञ्च पशव:, प्राजापत्य: द्वितीये पक्षे एक:, तृतीये वायव्य एक: (तु०— का०श्रौ० १६।१।५ विद्याधर:)। त्रिरात्रे अश्वमेधे त्रिषु दिनेषु प्रत्येकं एकविंशति: सवनीया: पशव:। अश्व तूपा-गोमृगास्त्रय: सवनीया:। एवञ्चात्र २२ ऐकादशिना:। ३२७ अश्वादय: सौर्यान्ता: २६० कपिञ्जलादय:, एवं योगेन ६०९ पशव:। श्लोकश्च 'षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि। अश्वमेधस्य यज्ञस्य नवभिस्त्वाधिका हि। तत्र कपिञ्जलादींस्तूत्सृजन्ति (तु०—आ०श्रौ० २०।६।५।९ विद्याधर:) इति सौमिक पशव उच्यन्ते।

**सौमिकपुरोडाशशकलदान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत.... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवनीयक प्रस्थित याज्याप्रचारानन्तरं प्रदक्षिणमावृत्य होतुरग्रे उपवेशनादि इडोपहूतचमसमक्षान्तं भवति। भक्षमन्त्रे 'आदित्यवद्गणस्य' इति तृतीयस्य सवनस्य 'जगतीच्छन्दस इन्द्र पीतस्य' इत्यूह:। नाराशंससादनानन्तरं ब्रह्मादय: सर्वे प्राचीनावीतं कृत्वा स्वस्वचमससमीपे त्रींस्त्रीन् पुरोडाश शकलान् प्रक्षिपन्ति। अध्वर्यु— प्रतिप्रस्थातारौ होतृचमससमीपे। स्वस्थाने उपविश्यानुमन्त्रयन्ते 'अत्र पितरो यथाभागं मन्दध्वम्' इति। अध्वर्युरत्रस्थ एव। इदं सौमिकपुरोडाशशकलदानमित्युच्यते। द्र० तृतीयसवनीयप्रस्थितयाज्याप्रचार—, श्रौ०प०नि० पृ० ३०८।

**सौमिकबर्हिस्—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तृद्विकृतिषु चैकाहाहीनसत्रेषु या आतिथ्येष्टि:, या उपसदिष्टि:, यश्चाग्नीषोमीय: पशुस्तेषु आतिथ्येष्टौ सकृद् गृहीतमेव बर्हिरुपयुज्यते न पृथग् गृह्यते। तेन तत्रैकवारमेव गृहीतं बर्हि: सौमिकं बर्हिरुच्यते। तदुक्तम्— 'यदातिथ्यां बर्हिस्तदुपसदां तदग्नीषोमीयस्य' इति। तस्य च प्रोक्षणम्, अग्राणामवपातनम्, मूलानामवसेचनं चेति त्रय: संस्कारा भवन्तीति।

**सौमिकर्त्विग्वरण—** (याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु यजमान: ऋत्विगाह्वानान्तरं सोमप्रवाकेनाहूतान् यज्ञशालां प्राप्तान् ऋत्विगाह्वानानन्तरं सोमप्रवाकेनाहूतान् यज्ञशालां प्राप्तान् ऋत्विज: क्रमेण आधानवद् वृत्वाऽर्हयति द्वितीयिनस्तृतीयिन: पादिनश्च। वृतेषु ऋत्विक्षु होता ब्रह्माऽध्वर्यु: उद्गाता च प्रथमा इत्युच्यन्ते। मैत्रावरुणो ब्रह्मणाच्छंसी प्रतिप्रस्थाता प्रस्तोता च द्वितीयिन इत्युच्यन्ते। अच्छावाक आग्नीध्रो नेष्टा प्रतिहर्ता च तृतीयन इत्युच्यन्ते। ग्रावस्तुत् पोता उनेता सुब्रह्मण्यश्च पादिन इत्युच्यन्ते। (दक्षिणादानानैमित्तिका इमा: संज्ञा:)। ततो दश चमसाध्वर्यून् परिकर्मिणश्च सोमप्रवाकवद् वृत्वाऽर्हयति। इदं सौमिकर्त्विग्वरणमित्यु-

च्यते। द्र० श्रौ०प०नि० पृ० १८७-८८ ऋत्विग्वरण—।

**सौमिकवाजिनप्रचार—** (आध्व०, अव्य०) सोमयज्ञेषु प्रकृतिभूत.... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातः सवने सवनीयेडाभक्षणान्ते प्राशित्रपरिहरणम्, शाखापरिहरणम्, ततो वाजिन प्रचारः। अयं सौमिक वाजिनप्रचार इत्युच्यते। द्र० श्रौ०-प०नि० पृ० २८६, वाजिनयाग—।

**सौमिकवेदि—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत..... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दार्शिकीं वेदिं मध्येऽन्तर्भाव्य प्राचीनवंशो मण्डपोऽवस्थितः। ततः पूर्वस्यां दिशि सदो हविर्धानादीनां पर्याप्तो भूभागविशेषः। तैः सदः प्रभृतिभिः सह सौमिकी वेदिरभिधीयते। २. सौमिकी वेदिः सदोहविर्धानादीनां पर्याप्तो भूभागः। अयं भूभागः, दार्शिकीं वेदिमन्तर्भाव्य योऽयं प्राचीनवंशो नाम मण्डपः ततः प्राचीनः। द्र० मी०को०पृ० ४३७७। सोमाङ्गेष्टिपशवादिषु सौमिकवेद्या दार्शिकवेदेः प्रसङ्गसिद्धिः। मी०को० पृ० ४३७८। ३. सौमिक्या महावेद्याः पृथक् ऐष्टिकी वेदिः न कार्या। द्र० मी०को० ४३७७ इति विशेषोऽवधेयः।

**सौमिकमहावेदिमान—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं पूर्णिमायां सुत्येति सुत्याकालात् पूर्वं चतुर्षु दिनेषु पूर्वाङ्गविधिरनुष्ठीयते। तत्रैकादश्यामकदीक्षापक्षे दीक्षा। त्र्युपसत्पक्षे द्वादश्यां प्रथमोपसत्। त्रयोदश्यां द्वितीयोपसत्। चतुर्दश्यां तृतीयोपसत्। अस्मिन्नेव चतुर्थेऽहनि अग्नीषोमीयः पशुः क्रियते। एतद्दिनमौपवसथ्यमहरुच्यते। एतस्मादह्नः पूर्वं द्वितीयोपसत्प्रचारानन्तरमध्वर्युः सौमिकमहावेदिं मिमीते प्राकृतिकविहारमहावेद्युत्तरवेदिरूपाम्। (क) तत्र प्राकृतो विहारः— आदौ यागयोग्यां भूमिं निश्चित्य पश्चिमभागे द्वादशभिर्दशभिर्वा अरत्निभिः प्रमितं चतुरस्रं मण्डपमनुदग्द्वारं प्राग्वरां पञ्चहस्तमितैश्चतुर्भिः स्तम्भैर्युतं सर्वत उपरि च समाच्छादितं निर्मिमीते अध्वर्युः। उपरि दक्षिणोत्तरं तृणवालिकादिनिधानम्। अयं मण्डपः प्राचीनवंशशब्देन विमितशब्देन च व्यवह्रियते। प्राचीनः—प्रागग्रो वंशो मध्यबलो यस्येति। अरत्निद्वयविस्ताराणि द्वाराणि सर्वत्र। विमितस्य पूर्वस्मादन्ताद् द्व्यरत्निव्यवहिते देशे शङ्कुर्देयः, स आहवनीयमध्यः। आहवनीयस्थानमायामतो विस्तारतश्च हस्तमितम्। तस्मात् पश्चात् सप्तरत्निव्यवहिते देशे शङ्कुर्देयः, स गार्हपत्यमध्यः। तत्र सार्धत्रयोदशाङ्गुलमितरज्ज्वा वृत्तं कार्यम्, स गार्हपत्यः। चतुरङ्गुलविस्तारः। द्वादशाङ्गुलोत्सेधा मेखलाः सर्वत्र। आहवनीयमध्यशङ्कोरारभ्य गार्हपत्यमध्यं यावद् वर्तमानस्य भूभागस्य सप्तारत्नि परिमितत्वात् सप्तारत्निपरिमितां रज्जुं गृहीत्वा तदीयसप्तमभागेन अरत्न्यात्मकेन संयोज्य अर्धाद् अष्टहस्तां रज्जुं गृहीत्वा तस्या अन्तयोः पाशौ कृत्वा मध्ये च तृतीये तृतीये भागे चिह्नं कृत्वा एकं पाशं गार्हपत्यमध्यशङ्कौ आसज्य द्वितीयपाशमाहवनीयमध्यशङ्कौ आसञ्जयेत्। रज्जुमध्यवर्तिनोर्द्वयोश्चिह्नयोः पश्चिमस्थाने रज्जुं गृहीत्वा दक्षिणत आकर्षयेत्। यत्र तच्चिह्नं पतति तत्र तच्चिह्नं कृत्वा तस्मात् स्थानादुत्तरतः सार्धनवाङ्गुलव्यवहिते देशे शङ्कुर्देयः। शङ्कुस्थानं केन्द्रत्वेन परिकल्प्य न वाधिकोनविंशत्यङ्गुलमितरज्ज्वा वृत्तं कार्यम्। वृत्तमध्ये केन्द्रसंलग्ना परिधिपूर्वभागमादाय

परिधिपश्चिमं यावत् सरलरेखा कार्या। रेखात उत्तरभागस्य त्यागः कार्यः। वृत्तस्य दक्षिणार्द्धं दक्षिणाग्निस्थानम्। पूर्वोक्तयोश्चिह्नयोः पूर्वचिह्नस्थाने रज्जुं गृहीत्वा उत्तरत आकर्षणे यत्र चिह्नं पतति स उत्करमध्यः। तत्र त्र्यङ्गुलेन भ्रमणं कार्यम्, एकाङ्गुलो गर्तश्च कार्यः। आहवनीयमध्यशङ्को पश्चात् त्र्यरत्निव्यवहिते देशे शङ्कुर्देयः, तस्माद् दक्षिणत उत्तरश्च त्र्यरत्निव्यवहिते देशे शङ्कू देयौ, ते श्रोणी। आहवनीयपूर्वशङ्कोर्दक्षिणत उत्तरश्च सार्धारत्नि सार्धारत्निव्यवहिते देशे शङ्कू देयौ, तावंसौ। चतुर्षु कोणस्थशङ्कुषु सूत्रार्पणाद् विषमचतुरस्रं भवति। वेदेर्दक्षिणकोणमारभ्य दक्षिणपार्श्वे द्वाविंशाङ्गुले शङ्कुर्देयः स संग्रहमध्यः। तत्र एकोनविंशत्यङ्गुलमितकर्कटेन वेदिमध्ये अर्धवृत्तं कार्यम्, स संग्रहः।

एवमुत्तरतोऽपि संग्रहः कार्यः।त्र्यङ्गुलखाता वेदिः। अखातौ संग्रहौ मतौ। गार्हपत्यस्योत्तरेऽवकाशं विहाय गार्हपत्यवत् सभ्यायतनं कर्तव्यम्। एवमाहवनीयस्योत्तरे आवसथ्यायतनं गार्हपत्यवत्। अयमेव प्राकृतिको विहार उच्यते—। प्राकृताद् विशेषस्तु गार्हपत्यशङ्कोरुदक् सार्धद्व्यरत्निव्यवहिते देशे शङ्कुदेयः। स खरस्य मध्यः। तत्र चतुर्विंशत्यङ्गुलमितं द्व्यङ्गुलोत्सेधं चतुरस्रं मृदा कुर्यात्। स खर इत्युच्यते। एवमेवाहवनीयस्योत्तरतो द्वितीयः खरः कर्तव्यः। विमितस्य पश्चादुत्तरतश्च पञ्चारत्निपरिमितं परिवृतद्वयं कर्तव्यम्। तत्रैकं पत्नीशाला, अपरं दीक्षास्नानस्थानं, घर्मपात्रपात्रस्थानं च (ख) महावेदिः—परिवृतद्वयेऽपि द्वार उत्तरे कार्यम्। विमितपूर्वद्वारशङ्कोः सकाशात् पूर्वस्यां दिशि द्विपदात्मकप्रक्रमत्रयेव्यवहिते देशे शुङ्कुर्देयः सोऽन्तपात्यः। (सोमे द्विपदप्रक्रमेणैव मानम्। पदं तु दशाङ्गुलं, द्वादशाङ्गुलं, पञ्चदशाङ्गुलं वेति) दशाङ्गुलपदपक्षे सदो मानमरत्निमानेनैव कार्यम्। अन्तःपात्याद् दक्षिणत उत्तरतश्च पञ्चदशसु पञ्चदशसु प्रक्रमेषु शङ्कू देयौ, तौ महावेदेः श्रोणी। अन्तः पात्यशङ्कोः सकाशात् पूर्वस्यां दिशि द्विपदात्मकषट्त्रिंशत्प्रक्रमव्यवहिते देशे शङ्कुर्देयः, तस्माद् दक्षिणत उत्तरतश्च द्वादशसु द्वादशसु प्रक्रमेषु शङ्कू देयौ, तावंसौ। अन्तः पात्यशंकोः पूर्वस्यां दिशि द्विपदप्रक्रमात्मकसार्धप्रक्रमव्यवहिते देशे शङ्कुर्देयः, स सदसः पश्चिमप्रान्तः। तस्माद् दक्षिणत उत्तरतश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, ते सदसः श्रोणी। सदसः पश्चिमशङ्कोः पुरस्तात् नवारत्निव्यवहिते देशे शङ्कुर्देयः, स सदसः पूर्वप्रान्तः। तस्माद् दक्षिणतः उत्तरश्च नवारत्निव्यवहिते देशे शङ्कू देयौ, तावंसौ सदसः। सदसः पश्चिमे पूर्वे च द्वारे कार्ये। अन्तः पात्यात् पूर्वस्यां दिशि षट्सु प्रक्रमेषु शङ्कुर्देयः, तस्माद् दक्षिणतः पञ्चरत्निव्यवहिते देशे शङ्कुर्देयः, तदौदुम्बरीस्थानम्। षट्प्रक्रमान्ते निहितशङ्कोः पूर्वस्यां दिशि एकविंशत्यङ्गुले शङ्कुर्देयः, तद्दक्षिणत एकोनविंशत्यधिकशताङ्गुलेषु शङ्कुर्देयः, स प्रशास्तुर्धिष्ण्यमध्यः। एवं पृष्ठ्यात उत्तरतो नवाङ्गुले शङ्कुर्देयः, स होतुर्धिष्ण्यमध्यः। (वेदिमध्ये वर्तमानप्राचीरेखा पृष्ठ्या) तस्मादुत्तरतः षट्त्रिंशदङ्गुलान्तरालाश्चत्वारः शङ्कवो निखेयाः। ते ब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकधिष्ण्यानां मध्याः। शङ्कुषु अष्टादशाङ्गुलानि चतुरस्राणि चतुरङ्गुलोच्चानि स्थण्डिलानि मृदा कर्तव्यानि, तानि धिष्ण्या उच्यन्ते। (ग) तत उत्तरवेदिः—यूपावटदेशात् पश्चिमतः पदं त्यक्त्वा शङ्कु-

र्देयः, तस्मात् पश्चिमतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, तस्माद् दक्षिणत उत्तरश्च सार्धद्व्यरत्निसार्धद्व्यरत्निव्यवहिते देशे शङ्कू देयौ, ते उत्तरवेदेः श्रोणी। एवं पूर्वस्मादंसौ। इयं दशपद्योत्तरवेदिः कार्या। सा च चतुरङ्गुलोच्चा हस्तोन्नता वा। उत्तरवेदेः पश्चात् पदद्वयात्मकव्यवहिते देशे हविर्धानपूर्वद्वारमध्ये शङ्कुर्देयः। तस्मात् पश्चात् दशसु प्रक्रमेषु पश्चिमद्वारमध्य शङ्कुः। द्वारशङ्कोर्दक्षिणे उत्तरे च पदद्वयात्मकपञ्चप्रक्रमव्यवहिते देशे शङ्कुचतुष्टयं देयम्। एवं कृते दशप्रक्रममितश्चतुरस्रश्चतुः स्तम्भो हविर्धानमण्डपः संपद्यते। हविर्धानमण्डपे समप्रमाणानि चत्वारि कोष्ठकानि भावयित्वा आग्नेयकोष्ठस्य मध्ये चतुर्विंशत्यङ्गुलमितं समचतुरस्रं प्रकल्प्य तस्य चतुर्षु कोणप्रान्तेषु प्रादेशमात्रविस्तारान् प्रादेशान्तरालान् बाहुमात्रनिम्नान् गर्तान् खनेत्। अक्षणया संभेदनशक्तौ सम्यक् तदा पूर्वयोरभेदनम्। तेषामुपरि वारणानि फलकानि भूसंलग्नानि संपुय्येत्। एते गर्ता उपरवशब्देन व्यपदिश्यन्ते। हविर्धानस्य वायव्यकोणादुत्तरे समसूत्रतया पदद्वयात्मकचतुःप्रक्रमव्यवहिते देशे शङ्कुर्देयः, स आग्नीध्रीयस्य नैर्ऋत्यकोणः। तस्मादुत्तरतः पञ्चारत्निव्यवहिते देशे शङ्कुर्देयः, स आग्नीध्रीयस्य वायव्यकोणः। तयोः शङ्क्वोरार्जवेन पुरस्तात् पञ्चारत्निव्यवहिते देशे शङ्कू देयौ, ते आग्नेयेशानयोः कोणे। पञ्चारत्निपरिमितं चतुरस्रमाग्नीध्रीयं कार्यम्। तस्य दक्षिणे पूर्वे च द्वारे कर्तव्ये। एवमेव दक्षिणे आग्नीध्रीयस्य समसूत्रतया मार्जालीयागारं पूर्वद्वारवर्जमुदग्द्वारमाग्नीध्रीयवत् कर्तव्यम्। उभयोर्मध्येऽष्टादशाङ्गुलपरिमितौ धिष्ण्यौ कर्तव्यौ। महावेदेरुत्तरांसादुदक् त्रिंशदङ्गुले शङ्कुर्देयः। तस्मात् प्रत्यक् चतुस्त्रिंशदङ्गुलव्यवहिते देशे शङ्कुर्देयः, स चात्वालमध्यः। द्वात्रिंशदङ्गुलपरिमितश्चतुरस्रश्चात्वालः कार्यः। उत्तरांसात् पश्चाद् द्वादशसु प्रक्रमेषु पृष्ठ्याया उत्तरतश्च चतुर्दशसु प्रक्रमेषु उत्करमध्यः। तत्र षडङ्गुलेन भ्रमणं कार्यम्, चतुरङ्गुलो गर्त्तश्च कार्यः। चात्वालादुत्तरतः पूर्वद्वारं पञ्चारत्नि शामित्रं कर्तव्यम्। इत्येतैः पदार्थैः सौमिकी महावेदिः संपाद्यते। सोऽयं सम्पादनप्रकारो सौमिकमहावेदिमानमुच्यते। सा च महावेदिः छदिभिः (कटैः) समाच्छादिता भवति। तत्र हविर्धानमण्डपस्योपरि छदिस्त्रयेण, सदसो नवभिश्छदिभिरुदगग्रैराच्छादनम्। सदसो मण्डपे कोणेषु, स्तम्बचतुष्टयम्। महावेद्या अवशिष्टांशस्य आच्छादनं भवेन्न वा। उत्तरवेदेस्तु आच्छादनं क्रियते। सदो हविर्धानयोः परितोऽपि छादनं भवति। त्र्यङ्गुलखाता सा चेयं सौमिकवेदिः प्राकृतो विहारः, महावेदिः, उत्तरवेदिरिति तिसृणां वेदीनां विशिष्टैः पदार्थैः साधिता दृश्यते। तत्र प्राकृतविहारस्य-प्राचीनवंशमण्डपः (विमितः) १, आहवनीयायतनं (स्थानं) २, गार्हपत्यस्थानं ३, दक्षिणाग्निस्थानं ४, उत्करः। ५, श्रोणी ६, अंसौ ७, संग्रहौ ८, सभ्यायतनं ९, आवसथ्यायतनं १०, इति दश पदार्थाः। (द्र० दक्षिणवेदिः) । महावेदेःखरौ १, विमितः २, परिवृतद्वयं (पत्नीशालादीक्षास्नानस्थानम्, घर्मपाकस्थानम्) ३, श्रोणी ४, अंसौ ५, सदः ६, सदसः श्रोणी ७, सदसः अंसौ, औदुम्बरी स्थानं ९, धिष्ण्याः (मैत्रावरुण-होतृ-ब्राह्मणाच्छंसि-पोतृ-नेष्टृ-अच्छावाकानामष्टादशा-ङ्गुलानि चतुरस्राणि चतुरङ्गुलोच्चानि स्थण्डिलानि मृदा कृतानि) १०, इति दश पदार्थाः। उत्तरवेदेः-श्रोणी १, अंसौ २, हविर्धानमण्डपः ३, उपरवाः ४,

आग्नीध्रीयं ५, मार्जालीयागारं ६, धिष्ण्यौ ७, चत्वालः ८, उत्करः ९, शामित्रं १० इति दश पदार्थाः । ते संभूय त्रिंशद् भवन्ति । इत्यैतैः साधन- भूतैस्त्रिंशत्पदार्थावयवैः सौमिकी महावेदिरुत्पाद्यते इति स्पष्टोऽर्थोऽनुसन्धेयः । (तु०— का०श्रौ० ८ ।३ ।६ टि० विद्याधरः) । अत्रोक्ताः प्राग्वंशमण्डपादयः पदार्थाः स्वस्ववर्णानुक्रमे द्रष्टव्याः ।

**सौमिकशालामुखीयहोम—** (आध्व०) द्र० शालामुखीयहोम— ।

**सौमिकस्वर—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मन्द्रमध्यमक्रुष्टा(उत्तमा)ख्यास्त्रयः, स्वराः उपां- शूच्च स्वराश्च प्रयुज्यन्ते । तत्र १. सोमपूर्वाङ्गेष्विष्टिपशुषु मन्द्रेण दीक्षणीयायाम्, मन्द्रतरेण प्रायणीयायाम्, मन्द्रतरेणातिथ्यायाम् । उपांशूपसत्सु । उच्चैराग्नीषोमीये । आप० श्रौ० २४ ।१ ।१२-१४) । अथवा 'उपांशु वा दीक्षणीयायाम् । उपांशुतरं प्रायणीयायाम् । उपांशुतरमातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये' (आप० श्रौ० १० ।४ । ११) २. 'अथैकेषाम्— यावत्यस्य वाग् भवति तावतीं दीक्षणीयायामन्वाह । ततो नीचैस्तरां प्रायणीयायाम् । नीचैस्तरामातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीये' (आप०श्रौ० १ ।४ ।१०) । ३. दीक्षणीयायां सोमक्रयणे च समानः स्वरः । ४. प्रातरनुवाकं मन्द्रेण स्वरेणानुब्रूयात् (तु०—आ०श्रौ० ४ ।१३ । १६) । ५. प्रातरनुवाके प्रातरनुवाकस्यादित आरभ्य 'ईले द्यावापृथिवी (ऋ० १ ।११२ ।१-२५) इति ईलेद्यावीय पर्यन्तं मन्द्रस्वर आरोहक्रमेण सर्वः प्रयोक्तव्यः । तत्र ईलेद्यावीयस्योत्तमर्गन्तेन मन्द्रस्योत्तमेन यमेन 'प्रतिप्रियतमम्' (ऋ० ५ ।७५) इत्येतद्विषयं मध्यमस्य प्रथमं यममारभेत । अस्मिन् सूक्ते उत्तमायाः प्रागेवाऽऽरोहक्रमेणैव मध्यमस्वरं सर्वं प्रयुञ्जीत । ततो मध्यमस्योत्तमेनोत्तमर्गन्तमुत्तमस्य प्रथमं यममाददीत । आदावारोहिक्रमेणैवोत्तमं स्वरं तस्यामेवर्चि सर्वं प्रयुञ्जीत ६. प्रातरनुवाकपरिधानीयायाः परं प्रपदनाद्यदपोनप्त्रीयं तन्मद्रेण स्वरेण प्रयोक्तव्यम् । ७. प्रातः सवने मन्द्रः स्वरः । माध्यन्दिने मध्यमः स्वरः । तृतीयसवने क्रुष्टः (उत्तमः) स्वरो भवति । (तु०—आप०श्रौ० २४ ।१ ।१२-१३) ।८. 'परं मन्द्रेण प्रातः सवनं च' (आ०श्रौ० ५ ।१ ।३-४) । 'एतस्मिन् काले ग्रावस्तु प्रपद्यते' (आ०श्रौ० ५ ।११ ।१) । मध्यमस्वरेणेदं सवनम्' (आ०श्रौ० ५ ।१६ ।६) । 'अथ तृतीयसवनमुत्तमस्वरेण' (आ०श्रौ० ५ ।१७ ।१) । 'प्रथमस्थानेन प्राग्देवता दशात् । प्रातः सवने चोच्चैः कर्माणि । मध्यमेन माध्यन्दिने मध्यमेन । उत्तमेन तृतीयसवने' (का० श्रौ० ९ ।६ ।१६-१९) । ९. संकल्पप्रभृति अग्नीषोमीयात् पशोः प्राक् सर्वं कर्म उपांशु कर्तव्यम् । अथवा उच्चैः स्वरेण दीक्षणीयामिष्टिं चरेत् । दीक्षणीयापेक्षया नीचैस्तरां (शनैः शनैस्तरां) प्रायणीयाम्, ततोऽपि नीचैस्तरामातिथ्याम् ।

उपसद इष्टय उपांशु कर्तव्याः । तदुक्तम्— तस्माद् यत्किञ्च प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति । यावत्या वाचा कामयेत तावत्या दीक्षणीयामनुब्रूयात्, मन्द्रं प्रायणीयां मन्द्रतरमातिथ्याम्, उपांशूपसत्सु, उच्चैः प्रवर्ग्येणेति (तु०—का०श्रौ० ७ ।२ ।२७-२९ विद्याधरः) । १०. सर्वेषु एकाहा- हीनसत्रेषु ज्योतिष्टोमस्वरन्यायः ।

इति सामान्येन ज्योतिष्टोमातिरात्रे सौमिकस्वर उच्यते ।

**सौमिकेष्टि–** (अव्य०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दीक्षणीयाद्युदवसानीयान्ता इष्टयः सौमिक्य इष्टयो भवन्ति । ताश्च उपांशु हविषो भवन्ति इति विशेषोऽवधेयः । द्र० सौमिकस्वर— ।

**सौमिकोत्कर –** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिकवेदिमाने महावेद्या उत्तरांसीयाच्छंकोरनुस्पन्द्यं द्वादश प्रत्यञ्चि पदानि प्रक्रम्य उदक् त्रयोदश प्रक्रामति । स सौमिक उत्कर उच्यते । द्र० श्रौ०प०नि० पृ० २३३ ।

**सौमिकोत्तरवेदि–** द्र० २ उत्तरवेदि– । सौमिकमहावेदिमान– ।

**सौम्यचरुयाग –** (आध्व०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने १. महावैश्वदेव- (वैश्वदेव-) ग्रहपात्रस्य चमसानां च प्रक्षालनं कृत्वा सौम्येन चरुणा यजेत तदुक्तम् । 'स तृतीयसवनाय चरुं श्रपयति । सौम्येन चरुणा तृतीयसवने प्रचरति । (आज्येन) सौम्ययागस्योभयतः पुरस्तात् उपरिष्टात् परियजेत् । अथवा अन्यतरतः परियजेत् । अत्र अनुवाक्या न पठ्यते । अतः चतुर्गृहीतमाज्यं गृहीत्वा आश्राव्याह—'घृतस्य यज' इति याज्यापाठार्थं प्रेष्यति । वषट्कृते जुहोति । स आज्यस्योपस्तीर्य द्विश्चरोऽवद्यति । अथोपरिष्टादाज्यस्याभिघारयति । आश्राव्याह— 'सौम्यस्य यज' (याज्यां पठ) इति प्रेष्यति । वषट्कृते जुहोति । तत्र आग्नेय्या पुरस्तात् सौम्यं परियजति वैष्णव्योपरिष्टात् दक्षिणार्धेऽग्नेर्जुहोति । (तु०—श्रौ०को० २ भा० पृ० ४४७-४८ का०श्रौ० १० ।६ ।६-११ विद्याधरः) । २. सौम्यस्य चरोरुभयतो घृतसाध्यौ द्वौ यागौ अनुष्ठेयौ (तयोरग्निदेवत्या विष्णुदेवत्येति द्वे याज्ये भवतः । तत्र 'घृतवाहनोघृतपृष्ठो अग्निः' इति आग्नेयी प्रथमा याज्या । 'उरु विष्णो विक्रस्व' इति वैष्णवी द्वितीया घृतयाज्या । त्वं सोम पितृभिः संविदानः' (ऋ० ८ ।४८ ।१३) इति सौमी पितृमती तृतीया याज्या । (तु०—ऐ० ब्रा० सा० ३ ।३२) । ३. सौम्यो नाम कर्म विशेषश्चरुहविष्कः सोमदेवत्यः । तस्य सौम्यस्य 'त्वं सोम पितृभिः संविदानः' (ऋ० ८ ।४८ ।१३) इति याज्या । तं सौम्यमभितो घृतयाज्याभ्यां उपांशु परियजन्ति । 'घृतवाहनो घृतपृष्ठोऽग्नि...यजसि देव देवान्' इत्याग्नेय्या प्रथमया घृतयाज्यायाः पुरस्तात्, 'उरू विष्णो विक्रमस्व...प्र प्र यज्ञपतिं तिर' इति वैष्णव्या द्वितीयया घृतयाज्या उपरिष्टात् (यजन्ति) । यदि अन्यतरतो यजन्ति तदा 'अग्नाविष्णू महि धाम् प्रियं वाम्' इत्याग्ना वैष्णव्या उपांशु यजन्ति । ततः अध्वर्युणाऽऽहृतं लीनाज्यं उद्गातृभ्यः पूर्वं गृहीत्वा 'यत्ते चक्षुर्दिवि...मयि तद् दधातु' इति मन्त्रेण सौम्यं चरुं अवेक्षेत । तस्मिंश्चरौ घृतप्लुते ईक्षमाणः स्वच्छायां यदि न पश्येत् तस्यापश्यतः 'हृदि स्पृक् क्रतुस्पृक्' इत्यादि यजुश्च भद्रं कर्णेभिः' (ऋ० १ ।८९ ।८) इति ऋचं ब्रूयात् । अङ्गुष्ठोपकनिष्ठिकाभ्यां चरुस्थेनाज्येन अक्षिणी अङ्क्त्वा छन्दोगेभ्यः प्रदानार्थं अध्वर्यवे प्रयच्छेत् । (तु०—आ०श्रौ० ५ ।१९ ।१-६ नारायणः) इति यावदुक्तः । सौम्यचरुयाग उच्यते ।

**सौम्यद्वितीयाज्यभागपुरोनुवाक्या—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पूर्णमासे 'त्वं सोमासि सत्पतिः' (ऋ० १ ।९१ ।५) इयं सौम्यस्य द्वितीयस्य वार्त्रघ्नस्याज्यभागस्य पुरोनुवाक्या (आ०श्रौ० १ ।५ ।२९ । ३२) । दर्शे 'सोम गीर्भिष्ट्वा वयम्' (ऋ० १ ।९१ ।११) इयं सौम्यस्य द्वितीयस्य वृधन्वत आज्यभागस्य पुरोनुवाक्या (आ०श्रौ० १ ।५ ।३५ श्रौ०को० १ भा० पृ० २०६) । द्र० आज्यभागआज्यभागप्रतिषेधदेश— ।

**सौम्यद्वितीयाज्यभागप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च आग्नेयवार्त्रघ्नाज्यभागयागयोः अध्वर्युणा 'सोमायाज्यस्यावदीयमानस्यानुब्रूहि' इति प्रेषितो मैत्रावरुणः 'सोमगीर्भिष्ट्वा वयम्' (ऋ० १ ।९१ ।१३) इत्यनु-वाक्यां पठति । ततोऽध्वर्युणा 'सोमायाज्यं प्रस्थितं प्रेष्य' इत्युक्ते प्रशास्ता 'होता यक्षत् सोमाज्यस्य जुषतां हविर्होतर्यज' इति प्रैषेण होतारं प्रेष्यति । अयं प्रैषः सौम्याज्यभाग प्रैष इत्युच्यते । द्र० श्रौ०प०नि० पृ० १४६ । अत्र 'ब्रूयात् यत् प्रैषाश्चाऽऽदेशम् । अनुवाक्यां च सप्रैषे पूर्वां प्रैषात्' (आ०श्रौ० ३ ।१ ।२० २-१) इत्याश्वलायनसूत्रोक्तत्वात् मैत्रावरुणोऽनुवाक्यं पठति । मैत्रात्रवरुणो यत्र यागे भवति तत्र स एवानुवाक्यां पठेदिति विशेषोऽनुसंधेयः । तु०—तत्रैव श्रौ०प०नि० ।

**सौम्यद्वितीयाज्यभागयाज्या—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च 'ये३यजामहे सोमं जुषाणः सोम आज्यस्य हविषो वेतु बौ३षट्' इतीयं दर्शपूर्ण मारुयोरुभयोः द्वितीयस्य सौम्याज्यभागस्य याज्या । नित्या च भवति । तदुक्तम्—'ता वाऽऽगूर्याऽऽदेशं यजति' इति । ये३यजामहे इत्यागुः पूर्वकं देवतानामोच्चार्य वषट्कारं कृत्वा यजतीत्यर्थः । (तु०—आ०श्रौ० १ ।५ । २९ ।३४ श्रौ०को० १ भा० पृ० २०७) । द्र० आज्यभागआज्यभागप्रतिषेधप्रदेश- ।

**सौर्यपात्रे सोमग्रहण —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत..अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने सौर्यपात्रेण सोमं गृह्णाति—'तरणिर्वि० रोचनम् । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते' इति । परिमृज्य सादयति—'एष ते योनिः सूर्याय त्वा भ्राजस्वते' इति । इदं सौर्यपात्रे सोमग्रहणमुच्यते । सौर्यपात्रमतिग्राह्यपात्रमिति चोच्यते । द्र० श्रौ०प०नि० पृ० १७५-७६ ।

**सौर्यातिग्राह्यग्रहप्रचार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु माध्यन्दिनसवने ऐन्द्रातिग्राह्यग्रह- प्रचारानन्तरं उन्नेता सौर्यमादायावेक्षते—'सूर्य भ्राजस्वि० कुरु' इति । जुहोति—'बायोञ्च त्वा० स्वाहा' इति । वाचयति— 'सुवर्विदसि० सुवर्हासीत्' इति । सोऽयं सौर्यातिग्राह्यग्रहप्रचार उच्यते । द्र० श्रौ०प०नि० पृ० ३०३, ऐन्द्रातिग्राह्यग्रहप्रचार— ।

**स्तम्ब—** (सा०) एकमूलोऽनेकशाखः (दर्भः) स्तम्ब उच्यते । (तु०—का० श्रौ० १७ ।३ ।१ विद्याधरः) ।

**स्तम्बयजुस्—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. यजुर्मन्त्रेण छिन्नो दर्भः

स्तम्बयजुरित्युच्यते। (द्र० स्तम्ब–) २. प्रहरण- पूर्वकमुत्करे सतृणपुरीषा हरणात्मकः कर्मविशेषः (स्फ्य प्रहृतानि तृणानि स्तम्बः, स्तम्बप्रधानं यजुः यज्ञाङ्गं स्तम्ब यजुरिति मध्यमपदलोपी कर्मधारय समासः)। (तु०—तै० ब्रा० सा० ३ ।२ ।९ ।५)। ३ यद्वा यजुषा मन्त्रेण प्रहर्तव्यः स्तम्बो यस्मिन् कर्मणि तत्कर्म स्तम्बयजुरित्युच्यते।

**स्तम्बयजुर्हरण—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. 'देवस्य त्वा' (मा०सं० १ ।२४) इति मन्त्रेण सतृणं स्फ्यमादाय तं वामहस्ते निधाय वामहस्तस्थमेव सतृणं स्फ्यं दक्षिणेन स्पृष्ट्वा 'इन्द्रस्य बाहुरसि' (मा०सं० १ ।२४) इति जपानन्तरं प्रहरणादि पुरीषनिवपनान्तं कर्म स्तम्बयजुर्हरणशब्देनोच्यते। तद्यथा— यस्मिन् देशे वेदिः निर्मापयिष्यते तस्मिन् देशे वेद्यामध्वर्युरुदगग्रं तृणं स्फ्येन सह गृहीतं 'पृथिव्यै वर्मासि' इत्यनेन निदधाति। ततः तृणेनान्तर्हितायां भूमौ स्फ्येन 'पृथिवि देवयजनि' (मा०सं० १ ।२५) इत्यनेन मन्त्रेण प्रहरति। प्रहरणं तृणे एव न भूमौ इति सम्प्रदायः। प्रहरणानन्तरं 'व्रजं गच्छ गोष्ठानम्' (मा०सं० १ ।२५) इत्यनेन मन्त्रेण स्फ्येनोद्धृतां मृदं गृह्णाति। ततश्च 'वर्ष तु ते द्यौः' (मा०सं० १ ।२५) इति वेदिं प्रेक्ष्य स्फ्येन गृहीतां तां मृदं 'वधान देव सवितः' (मा०सं० १ ।२५) इत्यनेन मन्त्रेण उत्करे प्रक्षिपति। इदमेव प्रहरणादि उत्करे प्रक्षेपान्तं कर्म 'अपाररुं पृथिव्यै' (मा०सं० १ ।२६) इति पुनः पूर्ववद् द्वितीयवारं कुर्यात्। ततः अग्नीत् हस्तद्वयेन उत्करमभिमृशेत् 'अररोदिवम्' (मा०सं० १ ।२६) इत्यनेन मन्त्रेण। 'द्रप्सस्तेद्याम्' (मा०सं० १ ।२६) इति तृतीयवारं प्रहरणाति उत्करप्रक्षेपान्तं कुर्यात्। ततश्चतुर्थवारं पुनः प्रहरणाद्युत्करकरणान्तं सर्वं कर्म तूष्णीं कुर्यात्। पुरीषं च तृणेन सहैव चतुर्थवारं प्रक्षिपेत्। एतत्कर्म साम्बयजुर्हरणमित्युच्यते (तु०—का० श्रौ० २ ।६ ।६-१७ विद्याधरः)। २. स्तम्बयजुर्हरणं स्तम्बेन तृणमूलेन सह पांसूनां वेदेः पूर्वार्धात बहिर्हरणम्। द्र० मी०को० पृ० ४३८७।

**स्तुतशस्त्रयोः प्रधानकर्मत्व—** (सा०) सोमयागानां प्रकृतिविकृतिभूतानामेकाहाहीनसत्राणां त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु स्तोत्राणि स्तुवते शस्त्राणि च शंसन्ति। तत्र प्रगीतमन्त्रसाध्यं गुणेन गुणिनः संबन्धाभिधानं स्तवनं स्तोत्राम्। शस्त्रमपि (शंसनै) स्तवनमेव अप्रगीत मन्त्रसाध्यम्। यथा 'आज्यैः स्तुवते, प्रउगं शंसति' इति। तत्र स्तोत्राणि शस्त्राणि च देवतां प्रति गुणभूत कर्माण्युत प्रधान कर्माणि इति विचारे श्रुतिसंयोगात्, स्तोत्रशास्त्रशब्दपृथक्त्वात्, विधिवैयर्थ्यात् अभिधानस्य कर्मवत्त्वं (द्वितीय प्रयोगात्) फलनिर्वृत्तेश्चेति हेतुभिः स्तोत्राणि शस्त्राणि च देवतां प्रति प्रधानकर्माणि न गुणम् इति तेषां प्रधानकर्मभूते प्रधानकर्मत्वं सिद्धान्तिमतम्। द्र० मी०को० पृ० ४३९०।

**स्तुति—** (सा०) इष्टिपशुसोमयज्ञादिषु १. 'देवानां स्तुतिस्तु नाम्ना रूपेण कर्मणा बांधवेन च' (तु०—बृ०दे० १ ।७)। तथा च 'स्तुतिर्नाम्ना बान्धवकर्मरूपैः' (आ०श्रौ० २ ।१४ ।२४ सिद्धान्ती। २. स्तुतिर्नाम गुणकथनपरमेकं वाक्यम्। गुणाभिधानं स्तुतिरिति चोच्यते। ३. गुणिनिष्टगुणाभिधानलक्षणा स्तुतिः। अत एव बृहद्देवतायां 'स्तुवन्तं वेदः सर्वोऽयमर्थवत्येव मामिति। स्तौतीत्यर्थं ब्रुवन्तं च सार्थं मामेष पश्यति॥ स्तुवद्भिर्वा ब्रुवद्भिर्वा ऋषिभिस्तत्त्वदर्शिभिः।

भवत्युभयमेवोक्तमुभयं ह्यर्थत: समम्॥ (बृ०दे० १।९-१०) इत्युक्तम्। द्र० स्तोत्र—। ४. स्तुति: नाम स्तोतव्यस्य स्तावकैर्गुणै: संबन्धकीर्तनं गानविशिष्टम्। द्र० मी०को० पृ० ४४००।

**स्तोक —** (सा०, आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वपाश्रपणकाले १-वपायां श्रप्यमाणायां तापवशाद् ये बिन्दव: पतन्ति ते स्तोका उच्यन्ते। २. आर्द्राया: श्रप्यमाणाया वपाया नीरबिन्दव: स्तोका उच्यन्ते।

**स्तोकानुवचन—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके...सौमिकेषु पशुषु च अध्रिगु पाठप्रैषयोरनन्तरं 'शमितारो यदत्र सुकृतं कृणवथास्मासु तद्यद् दुष्कृतमन्यत्र तत्' (ऐ० ब्रा० २।७) इति जपमन्त्रं जपित्वा यथोपविष्ट एव होता दक्षिणाङ्गेनावृत्य प्रत्यङ्मुखो विहारं पृष्ठत: कृत्वाऽस्ते। एवं मैत्रावरुणोऽपि। पशुसंज्ञपनानन्तरं होतृमैत्रावरुणौ तथैवावृत्य प्राङ्मुखावासाते। तत: वपाश्रपणकाले अध्वर्युणा 'स्तोकेभ्योऽनुब्रूहि' इति प्रेषितो मैत्रावरुणो 'जुषस्व स प्रथस्तमम्' (ऋ० १।७५।१) इति ऋचम्, 'इमं नो यज्ञम्' (ऋ० ३।२१।१-५) इति सूक्तं चाध्यर्धकारवर्जं सामिधेनीवदन्वाह। इदं स्तोकानुवचनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १४५-४६।

**स्तोकानुवचनकाल—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके ...सौमिकेषु पशुषु च १. मैत्रावरुणो यदा 'वपायां श्रप्यमाणायां प्रेषित: स्तोकेभ्योऽन्वाह—जुषस्व सप्रथस्तमम्' इमं नो यज्ञम्'। (आ०श्रौ० ३।४।१) इति प्रैषमनुवदति तदानीं स्तोकानुवचनकालो भवति, २. तदाह बौधायन:—'यदा जानाति स्तोकेभ्योऽनुब्रूहि' इति तदा मैत्रावरुण: स्तोकीया अन्वाह—'जुषस्व सप्रथस्तमम्' इति। एष काल: स्तोकीयानुवचनस्य काल उच्यते। (तु०—ऐ० ब्रा० स० २।१२)।

**स्तोकानुवचनीया—** (हौ०) पशुयज्ञेषु ऐन्द्राग्निप्रकृतिके...सौमिकप्रकृतिकेषु व पशुषु 'जुषस्व सप्रथस्तमम् (ऋ० १।७५।१), 'इमां नो यज्ञममृतेषु' (३।२१।१-५) इत्येता: षड् ऋच: स्तोकीया: स्तोकानुवचनीया: उच्यन्ते द्र० ऐ० ब्रा० २।१२।

**स्तोकानुवचनीया प्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके...सौमिकप्रकृतिकेषु सौमिकेषु पशुषु च वपामभिघारयन्नध्वर्यु: 'स्तोकेभ्योऽनुब्रूहि' इति प्रैषमन्त्रं ब्रूयात् तदाहापस्तम्ब:—'त्वामु ते दधिरे हव्यवाहम्' इति स्रुवेण वपामभिजुहोति प्रादुर्भूतेषु स्तोकेषु 'स्तोकेभ्योऽनुब्रूहि' इति संप्रेष्यति। (तु०— ऐ० ब्रा० सा० २।१२)।

**स्तोकाहुति—** (आध्व०) पशयज्ञेषु ऐन्द्राग्नपशुप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च उपाकरणबर्हिरग्रप्रक्षेपानन्तरं प्रदीप्तस्य बर्हिरग्रस्य ज्वालायां वपां वपाश्रपण्या किञ्चित् प्रतितप्य यूपाहवनीययोरन्तरेण नीत्वा दक्षिणत: प्रतिप्रस्थात्रे प्रयच्छति। प्रतिप्रस्थाता आहवनीयस्य दक्षिणत: उदङ्मुख: स्थित्वा श्रपयति। अध्वर्युरासीन: श्रप्यमाणाया वपाया उपरि अपूर्वाज्येन 'त्वामु ते दधिरे' इत्यृचा स्रुवाहुतिं जुहोति। 'जातवेदसे अग्नय इदमिति यजमानस्य त्याग:। सेयं स्तोकाहुतिरुच्यते। द्र० श्रौ०प०नि० पृ० १३१, उपाकरणबर्हिरग्रप्रक्षेप—।

**स्तोत्र–** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत-ज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम-संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु सामगाने १. येन समाम्नायेन छन्दोगा: स्तुवन्ति तत्स्तोत्रमुच्यते।(तु०—आ० श्रौ० ५।१०।१ देवत्रात:)। स्तोत्रमग्रे भवति अनन्तरं शस्त्रम् भवतीति नियम: ।) २. उद्गा-तृभि: साम्ना गीयमानं (पठ्यमानम्) देवता-निष्ठगुणाभिधानं स्तोत्रमुच्यते। स्तोत्रं प्रगीतमन्त्रसाध्या स्तुति: । द्र० मी०को० पृ० ४४०२ । ३. स्तोत्रं स्तवनम् । तच्च साम्ना एव क्रियते न तु ऋचा । स्तोत्रं स्तुति: साम्नैव न ऋचा । द्र० मी०को० पृ० ४४०० । ४. सामसाध्यस्तुतय: स्तोत्राणि उच्यन्ते (साम-साध्यस्तुति: स्तोत्रम्) । तत्र बहिष्पवमान-स्तोत्रं वर्जयित्वा सोमयागेषु यावन्ति स्तोत्राणि विहितानि तावन्ति सर्वाण्यपि सदोनामकमण्डपमध्यस्थितै: उद्गात्रादिभि-र्गीयन्ते । बहिष्पवमानस्तोत्रं तु सदोमण्ड-पाद् बहि: चात्वालदेशे उद्गात्रादिभि-र्गीयन्ते । बहिष्पवमानस्तोत्रं तु सदोमण्डपा-द्बहि: चात्वालदेशे उद्गात्रादिभिर्गीयन्ते इति विशेषोऽवधेय: । ५. प्रगीतमन्त्रसाध्यं गुणेन गुणिन: संबन्धाभिधानं स्तवनं स्तोत्रम् तच्च साम्ना एव क्रियते न तु ऋचा उद्गातृभि: साम्नागीयमानं (गीत्या पठ्यमानं) देवतानि-ष्ठगुणाभिधानम् । द्र० स्तुति— ।

**स्तोत्रकल्पनान्याय–** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु त्रिषु सवनेषु छन्दो दैवतसामान्त-योगात् स्तोत्राणि कल्प्यन्ते इति स्तोत्र-कल्पनानां न्याय: स्तोत्रकल्पनान्याय उच्यते । यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य छन्दोदैवतसामान्तानां योगात् स्तोत्राणि कल्पितानि दृश्यन्ते । अर्थात् छन्दोयोगादिभ्य: स्तोत्रविधि: क्लृप्तो दृश्यते । तदुक्तम्—'छन्दोदैवत-सामान्तान्याय्यान् ब्रुवते यथा षोडशि-मतोऽतिरात्रस्य ज्योतिष्टोमस्य' (ला०श्रौ० ६।९।१)। द्र० छन्दोयोग–, दैवतयोग-सामान्तयोग— ।

**स्तोत्रक्रम–** (औ०) सोमयज्ञेषु प्रकृतिभूत...अग्नि-ष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु साम्नां हिङ्कार: १, प्रस्ताव: २, उद्गीथ: ३, प्रतिहार: ४, उपद्रवम् ५, निधनम् ६, षड्विध: स्तोत्रक्रमो भवति । द्र० सामभक्ति— ।

**स्तोत्रक्लृप्ति–** द्र० स्तोमक्लृप्ति— ।

**स्तोत्रगतसाम्न: पाञ्चविध्य:–** (औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु प्रस्तावोद्गीथप्रतिहारोपद्रवनि-धनानीति पञ्च भक्तय: स्तोत्रगतस्य साम्न: पाञ्चविध्यमुच्यते । तत्र प्रथमं प्रस्तावाख्यं भागं प्रस्तोता गायति । उद्गीथाख्यं द्वितीयं उद्गाता, तृतीयं प्रतिहारं प्रतिहर्ता, चतुर्थं उप-द्रव्यं पुनरुद्गाता । पञ्चममन्त्यं निधनं सर्वे गायन्तीति सामान्यो न्याय: । द्र० सामभक्ति— ।

**स्तोत्रगानदेश–** (औ०) सोमयज्ञेषु प्रकृति-भूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु बहिष्पवमानवर्जं आज्यस्तोत्र-माध्य-न्दिनपवमानपृष्ठस्तोत्रआर्भवमानअग्निष्टो-मादीनि यावन्ति स्तोत्राणि विहितानि ता-वन्ति सर्वाण्यपि सदोनामकमण्डपमध्ये स्थितै: प्रस्तोत्रादिभिरुद्गातृभिर्गेयानि (तु०—का० श्रौ० १।६।१७ विद्याधर:) ।

**स्तोत्रदेवता–** (औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु

स्तोत्राणां यद्देवत्यासु स्तुवते सा स्तोत्रदेवता' (ला०श्रौ० ६।९।४)।

**स्तोत्रप्रसव—** (ब्रह्म०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु त्रिषु सवनेषु उपाकरणानन्तरं 'ब्रह्मन् स्तोष्यामः प्रशास्तः' इति प्रस्तोत्रा प्रार्थितो ब्रह्मा 'देवसविरेतत्ते प्राह तत् प्र च यज बृहस्पतिर्ब्रह्मा युष्मत्या ऋचो मा गात तनून-पात् साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसवे भूरिन्द्रवन्तः स्तुत' इति प्रातः सवने, भुवरिन्द्रवन्त इति माध्यन्दिनसवने, सुवरिन्द्रवन्तः स्तुत' इति तृतीयसवने प्रसौति। सोऽयं स्तोत्रप्रसव इत्युच्यते। (तु०—श्रौ०को० २ भा० पृ० २९९; ५६०)। द्र० प्रसव—।

**स्तोत्रशस्त्रदोहवाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु स्तुते (स्तोत्रे) स्तुतस्य दोहं वाच-यति—स्तुतस्य स्तुतमस्यूर्जं मह्यं स्तुतं दोहामा मा स्तुतस्य स्तुतं गम्यात्' इति। शस्त्रे शस्य दोहं वाचयतिशस्त्रस्य शस्त्रम-स्यूर्जं मह्यं शस्त्रं दोहामा मा शस्त्रस्य शस्त्रं गम्यात्' इति स्तोत्रशस्त्रदोहवाचनमुच्यते। द्र० श्रौ०को० २ भा० पृ० ५६०।

**स्तोत्रशस्त्रन्याय—**(औ०, हौ०) सोमयज्ञेषु प्रकृति-भूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रप्रकरणे स्तवने शंसने च १. यथा वावस्तोत्रमेवं शस्त्रम्' इति स्तोत्रशस्त्रन्याय इत्युच्यते। यथा अतिरात्रे क्रतौ यदा सामगाः प्रथमेन पर्यायेण स्तुवते तदानीं स्तोत्रियाणां प्रथमपादान् द्विरभ्यन्ति। एवं शस्त्रेऽपि 'पुरुहुतं पुरुष्टुतम्' (ऋ० ८।९२।२) इत्या-दिकाः प्रथमपादा द्विरभ्यसनीयाः। (तु०—ऐ० ब्रा० सा० ४।६ आ०श्रौ० ६।४। १०)। २. यथैव स्तोत्रं स्तुवीत तथैव शस्त्रं शंसेत्। इतिस्तोत्रशस्त्रयोरेकविधत्वं स्तोत्र-शस्त्रयोः समानो धर्मो न्यायो वा स्तोत्रशस्त्रधर्मः स्तोत्रशस्त्रन्यायो वोच्यते।

**स्तोत्रस्वरूप—** द्र० माध्यन्दिनस्तोत्र—।

**स्तोत्रानन्तरवाचन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु प्रातःसवने बहिष्पवमानारम्भवा-चनानन्तरं दशहोतारं व्याख्याय समाप्ते साम्नि यजमानं वाचयति—'स्तुतस्य... रयीणाम्' इति। एवं सर्वेषु स्तोत्रेषु। इदं स्तोत्रानन्तरवाचनम्। द्र० श्रौ०प०नि० पृ० २७८; बहिष्पवमानारम्भवाचन—।

**स्तोत्रानुमन्त्रणमन्त्र—** (औ०, ब्रह्म०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु स्तोत्रोपाकरणप्रसवात् परं अर्थात् उद्गातारो ब्रह्माणं प्रत्येवमनुज्ञां प्रार्थयन्ते-'ब्रह्मन् स्तोष्याम प्रशास्तः' इति। तदानीं बहिष्पवमानादीनि अतिरिक्तस्तोत्रपर्य-न्तानि यानि त्रयस्त्रिंशत् स्तोत्राणि सन्ति तानि स्तोमभागैः (रश्मिरसि इत्यादिभिः) ताव-त्संख्यैः क्रमेण ब्रह्मा पृथगनुमन्त्रयेत्। आप-स्तम्बोऽप्याह—'ब्रह्मन् स्तोष्यामः' इत्युच्यमाने 'देव सवितरेतत्ते प्राह' इत्यनु-द्रुत्य 'रश्मिरसि क्षयाय क्षयं जिन्व स्तुत' इति स्तौति। सर्वस्तोत्राणामेष कल्पः उत्तर-मुत्तरं स्तोम भागानां दधाति—द्वादश (स्तोत्राणि) अग्निष्टोमे, पञ्चदशोक्थ्ये, षोडश षोडशिनि, सप्तदश वाजपेये एकोनत्रिंशद-तिरात्रे त्रयस्त्रिंशदतिदप्तोर्यामिग्नि इति (तु०—तां० ब्रा० सा० १।९।१ ला०श्रौ० ५।११।१-२)। इति षट्सोमसंस्थासु मन्त्रणम्। अन्यत्र एकाहाहीनसत्रेषु तत्त-

त्स्तोत्रसंस्थेष्वेवमेवानुमन्त्रणम्। (ब्रस्तोत्रानु तत्र प्रात:सवने १. बहिष्पवमानस्तोत्रे 'रश्मिरसि क्षयाय त्वा क्षयं जिन्व सवितृप्रसूता बृहस्पतये स्तुत' इति स्तोमभागेऽनुमन्त्रणमन्त्र:। (तां० ब्रा० १ ।९१) द्र० श्रौ०को० २ भा० पृ० २८४। २. प्रथमाज्यस्तोत्रे 'प्रेतिरसिधर्मणे त्वा धर्मं जिन्व सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।९ ।२ श्रौ०को० २ भा० पृ० ३३०) ३. द्वितीयाज्यस्तोत्रे 'अन्वितिरसि दिवे त्वा दिवं जिन्व सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १९ ।३ श्रौ०को० २ भा० पृ० ३३७)। ४. तृतीयाज्यस्तोत्रे 'सन्धिरस्यन्तरिक्षाय त्वाऽन्तरिदं जिन्व सवितृ प्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।९ ।४ श्रौ० को० २ भा० पृ० ३४२)। ५. चतुर्थाज्यस्तोत्रे 'प्रतिधिरसि पृथिव्यै त्वा पृथिवीं जिन्व सवितृ प्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।९ ।५ श्रौ०को० २ भा० पृ० ३४६)। (ख) माध्यन्दिनसवने १. माध्यन्दिनपवमानस्तोत्रे 'विष्टम्भोऽसि वृष्ट्यै त्वा वृष्टिं जिन्व सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।९ ।६ श्रौ०को० २ भा० पृ० ३६४)। २. प्रथमपृष्ठस्तोत्रे 'प्राचोऽस्यह्ने त्वाहर्जिन्व सवितृ० स्तुत' (तां० ब्रा० १ ।९ ।७ पृ० ३९०) ३. द्वितीय पृष्ठस्तोत्रे 'अन्वासरासित्वा रात्रिं जिन्व सवितृ० स्तुत' (तां० ब्रा० १ ।९ ।८ श्रौ०को० २ भा० पृ० ३९९) ४. तृतीय पृष्ठस्तोत्रे 'उशिगसि वसुभ्यस्त्वा वसून् जिन्व सवितृ० स्तुत (तां० ब्रा० १ ।९ ।९ श्रौ०को० २ भा० पृ० ४० ४)। ५. चतुर्थे पृष्ठस्तोत्रे 'प्रकेतोऽसि रुद्रेभ्यस्त्वा रुद्रान् जिन्व सवितृ. स्तुत' (तां० ब्रा० १ ।९ ।१० श्रौ०को० २ भा० पृ० ४११)। (ग) तृतीयसवने 'आर्भवपवमानस्तोत्रे 'सुदीतिरस्यादित्येभ्यस्त्वाऽऽदित्याञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।९ ।११ श्रौ०को० २ भा० पृ० ४२५)। २. अग्निष्टोमस्तोत्रे 'ओजोऽसि पितृभ्यस्त्वा पितॄञ्जिन्व सवितृ० स्तुत' (तां० ब्रा० १ ।९ ।१२ श्रौ०को० २ भा० पृ० ४५३)। इत्येते प्रथमसंस्थायामग्निष्टोमे

द्वादशस्तोमानुमन्त्रणमन्त्रा:। ३. अथोक्थ्ये प्रथमोक्थस्तोत्रे 'तन्तुरसि प्रजापत्यस्त्वा प्रजाजिन्व सवितृप्रसूता बृहस्पतये स्तुत'। द्र० तां० ब्रा० १ ।१० ।२) ४। द्वितीयोक्थ्यस्तोत्रे 'रेवदस्योषधिभ्यस्त्वौषधीर्जिन्वसवितृ० स्तुत'। द्र० तां० ब्रा० १ ।१० ।२) ५. तृतीयोक्थ्यस्तोत्रे-'पृतनाषाऽसि पशुभ्यस्त्वा पशूञ्जिन्व सवितृ० स्तुत०'। द्र० तां० ब्रा० १ ।१ ।३। इत्येते त्रयो मन्त्रा आग्निष्टोमिकै: सह पञ्चदशमन्त्रा उक्थ्यस्तोत्रानुमन्त्रणमन्त्रा उच्यन्ते। ६. षोडशिनि अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रं जिन्व सवितृ० स्तुत' (द्र० तां० ब्रा० १ ।१० ।४) इत्येको मन्त्र: पञ्चदशभि: सह षोडश मन्त्रा: षोडशिस्तोत्रानुमन्त्रण मन्त्रा उच्यन्ते। ७. वाजपेये—'अभिजिदसि युक्तग्रावेन्द्राय त्वेन्द्रञ्जिन्व सवितृप्रसूता बृहस्पतये स्तुत' इति षोडशिन्युक्त एव स्तोत्रानुमन्त्रणमन्त्र: वाजपेयस्य षोडशिमत्वात् ८. अतिरात्रे त्रिषु पर्यायेषु चतु:स्तोत्रेषु (क) प्रथम पर्यायस्य प्रथमे स्तोत्रे 'अधिपतिरसि प्राणायत्वा प्राणञ्जिन्व सवितृ. स्तुत'।

तु०—तां० ब्रा० सा० १ ।१० ।५) इति स्तोत्रानुमन्त्रणमन्त्रे। द्वितीये स्तोत्रे घरुणोऽस्य पानाय त्वाऽपानञ्जिन्व सवितृ० स्तुत इति द्वितीये स्तोत्रानुमन्त्रणमन्त्र:। (तु०—तां० ब्रा० १ ।१० ।६)। तृतीये स्तोत्रे सर्पोऽसि चक्षुषे त्वा चक्षुर्जिन्व सवितृ.

स्तुत' इत्यनुमन्त्रणमन्त्रा: (तु०—तां० ब्रा० १ ।१० ।७)। चतुर्थे स्तोत्रे 'वयोधा असि श्रोत्राय त्वा श्रोत्रं जिन्व सवितृ. स्तुत' (तां० ब्रा० १ ।१० ।८) इति स्तोत्रानुमन्त्रणमन्त्र: (ख) अथ द्वितीयपर्याये चतुर्णां स्तोत्राणां क्रमश: त्रिवृदसि त्रिवृते त्वा सवितृ० स्तुत।' 'सवृदसि सवृते त्वा सवितृ० स्तुत'। प्रवदसि सवितृ० स्तुत'। 'अनुवृदस्यनुवृते त्वा सवितृ प्रसूता वृहस्पतये स्तुत' इति चत्वार: स्तोत्रानुमन्त्रणमन्त्रा:। (तां० ब्रा० १ ।१०। ९)। (ग) अथ तृतीयपर्यायस्य चतुर्णां स्तोत्राणां क्रमश: 'निरोहोऽसि निरोहाय त्वा सवितृ' स्तुत' सँ्रो होऽसिँ् सरोहाय त्वा सवितृ. स्तुत' प्ररोहोऽसि प्ररोहाय त्वा सवितृ. स्तुत' 'अनुरोहोऽस्यनुरोहाय त्वा सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १ ।१० ।१०) इति चत्वार: स्तोत्रानुमन्त्रमन्त्रा:। (घ) अतिरात्रे सन्धिस्तोत्रस्य त्रिदेवत्यत्वात् त्रेधानुमन्त्रणं कर्तव्यम्। तत्र 'वसुकोऽसि वस्यष्ठिरसि वेषश्रीरसि सवितृप्रसूता बृहस्पतये स्तुत' (तां० ब्रा० १। १० ।११ इत्यनुमन्त्रणमन्त्र:। (ङ) अप्तोर्यामस्य यज्ञस्यातिरिक्तस्तोत्राणां चतुर्णां क्रमश: 'आक्रममोस्याक्रमाय त्वा सवितृप्रसूता। बृहस्पतये स्तुत'। 'संक्रमोऽसि संक्रमाय त्वा सवितृ० स्तुत'। 'उत्क्रमोस्युत्क्रमाय त्वा सवितृ० स्तुत'। उत्क्रान्ति रसि उत्क्रान्त्यै त्वा सवितृप्रसूता बृहस्पतये स्तुत'। इति चत्वारो मन्त्रा: स्तोत्रानुमन्त्रणमन्त्रा उच्यन्ते (तु०—तां० ब्रा० सा० १ ।१० ।१२)।

**स्तोत्रियतृच** — (हौ०, औ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु स्तोत्रगतसामगाने १. सामसाध्यस्य स्तोत्रस्याधारभूत: तृच: स्तोत्रियस्तृच इत्युच्यते (तु०—ऐ० ब्रा० सा० ६ ।२६)। २. सामगा यस्मिन् तृचे स्तोत्रं कुर्वन्ति स तृच: स्तोत्रिय उच्यते। ३. एवं च सर्वेष्वह: स्वेकैकस्मिस्तृचे सामगा: स्तोत्रं कुर्वन्ति ते सर्वे तृचा: स्तोत्रिया उच्यन्ते। यथा होत्रकशस्त्रेषु अहर्गणेषु पृष्ठ्याभिप्लवेषु प्रात:सवने सर्वत्रोत्तरदिनं गतं स्तोत्रियं पूर्वदिनेऽनुरूपं तृचं कुर्वन्ति (तु०—ऐ० ब्रा० सा० ६ ।५)। ४. यदेकं साम तृचे क्रियते तत् स्तोत्रीयं भवति। तदुक्तम्-यद्योन्यां तदुत्तरयो: (ऋचो:) गायति। तेन तृचे सामगानं विधीयते। तृचगानमेव स्तोत्रीयं भवतीत्यवधेयम्। ५. सर्वत्र छन्दोगप्रत्यय: स्तोत्रियो भवति (तु०—आ०श्रौ० ७ ।४ ।१ नारायण:।

**स्तोत्रीया**— (सा० औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. उद्गातृभि: स्तुत्या: स्तोत्रसंबन्धिन्य ऋच: स्तोत्रीया भवन्ति। २. साम्नो योनिभूता प्रथमा ऋक् स्तोत्रीया ऋगुच्यते। **द्र०** मी०को० पृ० ४४०३। ३. स्तोत्रीया स्तोत्रसाधनीभूता ऋगेव। साम तु तत्संस्कारकतया साधनम्। **द्र०** मी०को० पृ० २५८।

**स्तोत्रोपस्वार**—(याज०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. स्तोत्रोपस्वारोनामयाजमानं (कर्म) (तु०—आ०श्रौ० ५ ।२ ।९ देवत्रात:)। २. बहिष्पवमानस्तोत्रस्तुत्यर्थमुद्गातारमभिमुखनामुपविष्टानामृत्विजामनुमन्त्रणं कृत्वा दीक्षितश्चेद्धोता तदाऽनुमन्त्रणं कृत्वा पश्चात् तत्र गच्छेद् याजमानं कर्तुम्। अर्थात् एकाहाहीनेषु यजमानस्य होतृत्वे सत्रेषु गृहपतेर्होतृत्वे च गत्वाऽनुमन्त्रणं भवति। सत्रेषु

होतैवानुमन्त्रणं कृत्वा गच्छेद्याजमानकरणाय। तु०—५ ।२ ।९ नारायणः)।

**स्तोत्रोपाकरण—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्वकृतिषु चैकाहाहीनसत्रेषु तत्तद्देवता केषु ग्रहेषु गृहीतेषु चमसेषु वोन्नीतेषु बहिष्पवमानादीनां स्तोत्राणामारम्भ उपाकरणमुच्यते। तदुक्तम्—'ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' (तै० सं० ३ ।१ ।४) (तु०—का० श्रौ० ९ ।१३ ।२९ विद्याधरः)। द्र० २ प्रसव— तत्र स्तोत्रारम्भः प्रथमतः प्रस्तोत्रैव क्रियते। प्रस्तावरूपप्रथमभक्ति (भाग) पाठ समये एव प्रस्तोता प्रत्यङ्मुख आत्मनः पुरतो भूमौ प्रादशमुदग्दशं वा द्विगुणीकृतं वस्त्रं प्रसार्य तत्र औदुम्बरीः प्रादेशप्रमाणाः तीक्ष्णाग्राः मूले किञ्चित्स्थूलाः कुशाः विष्टुत्यपरनामधेयाः तिर्यङ् निदध्यात्। तद्यथा—पञ्चदशस्तोमेप्रथमपर्याये प्रथमाया ऋचो पादत्रयाऽभ्यासविधान् तिस्त्रः कुशा उदगग्राः प्रत्यक् संस्था निधेयाः। द्वितीयाया ऋच एकैवावृत्तिरिति एका कुशा तासां पश्चात् प्रत्यगग्रा निधेयाः। तस्याः पश्चात् उदगग्रा का कुशेति। एवमुत्तरावपि विष्टावौ उत्तरतः कार्यौ। सर्वत्र स्तोमानां त्रयः पर्यायाः। एकैकस्य पर्यायस्य त्रयो विष्टावाः। पवमानेषु कुशाविधानं नास्तीति विशेषोऽवगन्तव्यः। (तु०—का० श्रौ० १० ।१ ।१६ टि० विद्याधरः)।

**स्तोत्रोपाकरणकाल—** (आध्व०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. ग्रहं गृहीत्वा चमसं वा उन्नीय स्तोत्रमुपाकरोति। (तै० सं० ३ ।१ ।२)(तु०—का० श्रौ० भूमिका विद्याधरः)। २. तं सादयित्वा स्तोत्रमुपाकरोति। (हि० श्रौ० ८ ।८ ।३७०। चमसहोमानन्तरं तद्भक्षणं कर्तव्यम्। कृते च तस्मिन्नध्वर्युणा स्तोत्रोपारकणं कर्त्तव्यमित्यर्थः ३. प्रातःसवने आश्विनग्रहात् पूर्वभाविषु...ऐन्द्रवायवादि ग्रहेषु गृहीतेषु यदुपाकरणं तत्र चमसोन्नयनाभावात् तत्र ग्रहणमेव उपाकरणकालोपलक्षणम्। तृतीयसवने पात्नीवतान्तेषु ग्रहेषु हुतेषु चमसान् पूरयित्वा यज्ञायज्ञीयस्तोत्रं (अग्निष्टोमस्तोत्रं) उपाकरोति। तत्र ग्रहग्रहणभावात् चमसोन्नयनमेवोपाकरणकालोपलक्षणम्। ग्रहचमसोन्नयनोर्ध्वकालभाविना स्तोत्रोपाकरणेन च सोमः स्तोमपरम्परायाः प्रतिष्ठो संपद्यते (तै० सा० पृ० २१०२)। ४. प्रातरनुवाकोपाकरणानन्तरं बहिष्पवमानस्तोत्रं पठनीयम्। ऋतुग्रहभक्षणानन्तरमाज्यस्तोत्राणि प्रातः सवने। मरुत्वतीय ग्रहभक्षणानन्तरं माध्यन्दिनपवमानस्य पृष्ठस्तोत्राणां च पाठो माध्यन्दिनसवने। आग्रयणग्रहभक्षणानन्तरं आर्भवपवमानस्य नेष्टुश्चमसभक्षणानन्तरं च पाठस्तृतीयसवने (तु०—का०श्रौ० १० ।१ ।१६ टि० विद्याधरः)।

**स्तोत्रोपाकरणजप —** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु उद्गात्रे प्रतिप्रस्थात्रे वा बर्हिषोः प्रदानानन्तरं उपाकरणं जपति—'वायुर्हिंकर्ताऽग्निः प्रस्तोता प्रजापतिः साम बृहस्पतिरुद्गाता विश्वेदेवा उपगातारो मरुतःप्रतिहर्तार इन्द्रो निधनं ते देवाः प्राणभृतः प्राणं मयि दधत्यो ँ स्तुत' इति स्तोत्रोपाकरणजप उच्यते। द्र० श्रौ०को० २ भा० पृ० ५५९।

**स्तोभलक्षण—** (औ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु

सामगानप्रयोगे १. 'य ऋगक्षरेभ्यः अधिकः न च तैः सवर्णः स स्तोभ इति निर्दुष्टं स्तोभलक्षणम्। २. स्तोभः गीत्युपायः अन्यतमः। ३. स्तोभः नाम अधिकत्वे सति ऋग्विलक्षणवर्णत्वम्। ऋग्विलक्षणवर्णत्वं च अर्थानभिधायकत्वम्। द्र० मी०को० पृ० ४४०३। ४. येऽक्षरेभ्यो ऋगर्थाभिधानोपयोगिभ्योऽधिका ऋगक्षर विलक्षणा वर्णाः ते स्तोभाः। द्र० मी०को० ४४०६।

**स्तोभविभाग्यसामन्—** (सा०, औ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने १. यस्मिन् साम्नि केवलं स्तोभैरेव विभागः पादास्तु सर्वे निधनान्तभूताः साधारणास्त्रिभिरपि प्रयोज्याः तत् स्तोभविभाग्यसंज्ञकं नाम सामोच्यते (तु०—द्रा०श्रौ० ) २. येषां साम्नां निधनभूतानि पदानि उपायसदृशाः स्तोमानाः तानि सामानि स्तोमविभाग्या न्युच्यन्ते। तेषां स्तोभाः विभक्तव्याः। यथा प्रतोदभद्रगोष्ठसौमित्रादीनि। तेषु स्तोभविभाग्येषु तृतीयायैव पदाय प्रतिहर्ता स्तोभेदिति विशेषोऽवगन्तव्यः (तु०—ला०श्रौ० ७। ६।३-४ अग्निस्वामी)।

**स्तोम—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्वि- कृतिषु चैकाहाहीनसत्रेषु सामगाने १ गीत्याश्रयाणामावृत्तानां ऋचां समूहः = स्तुतिहेतुर्मन्त्रसमूहः स्तोमः (तु०—तै० सं० सा० ४।१।१; २।२)। २. स्तोत्रं ऋगावृत्तिरूपः संघातो वा स्तोम इत्युच्यते। (स) तृचनिष्ठस्य साम्न आवृत्तिभेदान्निष्पद्यते (तै० सं० सा० ४।३।८)। ३. आवृत्तियुक्तं यत्साम स्तोम इत्यभिधीयते (तु०—ता० ब्रा० सा० १।१।१)। तत्र स्तोमस्य स्तोत्रमर्थमभिप्रेत्यैव सायणः स्वभाष्ये प्रकरणादौ 'प्रथमस्याह्नः स्तोमक्लृप्तिः (स्तोत्रक्लृप्तिः) विहिता, अथ...द्वितीयस्याः स्तोमक्लृप्तिरभिधीयते' इत्याहः (तु०—तां० ब्रा० ११।६१) इति स्तोमस्य स्तोत्रार्थोऽवगन्तव्यः। ४. छन्दसां सङ्घः स्तोमः (तां० ब्रा० सा० ९।१९।१।३)। ५. स्तुतेर्मानं स्तोमः उच्यते। ६. स्तोत्रगतर्क्संख्याविशेषः स्तोम उच्यते। स्तोत्रगतसंख्यावाचकः स्तोमशब्दः इत्यर्थः। ७. सोमयागेषु छन्दोगैः क्रियमाणा पृष्ठादिसंज्ञिका स्तुतिः स्तोमः (तु० — पा० ५।१।५८ पा० सि० दीक्षितः)। पृष्ठरथन्तरादिशब्दवाच्या प्रगतिमन्त्रसाध्या गुणवत्त्वेन वर्णनात्मिका स्तुतिरेव स्तोमः (तु०—तत्रैव पासि. बालमनोरमा। ८. स्तुतिसाधनः त्रिवृदादिकः स्तोम उच्यते। त्रिवृदादयश्चत्रिवृत्पञ्चदशसप्तदशैकविंश त्रिणवत्रयस्त्रिंशाः षट् स्तोमाः। तेष्वाद्याश्चत्वारो ज्योतिष्टोमे। पार्ष्ठिकषडहे तु सर्वे। त्रिवृत्-पञ्चदश-सप्तदशानामावृत्तिप्रकारः तै० सं० सा० (१।८।३) द्रष्टव्यः। त्रिवृत् पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्याः, चतुर्विंशचतुश्चत्वारिंशअष्टाचत्वारिंशाश्च स्तोमाः तां० ब्रा० द्वितीयतृतीयाध्याययोः विष्टुतिप्रसङ्गेन विवृताः द्रष्टव्याः। तत्र छन्दोमेषु त्रिष्वहःसु क्रमशः चतुर्विंश चतुश्चत्वारिंशाष्टाचत्वारिंशाः स्तोमाः भवन्ति। त एते नव स्तोमाः प्राकृतस्तोमसंज्ञयाऽभिधीयन्ते। तद्भिन्ना एकद्विकप्रभृतय इतरे स्तोमा वर्धमानस्तोमसंज्ञयोच्यन्ते इति विशेषोऽवधेयः। ९. स्तोमशब्देन त्रिवृदादिस्तोमवन्ति अहानि लक्ष्यन्ते। (तु०— तां० ब्रा० सा० ४।१। ७)। द्र० स्तोमभेद—। १०. स्तोमशब्देन स्तोमवान् याग उच्यते। (तां० ब्रा० सा० १०।२।२)।

**स्तोमक्लृप्ति—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातर्माध्यन्दिनतृतीयसवनेषु १. बहिष्पवमानाऽऽज्यमाध्यन्दिनपवमानपृष्ठाऽऽर्भवपवमानाऽग्निष्टोमोक्थ्यषोडश्यतिरात्र (पर्यायसन्धि) स्तोत्राणां स्तोत्रीयतृचसामस्तोमविष्टुतीनां सपरिकरो विधिक्रमः स्तोमक्लृप्तिरित्युच्यते। तदाह सायणः— 'स्तोमशब्देनत्रिवृदादिस्तोमवन्ति अहानि वक्ष्यन्ते' (तां० ब्रा० सा० ४ ।१ ।७) इति। २. ताण्ड्यब्राह्मणे आर्षेयकल्पे च गवामयनसंवत्सरसत्रस्य एकषष्ट्यधिकं शतत्रयं यानि सौत्यान्यहानि सन्ति तेषामह्नां 'क्लृप्तो ज्योतिष्टोमातिरात्रोऽषोडशिकः' इत्यादिना स्तोत्रक्लृप्तिः (स्तोमक्लृप्तिः) बहिष्पवमानाज्यमाध्यन्दिनपवमानार्भवपवमानाग्निष्टोमोक्थ्यातिरात्रस्तोत्रप्रकरणैः प्रस्तुता 'यद्धि स्तूयते तद्विधीयते' इति न्यायात्। (तु०—आ०क० प्रथमद्वितीयाध्यायौ वरदराजः ताण्ड्य ब्राह्मणे चतुर्थपञ्चमाध्यायौ, चतुर्विंशाध्याये २० ।१-२ खण्डौ च सायणः)। अत एव सायणः सर्वत्राहर्निरूपणादौ '...प्रथमस्याह्नः स्तोमक्लृप्तिर्विहिता।........द्वितीयाह्नः स्तोमक्लृप्तिरभिधीयते' इत्यादि प्रसङ्गसंगत्या सर्वमह्नः बहिष्पवमानादि स्तवनजातं स्तोमक्लृप्तिशब्देनाभिदधातीति विशेषोऽवगन्तव्यः (तु०—तां० ब्रा० सा० ११ ।६ ।१)।

**स्तोमत्रैरूप्य—** (औ० सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु स्तोमानां युग्मायुग्मत्वम्, समवैषम्यम्, एकाधिशद्व्यधिशयत्वं चेति त्रीणि रूपाणि भवन्ति। (तु०—द्रा०श्रौ० १७ ।१ धन्वी)।

**स्तोमभाग—** (औ०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु 'रश्मि रसि' (तां० ब्रा० १९ ।१-१२) 'तन्तुरसि०' (तां० ब्रा० १ ।१० ।१२) इति द्वयोरनुवाकयोः, तै० सं० ३ ।५ ।२ ।; ४ ।४ ।१ ।१ आप०श्रौ० १४ ।९ ।१० इत्यत्र चाम्नाता ये मन्त्राः तेषां स्तोमभाग इति नामधेयम्। स्तोमान् त्रिवृदादीन् भजन्तीति ते मन्त्राः स्तोममार्गा मन्त्रा उच्यन्ते। तत्र रश्मिप्रभृतयः स्तोमभागमन्त्राः त्रयस्त्रिंशत् सन्ति बहिष्पवमानादीन्यतिरिक्तस्तोत्रपर्यन्तानि स्तोत्राण्यपि त्रयस्त्रिंशदेवेत्येते मन्त्राः स्तोत्रानुमन्त्रणमन्त्रा अप्युच्यन्ते। द्र० स्तोत्रानुमन्त्रणमन्त्र—।

**स्तोमभागेष्टका—** (आध्व०, सा०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने स्तोमभागमन्त्रैरुपधेया इष्टकाः स्तोमभागेष्टका उच्यन्ते। द्र० स्तोमीयेष्टका—।

**स्तोमभेद—** (औ०, सा०) सोमयज्ञेषु प्रकृतिविकृतिभूतेष्वेकाहाहीनसत्रेषु १. प्रयुज्यमानाः स्तोमाः प्राकृताः वर्धमानाश्चेति द्विविधाः। तत्र प्राकृताः त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशचतुर्विंशचतुश्चत्वारिंशाष्टा चत्वारिंशाः, एते दाशरात्रिकाश्चोच्यन्ते। प्राकृतात् त्रिवृतः अधस्तनाः एकप्रभृतयोऽष्टपर्यन्ता उपरितनाश्च दशिद्वादशिप्रभृतयो ये स्तोमाः ते वर्धमाना उच्यन्ते। द्विविधा अपि उभौ समविषमभेदेन पुनर्द्विधाः। तत्र प्राकृतेषु त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः विषमाः। चतुर्विंशचतुश्चत्वारिंशाष्टाचत्वारिंशाः समाः। वर्धमानेषु द्विकचतुष्कषट्काष्टकद्वादशादयः समाः (युग्माः)। एकत्रिकपञ्चकसप्तक-त्रयोदशादयो विषमाः (अयुग्माः)

युग्मा अयुग्मा अपि वर्धमाना एकाधिशया द्व्यधिशयाश्चाभिधीयन्ते। वर्धमानाः पुनः समसमानजातीयाः विषमसमानजातीयाः युग्मायुग्माश्चेति त्रिधोच्यन्ते। अथाप्येते वर्धमानाः संज्ञान्तरेण एकज्यायांसः एककनीयांसश्च व्यवह्रियन्ते। तत्र प्राकृतेभ्यो दशरात्रिकेभ्य एकज्यायांसो वर्धमानास्तोमाः—त्रिवृत् ऊर्ध्वं, एकज्यान् दशी स्तोमः पञ्चदशाद् ऊर्ध्वं षोडशी, सप्तदशाद् ऊर्ध्वमष्टादशः, एकविंशादुपरि द्वाविंशः, चतुर्विंशादुपरि पञ्चविंशः, त्रिणवात् परं एकोनत्रिंशः, त्रयस्त्रिंशात् परं चतुस्त्रिंशः, चतुश्चत्वारिंशात् परं पञ्चचत्वारिंशः, अष्टाचत्वारिंशादूर्ध्वमेकोनपञ्चाशः। इत्येकज्यायांसो वर्धमानस्तोमाः। एवमेव त्रिवृतः एककनीयान् अष्टी स्तोमः, पञ्चदशात् चतुर्दशः, चतुर्विंशात् त्रयोविंशः, त्रिणवात् अष्टाविंशः, त्रयस्त्रिंशात् द्वात्रिंशः, चतुश्चत्वारिंशात् त्रिचत्वारिंशः (चत्वारिंशः), अष्टाचत्वारिंशादेककनीयान् सप्तचत्वारिंशः स्तोमः। इत्येककनीयांसो वर्धमानस्तोमा भवन्ति। तदेवं भूता वर्धमानाः स्तोमा उपलभ्यन्ते। स्तोमानां पर्याया विष्टुतयश्च सामगानेऽपेक्ष्यन्ते। तत्र प्राकृतानां दाशरात्रिकाणां स्तोमानां पर्याया विष्टुतयश्च ताण्ड्यमहाब्राह्मणे द्वितीयतृतीयाध्याययोराम्नाता दृश्यन्ते, वर्धमानस्तोमानां तु विष्टुतयः पर्यायाश्च ब्राह्मणे नाऽऽम्नाताः। अतः तेषां पर्यायविष्टुत्यपेक्षायां लाट्यायनद्राह्यायणसूत्रकाराभ्यां वर्धमानस्तोमानां पर्यायकृतिः (क्लृप्तिः) ब्राह्मणे समाम्नातानां समविषमस्तोमानां पर्यायाणां जातिसंहारयुग्मायुक् संहाराख्य पक्षद्वयन्यायेन संहरणेन प्रकारेण प्रदर्शिता। अर्थात् ब्राह्मणेऽनुपदिष्टानां वर्धमानस्तोमपर्यायकृतीनां संपत्तये लाट्यायनद्राह्यायणसूत्राभ्यां जातिसंहारः, युग्मायुक्संहारः' इति द्वौ पर्यायसंहारप्रकारौ पक्षौ समाश्रितौ। तदाह वरदराजः—'ब्राह्मणे येषां (स्तोमानां विष्टुतिरनाम्नाता तेषां सूत्रे 'जातिसंहारो युग्मायुक्संहारः' इति द्वौ पक्षावुक्तौ (आ०क० ३।७।७, ला०श्रौ० ६।५। २०-३० अग्निस्वामी) इत्येवं जातिसंहारयुग्मायुक्संहारपक्षाभ्यां संहृतपर्यायैर्निष्पादिताः समविषमाः पूर्वोक्ताः वर्धमानस्तोमास्तत्र तत्र वर्णानुक्रमे द्रष्टव्या इति विशेषोऽनुसंधेयः। २. स्तोमा द्विविधाः समा विषमाश्च। तत्र येषु स्तोमेषु स्तोत्रीयाणां समः प्रयोगस्तेसमाः। अर्थात् स्वस्य यावत्कृत्वः प्रथमा प्रयुज्यते तावत्कृत्वो द्वितीया तावत्कृतत्व एव तृतीया इति यत्र समशस्त्रेधा विभागः कर्तुं शक्यते ते स्तोमाः समाः। यत्रैतद्भिन्नः स्तोत्रीयाणां प्रयोगस्ते विषमाः। विषमाः पुनर्द्विविधाः एकाधिशया विषमा द्व्यधिशयाश्च विषमाः। अर्थात् येषु समविभागस्याशक्तेः एका स्तोत्रीया अतिरिच्यते ते एकाधिशया नाम विषमाः। येषु द्वे स्तोत्रीये अतिरिच्येते ते द्व्यधिशया नाम विषमाः। (तु०—द्रा०श्रौ० १७।१ धन्वी)। द्र० वर्धमानस्तोमपर्यायाणां जातिसंहारपक्ष—, वर्धमानस्तोमपर्यायाणां युग्मायुक् संहारपक्ष—।

**स्तोमविष्टुतिभेद—** द्र० विष्टुतिप्रयोग—।

**स्तोमयोग—**(औ०) सोमयज्ञेषु प्रकृतिभूतज्योष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. स्तोत्राणां ये त्रिवृत्पञ्चदश सप्तदशैकविंश चतुर्विंशत्रिणवचतुश्चत्वारिंशाष्टाचत्वारिंशाः स्तोमाः, ताण्ड्यब्राह्मणे द्वितीयतृतीयाध्याययोरुक्ताः। तेषु प्रातःसवने बहिष्पवमानस्तोत्रे त्रिवृत्स्तोमो विहितः। तस्मात्

स्तोमात् पूर्वं बहिष्पवमानपूर्वाङ्गत्वेन प्रस्तोत्रा प्रदत्तं प्रस्तरं प्रतिगृह्य उद्गाता स्तोत्रार्थमुपविशति। उपवेशनान्तरमध्वर्युणा दत्तं प्रस्तरं प्रतिगृह्य तेन प्रस्तरेण स्वकीयां जङ्घा उपस्पृश्य 'अग्नेस्तेज सा' इत्यादि मन्त्रेण त्रिवृत्स्तोमं युनक्ति। अयं मन्त्रो बहिष्पवमानस्य स्तोमयोग उच्यते। मन्त्रोच्चारणमेव स्तोमयोग: कथ्यते (तु०—तां० ब्रा० सा० १।३।५)। यथा बहिष्पवमाने स्तोमयोगस्तथैव चतुर्षु आज्यस्तोत्रेषु पञ्चदश: स्तोमो योक्तव्य:। तेषाम् 'दीक्षायै वर्णेन' इत्यादिको मन्त्र: स्तोमयोग उच्यते (तु०—तां० ब्रा० सा० १।५।१०)। एवं माध्यन्दिनसवने माध्यन्दिनपवमानस्तोत्रार्थं स्तोमयोगो बहिष्पवमानवत् कार्य:। परं तत्र 'अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्यस्व वर्चसा बृहस्पतिस्त्वा युनक्तु देवेभ्य: प्राणायाग्निर्युनक्तु तपसा सोमं यज्ञाय वोढ्वे दधात्विन्द्र इन्द्रियँ सत्या: कामा: यजमानस्य सन्तु:' इति यस्य बहिष्पवमाने प्रयुक्तस्य 'अग्निर्युनक्तु' इत्यस्य स्थाने 'वायुर्युयुनक्तुमनसास्तोम- यज्ञाय० सन्तु' इति मन्त्रस्योत्तरभाग: पठनीय: (तां० ब्रा० सा० १।५।११) एवमेव तृतीयसवनेऽपि बहिष्पवमानवत् कृत्वा 'अग्नियुनक्तु' इत्यस्य स्थाने 'सूर्यो युनक्तु वाचास्तोमं यज्ञाय... सन्तु इति मन्त्रपाठ: कर्तव्य: (ता० ब्रा० १।५।१४)। इति माध्यन्दिनपवमानार्भवपवमानयो: स्तोम- यो: स्तोमयोगो बोध्य:। २. बहिष्पवमाने वो हिंकार: हिंकाराणां हिंकारगानं स स्तोमयोग:। तदुक्तम्—'एष वै स्तोमस्य योगो यद्धिकार:' (तां० ब्रा० ६।८।६)।

**स्तोमयोगोर्ध्वभाविजप—** (औ०) सोमयज्ञेषु प्रकृतिभूत......तद्विकृतिषु चैकाहाहीनसत्रेषु प्रात:सवने बहिष्पवमानस्तोत्रे स्तोमयोग योजनादन्तरं उद्गाता 'अन्नं करिष्याम्यन्नं पविष्याभ्यान्नं जनयिष्यामि' इति मन्त्रस्य स्तोमयोगादूर्ध्वं जप:। इति स्तोमयोगोर्ध्वभावी जप उच्यते (तु०—तां० ब्रा० सा० १।३।६)।

**स्तोमरोह—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिभूतस्य द्वादशाहस्य विकृतौ सत्रप्रकरणे त्रिसंवत्सरसत्रे ऐहोनाम कनीयस: स्तोमस्य प्रथमकरणं, ज्यायसश्च पश्चात्करणं स्तोमरोह उच्यते। एतद्विपरीत: प्रत्यवरोहश्च भवति (तु०—द्रा० श्रौ० ३१।४ धन्वी।

**स्तोमातिशंसन—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अभिप्लवाद्यहर्गणेषु होत्रकाणां शस्त्रेषु त्रिवृत्पञ्चदशसप्तदशैकविंशचतुर्विंशत्रिणवत्रयस्त्रिंशचतुश्चत्वारिंशाष्टाचत्वारिंशा: स्तोमा विहिता:। तेभ्य ऋक्संख्या विवृद्ध्याविविवृद्धा: (वर्धमाना:) स्तोमा निष्पाद्यन्ते। यथा—विहितस्य सप्त दशस्तोमस्य ऋक्संख्या विवृद्ध्याऽष्टादशादिस्तोमा निष्पाद्यन्ते। तथा विहितस्यैकविंशस्य ऋक्संख्याविवृद्ध्याऽष्टादशादिस्तोमा निष्पाद्यन्ते। तथा विहितस्यैकविंशस्य ऋक् संख्याविवृद्ध्या द्वाविंशादय: स्तोमा: सम्पद्यन्ते। एवं च विहितानां प्राकृतानां स्तोमानामृक्संख्याविवृद्ध्या ये स्तोमा उत्पन्नास्ते विवृद्धा: (वर्धमाना:) स्तोमा उच्यन्ते। ऋक्संख्यया वर्धमाने स्तोमे स्तोत्रस्तवनाधिक्यं प्रसक्तम्। 'यथा वा स्तोत्रमेवं शस्त्रम्' इति न्यायात् शस्त्रशंसनेऽप्याधिक्यं प्रसज्यते। एतच्छंसनाधिक्यं स्तोमातिशंसनमुच्यते। एतदुक्तं भवति—यदा सामगैर्विवृद्ध: स्तोमा: क्रियन्ते तदानीं 'यथा

वाव स्तोत्रमेवं शस्त्रम्' इति न्यायाद्धोत्रकैः (मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकैः) त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु प्राकृतस्तोमकगतामृक् संख्यामतिलङ्घ्य आधिकानामृचां सूक्तानां च शंसनस्तोमातिशंसनमुच्यते। (तु०—ऐ० ब्रा० सा० ६।२३) द्र० अहर्गण-, सांघातिकाह-, वर्धमानस्तोम—।

**स्तोमातिशंसननिमित्त ऋगावाप—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अभिप्लवाद्य अहर्गणेषु उक्थ्यसंस्थेष्वहःसु होत्रकाणां शस्त्रेषु तृतीयसवने यदा सामगैः विवृद्धः स्तोमः क्रियते तदानीं होत्रकैः स्तोमगतानामृचां संख्यामतिक्रम्याधिकानामृचां शंसनं कर्तव्यम्। तत्र होत्रकाणामुक्थ्यशस्त्रेषु (आ० श्रौ० ६।१।२) यदन्त्यं सूक्तं तदवशिष्य अर्थात् ततः पूर्वं स्तोमे वर्धमाने तदति शंसनाय यावदपेक्षं स्तोमातिशनार्थानामृचामावापस्तैः कर्तव्यः। तत्र मैत्रावरुणः स्वोक्थ्यशस्त्रस्य 'इन्द्रावरुणा युवम् (ऋ० ७।८२।१-१०) इति प्रथमसूक्तस्यावसाने 'इमा ३ वां भ्रमयोमन्यमानाः' (ऋ० ३।६२।१-३) इति तिस्रः, 'इन्द्रा को वाम्' (ऋ० ४।४१-४२) इति द्वे सूक्ते, 'श्रुष्टी वाम्' (ऋ० ६।६८।१), 'युवां नरा' (ऋ० ७।८३।१), 'पुनीषे वाम' (ऋ० ७।८५।१), 'इमानि वां भागधेयानि' (ऋ० ८।५९।१) इति समाम्नायस्य यथाप्रयोजनं पावतीनामृचामावापे सति त्र्यवराभिः ऋग्भिः स्तोमोऽतिशस्तो भवति तावतीरावपेत। (तु०—आ०श्रौ० ७।९।२ नारायणः)। अत्र सूक्तनामृचां वा आवापे सायणीयग्भाष्यमवलोक्य निर्णयः कर्तव्यः।) ब्राह्मणाच्छंसी स्वोक्थ्यशस्त्रस्य 'उद प्रुतो न वयः' (ऋ० १०।६८) इत्यैन्द्रस्य प्रथमसूक्तस्यावसाने 'यस्तस्तम्भ' (ऋ० ४।५०।१), 'यो अद्रितृयमित्' (ऋ० ६।७३।१), 'यज्ञे दिवः' (ऋ० ७।९७।९८) इति द्वे सूक्ते, 'अस्तेव सु प्रतरम्' (ऋ० १०।४२।१), आयात्विन्द्रः स्वपतिः' (ऋ० १०।४४।१), 'इमांधियम्' (ऋ० १०।६७।१) इति समाम्नायस्य यथार्थं यावतीनामृचामावापे सति त्र्यवरामिर्ऋग्भिः स्तोमोतिशस्तो भवति तावतीरावपेत। (तु०—आ०श्रौ० ७।९।३ नारायणः) (अत्र सूक्तानामृचां वावापे निर्णयार्थं, सायणीयमृग्भाष्यं द्रष्टव्यम्)। अच्छावाकः—स्वोक्थ्यशस्त्रस्य 'भवा मित्रो न' १।१५६) इति तृतीयसूक्तस्यान्ते 'विष्णोर्नुकम्' (ऋ० १।१५४-५५) इति सूक्ते, परोमात्रया' (ऋ० ७।९९।१) इति समाम्नायस्य यथाप्रयोजनं यावतीनामृचामावापे सति त्र्यवराभिर्ऋग्भिः स्तोमोतिशस्तो भवति तावतीरावपेत। (तु०—आ० श्रौ० ७।९।४ नारायणः)। (अत्र सूक्तानामृचां वा आवाप निर्णयार्थं सायणीयमृग्भाष्यं द्रष्टव्यम्। द्र० अहर्गण-, साङ्घातिकाह-, स्तोतिशंसन—।

**स्तोमातिशंसननिमित्तः परिशिष्टावापस्थानेऽधिकतृचावाप—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अभिप्लवाद्यहर्गणेषु होत्रकाणां शस्त्रेषु त्रिवृत्पञ्चदशसप्तदशैकविंश चतुर्विंशत्रिणवत्रयस्त्रिंशचतुश्चत्वारिंशाष्टाचत्वारिंशस्तोमानां वृद्धिनिमित्तं (अतिशंसने) प्रातः सवने परिशिष्टावापतृचस्थाने नित्यतृचाधिकस्तृचावापः क्रियते। तत्र मैत्रावरुणः—१. त्रिवृत्स्तोमातिशंसने सति आरम्भणीयाया ऊर्ध्वं 'आ नो मित्रावरुणा' (ऋ० ३।६२।१६-१८) आ०श्रौ० ५।१०।२८; ७।२।२) इति नित्यात्। तृचादधिकं 'मित्रं वयं

हवामहे' (ऋ० १ ।२३ । ४-६ आ०श्रौ० ७ ।५ ।९-१०) इति तृचं स्तोमकारणादावपेत। ब्राह्मणाछंसी—'आयाहि सुषमाहिते (ऋ० ८ ।१७ ।१-३ आ०श्रौ० ५ ।१० । २८; ७ ।२ ।३) इति नित्यात् तृचादधिकं 'स्वरूपकृलुमूतये' (ऋ० १ ।४ ।१-३ आ०श्रौ० ७ ।५ ।१५) इति तृचं स्तोमकारणादावपेत। अच्छावाक:—'इन्द्राग्नी आगतं सुतम्' (ऋ० ३ ।१२। १-३ आ०श्रौ० ५ ।१० ।२८; ७ ।२ ।४) इति नित्यात् तृचादधिकं 'इन्द्राग्नी उपह्वये' (ऋ० १ ।२१ ।१-३ आ०श्रौ० ७ ।५ ।१७) इति तृचं स्तोमकारणादावपेत। २. पञ्चदशस्तोमातिशंसने सति प्रा० सवने आरम्भणीयाया ऊर्ध्वं मित्रावरुण:—'मित्रं वयं हवामहे' (ऋ० १ ।२३ । ४-६ आ०श्रौ० ७ ।२ ।२) इति नित्यात् तृचादधिकं 'मित्रं हुवे पूतदक्षम्' ऋ० १ ।२ ।७-९ आ०श्रौ० ७ ।५ ।९) इति तृचं स्तोमकारणादावपेत। ब्राह्मणाच्छंसी— 'इन्द्रमिद् गाथिनो बृहत्' (ऋ० १ ।७ ।१-३ आ०श्रौ० ७ ।२ ।३) इति नित्यात् तृचादधिकमावपेत। अच्छावाक:-'इन्द्रे अग्ना नमो बृहत् (ऋ० ७ ।९४ ।४-६ आ०श्रौ० ७ ।२ ।४) इति नित्यात् तृचादधिकं 'इन्द्राग्नी आगतं सुतम्' (ऋ० ३ ।१२ ।१-३ आ०श्रौ० ७ ।५। १७) इति तृचं स्तोमकारणादावपेत। ३. सप्तदशस्तोमातिशंसने सति प्रात: सवने आरम्भणीयाया ऊर्ध्वं मैत्रावरुण: 'मित्रं हुवे पूतदक्षम्' (ऋ० १ ।२ ।७-९ आ०श्रौ० ७ ।२ ।२) इति नित्यात् तृचादधिकं 'अयं वां मित्रावरुणा' (ऋ० २ ।४१ ।४-६ आ०श्रौ० ७ ।५ ।९) इति तृचम्, तत: परं पञ्च वा षड् वा ऋचोऽधिका: (आ०श्रौ० ७ ।५ ।११-१२) स्तोमकारणादावपेत। ब्राह्मणाच्छंसी—'इन्द्रेण सं हि दृक्षसे' (ऋ० १ ।६ ।७-९ आ०श्रौ० ७ ।२ ।३) इति नित्यात् तृचादधिकं 'युञ्जन्ति ब्रध्नमरुषम्' (ऋ० १ ।६ ।१-३ आ०श्रौ० ७ ।५ ।१५) इति तृचम्, तत: परं पञ्च वा षड् वा ऋचोऽधिका: (आ०श्रौ० ७ ।५ ।११-१२) स्तोमकारणादावपेत। अच्छावाक:—'ता हुवे ययोरिदम्' (ऋ० ६ ।६० ।४-६ आ०श्रौ० ७ ।२ ।४) इति नित्यात् तृचादधिकं 'ता हुवेययोरिदम्' (ऋ० ६ ।६० ।४-६ आ०श्रौ० ७ ।५ ।१७) इति तृचम्, तत: परं पञ्च वा षड्वा ऋचोऽधिका: (आ०श्रौ० ७ ।५११-१२) स्तोमकारणादावपेत। ४. एकविंशस्तोमातिशंसने सति प्रात:सवने आरम्भणीयाया ऊर्ध्वं मित्रावरुण:—'अयं वो मित्रावरुण:' (ऋ० २ ।४१ ।४-६ आ०श्रौ० ७ ।२ ।२) इति नित्यात् तृचादधिकं 'आ नो मित्रावरुणा' (ऋ० ३ ।६२ ।१६-१८ आ०श्रौ० ७ ।५ ।९) इति तृचम्, तत: परं नव वा दश वा ऋचोऽधिका: (आ०श्रौ० ७ ।५ ।११-१२) स्तोमकारणादावपेत। ब्राह्मणाच्छंसी—'आ दह स्वधामनु' (ऋ० १ ।६ ।४) इत्येका, 'इन्द्रो दधीचो अस्थिभि:' (ऋ० १ ।८४ ।१३ ।१४) इति द्वे (एकं तृचं), आ०श्रौ० ७ ।२ ।३) इति नित्यात् तृचादधिकं 'इन्द्रमिद् गाथिनो बृहत्' (ऋ० १ ।७ ।१-३ आ०श्रौ० ७ ।५ ।१५) इति तृचम् तत: परं नव वा दश वा ऋचोऽधिका: स्तोमकारणादावपेत। अच्छावाक:—'इयं वामस्य मन्मन:' (ऋ० ७ ।९४ ।१-३ आ०श्रौ० ७ ।२ ।४) इति नित्यात् तृचादधिकं 'इयं वामस्य मन्मन:' (ऋ० ९५ ।१-३ आ०श्रौ० ७ ।५ ।१७) इति तृचम्, तत: परं नव दश वा ऋचोऽधिका: आ०श्रौ० ७ ।५ ।११-१२) स्तोमकारणादावपेत। ५. त्रिणवस्तोमातिशंसने सति प्रात:सवने आर-

म्भणीयाया ऊर्ध्वं मैत्रावरुणः—'पुरूरुणा चिद्ध्यस्ति' (ऋ० ५।७०।१-३ आ०श्रौ० ७।२।२) इति नित्यात् तृचादधिकं 'प्र वो मित्राय गायत' (ऋ० ५।६८।१-३ आ०श्रौ० ७।५।९) इति तृचम्, ततः परं पञ्चदश वा षोडश वा ऋचोऽधिकाः (आ०श्रौ० ७।५।११-१२) स्तोमकारणादावपेत। ब्राह्मणाच्छंसी—'उत्तिष्ठन्नोजसा' (ऋ० ८।७६।१०-१२ आ०श्रौ० ७।२।३) इति नित्यात् तृचादधिकं 'इन्द्रसानसिं रयिम्' (ऋ० १।८।१-३ आ०श्रौ० ७।५।१५) इति तृचम्, ततः परं पञ्चदश वा षोडश व ऋचोऽधिकाः (आ०श्रौ० ७।५।११-१२) स्तोमकारणादावपेत। अच्छावाकः—'इन्द्राग्नी युवामिमे' (ऋ० ६।६०।७-९ आ०श्रौ० ७।२।४) इति नित्यात् तृचादधिकं 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८।३८।१-३; ७।५।१७) इति तृचम् ततः परं पञ्चदश वा षोडश ऋचोऽधिकाः (आ०श्रौ० ७।५।११-१२)। स्तोमकारणादावपेत। ६. त्रयस्त्रिंशस्तोमातिशंसने सति प्रातः सवने या आरम्भणीयाया ऊर्ध्वं मैत्रावरुणः—'प्रति वां सूर उदिते' (ऋ० ७।६६-७-९ आ०श्रौ० ७।२।२) इति नित्यात् तृचादधिकं 'पुरूरुणा चिदध्यस्ति' (ऋ० ५।५।७०,१-३ आ०श्रौ० ७।५।९) इति तृचम्, ततः परं एकविंशतिं वा द्वाविंशतिं वा ऋचोऽधिकाः (आ०श्रौ० ७।५।११-१२) स्तोमकारणादावपेत। ब्राह्मणाच्छंसी—'भिन्दि विश्वा अप द्विषः' (ऋ० ८।४५।४०-४२ आ०श्रौ० ७।२।३) इति नित्यात् तृचादधिकं 'इन्द्रे मत्स्यन्धसः' (ऋ० १।९।१-३ आ०श्रौ० ७।५।१७) इति तृचम्, ततः परं एकविंशतिं वा द्वाविंशतिं वा ऋचोऽधिकाः (आ०श्रौ० ७।५।११-१२) स्तोमकारणादावपेत। अच्छावाकः—'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८।३८।१-३ आ०श्रौ० ७।२।४) इति नित्यात् तृचादधिकं 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८।३८।१-३ आ०श्रौ० ७।२।४) इति नित्यात् तृचादधिकं 'यज्ञस्य हि स्थ ऋत्विजा' (ऋ० ८।३८।१-३ आ०श्रौ० ७।५।१७) इति तृचम्, ततः परं एकविंशतिं वा द्वाविंशतिं वा ऋचोऽधिका० (आ०श्रौ० ७।५।११-१२) स्तोमकारणादावपेत। अत्र सर्वत्र तृचावापे एकया द्वाभ्यां वा ऋग्भ्यां स्तोमोऽतिशस्तव्यः (तु०—आ०श्रौ० ७।१२।४ नारायणः)। एकामृचं वा द्वे ऋचौ वाऽतिक्रम्य न शंसेत् इति सायणः (तु०—ऐ० ब्रा० सा० ६।२३) इति विशेषोऽवगन्तव्यः। **द्र०** अहर्गण—, साङ्घातिकाहतायमानरूपनिवृत्ति—, स्तोमातिशंसन—।

**स्तोमातिशंसननियमविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अभिप्लवाद्यहर्गणेषु होत्रकाणां शस्त्रेषु त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशादयाः प्राकृताः स्तोमा स्वस्वसंख्यया विहिताः। यदा सामगैः विवृद्धः स्तोमः क्रियते तदानीं 'यथा वाव स्तोत्रमेवं शस्त्रम्' इति न्यायात् स्तोमे वर्धमाने होत्रकैः स्तोमातिशंसनं क्रियते। अतिशंसनं स्तोमगतामृक्संख्यामतिक्रम्य उल्लंघ्य शंसनमतिशंसनमुच्यते। तदतिशंसनं यदा क्रियतेत दानीं प्रातःसवने एकामृचं द्वे ऋचौ वाऽतिक्रम्य न शंसेत्। किन्तु एकयैव वा द्वाभ्यामेववाऽतिशंसेत्। तदुक्तम् 'एकां द्वे न स्तोममतिशंसेत्।' (ऐ० ब्रा० सा० ६।८)। सूत्रकारश्चाह—अतिशंसनं एकया द्वाभ्यां वा प्रातः सवने' (आ०श्रौ०

७।१२।३-४) इत्येकः पक्षः। तथा च ब्राह्मणे 'एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेत्। अर्थात् द्वयोः प्रातर्माध्यन्दिनयोः सवनयोरेकामृचं द्वेवाऽतिक्रम्य न शंसेत्, किन्त्वेकया द्वाभ्यां वाऽतिशंसेदित्युक्तम् (ऐ० ब्रा० सा० ६।२३)। एतेन माध्यन्दिनसवनेऽपि प्रातःसवनवत् एकया द्वाभ्यां वाऽतिशंसनमुक्तं भवति। इति द्वितीयः पक्षः। माध्यन्दिनसवने तृतीयसवने च अपरिमिताभिः नियमरहिताभिर्बह्वीभिर्ऋग्भिरतिशंसनं कुर्यात्। उक्तं च 'अपरिमिताभिरुत्तरयोः' (ऐ० ब्रा० ६।२३ आ०श्रौ० ७।१२।५)। इति तृतीयः पक्षः। २. (क) पृष्ठ्यषडहस्य चतुर्थेऽहनि स्तोमे वर्धमाने माध्यन्दिनसवने पारुच्छेपीनामुपरिष्टात् होत्रकाणां शस्त्रेषु मैत्रावरुणः—'को अद्य नर्यः (ऋ० ४।२५।१-८) इत्यष्टर्चम्, ब्राह्मणाच्छंसी— 'वने न वा यः' (ऋ० १०।२९।१-८) इत्यष्टर्चम्, अच्छावाकः 'आ याह्यर्वाङुप' (ऋ० ३।४३।१-८) इत्यष्टर्चम् इति त्रीणि सूक्तान्यावपेरन्। (आ० श्रौ० ७।१२।१ नारायणः)। ततोऽपरिमिताभिः स्तोमातिशंसनं कुर्यात्। तदुक्तम्— 'अपरिमिताभिरुत्तरयोः सवनयोः (आ०श्रौ० ७।१२।५)। (ख) यान्यहानि महास्तोमानि सप्तदशैकविंशादिस्तोमेभ्योऽधि कैश्चतुर्विंशादिस्तोमैर्युक्तानि स्युस्तेष्वहःसु स्तोमसंख्यामतिक्रम्य अधिकानामृचां शंसनं कर्तव्यम्। तत्र मैत्रावरुणः 'को अद्येति सूक्तमावपेत। ब्राह्मणाच्छंसी 'वने न' इति सूक्तमावपेत। अच्छावाकः 'आयाहि' इति सूक्तमावपेत। (द्र० ऐ० ब्रा० सा० ६।१९)। तत्तत्सवनेषु अधिकानामृचां संख्यास्तु पूर्वोक्ता एवेति विशेषोऽवधेयः।

**स्तोमातिशंसनावापनियमविधि—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्राहीनप्रकरणे अभिप्लवाद्यहर्गणेषु होत्रकाणां शस्त्रेषु त्रिवृदादयः स्तोमा विहिताः। तेभ्यो यदा सामगैर्विवृद्धः स्तोमः क्रियते तदानीं 'यथा वा व स्तोत्रमेवं शस्त्रम्' इति न्यायात् होत्रकैः स्तोमे वर्धमाने अतिशंसनं क्रियते स्तोमगतानामृचांसंख्यामतिलङ्घ्य त्रिषु प्रातर्माध्यन्दिनतृतीयसवनेषु स्तोमातिशंसनार्थानामृचां सूक्तानाञ्च स्तोमे वर्धमाने स्तोमातिशंसनावापः आवापः क्रियते। १. तत्र प्रातःसवने एकामृचं द्वे ऋचौ वाऽतिक्रम्य न शंसेत्। एवं माध्यन्दिनसवनेऽपि एकामृचं द्वे ऋचौ वाऽतिक्रम्य न शंसेत्। किन्त्वेकया द्वाभ्यां वाऽतिशंसेत्। तदुक्तम्— 'एकां द्वे न स्तोममतिशंसेत्। (ऐ० ब्रा० ६।८)। एकां द्वे न द्वयोः सवनयोः स्तोमातिशंसेत् (ऐ० ब्रा० ६।२३) इति अपरिभितामिस्तृतीयसवने ऐ० ब्रा० ६।१९) द्वयोः प्रातर्माध्यन्दिनयोरेकां ऋचं वा द्वे ऋचौ वाऽतिक्रम्य न शंसेत् किन्त्वेकया द्वाभ्यां वाऽतिशंसेत्' इति सायणः) ('एकया द्वाभ्यां वा प्रातःसवने' (आ०श्रौ० ७।१२।४)। २. माध्यन्दिनसवने स्तोमे वर्धमाने पृष्ठ्यषडहस्य चतुर्थेऽहनि माध्यन्दिनसवने पारुच्छेपीनामुपरिष्टात् होत्रकाणां शस्त्रेषु मैत्रावरुणः—'को अद्य नर्यः' (ऋ० ४।२५।१-८) इत्यष्टर्चम्, ब्राह्मणाच्छंसी- 'वने न वा यो' (ऋ० १०।२९।१-८) इत्यष्टर्चम्, अच्छावाकः'-'आ याह्यर्वाङुप' (ऋ० ३।४३।१८) इत्यष्टर्चमित्यष्टर्चाणि त्रीणि सूक्तान्योप्य अपरिमिताभिः ऐ० ब्रा० ६।१९, आ०श्रौ० ७।१२।१ ईयत्यः इति परिमाणरहिताभिर्बह्वीभिर्ऋग्भिः माध्यन्दिनतृतीयसवनयोः स्तोमातिशंसने कुर्युः। तदुक्तम्— एकांद्वे न स्तोमाति शंसेत्।

अपरिमिताभिरुत्तरयो: सवनयो:' (तु०—ऐ० ब्रा० सा० ६ ।८)। 'एकां द्वे न द्वयो: सवनयो: स्तोममतिशंसेत्' (ऐ० ब्रा० ६ ।२३) इति द्वयो: प्रातर्मध्यन्दिनसवनयो: सवनयो: एकामृचं वा द्वे ऋचौ वाऽतिक्रम्य न शंसेत् किन्त्वेकया द्वाभ्यां वाऽतिशंसेदिति सायण:। त्रिप्रभृतिभिर्ऋग्भिरुत्तरयो: (माध्यन्दिनतृतीययो:) सवनयो: स्तोमे वर्धमानेऽति शंसनं कर्तव्यम्। तदुक्तम्—'अपरिमिताभिरुत्तरयो सवनयो: (तु०—आ०श्रौ० ७ ।१२ ।५)। इति अत्र माध्यन्दिनसवने तृतीयसवनयो: एकां द्वे अपरिमिताभिरुत्तरयो: सवनयो:' (ऐ० ब्रा० ६ ।८) इति 'एकां द्वे न द्वयो: सवनयो: स्तोममतिशंसेत्' अपरिमिताभिस्तृतीयसवने (ऐ० ब्रा० ६ ।२३) इति च परस्परं विरोध: प्रसज्येतेति चेत् तर्हि तत्रैकया द्वाभ्यामपरिमिताभिर्विकल्पोऽस्तु इति सायण:। सोऽयं स्तोमातिशंसनावापनियमविधिरुच्यते।

**स्तोमायनपशु—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु विशेषवर्जं सौमिका: क्रतुपशव: स्तोमायनपशव उच्यन्ते। तत्र अग्निष्टोमे आग्नेय एक: पशु:। उक्थ्ये आग्नेय: ऐन्द्राग्न: द्वौ। षोडशिनि आग्नेय ऐन्द्राग्न ऐन्द्र: त्रय:। अतिरात्रे आग्नेय: ऐन्द्राग्न ऐन्द्र: सारस्वती मेषीति चत्वार: पशव:। तदुक्तम्—'आग्नेयोऽग्निष्टोम ऐन्द्राग्न उक्थ्ये द्वितीय ऐन्द्रो वृष्णि: षोडशिनि तृतीय: सारस्वती मेष्यतिरात्रे चतुर्थी' (आ०श्रौ० ५ ।३ ।३) इति विहिता दश क्रतुपशव: स्तोमायनपशवो भवन्ति। इमे सवनीया दश पशव: स्तोमायना: उक्ता: (तु०—आ०श्रौ० ९ ।८ ।२-६) तेषु अग्निष्टोमे विहितेनाग्नेयेन स्तोमायन (सवनीय-) क्रतु पशुना सह पश्वेकादशिनी (एकादश पशव:) विकल्पेनाभिहिता। तस्यां आग्नेय-(सवनीय—) सारस्वतसौम्यपौष्णबार्हस्पत्यवैश्वदेवऐन्द्रमारुतऐन्द्राग्नसावित्रवारुणा इत्येकादश पशवो भवन्ति (तु०—का०श्रौ० ८ ।८ ।२५)। तत्र पश्वेकादशिनीपक्षे एकादश यूपा अपि विकल्पेन विहिता:। एवं च पश्वेकादशिनीपक्षेऽपि एकादश यूपा अपि विकल्पेन विहिता:। एवञ्च पश्वेकादशिनीपक्षेऽपि एकस्मिन्नेव यूपे एकादशापि पशवो योजनीया:। अथवा प्रतिपशु एकैको यूप: कर्तव्य:। (तु०—का० श्रौ० ८ ।८ ।६ विद्याधर:) इति नियोजने विशेषोऽवगन्तव्य:। द्र० क्रतुपशु-, पश्वेकादशिनी-, यूपैकादशिनी-, सवनीयपशु—।

**स्तोमीयेष्टका—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयने चितिसाधने स्तोमवाचिशब्दोपेतैर्मन्त्रैरुपधेयत्वादिष्टका: स्तोमीया: स्तोमीष्टका उच्यन्ते। द्र० स्तोमभागेष्टका—।

**स्थण्डिल—** (सा०, आध्व०) १. मृदा निर्मितं समचतुरस्रं प्रतिदिशं अष्टादशाङ्गुलविस्तृतं होमानुसारेण ततोऽधिकं वा न तु ततो न्यूनं च तुरङ्गुलोच्चं मध्योन्नतं स्थण्डिलमुच्यते। द्र० श्रौ०प०नि० पृ० ४३। २. किञ्चिदुच्छ्रिता सा कृत्रिमा भूमि: स्थण्डिलमुच्यते (तु०—आ०गृ० परिशिष्ट—१ ।४)। ३. चयनप्रकरणे सौमिक्या उत्तरवेद्या उपरीष्टकाभि: संपादितमग्न्याधारभूतं यथाप्रमाणं स्थण्डिलमुच्यते। द्र० अग्निचयन—।

**स्थपति—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्र विकृतौ एकाहप्रकरणे बृहस्पतिसवे एकाहे स्थपतिर्नाम धर्माणां व्यव-

स्थापकः राज्ञा सह ब्राह्मणा यं ब्राह्मणं धर्माणां व्यवस्थापकत्वेन वृणीरन् स स्थपतिरुच्यते। द्र० तां० ब्रा० सा० १७।११।५, द्रा०श्रौ० धन्वी।

**स्थाली—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सवनेषु प्रयुज्यमानाः आग्रयणस्थाली, उक्थ्यस्थाली, आदित्यस्थाली, ध्रुवस्थालीति चतस्रः स्थाल्यो ग्रहाः, स्थाल्य उच्यन्ते। द्र० ग्रह—।

**स्थालीपाक—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे पूर्णमासविकृतिभूतस्य दर्शस्य विकृतौ पिण्डपितृयज्ञे पिण्डार्थं प्रयोक्तव्यः स्थाल्यां परिपक्व ओदनः स्थालीपाक उच्यते। तत्र स्थालीपाकात् पूर्वं अमावास्यायामपराह्णे दक्षिणाग्निसंबन्ध्येकमुल्मुकं 'ये रूपाणि प्रति मुञ्चमाना' इत्यृचा आग्नेय्यां दिशि बहिः प्रणयति। अस्मिन् कर्मणि आग्नेय्येव प्राची भवति। दक्षिणाग्निं प्रणीवाग्निं च प्रज्वाल्य दर्भैः परिस्तृणाति। दक्षिणाग्नेः प्रागुदक् प्रत्युदग्वा आग्नेयीसंस्थानि एकैकशः पात्राणि सादयति चरुस्थालीं शूर्पमुलूखलं मुसलं स्रुवं ध्रुवां कृष्णाजिनं सकृदाच्छिन्नेध्मं मेक्षणं कमण्डलुं च। शकटपक्षे शकटस्य दक्षिणं भागमारुह्य ब्रीहिभिः पूर्णां चरुस्थालीं निमृज्य बहिः पतितान् व्रीहीन् अन्यत्र निधाय कृष्णाजिने उलूखलं निधाय स्थालीस्थान् ब्रीहीन् उलूखले ओप्य पत्नी अविवेचम् अत्रावहन्ति। ततः संपन्नान् तण्डुलान् सकृत्प्रक्षाल्य दक्षिणाग्नौ श्रपयति। अतिप्रणीताग्नेः पश्चात् 'अपहता असुराः' इत्यादिमन्त्रेण स्फ्येन लेखां लिखति। ततस्तां लेखां जलेनाभ्युक्ष्य सकृदाच्छिन्नैर्दर्भैरवस्तीर्य स्थालीपाकमनवघार्य तेषु दर्भेषु सादयति। अनुत्पूतमाज्यमुत्पूतं नवनीतं वा ध्रुवायां कृत्वा ध्रुवामपि तत्र सादयति दर्भेषु दक्षिणतः आञ्जनाभ्यञ्जनकशिपूपबर्हणानि सादयतीति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० ७२।

**स्थालीपाक—** (सा०) स्थालीपाकः दर्विहोमः लौकिकः। द्र० मी०को० पृ० ४४२२।

**स्थाल्युपस्थान—** (हौ०, आध्व०) इष्टिनिरूढपशुविकृतौ हविर्यज्ञानां सप्तमे कौकिलसौत्रामणीप्रकरणे त्रिपशोः सौत्रामण्या आश्विनसौत्रामणीग्रहप्रचारानन्तरं होता 'अग्निष्वात्ताः पितर इह गच्छत' इति तिसृभिर्ऋग्भिः प्रत्यङ्मुखः स्रवन्तीं स्थालीमुपतिष्ठते। एतत् स्थाल्युपस्थानमित्युच्येते। द्र० श्रौ०प०नि० पृ० १७९।

**स्थूणागर्त—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सौमिकवेदिसाधने अध्वर्युः दक्षिणहविर्धानस्याग्रभागादरत्निमात्रे गर्तं खात्वा तस्य दक्षिणोत्तरयोर्युगान्तर्जवेन गर्तत्रयं खनति। एवं प्रतिप्रस्थाता उत्तरहविर्धानस्योत्तरतः गर्तत्रयं खनति। एवं सति षड्गर्ताः संपद्यन्ते। एवमेव षट् पश्चात् हविर्धानयोः। ततो द्वादश गर्ता भवन्ति। तेषु गर्तेषु प्राचीनकर्णाः स्थूणा उच्छ्राय तासु उच्चौ वंशौ प्रोह्य 'विष्णो रराटमसि' इति पुरस्तात् रराटीं बध्नाति। इति विशेषोऽवगन्तव्यः। द्र० श्रौ०प०नि० पृ० २४२।

**स्थूरि—** (सा०) १. एकेन अश्वेन युक्तो रथः स्थूरीत्युच्यते। (तु०—तां० ब्रा० सा० १६।१।६) २. एकाश्वयुक्तं शकटं स्थूरि।

**स्नातक—** स्वाध्याये ब्रह्मयज्ञप्रकरणे वेदाधिगमे उपनयने त्रयः स्नातका भवन्तिविद्यास्नातको व्रतस्नातको विद्या व्रतस्नातक इति (तु०—पा०गृ०)।

**स्फ्य—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीयदर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमेषु च प्रयोक्तव्यः १. खड्गसदृशः अहोमसंयुक्तत्वाद् वारणकाष्ठनिर्मितः पात्रमुच्यते। वज्र इति चोच्यते। तदुक्तम्—'स्फयोऽस्या कृतिः (का० श्रौ० १।३।४०)। २. खदिरकाष्ठनिर्मितः अरत्निपरिमितः दीर्घश्चतुरङ्गुलपरिमितविस्तार आकारेण खड्गसदृशः स्फ्यो भवति। द्र० श्रौ०प०नि० पृ० ६।

**स्मार्तवदाज्यसंस्कार —** (आध्व०) इष्टियज्ञेषु प्रकृतिभूतदर्शपूर्णमासविकृतौ हविर्यज्ञानां पञ्चमे चातुर्मास्यप्रकरणे प्रथमे वैश्वदेवपर्वणि प्रातर्हुते अग्निहोत्रे गार्हपत्यस्योत्तरतः तृणान्यासाद्यतेषु आज्यस्थालीं स्रुवं स्रुचं समिधं प्रोक्षणीं अभिद्योतनकुशांश्च सादयति। तूष्णीं पवित्रे कृत्वा तथा प्रोक्षणीः संस्कृत्य पात्राण्युत्तानानि कृत्वा प्रोक्ष्य आज्यं निरूप्य गार्हपत्यस्योत्तरतो भस्ममिश्रानङ्गारान् निरुह्य तेष्वाज्यमधिश्रित्य दर्भोल्मुकेन अभिद्योत्य अङ्गुष्ठपर्वमात्रं प्रक्षालितदर्भाग्रद्वयमाज्ये प्रक्षिप्य पुनरभिद्योत्य त्रिः पर्यग्नि कृत्वा उदगुद्वास्य अङ्गारानग्नौ प्रत्यस्य पुनराहारमाज्य त्रिरुत्पूय पवित्रे अग्नौ प्रक्षिप्य स्रुक्स्रुवौ निष्टप्य संभृत्य संमार्गदर्भानग्नौ प्रत्यस्यति। सोऽयं स्मार्तवदाज्यसंस्कार इत्युच्यते। तत्र आज्यसंस्कारात् पूर्वं वैश्वदेवपर्व संकल्पानन्तरमामिक्षार्थं शाखाहरणम्, पूर्वेद्युरन्वाधानम्। बर्हिः संभरणे नवप्ररूढदर्भभयं प्रस्तरं बध्नाति। त्रींस्त्रीन् मुष्टीनेकीकृत्य तूष्णीं वट्टेन (वर्तेन) मुष्टित्रयेण सह मन्त्रवता शुल्बेन संनह्यतो इध्मसंभरणे काष्मर्यमयाः परिधयः, सप्तदश सामिधेन्यः। ततस्त्वां त्रयोविंशतिधा इत्यूहः। सायं दोहे महेन्द्रपदस्थाने विश्वविशेषणकस्य देवशब्दस्य असमासेनोहः कर्तव्यः। इति विशेषोऽवधेयः द्र० श्रौ०प०नि० पृ० ७८।

**स्मार्तविनियोग—** (सा०) इष्टिपशुसोमयज्ञादिषु 'विशेषविनियोगस्तु यत्र श्रौतो न सूत्रितः। स्मार्तं तत्र विजानीयाद् ऋग्विधानादिसूत्रतः। इत्ययं स्मार्तविनियोग उच्यते।

**स्रुगादापन—** (हौ०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अन्यत्र पशुसोमे च बर्हिरुपस्पर्शनानन्तरं होता इध्मप्रदीपनसमये एकं यजुर्मन्त्रं पञ्च ऋचश्च जपित्वा इध्मे प्रदीप्ते सति यस्य निगदस्य षडक्षरो मध्यभागः उपांशु पठ्यते तं निगदमुच्चैः एकश्रुत्या पठति। तन्निगदघटकधृतवतीशब्दस्य श्रवणानन्तरं अध्व- र्युः। प्रयाज होमार्थं जुहूपभृतौ गृहीत्वाऽतिक्रामति स्रुचौ जुहूपभृतौ आदाप्येते अनेनेति करणव्युत्पत्त्या स निगदः स्रुगादापन इत्युच्यते। द्र० श्रौ०प०नि० पृ० २७। पाठस्तु 'अग्निर्होता वेत्त्वग्नेर्होत्रं वेत्तु प्रावित्रं साधु ते यजमान देवतायो अग्निं होतारमवृथा' 'धृतवतीमध्वर्योः स्रुचमास्यस्व देवयुवं विश्ववारे ईलामहै देवाँ ईलेन्यान् नमस्याम नमस्यान् यजाम यज्ञियान्' इति (तु०—आ०श्रौ० १।४।११ का०श्रौ० ३।२।१६-१७ श्रौ०को० १ भा० पृ० २००)।

**स्रुगासादन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु दर्भद्वयं विधृती, ते च द्वे विधृती वेद्यां मन्त्रेण उदगग्रे निधाय तयोरुपरि

मन्त्रेण प्रागग्रं प्रस्तरं तदुपरि मन्त्रेण जुहूं प्रागग्रां तस्या उत्तरतो विधृत्योरधस्तात् मन्त्रेणोपभृतं तदुत्तरतस्तथैव ध्रुवां निधाय मन्त्रेणाभिमृशति। तदेतत् कर्म स्रुगासादनमुच्यते द्र० विधृति श्रौ०प०नि० पृ० २०।

**स्रुग्व्यूहन**—(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च अनुयाजप्रचारानन्तरं उदगागत्य यथास्थानं स्रुचौ सादयित्वा यजमानेन सह मन्त्रेण जुहूमूर्ध्वां उत्तानेन दक्षिणहस्तेन गृह्णाति। एवं नीचेन सव्यहस्तेन अधस्तात् उपभृतं अध्वर्युयजमानौ कुरुतः। ततः उभौ प्रागग्रां जुहूं मन्त्रेण दक्षिणांस पर्यन्तं प्रापयतः। तथैवोपभृतं प्रत्यगग्रां उत्तरश्रोणिपर्यन्तं प्रापयतः। तदेतत्कर्म स्रुग्व्यूहनमित्युच्यते। द्र० श्रौ०प०नि० पृ० ३६।

**स्रुच्**— (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च प्रयोक्तव्या १. जुहूपभृद्ध्रुवा इति तिस्रः स्रुच उच्यन्ते (मा० सं० १२९ म०) । खादिरः स्रुवो भवति। पर्ण (पलाश) मयी जुहूर्भवति। आश्वत्थी उपभृत। वैकङ्कती ध्रुवा भवति। एतद्वै स्रुचां रूपम् (तै० सं० ३।५।७)। २. तत्र कोषः—'ध्रुवोपभृज्जुहूनी तु स्रुवो भेदाः स्रुचः स्त्रियाम्' इति श्रौतव्यवहारमूलककोषात् ध्रुवोपभृज्जुहूस्रुवाणां वाचकः स्रुक् शब्दः। द्र० श्रौ०प०नि० पृ० १०)। ३. जुहूपभृद्ध्रुवा प्रचरण्यग्निहोत्रहवण्यादयः सर्वाः स्रुचः (स्रुक् पात्राणि) बाहुप्रमाणाः पाणिप्रमाणमुखाः त्वक् प्रदेशे बिलवत्यः (त्वक् पर्यन्तबिलाः) हंसमुखसदृशैकप्रणालिका मूलदण्डा भवन्ति। तदुक्तम्—'बाहुमात्र्यः स्रुचः पाणिमात्रपुष्करास्त्वग्बिला हंसमुखप्रसेका मूलदण्डा भवन्ति। (तु०—का०श्रौ० १।३।३८ विद्याधरः)। तत्र जुहूः पालाशी, आश्वत्थी उपभृत्। इतरा वैकङ्कत्यः इति विशेषः। ४. स्रुवः जुहूः उपभृत् ध्रुवा इति चतस्रः स्रुच उच्यन्ते। ५. चातुर्मास्ये वरुणप्रघासेषु तु 'स्रुचः शमीमय्यः हिरण्यमय्यो वा संमार्ष्टव्या वरुणप्रघासेषु इति विशेषोऽवगन्तव्यः। द्र० मी०को० पृ० ४४४४।

**स्रुव**—(सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च १ अरत्निप्रमाणः अङ्गुष्ठपर्वप्रमाणेन वृत्तमुखः खदिरकाष्ठनिर्मितः स्रुवो भवति। तदुक्तम्—'अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः खदिरः स्रुवः (तु०—का० श्रौ० १।३।३३।३९ विद्याधरः)। २. खदिरकाष्ठनिर्मितः अरत्निमात्रो दीर्घोऽग्रभागे अङ्गुष्ठपर्वमात्रवर्तुलवृत्तयुक्त आज्यहोमादौ करणभूतः स्रवति आज्यादि द्रव्यमस्मादिति व्युत्पत्त्या स्रुवपदवाच्यः। द्र० स्रुच्—श्रौ०प०नि० पृ० ८।

**स्रौवाघार**—(आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च पशुसोमयज्ञेषु स्रुवस्याधस्ताद् वेदं धृत्वा तेन दक्षिणं परिधिमारभ्य उत्तरपर्यन्तं समन्त्रकम् आज्यधाराऽऽहरणं स्रौवाघार तिर्यगाघार इति चोच्यते। द्र० श्रौ०प०नि० पृ० २४।

**स्वकीया (ऋच् —)** — (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु गाने यो निरुत्तराद्वयं चेति स्वकीया ऋच उच्यन्ते। ततोऽन्या परकीयाः। (तु०—द्रा० श्रौ० २।१।१, धन्वी)।

**स्वगा—** (सा०) स्वगा इति शब्दः समृद्धिव्यञ्जकः।

**स्वगाकार—** (सा०) इष्टिपशुसोमेषु स्वगाकृतिः, स्वगाकरणं स्वगाकार उच्यते। (तु०—तै० सं० सा० ४।७।११)।

**स्वधुर्—** (सा०) स्वैव अनन्यसाधारणी धुर्यसृतिः स्वधूरित्युच्यते।

**स्वयमातृण्णा—** (सा०, आध्व०) सोमयज्ञेषु साग्निचित्येषु अग्निचयनप्रकरणे चितिसाधने १. शर्कराख्यानां क्षुद्रपाषाणानां मध्ये पुरुषप्रयत्नमन्तरेण या स्वत एव छिद्रयुक्ता सेयं शर्करा स्वयमातृण्णोच्यते। (तु०—तै० स० सा० ४।२।९)। २. पाककाले स्वतः सम्पन्नच्छिद्रयुक्ता इष्टकाः स्वयमातृण्णा-उच्यन्ते।

**स्वर्—** (सा०) १. यदा वै स्वर्गच्छति अथामृतो भवति। तं सर्वेभ्यो देवेभ्यः सर्वेभ्यो भूतेभ्यः प्राह (तु०—जै० ११२)। २. यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्। (तु०—सांख्यकारिका बालरामोदासीनटीका)।

**स्वर—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. स्वराः एकारादयश्चत्वारः (ए ऐ ओ औ)। अ इ उ ऋ लृ इति च पञ्च वर्णा स्वरा अचश्चोच्यन्ते। द्र० श्रौ०प०नि० पृ० २८। २. स्वरा उदात्तानुदात्तस्वरितस्त्रयो भवन्ति। ते स्वाध्यायस्वरा उच्यन्ते। तेषु स्वरितस्वराः— १. जात्यः (प्रकृतिप्रत्यय योगेन।) २. अभिनिहितः = (स्वाभाविकः स्वरितः)। ३. क्षैप्रः = (यण् सन्धिना (ए ओ)। ४. प्रश्लिष्टः = (दीर्घसन्धिः) ५. ताथाभाव्यः। ६. तैरो व्यञ्जनम्। ७. तैरो विरामः। ८. पादवृत्तः इति चाष्टौ स्वरिताः स्वाध्यायस्वराः भवन्ति। एषां लक्षणानि याज्ञवल्क्यशिक्षायाम्-द्रष्टव्यानि। ३. स्वराः उपांशूच्च मन्द्रमध्यमोत्तमाः पञ्चविधाः स्वरा भवन्ति। तत्र समीपगैः श्रोतुमयोग्य उपांशु उच्चस्तारः। मन्द्रादयस्त्रयोऽपि समीपगैः श्रोतुं योग्या उत्तरोत्तरमुच्चमूला भवन्ति। गायत्रसामगाने तु मन्द्रः (गायत्रसाम्नः) प्रथमभागे ईषदुच्चैः। मध्यमो मध्यमभागे तारतरम् (मन्द्रादधिकमुच्चैः), उत्तमोऽन्त्यभागे तारततमम् मध्यमादप्यधिकमुच्चैर्भवतीति (तां० ब्रा० सा० ७।१।७)। द्र० वाचः स्थान— द्र० ४. स्वराः— क्रुष्टप्रथमद्वितीयतृतीयचतुर्थमन्द्रअति स्वार्थभेदेन सप्त भवन्ति। ते सामगाने प्रसिद्धाः। ५. वेदपाठे स्वरविज्ञानं नियमो विहितः। स्वरहीनो वेदपाठो निष्फलः सन् पाठिनं मनागपि नोपकुरुते। अनर्थाधिकारी तु भवत्येव। तदुक्तम्-स्वरसंस्कारयोश्छन्दसि नियमः (शु० प्रा० १।१)। मन्त्रो हीनः (दुष्टो मन्त्रः) स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ प्रहीणः स्वरवर्णाभ्यां यो वै मन्त्रः प्रयुज्यते। यज्ञेषु यजमानस्य रुषत्यायुः प्रजां पशून्। ६. स्वरज्ञानं च उरः कण्ठशिरः सहकृतैः कण्ठताल्वादिस्थानप्रयत्नोच्चारणैः, शिक्षाव्याकरणनियमैः, रेखाङ्कितचिह्नाभिव्यञ्जकैर्हस्ताङ्गुलिपर्वकण्ठशिरः संचालनैश्चेति त्रिभिरुपायैः कर्तुं शक्यते स्वरविज्ञाने एतेषामुत्तरोत्तरं सौकर्यं तु लक्ष्यते। तद्यथा— यदि चेत् मन्त्रपाठे। शिक्षाप्रातिशाख्यबोधितेन विधिनोच्चारणेऽसमर्थः स्यात्तदा व्याकरणनियमाः समाश्रयणीयाः। यदि च तानपि ग्रहीतुमशक्तः स्यात् तदा रेखा-अङ्कचिह्नसूचितैः हस्ताङ्गुलिपर्वकण्ठ-शिरः साम ऊर्ध्वम् अधः वामतः दक्षिणतश्चेत्यादि निक्षेपप्रकारैः वेदपाठे स्वरा अधिगन्तुं शक्यन्ते। द्र० यम—।

**स्वरसामन्–** (अव्य०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सरसत्रप्रकरणे गवामयने १. सात्रिकाणां षोडशसप्तदशाष्टा दशानामहर्विशेषाणां सत्राहीनाङ्गात्मकानां त्रयाणामह्नां समूहः (गणः) स्वरसामान उच्यन्ते । २. 'अभिप्लवत्र्यहः पूर्वः (ज्योतिः, गौः, आयुः) स्वर सामानः' (आ०श्रौ० ८ ।५ ।१०) इत्यनुलोमास्त्रयः स्वरसामानः उच्यन्ते । 'आवृत्ताः स्वरसामानः' (आ०श्रौ० ८ ।६ ।२५) इति आवृत्ताः प्रतिलोमा (आयुः, गौः, ज्योतिः) त्रयः स्वरसामानः प्रतिलोमा उच्यन्ते । तत्र अनुलोमा गवामयने पूर्वपक्षे विषुवतः पुरस्तात् अभिजित ऊर्ध्वञ्चानुष्ठीयन्ते । प्रतिलोमाश्च उत्तरपक्षे पुरस्ताद् विश्वजित ऊर्ध्वं विषुवतः । अग्निष्टोमसंस्थाश्च भवन्ति । उक्थ्यसंस्था इत्येके (आ०श्रौ० ८ ।७ । १०-१३) (तु०—तां० ब्रा० सा० ४ ।५ ।१) । ३. सप्तदशस्तोमयुक्तैः स्वरसामरूपैरेतैरनुष्ठितैः स्वरसामभिरिमाँल्लोकान् प्रीतानकुर्वँ स्तस्मादेतेषामह्नां स्वरोपेतसामवत् प्रीतिहेतुत्वात् स्वरसामेति नाम संपन्नम् । तत्र अग्निजित् पूर्वस्तोमोऽवस्ताद् भवति विश्वजित् सर्वपृष्ठः परस्तात्' इति श्रुतेः स्वरसामभ्यः सर्वेभ्योऽधस्तादुपरिष्टाच्च द्वे अहनी भवतः इत्यर्थोऽवगन्तव्यः (तु०—ऐ० ब्रा० सा० ४ ।१९) । विषुवतः पुरस्तादभिजित ऊर्ध्वमुपेतव्याः, परस्ताद् विषुवत ऊर्ध्वं विश्वजितः प्राक् एत एव प्रतिलोममनुष्ठेया भवेयुः । तदुक्तम्—'त्रयः पुरस्तात् त्रयः परस्ताद् भवन्ति' इति (तु०—तां० ब्रा० सा० ४ ।५ ।८) ।

**स्वरसामन्–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ............गवामयने पूर्वपक्षे अभिजिद् विश्वजितोर्मध्ये त्रीणि स्वरसामनामकान्यहान्यनुष्ठीयन्ते । तेषु 'यज्जायथा अपूर्व्य' (साम० ६०१) इत्यस्यां योनावुत्पन्नानि चत्वारि सामानि स्वरसामान्युच्यन्ते । तानि च स्वरसाम्नां त्रयाणामह्नां आर्भवपवमानेषु अनुष्टुप्सु कर्तव्यानि । 'प्र सुन्वाना- यान्धसः' (साम० १३८६-८८), 'अयं पूषा रयिर्भगः' (साम० ८-१८), 'सुतासो मधुमत्तमाः' (साम० ८७२-७४) इत्यानुष्टुभेषु तृचेषु कर्तव्यानीत्यर्थः ।(तु०—तां० ब्रा० सा० ४ ।५ ।१) । अपरे स्वराणि पृष्ठानीति वर्णयन्ति । यदि स्वरसामानः स्वरपृष्ठाः स्युः तदा स्वरसामसंबन्धि बृहद् रथन्तर पृष्ठस्तोत्रीयेषु 'यज्जायथा अपूर्व्य' (साम० १४२९-३०), 'मत्स्यपायि ते महः' (साम० १४३२-३४), 'प्रत्यस्मै पिपीषते' (साम० १४४०-४२) इत्येतेष्वेव स्वराणि पृष्ठानि कुर्यात् । तु०—तां० ब्रा० सा० ४ ।५ ।१) । आश्वलायनः — 'स्वराणि त्विह पृष्ठानि' इति स्वरसंज्ञकानि सामान्येतेष्वहःसु पृष्ठानि भवन्तीत्याह (तु०—आ०श्रौ० ८ ।६ ।११ नारायणः) । तथा च 'तेषां यथासंख्येन' यज्जायथा अपूर्व्य (साम० १४२९-३१), मत्स्यपायिते महः' (साम० १४३२-३४), 'एमेनं प्रत्येतन' (साम० १४४१-४३) इति स्तोत्रियतृचान् विदधाति । अथवा 'यज्जायथा अपूर्व्य' इत्याद्यः स्तोत्रियस्तृच एव त्रिषु स्वरसामसु स्तोत्रियो भवतीति विकल्पयति (तु०—आ०श्रौ० ८ ।६ ।१२-१३ नारायणः) । द्र० परः सामन्— ।

**स्वरसाम्नां प्रथमेऽहनि बहिष्पवमानस्तोत्र–** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सरसत्रप्रकरणे गवामयने अभिजितोऽनन्तरं स्वरसाम्नां प्रथमे

सात्रिकेष्वहःसु षोडशेऽहनि प्रातःसवने बहिष्पवमानस्य स्तोत्रियास्तृचाः—'उपास्मै गायता नरः' (साम० ६५१-५३) इति प्रथमतृचः। 'उपोषु जातमप्तुरम्' (साम० १३३५-३७) इति द्वितीयतृचः। 'तं त्वा तृम्णानि विभ्रतम्' (साम० ८३६-४०) इति पञ्च च 'पवमानस्य ते वयम्' (साम० ७८७-९९) इति चतुर्थतृचः। 'पवमानस्य ते कवे' (साम० ६५७-५९) इति पञ्चमतृचः। इति बहिष्पवमानस्य पञ्च तृचाः। साम-गायत्रम् स्तोमः— सप्तदशः। विष्टुतिः— द्र० सप्तदश स्तोमविष्टुति—। इति स्वरसाम्नां (अनुलोमानां) प्रथमेऽहनि बहिष्पवमानस्तोत्रम्। द्र० आ०क० २।२।२)।

**स्वरसाम्नां प्रथमेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...प्रातःसवने चतुर्णामाज्यस्तोत्राणां तृचाः—'अग्न आयाहि वीतये' (साम० ६६०-६२) इति होतुः प्रथमस्तृचः। 'आनो मित्रावरुणा' (साम० ६६३-६५) इति मैत्रावरुणस्य द्वितीयस्तृचः। 'आ याहि सुषमा' (साम० ६६६-६८) इति ब्राह्मणाच्छंसिनस्तृतीयस्तृचः। 'इन्द्राग्नी आगतम्' (साम० ६६९-७१) इत्यच्छावाकस्य चतुर्थस्तृचः। इति चत्वारस्तृचाः। सामानिसर्वेषु प्राकृतानि गायत्राणि। स्तोमः—सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। इत्याज्यस्तोत्राणि।

**स्वरसाम्नां प्रथमेऽहनि आज्य प्रउगशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सरसत्रप्रकरणे गवामयनेऽभिजितोऽनन्तरं स्वरसाम्नां प्रथमेऽहनि प्रातःसवने आज्य प्रउगशस्त्रे अभिप्लव प्रथमाहस्य प्रातः सवने आज्य प्रउगशस्त्रे द्रष्टव्यम्।

**स्वरसाम्नां प्रथमेऽहनि माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर..... षोडशेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रियतृचाः—'प्र सोमासो विपश्चितः (साम० ७६४-६६) इति प्रथमस्तृचः। 'अभिसोमास आयवः' (साम० ८५६-६८) इति द्वितीयतृचः। तृतीयतृचः इति द्वौ तृचौ। सामानिप्रथमे तृचे गायत्रं, आश्वं चेति द्वे सामनी। द्वितीये पौरुहन्मनं द्वैगतं गौङ्गवं यौधाजयं औशनम् इति पञ्च सामानि माध्यन्दिनपवमानस्तोत्रस्य। स्तोमः-सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। द्र० आ०क० २।२।३)।

**स्वरसाम्नां प्रथमेऽहनि पृष्ठस्तोत्र—** सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर.....षोडशेऽहनि माध्यन्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रियतृचाः—'यज्जायथा अपूर्व्य (साम० १४२९-३१) इति होतुः प्रथमतृचः। 'कयानश्चित्र आ' (साम० ६८२-८४) इति मैत्रावरुणस्य द्वितीयतृचः। 'तं वो दस्म ऋतीषहम्' (साम० ६८५-८६) इति ब्राह्मणाच्छंसिनस्तृतीयतृचः। 'तरोभिर्वो विदद्वसुम्' (साम० ६८७-८९) इत्यच्छावाकस्य चतुर्थतृचः। सामानि-प्रथमतृचे रथन्तरम्। द्वितीयतृचे वामदेव्यम्। तृतीयतृचे अमीवर्तः (ब्रह्मसाम)। चतुर्थतृचे कालेयम्। इति चतुर्णां पृष्ठस्तोत्राणां चत्वारि सामानि। स्तोमः— सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। द्र० आ०क० २।२।४।

**स्वरसाम्नां प्रथमेऽहनि मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषुप्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...षोडशेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रं अभिप्लवषडहस्य प्रथमाहर्वत् द्रष्टव्यम्।

**स्वरसाम्नां प्रथमेऽहनि होतुर्निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर..षोडशे स्वरसाम्नां प्रथमेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशस्त्रस्य स्तोत्रियतृचः—'यज्जायथा अपूर्व्य (ऋ० ८ ।८९ ।५-७) । तत्राद्ये अनुष्टुभौ अन्त्या वृहती आ०श्रौ० ८ ।५ ।१२) इति विशेषोऽवधेयः । अनुरूपतृचः वयं ध त्वा' (ऋ० ८ ।३३ ।१) इत्येका बृहती, 'यस्ते साधिष्ठोऽ-वसे' (ऋ० ५ ।३५ ।१-२) इत्यनुष्टुभौ द्वे (आ०श्रौ० ८ ।५ ।१४) ।

**स्वरसाम्नां प्रथमेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर..षोडशेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रियतृचाः—'स्वादिष्ठया मदिष्ठया' (साम० ६८९-९१) इति प्रथम तृचः । 'अया पवस्व' (साम० ७७२-७४) इति द्वितीयतृचः । 'अभिप्रियाणि' (साम० ७००-७०२) इति तृतीयतृचः । इति त्रयस्तृचाः । सामानि—प्रथमे तृचे गायत्रं क्षुल्लकवैष्टम्भमिति द्वे सामनी । द्वितीये तृचे प्रथमद्वितीययोः सफसुज्ञाने द्वे सामनी, तृतीयायां गौरीवितम् इति त्रीणि सामानि । अथवा तिसृषु गौरीवितमेकस्याम्, गौतममेकस्याम्, औदलमेकस्याम् । यद्वा स्वारं तिसृषु यत् पयोनिधनम् । तृतीये तृचे ऐडं कावम् । स्वारं वा यदि विकल्पयेत् । स्तोमः—सप्तदशः । विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति— । द्र० आ० क० २ ।२ ।५ ।

**स्वरसाम्नां प्रथमेऽहनि वैश्वदेवाग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर.. । षोडशेऽहनि तृतीयसवने वैश्वदेवाग्निमारुते शस्त्रे अभिप्लवषडहस्य तृतीयसवनवद् द्रष्टव्यम् ।

**स्वरसाम्नां प्रथमेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर.... प्रथमेऽहनि तृतीयसवने अग्निष्टोमसंस्थे 'यज्ञा यज्ञा वो अग्नये' (साम० ७०३-५) इत्यस्मिन् तृचे यज्ञायज्ञीयं साम अग्निष्टोमस्तोत्रं भवति । स्तोमः—सप्तदशः । विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति— । आ०क० २ ।२ ।६ ।

**स्वरसाम्नां प्रथमेऽहनि उक्थस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर..षोडशे प्रथमे स्वरसाम्न्यहनि उक्थ्यसंस्थपक्षे तृतीयसवने उक्थ्यस्तोत्राणि वक्तव्यानि । तत्र उक्थ्यसंस्थायां होत्रकाणां मैत्रावरुणस्य 'एह्यू षु' (साम० ७०५-७) इति तृचे साकमश्वं प्रथममुक्थस्तोत्रं, ब्राह्मणाच्छंसिनः 'वयमुत्वामपूर्व्य' (साम० ७०८-९) इति सामतृचे सौभरं द्वितीयमुक्थस्तोत्रं, अच्छावाकस्य 'अधा हीन्द्र' (साम० ७१०-१२) इति तृचे नार्मेधं तृतीयमुक्थस्तोत्रमिति नित्यानि त्रीणि उक्थस्तोत्राणि भवन्ति । (तु०—आ०क० पृ० ५३ ।) उक्थ्यसंस्थेऽत्र प्रथमे स्वरसाम्नि तु मैत्रावरुणस्य औशनसं साम, ब्राह्मणाच्छंसिनः औपगवं साम, अच्छावाकस्य वतिष्ठस्य प्रियं तैरश्च्यं सामेति त्रीण्युक्थानि उक्थस्तोत्राणि कुप्यन्ते । स्तोमः—सप्तदशः । विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति— । द्र० आ०क० २ ।२ ।७ वरदराजः)

**स्वरसाम्नां द्वितीयेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर प्रकरणे गवामयने अभिजितोऽनन्तरं स्वरसाम्नां द्वितीये सात्रिकेष्वहःसु सप्तदशेऽहनि प्रातःसवने बहिष्प-

वमानस्तोत्रस्य स्तोत्रीयास्तृचाः—'पवस्व वाचो अग्नियः' (साम० ७७५-७७) इति प्रथमतृचः। 'पवस्वेन्दो वृषा' (साम० ७७८-८०) इति द्वितीयतृचः। 'वृषा सोम' (साम० ७८१-८३) इति तृतीयतृचः। 'उत्ते शुष्मास ईरते' (साम० १२०५-९) पञ्चर्चः। 'पवमानस्य ते कवे (साम० ६५७-५९) पञ्चमतृचः। इति पञ्च तृचाः। साम—गायत्रम्। स्तोमः—सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। इति बहिष्पवमानशस्त्रम्। द्र० आ०क० २।३।१)।

**स्वरसाम्नां द्वितीयेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...सप्तदशे स्वरसाम्नां द्वितीयेऽहनि प्रातःसवने चतुर्णामाज्यस्तोत्राणां स्तोत्रीयास्तृचाः—'अग्निं दूतं वृणीमहे' (साम० ७९०-९२) इति होतुः प्रथमतृचः। 'मित्रं वयं हवामहे' (साम० ७९३-९५) इति मैत्रावरुणस्य द्वितीयतृचः। 'इन्द्रमिद्गाथिनः' (साम० ७९६-९७-९९) इति ब्राह्मणाच्छंसिनः तृतीयतृचः। 'इन्द्रे अग्ना नमः' (साम० ८००-८०२) इत्यच्छावाकस्य चतुर्थतृचः। इति चतुर्णामाज्यानां तृचाः। सामानि—गायत्राणि। स्तोमः—सप्तदशः। विष्टुतिः—द्र० सप्तदश स्तोमविष्टुति— द्र० आ०क० २।३।२ वरदराजः)।

**स्वरसाम्नां द्वितीयेऽहनि प्रा० सवने आज्यशस्त्र प्रउगशस्त्र—** (हौ०) अभिप्लवषडहस्य प्रातःसवने आज्यप्रउगशस्त्रवद्— द्र०।

**स्वरसाम्नां द्वितीयेऽहनि माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर.... सप्तदशे स्वरसाम्नां द्वितीयेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रीयतृचाः 'पूषा पवस्व' (साम० ८०३-५) इति प्रथमतृचः। 'परीतो षिञ्चता सुतम्' (साम० १३१३-१५) इति द्वितीयतृचः। 'वृषा शोणः' (साम० ८०६-८)। इति तृतीयतृचः। इति माध्यन्दिनपवमानस्य त्रयस्तृचाः। सामानिप्रथमे तृचे गायत्रं सामयौक्ताश्वं साम ( यत् पृष्ठ्यषडहे उत्तमतुष्ठम्) इति द्वे सामनी। द्वितीये तृचे समन्तं साम, दैर्घतमसं साम, आयास्ये द्वे सामनी। तृतीये तृचे पार्थ साम। इति सप्त सामानि। स्तोमः—सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। आ० क० २।३।३।

**स्वरसाम्नां द्वितीयेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयन संवत्सर...सप्तदशे स्वरसाम्नां द्वितीयेऽहनि माध्यन्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयतृचाः—'मत्स्यपायि ते महः' (साम० १४३२-३४) इति होतुः प्रथमतृचः। 'कयानश्चित्र आ' (साम० ६८२-८४) इति मैत्रावरुणस्य द्वितीयतृचः। 'अभि प्र वः' (साम० ८११-१२) इति तृतीयः सामतृचो ब्राह्मणाच्छंसिनः। 'तरोभिर्वो विदद्वसुम्' (साम० ६८७-८९) इति अच्छावाकस्य चतुर्थस्तृचः। इति चत्वारस्तृचाः। सामानिप्रथमे तृचे बृहत्साम, द्वितीये वामदेव्यं साम, तृतीये तृचे अभीवर्तः ब्रह्मसाम; चतुर्थे कालेयं सामेति पृष्ठ सामानि। स्तोमः सप्तदशः। विष्टुतिः—द्र० सप्तदशस्तोमविष्टुति-। आ०क० २।३।४।

**स्वरसाम्नां द्वितीयेऽहनि मरुत्वतीयशस्त्र—** (हौ०) द्र० अभिप्लवषडहस्य द्वितीयाहर्मरुत्वतीयशस्त्र—।

**स्वरसाम्नां द्वितीयेऽहनि निष्केवल्यशस्त्र—** (हौ०) अभिप्लवषडहातिदिष्टे स्वरसाम्नां द्वितीयेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्य-

शस्त्रस्य स्तोत्रियस्तृचः—'मत्स्यपायि ते महः' (ऋ० १ ।१७५;१-३) आ०श्रौ० ८ ।५ ।१२) । अनुरूपतृचः—'स्वरन्ति त्वा सुते' (ऋ० ८ ।३३ ।२) इत्येका बृहती, 'आ तेऽवो वरेण्यम्' (ऋ० ५ ।३५ ।३-४) इति द्वे' अनुष्टुभौ (आ०श्रौ० ८ ।५ ।१४ नारायणः) । शिष्टमभिप्लवषडहस्य द्वितीयाहर्निष्केवल्यवद्— **द्र०** ।

**स्वरसाम्नां द्वितीयेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टेमातिरात्रविकृतौ अयनसंवत्सर... सप्तदशे स्वरसाम्नां द्वितीयेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रस्य तृचाः—'यस्ते मदो वरेण्यः' (साम० ८१५-१७) इति प्रथम तृचः । 'पवस्व मधुमत्तम' (साम० ६ ।९२-९३) इति द्वितीयः सामतृचः (प्रगाथतृचः) । 'इन्द्रमच्छ' (साम० ६ ।९४-९६) इति तृतीयतृचः । 'अयं पूषारयिः' (साम० ८१८-२०) इति चतुर्थतृचः । 'वृषा मतीनां पवते' (साम० ८२१-२३) इति पञ्चतृचः । इति पञ्चतृचाः । सामानि—प्रथमे तृचे गायत्रं साम, हविष्मतं साम इति द्वे सामनी । द्वितीयतृतीययोः एकर्चयोः शङ्कुसुज्ञाने द्वे सामनी । चतुर्थे तृचे गौरीवितं साम, अथवा तिसृषु गौरीवितमेकस्याम्, क्रौञ्चमेकस्याम्, आसितमेकस्याम्, स्वारं तिसृषु । पञ्चमे तृचे ऐडं यामं साम । स्वारं यदि विकल्पयेत् । इति सामानि । स्तोमः—सप्तदशः । विष्टुतिः—**द्र०** सप्तदशस्तोमविष्टुति— । आ०क० २ ।३ ।६ ।

**स्वरसाम्नां द्वितीयेऽहनि वैश्वदेवाग्निमारुतशस्त्र—** (हौ०) अभिप्लवषडहस्य तृतीयसवने वैश्वदेवाग्निमारुतशस्त्रवद् **द्र०** ।

**स्वरसाम्नां द्वितीयेऽहनि अग्निष्टोमस्तोत्र** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...द्वितीयेऽहनि अग्निष्टोमसंस्थे तृतीयसवने 'यज्ञायज्ञा वो अग्नये' (साम० ७०३-५) इत्यस्मिन् तृचे यज्ञायज्ञीयाख्यं साम अग्निष्टोमसामोच्यते । **द्र०** आ०क० २ ।३ ।६ ।

**स्वरसाम्नां द्वितीयेऽहनि उक्थस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अय संवत्सरसत्रप्रकरणे गवामयने सात्रिकेष्वहःसु सप्तदशे स्वरसाम्नां द्वितीयेऽहनि उक्थ्यसंस्थपक्षे तृतीयसवने उक्थस्तोत्राणि वक्तव्यानि । तत्र उक्थ्यसंस्थायां होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां मैत्रावरुणस्य 'एह्यू षु' (साम० ७०५-७) इति तृचे साकमश्वं प्रथममुक्थस्तोत्रं, ब्राह्मणाच्छंसिनः 'वयमु त्वामपूर्व्य' (साम० ७०८-९) इति सामतृचे सौभरं द्वितीयमुक्थस्तोत्रं,'अच्छावाकस्य 'अधाहीन्द्र' (सा० ७ ।१०-१२) इति तृचेनार्मेधं तृतीयमुक्थस्तोत्रमिति त्रीणि नित्यान्युक्थस्तोत्राणि भवन्ति (तु०—आ० क० पृ० ५३) । अत्रोक्थ्यसंस्थे द्वितीये स्वरसाम्नि तु मैत्रावरुणस्य औशनं साम, साकमश्वं साम, ब्राह्मणाच्छंसिनः सौभरं साम, अच्छावाकस्य आष्ट्रादंष्ट्रं सामेति त्रीण्युक्थानि उक्थस्तोत्राणि क्लृप्यन्ते । स्तोमः—सप्तदशः । विष्टुतिः—**द्र०** सप्तदशस्तोमविष्टुति- ।(आ०क० २ ।३ ।७) ।

**स्वरसाम्नां तृतीयेऽहनि बहिष्पवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सरसत्रप्रकरणे गवामयने अभिजितोऽनन्तरं स्वरसाम्नां तृतीये सात्रिकेष्वहःसु अष्टादशेऽहनि प्रातःसवने बहिष्पवमानस्तोत्रस्य स्तोत्रीयास्तृचाः—

'दविद्युतत्या रुचा' (साम० ६५४-५६) इति प्रथमतृचः। 'एत असृगमिन्दवः' (साम० ८३०-३२) इति द्वितीयतृचः ('राजा मेधाभिरीयते) साम० ८३३-३५) इति तृतीयतृचः। 'पवस्व वृष्टिमा सु' (साम० १४३५-३९) इति पञ्चर्चः। 'पवमानस्य ते कवे' (साम० ६५७-५९) इति पञ्चतृचः। इति बहिष्पवमानस्तोत्रतृचाः। सामगायत्रम्। स्तोमः—सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। (आ० क० २।४।१)।

**स्वरसाम्नां तृतीयेऽहनि आज्यस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर.......अष्टादशेऽहनि तृतीयसवने चतुर्णामाज्यस्तोत्राणां प्रातःसवने स्तोत्रीयास्तृचाः—'अग्निनाऽग्निः समिध्यते' (साम० ८४४-४६) इति होतुः प्रथमतृचः। 'मित्रं हुवे पूतदक्षम्' (साम० ८४७-४९) इति मैत्रावरुणस्य द्वितीयतृचः। 'इन्द्रेण सं हि' (साम० ८५०-५२) इति ब्राह्मणाच्छंसिनस्तृतीयतृचः। 'ता हुवे ययोरिदम्' (साम० ८५३-५५) इत्यच्छावाकस्य चतुर्थतृचः। इति चत्वार आज्यस्तोत्रतृचाः। सामानि गायत्राणि। स्तोमा-सप्तदश। विष्टुतिः—द्र० सप्तदशस्तोमविष्टुति—। (आ०क० २।४।२)।

**स्वरसाम्नां तृतीयेऽहनि प्रातःसवने आज्यप्रउगशस्त्र—** अभिप्लवषडहस्य तृतीयेऽहनि प्रातः सवने आज्य प्रउगशस्त्रवद् — द्र०।

**स्वरसाम्नां तृतीयेऽहनि माध्यन्दिनपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर... अष्टादशे स्वरसाम्नां तृतीयेऽहनि माध्यन्दिनसवने माध्यन्दिनपवमानस्य स्तोत्रीयास्तृचाः—'उच्चा ते जातमन्धसः' (साम० ६७२-७४) इति प्रथमतृचः। 'अभिसोमास आयवः' (साम० ८५६-५८) इति द्वितीयतृचः। 'तिस्रो वाचः' (साम० ८५९-६१) इति तृतीयतृचः। इति त्रयस्तृचाः। सामानि—प्रथमे तृचे गायत्रं साम, आमहीयवं सामेति द्वे सामनी। द्वितीये तृचे पौरुमद्गं साम, गौतमं साम, आन्तरिक्षं साम, अग्नेस्त्रिणिधनं सामेति चत्वारि सामानि। तृतीये तृचे अङ्गिरसां सक्रोशः सामेति माध्यन्दिनपवमानसामानि। स्तोमः—सप्तदशः। विष्टुतिः—द्र० सप्तदशस्तोमविष्टुति—। (आ०क० २।४।३)।

**स्वरसाम्नां तृतीयेऽहनि पृष्ठस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...अष्टादशे स्वरसाम्नां तृतीयेऽहनि माध्यन्दिनसवने चतुर्णां पृष्ठस्तोत्राणां स्तोत्रीयास्तृचाः—'प्रत्यस्मै पिपीषते' (साम० १४४०-४३) इति होतुः प्रथमतृचः। 'कयानश्चित्र अ) (साम० ६८२-८४) इति मैत्रावरुणस्य द्वितीयतृचः। 'वयं ध त्वा' (साम० ८६४-६५) इति ब्राह्मणाच्छंसिनस्तृतीयतृचः। 'तरोभिर्वोविदद्वसुम्' (साम० ६८७-८८) इत्यच्छावाकस्य चतुर्थतृचः। इति चत्वारस्तृचाः। सामानि—प्रथमे चतुर्ऋचे तृतीयामुद्धृत्य रथन्तरं साम। रथन्तरस्य प्रथमे अनुष्टुभौ, बृहत्युत्तमा (इति वरदराजः) द्वितीये तृचे वामदेव्यं साम। तृतीये तृचे अभीवर्तः ब्रह्मसाम। चतुर्थे तृचे कालेयं सामेति सामानि। स्तोमः—सप्तदशः। विष्टुतिः— द्र० सप्तदशस्तोमविष्टुति—। (आ० क० २।४।४)।

**स्वरसाम्नां तृतीयेऽहनि मरुत्वतीयशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर... अष्टादशे स्वर-

साम्नां तृतीयेऽहनि माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रं अभिप्लवषडहस्य माध्यन्दिनसवने होतुर्मरुत्वतीयशस्त्रवद् द्रष्टव्यम्।

**स्वरसाम्नां तृतीयेऽहनि निष्केवल्यशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर... अष्टादशे स्वरसाम्नां तृतीयेऽहनि माध्यन्दिनसवने होतुर्निष्केवल्यशत्रस्य स्तोत्रियस्तृचः—'एमेनं प्रत्येतन' (ऋ० ६।४२।२-४ आ०श्रौ० ८।५।१२)। अनुरूपस्तृचः—'कण्वेभिर्धृष्णवा' (ऋ० ८।३३।३) इत्येका बृहती, 'त्वं तमिन्द्र मर्त्यम्' (ऋ० ५।३५।५-६) इति द्वे अनुष्टुभौ। आ०श्रौ० ८।५।१४) शिष्टमभिप्लवषडहस्य तृतीयाहर्वद् द्रष्टव्यम्। निष्केवल्यशस्त्रस्यानुरूपतृचेषु त्रिष्वपि स्वरसामसु पूर्वा बृहत्यः उत्तरा अनुष्टुभो भवन्तीति विशेषोऽवधेयः। तदुक्तम्—'वयं घ त्वा सुतावन्त इति तिस्रो बृहत्यो यस्ते साधिष्ठोऽवस इति षडनुष्टुभ इत्यनुरूपाः' इति (आ०श्रौ० ८।५।१४ नारायणः)।

**स्वरसाम्नां तृतीयेऽहनि आर्भवपवमानस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूते ज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...अष्टादशे स्वरसाम्नां तृतीयेऽहनि तृतीयसवने आर्भवपवमानस्तोत्रस्य स्तोत्रीयतृचः—'तिस्रो वाच उदीरते' (साम० ८६९-७१) इति प्रथमतृचः। 'आ सोता परिषिञ्चत' (साम० १३९४-९५) इति द्वितीयः सामतृचः। 'सखाय आ निषीदित' (साम० ११५७-५९) इति तृतीयतृचः। 'सुतासो मधुमत्तमाः' (साम० ८७२-७४) इति चतुर्थतृचः। 'पवित्रं ते विततं' (साम० ८७५-७७) इति पञ्चमतृचः। इति पञ्च तृचाः। सामानि—प्रथमे तृचे गायत्रं साम, संहितं साम, क्षुल्लकवैष्टमं सामेति त्रीणि सामानि। द्वितीयतृतीय-तृचयोः वाचः साम, सुज्ञानं साम दैवो दासं वेति त्रीणि सामानि। चतुर्थे तृचे गौरीवितं साम तिसृषु। अथवा गौरीवितमेकस्याम्, आन्धीगवमेकस्याम्, त्वाष्ट्रीसामैकस्याम्। स्वारं तिसृषु इति चत्वारि सामानि। पञ्चमे तृचे अरिष्टं साम। स्वारं सामराजं यदि विकल्पयेत्। इति सामानि। स्तोमः— सप्तदशः। विष्टुतिः—द्र० सप्तदशस्तोमविष्टुतिः—। (आ० क० २।४।५)।

**स्वरसाम्नां तृतीयेऽहनि वैश्वदेवाग्निमारुतशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर..अष्टादशे स्वरसाम्नां तृतीयेऽहनि तृतीयसवने वैश्वदेवाग्निमारुतशस्त्रे अभिप्लवषडहस्य तृतीयेऽहनि तृतीयसवने वैश्वदेवाग्निमारुतशस्त्रवद् द्रष्टव्यः।

**स्वरसाम्नां तृतीयेऽहनि अग्निष्टोमस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर...अष्टादशे स्वरसाम्नां तृतीयेऽहनि तृतीयसवने 'यज्ञायज्ञा वो अग्नये (साम० ७०३-५) इति तृचे यज्ञायज्ञीयाख्यमग्निष्टोम साम अग्निष्टोमस्तोत्रमुच्यते। (आ०क० २।४।६)।

**स्वरसाम्नां तृतीयेऽहनि उक्थस्तोत्र—** (औ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर....अष्टादशे स्वरसाम्नां तृतीयेऽहनि उक्थ्यसंस्थपक्षे तृतीयसवने उक्थस्तोत्राणि वक्तव्यानि। (तत्र उक्थ्यसंस्थायां होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां मैत्रावरुणस्य 'एह्युषु' (साम० ७०५-७) इति तृचे साकमश्वं प्रथममुक्थस्तोत्रं, ब्राह्मणाच्छंसिनः

'वयमु त्वा पूर्वा' (साम० ७०८-९) इति सामतृचे सौभरं द्वितीयमुक्थस्तोत्रं, 'अच्छावाकस्य 'अधा हीन्द्र' (साम० ७।१०-१२) इति तृचे नार्मेधं तृतीयमुक्थस्तोत्रमिति त्रीणि नित्यानि उक्त्थस्तोत्राणि भवन्ति। (तु०—आ०क० पृ० ५३)। अत्रोक्थ्यसंस्थे तृतीये स्वरसाम्नि तु मैत्रावरुणस्य मैत्रावरुणस्य प्रमँहिष्ठीयं साम, ब्राह्मणाच्छंसिनः हारिवर्णं साम, अच्छावाकस्य उद्वंशीयं सामेति त्रीण्युक्थानि उक्थस्तोत्राणि भवन्ति। स्तोमः— सप्तदशः । विष्टुतिः — द्र० सप्तदशस्तोमविष्टुति— (आ० क० २।४।७)।

**स्वरसाम्नां स्तोम**—(औ०) सोमयज्ञेषु पञ्चविंशतेः सात्रिकाणामह्नां मध्ये षोडशसप्तदशाष्टादशानि त्रीण्यहानि स्वरसामान उच्यन्ते तेषां प्रथमद्वितीयतृतीयानामावृत्त्या षट्सु सप्तदश स्तोमा भवन्ति ते स्तोमाः शिथिला मा भूवन्निति सप्तदशानां अधोभागे सर्वैः स्तोमैस्त्रिवृत्पञ्चदश सप्दशैकविंशत्रिणवत्रयस्त्रिंशाख्यैस्तान् परिरक्षन्ति। तथा स्तोमानामुपरिभागे सर्वैः पृष्ठै रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामाख्यैः पृष्ठस्तोत्रैः परिरक्षन्ति। तदर्थं गवामयने स्वरसाम्नामधस्तात् (पूर्वस्मिन् दिवसे) सर्वस्तोमयुक्तमजिदाख्यमहरनुष्ठेयम्। तथा तेषामुपरिष्ठात् सर्वपृष्ठ-स्तोत्रयुक्तं विश्वजिदाख्यमहरनुष्ठेयमिति विशेषोऽनुसन्धेयः। (तु०—ऐ० ब्रा० ४।१९)। सर्वे (स्वरसामानः) सप्तदशाः इति।(तु०—आ० क० २।४।८ वरदराजः)।

**स्वरु**—(सा०, आध्व) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपतक्षणकाले प्रथमं पतितं शकलं यूपे रशनायां गूह्यमानं स्वरूपदवाच्यम् (तु०—श्रौ०प०नि० पृ० १२६, का० श्रौ० १।७।१६ टि० विद्याधरः)। तेन पशुमनक्तीति विशेषः।

**स्वरुहोम**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिकेनिरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु पशुषु च यजमानस्य अनुयाजत्यागान्तेऽध्वर्योः क्रमेण प्रथमादीनामेकादशानामनुयाजानामनुमन्त्रणानन्तरं प्रतिप्रस्थाता बर्हिषि हस्तौ निमार्ष्टि— 'अद्भ्यस्त्वौषधीभ्यः' इत्यादि मन्त्रेण। 'तनूत्वचम्' इत्यादि मन्त्रेण यजमान औपयाजिकं धूममन्वीक्षते। अध्वर्युरुदङत्याक्रम्य जुह्वां स्वरूमवधाय उत्तरवेदेः पुरस्तात् प्रत्यङ्मुखस्तिष्ठन् 'दिवं ते धूमो गच्छतु' इत्यादिमन्त्रेण जुहोति। यजमानः 'वायवे इदमिति त्यागं पठति। अयं स्वरुहोम उच्यते। द्र० श्रौ० प० नि० पृ० १३९, अनुयाजयाग— अनुयानुमन्त्रण—।

**स्वरूपगूहन**— (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यूपपरिव्यण प्रैषानन्तरं 'परिवीः' इत्यृचा (यूपं) परिव्ययति। यूपसमीपमारभ्य परस्परसंलग्नं कृत्वा अन्तं प्रवेश्य कुशलक्रियया ग्रन्थिं कृत्वा रशनाग्रं निर्भिद्य रशनामूलं प्रवेश्याग्निष्ठायामस्त्र्यां मध्यमं रशनागुणं निर्भिद्य तत्र स्वरूं प्रवेशयति (उपगूहति)- 'अन्तरिक्षस्य' इत्यादिमन्त्रेण। इदं स्वरूपगूहनमुच्यते। द्र० श्रौ०प०नि० पृ० १२६। यूपरिव्यणप्रैष—।

**स्वर्ग**— (सा०) स्वर्गः दुःखमिश्रितत्वाभावात् निरतिशयसुरवत्वाच्च सर्वपुरुषाणामिष्टः। 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। आभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्।' इति स्वर्गस्तु जन्मान्तरे एव। स हि

निरतिशया प्रीतिः कर्मानुरूपा च इति न शक्या इह जन्मनि अनुभवितुम्। यतः अस्मिन् लोके क्षणे क्षणे सुखदुःखे अनुभवन्ति (जनाः)। द्र० मी०को० पृ० ४४६८।

**स्वर्गयाण**— (सा०) ये केचन पन्थान इष्टिरूपाः स्वर्गस्य प्रौढमार्गाः याश्च सुतयस्तन्मार्गावयवरूपा आहुतयः सन्ति ता द्विविधा ऊतय इत्युच्यन्ते। त एवैते द्विविधा अपि मार्गा यजमानस्य स्वर्गयाणाः स्वर्गप्रापका भवन्तीति स्वर्गयाणा इच्युच्यन्ते (ऐ० ब्रा० सा० १।२)। द्र० आहु (हू) ति—।

**स्वस्तिवाचन**—द्र० पुण्याहवाचन—। श्रौ०प० नि० पृ० ४६-४९।

**स्वस्त्ययन**— (सा०) अनुत्पन्नारिष्ट शान्त्युत्पत्तौ क्रियमाणं कर्म स्वस्त्ययनमुच्यते। (तु०—विध० स० टि० ३।६८)।

**स्वादुष्किलीया प्रतिगर** — (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैका-हाहीनसत्रे तृतीयसवने आग्निमारुतशस्त्रे स्वादुष्किलीयासु चतसृषु ऋक्षु मध्ये आह्वानं (आहावं) कृत्वा 'मदामो दैव, मोदामो दैवोम्' इति मदि धातुयुक्तौ प्रतिगरणमन्त्रौ स्वादुष्किलाया, प्रतिगरौ भवतः। (तु०— आ०श्रौ० ५।२०।६)। द्र० प्रतिगर—।

**स्वाध्याय**— (सा०) १. अधीयते इति कर्म व्युत्पत्त्या शाखावाच्यध्यायशब्दाभ्युपगमेन स्वश्चासौ अध्यायश्च इति विग्रहाश्रयणात् स्वाध्यायविधितः एव प्रतिचरणं शाखाव्यवस्थासिद्धिः। २. स्वाध्यायः 'येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन् न रिष्यति' इति स्मृत्यालोचनया, काठकादिसमाख्याऽऽलोचनया, 'स्वाध्याया' इत्यालोचनया च पितृपितामहादिपरम्परात्मकसंप्रदायगतशाख्याऽध्ययनम्। अतः स्वाध्यायत्वं स्वशाखात्वम्। स्वत्वञ्च परंपरया अध्ययनविषयत्वं अनुष्ठानविषयत्वं च। तेन वेदत्रयान्तर्गतैकैकशाखापरः स्वाध्यायशब्दः। तेनाध्ययनानुष्ठानयोः स्वपरपरापरिगृहीताध्ययनानुष्ठानविषयोपपत्तिः संपद्यते। द्र० मी०को० पृ० ४४७७-७८।

**स्वाध्यायधर्माणां यज्ञकर्मण्यप्रयोग**— (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे प्राणविरामः, अपक्रामन्तु गर्भिण्यः, तृणानि पाणौ कृत्वा सूक्तस्याध्ययनम्, अनध्यायश्चेत्येते प्राकृतस्वाध्यायगता धर्मा यज्ञकर्मणि न प्रयुज्यन्ते। (तु०—आ०श्रौ० १।१।१ देवत्रातः)। वैतानिके च कर्मणि ये धर्मास्ते प्राकृत स्वाध्याये न प्रवर्तन्ते इति विशेषोऽवधेयः।

**स्वाध्यायप्रयोग**—(सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे नित्यं (सततं) स्वशाखीयमन्त्रब्राह्मणसूत्राध्ययनं स्वाध्यायप्रयोग उच्यते। तच्च द्वादशाहिकदशरात्रस्य दशमेऽविवाक्येऽहनि सर्व मन्त्रादिकर्म-अविवाक्यं वाचं यमैः (मौनिभिः) क्रियते। तत्र यदि कस्यचित् कर्तुः स्वपदार्थकरणे अज्ञानसंशयविपर्यासाः स्युः तदानीं बहिर्वेदि स्थित्वा तस्य अज्ञानाद्यपनयनार्थं अध्ययनेन अन्येन स्वाध्यायप्रयोगः कर्तव्यः। अर्थात् तत्र कर्मणि संशयश्चेत् तद्विधायकशास्त्रं ब्राह्मणं प्रयोगशास्त्रं वा पठितव्यम्। मन्त्रे चेन्मन्त्रः। पठितव्यः। एवं बहिर्वेदि अध्ययनेन यदि संशयादिर्नास्येयात् तदा अन्तर्वेदि स्थित्वैव पठितव्यमिति केचनोपदिशन्ति। एवमपि संशयो यदि नापेयात् तदा व्यञ्जनेन वोपहितेन वा प्रतिरुद्धोऽर्थः कर्म वा साधयितव्यम्। तत्र

व्यञ्जनं नाम व्यज्यते सूच्यते येन तद्व्यञ्जनम्। उपहितं नाम छलोक्तिः। अर्थात् अन्तर्वेदिस्वाध्यायप्रयोगेणापि तस्यार्थो यदि न सिद्ध्येत्तदा केनचित् सूचकेन शब्देन तदर्थं ब्रूयात् न वाचकेन (पदेन)। अथवा उपहितेन छलोक्त्या वा तस्यार्थः साधितव्यः। तदुक्तम् 'नास्मिन्नहनिकेचित् कस्यचिद् विवाच्यम् अविवाक्यमित्येतदाचक्षते। संशये बहिर्वेदि स्वाध्यायप्रयोगः। अन्तर्वेदीत्येके। न व्यञ्जनेनोपहितेन वाऽर्थः'। (तु०—आ० श्रौ० ८।१२। १०-१३ नारायणः) इति विशेषोऽवधेयः)।

**स्वाध्यायभेद—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे स्वाध्यायो द्विकारः प्राकृतो याज्ञश्च। प्राकृतः समाम्नायः। याज्ञः यज्ञकर्मणि विशेषैः प्रयुज्यते। विशेषाश्च एकश्रुतिप्रणवागूर्वषट्कारावसानान्तराभ्यासाहावादय उच्यन्ते। (तु०— आ० श्रौ० ८।१२।१३ देवत्रातः)। एत एकश्रुत्यादयो विशेष वर्णानुक्रमेण तत्र तत्र द्रष्टव्याः। अन्ये न्यूंखनिनर्दविग्राहत्रिरभ्यासप्रतिगर पच्छःशस्यार्धर्चशस्यर्कशस्य तत्तद्विहारावापपङ्क्तिशंसनादिविशेषाश्च तत्र तत्र द्रष्टव्याः।

**स्वाध्यायवितानयोरेकार्थत्व—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे (अभ्यस्तानि) वैतानिकानि कर्माणि। (अधीतः) स्वाध्यायोऽपि स्वर्गार्थ एव। एवं श्रुतिः—'यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टं भवति।' 'स्तुवच्छसन् द्रविणं सद्य आप' (ऋ० ४।५१।७), 'क ईं नियेमे कतमस्य जग्मतुर्विप्रस्य वा यजमानस्य वा गृहम्' (ऋ० १०।४०।१४), 'समानमु त्यम्' (ऋ० १०।४१।१) इति। एवं क्रतुस्वाध्याययोः सहोपादानात् कर्मभिः स्वाध्यायेन च कृत्स्नवेदोक्तमैहिकमामुष्मिकं च फलमाप्नोति पुरुषः। (आ०श्रौ० १।१।१ देवत्रातः। द्र० २ आपत्ति—।

**स्वाध्यायस्वर—** द्र० - स्वर—।

**स्वाध्यायाध्ययनक्रतुयाग—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. 'अथापि विज्ञायते—स यदि तिष्ठन् व्रजन्नासीनः शयानो वा यं यं क्रतुमधीते तेन तेन हास्य क्रतुनेष्टुं भवति' इति क्रत्वर्थस्वाध्यायेनापि 'क्रतव इष्टा भवन्ति। तत्फलं च लभते। (आ०गृ० ३।४।६)। द्र० स्वाध्यायप्रयोग—। २. योऽर्थी स्वत्यागेन ऋत्विजः परिक्रीणीते, यश्च स्वं प्रदेयं त्यजति स स्वामी। स एव हि फलेन संवध्यते। य उत्सर्गं करोति स फलवान् भवति। द्र० मी०को० पृ० ४४७९। इति विशेषोऽवगन्तव्यः। न तु यज्ञकर्मणि वृतः परिक्रीतः स्वाध्यायवान् ऋत्विक् फलवान् भवति। द्र० मी०को० पृ० ४४७९।

**स्वामिकर्मन्—** द्र० याजमानकर्मन्—।

**स्वाहा—** (सा०) इष्टिपशुसोमयज्ञेषु दर्वीहोमेषु च सर्वत्र होममन्त्राणामनुष्ठानकाले अन्ते स्वाहा शब्दः प्रयुज्यते। यत्र तु मन्त्रस्यादौ मध्येऽन्ते वा स्वाहाकारः पठितस्तत्र पुनः स्वाहाकारो न पठितव्यः। (तु०—आ०श्रौ० १।११।१० सिद्धान्ती)। एवं च देवतोद्देशेन द्रव्यत्यागात्मको यः कश्चन व्यापारो यागो होमोऽभ्याधानं बलिहरणादयो वा मन्त्रेण साध्यन्ते तत्र सर्वत्र स्वाहाकारः कर्तव्यः इति विशेषोऽवधेयः। (तु०—आ०श्रौ० १।११।११ नारायणः)।

**स्वाहाकारवषट्कारयोर्विवेक—** (सा०) इष्टिपशुसोमयज्ञादिषु 'स्वाहाकारेण वषट्कारेण वा देवतायै हविर्दीयते' इति श्रुत्या ह्यविशेषेणोभयोर्दानार्थत्वं तथापि यजतिदाने

वषट्कार एव रूढ्या विधीयते। स्वाहाकारस्य तु जुहोति। चोदनायां विधानमिति भेदः। (तु०—हि०श्रौ० ३।८।१६-१७ व्याख्या)। तत्र तिष्ठता होमा येषु ते, वषट्कारेण प्रदानं येषु ते, तथा याज्यावन्तः पुरोनुवाक्यावन्तश्च ये ते यजतयः। उपविष्टेन होमो येषु, स्वाहाकारेण प्रदानं येषु ते जुहोतयः (तु०—का०श्रौ० १।२।५-७ विद्याधरः) इति जुहोति धर्मकस्य स्वाहाकारस्य यजति धर्मकस्य वषट्कारस्य च भेदे विशेषोऽवगन्तव्यः।

**स्वाहाकृति, ०ती—** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु उत्तमः। ऐन्द्राग्नप्रकृतिके-निरूढपशुबन्धेऽग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु चोत्तमः एकादशश्च प्रयाजः स्वाहाकृतिशब्देनोच्यते।

**स्वाहाकृतीप्रैष—** (हौ०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च अध्वर्युणा स्वाहाकृतीभ्यः प्रेष्येति प्रेषितो मैत्रावरुणः होतारं प्रेष्यति—'होतायक्षदग्निं स्वाहाऽऽज्यस्य स्वाहा मेदसः स्वाहा स्तोकानां स्वाहा स्वाहाकृतीनां स्वाहा हव्यसूक्तीनाम्। स्वाहा देवा आज्या जुषाणा अग्न आज्यस्य व्यन्तु होतर्यज'। द्र० श्रौ० प०नि० पृ० १४६ श्रौ०को० २. भा० पृ० २००। इत्ययमेकादशस्य प्रयाजस्य प्रैषः स्वाहाकृतीप्रैष इत्युच्यते।

**स्विष्टकृत्—** (सा०) इष्टिपशुसोमयज्ञादिषु १. सर्वस्विष्टकृच्छब्दः। अग्नेः वाचकः। 'स्विष्टं कृतवान् स्विकृत्' इति स्विष्टकरणानि मित्तत्वात् स्विष्टकृदग्निरुच्यते। द्र० मी०को० पृ० ४४८५। २. चातुर्मास्यानां साकमेधपर्वणि गृहमेधीये च 'अग्निं स्विष्टकृतं यजति' इति अग्निः स्विष्टकृत् श्रूयते। द्र० मी०को० पृ० ४४८६।

**स्विष्टकृदर्थकपश्वङ्ग—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु च पशोः 'दोष्णोः पूर्वार्धाद् अग्रे समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनेन' इत्युक्तानि त्रीणि पशोरङ्गानि स्विष्टकृदर्थकानि पश्वङ्गानीत्युच्यन्ते।

**स्विष्टकृदावाहननिगद —** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च 'अग्निं होत्रायावह स्वं महिमानमावह' इति स्विष्टकृत् आवाहनमुच्यते (तु०—षड् गुरुशिष्यः)। एतावत् स्विष्टकृदावाहनार्थम्। 'आ वह जातवेदः' इत्यादिः 'सुयज' यज' इत्यन्तो निगदशेषः। सूत्रे 'आवाह्य' इति वचनात् 'सुयजा यज' इत्यन्त एवावाहन निगदः (तु०—आ०श्रौ० १।३।२२ नारायणः)।

**स्विष्टकृद्धोम—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. पार्वणहोमान्ते अवदानविधिना चरुपुरोडादिहविरवदाय अत्याक्रम्य वषट्कृते अग्नौ ऐशानदेशे जुहोति। सोऽयं स्विष्टकृद्धोम इत्युच्यते। द्र० श्रौ०प०नि० पृ० ३२, चरुपुरोडाशावदान—। २. दर्शपूर्णमासयोः प्रधानहोमनारिष्ट होमानन्तरभावी, प्राशित्रादिभक्षणात् (इडादिभक्षणात्) प्राचीनः पुरोडाशादिद्रव्यकः स्विष्टकृद्धोम उच्यते। स सर्वेषां हविषां शेषेभ्यः कर्तव्यः न तु कस्यचिदन्यतरस्य शेषात्। द्र० मी०को० पृ० ४४८९-९०।

**स्विष्टकृद्याग–** (सा०) इष्टिपशुयागेषु स्विष्टकृद्यागार्थमवदीय मानोभागः स्विष्टकृद्भाग उच्यते। तेन स्विष्टकृद्भागेन ततः पूर्वेषां हविषां संस्कारो भवति। सोमे तु स्विष्टकृतोऽभावात् 'सोमस्याग्ने वीहि' इत्यनुवषट्कार एव स्विष्टकृद्भागो भवति। तदर्थमेव सोमेऽनुवषट्करोति (तु०—ऐ० ब्रा० सा० ३ ।५)। द्र० स्विष्टकृन्निषेधन-।

**स्विष्टकृद्याग–**(सा० आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यागानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र पशुसोमेषु च १. प्रधानयागं सुष्ठु इष्टं करोतीति स्विष्टकृद्याग उच्यते (तु०—का० श्रौ० १ ।६ ।४ टि० विद्याधरः। तत्र यस्माद्धविषः प्रधानयागार्थमवदानं क्रियते अर्थाद् येन हविषा प्रधानयागः इज्यते तस्मादेव स्विष्टकृद्यागार्थमवदानं क्रियते स्विष्टकृदयागस्योपयुक्तहविषः संकारार्थत्वात् इति विशेषोऽवधेयः। २. प्रधानयागानन्तरं प्रधानयागस्य पौषकल्यापादकः स्विष्टकृदग्निदेवताको यागः (आहुतिविशेषः) स्विकृदुच्यते। (तु०—तत्रैव विद्याधरः)। ३. स्विष्टकृद्यागः उपयुक्तहविः संस्कारः। तथापि अंशभेदेनापूर्वफलकत्वम्। मन्त्रपाठः, द्रव्यप्रक्षेपः, देवतोद्देशेन त्यागश्चेति त्रयोंऽशाः। तत्र त्यागेन परमापूर्णोपयुक्तमवान्तरापूर्वं स्विष्टकृद्यागेनोत्पद्यते इति दृष्टादृष्टार्थः स्विष्टकृत्। ४. स्विष्टकृद्यागः प्रधानहविषां संस्कारः न कर्मान्तरम्। द्र० मी०को० पृ० ४४८८-८९।

**स्विष्टकृन्निगद–** (हौ०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. 'स्विष्टकृतं यज' इति श्रुत्वा आगुरं (ये३यजामहे) उच्चार्य देवतामादिश्य निगदं पठित्वा याज्या संज्ञकामृचं पठति। स स्विष्टकृन्निगद इत्युच्यते। द्र० श्रौ०प०नि० पृ० ३२। २. 'ये यजामहेऽग्निं स्विष्टकृतमयाऽग्निरग्नेः प्रिया धामान्ययाट् सोमस्य प्रिया धामान्याऽग्नेः प्रिया धामान्ययाट् प्रजापतेः प्रियाऽग्नीषोमयोः प्रिया धामान्ययाडिन्द्राग्नियोः प्रिया धामान्ययाडिन्द्रस्य प्रिया धामान्यषाण्महेन्द्रस्य प्रिया धामान्ययाड् देवानामज्यवानां प्रियाधामानि। यक्षदग्नेर्होतुः प्रिया धामानि यक्षत् स्वं महिमानमायजता मेज्या इषः कृणोतु सो अध्वरा जातवेदाः जुषताँ हविः' इति स्विष्टकृन्निगदः उच्यते। 'निगदं पठित्वा 'अग्ने यदद्य विशो अध्वरस्य होतः' (ऋ० ६ ।१५ ।१४) इति याज्यां पठति। अत्र निगदे षष्ठ्यन्तं देवतापदं ततः परं प्रियः धामानीति पद द्वयं सन्तनोतीति विशेषोऽवगन्तव्यः। (तु०—आ०श्रौ० १ ।६ । ३-५ नारायणः श्रौ०को० १ भा० पृ० २१२)।

**स्विष्टकृन्निषेध–**(सा०) इष्टिपशुसोमेषु प्रधानहविषः शेषात् स्विष्टकृद्यागः क्रियते। यत्र सर्वहुते प्रधाने हविषः शेषाभावस्तत्र स्विष्टकृत् न क्रियते। (तु०—आ०गृ० ४ ।९ ।४२)। तत्र सोमयागे घर्म (प्रवर्ग्य) यागे वाजिनयागे च स्विष्टकृदर्थमवदानं न क्रियते। तदुक्तम्—'त्रयाणां वै हविषां स्विष्टकृते न समवद्यन्ते सोमस्य घर्मस्य वाजिनस्य' इति 'ऐ० ब्रा० १ ।२२)। तत्र सोमो वल्ली रसः। घर्मः प्रवर्ग्यहविः। वाजिनमामिक्षानुनिष्पादि नीरमिति सायणः।

**स्विष्टकृद्याज्यानुवाक्या–** (हौ०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु अन्यत्र च यत्र स्विष्टकृद् भवति विशेषवर्जं स्विष्टकृतो याज्यानुवाक्याः संयाज्या विराजश्चोच्यन्ते। तासां स्विष्टकृद् याज्यापुरोनुवाक्यानां संयाज्या

विराट् चेति संज्ञा भवतीत्याशाः। (तु०—आ०श्रौ० २।१।३०)। द्र० संयाज्या—।

## ह

**हव—** (सा०) हूयते अत्रेति हवो यज्ञ इत्युच्यते।

**हवनपारायण—** (सा०) स्वाध्याये ब्रह्मयज्ञप्रकरणे १. हवनार्थं यज्ञार्थं क्रियमाणं पारायणं हवनपारायणमुच्यते। यद्वा हवनसहितं पारायणं हवनपारायणमुच्यते। पारायणं नाम संपूर्णग्रन्थपाठः। 'वेदानधीत्य वेदौ वा वेद वापि यथाक्रमम्' इत्यत्र वेदमिति एकवेदपक्षे पितृपितामहादिपरंपराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य स्वाध्यायः स्वकीयशाखारूपेण स्वाध्यायेन पठितव्य इति। 'स्वाध्यायोऽध्येतव्यः' (ग्रहणाध्ययनं ब्रह्मयज्ञाध्ययनं च स्वाध्यायः)। इति स्वशब्दः समाम्नातः (तु०—तै० आ० २।१५, ऋ० सा०भा० भूमिका० पृ० १८)। द्र० स्वाध्याय—।

**हविस्—** (सा०) इष्टिपशुसोमादियज्ञेषु १. प्रयोक्तव्यं हूयते इति हविर्होमयोग्यं द्रव्यं हविरुच्यते। तच्च चरुपुरोडाशाज्यादि सामान्येन। २. अत्तुं योग्यं द्रव्यं हविः। ३. तद्धितप्रत्ययान्तेन देवतानाम्नाऽऽम्नातं चरुपुरो- डाशपशुपय आदि द्रव्यं हविरुच्यते। ४. व्रीहविः यवा वा हविः। यत्र हविरिति श्रूयते तत्र व्रीहयो यवा वा उपादेयाः। तदुक्तम्-'व्रीहीन् यवान् वा हविषि' (तु०—का०श्रौ० १।९।१ विद्याधरः। ५. प्रधान हविषामेव हविरिति संज्ञा नाङ्ग हविषाम् (तु०—आ०श्रौ० १।५।३० सिद्धान्ती, ६. अनादिष्टं हविर्व्रीहि यवाः। आदेशादन्यद् ब्रीहियवेभ्यो जानीयात् (तु०—वौ० श्रौ० २४।९ श्रौ०को० १. भा० पृ० ७६२)। ७. अवदीयमानानि हृदयादीनि पश्वङ्गानि हविः। 'वपा पुरोडाशो हविः पशोः प्रदानानि' (आ०श्रौ० ३।४।४) इत्यत्र पश्वङ्गानि हविरुच्यते। ८. 'यदेतानि हवींष्याज्यं धानाः करम्भः परिवापः (लाजाः) पुरोडाशः पयस्या' (ऐ० ब्रा० २।२३) इति हवींष्युच्यन्ते। द्र० हविष्पङ्क्त—। ९. हविः शब्दः यागार्थ- द्रव्यवाची। द्र० मी०को० पृ० ४५००।

**हविः प्रथमावदान—** (आध्व०) इष्टिपशुसोमेषु 'यां देवतां यजेत् तद्धविषः प्रथममवदान अवद्यति'। (आप०श्रौ० ८।१५।२१)।

**हविः शब्दः—** कर्मव्युत्पत्त्या होमयोग्यं द्रव्यं ब्रूते। द्र० मी०को० पृ० ४५०१।

**हविः शेषादिभोजन—** (आध्व०, याज०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रातःसवने पान्नेजनीसहितपत्न्यानयनान्तरं पूर्वया द्वारा निष्क्रम्यापरया द्वारा सदः प्रपाद्य पन्नेजनीरादाय स्वस्य धिष्ण्यस्य पश्चादसञ्चरे उद्गातृदर्शनमार्गे सादयति आग्नीध्रः 'सन्नोऽच्छावाकोऽच्छावाकं सन्नमुपपन्नेजनी रसीषदन्। यजमानः आग्नीध्रे हविः शेषान् भक्षयति। पत्नी स्वशालायां हविष्यम्। इदं हविःशेषान्नभोजनम्। द्र० श्रौ०प०नि० पृ० २८८।

**हविरलङ्करण—** द्र० पाशुकहविरलङ्करण—।

**हविराकार—** (सा०) इष्टिपशुसोमेषु 'औषधं पयः पशुः सोमः आज्यम्' इति पञ्च हविराकारा भवन्ति। द्र० बौ० श्रौ० २४।१ श्रौ०को० १ भा० पृ० ७५९।

**हविरानयनार्थमन्त्र—** द्र० पाशुकहविरानयनार्थमन्त्र—।

**हविष्कृत्—** (सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च पुरोडाशविधौ १. देवानामर्थे या हविः संपादयति अवहननादिना सा यजमानस्य पत्नी हविष्कृदुच्यते। २. या हविः करोति यजमानपत्नी तदाह्वानप्रकाशन समर्थः 'हविष्कृदेहि' इति मन्त्रः हविष्कृदुच्यते। तत्र स कस्याञ्चिच्छाखायां सकृत् पठितः, क्वचिद्, द्विवारं क्वचिच्च त्रिवारम्। 'हविष्कृद् एहि' इति त्रिरवघ्नन्नाह्वयति' इति विशेषोऽवधेयः। **द्र०** मी०को० पृ० ४५०१। अयं हविष्कृदाह्वानमन्त्रः अवहननकाले पठनीयः। स चाह्वानाङ्गं नावघाताङ्गम्। त्रिरभ्यसनीय इति च विशेषोऽवगन्तव्यः। **द्र०** मी०को० पृ० ४५०४।

**हविष्टद्धर्माधिकरण—** (सा०) इष्टिपशुसोमयज्ञेषु 'अथेमे पञ्च हविराकारा औषधं पयः पशुः सोम आज्या' इत्युक्ताः। तत्र औषधस्य (व्रीह्यादेः) धर्मा अवहननादयः। पयसो धर्माः दोहनादयः। पशोर्धर्मा उपाकरणादयः। सोमस्य धर्माः। क्रयाभिषवादयः। आज्यस्य धर्मा विलापनोत्पवनादयः। एवं 'तेषां (पञ्चानां) पृथक् पृथग् धर्माः पृथगधिकरणानि। यथाधिकरणं मन्त्राः दृष्टाः। तान् न मिथः स ॅ सादयेदनादेशात् येन येन तद्धविः संसिध्येत् तेन तेन तत्कुर्यात् तत्तस्याधिकरणम्। उक्तान्यधिकरणानि। औषधेषु तण्डुला व्रीहिभिर्निष्पन्नाः। पृथुकाः चिपिटकाः (चिड़वे भाषायाम्)। लाजाः व्रीहिप्रभवाः। करम्भाः आज्यमिश्रिताः सक्तवः। धानाः भर्जितयवतण्डुलाः। मसूस्यानि एतेनैव नाम्ना उत्तरदेशे प्रसिद्धो धान्यविशेषः (मुसमुसभाषायाम्)। प्रियङ्गु तण्डुलाः। इति हवींषि जानीयात्। (तु०—बौ० श्रौ० २४।१; २ हि० श्रौ० १४।३।४)। **द्र०** हविस्—।

**हविरासादन—** (आध्व०) इष्टियज्ञे, प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च आर्द्रीकरणादधस्तादभ्यञ्जनानन्तरं पुरोडाशं पात्र्यां तूष्णीं निधाय अन्यानपि पुरोडाशादीन्, एवमेवोद्वासनादिविधिना उद्वास्य पात्र्यां निधाय स्रुवमभिपूर्यपुरोडाशयोर्मध्ये स्थापयित्वा सर्वाणि हवींष्यादाय वेदिमध्ये स्रुचां पश्चात् तूष्णीमध्वर्युः सादयति। यजमानस्तु व्याहृतिमन्त्रेण। एतद् हविरासादनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २१ अधस्तादभ्यञ्जन—।

**हविरुद्वासन—** (आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासे तद्विकृतिषु च अन्वाहार्य प्रतिग्रहानन्तरं वेद्यां विद्यमानानां हविःशेषाणां वेद्या बहिः उत्तरतः प्रक्षेपणं हविरुद्वासनमुच्यते। **द्र०** श्रौ०प०नि० पृ० ३५, अन्वाहार्य प्रतिग्रह—।

**हविर्धान—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोम संस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु वेद्यां हविर्धानगृहनिर्मितप्रकारेण अध्वर्युः 'विष्णवे त्वा' इति हविर्धानमभिमृशति। इदं निर्मितं हविर्धानयोः स्थापनार्थं गृहं प्राक् प्रत्यग् द्वारं यत् तदपि हविर्धानं हविर्धानगृहं हविर्धानशकटं चोच्यते। **द्र०** श्रौ०प०नि० पृ० २४२।

**हविर्धानगृह—** **द्र०** हविर्धान—।

**हविर्धानगृहनिर्मितिप्रकार—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु वेदिसाधने स्थूणासूदञ्चौ वंशौ प्रोह्य रराटीबन्धनानन्तरं 'विष्णोः पृष्ठमसि' इति प्रथमं छदिरधिनिदधाति। 'विष्णोः स्नप्त्रे स्थः' इति दक्षिणोत्तरयोर्द्वे छन्दसी युगपन्निदधाति। ततश्चतुर्दिक्षु परिश्रित्य प्राचीं प्रतीचीं च द्वारौ कृत्वा दक्षिणे

द्वार्बाहौ कुशमुष्टिमुपनिगृह्य 'विष्णोः स्यूरसि' इति दर्भेण स्यन्द्यां निक्षिपति। 'विष्णोर्ध्रुवमसि' इति सन्धिं करोति। तं विस्रस्य संप्रेष्यति। अकुर्वन्तो ग्रन्थीन् हस्तकौशलैर्निस्तिष्ठत इति। प्रतिप्रस्थाता एवमुत्तरे द्वार्बाह्वौ अध्वर्यु प्रतिप्रस्थातारौ कुरुतः। सोऽयं हविर्धानगृहनिर्मितिप्रकार उच्यते। **द्र०** श्रौ०प०नि० पृ० २४२, रराटीबन्धन—।

**हविर्धानप्रवर्तन—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानयोः शकटयोः प्राचीनवंशस्य पुरोभागमुपक्रम्योत्तरदेशपर्यन्तं नयनं प्रवर्तनं (भवति)। तदपि 'प्राचीं प्रेतमध्वरम्' इत्युक्तं गृह्णन्तं प्रवर्तयन्ति। इति हविर्धानप्रवर्तनमुच्यते। (तु०—ऐ० ब्रा० सा० १।२९)। **द्र०** हविर्धानशकट—।

**हविर्धानप्रवर्तनप्रैष —** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु उत्तराक्षधुरञ्जनानन्तरं अध्वर्युराज्यस्थाल्यादीनि प्रतिप्रस्थात्रे प्रदाय पत्नीं नयति। होतारं ह्वयन्ति (हूयति)। अथ हविर्धाने हस्ताभ्यां परिगृह्य संप्रैषमाह—'हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहि' इति। सोऽयं हविर्धानप्रवर्तनप्रैष उच्यते। **द्र०** श्रौ०प०नि० पृ० १४२, उत्तराक्षाञ्जन—, हविर्धानप्रोहणप्रैष—।

**हविर्धानप्रवर्तनीया—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानप्रवर्तनप्रैषानन्तरं होता 'युजे वां ब्रह्म' (ऋ० १०।१३।१), 'प्रेतां यज्ञस्य' (ऋ० २।४१।१९-२१', 'यमे इव यजमाने' (ऋ० १०।१३।२), 'अधि द्वयोः' (ऋ० १।८।३), 'विश्वा रूपाणि' (ऋ० ५।८२।२), 'परित्वा गिर्वणः' (ऋ० १।१०।१२) इत्येता अष्टौ सत्यः 'त्रिः प्रथमामन्वाह त्रिरुत्तमां ता द्वादश संपद्यन्ते' इति द्वादश हविर्धानप्रवर्तनीया ऋचोऽन्वाहा इति हविर्धानप्रवर्तनीया उच्यन्ते। **द्र०** ऐ० ब्रा० सा० १।२९।

**हविर्धानप्रोह्यमाणप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानप्रवचनीयाभ्यः पूर्वमध्वर्युः 'हविर्धानाभ्यां प्रोह्यमाणाभ्यामनुब्रूहि' इति होतारमाह। इति प्रैषो हविर्धानप्रोह्यमाणप्रैष उच्यते। (तु०—ऐ० ब्रा० सा० १।२९) **द्र०** हविर्धानप्रैष—।

**हविर्धानमण्डप—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु महावेदिमाने उत्तरवेदेः पश्चात् पदद्वयात्मकप्रक्रमव्यवहिते देशे हविर्धानपूर्वद्वारमध्ये शङ्कुर्देयः। तस्मात् पश्चात् दशसु प्रक्रमेषु पश्चिमद्वारमध्यशङ्कुः। द्वारशङ्क्वोर्दक्षिणे उत्तरे च पदद्वयात्मक पञ्च पञ्च प्रक्रमव्यवहिते देशे शङ्कुचतुष्टयं देयम्। एवं कृते दशप्रक्रममितश्चतुरस्रः चतुस्तम्भो हविर्धानमण्डपः सम्पद्यते। (तु०— का० श्रौ० ८।३ टि० विद्याधरः)।

**हविर्धानशकट—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु हविर्धानप्रवर्त्तनानन्तरं १. हविः सोमरूपं धत्तो धारयत इति हविर्धाने द्वे शकटे (अनसी भवतः)। **द्र०** ऐ० ब्रा० सा० १।२९। २. हविः सोमो धीयते स्थाप्यते ययोस्ते हविर्धाने शकटे। **द्र०** का०श्रौ० ८।३।१९। विद्याधरः। इध्माभ्याधानादि उपयमन्युपनियमनान्तमग्निप्रणयान्तं कर्म कृत्वा पृष्ठ्यां रेखामुभयतो दक्षिणत उत्तरतश्च अरत्निद्वयान्तराले अध्वर्युः स्वकीयमनः वेदिं दक्षिणेन शालाया दक्षिणतश्च

नीत्वा प्रदक्षिणमावर्त्य दक्षिणेनैव प्रत्यानीय अन्तः पात्यसमीपे वेदिमध्ये पृष्ठ्याया उत्तरत प्राङ्गीषं स्थापयति। अपरं प्रतिप्रस्थाता स्वकीयं हविर्धानं वेदेरुत्तरेण शालाया उत्तरेण च नीत्वा प्रदक्षिणमावर्त्य शालाया उत्तरेणैव प्रत्यानीयान्तः पात्य समीपे वेदिमध्ये पृष्ठ्याया उत्तरतः प्राङीषं स्थापयति। अर्थात् तयोर्हविर्धानयोर्मध्ये यद् वर्षीयस्तद्दक्षिणतः स्थापयेत् कनीय उत्तरत इति। तत्र हविर्धानशकटे अवस्थितात् सोमात् द्वादशाहादौ अहर्गणे प्रत्यहं कियांश्चित् सोमभागः उपावहर्तव्यः। तदर्थं पृथक् पृथग्वासः संपाद्यम्। तच्च वासः संपादनं न मानकाले किन्तु उपावहरणकाले एव। उत्तमेऽहनि तु मानवाससैवीपावहरणम्। इति विशेषोऽवगन्तव्यः। ३. हविर्धानं नाम शकटद्वयं ज्योतिष्टोमे महावेद्यां मन्त्रपूर्वकं प्रवर्त्य हविर्धानमण्डपे स्थाप्यते। तत्र हविर्धानशकटद्वये हवींषि आसाद्यन्ते। द्र० मी०को० पृ० ४४९८, हविर्धान—, हविर्धानप्रवर्तन—।

**हविर्धाने वसतीवर्यदिसादन—** द्र० वसतीवर्यादिसादन—।

**हविर्धाने वायव्यादिसादन—** द्र० वायव्यादिसादन—।

**हविर्निर्वपे देवताध्यान—** (सा०) इष्टिपशुसोमयज्ञादिषु यस्यै देवतायै हविर्निरूप्यते तां देवतां मनसा ह वै ध्यायन् निर्वपेत्। (तु०— वै० गृ० १।१४।९-१०)।

**हविर्भेद—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिषु पयः, आज्यम्, दधि, घृतम्, पुरोडाशः, (व्रीहिमयः) चरुः (पक्वतण्डुलौदनः), धानाः (भर्जितयवाः) करम्भः (घृतामिश्राः सक्तवः), पयस्या (आमिक्षा), पशुः (वपाः पशुपुरोडाशः पश्वङ्गानि हृदयादीनि), सोमः (अभिषुतो ग्रहचमसपात्रस्थः सोमवल्लीरसः) इत्यादीनि द्रव्याणि हविषां भेदा भवन्ति। अन्यान्यपि द्रव्याणि स्मृतावुक्तानि—'तौलं दधि पयः सोमो यवागूरोदनं घृतम्। तण्डुलाः फलमापश्च दश द्रव्याण्यकामतः॥ (तु०— का० श्रौ० भूमिका पृ० ३३ विद्याधरः)। द्र० हविराकार—।

**हविर्यज्ञ—** (सा०) १. अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि दाक्षायणयज्ञः कौण्डपायिनामयनं सौत्रामणी वा सप्तमी त एते हविर्यज्ञाः। तेष्वाग्नीध्रीयोऽग्निर्न भवति। तदभावेऽन्वाहार्यपचने (दक्षिणाग्नौ प्रायश्चित्तहोमो भवति भवति। इति विशेषोऽवधेयः (तु०—ऐ० ब्रा० सा० ५।३२)। २. दर्शपूर्णमासौ तद्विकाराश्च हविर्यज्ञा उच्यन्ते।

**हविर्याज्याप्रैषप्रैष—** (आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे पश्वङ्गानुवाक्या प्रैषानन्तरमध्वर्युः अत्याक्रम्याश्राव्य प्रत्याश्रावित आह—'इन्द्राग्निभ्यां छागस्य हविः प्रस्थितं प्रे३ष्य,' अग्नीषोमीये तु अग्नीषोमाभ्यां छागस्य हविः प्रस्थितं प्रे३ष्य' इति। सोऽयं हविर्याज्याप्रैष प्रैष उच्यते। द्र० श्रौ०प०नि० पृ० १३७।

**हविष्कृत्—** (आध्व०, सा०) इष्टिसोमयज्ञेषु हविः करोतीति हविष्कृदिति व्युत्पत्या ऐष्टिकादि कर्मणि अध्वर्योः कार्ये हविः संपादने सहायत्वमात्रेण सोमे तु सवनीयनिर्वापप्रभृति पुरोडाशाद्यासादनन्तस्य हविः संपादनस्य स्वयं कर्तृत्वेन सोमाङ्गभूते प्रवर्ग्याख्ये कर्मणि रौहिणसंज्ञकपुरोडाशाधिश्रयणादिकर्मकर्तृत्वेन च आग्नीध्र एव हविष्कृत्पदवाच्यः। द्र० श्रौ०प०नि० पृ० १७।

**हविष्कृत्—** (सा०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १. पुरोडाशादिहविष्करणे देवानामर्थे या हविः संपादयति अवहनादिना सा यजमानस्य पत्नी हविष्कृदुच्यते । २. या हविः करोति यजमानस्य पत्नी तदाह्वानप्रकाशनसमर्थः 'आह्वानाङ्गभूतः' हविष्कृदेहि' इति मन्त्रो हविष्कृदुच्यते । हविष्कृदेहीति त्रिरबध्नन्नाह्वयति' इत्युक्तम् । स कस्यांचिच्छाखायां सकृत् पठितः, क्वचिद् द्विवारं क्वचिच्च त्रिवारम् । इति विशेषोऽवधेयः । द्र० मीको० पृ० ४५०१ । अयं च हविष्कृदाह्वानमन्त्रः अवहननकाले पठनीयः, आह्वानाङ्गं नावघाताङ्गम्, त्रिरभ्यसनीय इति च विशेषोऽवगन्तव्यः । द्र० मी०को० पृ० ४५०४ ।

**हविष्टद्धर्माधिकरण—** (सा०) इष्टिपशुसोमेषु 'अथेमे पञ्च हविराकाराः— औषधं पयः पशुः सोम आज्यम्' इत्युक्ताः । तत्र औषधस्य (व्रीह्यादेः) धर्मा अवहननादयः । पयसो धर्माः दोहनादयः । पशोः धर्मा उपाकरणादयः । सोमस्य धर्माः क्रयाभिषवादयः । आज्यस्य धर्मा विलापनोत्पवनादयः । एवं 'तेषां (पञ्चानां) पृथक् पृथग्धर्माः पृथक्पृथगधिकरणानि । यथाधिकरणं मन्त्रा दृष्टाः । तान् न मिथः सँसादयेत् । येन येन तद्धविः सँसिध्येत् तेन तेन तत्कुर्यात् तत्तस्याधिकरणम् । उक्तान्यधिकरणानि' । औषधेषु तण्डुला व्रीहिनिष्पन्नाः । पृथुकाः चिपिटकाः (चिड़वे इति भाषायाम्) लाजाः व्रीहिप्रभवाः । करम्भाः आज्यमिश्रिताः सक्तवः । धानाः भर्जितयवतण्डुलाः । मसूस्यानि एतेनैव नाम्ना उत्तरदेशे प्रसिद्धो धान्यविशेषः (मुसमुस) । प्रियङ्गुतण्डुलाः । इति जानीयात् । (तु०— बौ० श्रौ० २४ ।१-२, हि० श्रौ० १४ ।३-४) । द्र० हविस्— ।

**हविष्पङ्क्ति—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु धानाः करम्भः परिवापः (लाजाः) पुरोडाशः पयस्या (आमिक्षा) इति पञ्च हवींषि हविष्पङ्क्तिरित्युच्यते (तु०— ऐ० ब्रा० २ ।२२) । द्र० हविस्— ।

**हस्त—** (सा०) इष्टिपशुसोमयज्ञेषु १. वेदिमाने साधनभूतः पञ्चाङ्गुलियुक्ताग्रभागो हस्त इत्युच्यते । (तु०—मा०सं० १ ।१० महीधरः) । २. हस्तः वितस्तिद्वितयम् । द्र० मी०को० पृ० ४५०४ ।

**हारियोजनग्रह—** (आध्व०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवने १. व्यूहनादिस्रुग्विमोचनान्तं कृत्वा आग्रयणान्निःशेषं गृह्णीयात् (तु०—का० श्रौ० ९ ।५ ।१९) इति द्रोणकलशे आग्रयणाद् यो रसो गृहीतः स एव हारियोजनसंज्ञको ग्रहो भवति । (तु०—का० श्रौ० १० ।८ ।१ विद्याधरः) । २. हारियोजनः ग्रहः अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु तृतीयसवनान्ते (प्रचर्यते) । अत्र प्रहृतेषु परिधिषु संस्रावेणाभिहुत्य हारियोजने न चरन्ति । 'उपयामगृहीतोऽसि हरिरसि हारियोजनं' इति उन्नेता द्रोणकलशेन हारियोजने सर्वं आग्रयणं गृह्णाति । संसाद्य शीर्षन्नधि निधाय उपनिष्क्रम्य 'इन्द्राय हरिवतेऽनुब्रूहि', इन्द्राय हरिवते प्रेष्यं' इत संप्रेष्यति । 'हरिः स्थ हर्योर्धानाः' इति निष्क्रम्य (अग्रतः पृष्ठतश्च पादौ पुनः पुनः कृत्वा) वषट् कृते जुहोति । अनुवषट्कृते हुत्वा हरति भक्षम् । तं सर्वे समशः प्रतिविभज्य उन्नेतरि उपहवमिष्ट्वा 'इष्टय-

जुस्ते देव सोम' इति चिष् चिषाकारं धानाः भक्षयन्तीति विशेषोऽवगन्तव्यः। द्र० मी०को० पृ० ४५०५। ३. हरिरसि हारियोजनः' इति मन्त्रेण गृह्यमाणो ग्रहो हारियोजन उच्यते।

**हिंकार–** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सामगाने सार्वत्रादौ 'हिम्' इति हिंकारस्ताण्ड्यब्राह्मणादिषु विहितः। परं बहोः कालादारभ्य प्रायः सर्वत्र सामगाः 'हुम्' इति हिंकारं कुर्वन्ति। द्र० श्रौ०को० २ भा० पृ० २७८ टि०।

**हिं कृ** (गाने शंसने च) —(सा०) हिंकरोति गायति। हिंकृत्य गायति, हिंकृत्य शंसतीति।

**हिरण्य–** (सा०) हिरण्यमश्मनां तेजः। हिरण्यमाज्यधर्मः तेजस्त्वात् द्र० मी०को० पृ० ४५०५।

**हुताद्–** (सा०) इष्टिपशुसोमयज्ञादिषु ब्राह्मणा आर्त्विज्यसद्भावाद् हुतशेषमदन्ति भक्षयन्तीति हुतादो ब्राह्मणा भवन्ति।

**हृदयशूल–** (सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च यस्मिन् शूले पशुहृदयं प्रोतं भवति तत् हृदयशूलमित्युच्यते। द्र० श्रौ०प०नि० पृ० १२१।

**हृदयशूलोपगूहन–**(आध्व०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च समिष्टयजुर्होमविष्णुक्रमादिव्रतविसर्गानन्तरमध्वर्युः स्फ्यमुदपात्रं हृदयशूलं चादाय 'एहि यजमान' इति यजमानमामन्त्र्य पत्न्या सर्वैर्ऋत्विग्भिश्च सह अन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रामति। अध्वर्युरग्रेण स्फ्येनोद्धृत्यावोक्ष्य शुष्कार्द्रयोः सन्धौ हृदयशूलमुपगूहति। सर्वे 'शुगसि तमभिशोच' इत्यादिमन्त्रं पठन्ति। इदं हृदयशूलोपगूहनमित्युच्यते। द्र० श्रौ०प०नि० पृ० १४०।

**हृदयाभिमर्शन–** (याज०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च आत्माभिमर्शनानन्तरं दर्भं निरस्याप उपस्पृश्य स्वहृदयं मन्त्रेणाभिमृशति। तदेतत् हृदयाभिमर्शनमित्युच्यते। द्र० श्रौ०प०नि० पृ० ४१।

**होतुः शस्त्र–**(हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होतुः प्रातःसवने आज्यप्रउगे द्वे शस्त्रे, माध्यन्दिनसवने मरुत्वतीयनिष्कवल्ये द्वे शस्त्रे, तृतीयसवने वैश्वदेवाग्निमारुते द्वे शस्त्रे इति षट् शस्त्राणि भवन्ति। तदेवं द्व्युक्थो होता द्वे द्वे उक्थे शस्त्रे यस्यासौ इति द्व्युक्थ उच्यते। ज्योतिष्टोमातिरात्रस्य चतुर्थ्यां षष्ठ्यां वा सोमसंस्थायामतिरात्रे तृ० सवने त्रिषु रात्रिपर्यायेषु होतुराद्यानि त्रीण्यन्यानि शस्त्राणि च भवन्ति। द्वादशाहविष्कृतो गवामयने पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने च होतुः नामानेदिष्ठाख्यमेकं शिल्पशस्त्रमन्यच्च भवतीति विशेषोऽवधेयः।

**होतुः शस्त्रपरिधानीया –** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होता निविद्धानीयसूक्तस्य उत्तमया (अन्तिमया) ऋचा शस्त्रं परिदधाति शस्त्रसमापनं करोतीति सा ऋक् होतुः शस्त्रपरिधानीयोच्यते। द्र० परिधानीया–, अग्निष्टोमे शस्त्रपरिधानीया–, अहीनपरिधानीया-, ऐकाहिकपरिधानीया—।

**होतुर्देवताध्यान—** (हौ०, सा०) इष्टिपशुसोमेषु अध्वर्युयां देवतामुद्दिश्य हविर्गृह्णाति तां देवतां वषट्करिष्यन् वषट्कारायोद्युक्तः सन् संध्यायेत् = मनसा देव तद्गुणविशिष्टां देवतामूर्त्तिं वा सम्यगनुसन्धाय पश्चात् वषट् कुर्यादित्यर्थः। इदं होतुष्टव्यदेवताध्यानमुच्यते।

**होतुस्तायमानरूप—** द्र० तायमानरूप—।

**होतृ—**(सा०, हौ०) इष्टिपशुसोमयज्ञेषु १. देवानामावाहकः (अमुमावहेति), याज्यानुवाक्ययोर्वक्ता होता भवति। आङ्पूर्वस्य ण्यन्तस्य वहतेरिदं रूपं न जुहोतेः (तु०—ऐ० ब्रा० सा० १।२)। २. हौत्रमित्यृग्वेदस्य समाख्या। तद्वेदविहितानां पदार्थानां कर्ता होतेत्युच्यते (तु०—आ०श्रौ० १।१।४ नारायणः) ३. यः सामिधेनीः प्रयाजानुयाजान्, आज्यभागौ, याज्यानुवाक्याः, शस्त्रामिष्टवनानुवचनानि, सूक्तवाकं, शंयुवाकं च पठति स होता ऋत्विक् भवति। ४. यः वेद्युत्तरश्रोण्युत्तरतः प्राङ्मुखो दक्षिणोत्तरिणोपस्थेन उपविशति, अवकाशवदङ्गुली हितौ पाणी हृदयदेशे अङ्के वा धारयति, सामिधेनीः प्रयाजान् आज्यभागयाज्यापुरोनुवाक्याःसूक्तवाकं शंयुवाकं च पठति स होतृपदवाच्यः। द्र० श्रौ०प०नि० पृ० २। ५. होता तावत् अग्रतो गार्हपत्यस्य पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन संबोधयन् यागस्य कर्ता इत्युच्यते। ६. होता प्रथमवर्गस्थः ऋत्विक्। अयं पूर्णां दक्षिणां द्वादशगोरूपां लभते। ७. होता प्रातरनुवाकमनुब्रूते। द्र० मी०को० पृ० ४५२८। ८. होत्रा हौत्रं कर्तव्यम्। द्र० मी०को० पृ० ४५२९।

**होतृकर्तृकनित्यप्रायश्चित्तहोम—**(हौ०, आध्व०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च वेदस्तरणानन्तरमाहवनीयस्य वायव्यदेशे तिष्ठन् आज्यस्थाल्याज्येन स्रुवेण त्रिभिर्ऋङ्मन्त्रैः प्रत्येकं हुत्वा तिसृभिर्व्याहृतिभिश्च प्रत्येकं हुत्वा समस्तव्याहृतिमन्त्रेण जुहोति। अयं सप्ताहुतिहोमो होतृकर्तृकनित्यप्रायश्चित्तहोम इत्युच्यते। द्र० श्रौ०प०नि० पृ० ४०। द्र० वेदस्तरण—।

**होतृखर—** द्र० होतृधिष्ण्य—।

**होतृचमस—** (सा०, आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु प्रयोक्तव्यः। १. नैयग्रोधो मण्डलाकारः सदण्डो होतुश्चमस उच्यते। द्र० श्रौ०प०नि० पृ० २४९। २. होता यत्र चमति, चमिष्यति, अचमीद्वा स होतुश्चमसः। होतुश्चमसभक्षणे वषट्कारः कारणम्। द्र० मी०को० पृ० ४५२९।

**होतृचमसप्रचारप्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होत्रादिसप्तहोतृणां प्रस्थितसोमानां यागे प्रातःसवने होतुः 'इदं ते सौम्यं मधु' (ऋ० ८।६६।८) इति प्रस्थितयाज्या। मैत्रावरुणस्य 'मित्रं वयं हवामहे' (ऋ० २।३।४) इति प्रस्थितयाज्या। ब्राह्मणाच्छंसिनः 'इन्द्र त्वा वृषभम्' (ऋ० ३।४०।१) इति प्रस्थितयाज्या। पोतुः 'मरुतो यस्य हि क्षये' (ऋ० १।८६।१) इति प्रस्थितयाज्या नेष्टुः 'अग्ने पत्नीरिहावह (ऋ० १।२२।९) इति प्रस्थितयाज्या। आग्नीध्रस्य 'उक्षान्नाय वसान्नाय' (ऋ० ८।४३।११) इति प्रस्थितयाज्या। अच्छावाकस्य 'प्रातर्यावभिरागतम्' (ऋ० ८।३८।७) इति प्रस्थित-

याज्या। इति प्रात: सवनिक्य: प्रस्थित-याज्या:। तु०—ऐ० ब्रा० ६।१०; श्रौ०को० २ भा० पृ० ३।१३ आ०श्रौ० ५।५।१८)। माध्यन्दिनसवने प्रस्थितानां सोमानां यागे होतु:—'पिबा सोममभिष्टयम्' (ऋ० ६।१७।१) इति प्रस्थितयाज्या। मैत्रावरुणस्य 'स ईं पाहि य ऋजीषी' (ऋ० ६।१७।२) इति। ब्राह्मणाच्छंसिन: 'एवा याहि प्रत्नथा' (ऋ० ६।१७।३) इति। पोतु: 'अर्वाङहि सोम कामम्' (ऋ० १।१०४।९) इति। नेष्टु: 'तवायं सोम:' (ऋ० ३।३५।६) इति। अच्छावाकस्य 'इन्द्राय सोमा:' (ऋ० ३।३६।२) इति। आग्नीध्रस्य 'आ पूर्णो अस्य कलश:' (ऋ० ३।३२।१५) इत्येता माध्यन्दिनसवनिक्य: प्रस्थित-याज्या:। (तु०—ऐ० ब्रा० ६।११, श्रौ०को० २ भा० पृ० ३७० आ०श्रौ० ५।५।१९)। तृतीयसवने होतु:—'इन्द्र ऋभुभिर्वाजवद्भि:' (ऋ० ३।६०।५) इति प्रस्थितयाज्या। मैत्रावरुणस्य—'इन्द्रा-वरुणा सुतपाविमम्' (ऋ० ६।६८।१०) इति। ब्राह्मणाच्छंसिन:—'इन्द्रश्च सोमं पिबतम्' (ऋ० ४।५०।१०)। इति। पोतु: 'आ वो वहन्तु' (ऋ० १।८५।६) इति। नेष्टु:-अमेव न: सुहवा' (ऋ० २।३६।३) इति। अच्छावाकस्य—'इन्द्रा विष्णू पिब-तम्' (ऋ० ६।६९।७) इति। आग्नीध्रस्य 'इमं स्तोममर्हते' (ऋ० १,९४,१) इत्येतास्तार्तीयसवनिक्य: प्रस्थितयाज्या: तत्र याज्याय आदौ 'ये३यजामहे' (अन्ते 'वौ३षट्' इति वषट्कृते 'सोमस्याग्ने वीहि' इत्यनुवषट्कार: कर्तव्य:। इति विशेषोऽ-नुसन्धेय:। **द्र०** ऐ० ब्रा० ६।१२ श्रौ०को० २ भा० पृ० ४३४ आ०श्रौ० ५।५।१९)।

**होतृचमसभक्ष— द्र०** सवनमुखचमसभक्ष—।

**होतृचमसीयाप्रेक्षणवाचन—** (आध्व०) सोम-यज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु दधिग्रहप्रचारानन्तरं यज-मान: 'अध्वर्यो धेनुं ते ददामि'। अध्वर्युर्धेनुं प्रतिगृह्य दधिग्रहशाखां मेक्षणं च तूष्णीमनु-प्रहरति। यजमान: प्रकृतिवदुपवेषमुद्वास-यति। अध्वर्यु: होतृचमसीया अप: दक्षिणस्य हविर्धानस्य ईषयोर्मध्येनावतार्य चर्मणि निधाय ता: प्रेक्षमाणं यजमानं वाच-यति—'निग्राम्या: स्थ देवश्रुत: आयुर्मे तर्प-यत, प्राणं मे तर्पयत, अपानं मे तर्पयत, व्यानं मे तर्पयत, चक्षुर्मे तर्पयत, श्रोत्रं मे तर्पयत, मनो मे तर्पयत, वाचं मे तर्पयताऽत्मानं मे तर्पयताङ्गानि मे तर्पयत, प्रजां मे तर्पयत, पशून् मे तर्पयत, गृहान् मे तर्पयत, गणान् मे तर्पयत, सर्वगणं मा तर्पयत, तर्पयत मा गणा मे वितीतृषन्' इति। इदं होतृचमसीयाप्रे-क्षणवाचनमुच्यते। **द्र०** श्रौ०प०नि० पृ० २६६-६७।

**होतृचमसीयामिश्रण—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहा-हीनसत्रेषु अभिषवार्थसेचनानन्तरं 'तत्ते सोमदिवि ज्योतिर्यत् पृथिव्यां यद् उरावन्त-रिक्षे तेनास्मै यजमानाय उरुवायस्कृधि क्षत्रेऽवोच:' इति राजानमुदकेन मिश्रयति। इदं होतृचमसीयामिश्रणमुच्यते। **द्र०** श्रौ० प० नि० पृ० २६९; अभिषवार्थसेचन—।

**होतृधिष्ण्य—** (सा० आध्व०) सोमयज्ञेषु प्रकृति-भूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीन-सत्रेषु वेद्यां अन्त: सदसं प्राक्पदद्वयमवशेष्य पृष्ठ्यायां तथैव (आग्नीध्रीयखरवत्) होतु: खरं करोति—'वह्निरसि हव्यवाहनो रौद्रेणा० हि ँ सी:' इति। अयं होतृखरो होतृधिष्ण्यमित्युच्यते। **द्र०** श्रौ०प०नि० पृ० २४७।

**होतृप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु सोमाभिषवानन्तरं तत्तद्देव ताभ्यः सोमरसः तत्तत्पात्रेण अध्वर्युणा गृह्यते। ग्रहणानन्तरं उद्गातॄन् प्रतिस्तोत्रोपाकरणार्थं प्रेष्यति—'ग्रहं वा गृहीत्वा चमसं वोन्नीयस्तोत्रमुपाकुर्यात्' (तै० सं० ३।१।२) इति श्रुतेः। प्रेषितार उद्गातारः तद्ग्रहसंबन्धिनीं देवतां तद्देवताकैः साम-भिः स्तुत्वा स्तोत्रान्तिमाया ऋचः प्रस्तावानन्तरं होतारं प्रति 'होतरेषोत्तमा' (तु०—ला०श्रौ० ३।३६।११) इति प्रैषं ददति। अयं शस्त्रशंसनारम्भार्थमुक्तः प्रैषो होतृप्रैष इत्युच्यते। तत्रैवमनेन प्रैषेण प्रेषितो होता तत्तद्ग्रहदेवतासंबन्धिशस्त्रमारभते। समाप्ते शस्त्रे पूर्वगृहीतं ग्रहं होतुमध्वर्युः प्रारभते। ततः अध्वर्युणा प्रेषितो होता याज्यां पठति। पठित्वा तदन्ते वषट्करोति। वषट्कृते चाध्वर्युः जुहोति। एवं सोमयागे होमप्रयोगे होता ग्रहसंबद्धहोमवषट्कारात् पूर्वं किञ्चिदपि न व्याहरेत् मौनीभूत्वाऽवतिष्ठेदित्यर्थः। इति विशेषोऽवगन्तव्यः। (तु०—का०श्रौ० ३।३। १९ टि० विद्याधरः)। अस्मिन्नव्याहरणे अध्वर्युः सोमग्रहग्रहणानन्तरं उपाकरणात् प्राक् न किञ्चिदपि व्याहरेत्। उपाकरणे कृते उद्गातारो होतृप्रैषात् पूर्वं नापव्याहरेयुः। होता च ग्रहीयवषट्कारात् पूर्वं न व्याहरेदिति त्रयाणामृत्विजामव्याहरणनियमविधिश्चावगन्तव्यः। (तु०—तत्रैव विद्याधरः)।

**होतृभेद—** (सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ सत्रप्रकरणे सत्रेष्वस्ति होतुः दीक्षितत्वं-'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं ततो होतारम्' इति श्रुतेः। अहीनैकाहेषु तु तादृशश्रुत्यभावात् अदीक्षित एव होता। तस्मात् होता दीक्षितोऽदीक्षितश्चेति द्विवध उच्यते। तत्र दीक्षिते एव होतरि यजमानशब्दप्रयोगाददीक्षितो होता यजमानो न भवति। तदुक्तम्—'दीक्षिते यजमानशब्दो नादीक्षिते' (तु०—ऐ० आ० सा० ५।१।५)। इति विशेषोऽवधेयः।

**होतृवाद्यप्रैष—** (आध्व०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मा० सवने अध्वर्युराहृतदध्यवेक्षणानन्तरं होतारमाह—'होतर्वदस्व यत्ते वाद्यम्' इति। अयं होतृवाद्यप्रैष उच्यते। तत्र वाद्यप्रैषात् पूर्वं चमसे बर्हिषी अन्तर्धाय दधि गृह्णाति—'यावती० भ्यस्तृतम्' इति अपोद्धृत्य बर्हिषी दध्यवेक्ष्य मन्त्रं पठति—'वाक् च त्वा० शृतं कृणु'। इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २९७, आहृतदध्यवेक्षण—।

**होतृशिल्पशस्त्र—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ द्वादशाहे पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने होतुः वैश्वदेवशिल्पशस्त्रे आभिप्लविकातिदेशप्राप्तस्य 'उषासानक्ता' इत्यस्य स्थाने नाभानेदिष्ठाख्येन महर्षिणा दृष्टम् 'इदमित्था' (ऋ० १०।६१) इति नाभानेदिष्ठीयं सूक्तं नाराशंससूक्तसहितं होता शंसति। सहशंसनप्रकारस्तु— 'इदमित्था' इत्येतन्नाभानेदिष्ठं सूक्तं सप्तविंशत्यृगात्मकम्। तत्र उपोत्तमे (अवसानगते) द्वे ऋचौ अवशिष्य पञ्चविंश्या ऊर्ध्वं 'ये यज्ञेन' (ऋ० १०।६२) इति नाराशंससूक्तं शंसेत्। 'नाभानेदिष्ठं शंसति' (ऐ० ब्रा० ६२७) तथा चाश्वलायन आह—'इदमित्था रौद्रमिति प्रागुपोत्तमायाः 'ये यज्ञेन' इत्यावपते इति

(तु०—आ०श्रौ० ८।१। १९-२१ नारायणः)।

**होतृषदन—** (आध्व०, सा०) इष्टियज्ञेषु प्रकृतिभूते हविर्यज्ञानां तृतीये दर्शपूर्णमासप्रकरणे तद्विकृतिषु च १.अध्वर्युणा वेदेः पश्चिमभागे वेदिश्रोण्युत्तरभागे वा होतुरुपवेशनार्थमुदगग्रं वारण काष्ठनिमितं पीठं होता यस्मिन् सीरतीति तद् होतृवदनमुच्यते। २. होतृषदनं नाम वेद्युत्तरश्रोण्युत्तरदेशः होतुरुपवेशनस्थानम्। तत्र मुखसंमार्गानन्तरं होतृषदनं होता अभिमन्त्रयते इति विशेषोऽवधेयः। द्र० श्रौ०प०नि० पृ० २७।

**होतृषदन—** (आध्व०, सा०) पशुयज्ञेषु ऐन्द्राग्नप्रकृतिके निरूढपशुबन्धप्रकरणे अग्नीषोमीये तत्प्रकृतिकेषु सौमिकेषु पशुषु च वेदिश्रोण्यां बहिर्वेदि होतृषदनं भवति। तत्र तस्य दक्षिणतो बहिर्वेदि स्वयमवस्थाय अन्तर्वेदि दण्डमवष्टव्य प्रैषाम्नाये परिपठितान् सर्वान् प्रैषान् मैत्रावरुण एव प्रेषितः प्रेषितोऽनुब्रूयात्। इति विशेषोऽवधेयः। (तु०—आ०श्रौ० ३।१।२० नारायणः)।

**होत्रक—** (सा०, हौ०) इष्टिपशुसोमयज्ञेषु आग्नीध्रमैत्रावरुणादयः ऋत्विजो होत्रकवाच्या भवन्ति। तत्र ऐष्टिके कर्मणि आग्नीध्रः एकः। पशौ मैत्रावरुणः एकः सोमेषु १. शस्त्रेष्वेव होत्रकाणामभिहिंकारः इति अध्वर्युः ब्रह्मा उद्गाता इति मुख्यान् वर्जयित्वा १. मैत्रावरुणः, २. अच्छावाकः, ३. ग्रावस्तुत्, ४. प्रतिप्रस्थाता, ५. नेष्टा० ६. उन्नेता, ७. ब्राह्मणाच्छंसी, ८. आग्नीध्रः ९. पोता, १०. प्रस्तोता, ११. प्रतिहर्ता १२. सुब्रह्मण्य इति द्वादशहोत्रका उच्यन्ते। अस्मिन् शास्त्रे मुख्यवर्जिता द्वादशर्त्विजो होत्रका इत्युच्यन्ते न सप्त वा त्रयो वा। (आ०श्रौ० १।२।२६ नारायणः) २, अवान्तरेहना चमसमक्षोपह्वाने...मुख्यान् ऋत्विजः 'अध्वर्य उपह्वयस्व, ब्रह्मन्नुपह्वयस्व, उद्गातरुपह्वस्व' इति पृथगुक्त्वा अमुख्यान् (मैत्रावरुणादीन्) सर्वान् सकृदेव 'होत्रका उपह्वयध्वम्' इति मैत्रावरुणादयोऽमुख्या होत्रका उच्यन्ते। उक्तं च 'मुख्यान् वा पृथगऽधोत्रका उपह्वयध्वमितरान्' (आ०श्रौ० ५।६।१७) इति। 'एत एव होत्रका अन्वाख्यायन्त इति च। 'आपो मे होत्राशंसिनः' (आप० श्रौ० १०।१।१४)। होत्रकान् (आ०श्रौ० २।१।१।४) इति च मुख्यवर्जितेषु ऋत्विक्षु होत्रकत्वदर्शनात् (आ०श्रौ० १।२।२६ षड्गुरुशिष्यः) ३. सोमेषु मैत्रावरुणः (प्रशास्ता) ब्राह्मणाच्छंसी अच्छावाकः इति होत्रकाः (आ०श्रौ० १।१३।१७ देवत्रातः)। ४. होतृब्रह्मपुरुषाः होत्रकाः (आ०श्रौ० १।२।२६ देवत्रातः)। ५. 'प्रशास्ता ब्राह्मणाच्छंसी, अच्छावाकः' इति शास्त्रिणो होत्रकाः। तेषां यानि शस्त्राणि तानि प्रातःसवने तृतीयसवने पर्यायेषु अतिरिक्तेषु च चतुराहवानि भवन्ति। माध्यन्दिनसवने पञ्चाहवनि। इति विशेषोऽवधेयः। (तु०— आ०श्रौ० ५।१०।११-१३ नारायणः)। ६. प्रशास्ता ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्रोऽच्छावाकश्चेत्येते होत्रका उच्यन्ते। (तु०—ऐ० आ०सा० १।२।४)। ७. होता पोता नेष्टा आग्नीध्रो ब्राह्मणाच्छंसी प्रशास्ताऽच्छावाको गृहपतिरिति क्रमेणा वृत्योक्ताः सप्रेषा द्वादश होत्रका उच्यन्ते (तु०— ऐ० ब्रा० सा० ६।१४)। ८. मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृअच्छावाकआग्नीध्राः इति होत्रकाः। होत्रका होतुर्वषट्कारेण इन्द्रे हुते चमसमुन्नीय देवतान्तरेभ्योऽनुवषट्कारेण जुह्वति। इति विशेषोऽवधेयः। द्र० मीको० पृ० ४५३२। द्र० होत्रकक्रिया—।

**होत्रकक्रिया—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु १. होत्रकाणां क्रिया द्विविधा भवन्ति उक्थिन्य: शस्त्रयुक्ता: अनुक्थिन्य: शस्त्ररहिताश्च। तत्र मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाक: इत्येतेषां त्रयाणां शस्त्रसद्भावादेतदीया: क्रिया: उक्थिन्य:। नेष्टृपोत्रादीनां शस्त्राराहित्यात् तदीया: क्रिया अनुक्था:। इति होत्रकाणां क्रिया उच्यन्ते। (तु०—ऐ० ब्रा० सा० ६।१३)। **द्र०** होत्रा-हौत्रक्रिया—। २. प्रकृतौ ज्योतिष्टोमाग्निष्टोमे ऋतुग्रहाणां प्रात:सवने प्रचारो यदा वर्तते तदानीं मैत्रावरुण: प्रैषसूक्तगतेन मन्त्रेण होत्रादीन् प्रेष्यति। ते च याज्यया वषट् कुर्वन्ति। अध्वर्युयजमानौ प्रैषितौ स्वस्वयाज्यां होत्रे प्रयच्छत:। अर्थात् प्रकृतौ मैत्रावरुणस्तं तं प्रैषमन्त्रं पठित्वा 'होतर्यज' इत्यादिना प्रेष्यति। होत्रादयश्च तत ऊर्ध्वं याज्यां प्रैषरूपामेव पठित्वा तदन्ते वौषडिति वषट्कुर्वन्तीति होत्रकक्रियोच्यते। द्वादशाहिकपृष्ठ्यषडहे षष्ठेऽहनि प्रात: सवने तु न तथा कर्तव्यम्। किं तर्हि ऋग्गेभ्य एवाधि ऋक्शिरस्केभ्यो होत्रादि विषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो 'होतर्यज' इत्यादिना प्रेष्येत्। होत्रादयश्च तथैव ऋग्गेभ्योऽधि वषट् कृत्वा 'तुभ्यं हिन्वान: (ऋ० २।६१-६) इत्याद्यृक्शिरस्कै: प्रैषैर्यजेयुरिति विशेषोऽवगन्तव्य:। (तु०—ऐ० ब्रा० सा० ५।९ आ०श्रौ० ८।१।८ नारायण:)।

**होत्रकपरिधानीया—** **द्र०** अहीनपरिधानीया—।

**होत्रकपरिधानीयाक्रतुयोगविमोक—** **द्र०** अहीनपरिधानीयाक्रतुयोगविमोक—।

**होत्रकपृष्ठभेद—** (सा०, औ०, हौ०) सोमयज्ञेषु यथा होत्रकाणां उक्थ्यनुक्थिभेदेन द्वैविध्यं तथैव पृष्ठवद्पृष्ठवद्भेदेनापि द्वैविध्यं वर्तते। तत्र पृष्ठवन्तो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकास्त्रयो होत्रकस्तोत्रशस्त्रेषु माध्यन्दिनसवने सात्रिकेष्वह:सु एकाहीभवत्सु, संपातवत्सु, सर्वपृष्ठयुक्तेषु अह:सु विश्वजिति च यथासंख्यं शाक्वरवैरूपरैवताख्यानि त्रीणि पृष्ठानि (सामानि) स्तुवन्ति। शस्त्रेषु तु तेषां योनी: शंसन्ति। तदुक्तम्—'होत्रकाणां पृष्ठानि शाक्वरवैरूपरैवतानि। ते योनी: शंसन्ति'। अर्थात् होत्रकशस्त्रस्तोत्रेष्वेतानि पृष्ठानि भवन्ति। अतस्तेषां योनयोऽस्मिन् विश्वजिति होत्रकाणां शस्त्रेषु स्तोत्रिया भवन्ति। ते इत्यनेन पृष्ठवन्तोऽपृष्ठवन्तश्च होत्रका सन्तीति होत्रकपृष्ठद्वैविध्यं प्रतिपादितम्। विश्वजिच्चापि सर्वपृष्ठोऽसर्वपृष्ठश्चेति द्विविध: प्रदर्शित इति विशेषोऽनुसन्धेय:। (तु०—आ०श्रौ० ८।५।२०- २१ नारायण:)।

**होत्रकप्रसर्पण—** (हौ०) सोमयज्ञेषु प्रकृतिभूत... अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां त्रयाणां शस्त्रिणां होत्रकाणां मध्ये मैत्रावरुणब्राह्मणाच्छंसिनौ सदस: पुरस्तात् प्रसर्पेताम्। अच्छावाकस्तु पश्चात् प्रसर्पेदिति। तदुक्तम्— 'पुरस्तादन्ये होत्रका: सद: प्रसर्पन्ति पश्चादच्छावाक:' (तु०—ऐ० ब्रा० सा० २।३।६)।

**होत्रकप्रैष—** (हौ०) सोमयज्ञे, प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु ऋतुयाजेषु होत्रकाणां (होतुर्मैत्रावरुणब्राह्मणाच्छंस्यादीनां च) प्रैषा होत्रकप्रैषा उच्यन्ते। तेषु नेष्टृपोतृव्यतिरिक्तानां होत्राकाणां प्रैषेष्वेकैक एव प्रैष:। नेष्टु: पोतुश्च द्वौ द्वौ प्रैषौ। तथाहि १. 'होता यक्षदिन्द्रं होत्रात् सजूर्दिवा पृथिव्या ऋतुना सोमं पिबतु होतर्यज' इति

होतुः प्रैषः । २. 'होता यक्षन्मरुतः पोत्रात् सुष्टुभः स्वर्का ऋतुना सोमं पिबन्तु पोतर्जयज' इति पोतुः । ३. 'होता यक्षद्ग्रावो नेष्ट्रा त्वष्टा सुजनिमा सजूर्देवानां पत्नीभिर्ऋतुना सोमं पिब्रतु नेष्टर्यज' इति नेष्टुः । ४. 'होता यक्षदग्निमाग्नीधाद् ऋतुना सोमं पिबत्वग्नीद् यज' इति आग्नीध्रस्य ५. होता यक्षदिन्द्रं ब्रह्माणं ब्रह्मणाद् ऋतुना सोमं पिबतु ब्रह्मन् यज' इति ब्राह्मणाच्छंसिनः ६. 'होता यक्षन्मित्रावरुणा प्रशास्तारौ प्रशास्त्राद् ऋतुना सोमं पिबतां प्रशास्तर्यज' इति मैत्रावरुणस्य । ७. 'होता यक्षद्देवं द्रविणोदां होत्राद् ऋतुभिः सोमं पिबतु होतर्यज' इति होतुः । ८. 'होता यक्षद्देवं द्रविणोदां पोत्राद् ऋतुभिः सोमं पिबतु पोतर्यज' इति पोतुः । ९. 'होता यक्षद्देवं द्रविणोदां नेष्ट्राद् ऋतुभिः सोमं पिबतु नेष्टर्यज' इति नेष्टुः । १०. 'होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात् तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो देवो द्रविणोदाः पिबतु द्रविणोदसः । स्वयमायूयाः स्वयमभिगूर्याः स्वयमभिगूर्तया होत्राय ऋतुभिः सोमस्य पिबत्वच्छावाकयज' इत्यच्छावाकस्य । ११. 'होता यक्षदश्विनाध्वर्यू आध्वर्यवाद् ऋतुना सोमं पिबतामध्वर्यू यजताम्' इत्यध्वर्युप्रतिप्रस्थात्रोः । १२. 'होता यक्षदग्निं गृहपतिं गार्हपत्यात् सुगृहपतिस्त्वधाग्नेऽयं सुन्वन् यजमानः स्यात् सुगृहपतिस्त्वमनेन सुन्वता यजमानेनाग्निर्गृहपतिर्ग्राह्यपत्याद् ऋतुना सोमं पिबतु गृहपति यज' इति यजमानस्य । इति होता पोता नेष्टाऽच्छावाकोऽध्वर्युर्गृहपतिश्च क्रमेणोक्ताः । इति एतेषां प्रैषसूक्ते (ऋ०खि० ७ ।५) द्वादशप्रैषाः सन्ति (तु०— ऐ० ब्रा० सा० ६ ।१४) द्र० होत्रक ऋतुयाजयाज्याऋतुप्रैषयाज्या— ।

**होत्रकप्रस्थितयाज्या—** (हौ०) सोमयज्ञेषु प्रकृतिभूत...अग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होतृमैत्रावरुण ब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्राच्छावाकानां सप्तानां होत्रकाणां त्रिषु सवनेषु प्रस्थितयाज्यास्तिस्र एव भवन्ति । अग्नीध्रस्य तु 'ऐभिरग्ने सरथम्' (ऋ० ३ ।६ ।९) इत्येषाऽधिका तिसृभिः सह । सा च पात्नीवतग्रहवर्तिनी । तथा च संप्रदायविद आहुः । 'तिस्रः प्रस्थितयाज्यास्तु सप्तानाभवन् खलु । आग्नीध्रस्तिसृभिः सार्धमैभिरग्ने चतुर्थ्यभूत् । इति होत्रकाणां चतुर्विंशतिः प्रस्थितयाज्या अवगन्तव्याः (तु०—ऐ० ब्रा० सा० ६ ।१४) । द्र० प्रस्थितयाज्या— ।

**होत्रकसामसूक्त—** (हौ०) सोमयज्ञेषु मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां पृष्ठवतां होत्रकाणां स्तोत्रशस्त्रेषु माध्यन्दिनसवने सात्रिकेष्वहःसु एकाहीभवत्सु, संपातवत्सु सर्वपृष्ठयुक्तेष्वहःसु विश्वजिति च सूक्तानां पुरस्तात् सामसूक्तसंज्ञकानि सूक्तानि शंसन्ति । तत्र 'सत्रा भदासः' (ऋ० ६ ।६ ।३६) इति सूक्तं मैत्रावरुणं' 'यो जातः' (ऋ० २ ।१२) इति सूक्तं ब्राह्मणाच्छंसी, 'अमूरेकः' (ऋ० ६ ।३१) इति सूक्तमच्छावाकः शंसति । इति त्रीणि सूक्तानि होत्रकाणां सामसूक्तानीत्युच्यन्ते । द्र० आ०श्रौ० ८ ।७ ।११) । द्र० होत्रकपृष्ठभेद— ।

**होत्रकस्तोत्रियानुरूपतृच—** (हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतिषु सात्रिकेष्वहःसु सामगा यस्मिन् तृचे स्तोत्रं कुर्वन्ति स तृचः स्तोत्रियः । तस्य स्तोत्रियस्य छन्दो देवतादिना सदृशोऽन्यो द्वितीयस्तृचः सोऽनुरूपः । (तु०— आ०श्रौ० ५ ।१० । २६) इति सामान्ये सति सर्वेष्वहःस्वैकैक-

स्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति ते सर्वे तृचाः स्तोत्रिया उच्यन्ते । तत्राहर्गणेषु पृष्ठ्यषडहस्तोत्रियाणां मध्ये यस्मिंस्तृचे पूर्वदिने स्तुवीरन् छन्दोगाः अन्यस्मिष्ठन् वा कस्मिंश्चित् स होत्रकाणां स्तोत्रियो (स्तोत्रियधर्मैः संबद्धो) भवति । यस्मिंस्तृचे श्वः स्तुयुः सोऽनुरूपः कर्तव्यः । एवं सर्वेष्वहःसु द्रष्टव्यम् । अर्थात् सर्वत्रोत्तरदिनगतं स्तोत्रियं पूर्वदिने स्तोत्रियस्यानन्तरभाविनं अनुरूपं कुर्यात् । अयं च नियमो होत्रकाणां शस्त्रेषु प्रातःसवन एव द्रष्टव्यः । तदुक्तम्— 'स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति' प्रातःसवने' (ऐ० ब्रा० ६ ।५)। 'तेषां यस्मिन् स्तुवीरान् स स्तोत्रियः । यस्मिञ्छ्वसोऽनुरूपः' (आ०श्रौ० ७ ।२ ।५-६) इति ।

**होत्रकाहरहः शस्यसूक्त**— द्र० अहरहः शस्यसूक्त— ।

**होत्रकाहीनसूक्त**— द्र० अहीनसूक्त— ।

**होत्रा**— (हौ०, सा०) इष्टिपशुसोमयज्ञेषु १. होत्राशब्दः स्त्रीलिङ्गोऽपि पुरुषान् होत्रकानभिधत्ते । द्र० होत्रक— । २. होतृत्वे समुत्पन्नाः क्रियाः होत्राः । ३. मैत्रावरुण ब्राह्मणाच्छंस्यच्छावाकानां याः क्रियास्ता होत्राः । ४. होतृमैत्रावरुणादयः सप्त होत्राः । ५. होत्रकाणां क्रिया होत्राशब्देन विवक्षिताः । तासु काश्चित् क्रियाः शस्त्रयुक्ता इतराः शस्त्ररहिताः । मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां शस्त्रसद्भावाच्छस्त्रयुक्ताः, पोतृनेष्ट्राग्नीध्राणं शस्त्राभावाच्छस्त्ररहिताः क्रिया भवन्ति । तस्माद्धोत्रका अपि उक्थिन्यः अनुक्थाश्चेति द्विविधा भवन्ति । तथा च ब्राह्मणम् 'उक्थिन्योऽन्या अनुक्था अन्याः' (तु०—ऐ० ब्रा० सा० ६ ।१६) । द्र० होत्रकक्रिया— ।

**होत्राशंसिन्**— (सा०, हौ०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रप्रकरणे प्रथमायां सोमसंस्थायामग्निष्टोमे तद्विकृतिषु चैकाहाहीनसत्रेषु होतृत्वे समुत्पन्नाः क्रियाः शंसन्तीति होशंसिनो मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकः ऋत्विजो होत्राशंसिन उच्यन्ते । द्र० होत्रक— ।

**होम**— (सा०, आध्व०) इष्टिपशुसोमयज्ञादिषु १. होम आध्वर्यवं कर्म । २. जुहोति चोदनाभावेऽपि प्रक्षेपाधिके यागे अभियुक्तप्रसिद्धेः होमरूपता । ३. होमः देवतोद्देशद्रव्यत्याग-प्रक्षेपसमुदायात्मकः । द्र० मी०को० पृ० ४५३२ । तत्र होमाः चतुर्विधाः ऐष्टिकाः पाशुकाः सौमिकाः दर्विहोमाश्चेति विशेषोऽवधेयः । द्र० मी०को० पृ० ४५३३ ।

**होमक्रम**— (सा०) इष्टिपशुसोमयज्ञादिषु होमविधौ प्रथमं वौ३षट् वषट्करणं होत्रा क्रियते । तदनन्तरं होमोऽध्वर्युणा क्रियते । इति होमकालीनः क्रमो होमानां क्रम उच्यते ।

**होमभेद** — (सा०) इष्टिपशुसोमयज्ञेषु द्र० जुहोति— । द्विविधाः होमाः तन्त्रहोमाः क्षिप्रहोमाश्च । ये किल होमाः परिसमूहनबर्हिरास्तरणाद्यङ्गविस्तार युक्ताः ते इति कर्तव्यताकलापस्य योगात् तन्त्रहोमा इत्युच्यन्ते । ये च तथा विधाङ्गविस्तारयुक्ता न भवन्ति त इमे सायं होमादयः क्षिप्रं हूयन्ते इति क्षिप्रहोमाः कथ्यन्ते । (तु०—कर्मप्रदीपः १ ।८ ।२४ प्रभा) ।

**होमविधि**— (आध्व०, सा०) इष्टिपशुसोमयज्ञादिषु १. अनूध्वर्यज्ञुर्व्यूल्हजानुर्जुहुयात् सर्वदा हविः । नहि बाह्यहुतं देवाः प्रतिगृह्णन्ति कर्हिचित् ॥ १ ॥ रौद्रं च राक्षसं पित्र्यमासुरं चाभिचारिकम् । उक्त्वा मन्त्रं स्पृशेदाय आलभ्यात्मानमेव च ॥ २ ॥ द्र०

कौ०गृ० १।६।६। २. सर्वप्रायश्चित्तादिषु सर्वहोमेषु यत् किञ्चिद् द्रव्यम् आज्यमौषधं पृषातकं समिधः शकलानि वा अध्वर्युणा अप्रेषितो यत्र होता यजेत्, तत्र स्वाहाकारान्तैर्मन्त्रैर्जुहयात् (अध्वर्युः) यत्र प्रैषितो भवति तत्र वषट्कारो भवति। (तु०—१।११।११ देवत्रातः)।

**हौण्डिनविहार—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूतज्योतिष्टोमातिरात्रविकृतौ अयनसंवत्सर सत्रप्रकरणे गवामयने अहर्गणेषु पृष्ठ्यषडहस्य षष्ठेऽहनि तृतीयसवने वालखिल्यानामष्टसु सूक्तेषु (ऋ० ८।४९-५६) सप्तमाष्टमे द्वे सूक्ते परित्यज्य यान्यवशिष्टानि षट् सूक्तानि तेषु त्रीणि युग्मानि (द्वन्द्वानि) भवन्ति। तत्र प्रथमयुग्मगते द्वे सूक्ते (४९-५०) मैत्रावरुणो होत्रकः स्वशिल्पशस्त्रे पच्छः (पादशः) विहरति— अर्थात् प्रथमसूक्तगतं पादं द्वितीयसूक्तगतेन पादेन योजयति। एवं द्वितीययुग्मगते द्वे सूक्ते (५१-५२) अर्धर्चशो विहरति— अर्थात् तस्मिन् युग्मे प्रथमसूक्तगतमर्धर्चं द्वितीयसूक्तगतेनार्धर्चेन योजयति। तथा च तृतीययुग्मगते द्वे सूक्ते (५३-५४) ऋक्शो विहरति— अर्थात् तस्मिन् युग्मे प्रथमसूक्तगतामृचं द्वितीयसूक्तगता ऋचा योजयति। तत्राश्वलायनः 'अथ वालखिल्या विहरेत्। तदुक्तं षोडशिनासूक्तानां प्रथमद्वितीये प्रच्छः, तृतीयचतुर्थे अर्धर्चशः, ऋक्शः पञ्चमषष्ठे'(आ०श्रौ०८।२।३-६) (तु०—ऐ० ब्रा० सा० ६।२४।२८)।

**हौण्डिनविहार—** (हौ०, सा०) सोमयज्ञेषु प्रकृतिभूत...पृष्ठ्यषडहस्य तृतीये सवने मैत्रावरुणशिल्पशस्त्रे व्यतिषङ्गप्रकारको द्वितीयो हौण्डिनविहारो भवति। (तु०—ऐ० ब्रा० सा० ६।२४।२८)। 'व्यतिमर्शं वा विहरेत्' (आ०श्रौ० ८।२।६)।

**हौत्र—** (सा०) १. हौत्रमिति ऋग्वेदस्य समाख्या (आ०श्रौ० १।१।४ नारायणः)। २. ऋग्वेद विहितपदार्थेषु हौत्रमिति समाख्या वेदे याज्ञिकैः प्रयुज्यते। द्र० मी०को० पृ० ४१६०। ३. हौत्रमिति समाख्यानि कर्माणि होत्रा कर्तव्यानि। द्र० मी०को० पृ० ४५४१। ४. हौत्रं होत्रा होत्रकैश्च कर्तव्यम्। तत्र आश्वलायनः प्रायेण पूर्वं होतुः क्रियाः सूत्रयति पश्चात् होत्रकाणाम्। एवं हौत्रं क्रियाक्रमभेदात् कर्तृक्रमभेदाद् द्विविधमिति विशेषोऽवधेयः। द्र० समाख्या—। द्र० होतृ—, होत्रक—, होत्रकक्रिया—।

**हौत्रद्वैविध्य—** (सा०) इष्टिपशुसोमेषु प्रकृतिविकृतिभूतेषु हौत्रं बाह्वचं याजुषं चेति द्विविधं भवति। तत्र ऋग्वेदीय शाकलसंहिताब्राह्मणेऽखिलेषु आश्वलायनशांखायनसूत्रयोश्च सामान्यतः (प्राकृतम्) यजुर्वेदीयमाध्यन्दिनसंहिताब्राह्मणेषु तैत्तिरीयमैत्रायणीयादिसंहिताब्राह्मणेषु तत्सूत्रेषु च विशेषतः (विशेषरूपम्) आम्नातम्। तत्र (क) बाह्वचं दर्शपूर्णमासादीष्टिषु होतुः स्थानआसनजपअभिहिङ्कारसामिधेन्यनुवचनशस्त्रयाज्यानिगदअभिष्टवनसंस्तवनकर्माणि, प्रवरवरणनिगदनिवित्पदनिगददेवताऽऽवाहननिगदतृणनिरसन उपवेदनकर्माणि, प्रयाजाः, आज्यभागप्रधानयागस्विष्टकृद्यागानां याज्यापुरोनुवाक्याः, अध्वर्योरन्वारम्भः, मुखसंमार्जनहोतृसदनोपवेशनस्रुगादापनानि, इलाप्राशनायेलोपह्वानअवान्तरेलाप्राशनानि, अनुयाजसूक्तवाकशंयुवाकाः इत्येवं जातीयकं अन्यच्च सर्वं होतृकर्मजातं बाह्वचं हौत्रमुच्यते। पशुषु इष्टिभ्योऽधिकं यूपाञ्जनीयाः, अग्निप्रणय-

नीयाः अग्नीषोमप्रणयनीयाः ऋचः, मैत्रावरुणकर्तृकाः प्रयाजप्रैषाः, अध्रिगुप्रैषः, प्रयाजयाज्याः (आप्रीसूक्तानि), पशूनां वपा-पुरोडाश-हविः-वनस्पतीनां स्विष्टकृतश्च पुरोनुवाक्या-प्रैष-याज्याः, अनुयाजप्रैष-याज्याश्च, इत्येवमाम्नातम् तथा त्रिपशौ आद्यन्तैन्द्रवायोधसयोः सौत्रामण्यां विहितं सर्वं होतृकर्महोतुः पाशुकं बाह्वृचं हौत्रं भवति। सोमेषु दीक्षणीयाद्युपसदिष्टीनां याज्यानुवाक्याः, प्रातरनुवाकः, ग्रहाणां पुरोनुवाक्याप्रैषयाज्याः, वषट्कारानुवषट्काराः ऋतुप्रैषाः, त्रयाणां सवनानां होतुर्होत्रकाणां च याज्यान्तानि सर्वाणि शस्त्राणि, तेषामेव च अष्टौ तायमानरूपाणि, अन्यच्च तत्र तत्र तेषां यथासम्नातं सर्वं कर्मजातं बाह्वृचं हौत्रं निगद्यते। (ख) अथ याजुषं सौत्रामणिकं हौत्रमुच्यते। तत्र माध्यन्दिनसंहिताया विंशेऽध्याये 'समिद्ध इन्द्रः। (मा० सं० २० ।३६) 'इत उत्तरं हौत्रं मैत्रावरुणं च सौत्रामण्याः आ अश्वमेधात्' इत्युवटः। इतः सौत्रामणिकं हौत्रमुच्यते। तत्र १. 'समिद्धः' इत्याद्याः 'स्तोकानामिन्दुम्' इत्यन्त्या एकादश ऋचः प्रथमस्यैन्द्रस्य पशोः आप्रियाः प्रयाजयाज्या भवन्ति (तु०—मा०सं० २० ।३६। ४६ महीधरः का० श्रौ० १९ ।६ ।१२)। २. ऐन्द्रस्य पशोः 'आयातु' इत्याद्याः 'तस्य वयम्' इत्यन्त्याः षड् ऋचः वपापुरोडाशपशूनां याज्यानुवाक्या भवन्ति। तत्र 'आयत्विन्द्रः' इति (४७) वपायाः पुरोनुवाक्याः, 'आ न इन्द्रः' इति (४८) याज्या। 'आ न इन्द्रः' इति (४९) पशुपुरोडाशस्य पुरोनुवाक्या, 'त्रातारमिन्द्रम्' इति (५०) याज्या। 'इन्द्रः सुत्रामा' इति (५१) इति पशुयागे पुरोनुवाक्या, 'तस्य वयम्' इति (५२) इति याज्या। (तु०—मा०सं० २० ।४७५२ महीधरः का०श्रौ० १९ ।६ ।१३)। ३. 'समिद्धो अग्निः' इत्यादयः 'गोभिर्न' इत्यन्ता द्वादश ऋचः त्रिपशोः प्रयाजयाज्या आप्रियः सन्ति (तु०—मा०सं० २० ।५५६६ महीधरः का०श्रौ० १९ ।६ ।१५)। ४. 'अश्विना हविः' इत्याद्यास्तिस्रः त्रिपशोः तिसृणां वपानां क्रमाद् याज्यानुवाक्या भवन्ति। तत्र आश्विन वपायागे 'अश्विना' (६७) इति अनुवाक्या, 'यमश्विना' (६८) इति याज्या। सारस्वतवपायागे 'यमश्विना सरस्वती' (६८) इत्यनुवाक्या, 'तमिन्द्रं पशवः' (६९) इति याज्या। ऐन्द्रवपायागे 'तमिन्द्रम्' (६९) इत्यनुवाक्या, 'अश्विना' (६७) इति याज्या। (तु०—मा० सं० २० ।६७-६९ महीधरः का०श्रौ० १९ ।६ ।१६-१७)। ५. 'य इन्द्रे' इति तिस्रस्त्रयाणां ऐन्द्रसावित्रवारुणां पशुपुरोडाशानां याज्यानुवाक्या भवन्ति। तत्र 'य इन्द्रे' (७०), 'सविता वरुणः' (७१) इत्यैन्द्रस्य पशुपुरोडाशस्य याज्यानुवाक्ये। 'सविता' (७१), 'वरुणः क्षत्रम्' (७२) इति सावित्रस्य पशुपुरोडाशस्य याज्यानुवाक्ये। 'वरुणः क्षत्रम्' (७२), 'य इन्द्रे' (७०) इति वारुणस्य पशुपुरोडाशस्य याज्यानुवाक्ये (तु०—मा०सं० २० ।७०-७२ महीधरः का०श्रौ० १९ । ६ ।१८)। ६. 'अश्विना गोभिः' इति तिस्रो हविषां याज्यानुवाक्या भवति। तत्र 'अश्विना (७३), 'ता नासत्या' (७४) इति आश्विनपशुयागे याज्यानुवाक्ये। 'ता नासत्या' (७४), 'ता भिषजा' (७५) इति सारस्वतपशुयागे याज्यानुवाक्ये। 'ता भिषजा' (७५), अश्विना' (७३) ऐन्द्रपशुयागे याज्यानुवाक्ये। (तु०— मा०सं० २० ।७३-७५ महीधरः, का०श्रौ० १९ । ६ ।१९)। ७. त्रयाणां पयोग्रहाणां सुराग्र-

हाणां च 'युवं सुराभम्, पुत्रमिव पितरौ' इति द्वे याज्यानुवाक्ये भवतः। तत्र पूर्वा पुरोनुवाक्या अपरा याज्या (तु०— २० ।७६-७७ महीधरः, का०श्रौ० १९ ।६ ।२०)। ८. पशुस्विष्टकृद्यागे 'यस्मिन्न श्वासः' 'अहाव्यग्ने' इति द्वे याज्यानुवाक्ये भवतः। तत्र प्रथमा पुरानुवाक्या द्वितीया याज्या (तु०— भा०सं० २० ।७८-७९ महीधरः, का०श्रौ० १९ ।६ ।२१)। ९. आश्विनशस्त्रम्प्रतिगरार्थं होतुः पुरस्तात् अध्वर्यावुपविष्टे 'अध्वर्यो शोंसाव' इत्याहूय होता। 'अश्विना तेजसा' इत्येकादशर्चं अश्विनं शस्त्रं शंसति। (तु०—मा०सं० २० ।८०-९०) महीधरः, का०श्रौ० १९ ।७ ।१ विद्याधरः)। १०. ऐष्टिकं हौत्रम्— तत्र अवभृथैष्टौ 'इमं मे वरुण', तत्त्वा यामि' इति द्वे वारुणस्यैककपालस्य पुरोनुवाक्यायाज्ये भवतः। (तु०—मा०सं० २१ ।१-२ महीधरः, का०श्रौ० १९ ।७ ।१४)। अवभृथेष्टावेव अग्नीवरुणयागे 'त्वं नो अग्ने', 'स त्वं नो अग्ने' इति द्वे पुरोनुवाक्यायाज्ये भवतः। (तु०—मा०सं० २१ ।३-४ महीधरः का० श्रौ० १९ ।७ ।१५)। आदावन्ते आदित्येष्टिचरौ 'सुत्रामाणं पृथिवीम्', इति पुरोनुवाक्या, 'महीमूषु' इति याज्या। (तु०— मा०सं० २१ ।६ ।५ का०श्रौ० १९ ।७। १६)। अवभृथादुदेत्य मैत्रावरुण्या पयस्यया यजतीति पयस्यायाः 'आजो मित्रावरुणा' इति पुरोनुवाक्या, 'प्र बाहवा' इति याज्या। (तु०—मा०सं० २१ ।८९ महीधरः, का०श्रौ० १९ ।७ ।१७)। पयस्यामेव वाजिनयागे 'शं नो भवन्तु' इति पुरोनुवाक्या, वाजे वाजे वत' इति याज्या भवति। (तु०— मा०सं० २१ ।१०-११ महीधरः का० श्रौ० १९ ।७ ।१८)। ११. अन्त्ये वायोधसे पशौ 'समिद्धो अग्निः' इत्याद्याः 'स्वाहा यज्ञम्' इत्यन्त्या एकादश ऋचः आप्रियः प्रयाजयाज्या भवन्ति। (तु०—मा०सं० २१ ।१२-२२ महीधरः, का०श्रौ० १९ ।७ ।२०)। १२. अन्त्यस्य वायोधसस्य पशोः वपापुरोडाशपशूनां 'वसन्तेन ऋतुना' इत्याद्या 'शैशिरेण ऋतुना' इत्यन्त्याः षड् ऋचः याज्यानुवाक्या भवन्ति। तत्र वपायागे 'वसन्तेन' (२३) इति पुरोनुवाक्या, ग्रीष्मेण' इति याज्या। पशुपुरोडाशयागे 'वर्षाभिः' (२५) इति पुरोनुवाक्या 'शारदेन' (२६) इति याज्या। पशोः हृदयादेः यागे 'हेमन्तेन' (२७) इति पुरोनुवाक्या, 'शैशिरेण' (२८) इति याज्या भवति। (तु०— मा०सं० २१ ।२३-२८ महीधरः का०श्रौ० १९ ।७ ।२१)। १३. त्रिपशोः 'होता यक्षत्समिधा' इत्यादयः 'होता यक्षदग्निँ स्वाहा' इत्यन्ताः तनूनपान्रांशसयुक्ताः द्वादशप्रीणां प्रयाजयाज्यानां द्वादश प्रैषा भवन्ति। (तु०—मा०सं० २१ ।२८४ महीधरः का०श्रौ० १९ ।६। १४)। १४. त्रिपशोः त्रयाणां वपानां 'होता यक्षदश्विनौ छागस्य' इति त्रयः प्रैषा भवन्ति। (तु०— मा० सं० २१ ।४१ महीधरः का०श्रौ० १९ ।६ ।२२)। पयोग्रहाणां सुराग्रहाणां च 'होता यक्षदश्विनौ सरस्वतीम्' इति च चतुर्थः प्रैषो भवति। (तु०— मा०सं० २१ ।४२ का०श्रौ० १९ ।६। २३)। १५. त्रिपशोः त्रयाणां हविषां (हृदयाद्यङ्गानां) 'होता यक्षदश्विनौ छागस्य' इत्यादयस्त्रयः प्रैषा भवन्ति। (तु०—मा०सं० २१ ।४३-४५ महीधरः का०श्रौ० १९। ६ ।२४)। १६. 'होता यक्षद्वनस्पतिम्' 'होता यक्षदग्निँ स्विष्टकृत्' इति वनस्पतियागे स्विष्टकृद्यागे च क्रमाद् द्वौ प्रैषो भवतः। (तु०—मा०सं० २१ ।४६-४७ महीधरः

का०श्रौ० १९।६।२५)। १७. त्रिपशोः 'देवं बर्हिः सरस्वती' इत्याद्याः 'देवो अग्निः स्विष्टकृत्' इत्यन्त्याः एकादश अनुयाजानां प्रैषयाज्या (प्रैषाश्च याज्याश्च भवन्ति। (तु०—२१।४८-५८ महीधरः का०श्रौ० १९।७।९)। तत्र प्रैषा एवाद्यन्तोहेन याज्या भवन्तीति विशेषोऽवधेयः। १८. सौमण्याः 'अग्निमद्य होतारम् वृणीत' इत्यादि 'सूक्तवाकाय सूक्ता ब्रूहि' इत्यन्तः सूक्तवाकप्रैष उच्यते। (तु०— मा०सं० २१।५९-६१ महीधरः, का०श्रौ० १९।७।११)। १९. प्रथमस्यैन्द्रस्य पशोः 'होता यक्षत्समिधेन्द्रम्' इत्यादयो 'होता यक्षदिन्द्रम्' इत्यन्ताः ऐन्द्रा एकादश प्रयाजप्रैषा भवन्ति। (तु०—मा०सं० २८।१-११ उवटमहीधरौ, का० श्रौ० १९।६।११) २०. ऐन्द्रपशोः 'देवं बर्हिरिन्द्रम्' इत्यादयः 'देवो अग्निः स्विष्टकृत्' इत्यन्ता एकादश ऐन्द्रा अनुयाजप्रैषयाज्याः। (तु०—मा०सं० २८।१२-२२)। २१. सूक्तवाकप्रैषः 'अग्निमद्य होतारम्' इत्यादिः 'सूक्तवाकाय सूक्ता ब्रूहि' इत्यन्तः। द्र० मा०सं० २८।२३।२१; ५९-६१। २२. उत्तमस्य वायोधसस्य पशोः 'होता यक्षत् समिधानम्' इत्यादयः 'होता यक्षत् स्वाहाकृतीः' इत्यन्ताः, प्रयाजप्रैषाः आप्रीयाज्याः। (तु०—मा०सं० २८।२४-३४ महीधरः का०श्रौ० १९।६।११)। २३. वायोधसस्य पशोः 'देवं बर्हिर्वयोधसम्' इत्यादयः 'देवो अग्निः स्विष्टकृत्' इत्यन्ता एकादश अनुयाजप्रैषयाज्याः (प्रैषा एव याज्याः आद्यन्तोहेन) (तु०—मा०सं० २८।३५-४५ महीधरः का०श्रौ० १९।६।११)। इति माध्यन्दिनसंहितायामाम्नातं याजुषं हौत्रम्। एवं तैत्तिरीयमैत्रायणीयसंहिता ब्राह्मणादितं याजुषं हौत्रं तत्र तत्र द्रष्टव्यम्। इति। (अत्र विषये हिरण्यकेशीयश्रौतसूत्रे महादेवशास्त्रिनिबद्धो याजुषहौत्रनिबन्धोऽप्यनुसन्धेयः)। एवं चेह न केवलं सौत्रामणिकमेव याजुसं हौत्रं विद्यते दर्शपूर्णमासयोः चातुर्मास्यानां च याजुषं हौत्रं पृथगाम्नातमुपलभ्यते। ततो बाह्वृचं हौत्रं विनाऽपि दर्शपूर्णमासचातुर्मास्यानां हौत्रक्रिया यजुर्वेदविहितेन वैकल्पिकेन हौत्रेणापि शक्या संपादयितुमिति विशेषोऽवधेयः।



याज्ञिक प्रक्रिया के परम् विद्वान् पंडित पीताम्बरदत्त शास्त्री का जन्म १७ मई १९०६ को गढ़वाल जिले के थलासू ग्रामं में हुआ। यह ग्राम अब भी यज्ञ-यागादि अनुष्ठानों के लिए सुख्यात है। पंडित जी ने १९२९ में पंजाब विश्वविद्यालय लाहौर से शास्त्री परीक्षा उत्तीर्ण की।

आरम्भ से ही प्राचीन हस्तलेखों के अध्ययनकार्य के साथ सम्पर्क होने के कारण उनका कार्य, पूर्व अप्रकाशित मूल, भाष्य, व्याख्या आदि के प्राचीन नाना हस्तलेखों के मेल (कुलेशन) से, आलोचनात्मक पद्धति से उनके सम्पादन में सहयोग देना रहा। इसके साथ सुप्रसिद्ध वैदिकपदानुक्रम-कोष के चतुर्थ (वेदाङ्ग) भाग में नियुक्ति से श्रौत-विषयक याज्ञिक प्रक्रिया में उनकी विशेष रुचि रही। इसी के परिणामस्वरूप उनके सहयोग से संकलित कार्य का प्रकाशन सन् १९३१ से १९६७ तक चला।

सन् १९७६ में पञ्चनदीय संस्कृत परिषद् द्वारा विश्वेश्वरानन्द वैदिक शोध संस्थान के संयुक्त सहयोग से पं० पीताम्बर दत्त जी का सम्मान किया गया।